पानम् . **वृद्धगौतमः**— २४५६ विषेण बालकहननं गर्भस्रावनिमित्तम् . **वृद्धहारीतः**— २४५६ गर्भधारणोपायः नारायणबलिः . **बौधायनः**— २४५७ वन्ध्यात्वस्य औषध-मन्त्रप्रयोगाभ्यामवश्यपरिहार्यता ; पुत्रपौत्रादिप्राप्तिफलकः सर्पसंस्कारविधिः . **वसिष्ठः**— २४५९ गर्भरक्षार्थं प्रतिगर्भमासं मासपग्रहशान्तिः , गर्भमासपा ग्रहाः, पुत्रार्थं कर्णिकामूलकल्कयुतपयःपानम्. **वैखानसः**— २४५९ पापमृतानां प्रेतत्वनिवृत्त्यर्थं सपिण्डीकरणस्थाने कर्तव्यो नारायणबलिः . **व्यासः**— २४६० पुत्रार्थम् अङ्कोलकल्कगुडभक्षणं सुदर्शनमन्त्रजपश्च. **गोभिलः**— २४६० गर्भधारणार्थं नस्यम्. **शातातपः**— २४६० बालकहननमनपत्यात्व-मृतवत्सात्वनिमित्तम्, तद्दोषहरं दोलायुतसौवर्णबालकस्य वस्त्रद्वययुतानडुहश्च दानम्; २४६१ बालहननं पुरुषमृतवत्सत्वनिमित्तम्, तद्दोषहरं ब्राह्मणोद्वाहनं हरिवंशश्रवणं महारुद्रजपः दशांशहोमश्च ; विप्रबालकहननं मृतापत्यत्वनिमित्तम्, तद्दोषहरं हैमवृष—शर्कराधेनुदानं द्विजशतभोजनं च; विप्ररत्नापहरणमनपत्यत्वनिमित्तम्, तद्दोषहरं महारुद्रजपादिकम् ; २४६२ पित्रादिषु द्वादशसु पूर्वजेषु कश्चिद्दुर्मृतः प्रेतभूतोऽनपत्यत्वादिकारकः, तत्प्रेतत्वनिवृत्तये प्रेतप्रतिमापूजनादिकर्मकलापः नारायणबलिरौर्ध्वदेहिकं चेति साधारणविधिः, व्याघ्रहतत्वादिषु पञ्चत्रिंशतिनिमित्तविशेषेषु परकन्याविवाहादयो विशेषविधयः. **पराशरः**— २४६३ पुत्रप्राप्त्यर्थं पलाशदलस्नानम्. **बृहत्पराशरः**— २४६३ पापमृतानां प्रेतत्वनिवृत्त्यर्थः नारायणबलिः ; २४६४ अनपत्यामृतापत्याकन्याप्रसूनां पुत्रप्राप्त्यर्थं पुरुषसूक्तविधानम्. **ऋग्विधानम्**— २४६५ पुत्रप्राप्त्यर्थं पुरुषसूक्तविधानम् ; २४६६ पुत्रप्राप्त्यर्थं विष्णोः पुरुषसूक्तेनार्चनस्य विधानम् ; २४६९ गर्भाग्रहणगर्भस्रावकन्यामात्रजननापत्यमरणकारणदोषपरिहारार्थं जपहोमरूपा उपायाः . **देवरातः**— २४७० अपत्यार्थं पालाशदलस्नापनम्. **पितामहः**— २४७० भर्त्रवशानां पुष्पाभावहेतुः, तद्दोषशान्त्यर्थं होम-दुर्गापूजन-दम्पतिभोजन-सौभाग्यवस्तुदानानि. **मुद्गलः**— २४७० पुत्रप्राप्त्यर्थमौषधम्. **वायुपुराणम्**— २४७० गर्भस्रावकरदोषपरिहारार्थं होमपूर्वकं काञ्चनयज्ञोपवीतराजतोत्तरीयकदानम् ; २४७१ चतुर्विधं वन्ध्यात्वम्, तत्परिहाराय पूजाहोमपूर्वकं सुवर्णसवत्सधेनुदानम्. **मार्कण्डेयपुराणम्**— २४७२ ऋतुहारिण्या दोःसहायाः शान्त्यर्थं तीर्थादिषु स्नापनम्. **विष्णुपुराणम्**— २४७३ आत्मघातिनः प्रेतत्वनिवृत्त्यर्थं नारायणबलिविधानम्. **लिङ्गपुराणम्**— २४७३ पुत्रप्राप्त्यर्थं संवत्सरं लिङ्गद्वयपूजनम्. **स्कन्दपुराणम्**— २४७३ कन्याप्रसूत्व-मृतापत्यात्वहरं होमगर्भं पिप्पलपूजनम् ; २४७४ पुत्राद्यर्थं पूजा-प्रदक्षिणा-स्तुतिपाठ-होम-तर्पण-नमस्कार-ब्राह्मणभोजन-सपीठसुवर्णाश्वत्थदानरूपाश्वत्थसेवा, कर्मसादगुण्यार्थं सुवर्णाश्वत्थस्य गोश्च दानम् ; २४७६ पुत्रप्राप्त्यर्थं संवत्सरं लिङ्गपूजोत्तरजप्यमभिलाषाष्टकम् ; २४७७ गर्भरक्षार्थं ब्राह्मणसुवासिनीभ्यो दानानि. **शिवपुराणम्**— २४७७ पार्थिवलिङ्गार्थं मृदाहरणविधिः, पार्थिवपूजायां जपापेक्षया दशांशं तर्पणं दशांशं मार्जनं च. **शिवधर्मपुराणम्**— २४७७ वालुकामयस्य पार्थिवस्य वा लिङ्गस्य सहस्रपूजनादिष्टसिद्धिः . **विष्णुधर्मोत्तरपुराणम्**— २४७८ वन्ध्यात्वस्य कारणानि, चतुर्विधं वन्ध्यात्वम्, तत्परिहारकविष्णुश्राद्धस्य विधानम् ; २४८० पुत्रप्रदमोषधिस्नानम्. **भविष्यपुराणम्**— २४८० पार्थिवलिङ्गपूजायामष्टमूर्तिपूजनम् ; पुत्रप्राप्त्यर्थं घटिकाभिषेकविधानम्. **भविष्योत्तरपुराणम्**— २४८१ मृतवत्सात्वादिहरं रुद्रस्नानविधानम् ; २४८२ वन्ध्यात्वनिमित्तानि, वन्ध्यात्वकरग्रहगणना, वन्ध्यात्वहरं ग्रहबलिपूर्वकाभिषेकविधानम्. **देवीपुराणम्**— २४८४ पार्थिवलिङ्गपूजायां सप्तसु कर्मसु सप्तानां नाममन्त्राणां विनियोगः . **नन्दिपुराणम्**— २४८४ पार्थिवपूजायाः सर्वेष्टसाधकत्वम्, पार्थिवपूजायां पञ्चाक्षरस्य षडक्षरस्य वा मन्त्रस्य विनियोगः ; स्त्रीपुरुषयोरनपत्यत्वादिनिमित्तानि, तद्दोषशान्त्यर्थं प्रायश्चित्तपूर्वकं महारुद्र—कलशरुद्र—विष्णुश्राद्ध-हरिवंशश्रवण-संतानगोपालविद्यानुष्ठानानामनुष्ठेयत्वम् ,

फलसिद्धौ पौराणिकान्युदाहरणानि. **बृहल्लिङ्गवासिष्ठपुराणम्**– २४८५ पुत्रादिप्राप्त्यर्थे पार्थिवलिङ्गपूजाव्रतविधानम्, वर्णभेदेन मृद्भेदः, मृद्ग्रहणविधिः, लिङ्गपरिमाणम्, लिङ्गपीठकरणम्, लिङ्गे महादेवपूजनम्, द्विजशूद्रभेदेन नाममन्त्रव्यवस्था, आवाहनादिविसर्जनान्तपौराणमन्त्राः, कर्मभेदेन नाममन्त्रव्यवस्था, कामभेदेन लिङ्गसंख्याभेदः, कामभेदेन लिङ्गप्रकृतिद्रव्यभेदः, पार्थिवलिङ्गव्रतानुष्ठानेन पुत्रादिफलप्राप्तौ पूर्वोदाहरणानि, उद्यापनविधिः; २४८९ पार्थिवलिङ्गपूजाविधानान्तरस्य कालः. **पुराणम्**– २४९० नागबलौ सर्पप्रार्थना. **सूर्यारुणसंवादः**– २४९० पुष्पाभावनिमित्तानि पूर्वभवीयकर्माणि पुष्पप्राप्त्यर्थे प्रायश्चित्तं च; २४९१ गर्भस्रावहरं प्रायश्चित्तम्; पूर्वजन्मनि पत्या गर्भवद्वडीहननात् उत्तरजन्मनि पत्न्या गर्भपातरतिः तन्निवृत्त्यर्थे प्रायश्चित्तं च; अनपत्यत्वे निक्षेपहरणं निमित्तम्, तद्दोषहरं प्रायश्चित्तम्; २४९२ काकवन्ध्यात्वनिमित्तं प्राग्भवीयः पापविशेषः तन्निरासार्थे प्रायश्चित्तं च; २४९३ केवलकन्याजनननिमित्तं प्राग्भवीयौर्ध्वदेहिकाभावः तत्र प्रायश्चित्तं च; २४९४ मृतापत्यत्वनिमित्तं द्विविधं पापं तत्र द्विविधं प्रायश्चित्तं च. **अनिर्दिष्टकर्तृकवचनानि**– २४९६ नानाविधानि गर्भधारणौषधानि; २४९७ गर्भिणीरोगपरिहारद्वारा साक्षाच्च गर्भरक्षाकराणि औषधानि; सर्पसंस्कारे बलिदानम्, आचार्याय नागस्तुतिपूर्वकं स्वर्णमयनागदानं सवृषभगोदानं च, नागप्रार्थना, ब्राह्मणब्राह्मणीपूजनम्, संस्कारफलम्; २४९८ पुत्रादिप्राप्त्यर्थे ध्यानस्तुतिप्रदक्षिणादिरूपनानाविधाश्वत्थसेवाविधानम्; २५०१ पार्थिवलिङ्गपूजायामन्तिमस्तुतिमन्त्राः; विष्णुश्राद्धस्य बालदम्पतिदोषनाशकत्वम्; २५०२ विष्णुश्राद्धात्प्राक्कर्तव्यं प्रजानाशकप्रेतोद्धारविधानम्; विष्णुश्राद्धाङ्गरुद्रस्नानविधानम्; पुत्रप्राप्तिकरी सौभरिमन्त्रोपासना; २५०३ पुत्रप्रदसंतानगोपालमन्त्रविधानम्. **स्मृत्यर्थसारः**– २५०३ नारायणबलिविधानम्. **तत्त्वसागरसंहितायाम्**– २५०४ पुत्रप्रदं गणाध्यक्षस्नपनविधानम्. **महार्णवे**– २५०५ पुत्रमरणनिमित्तप्राग्भवीयबालघातदोषपरिहारार्थानि ब्राह्मणोद्वाहन-हरिवंशश्रवण-महारुद्रजपरूपाणि प्रायश्चित्तानि; सदासवद्रक्तात्वनिमित्तं तन्निष्कृतिश्च. **कालकौमुद्याम्**– २५०५ पार्थिवलिङ्गपूजायां लिङ्गप्रमाणम्. **शिशुरक्षारत्ने**– २५०६ प्रथमादिद्वादशान्तेषु गर्भमासेषु प्रतिमासमनुष्ठेयं बलिकर्म औषधं च. **शौनककारिकाः**– २५१० दुर्मृतादीनां पापक्षयादिफलसिद्ध्यर्थे कर्तव्यस्य नारायणबलेर्विधानम्; २५११ अनपत्यत्व-मृतापत्यत्वपरिहारार्थे सर्पवधकर्त्राऽनुष्ठेयं सर्पसंस्कारविधानम्; २५१३ अपुत्रत्व—मृतपुत्रत्वहरं पुत्रकामेष्टिविधानम्. **कुमारिलकारिकाः**– २५१४ पुत्रकामेष्ट्यधिकारी, निर्वापहवनमन्त्रौ. **रेणुकारिकाः**– २५१४ गर्भधारणाभावे बृहतीमूलरसस्य समन्त्रकासेचनं दक्षिणनासिकायाम्, वातादिहतपुष्पत्वे औषधचिकित्सा, ग्रहादिहतपुष्पत्वे पुष्यस्नानम्, कन्याप्रसूत्वे पिण्डभक्षणम्.

## गर्भिणीधर्माः

### (पृ. २५१६–२५२१)

भोजननियमाः, यात्रावर्जनम्, आयासकरक्रियावर्जनम्, व्यसनत्वर्जनम्, दिवास्वापवर्जनम्, जागरणवर्जनम्, आरोहणावरोहणवर्जनम्, शोकभयादिविकारवर्जनम्, वेगधारणवर्जनम्, विरेचनवर्जनम्, जलावगाहतरणवर्जनम्, तीव्रौषधवर्जनम्, क्षारवर्जनम्, मैथुनवर्जनम्, पक्वान्नभिक्षादानवर्जनम्, शौचम्, प्रशस्तमन्त्रलेखनम्, प्रसाधनम्, वृक्षच्छायावर्जनम्, स्थानासनविशेषेष्ववस्थितिवर्जनम्, उत्तरीयधारणनियमः, निशीथरोदनवर्जनम्, शयननियमाः, सर्वौषधीयुक्तकोष्णजलस्नानम्, रक्षाकरणम्, रक्तविमोक्षवर्जनम्, कुक्कुटासनवर्जनम्, मुक्तकेशतावर्जनम्, अभ्यञ्जनवर्जनम्, नखकृन्तनवर्जनम्, नखाङ्गारभस्मकरणकभूमिलेखनवर्जनम्, कलहवर्जनम्, गात्रभङ्गवर्जनम्, अमङ्गलभाषणवर्जनम्, अतिहास्यवर्जनम्, श्वशुरयोः पूजा, प्रसन्नमुखता, पञ्चममासादूर्ध्वं देवपित्र्यपाकानधिकारः, पतिप्रियपरता, गर्भिणीधर्मफलानि.

यवयुक्तदधिप्राशनम्, स्थालीपाकः, हृदयदेशस्पर्शः. **आश्वलायनगृह्यपरिशिष्टम्**– २५५२ स्थालीपाकः, आज्येनाङ्गाभिमर्शः. **कौषीतकिगृह्यसूत्रम्**–२५५२ सोमादीनां नस्तःकरणम्. **आपस्तम्बगृह्यसूत्रम्**–२५५२ होमः नस्तःकरणं च. **हिरण्यकेशिगृह्यसूत्रम्**–२५५३ होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, माषयवदधिप्राशनम्, उदराभिमर्शनम्, नस्तःकरणम्. **भारद्वाजगृह्यसूत्रम्**– २५५४ होमः नस्तःकरणं च. **काठकगृह्यसूत्रम्**– २५५४ स्थालीपाकत्रयम्. **वाराहगृह्यसूत्रम्**– २५५५ उपवासः, नस्तःकरणम्, दक्षिणकुक्षिस्पर्शनम्. **आग्निवेश्यगृह्यसूत्रम्**– २५५५ होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, यवसर्षपाभ्यां यवमाषाभ्यां वा सह दध्नः प्राशनम्, उदराभिमर्शनम्, नस्तःकरणम्. **पारस्करगृह्यसूत्रम्**– २५५६ उपवासः, नस्तःकरणम्, काम्यमुपस्थाभिमन्त्रणम्. **गोभिलगृह्यसूत्रम्**– २५५७ होमः, अंस–नाभिदेशस्पर्शनम्, न्यग्रोधशुङ्गायाः परिक्रयः उत्थाप्यनिधानं च, नस्तःकरणम्. **खादिरगृह्यसूत्रम्**– २५५९ होमः, अंसनाभिदेशस्पर्शनम्, न्यग्रोधशुङ्गायाः परिक्रयः उत्थाप्यस्थापनं च, नस्तःकरणम्. **जैमिनिगृह्यसूत्रम्**– २५६० होमः, सयवमाषदधिप्राशनम्, कण्ठे न्यग्रोधशुङ्गधारणम्. **कौशिकगृह्यसूत्रम्**– २५६० बाणविबर्हणम्, शरमणिबन्धनम्, नस्तःकरणम्, मधुमन्थनिक्षिप्ताग्निप्राशनम्, कृष्णोर्णावेष्टिताग्निबन्धनम्. **वैखानसगृह्यसूत्रम्**– २५६० होमः, पत्न्यै सर्षपमिश्रयवदानम्, उदराभिमर्शनम्, त्रिवृत्प्राशनम्, नामेरूर्ध्वं दर्भेणोन्मार्जनम्, पुण्याहवाचनम्, ब्राह्मणभोजनम्. **कात्यायनः**– २५६१ गोभिलगृह्यसूत्रगतानां शुङ्गा–व्रतवती–ब्रह्मबन्धुशब्दानामर्थाः. **आश्वलायनः**– २५६१ स्मार्ताग्नौ होमः, गर्भाधानाकरणे गोदानपूर्वकत्वं पुंसवनस्य, मण्डलागारे कर्तव्यता, पत्न्युपवासः, सयवमाषदधिप्राशनम्, नस्तःकरणम्. **लघ्वाश्वलायनः**– २५६१ वृद्धिश्राद्धम्, सयवमाषदधिप्राशनम्, नस्तःकरणम्, होमः, हृदयस्पर्शनम्. **भुजबलः**– २५६१ होमः, शान्तिः, ऊर्णासूत्रग्रथितजीवब्रात्यादिमालाधारणम्. **शौनककारिकाः**– २५६१ पत्न्युपवासः, मण्डलागारे कर्मकरणम्, पुण्याहवाचनवृद्धिश्राद्धकौतुकबन्धाः, होमः, सयवमाषदधिप्राशनम्, हृदयस्पर्शनम्. **कुमारिलकारिकाः**– २५६३ वृद्धिश्राद्धम्, पत्न्या एकभक्तम्, होमः, सयवमाषदधिप्राशनम्, मण्डलागारे कर्तव्यमिति मतान्तरम्, हृदयस्पर्शनम्. **कपर्दिकारिकाः**– २५६३ संभारासादने विशेषः, शम्यास्थाने परिधयः, ब्राह्मणभोजनम्, आशीर्वाचनम्. **रेणुकारिकाः**– २५६३ वृद्धिश्राद्धम्, उपवासः, नस्तःकरणम्, काम्यमनुमन्त्रणम्, मन्त्राणामृषिदैवतच्छन्दोविनियोगाः.

## अनवलोभनम्

[पृ. २५६४–२५६८]

### अनवलोभनविधिः

(पृ. २५६४–२५६५)

अनवलोभनस्य गर्भमासात्मकः कालः, अनवलोभने कनिष्ठस्यानधिकारः, अनवलोभनस्य प्रतिगर्भमावृत्तिः, अनवलोभनपदार्थः.

### अनवलोभनप्रयोगः

(पृ. २५६६–२५६८)

मण्डलागारच्छायायां गर्भिण्याः नस्तःकरणम्, स्थालीपाकः, आज्यलेपेनाङ्गविमार्जनम्.

## सीमन्तोन्नयनम्

[पृ. २५६९–२६०९]

### सीमन्तोन्नयनविधिः

(पृ. २५६९–२५८१)

सीमन्तोन्नयने गर्भमासविधिः, प्रथमगर्भे एव कर्तव्यमिति प्रतिगर्भे कर्तव्यमिति च गर्भिणीसंस्कारः गर्भसंस्कारः उभयसंस्कार इति च मूले टीकासु च मतानि, मासः सावनः सौरो वा गणनीय इति मतद्वयम्, सीमन्तसंस्काराङ्गभोजनग्रहणे प्रायश्चित्तम्, अकृतसीमन्तायाः प्रसवोत्तरं सीमन्तकरणविधिः, गर्भभक्षक-

राक्षसीनिरासः सीमन्तसंस्कारफलम्, पत्यभावे कर्त्रन्तरविधिः, अकृतपुंसवनायाः पुंसवनपूर्वकं सीमन्तकरणम्.

## सीमन्तोन्नयनमुहूर्तः

(पृ. २५८२–२५८९)

**आश्वलायनगृह्यसूत्रम्**– २५८२ सीमन्तोन्नयने पक्ष-नक्षत्रविधानम्. **कौषीतकिगृह्यसूत्रम्**– २५८२ सीमन्ते उपकरणानां नक्षत्रस्य च पुंस्त्वविधानम्. **हिरण्यकेशिगृह्यसूत्रम्**– २५८२ सीमन्ते पक्षः नक्षत्रं च. **भारद्वाजगृह्यसूत्रम्**– २५८२ सीमन्ते पक्षः नक्षत्रं च. **काठकगृह्यसूत्रम्**– २५८२ सीमन्ते पक्षः पुण्याहः पर्व च. **आग्निवेश्यगृह्यसूत्रम्**– २५८२ सीमन्ते पक्षः नक्षत्रं च. **पारस्करगृह्यसूत्रम्**– २५८२ सीमन्ते पुंसवनमुहूर्तातिदेशः. **जैमिनिगृह्यसूत्रम्**– २५८३ सीमन्ते पक्षः नक्षत्रं च. **वैखानसगृह्यसूत्रम्**– २५८३ सीमन्तोन्नयने पुंसवनमुहूर्तातिदेशः. **बैजवापगृह्यसूत्रम्**– २५८३ सीमन्ते पक्षः नक्षत्रं च. **वसिष्ठः**– २५८३ सीमन्तोन्नयने तिथि–वार–नक्षत्र–लग्न–लग्ननवांश–ग्रहस्थितयः. **नारदः**– २५८३ सीमन्ते गर्भमासेशबलम्, चन्द्रताराबलम्, तिथि–वार–नक्षत्र–लग्न––लग्ननवांशक–ग्रहस्थितयः, वर्णभेदेन दिवा वा निशि वा कर्तव्यता. **बृहस्पतिः**– २५८४ सीमन्ते गुरुशुक्रास्त-मलमासदोषाभावः, पक्ष-तिथि-नक्षत्र-लग्न-लग्ननवांश-वारवर्ग-ग्रहस्थितयः. **भृगुः**– २५८५ सीमन्ते सिंहस्थगुरुदोषाभावः. **व्यासः**– २५८५ सीमन्ते उत्तम-मध्यम-वर्ज्यवाराः. **भारद्वाजः**– २५८६ सीमन्ते शुभा ग्रहस्थितिः. **गर्गः**– २५८६ सीमन्ते शुभलग्ननवांशाः. **आश्वलायनः**– २५८६ सीमन्ते नक्षत्राणि. **लघ्वाश्वलायनः**– २५८६ सीमन्ते नक्षत्राणि. **कश्यपः**– २५८६ सीमन्ते ग्रहस्थितिः. **अनिर्दिष्टकर्तृकवचनानि**– २५८६ सीमन्ते ग्रहस्थितिः, मलमास-गुरुशुक्रास्तदोषाभावः, तिथि-नक्षत्र-लग्न-नवांशाः. **नृसिंहः**– २५८७ सीमन्ते वर्ज्यतिथयः, शुभाशुभग्रहयोगाः. **राजमार्तण्डः**– २५८७ सीमन्ते गर्भमासेशबलम्, नक्षत्रम्, ग्रहस्थितिः. **बृहद्राजमार्तण्डे**– २५८७ सीमन्ते तिथि-वार-नक्षत्र-चन्द्रबल-ताराबल-लग्न-नवांश-ग्रहस्थितयः. **ऋक्षोच्चये**– २५८७ सीमन्ते तिथि-लग्न-नवांश-ग्रहस्थितयः. **कालनिर्णये**– २५८७ सीमन्ते निषिद्धतिथ्यपवादः. **कालविधाने**– २५८८ सीमन्ते तिथि-वार-नक्षत्र-लग्न-नवांशाः. **मुहूर्तचिन्तामणिः**– २५८८ सीमन्ते तिथि-वार-नक्षत्र-लग्न-नवांश-ग्रहस्थितयः, गर्भमासेशबलम्. **मुहूर्तगणपतौ**– २५८९ सीमन्ते वार-नक्षत्र-मासेशबल-लग्न-नवांश-ग्रहस्थितयः. **शौनककारिकाः**– २५८९ सीमन्ते पक्ष-नक्षत्र-मुहूर्ताः. **कुमारिलकारिकाः**– २५९० सीमन्ते नक्षत्राणि. **रेणुकारिकाः**– २५९० सीमन्ते पुंसवनमुहूर्तातिदेशः.

## सीमन्तोन्नयनप्रयोगः

(पृ. २५९१–२६०९)

**बौधायनगृह्यसूत्रम्**– २५९१ आदौ ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमः, सीमन्तकरणम्, यवप्रसूनबन्धनम्, गाथागानम्. **आश्वलायनगृह्यसूत्रम्**– २५९१ होमः, सीमन्तकरणम्, गाथागानम्, वृद्धजीवपत्युपदिष्टाचरणम्, आचार्यदक्षिणा वृषभः. **कौषीतकिगृह्यसूत्रम्**– २५९३ मङ्गलस्नपनम्, होमः, सीमन्तकरणम्, उदुम्बरफलानामुत्सङ्गे निधानं कण्ठे बन्धनं च, अक्षतमिश्रोदकप्राशनम्, उदराभिमर्शनम्, मङ्गलगीतगापनम्. **आपस्तम्बगृह्यसूत्रम्**–२५९४ ब्राह्मणभोजनम्, आशीर्वाचनम्, होमः, सीमन्तकरणम्, गाथागानम्, यवाबन्धनम्, वाग्यमो वाग्विसर्जनं च. **हिरण्यकेशिगृह्यसूत्रम्**– २५९५ होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, मङ्गलस्नानादि, सीमन्तकरणम्, अभिमन्त्रणम्. **मानवगृह्यसूत्रम्**– २५९६ होमः, सीमन्तकरणम्. **भारद्वाजगृह्यसूत्रम्**– २५९६ होमः, सीमन्तकरणम्, ओदनत्रयदर्शनं तत्र प्रश्नप्रतिवचने च, ओदनत्रयस्य ब्राह्मणैर्ब्राह्मणीभिः सकुमारगर्भिण्या च प्राशनम्, वाग्यमविसर्गौ. **काठकगृह्यसूत्रम्**– २५९७ होममध्ये केश-

प्रसाधन—सीमन्तकरण—केशपक्षबन्धनानि , गुरोरर्हणम्. **वाराहगृह्यसूत्रम्**— २५९८ मङ्गलस्नपनम्, होमः, केशप्रसाधनम्, सीमन्तकरणम्, केशानां द्विधाबन्धनम्. **आग्निवेश्यगृह्यसूत्रम्**— २५९८ होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, मङ्गलस्नानादि, सीमन्तकरणम्, अभिमन्त्रणम्. **पारस्करगृह्यसूत्रम्**— २५९८ मङ्गलस्नपनादि, होमः, सीमन्तकरणम्, वेण्यामौदुम्बरस्तबकादिबन्धनम्, गाथागानम्, ब्राह्मणभोजनम्. **गोभिलगृह्यसूत्रम्**— २६०१ मङ्गलस्नानम्, होमः, कण्ठे औदुम्बरफलस्तबकबन्धनम्, सीमन्तकरणम्, कृसरेक्षणं प्रश्नप्रतिवचने च, गर्भिण्या कृसरभक्षणम्, जीवपत्नीभिर्मङ्गलवाग्भिर्वधूपासनम्. **खादिरगृह्यसूत्रम्**—२६०४ मङ्गलस्नानादि, होमः, सीमन्तकरणम्, कृसरेक्षणं प्रश्नप्रतिवचने च. **जैमिनिगृह्यसूत्रम्**— २६०४ होमः, सीमन्तकरणम्, स्रग्भिः केशान्तालंकरणम्, हिरण्यवज्जलावेक्षणं प्रश्नप्रतिवचने च, दक्षिणादानम्. **कौशिकगृह्यसूत्रम्**— २६०५ श्वेतसर्षपबन्धनम्. **वैखानसगृह्यसूत्रम्**— २६०५ होमः, सीमन्तकरणम्, उदराभिमर्शनम्, पयोदधिघृतप्राशनं पुण्याहवाचनं च मतान्तरेण. **कात्यायनः**— २६०५ गोभिलगृह्यसूत्रपठितानां शलाटुग्रप्सन-शलली-वीरतर-कृसरशब्दानामर्थाः. **आश्वलायनः**— २६०५ सीमन्तहोमः स्मार्ताग्नौ. **लघ्वाश्वलायनः**— २६०५ होमः, सीमन्तकरणम्, गाथागानम्, गर्भिणीं प्रत्युपदेशः, फलदानम्, आचार्यदक्षिणा वृषभः. **संग्रहे**— २६०६ सीमन्तकरणम्. **शौनककारिकाः**— २६०६ पूर्वदिने वृद्धिश्राद्धम्, पुण्याहवाचनादि, वृद्धनार्युपदिष्टसमाचारः, औपासनाग्नौ होमः, सीमन्तकरणम्, गाथाया गानं त्रिर्जपो वा, वृद्धजीवपत्न्युपदिष्टसमाचरणम्, दक्षिणा वृषः. **कुमारिलकारिकाः**— २६०७ नान्दीश्राद्धम्, होमः, सीमन्तकरणम्, दक्षिणा वृषभः, वृद्धसधवोपदिष्टाचरणम्. **कपर्दिकारिकाः**— २६०८ सीमन्ते विरूढयवादिपात्राणामासादनम्. **रेणुकारिकाः**— २६०८ वृद्धिश्राद्धम्, मङ्गलस्नानादि, मन्त्राणामृषिदैवतच्छन्दोविनियोगाः, तण्डुलमुद्गतिलाद्यासादनम्, होमः, सीमन्तकरणम्, गाथागानम्, ब्राह्मणभोजनम्. **गृह्यासंग्रहः**— २६०९ तिसृभिर्दर्भपिञ्जूलीभिस्त्रिः सीमन्तोन्नयनम्, त्रिःश्वेतावीरतरपदार्थौ, सीमन्तादिषु हविर्द्रव्यनिर्वापाभावः.

## विष्णुबलिः

### [ पृ. २६१०–२६१७ ]

### विष्णुबलिविधिः

### ( पृ. २६१०–२६११ )

विष्णुबलौ गर्भमासः, विष्णुबलेर्नित्यत्वम्, विष्णुबलिफलम्, प्रतिगर्भमावृत्तिः, पत्युरभावे कर्ता.

### विष्णुबलिमुहूर्तः

### ( पृ. २६१२–२६१३ )

**बौधायनगृह्यसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च**— २६१२ विष्णुबलौ पक्षः तिथिः नक्षत्रं च. **आग्निवेश्यगृह्यसूत्रम्**— २६१२ विष्णुबलौ पक्षः तिथिः नक्षत्रं च. **वसिष्ठः**— २६१२ विष्णुबलौ पक्षः तिथिः नक्षत्राणि वाराः लग्नानि दिवसभागाः ग्रहयोगाश्च. **आश्वलायनः**— २६१२ विष्णुबलौ नक्षत्राणि ग्रहयोगाश्च. **श्रीधरीये**— २६१२ विष्णुबलौ पक्षः तिथिः नक्षत्रं दिवसभागाश्च. **मुहूर्तचिन्तामणिः**— २६१२ विष्णुबलौ नक्षत्राणि लग्नानि ग्रहयोगाश्च. **मुहूर्तगणपतौ**— २६१३ विष्णुबलौ पक्षः तिथिः नक्षत्रं च.

### विष्णुबलिप्रयोगः

### ( पृ. २६१४–२६१७ )

**बौधायनगृह्यसूत्रं हिरण्यकेशिगृह्यशेषसूत्रम् आग्निवेश्यगृह्यसूत्रं च**— २६१४ ब्राह्मणभोजनम्, पुण्याहवाचनम्, प्रणीताप्रणयनान्ते देवतावाहनम्, अग्निमुखान्ते देवताया मार्जनतर्पणार्चनानि, होमः, बलिहरणम्, स्तुतिः, देवतोद्वासनम्, बलिशेषस्य पत्न्या प्राशनम्, विष्णुबलेः फलम्. **बौधायनगृह्यपरिभाषासूत्रम्**— २६१५ उष्णोदकस्नानमष्टममासमभिव्याप्य,

## सूतिकागृहं तत्प्रवेशश्च

### (पृ. २६१८–२६२०)



## सोष्यन्तीकर्म

### (पृ. २६२१–२६२९)

**कर्तृकथयमानि**– २६२८ सुखप्रसवार्थमोषधिमूलानां कटौ बन्धनम्, ओषधिविशेषाणां योन्यादिषु लेपः, पेयमोषधम्, अभिमन्त्रिततैलस्य पानमुदरलेपो योनिनिषेकश्च, केशेषु दूर्वाङ्कुरोपगूहनम्. **विधानमालायाम्**– २६२८ सुखप्रसवार्थो योनावोषधिमूलप्रलेपः. **यन्त्रप्रकाशे**– २६२८ दर्शनेन सुखप्रसूतिकरं सूतिकागृहे लेखनीयं यन्त्रम्. **रेणुकारिकाः**– २६२९ प्रसवार्थे मन्त्रवदभ्युक्षणम्, जरायुपतनार्थो मन्त्रजपः.

## जातकर्म

## [पृ. २६३०–२६८४]

**वेदाः**– २६३० अग्निस्थापनम्, होमः, कर्णजपः, दधिमधुघृतप्राशनम्, गुह्यनामकरणम्, स्तनदानम्, अभिमर्शनम्, मात्रभिमन्त्रणम्, जातकर्मस्तुतिः.

## जातकर्मविधिः

## (पृ. २६३१–२६५०)

**आश्वलायनगृह्यसूत्रम्**– २६३१ जातकर्मकालः, स्त्रीणाममन्त्रकम्, स्त्रीनपुंसकयोः कर्तव्याकर्तव्यविचारष्टीकासु. **आश्वलायनगृह्यपरिशिष्टम्**– २६३२ जातकर्मकालः. **पारस्करगृह्यसूत्रम्**– २६३३ जातकर्मकालः. **खादिरगृह्यसूत्रम्**– २६३३ जातकर्मकालः. **जैमिनिगृह्यसूत्रम्**– २६३३ जातकर्मकालः. **वैखानसगृह्यसूत्रम्**– २६३३ शुभाशुभपरीक्षार्थे नासाग्रदर्शनकालिकग्रहस्थितेर्ज्ञेयत्वम्. **बैजवापगृह्यसूत्रम्**– २६३३ जातकर्मकालः. **गौतमः**– २६३३ नालच्छेदनात्प्राचीनस्य कालस्य पुण्यत्वम्. **हारीतः**– २६३३ जननदिने दोषाभावः श्राद्धादिविधिश्च, जातकर्मादिकालः. **बौधायनः**– २६३४ संपूर्णजननदिने नालच्छेदनात्प्राग्वा मतभेदेन दानप्रतिग्रहाधिकारः. **वसिष्ठः**– २६३४ जातकर्मकालः, पित्रा कुमारमुखावलोकनम्, जन्मनिमित्तकं पितुः स्नानम्, जातकर्मफलम्, दैवशात् जातकफलभवणम्, कर्तृनिर्णयः. **विष्णुः**– २६३५ जातकर्मकालः, रात्रावपि स्नानदानकर्तव्यता. **लघुविष्णुः**– २६३५ जातकर्मणः स्नानोत्तरमनुष्ठानम्. **शङ्खः शङ्खलिखितौ च**– २६३६ जातकर्मकालः, जननदिनस्य दानप्रतिग्रहार्हत्वम्. **मनुः**– २६३७ जातकर्मणः कालः, जातकर्मपदार्थः. **वृद्धमनुः**– २६३९ जननदिनस्य प्रतिग्रहार्हत्वम्. **याज्ञवल्क्यः**– २६३९ जातकर्मकालः, जननदिने दानाद्यधिकारः. **वृद्धयाज्ञवल्क्यः**– २६४० जननदिने कृतान्नातिरिक्तप्रतिग्रहे दोषाभावः. **नारदः**– २६४० जातकर्मकालः. **बृहस्पतिः**– २६४१ जातकर्मफलम्. **भृगुः**– २६४१ जातकर्मणि गुरुशुक्रास्तादिदोषाभावः. **व्यासः**– २६४१ जातकर्मकालः, जनने रात्रावपि स्नानदानकर्तव्यता, जननदिवसे सुवर्णादिदानं तत्प्रतिग्रहानुमतिश्च, प्रथमादिदिवसविशेषेषु कर्मात्क्रमसूतकम्. **देवलः**– २६४२ जननिमित्तकस्नानदाने, बालमुखावलोकनम्. **प्रजापतिः**– २६४२ जननाशौचे पुत्रजनने जातकर्माङ्गशुद्धिः पूर्वाशौचेनाऽऽशौचनिवृत्तिश्च. **संवर्तः**– २६४२ जनननिमित्तकं पितुः स्नानं ततः स्पृश्यत्वं च, मातुर्दशाहमस्पृश्यत्वम्. **पराशरः**– २६४३ पुत्रजन्मनि रात्रौ स्नानदानयोः पाठभेदेन कर्तव्यता. **बृहत्पराशरः**– २६४३ जातकर्मणः प्राक् वृद्धिश्राद्धानुष्ठानम्. **अत्रिः**– २६४३ जनननिमित्तकवृद्धिश्राद्धस्य तात्कालिकत्वम्. **जाबालिः**– २६४३ पुत्रजन्मनिमित्तकवृद्धिश्राद्धस्य विधिः कालश्च, जातकर्मकालः. **पैठीनसिः**– २६४३ दशम्यादिषु क्षत्रियादीनां निषिद्धस्य स्नानस्य पुत्रजन्मनि प्रतिप्रसवः. **कार्ष्णाजिनिः**–२६४३ पुत्रजन्मनिमित्तकवृद्धिश्राद्धविधिः. **गर्गः**– २६४३ नालच्छेदनात्प्राक् बालदर्शनम्, सुवर्णादिदानम्, जातकर्मकालः, वृद्धिश्राद्धविधिः. **सत्यव्रतः**– २६४४ जातकर्मवृद्धिश्राद्धकालः. **आश्वलायनः**– २६४४ पुत्रदर्शनस्नाननान्दीश्राद्धजातकर्माणीत्यनुष्ठानक्रमः, जातकर्मणः प्राक् पित्रन्यैरस्पृश्यो बालः, जातकर्मकालः, आपत्कालादौ कर्तृनिर्णयः. **जातूकर्ण्यः**– २६४५ जननाशौचे पुत्रजन्मनि जातकर्म तत्कालं कर्तव्यं जातेष्टिराशौचनिवृत्तौ, मृताशौचे पुत्रजनने आशौचनिवृत्तौ जातकर्म. **बैजवापः**– २६४५ जातकर्म-

## जातकर्ममुहूर्तः

### (पृ. २६५१–२६५२)



## जातकर्मप्रयोगः

### (पृ. २६५३–२६८४)

करणहोमः, संशासनम्. **हिरण्यकेशिगृह्यसूत्रम्**– २६६० अश्मघृतकुमारस्यानुमन्त्रणम्, औपासनाग्निं निःसार्य सूतिकाग्न्याहरणम्, फलीकरणहोमः, भूम्यालम्भनम्, घृतप्राशनरूपमेधाजननम्, कुमारस्नापनम्, मातुरुपस्थाहितामिमन्त्रणम्, स्तनपानम्, उदकुम्भनिधानम्. **मानवगृह्यसूत्रम्**– २६६२ उपाध्यायाय वरदानम्, आयुष्यहोमाः, दध्यादिप्राशनम्, मुखाम्युद्देशनम्, कर्णजपः, स्तनपानम्. **भारद्वाजगृह्यसूत्रम्**– २६६४ फलीकरणहोमः, प्रवेशनिर्गमयोः सर्षपावापसंशासनम्, कुमाराभिमर्शनम्, कर्णजपः, अभिमन्त्रणम्, दध्यादिप्राशनम्, हस्तग्रहणम्, अभिमर्शनम्, मातुरुपस्थाधानम्, स्तनपानम्, परिदाकरणम्, उदकुम्भनिधानम्, उत्तपनार्थंसूतिकाग्निस्थापनम्. **काठकगृह्यसूत्रम्**– २६६५ नामकरणम्, होमः, कुमारमुखस्पर्शनम्, स्तनानुमन्त्रणम्, संपातानां मधुनो वा प्राशनम्, मूर्धनिघ्राणं स्वस्तिवाचनं च, फलीकरणहोमः. **वाराहगृह्यसूत्रम्**– २६६८ कर्णजपः, अभिमन्त्रणम्, भूम्यभिमर्शनम्, होमः, संपातप्राशनम्, स्तनपानम्, बहिर्द्वारे नित्यमग्निधारणम्, फलीकरणहोमः, अप्रतिरथजपः, सूतिकागारस्य समन्तात्परिषेचनम्. **आग्निवेश्यगृह्यसूत्रम्**– २६६९ अश्मोपरि कुमारधारणम्, सूतकाग्निस्थापनम्, फलीकरणहोमः, भूम्यालम्भनम्, घृतप्राशनरूपं मेधाजननम्, मातुरुपस्थाधानम्, अभिमन्त्रणम्, स्तनपानम्, कुमाराभिमर्शनम्, उदकुम्भनिधानम्. **पारस्करगृह्यसूत्रम्**– २६७० मधुघृतप्राशनरूपं मेधाजननम्, कर्णजपरूपमायुष्यकरणम्, काम्यकुमाराभिमर्शनम्, अनुप्राणनम्, जन्मभूमेरभिमन्त्रणम्, कुमाराभिमर्शनम्, मात्रभिमन्त्रणम्, स्तनपानम्, उदकुम्भनिधानम्, सूतिकाग्निस्थापनं फलीकरणहोमश्च. **गोभिलगृह्यसूत्रम्**– २६७६ जन्मवार्ताश्रवणानन्तरं पित्रा नाभिच्छेदनस्तनदानयोर्निषेधः, पिष्टव्रीहियवलेहनम्, घृतप्राशनरूपमेधाजननम्, नाभिच्छेदनस्तनदानादेशः. **खादिरगृह्यसूत्रम्**– २६७८ पिष्टव्रीहियवयोः सर्पिषश्च प्राशनम्. **जैमिनिगृह्यसूत्रम्**– २६७८ व्रीहियवप्राशनम्, कुमाराभिमन्त्रणम्, कुमारपरिदानम्, गुह्यनामकरणम्, मूर्धोपघ्राणम्, फलीकरणहोमः. **वैखानसगृह्यसूत्रम्**– २६७९ उदकुम्भस्थापनम्, अश्मनि कुमारधारणम्, मूर्धनि सतिलाक्षतारोपणम्, जातकाग्निस्थापनम्, फलीकरणहोमः, घृतप्राशनम्, स्नापनम्, स्तनपानम्. **बैजवापगृह्यसूत्रम्**– २६७९ मन्थनेनाग्निनिर्माणम्, आयुष्यहोमः, दध्यादिप्राशनम्, मेधाजननम्, गुह्यनामकरणम्. **परिशिष्टम्**– २६८० मन्थनेनाग्निनिर्माणम्, तस्मिन् पितुरौपासनाग्नौ वा जातकर्मादिहोमाः. **वसिष्ठः**– २६८० जातकर्मणि देवपितृद्विजसंतर्पणं रक्षोघ्नमन्त्रैर्होमश्च. **शङ्खलिखितौ**– २६८० यवपिष्टादिप्राशनम्, मेधाजननम्, ब्राह्मणक्षत्रियविशां समानं जातकर्म. **आश्वलायनः**– २६८० जातकर्मणि अनादेशहोमः, कौषीतक्यादीनां होमाभावः, जातकर्मणः प्राक् कर्तुः स्नानभूषणे, जातकर्मावान्तरक्रियाणां पृथक्फलानि, स्त्रीसंस्कारे विशेषः. **लघ्वाश्वलायनः**– २६८१ स्नाननान्दीश्राद्धपूर्वकं जातकर्म, सर्पिर्मधुसुवर्णप्राशनम्, मेधाजननजपः, अंसाभिमर्शनम्, स्त्रीणां तूष्णीं क्रिया, जातकर्मणि मतभेदेन होमतदभावौ. **शौनककारिकाः**– २६८२ कुमारस्नापनम्, सर्पिर्मधुसुवर्णप्राशनम्, मेधाजननजपः, अंसाभिमर्शनम्, कुमार्या अमन्त्रकं जातकर्म, सहोमकं जातकर्मेति मते प्रधानाहुत्युत्तरतन्त्रयोर्मध्ये उक्तकर्मानुष्ठानम्. **कुमारिलकारिकाः**– २६८२ स्नाननान्दीश्राद्धपूर्वकं जातकर्म, सर्पिरादिप्राशनम्, मेधाजननजपः, अंसाभिमर्शनम्, कुमार्या अमन्त्रकं जातकर्म. **रेणुकारिकाः**– २६८३ मधुघृतप्राशनरूपमेधाजननम्, आयुष्यकरणम्, काम्यमभिमर्शनम्, अनुप्राणनम्, बालप्रसवदेशाभिमन्त्रणम्, मूर्धाभिमर्शनम्, मात्रभिमन्त्रणम्, स्तनदानम्, उदकुम्भस्थापनम्, सूतिकाग्निस्थापनम्, फलीकरणहोमः.

## दशदिनकृत्यानि शुद्धिस्नानं च

### (पृ. २६८५–२६९३)

**बौधायनगृह्यसूत्रम्**– २६८५ फलीकरणहोमादे- र्दशरात्रमनुष्ठानम्, दशरात्रमभोज्यान्नता, दशमदिने सूतक- निवृत्तिः. **बौधायनगृह्यपरिभाषासूत्रम्**– २६८५ सूतकाग्नेर्दशाहं धारणम्, दशमदिनकृत्यानि– युगोत्था- पनम्, उदकुम्भोत्थापनविसर्जने, सूतकाग्नेः पुष्पिण्याश्चोप- स्थानम्, कुमारोत्थापनम्, आदित्यदर्शनम्, होमः, सूत- काग्नेरुत्सर्जनमरणिसमारोपो वा, औपासनोपस्थानम्, पुत्र- नामग्रहणम्, मूर्धावघ्राणाभिमन्त्रणे, दशमदिने सूतक- निवृत्तिः. **कौषीतकिगृह्यसूत्रम्**– २६८५ एकादशा- दिने सूतकनिवृत्तिः. **आपस्तम्बगृह्यसूत्रम्**– २६८६ दशाहं फलीकरणहोमः तूष्णीमावपनं वा मतभेदेन, दशम- दिने सूतकनिवृत्तिः. **भारद्वाजगृह्यसूत्रम्**– २६८६ दश दिनानि फलीकरणहोमानुष्ठानम्, सूतिकारोगहरणमव- मार्जनम्, दशमेऽहनि सूतिकास्नानम्. **काठकगृह्यसूत्रम्** –२६८६ दशाहं फलीकरणहोमः, व्याख्यानादेकादशेऽ- हनि सूतकनिवृत्तिः. **आग्निवेश्यगृह्यसूत्रम्**– २६८६ दशाहमुद्धूपनम्, द्वादशदिने मातापुत्रयोः शुद्धिस्नानम्. **पारस्करगृह्यसूत्रम्**– २६८६ दशाहं फलीकरण- होमः, कुमारोपद्रवहरजपाभिमर्शने, व्याख्यानत एका- दशदिने सूतकनिवृत्तिः. **जैमिनिगृह्यसूत्रम्**–२६८७ दशाहं फलीकरणहोमः सूतकं च, एकादशे शुद्धि- स्नानम्. **वैखानसगृह्यसूत्रम्**– २६८७ दशाहं फलीकरणहोमः उदकुम्भस्थापनादि च, तृतीयपञ्चमनवम- दिनेषु शयनादिशोधनम्, दशमे द्वादशे वा शुद्धिः. **नारदः**– २६८८ सप्तमदिने जन्मदादिपूजनम्. **बृह- स्पतिः**– २६८८ पञ्चमेऽहनि जन्मदादिपूजनम्. **व्यासः**– २६८८ प्रथमषष्ठदशमदिनेषु दानजन्मदा- पूजननिमित्ता शुद्धिः, प्रथमे सुवर्णदानम्, षष्ठे सप्तमे वा बलिदानम्, दशमेऽन्नदानम्, देव्यादिपूजनम्. **अङ्गिराः**– २६८९ षष्ठेऽहनि जन्मदायजनम्. **मार्क- ण्डेयः**– २६८९ षष्ठे जागरणं जन्मदाबलिश्च, दशमे शस्त्रधारणेन नृत्यगीतैश्च जागरणम्. **विष्णुधर्मोत्तर- पुराणम्**– २६८९ सूतिकागारस्थाऽऽयुधवह्न्यादिभि- र्दशाहं रक्षाविधानम्. **ब्रह्मपुराणम्**– २६८९ राकादीनां पूजनम्. **अनिर्दिष्टकर्तृकवचनानि**– २६९० षष्ठ- दिनकर्तव्यमायुर्वृद्धिकरं षष्ठीपूजाविधानम्, प्रथमे षष्ठे च कर्माङ्गशुद्धिः; रात्रिवर्गसंशकशान्तिमन्त्रजपो दश दिनानि संध्यायाम्, सूतिकास्नाने नक्षत्रादि. **श्रीधरीये** – २६९० पञ्चमदिने पञ्चायुधाभरणधारणम्. **दैवज्ञ- मनोहरे**– २६९१ सूतिकास्नाने वर्ज्या नक्षत्रवाराः. **दैवज्ञवल्लभे**– २६९१ स्तनपाने तिथिनक्षत्रयोग- करणानि, सूतिकास्नाने च तिथिवारनक्षत्राणि. **मुहूर्त- चिन्तामणिः**– २६९१ सूतिकास्नाने तिथिवार- नक्षत्राणि. **बालतन्त्रे**– २६९१ प्रथमे षष्ठे वा दिने कर्तव्यस्य षष्ठीपूजनस्य विधानम्. **निबन्धसारे**– २६९२ पञ्चमषष्ठदिनयोर्दिक्पालानामर्चनं बलिहरणं शान्ति- सूक्तपाठश्च. **मुहूर्तगणपतौ**– २६९२ स्तन्यपाने नक्षत्राणि, क्वाथप्राशने मुहूर्तः, पथ्यसेवने मुहूर्तः, पञ्चमे जीवन्त्याः षष्ठे षष्ठीदेव्याश्च पूजनम्, सूतिकास्नाने तिथिवारनक्षत्राणि. **रेणुकारिकाः**– २६९३ प्रतिदिनं संध्यायां फलीकरणहोमः, पञ्चमदशमदिनयोर्गणाध्यक्षादि- पूजनम्, बालोपद्रवहरजपाभिमर्शने, दशमेऽहनि शुद्धि- स्नानम्.

## जननशान्तिनिमित्तानि

### (पृ. २६९४–२७१७)

**हिरण्यकेशिगृह्यशेषसूत्रम्**– २६९४ गोप्रसव- शान्तिपूर्वकमुख्यशान्तिनिमित्तानि, शान्तिनिमित्तानि– एकनक्षत्रजननम्, एकलिङ्गत्रिकोत्तरभिन्नलिङ्गप्रसवः, नक्षत्राणि, गण्डान्ताः, कृष्णचतुर्दशी, चन्द्रसूर्यग्रहणे, सिनीवाली, कुहूः, दर्शः, व्यतीपातः, वैधृतिः, रवि- संक्रान्तिः, अकालप्रसवः, अतीतकालप्रसवः, विकृत- प्रसवः, अमानुषप्रसवः, धूमप्रसवः, सदन्तजननम्, ग्रहसंस्थानविशेषः, यमलजननम्, पशुपक्ष्यादीनामपि दुष्टकालजननं शान्तिनिमित्तम्. **कात्यायनगृह्य-**

**परिशिष्टम्**– २६९६ यमलजननं विकृतप्रसवो मूलजननं च शान्तिनिमित्तानि, मूलचरणफलानि, पशूनां दास्याश्च विकृतप्रसवोऽपि शान्तिनिमित्तम्. **वसिष्ठः**– २६९६ शान्तिनिमित्तानि नक्षत्राणि, गण्डान्तानि, योगाः, पर्वाणि, सदन्तजननम्, पादजननम्, मातापितृजन्मर्क्षादिजननम्, नक्षत्रचरणादिजननफलानि. **वृद्धवसिष्ठः**– २६९८ अभुक्तमूललक्षणं तज्जननफलं च. **नारदः**– २६९८ जननदूषकाणि नक्षत्राणि, नक्षत्रगण्डान्तानि, अभुक्तमूलम्, तिथिगण्डान्तानि, लग्नगण्डान्तानि, तेषां फलानि फलकालाश्च. **वृद्धनारदः**– २६९९ जननदूषकनक्षत्रगण्डान्तानि तत्फलं च. **भारद्वाजः**– २६९९ जननदूषकं ज्येष्ठानक्षत्रं तदंशफलानि च. **च्यवनः**– २६९९ जननदूषकमभुक्तमूलं बालकपरित्यागकालश्च. **गर्गः**– २७०० गोप्रसवशान्तिनिमित्तानि, मुख्यशान्तिनिमित्तानि– सदन्तजननम्, कृष्णचतुर्दशी, सिनीवाली, कुहूः, नक्षत्राणि, तिथिनक्षत्रलग्नगण्डान्तानि, योगाः, विष्टिः, अकालप्रसवः, कालातीतप्रसवः, विकृतप्रसवः, धूमप्रसवः, भिन्नजातिप्रसवः, अखण्डप्रसवः, अज्ञातलिङ्गप्रसवः, तत्तद्दुष्टकालफलानि, पशुपक्ष्यादीनां विकृतादिप्रसवोऽपि शान्तिनिमित्तम्, निमित्तविशेषेषु दानशान्तिसमुच्चयः. **वृद्धगार्ग्यः**– २७०४ शान्तिनिमित्तानि–गण्डान्तानि, नक्षत्राणि, एकनक्षत्रजननम्, विषनाड्यः, भिन्नजात्याद्यद्भुतजननम्, सूर्य–बृहस्पति–बुधाद्भुतविभागः, पशुपक्ष्याद्यद्भुतमपि शान्तिनिमित्तम्. **बादरायणः**– २७०५ गण्डान्तं जननदूषकम्. **माण्डव्यः**– २७०५ गण्डान्तं जननदूषकम्. **कश्यपः**– २७०५ शान्तिनिमित्तानि नक्षत्राणि तेषां पादशः फलानि च. **मत्स्यपुराणम्**– २७०५ शान्तिनिमित्तानि– अकालप्रसवः, कालातीतप्रसवः, भिन्नजात्यादिविकृतप्रसवाः, युग्मप्रसवः, पशुपक्ष्यादीनामपि विकृतप्रसवे शान्तिः. **पद्मपुराणम्**– २७०६ शान्तिनिमित्तानि–सदन्तजननम्, प्रथममुपरिदन्तजननम्, द्वितीयादिपञ्चमान्तेषु मासेषु दन्तजननम्, हीनाङ्गत्वादीनि प्रसववैकृतानि. **ब्रह्मपुराणम्**– २७०६ मूलनक्षत्रचरणफलानि. **शिवसंहिता**– २७०६ एकनक्षत्रजनने शान्तिः. **मानवसंहिता**– २७०६ चित्रानक्षत्रचरणफलानि. **अनिर्दिष्टकर्तृकवचनानि**– २७०७ प्रथममुपरिदन्तजननं सदन्तजननं प्रथमादिसप्तमान्तमासदन्तजननं च शान्तिनिमित्तानि, मूलपुरुषाश्लेषापुरुषाङ्गघटीफलानि, मूलाश्लेषयोर्मुहूर्तफलानि, मूलस्त्रिया अङ्गघटीफलानि, चरण-मुहूर्त-वृक्षाङ्ग-पुरुषाङ्गफलेषु शुभाधिक्ये शुभमशुभाधिक्येऽशुभं फलम्, मूलवृक्षाङ्गघटीफलानि, गण्डान्तफलानि कुमारादर्शनकालश्च, तिथिनक्षत्रयोगविशेषा हीनाङ्गत्वादिवैकृतानि त्रिकप्रसवश्च शान्तिनिमित्तानि, जातकर्मणः प्राक्शान्त्यनुष्ठानम्. **उत्पलाचार्यविवृतौ**– २७०८ मूलादिजनने कुमारत्यागः शान्तिर्वा. **यवनः**– २७०९ गण्डान्तानि व्यतीपातादियोगा विष्टिश्च शान्तिनिमित्तानि. **ब्रह्मयामले**– २७०९ ज्येष्ठानक्षत्रदशांशफलानि, प्रथमोर्ध्वदन्तजननफलम्. **रुद्रयामले**– २७०९ आश्लेषालताङ्गघटीफलानि, गण्डान्तादिजनने कुमारादर्शनकालाः. **रत्नमालायाम्**– २७०९ जननदूषकानि गण्डान्तानि. **राजमार्तण्डे**– २७०९ गण्डान्तजनने शान्तिरदर्शनं वा. **नृसिंहप्रसादे**– २७०९ ज्येष्ठादिनक्षत्रजननफलानि. **नवनीतारिष्टे**– २७१० तिथ्यादिगण्डान्तफलानि. **ज्योतिर्निबन्धे**– २७१० शान्तिनिमित्तानि– मूलविरुद्धावयवजननम्, तिथिवारविशेषयुतमूलजननम्, ज्येष्ठाजननम्, एकनक्षत्रजननम्, प्रथमादिपञ्चमान्तमासदन्तजननम्, सदन्तजननम्, प्रथमोर्ध्वदन्तजननम्. **ज्योतिष्प्रकाशे**– २७१० दिवसभागभेदेन त्रिविधगण्डान्तफलानि, गण्डान्तजातस्य त्यागो मासषट्कमदर्शनं वा. **भास्करव्यवहारे**– २७१० आश्लेषाचरणफलानि. **मुहूर्तकल्पद्रुमे**– २७१० मूलजननफलम्. **मुहूर्तचिन्तामणिः**– २७११ अभुक्तमूलस्वरूपे मतभेदाः, तत्र जातस्य परित्यागोऽष्टौ वर्षाण्यदर्शनं वा, मूलाश्लेषयोश्चरणफलानि, मूलस्य स्वर्गादिनिवासः, गण्डान्तादीनि द्वाविंशतिः शान्ति-

निमित्तानि, प्रथमादिमासदन्तजनने सदन्तजनने प्रथमोर्ध्वदन्तजनने च फलानि, विवाहानुरोधेन मूलादिनक्षत्रजननफलानि. **ज्योतिःसंग्रहे**– २७१३ मूलजनने आश्लेषाजनने च फलम्. **भूपालवल्लभः**– २७१३ मूलस्य स्वर्गादिनिवासः तत्फलं च, मूलपुरुषाङ्गघटीफलानि. **भल्लाटः**– २७१४ अभुक्तमूलजनने परित्यागोऽष्टौ वर्षाण्यदर्शनं वा, मूलाश्लेषाचरणफलानि. **जयार्णवे**– २७१४ मूलवृक्षः तदङ्गघटीफलानि च. **देवकीर्तिः**– २७१५ एकनक्षत्रजननदोषः. **सहदेवः**– २७१५ मूलपुरुषाश्लेषापुरुषाङ्गघटीफलानि. **प्रश्नप्रदीपे**– २७१५ गण्डान्तजननफलम्. **दुण्ढिराजः**– २७१५ गण्डान्तजातस्याष्टौ वर्षाण्यदर्शनं ततः शान्तिश्च. **मुहूर्तगणपतौ**– २७१५ अभुक्तमूलस्वरूपे मतभेदाः, मूलादिनक्षत्रचरणफलानि, मूलनिवासः, गण्डान्त–विकृति–तिथिनक्षत्रयोगकरणविशेष–पित्रादिनक्षत्रजनन–त्रिकप्रसवरूपाणि शान्तिनिमित्तानि. **शौनककारिकाः**– २७१६ शान्तिनिमित्तानि– अभुक्तमूलम्, मूलनक्षत्रम्, योगाः, संक्रान्तिः, ग्रहणम्, अधोमुखप्रसवः, एकनक्षत्रजननम्, गण्डान्तानि, निमित्तविशेषे कुमारस्य त्यागः अदर्शनं शान्तिर्वा, मासविशेषे पशुप्रसवोऽपि शान्तिनिमित्तम्. **कुमारिलकारिकाः**– २७१७ भार्यागवोर्यमलजननं शान्तिनिमित्तम्.

## नामकरणम्

### [ पृ. २७१८–२७७७ ]

### नामकरणविधिः

### ( पृ. २७१८–२७५६ )

**बौधायनगृह्यसूत्रम्**– २७१८ नामकरणकालः, नामस्वरूपम्. **बौधायनगृह्यपरिभाषासूत्रम्**–२७१८ नामकरणकालः. **बौधायनगृह्यशेषसूत्रम्**– २७१८ नामकरणकालः, व्यावहारिकं नाक्षत्रं चेति नामद्वयम्, सोमयाजिनि कर्तरि तृतीयं नाम, नामद्वयस्वरूपम्. **आश्वलायनगृह्यसूत्रम्**– २७२० नामकरणविधिः, व्यावहारिकनामस्वरूपम्, द्वितीयमभिवादनीयं गुह्यं नाम, कुमार्या अमन्त्रकं नामकरणम्. **आश्वलायनगृह्यपरिशिष्टम्**– २७२३ नामकरणकालः. **कौषीतकिगृह्यसूत्रम्**– २७२३ नामकरणकालः. **आपस्तम्बगृह्यसूत्रम्**– २७२३ नामकरणकालः, नामस्वरूपम्. **हिरण्यकेशिगृह्यसूत्रम्**– २७२६ प्रथमनामस्वरूपम्, द्वितीयं गुह्यं नाक्षत्रं नाम, सोमयाजिनः पुत्रस्य सोमयाजीति तृतीयं नाम. **मानवगृह्यसूत्रम्**–२७२८ नामकरणकालः, नामस्वरूपम्. **भारद्वाजगृह्यसूत्रम्**– २७२८ नामकरणकालः, नामद्वयकरणम्, द्वयोर्नाम्नोरेकं लक्षणवत् द्वितीयं नक्षत्रनाम, तयोरेकं गुह्यमपरं व्यावहारिकम्. **काठकगृह्यसूत्रम्**– २७२९ नामकरणकालः, जातकर्मकृतस्यैव नाम्नः पुनःकरणम् अन्यस्य वेति मतद्वयम्. **वाराहगृह्यसूत्रम्**– २७२९ नामकरणकालः, नामस्वरूपम्. **आग्निवेश्यगृह्यसूत्रम्**– २७२९ नामकरणकालः, नामस्वरूपम्, द्वितीयं नक्षत्रनाम, द्वयोर्नाम्नोरन्यतरत् गुह्यमन्यतरत् व्यावहारिकम्, सोमयाजिना तृतीयं नाम कर्तव्यम्. **पारस्करगृह्यसूत्रम्**– २७३० नामकरणकालः, नामस्वरूपम्. **गोभिलगृह्यसूत्रम्**– २७३२ नामकरणकालः, नामस्वरूपम्. **खादिरगृह्यसूत्रम्**– २७३३ नामकरणकालः. **जैमिनिगृह्यसूत्रम्**– २७३३ नामकरणकालः, नामस्वरूपम्. **वैखानसगृह्यसूत्रम्**– २७३४ नामकरणकालः, नामस्वरूपम्, द्वितीयं गुह्यं नक्षत्रनाम. **बैजवापगृह्यसूत्रम्**– २७३४ नामस्वरूपम्. **गृह्यपरिशिष्टम्**– २७३४ नक्षत्रचरणाक्षरादि नाम. **लगधः**– २७३५ नक्षत्रनामप्रकृतिभूता नक्षत्रदेवताः. **वसिष्ठः**– २७३५ मासनामानि, नामस्वरूपम्, नामकरणकालः, मुख्यकाले गुरुशुक्रास्त–मलमासदोषाभावः, व्यावहारिकनाम्न एव शर्मान्तता. **विष्णुः**– २७३६ नामकरणकालः, वर्णभेदेन नामस्वरूपम्. **शङ्खः शङ्खलिखितौ च**– २७३६ नामकरणकालः, नामस्वरूपम्, कुलदेवतानक्षत्रमासनामानि, यथोक्तनामकरणफलम्. **महाभारतम्**– २७३८ द्विजानां नामकरणकालाः. **मनुः**– २७३८ नामकरणकालः, वर्णभेदेन नामस्वरूपम्,

स्त्रीनामस्वरूपम् . **याज्ञवल्क्यः**– २७४१ नामकरणकालः . **नारदः**– २७४२ वर्णभेदेन नामकरणकालः, नामस्वरूपम् . **बृहस्पतिः**– २७४२ नामकरणप्रशंसा, वर्णभेदेन नामकरणकालः, स्त्रीणां मासनामानि. **व्यासः**– २७४३ नामकरणकालः, शर्माद्युपपदानि. **यमः**– २७४४ नामकरणकालः, शर्माद्युपपदानि. **शातातपः**– २७४४ शर्मान्तं ब्राह्मणस्य नाम. **बृहत्पराशरः**– २७४४ नामकरणकालः . **गर्गः**– २७४४ नामकरणविधिः, नामस्वरूपम्, मासनामानि, गुरोर्नाम. **आश्वलायनः**– २७४६ नामस्वरूपम्, नामकरणकालः, शर्माद्युपपदानामुपपत्तयः . **लघ्वाश्वलायनः**– २७४६ नामकरणकालः, मासनाम– नक्षत्रचरणाक्षरनाम– पितामहनामानि, नामस्वरूपम् . **सोमः**– २७४६ नामकरणकालः . **पतञ्जलिः**– २७४६ नामस्वरूपम् . **स्मृत्यन्तरम्**– २७४७ मासनामानि, जन्मनाम्नो रहस्यत्वम्, जननशान्तिं कृत्वा नामकरणमिति क्रमः, नामकरणकालः . **विष्णुपुराणम्**– २७४७ नामकरणकर्ता, नामकरणकालः, नामस्वरूपम्, शर्माद्युपपदानि. **स्कन्दपुराणम्**– २७४८ देवालयपशुवृक्षादीनामपि नामकरणम्, नामकरणकालः . **ब्रह्मपुराणम्**– २७४८ नामस्वरूपम् . **भविष्यपुराणम्**–२७४८ नामकरणकालः . **कपिलसंहिता**– २७४९ नामकरणकालः, कुलोचितं देवतानिष्ठं पितामहादिनिष्ठं वा नाम कार्यम्, नृपपरवर्णादिनिष्ठनामधारणनिषेधः . **अनिर्दिष्टकर्तृकवचनानि**– २७४९ स्त्रीनामोपपदम्, नक्षत्रचरणाक्षरनिर्णायकशतपदचक्रोद्धारः, नामादिवर्णविशेषविचारः . **चतुर्विंशतिमतम्**– २७५१ नामकरणकालः . **संग्रहकारः**– २७५१ वर्णभेदेन नामकरणकालः, देवालयपशुवृक्षादीनामपि नामकरणम् . **स्मृत्यर्थसारः**– २७५१ नामकरणकालः . **राजमार्तण्डः**– २७५१ कन्याया नामविशेषनिषेधः . **श्रीधरः**– २७५१ नामकरणकालः . **संस्कारनृसिंहे**– २७५१ स्त्रीणां मासनामानि. **महेश्वरः**– २७५१ नामकरणस्य कर्ता कालश्च. **ज्योतिषार्के**– २७५२ नक्षत्रचरणाक्षराणि. **तन्त्रकारः**– २७५३ व्यावहारिकनामकरणम् . **सुदर्शनभाष्ये**– २७५३ तद्धितान्तनाक्षत्रनामसाधनम् . **पद्धतिरत्ने**– २७५३ स्त्रीणां मासनामानि. **मुहूर्तगणपतौ**– २७५४ नामकरणकालः . **शाकलकारिकाः**– २७५४ नामकरणकालः, कर्तृविचारः, मासनामानि, पितृदत्तनाम-जन्मनाम-मासनाम्नां विनियोगः . **शौनककारिकाः**– २७५४ नामकरणकालः, लक्षणयुक्तं पितामहादिनिष्ठं वा एकं नाम, द्वितीयमभिवादनीयं रहस्यं नाम, स्त्रीणाममन्त्रकं नामकरणम् . **कुमारिलकारिकाः**– २७५५ नामकरणकालः, स्त्रीपुंसनामस्वरूपम्, अभिवादनीयनाम्नो रहस्यत्वम् . **रेणुकारिकाः**– २७५५ नामकरणकालः, नामस्वरूपम्, शर्माद्युपपदानि, पितामहादिनाम कुलदेवतानाम नक्षत्रनाम वा कर्तव्यम्, नामकरणकर्ता, स्त्रीनामस्वरूपम्, नक्षत्राक्षरनिर्णयः .

## नामकरणमुहूर्तः

( पृ. २७५७–२७६२ )

**आश्वलायनगृह्यपरिशिष्टम्**– २७५७ नामकरणे नक्षत्रम् . **जैमिनिगृह्यसूत्रम्**– २७५७ नामकरणे पक्षः नक्षत्रं च. **वैखानसगृह्यसूत्रम्**– २७५७ नामकरणे नक्षत्रम् . **वसिष्ठः**– २७५७ नामकरणे दिवसभागाः, नक्षत्राणि, तिथयः, ग्रहसंस्थानम्, लग्न-नवांशादि. **मनुः**– २७५७ नामकरणे पुण्यतिथिमुहूर्तनक्षत्राणि. **नारदः**– २७५८ मुख्यकालातिक्रमे नामकरणे मुहूर्तापेक्षा, तत्र गुरुशुक्रयोरुदयः, नक्षत्रवारचन्द्रबललग्नतन्नवांशाः, शुभाशुभमुहूर्तयोः शुभाशुभफले, दिवैव कर्तव्यता. **बृहस्पतिः**– २७५८ नामकरणे नक्षत्रलग्न-नवांश-वार-षड्वर्ग-राशि-ग्रहसंस्थान-दिवसभागाः . **यमः**– २७५९ नामकरणे पुण्यनक्षत्रदिवसमुहूर्ताः . **गर्गः**– २७५९ गुरुशुक्रयोरस्तबाल्यवृद्धत्वेषु मलमासे च नामकरणनिषेधः, मुख्यकालातिक्रमे मुहूर्तापेक्षा, तत्र त्याज्यतिथिवारयोगकरणानि, ग्राह्यनक्षत्रग्रहसंस्थानादि .

**आश्वलायनः**– २७६० नामकरणे मानुषमासः. **कश्यपः**– २७६० नामकरणे कालातिक्रमे मुहूर्तापेक्षा, तत्र गुरुशुक्रयोरस्तवार्धके त्याज्ये, लग्न-नवांश-तिथि-वारादि शुभं ग्राह्यम्. **भविष्यपुराणम्**– २७६० नामकरणे पुण्यानि तिथिमुहूर्तनक्षत्राणि ग्राह्याणि. **नृसिंहः**– २७६० नामकरणे त्याज्यानि तिथिकरणग्रहसंस्थानानि. **माधवीये**– २७६० रात्रौ नामकरणनिषेधः. **विधिरत्ने**– २७६० नामकरणे नक्षत्राणि. **श्रीधरः**– २७६० नामकरणे ग्रहसंस्थान-लग्न-नवांश-तिथि-वार-नक्षत्राणि. **महेश्वरः**– २७६१ नामकरणे वार-नक्षत्र-ग्रहसंस्थानानि. **कालनिर्णये**– २७६१ ग्राह्याग्राह्यौ वारषड्वर्गौ. **नारायणपद्धतौ**– २७६१ नामकरणे वार-लग्न-ग्रहसंस्थानानि. **मुहूर्तगणपतौ**– २७६१ मुख्यकालातिक्रमे नामकरणनक्षत्राणि. **शौनककारिकाः**– २७६२ शुभयोर्नक्षत्रमुहूर्तयोर्नाम कर्तव्यम्. **रेणुकारिकाः**– २७६२ नामकरणे मुख्यकालातिक्रमे मुहूर्तापेक्षा.

## नामकरणप्रयोगः

### ( पृ. २७६३–२७७७ )

**बौधायनगृह्यसूत्रम्**– २७६३ प्राजापत्यहोमः, ब्राह्मणभोजनम्, पुण्याहादिवाचनमन्त्रेषु नामोच्चारणरूपं नामकरणम्. **बौधायनगृह्यपरिभाषासूत्रम्**– २७६३ ब्राह्मणभोजनमात्रेण पुण्याहवाचनमात्रेण वा नामकरणसंस्कारसंपत्तिरिति मतद्वयम्. **बौधायनगृह्यशेषसूत्रम्**– २७६३ ब्राह्मणभोजनम्, पुण्याहवाचनमन्त्रेषु नामोच्चारणम्, प्राजापत्यहोमः, जयप्रभृत्युत्तरतन्त्रम्, ब्राह्मणालाभे ज्योतिष्मत्या नामकरणम्. **कौषीतकिगृह्यसूत्रम्**– २७६३ मातृपितृकुमाराणां स्नानमहतवासःपरिधानं च, सूतिकाग्नौ स्थालीपाकः, नामप्रकाशनम्, स्वस्तिवाचनम्, प्रथमवर्षे प्रतिमासं ततः प्रतिसंवत्सरं जन्मतिथौ स्थालीपाकः, नक्षत्रतद्देवतानुक्रमणम्. **हिरण्यकेशिगृह्यसूत्रम्**– २७६५ मातापुत्रयोः स्नानम्, सूतिकागारस्य शुचीकरणम्, सूतिकाग्निनिर्हरणमौपासनाग्नेराहरणं च, प्रधानहोमः, उपहोमः, ब्राह्मणभोजनम्, पुण्याहादिवाचनम्, नामकरणम्. **मानवगृह्यसूत्रम्**– २७६६ स्नानम्, पुत्राभिमर्शनम्, गुरवे वरदानम्. **भारद्वाजगृह्यसूत्रम्**– २७६६ जयादिहोमाः, प्रधानहोमः. **काठकगृह्यसूत्रम्**– २७६६ फलोत्तरैः सर्वगन्धैः स्नापनम्, स्थालीपाकहोमः, अग्नेरायुरसीतीत्यादिजातकर्मोक्तविधिः, आज्यहोमः, घृतप्राशनम्, हिरण्यबन्धनम्, ललाटाभिमर्शनजपौ, मूर्धावघ्राणम्, संस्थितयजुर्होमः, स्वस्त्ययनम्. **वाराहगृह्यसूत्रम्**– २७७० नवनीतलिप्तपाणिना कुमाराभिमर्शनम्. **आग्निवेश्यगृह्यसूत्रम्**– २७७१ स्नानम्, गृहालंकरणम्, सूतकाग्न्युद्वासनमौपासनाग्निस्थापनं च, नामकरणसंकल्पः, होमः, जयाद्युपहोमा मतान्तरेण, ब्राह्मणभोजनम्, पुण्याहादिवाचनम्, नामकरणम्. **गोभिलगृह्यसूत्रम्**– २७७१ मात्रा कुमारस्य प्रदानं मातुर्यथाविध्युपवेशनं च, होमः, मुख्यप्राणस्पर्शनं जपश्च, मन्त्रान्ते नामोच्चारणम्, मात्रे प्रथमं नाम्नोऽभिधानम्, दक्षिणादानम्. **खादिरगृह्यसूत्रम्**– २७७४ कुमारस्नापनम्, पित्रे कुमारप्रदानम्, यथाविधि मातुरुपवेशनम्, होमः, मुख्यप्राणाभिमर्शनम्, मन्त्रान्ते नामकरणम्, मात्रे कुमारप्रदानम्, मात्रे प्रथमं नामाख्यानम्. **जैमिनिगृह्यसूत्रम्**– २७७४ अहतवाससा कुमाराच्छादनम्, होमः. **कौशिकगृह्यसूत्रम्**– २७७४ उदकधारापातनम्, पूतुदारुबन्धनम्, पूतुदारुजलपायनम्, टीकायां पायनोत्तरं नामकरणम्, आच्छादनम्, परिदानम्, टीकायां श्राद्धसंस्कारकर्मणोः क्रमे मतद्वयम्. **वैखानसगृह्यसूत्रम्**– २७७५ कुमारशिरस्यक्षतारोपणम्, होमः, त्रिवृत्प्राशनम्, देहाङ्गसंधौ शिरसि चाक्षतादिनिक्षेपः, पुण्याहवाचनम्. **शङ्खः शङ्खलिखितौ च**– २७७५ होमः, नान्दीश्राद्धम्, ब्राह्मणभोजनम्, नामकरणम्. **नारदः**– २७७५ स्वस्तिवाचनपूर्वकं नामकरणम्. **कात्यायनः**– २७७५ तिथिदेवताहोमे नक्षत्रहोमे नक्षत्रदेवताहोमे च एकद्विबहुवचननिर्णयः. **आश्वलायनः**– २७७६ स्त्रीणां नाम-

करणममन्त्रकम्, होमः समन्त्रकः. **लघ्वाश्वलायनः**– २७७६ नामपूजामन्त्रः, स्वस्तिवाचने नामोच्चारणम्, ब्राह्मणभोजनम्. **कश्यपः**– २७७६ मङ्गलघोषे रहस्यनामश्रावणम्. **शाकलकारिकाः**– २७७६ मासादिनाम्नां सुवर्णेन लेखनं पूजनं कर्णोच्चारणं च, नामपूजामन्त्रः. **शौनककारिकाः**– २७७६ नामकरणे विद्वदनुज्ञाग्रहणम्, पुण्याहवाचने स्वस्तिपर्याये नामोच्चारणम्, होमपक्षे स्विष्टकृद्धोमात्प्राक् पुण्याहवाचने नामकरणम्. **कुमारिलकारिकाः**– २७७७ स्वस्तिपर्याये नामोच्चारणम्. **कपर्दिकारिकाः**– २७७७ पुण्याहवाचने स्वस्तिपर्याये नामोच्चारणम्. **रेणुकारिकाः**– २७७७ वृद्धिश्राद्धपूर्वकं नामकरणम्.

## दोलारोहणम्
### (पृ. २७७८–२७७९)

**बृहस्पतिः**– २७७८ दोलारोहणकालः. **भविष्यपुराणम्**– २७७८ दोलारोहणे सावनदिवसः मुहूर्तश्च, शिशोः शिरोदिङ्नियमः. **अनिर्दिष्टकर्तृकवचनानि**– २७७९ नक्षत्रविषये दोलिकाचक्रं नक्षत्रफलानि च. **मुहूर्तचिन्तामणिः**– २७७९ दोलाचक्रम्, दोलारोहणे सावनकालः वाराः नक्षत्राणि च. **मुहूर्तगणपतौ**– २७७९ दोलारोहणे स्तन्यपाननक्षत्रातिदेशः, दोलाचक्रम्, शिरोदिङ्नियमः.

## प्रथमकञ्चुकधारणम्
### (पृ. २७८०)

**ज्योतिर्निबन्धे**– २७८० प्रथमकञ्चुकधारणे तिथिवारनक्षत्रमुहूर्तचन्द्रताराबलानि, कञ्चुकवर्णः.

## कर्णवेधः
### [पृ. २७८१–२७९४]
## कर्णवेधविधिः
### (पृ. २७८१–२७८४)

**बौधायनगृह्यशेषसूत्रम्**– २७८१ कर्णवेधकालः. **पारस्करगृह्यपरिशिष्टम्**– २७८१ कर्णवेधकालः. **वसिष्ठः**– २७८१ कर्णवेधकालः. **शङ्खः**– २७८१ छिद्रप्रमाणम्. **बृहस्पतिः**– २७८१ कर्णवेधकालः, सूचीप्रकृतिधातवः तेषां वर्णभेदेन व्यवस्था च, सूचीप्रमाणम्. **व्यासः**– २७८२ कर्णवेधकालः. **देवलः**– २७८२ छिद्रप्रमाणम्. **गर्गः**– २७८२ कर्णवेधकालः. **शालङ्कायनः**– २७८३ कर्णवेधस्य नियतत्वम्. **संग्रहे**– २७८३ कर्णवेधकालः, पाठान्तरे सूचीप्रकृतिद्रव्यम्. **नृसिंहः**– २७८३ कर्णवेधकालः. **राजमार्तण्डः**– २७८३ कर्णवेधकालः. **श्रीधरीये**– २७८३ कर्णवेधकालः. **मुहूर्तचिन्तामणिः**– २७८३ कर्णवेधकालः. **मुहूर्तसंग्रहे**– २७८३ कर्णवेधकालः. **मुहूर्तगणपतौ**– २७८४ कर्णवेधकालः. **रेणुकारिकाः**– २७८४ कर्णवेधकालः.

## कर्णवेधमुहूर्तः
### (पृ. २७८५–२७९१)

**पारस्करगृह्यपरिशिष्टम्**– २७८५ कर्णवेधे नक्षत्राणि, दिवसभागः. **वसिष्ठः**– २७८५ कर्णवेधे दिवसभागः, निषिद्धानि तिथिग्रहसंस्थानानि. **नारदः**– २७८५ कर्णवेधे मतभेदेन राशयो लग्नानि वा. **बृहस्पतिः**– २७८५ कर्णवेधे तिथिवारनक्षत्रयोगकरणराशिनवांशाः, दिवसभागः, तिथिद्वयनक्षत्रद्वयवद्दिननिषेधः, ग्रहसंस्थानम्. **व्यासः**– २७८७ कर्णवेधे मासपक्षशुभदिनानि, जन्ममासनिषेधः. **गर्गः**– २७८७ कर्णवेधे मासपक्षतिथयः. **बादरायणः**– २७८७ कर्णवेधे पक्षतिथिवारनक्षत्रग्रहसंस्थानानि. **कश्यपः**– २७८७ कर्णवेधे वारनक्षत्रचन्द्रबललग्नानि. **अगस्त्यः**– २७८८ संध्याकालयोः रात्रौ तिथिनक्षत्रसंधिषु च कर्णवेधनिषेधः. **अनिर्दिष्टकर्तृकवचनानि**– २७८८ कर्णवेधे मासनक्षत्रवाराः. **संग्रहे**– २७८८ कर्णवेधे शोभननक्षत्रचन्द्रलग्नानि ग्राह्याणि, त्याज्ययोगादि. **लल्लः**– २७८८ कर्णवेधे गुरुबलम्. **वराहसंहिता**– २७८८ कर्णवेधे नक्षत्रलग्नग्रहसंस्थानानि. **नृसिंहः**– २७८९ कर्णवेधे मासपक्षवारनक्षत्रग्रहसंस्थानानि. **राजमार्तण्डः**– २७८९ कर्णवेधे सूर्यचन्द्र-

गुरुतारावलानि. **श्रीधरीये**— २७८९ कर्णवेधे तिथिवारनक्षत्रलग्नानि दिवसभागः ग्रहसंस्थानं च, तिथिद्वयवत् नक्षत्रद्वयवच्च दिनं वर्ज्यम्. **ज्योतिःसागरे**— २७८९ कर्णवेधे मीनरवौ चैत्रः धनूरवौ पौषश्च वर्ज्यः. **मुहूर्तचिन्तामणिः**— २७८९ कर्णवेधे मासतिथिवारनक्षत्रलग्नग्रहसंस्थानानि. **व्यवहारोच्चये**—२७९० कर्णवेधे मासतिथिकरणनिषेधः. **दीपिकायाम्**— २७९१ कर्णवेधे मासनक्षत्रवारलग्नग्रहसंस्थानानि, जन्ममासनक्षत्रनिषेधः. **मुहूर्तगणपतौ**— २७९१ कर्णवेधे वारा नक्षत्राणि च. **रेणुकारिकाः**— २७९१ कर्णवेधे मासपक्षतिथिवारनक्षत्रयोगकरणदिवसभागाः, ग्रहसंस्थानम्, वारफलानि.

## कर्णवेधप्रयोगः

### ( पृ. २७९२–२७९४ )

**बौधायनगृह्यशेषसूत्रम्**— २७९२ ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमः, हुतशेषनिधानम्, आशीर्वाचनम्, कर्णवेधनम्, कर्णबन्धनम्, श्वोभूते कर्णविस्रंसनम्, छिद्रवर्धनम्. **पारस्करगृह्यपरिशिष्टम्**— २७९२ कुमाराय मधुरदानम्, कर्णाभिमन्त्रणम्, वेधनम्, ब्राह्मणभोजनम्. **विष्णुधर्मोत्तरपुराणम्**— २७९२ केशवादिपूजनम्, कुमारस्य दक्षिणवामयोः कुमार्या वामदक्षिणयोः क्रमेण वेधनम्, छिद्रवर्धनम्, सांवत्सरिकचिकित्सकसुवासिनीसुहृद्द्विजपूजनम्. **अनिर्दिष्टकर्तृकवचने**— २७९३ देवदैवज्ञभिषग्ब्राह्मणकर्मकारपूजनम्, दक्षिणस्य पूर्वं वेधनम्, ब्राह्मणभोजनम्. **स्मृतिमहार्णवे**— २७९३ शुक्लसूत्रयुक्तताम्रसूच्या वेधनम्, वेधनक्षत्रात्तृतीयनक्षत्रे क्षालनम्. **सुबोधे**— २७९४ प्राङ्गणे रवियुतेऽम्बरे स्त्रीपुंसयोः क्रमेण वामदक्षिणकर्णौ पूर्वं वेध्यौ. **रेणुकारिकाः**—२७९४ कुमाराय मधुरदानम्, प्राङ्मुखस्य कर्णयोर्दक्षिणवामेतिक्रमेण वेधनम्, ब्राह्मणभोजनम्, नान्दीश्राद्धानुष्ठाने मतभेदः, मन्त्रयोर्ऋष्यादयः.

## आयुर्वर्धापनम्

### ( पृ. २७९५ – २८१६ )

**बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च**— २७९५ नक्षत्रहोमः— प्रतिसंवत्सरं प्रत्यर्धसंवत्सरं प्रतिचातुर्मास्यं प्रत्यृतु प्रतिमासं वा जन्मनक्षत्रेऽनुष्ठानम्, ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमाः, अन्नशेषभक्षणम्; मृत्युंजयकल्पः— जन्मनक्षत्रादिषु ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमाः, हुतशेषनिधानम्, दक्षिणादानम्, कर्मफलम्. **काठकगृह्यसूत्रम्**— २७९६ आसंवत्सरान्तं प्रतिमासं जन्मदिने होमो मूर्धावघ्राणं च, समाप्ते संवत्सरे होमो ब्राह्मणभोजनं च, आसंवत्सरं मातापित्रोर्मांसाशननिषेधः. **आग्निवेश्यगृह्यसूत्रम्**— २७९७ चरुहोमः— प्रतिसंवत्सरं प्रत्यर्धसंवत्सरं प्रतिचातुर्मास्यं प्रत्यृतु प्रतिमासं वा जन्मनक्षत्रेऽनुष्ठानम्, होमाः, आज्यशेषप्राशनम्, जठराभिमर्शनम्, प्रतिसंवत्सरं जन्मनक्षत्रे क्रियमाणमुक्तविधिप्रायं प्रयोगान्तरम्; २७९८ आयुष्यहोमः— प्रतिसंवत्सरं प्रत्यर्धसंवत्सरं प्रतिचातुर्मास्यं प्रतिमासं च जन्मनक्षत्रेऽनुष्ठानम्, होमः, हुतशेषस्य निधानं प्राशनं च, जठराभिमर्शः; अपमृत्युंजयकल्पः— जन्मनक्षत्रे जन्मवारे पुण्यनक्षत्रादिकालान्तरे वा देवालयादिदेशे स्वगृहे वाऽनुष्ठानम्, पुण्याहवाचनम्, होमः, हुतशेषनिधानम्, आचार्यादिभ्यो दक्षिणादानम्, ब्राह्मणभोजनम्. **गोभिलगृह्यसूत्रम्**— २७९९ प्रतिमासं प्रतिसंवत्सरं सांवत्सरिकपर्वसु वा यागः. **वैखानसगृह्यसूत्रम्**— वर्षवर्धनम्— जन्मनक्षत्रतद्देवताद्युद्देश्यकहोमाः, नक्षत्रतद्देवतानुक्रमणम्, अनुपनीतोपनीतयोर्होमे विशेषः, वर्षवर्धनफलम्. **मनुः**— २८०० जन्मनक्षत्रं पार्वणश्राद्धनिमित्तम्. **वृद्धमनुः**— २८०० जन्मदिने उष्णवारिणा स्नानस्य निषेधः. **गर्गः**— २८०० प्रत्यब्दं जन्मनक्षत्रे कौतुकबन्धः, शान्त्युदकप्राशनम्, अभिषेचनम्, ग्रहशान्तिः, नक्षत्राधिपपूजनम्; २८०१ प्रतिवर्षं जन्मदिवसे तिलानामुद्वर्तनस्नानादिरूपेण षड्विधोपयोगः,

गुरुदेवादिपूजनम्, जन्मग्रन्थिबन्धनम्, मार्कण्डेयप्रार्थनम्. **वृद्धगार्ग्यः**– २८०२ नक्षत्रद्वैधे निर्णयः, आयुष्यहोमः, दिगीशादिपूजनम्, बद्धानां मोचनम्, पुण्यकर्मकरणम्, पापकर्मणः शतगुणत्वम्. **ब्रह्माण्डपुराणम्**– २८०२ सकृत् प्रतिमासं प्रतिवर्षं वा ब्रह्मपूजनं हिरण्यदानं च, सर्वमायुः फलम्. **स्कन्दपुराणम्**– २८०३ वर्षवृद्धौ औदयिकी तिथिः, वर्जनीयाः पदार्थाः, प्रतिवर्षं प्रतिमासं वाऽनुष्ठानम्, वर्षवृद्धिफलम्. **विष्णुधर्मोत्तरपुराणम्**– २८०३ जन्मनक्षत्रे वासुदेवसोमादिपूजोत्तरकमोषधिस्नानम्, भाद्रहोमब्राह्मणभोजनानि, स्नानफलम्. **पद्मपुराणम्**– २८०४ पूजादौ नाममन्त्रविधानम्, कर्मोपदेष्टृपूजनम्. **ब्रह्मपुराणम्**– २८०४ प्रतिवर्षं जन्मनक्षत्रे मृत्युंजयहोमः, कौतुकबन्धनम्, ग्रहयज्ञः, नक्षत्रदेवतापूजनम्, आयुष्यहोमः, ब्राह्मणभोजनम्, दक्षिणादानम्, कटिसूत्रबन्धनम्, वस्त्रपरिधापनम्; २८०५ प्रतिवर्षं जन्मदिवसे तिलानामुद्वर्तनस्नानादिरूपेण षड्विधोपयोगः, गुरुदेवादिपूजनम्, जन्मग्रन्थिबन्धनम्, मार्कण्डेयप्रार्थनम्, मृत्युंजयादिपूजनम्, सगुडतिलपयःप्राशनम्. **भविष्यपुराणम्**– २८०५ प्रथममासप्रवेशे बालवर्धापनविधेरनुष्ठानम्, कुमुदादिपूजनम्, बालपूजनम्, सुवासिनीभ्यः पक्वान्नादियुतवंशपात्रवस्त्रादिदानम्; २८०६ प्रतिवर्षं जन्मदिवसे मार्कण्डेयस्य द्रौण्यादीनां च पूजनम्, ब्राह्मणेभ्यस्तिलादिदानम्, नीराजनम्, ब्राह्मणभोजनम्. **देवीपुराणम्**– २८०७ जन्मतिथिद्वैधे निर्णयः. **आदित्यपुराणम्**– २८०७ प्रतिवर्षं जन्मदिवसे गुरुदेवादिपूजनम्, सतिलगुडपयःपानम्, तिलादिदानम्. **अनिर्दिष्टकर्तृकवचनानि**– २८०८ वर्षवृद्धिः– राज्ञोऽभिषेकदिने तिथिनक्षत्रयोगे नक्षत्रमात्रे वा अन्येषां जन्मनक्षत्रे जन्ममासगतशुभदिने वाऽनुष्ठानम्, अधिकमासे निषेधः, कलशे पिष्टपीठे वा साशीतिपरिवारदेवतस्य मार्कण्डेयस्य पूजनम्, प्रतिदेवतं वरप्रार्थना, मङ्गलद्रव्यैः संवत्सरग्रन्थिबन्धनादिना च रक्षाविधानम्, दक्षिणादानम्, स्त्रीपरिहारमत्स्यमोचनतिलदानसक्तुभक्षणतिलामिषभक्षणानां फलानि, मार्कण्डेयपूजाफलम्. **संग्रहे**– २८१० जन्मनक्षत्रयुतजन्मतिथौ जन्मनक्षत्रमात्रे वा वर्षवर्धनम्. **नृसिंहः**– २८१० वर्षवर्धनं प्रतिवर्षं जन्मनक्षत्रेऽनुष्ठेयम्, तदतिक्रमे तिथिवारनक्षत्रयोगकरणलग्नग्रहसंस्थानानि, हेमसूत्रबन्धनम्, नवक्षौमादिधारणम्. **सायणीये**– २८११ कटिसूत्रबन्धनम्, नववस्त्रधारणम्, आयुष्यहोमः, पितृदेवतातर्पणम्. **विधिरत्ने**– २८११ सौरवर्षान्ते जन्मनक्षत्रे वृद्धिकरकर्मानुष्ठानम्, स्नापनम्, सुवर्णसूत्रधारणम्. **श्रीधरीये**– २८११ सौरवर्षान्तजन्मदिवसे स्नापनम्, शान्तिकर्म, कटिसूत्रबन्धनम्, नववस्त्रधारणम्. **ज्योतिःसागरे**– २८१२ जन्मदिने जन्मनक्षत्राभावे शनिभौमवारयोगे जपानुष्ठानम्. **प्रयोगरत्ने**–२८१२ प्रतिवर्षं मार्कण्डेयपूजनम्, पुष्पाञ्जलिदानम्, वरप्रार्थनम्, अन्यदेवतापूजनम्, ब्राह्मणेभ्यस्तिलादिदानम्, सतिलगुडपयःपानम्, नीराजनम्, ब्राह्मणभोजनम्. **विधानमालायाम्**– २८१२ जन्ममासजन्मतिथिजन्मनक्षत्रजन्मलग्नेषु सप्तधान्यपीठे मासदेवस्य गणेशादीनां च पूजनम्, होमः, अभिषेकः, आचार्यपूजनम्, ब्राह्मणभोजनम्. **सुदीपिकायाम्**– २८१३ जन्ममासे जन्मतिथौ जन्मनक्षत्रयोगस्य प्राशस्त्यम्. **शुद्धदीपिकायाम्**– २८१३ जन्मतिथौ जन्मनक्षत्राभावे शनिभौमयोगे दोषशान्त्यर्थं विधानम्, जन्मनक्षत्रे रविसंक्रान्तौ दोषशान्त्यर्थं विधानम्. **लुब्धजातके**– २८१३ षष्टितमवर्षपर्यन्तं प्रतिवर्षं द्वादशे मासे द्वादशानां मोदकादिपूर्णवंशपेटिकानां दानम्, एकषष्टवर्षे तैलस्नानवत्सराधिपपूजनब्राह्मणभोजनानि. **मुहूर्तगणपतौ**– २८१३ प्रतिवर्षं जन्मतिथौ गणेशशिवचिरजीविपूजनम्, आयुष्यकर्म, दानानि, मङ्गलसूत्रबन्धनम्, ब्राह्मणभोजनम्. **शौनककारिकाः**– २८१४ आयुष्यहोमः– त्रिषु जन्मनक्षत्रेषु विषुवादिषु चानुष्ठानम्, स्वस्तिवाचनम्, ब्राह्मणायान्नदानम्, होमः, ब्राह्मणभोजनम्, स्वस्तिवाचनम्, धेनुदानम्; अब्दपूर्तिः– कौतुकबन्धः, नक्षत्र-

## जलपूजा

(पृ. २८१७)



## दुग्धपानम्

(पृ. २८१८–२८१९)



## स्तन्यवृद्धिविधानम्

(पृ. २८२०–२८२१)



## ताम्बूलभक्षणम्

(पृ. २८२२–२८२३)



## नवनीतप्राशनम्

(पृ. २८२४)



## निष्क्रमणम्

[पृ. २८२५–२८४६]

### निष्क्रमणविधिः

(पृ. २८२५–२८३१)

सीमन्तोन्नयनम्— सीमन्तोन्नयनविधिः—

सीमन्तोन्नयने गर्भमासविधिः २५८०.

जातकर्म— जातकर्मविधिः—

जातकर्मकालः, स्नानवृद्धिश्राद्धजातकर्मविधिः सफलः, पूर्वप्रवृत्तजननाशौचेऽपि जातकर्मादि कार्यम्, मृताशौचमध्ये तन्निवृत्तौ वा कार्यमिति विकल्पः, कालगुणदोषचिन्ता न कार्या २६४८.

नामकरणम्— नामकरणविधिः—

नामकरणकालः २७५१.

निष्क्रमणम्— निष्क्रमणविधिः—

चन्द्रदर्शनादिरूपनिष्क्रमणकालः २८३०.

अन्नप्राशनम्— अन्नप्राशनविधिः—

अन्नप्राशनकालः २८५६.

## उत्पलाचार्यविवृतौ

जननशान्तिनिमित्तानि—

मूलादिजनने कुमारत्यागः शान्तिर्वा २७०८.

## यवनः

जननशान्तिनिमित्तानि—

गण्डान्तानि व्यतीपातादियोगा विष्टिश्च शान्तिनिमित्तानि २७०९.

## ब्रह्मयामले

जननशान्तिनिमित्तानि—

ज्येष्ठानक्षत्रदशांशफलानि, प्रथमोर्ध्वदन्तजननफलम् २७०९.

## रुद्रयामले

जननशान्तिनिमित्तानि—

आश्लेषालताङ्गघटीफलानि, गण्डान्तादिजनने कुमारादर्शनकालाः २७०९.

## मेधातिथिनिबन्धे

दुग्धपानम्—

दुग्धलक्षणम् (!) २८१८.

## स्मृतिचन्द्रिकायाम्

गर्भाधानम्— प्रथमर्तुविचारः—

प्रथमरजोदर्शने पक्षफलानि २३०८.

## हेमाद्रौ

गर्भाधानम्— गर्भाधानप्रयोगः—

प्रातर्वृद्धिश्राद्धकर्तव्यता २४३०.

जातकर्म— जातकर्मविधिः—

जननवार्ताश्रावकाय पारितोषिकदानम्, जननदिनस्य पुण्यत्वम्, स्नान-श्राद्ध-जातकर्म-दानविधिः, आशौचग्रहणयोरपि कार्यम् २६४८.

## कृत्यचिन्तामणौ

निष्क्रमणम्— निष्क्रमणप्रयोगः—

सूर्यचन्द्राभ्यामर्घ्यदानम् २८४५.

अन्नप्राशनम्— अन्नप्राशनविधिः—

अन्नप्राशनकालः २८५६.

अन्नप्राशनम्— अन्नप्राशनमुहूर्तः—

अन्नप्राशने निषिद्धतिथयः २८६३.

## नृसिंहः

गर्भाधानम्— प्रथमर्तुविचारः—

प्रथमरजोदर्शने सप्तमस्थग्रहफलानि, ग्रहाणां वारवर्गोदयेक्षणफलानि, स्थाननक्षत्रराशिफलानि २३०८. प्रथमरजोदर्शने व्याघातशूल्योर्दुष्टा घटिकाः २३०९.

पुंसवनम्— पुंसवनविधिः—

पुंसवनस्य गर्भमासात्मकः कालः, पुंसवनस्य प्रतिगर्भमावृत्तिः, पुंसवनस्य सीमन्तोन्नयनेन सह कर्तव्यता २५३९.

पुंसवनम्— पुंसवनमुहूर्तः—

पुंसवने सीमन्तोन्नयनकालातिदेशः, नक्षत्राणि २५४७.

सीमन्तोन्नयनम्— सीमन्तोन्नयनमुहूर्तः—

सीमन्ते वर्ज्यतिथयः, शुभाशुभग्रहयोगाः २५८७.

नामकरणम्— नामकरणमुहूर्तः—

नामकरणे त्याज्यानि तिथिकरणग्रहसंस्थानानि २७६०.

कर्णवेधः— कर्णवेधविधिः—

कर्णवेधकालः २७८३.

कर्णवेधः— कर्णवेधमुहूर्तः—

कर्णवेधे मासपक्षवारनक्षत्रग्रहसंस्थानानि २७८९.

आयुर्वर्धापनम्—

वर्षवर्धनं प्रतिवर्षं जन्मनक्षत्रेऽनुष्ठेयम्, तदतिक्रमे तिथिवारनक्षत्रयोगकरणलग्नग्रहसंस्थानानि, हेमसूत्रबन्धनम्, नवक्षौमादिधारणम् २८१०.

दुग्धपानम्—

एकत्रिंशद्दिने द्वितीयजन्मनक्षत्रे वा शङ्खेन दुग्धपानम्, अतिक्रमे तिथिनक्षत्रादिकालविशेषविधानम्, दिङ्नियमः २८१८.

अन्नप्राशनम्— अन्नप्राशनमुहूर्तः—

अन्नप्राशने नक्षत्राणि लग्नानि च, निशानिषेधः २८६३.

## चण्डेश्वरः

ताम्बूलभक्षणम्—

सार्धमासद्वये शिशोस्ताम्बूलभक्षणम्, तत्र वारनक्षत्राणि २८२२.

## स्मृतिमञ्जर्याम्

गर्भाधानम्—

रजस्वलाधर्माः २३२४.

गर्भाधानम्— रजस्वलाशुद्धिः—

उदक्योपयुक्तपात्रस्थानादिशुद्धिः २३४०.

## भीमपराक्रमः

अन्नप्राशनम्— अन्नप्राशनविधिः—

स्त्रीपुंसयोरन्नप्राशनकालः २८५६.

अन्नप्राशनम्— अन्नप्राशनमुहूर्तः—

अन्नप्राशने नक्षत्राणि २८६३.

## भुजबलः

पुंसवनम्— पुंसवनविधिः—

पुंसवनोत्तरं वर्ज्यानि २५३९.

पुंसवनम्— पुंसवनप्रयोगः—

होमः, शान्तिः, ऊर्णासूत्रग्रथितजीवच्चात्यादिमालाधारणम् २५६१.

## भुजबलभीमः

अन्नप्राशनम्— अन्नप्राशनविधिः—

अन्नप्राशनकालः २८५६.

अन्नप्राशनम्— अन्नप्राशनमुहूर्तः—

अन्नप्राशने पक्षतिथिवारनक्षत्रलग्नग्रहसंस्थानानि २८६३.

## माधवीये

पुंसवनम्— पुंसवनविधिः—

पुंसवनस्य गर्भमासात्मकः कालः २५३९.

पुंसवनम्— पुंसवनमुहूर्तः—

पुंसवने नक्षत्राणि ग्रहयोगा राशयश्च २५४७.

नामकरणम्— नामकरणमुहूर्तः—

रात्रौ नामकरणनिषेधः २७६०.

अन्नप्राशनम्— अन्नप्राशनविधिः—

अन्नप्राशनकालः २८५६.

अन्नप्राशनम्— अन्नप्राशनमुहूर्तः—

अन्नप्राशने नक्षत्राणि लग्नानि च २८६३.

## सायणीये

गर्भाधानम्— भार्यागमनकालः—

अशुभनक्षत्रात्प्राचीनानि नवमदशमद्वादशानि गमने वर्ज्यानि २४१६.

आयुर्वर्धापनम्—

कटिसूत्रबन्धनम्, नववस्त्रधारणम्, आयुष्यहोमः, पितृदेवतातर्पणम् २८११.

## श्रीपतिः

गर्भाधानम्— गर्भाधानविधिः—

गर्भाधानाङ्गस्नानम् २३४६.

गर्भाधानम्— भार्यागमनम्—

कृतवाजीकरणः जितरोषभयश्च गमनार्हः २४०३.

## रत्नमालायाम्



## राजमार्तण्डः



## बृहद्राजमार्तण्डे



## विधिरत्ने

## कालनिर्णये



## कालविधाने



## कालादर्शे



## नृसिंहप्रसादे



## नवनीतारिष्टे



## ज्योतिर्निबन्धे



## ज्योतिष्प्रकाशे



## ज्योतिषार्णवे



## भास्करव्यवहारे

## सारावल्याम्



## स्मृतिरत्ने



## प्रयोगरत्ने



## विधानमालायाम्



## यन्त्रप्रकाशे

## रत्नसारे



## स्मृतिभास्करे



## कालदीपभाष्ये



## अभिधानग्रन्थे



## रहस्ये



## आचारसारे



## व्यवहारोच्चये



## मुहूर्तसंग्रहे



## दीपिकायाम्



## धर्मोद्योते



## तत्त्वसागरसंहितायाम्



## मदनमहार्णवे

विप्रपादोदकेन स्तनक्षालनम्, मध्वादिभूतपञ्चकाय बलिदानम् २८२१.

### महार्णवे

गर्भाधानम्— वन्ध्यात्वं तत्परिहारोपायाश्च—

पुत्रमरणनिमित्तप्राग्भवीयबालघातदोषपरिहारार्थानि ब्राह्मणोद्वाहन-हरिवंशश्रवण-महारुद्रजपरूपाणि प्रायश्चित्तानि ; सदास्रवद्रक्तात्वनिमित्तं तन्निष्कृतिश्च २५०५.

### कालकौमुद्याम्

गर्भाधानम्— वन्ध्यात्वं तत्परिहारोपायाश्च—

पार्थिवलिङ्गपूजायां लिङ्गप्रमाणम् २५०५.

### शिशुरक्षारत्ने

गर्भाधानम्— वन्ध्यात्वं तत्परिहारोपायाश्च—

प्रथमादिद्वादशान्तेषु गर्भमासेषु प्रतिमासमनुष्ठेयं बलिकर्म औषधं च २५०६.

स्तन्यवृद्धिविधानम्—

अकालक्षीणस्तन्यप्राप्त्यर्थं रेवतीग्रहपूजाविधानम्, तत्र पूजनहोमबलिदानानि, सपीठग्रहस्य दानम्, अभिषेकः, आचार्यादिपूजनम्, ब्राह्मणभोजनम्, भुक्तोच्छिष्टेन स्तनलेपः, स्तन्यवर्धकमौषधम् २८२०.

### कालिकाविधाने

जातकर्म— जातकर्मविधिः—

पुत्रमुखावलोकनविधिः सफलः २६४९.

### बोपदेवः

जातकर्म— जातकर्मविधिः—

जननिमित्तकनान्दीश्राद्धविधिः २६४९.

### धर्मप्रकाशे

जातकर्म— जातकर्मविधिः—

यमलयोः संस्कारक्रमः २६४९.

### पूर्णसंग्रहे

जातकर्म— जातकर्मविधिः—

स्नानदानादिषु आशौच-भोजनदोषाभावः २६४९.

### ज्योतिःसंग्रहे

जननशान्तिनिमित्तानि—

मूलजनने आश्लेषाजनने च फलम् २७१३.

### भूपालवल्लभः

जननशान्तिनिमित्तानि—

मूलस्य स्वर्गादिनिवासः तत्फलं च, मूलपुरुषाङ्गघटीफलानि २७१३.

### भल्लाटः

जननशान्तिनिमित्तानि—

अभुक्तमूलजनने परित्यागोऽष्टौ वर्षाण्यदर्शनं वा, मूलाश्लेषाचरणफलानि २७१४.

### जयार्णवे

जननशान्तिनिमित्तानि—

मूलवृक्षः तदङ्गघटीफलानि च २७१४.

### देवकीर्तिः

जननशान्तिनिमित्तानि—

एकनक्षत्रजननदोषः २७१५.

### सहदेवः

जननशान्तिनिमित्तानि—

मूलपुरुषाश्लेषापुरुषाङ्गघटीफलानि २७१५.

### प्रश्नप्रदीपे

जननशान्तिनिमित्तानि—

गण्डान्तजननफलम् २७१५.

### ढुण्ढिराजः

जननशान्तिनिमित्तानि—

गण्डान्तजातस्याष्टौ वर्षाण्यदर्शनं ततः शान्तिश्च २७१५.

### जातकोत्तमे

गर्भाधानम्— भार्यागमनकालः—

गर्भाधाने अशुभग्रहयोगाः २४१९.

## होरामकरन्दे

गर्भाधानम्– भार्यागमनकालः–

गर्भाधाने अशुभग्रहयोगाः २४१९.

## जातकतिलके

गर्भाधानम्– भार्यागमनकालः–

गर्भाधाने शुभाशुभगोचरग्रहयोगाः २४१९.

## मृगाङ्कजातके

गर्भाधानम्– भार्यागमनकालः–

गर्भाधाने शुभाशुभमिश्रग्रहयोगाः २४२०.

## ज्योतिषार्के

नामकरणम्– नामकरणविधिः–

नक्षत्रचरणाक्षराणि २७५२.

## तन्त्रकारः

नामकरणम्– नामकरणविधिः–

व्यावहारिकनामकरणम् २७५३.

## सुदर्शनभाष्ये

नामकरणम्– नामकरणविधिः–

तद्धितान्तनाक्षत्रनामसाधनम् २७५३.

## पद्धतिरत्ने

नामकरणम्– नामकरणविधिः–

स्त्रीणां मासनामानि २७५३.

## सुदीपिकायाम्

आयुर्वर्धापनम्–

जन्ममासे जन्मतिथौ जन्मनक्षत्रयोगस्य प्राशस्त्यम् २८१३.

## शुद्धदीपिकायाम्

आयुर्वर्धापनम्–

जन्मतिथौ जन्मनक्षत्राभावे शनिभौमयोगे दोषशान्त्यर्थं विधानम्, जन्मनक्षत्रे रविसंक्रान्तौ दोषशान्त्यर्थं विधानम् २८१३.

## लुब्धजातके

आयुर्वर्धापनम्–

षष्टितमवर्षपर्यन्तं प्रतिवर्षं द्वादशे मासे द्वादशानां मोदकादिपूर्णवंशपेटिकानां दानम्, एकषष्टवर्षे तैलस्नानवत्सराधिपपूजनब्राह्मणभोजनानि २८१३.

## भावप्रकाशे

गर्भाधानम्–

रजस्वलाधर्माः २३२५.

## विश्वप्रकाशे

गर्भाधानम्–

रजस्वलाधर्माः २३२५.

## पद्धतौ

गर्भाधानम्– रजस्वलाशुद्धिः–

स्नानकालः २३४०.

## नारायणपद्धतौ

नामकरणम्– नामकरणमुहूर्तः–

नामकरणे वार-लग्न-ग्रहसंस्थानानि २७६१.

## बालतन्त्रे

दशदिनकृत्यानि शुद्धिस्नानं च–

प्रथमे षष्ठे वा दिने कर्तव्यस्य षष्ठीपूजनस्य विधानम् २६९१.

## निबन्धसारे

दशदिनकृत्यानि शुद्धिस्नानं च–

पञ्चमषष्ठदिनयोर्दिक्पालानामर्चनं बलिहरणं शान्तिसूक्तपाठश्च २६९२.

## रत्नकोशे

सूतिकागृहं तत्प्रवेशश्च–

सूतिकागृहनिर्माणे गर्भमासनियमः २६२०.

## रतिप्रकाशे

गर्भाधानम्– भार्यागमनम्–

गमने दीपसांनिध्यम्, स्त्रियाः सकञ्चुकत्वे प्रायश्चित्तम् २४०४.

## शाकलकारिकाः



## शौनककारिकाः

## कुमारिलकारिकाः



## कपर्दिकारिकाः

नामकरणम्— नामकरणप्रयोगः—

पुण्याहवाचने स्वस्तिपर्याये नामोच्चारणम् २७७७.

## यज्ञपार्श्वकारिकाः

गर्भाधानम्— गर्भाधानप्रयोगः—

ब्राह्मणभोजनम् २४३१.

## रेणुकारिकाः

गर्भाधानम्— प्रथमर्तुविचारः—

प्रथमरजोदर्शने नक्षत्रवारफलानि दोषापवादश्च २३१२.

गर्भाधानम्—

रजस्वलाधर्माः २३२५.

गर्भाधानम्— रजस्वलाशुद्धिः—

पञ्चरे कोष्णवारिणा स्नानम् २३४०.

गर्भाधानम्— ऋतुस्नाताकृत्यम्—

आदित्यभर्त्रादिदर्शनम् २३४२.

गर्भाधानम्— गर्भाधानविधिः—

ऋतौ गर्भाधानस्य कर्तव्यता २३४७.

गर्भाधानम्— भार्यागमनम्—

ऋतुलक्षणम्, युग्मायुग्मदिनेषु यथाक्रमं पुत्रकन्योत्पत्तिः, वर्ज्यदिवसाः, रजोनिवृत्तावेव चतुर्थे गमनम्, श्राद्धसंबन्धे दिवा च गमननिषेधः, सकृद्गमनम्, चतुर्थ्यादिरात्रिगमनजातपुत्रकन्यावर्णनम्, ऋतुयोगपद्ये व्यवस्था, ऋतुगमननियमः, गमनेतिकर्तव्यता, पञ्चविधसुरतानां गर्भाधाने रतौ च व्यवस्था, यथाकामं गमनम्, गमनोत्तरशुद्धिः, गर्भधारणचिह्नानि, मनसो व्याकुलत्वेऽपत्यदोषः, शुक्रशोणितयोस्तारतम्ये द्विधाभावे च पुत्रकन्यानपुंसकयमलोत्पत्तिः युग्मायुग्मरात्रिषु विशेषश्च, शुक्रस्याल्पत्वनिःसारत्वयोर्गर्भधारणाभावः, शुक्रवृद्ध्युपायाः २४०४.

गर्भाधानम्— भार्यागमनकालः—

गमने वर्ज्यनक्षत्राणि, पुत्रकारको ग्रहयोगः २४२०.

गर्भाधानम्— गर्भाधानप्रयोगः—

बहुपत्नीकत्वे प्रतिपत्निगमने वृद्धिश्राद्धभेदः, हृदयालम्भः २४३२.

गर्भाधानम्— ऋतुशान्तिः—

शोणितदोषप्रयुक्तवन्ध्यत्वादिदोषपरिहारकं पुष्पस्नानम्, सफलनिष्फलशोणितयोर्लक्षणे २४४७.

गर्भाधानम्— वन्ध्यात्वं तत्परिहारोपायाश्च—

गर्भधारणाभावे बृहतीमूलरसस्य समन्त्रकासेचनं दक्षिणनासिकायाम्, वातादिहतपुष्पत्वे औषधचिकित्सा, ग्रहादिहतपुष्पत्वे पुष्पस्नानम्, कन्याप्रसूत्वे पिण्डभक्षणम् २५१४.

गर्भिणीधर्माः—

आयासवर्जनम्, अतिभोजनवर्जनम्, जागरणवर्जनम्, दिवास्वापवर्जनम्, भयशोकवर्जनम्, आरोहणवर्जनम्, वेगधारणवर्जनम्, रक्तमोक्षवर्जनम्, कुक्कुटासनवर्जनम्, उपवेशननियमाः, जलावगाहवर्जनम्, भूमिलेखनवर्जनम्, कलहवर्जनम्, गात्रभङ्गवर्जनम्, मुक्तकेशीत्वविवशात्ववर्जनम्, संध्याभोजनवर्जनम्, शयननियमाः, उद्वेगवर्जनम्, अशुचित्ववर्जनम्, अमङ्गलवचनवर्जनम्, शून्यगृह—वृक्षतलगमनवर्जनम्, वल्मीकावस्थितिवर्जनम्, रक्षाकरणम्, भर्तृहितरतात्वम्, गर्भिणीधर्मफलम् २५२०.

गर्भिणीपतिधर्माः—

दोहृददानम् २५२९.

पुंसवनम्— पुंसवनविधिः—

पुंसवनस्य गर्भमासात्मकः कालः, पुंसवनस्य प्रतिगर्भमावृत्तिः, पुंसवनस्य सीमन्तोन्नयनात्प्राक्कर्तव्यता २५४१.

पुंसवनम्— पुंसवनमुहूर्तः—

पुंसवने पक्षनक्षत्रवारग्रहयोगलग्नानि २५४९.

पुंसवनम्— पुंसवनप्रयोगः—

वृद्धिश्राद्धम्, उपवासः, नस्तःकरणम्, काम्यमनुमन्त्रणम्, मन्त्राणामृषिदैवतच्छन्दोविनियोगाः २५६३.

सीमन्तोन्नयनम्— सीमन्तोन्नयनविधिः—

सीमन्तोन्नयने गर्भमासविधिः, मतभेदेन प्रतिगर्भमावृत्तिरनावृत्तिश्चेत्यतो विकल्पः, प्रथमगर्भे अकृतसीमन्ताया: द्वितीयगर्भे स्वकाले सीमन्तोन्नयनम् अथवा

## गृह्यासंग्रहः



## कारिका

# शुद्धिपत्रम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २२८३ | १ | २३ | १९।३० | १९।७।३१ |
| ,, | २ | १७ | १९।७।३० | १९।७।३१ |
| २२८७ | १ | ३२ | १४।९।१२ | १४।९।४।१२ |
| २२९० | २ | ३१ | मीरुश्च | मीरुश्च |
| २२९२ | १ | १० | स्वाद्वन्धु | स्वाद्वन्धु |
| २२९५ | २ | ५ | माद्वहिः | माद्वहिः |
| २३३९ | १ | ३८ | मृत्तिाक | मृत्तिका |
| २३७० | २ | ६ | तत्राऽश्रमे | तत्राऽऽश्रमे |
| ,, | ,, | ७ | राश्म्ययनु | राश्यम्यनु |
| २३७१ | १ | १५ | तत्राश्रमे | तत्राऽऽश्रमे |
| २३७४ | २ | २५ | पवर्णि | पर्वाणि |
| २३७७ | १ | ३२ | इति इति | इति |
| २३८३ | २ | १ | त्रेणानृण्य | त्रेणाऽऽनृण्य |
| २३९४ | १ | २६ | गभल | गर्भल |
| २४१९ | २ | १२ | गर्भधाने | गर्भाधाने |
| २४२१ | ,, | २३ | सदिह्य | संदिह्य |
| २४३४ | ,, | २१ | तत्तन्मंत्रे | तत्तन्मन्त्रे |
| २४३८ | १ | २३ | रनमा | रनामा |
| २४७१ | २ | १५ | प्रकरेण | प्रकारेण |
| २४७७ | ,, | ,, | विधिः | विधिः , |
| २४८२ | ,, | ११ | षुत्रान् | पुत्रान् |
| २५१२ | १ | १ | सप | सर्प |
| २५२४ | ,, | १८ | दौह्वद | द्रौह्वद |
| २५४५ | २ | ३ | गणना च | गणना |
| २५५८ | १ | १६ | मांसवैं | मांसैर्वा |
| २५६० | २ | १० | मूर्धि | मूर्ध्नि |
| २५७१ | ,, | १३ | वियधीते | विधीयते |
| २५७३ | ,, | १७ | स्पदने | स्पन्दने |
| २५७६ | २ | २१ | स्मुच. | स्मृच. |
| २५८६ | ,, | २० | कादानि | कादीनि |
| २५८९ | ,, | १६ | सुद्धये | सुद्धये |
| २५९३ | ,, | ५ | वृतब | वृतव |
| २६०० | १ | ६ | अपक्क | अपक्क |
| २६०६ | २ | ६ | राका दृव्यं | राकादृव्यं |
| २६२३ | १ | १८ | माय | मादाय |
| २६४६ | ,, | १९ | पूर्णा | पूर्ण |
| २६७० | २ | ३४ | तै स | तैः स |
| २६७१ | ,, | १२ | युष्मन्त | युष्मन्तं |
| २६८१ | ,, | २३ | न्यस्मै | न्यस्मे |
| २६९६ | ,, | ३ | मातााषि | मातापि |
| २७०९ | ,, | ११ | दूषकानि | दूषकाणि |
| २७१६ | ,, | २८ | दुखं | दुःखं |
| २७१८ | ,, | ३ | स्वरूम् | स्वरूपम् |
| २७२८ | १ | २१ | स्वरूम् | स्वरूपम् |
| २७३७ | ,, | ३४ | न्यो कुल | न्यो वा कुल |
| २७५७ | २ | ३० | मृक्ता. | मुक्ता. |
| २७६४ | ,, | २० | स्वहा | स्वाहा |
| २७६९ | ,, | ८ | षाऽऽऽयु | षाऽऽयु |
| २७७२ | ,, | २५ | बहवृच | बह्वृच |
| २७७९ | १ | ९ | दोलच | दोलाच |
| २७८५ | शीर्षके | | मुहूंतः | मुहूर्तः |
| २८०८ | १ | १८ | श्रीपरि | स्त्रीपरि |
| २८२६ | ,, | २२ | विधार्थे | विधानार्थे |
| २८२७ | ,, | २८ | वंदश | वदंश |
| २८७४ | २ | २५ | तव स्तर | तवस्तर |

# धर्मकोशः

## संस्कारकाण्डम्

### गर्भाधानम्

#### वेदाः

गर्भधारणार्थं देवताप्रार्थना

[1]पर्वताद्दिवो योनेरङ्गादङ्गात्समाभृतम् ।
शेपो गर्भस्य रेतोधाः सरौ पर्णमिवा दधत् ॥
[2]यथेयं पृथिवी मही भूतानां गर्भमादधे ।
एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे ॥
[3]गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनोभा धत्तां पुष्करस्रजा ॥
[4]गर्भं ते मित्रावरुणौ गर्भं देवो बृहस्पतिः ।
गर्भं त इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते ॥
[5]विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥

(१) असं. ५।२५।१ ; कौसू. ३५।५ निर्देशमात्रम्.
(२) ऋसं. ( खिल ) ४।१३।२ ( यथेयं पृथिवी मह्युत्ताना गर्भमा दधे । एवं तं गर्भमा धेहि दशमे मासि सूतवे ॥ ) ; असं. ५।२५।२ ; मागृ. २।१८।४ (यथेयं पृथिवी मह्युत्ताना गर्भमा दधे । एवं तं गर्भमा धेहि दशमे मासि सूतवे ॥ ).
(३) ऋसं. १०।१८४।२ अश्विनोभा ( अश्विनौ देवावा ) ; असं. ५।२५।३ ; शब्रा. १४।९।४।१९ सरस्वति ( पृथुष्टुके ) अश्विनोभा ( अश्विनौ देवावा ) स्रजा ( स्रजौ ); सामब्रा. १।४।७ अश्विनोभा ( अश्विनौ देवावा ) स्रजा ( स्रजौ ) ; हिगृ. १९।३० अश्विनोभा ( अश्विनावुभावा ) स्रजा ( स्रजौ ) ; मागृ. २।१८।१ ऋसंवत् ; गोगृ. २।५।९ निर्देशमात्रम् ; खागृ. १।४।१६.
(४) असं. ५।२५।४.
(५) ऋसं. १०।१८४।१ ; असं. ५।२५।५ ; शब्रा. १४।९।४।१९ ; सामब्रा. १।४।६ ; कौगृ. १।२२।१२

[1]यद्वेद राजा वरुणो यद्वा देवी सरस्वती ।
यदिन्द्रो वृत्रहा वेद तद्गर्भकरणं पिब ॥
[2]गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्य सो अग्ने गर्भमेह धाः ॥
[3]अधि स्कन्द वीरयस्व गर्भमा धेहि योन्याम् ।
वृषाऽसि वृष्ण्यावन्प्रजायै त्वा नयामसि ॥
[4]वि जिहीष्व बार्हत्सामे गर्भस्ते योनिमा शयाम् ।
अदुष्टे देवाः पुत्रं सोमपा उभयाविनम् ॥
धातः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥
त्वष्टः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥
सवितः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥
प्रजापते श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥

निर्देशमात्रम् ; हिगृ. १९।७।३० ; मागृ. २।१८।१ ; गोगृ. २।५।९ निर्देशमात्रम् ; खागृ. १।४।१६ निर्देशमात्रम् .
(१) असं. ५।२५।६.
(२) असं. ५।२५।७ ; तैसं. ४।२।३।३ चतुर्थचरणे ( अग्ने गर्भो अपामसि ) ; कासं. १६।१०( ११८ ) तैसंवत् ; मैसं. २।७।१०(१२५) तैसंवत् ; शुसं. १२। ३७ तैसंवत् ; शब्रा. ६।८।२।४, १२।४।४।४ तैसंवत् .
(३) असं. ५।२५।८ ; कौगृ. १।१९।११ ( अभि क्रन्द वीळयस्व गर्भमा धेहि साधय । वृषाणं वृषन्ना धेहि प्रजायै त्वा हवामहे ॥ ).
(४) असं. ५।२५।९–१३.

गर्भधारणोपायस्य प्रतिसरस्य प्रशंसा भार्याया गर्भधारणे प्रवर्तनं च

**[1]यन्ताऽसि यच्छसे हस्तावप रक्षांसि सेधसि ।
प्रजां धनं च गृह्णानः परिहस्तो अभूदयम् ॥**

हे अग्ने, त्वं यन्ताऽसि गर्भव्यापत्कराणां रक्षःप्रभृतीनां नियामको भवसि । अत एव आत्मीयौ हस्तौ यच्छसे आयतौ प्रसारयसि । ताभ्यां हस्ताभ्यां रक्षांसि गर्भधारणविघातकानि अप सेधसि अपगमयसि । प्रजां पुत्रादिरूपां तद्भोगार्थं धनं च कृण्वानः कुर्वाणः अयम् अग्निः परिहस्तः हस्तं परिवेष्टय वर्तमानः रक्षाकरः प्रतिसरः अभूत् । असा.

**[2]परिहस्त वि धारय योनिं गर्भाय धातवे ।
मर्यादे पुत्रमा धेहि तं त्वमा गमयाऽऽगमे ॥**

हे परिहस्त कङ्कणादिरूप प्रतिसर, योनिं गर्भाशयस्थानं वि धारय विवृतम् अवस्थापय । किमर्थम् ? गर्भाय धातवे गर्भं धातुं धारयितुम् । मर्यादे, मर्याः मरणधर्माणो मनुष्याः, तैरादीयमाने स्वोत्पत्त्यर्थं स्वीक्रियमाणे स्थाने गर्भाशये हे जाये, त्वं पुत्रम् आ धेहि अभिमुखं धारय । यद्वा, हे मर्यादे मर्येण मनुष्येण स्वभोगार्थम् आदीयमाने । जायायाः संबोधनम् । हे जाये, त्वं पत्युर्मम आगमे आगमने सति तम् अभीष्टं पुत्रम् आ गमय । उत्पादयेत्यर्थः । असा.

**यं परिहस्तमबिभरदितिः पुत्रकाम्या ।
त्वष्टा तमस्या आ बध्नाद्यथा पुत्रं जनादिति ॥**

अदितिः देवमाता पुत्रकाम्या पुत्रम् आत्मनः इच्छन्ती यं परिहस्तं हस्तं परिवेष्टय वर्तमानं कङ्कणादिरूपं प्रतिसरम् अबिभः धृतवती, तं तथाविधं प्रतिसरम् अस्यै अस्याः जायायाः त्वष्टा आ बध्नात् आबध्नातु, यथा येन प्रकारेण एषा पुत्रं जनात् जनयेत् इति अनेन अभिप्रायेण । त्वष्टा बध्नात्विति संबन्धः ।

असा.

(१) असं. ६।८१।१ ; कौसू. ३५।११ निर्देशमात्रम्.
(२) असं. ६।८१।२-३.

मैथुनप्रशंसा, मैथुनादन्यत्र रेतःस्कन्दने विधिः, रजस्वलां प्रति पुत्रोत्पादनोपमन्त्रणम्, प्रत्याख्यातमैथुनायाः सान्त्वनमतिक्रमणं वा, भार्यावशीकरणगर्भधारणप्रतिबन्धगर्भधारणविषयः, जारमारणाभिचारकर्म, रजस्वलाधर्माः, नित्यकाम्यगर्भाधानप्रयोगः

**$[1]एषां वै भूतानां पृथिवी रसः । पृथिव्या आपः । अपामोषधयः । ओषधीनां पुष्पाणि । पुष्पाणां फलानि । फलानां पुरुषः । पुरुषस्य रेतः ॥**

यादृग्जन्मा यथोत्पादितः यैर्वा गुणैर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवतीति, तत्संपादनाय ब्राह्मणमारभ्यते । प्राणदर्शिनः श्रीमन्थं कर्म कृतवतः पुत्रमन्थेऽधिकारः । यदा पुत्रमन्थं चिकीर्षति तदा श्रीमन्थं कृत्वा ऋतुकालं पत्न्याः प्रतीक्षत इत्येतत् रेतस ओषध्यादिरसतमत्वस्तुत्या अवगम्यते । एषां वै चराचराणां भूतानां पृथिवी रसः सारभूतः । 'सर्वभूतानां मधु' इति ह्युक्तम् । पृथिव्या आपो रसः । अप्सु हि पृथिव्योता च प्रोता च । अपामोषधयो रसः । कार्यत्वात् रसत्वमोषध्यादीनाम् । ओषधीनां पुष्पाणि । पुष्पाणां फलानि । फलानां पुरुषः । पुरुषस्य रेतः, 'सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्' इति श्रुत्यन्तरात् ।

शांकर.

**[2]स ह प्रजापतिरीक्षांचक्रे- हन्तास्मै प्रतिष्ठां कल्पयानीति । स स्त्रियं ससृजे । तां सृष्ट्वाऽध उपास्त । तस्मात्स्त्रियमध उपासीत ।**

$बृहदारण्यकस्य शतपथब्राह्मणरूपत्वेऽपि शांकरभाष्यस्य संग्राह्यत्वेन बृहदारण्यकत्वेन काण्वपाठेन च तत्संगृहीतम् । अत एव तदीयस्थलनिर्देश आदौ कृतः, अस्माभिः सर्वत्र संगृहीतस्य माध्यंदिनशतपथब्राह्मणस्य स्थलनिर्देशादिकं ततः परं कृतम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

(१) बृउ. ६।४।१ ; शब्रा. १४।९।४।१.
(२) बृउ. ६।४।२ ; शब्रा. १४।९।४।२ उपासीत + (श्रीरेषा ).

**स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत् । तेनैनामभ्यसृजत् ॥**

यत एवं सर्वभूतानां सारतममेतत् रेतः अतो नु खल्वस्य योग्या प्रतिष्ठेति स ह स्रष्टा प्रजापतिः ईक्षांचक्रे । ईक्षां कृत्वा स स्त्रियं ससृजे । तां च सृष्ट्वा अध उपास्त मैथुनाख्यं कर्म अधउपासनं नाम कृतवान् । तस्मात्स्त्रियमध उपासीत । श्रेष्ठानुश्रयणा हि प्रजाः । अत्र वाजपेयसामान्यक्लृप्तिमाह– स एतं प्राञ्चं प्रकृष्टगतियुक्तम् आत्मनो ग्रावाणं सोमाभिषवोपलस्थानीयं काठिन्यसामान्यात् प्रजननेन्द्रियमुदपारयत् उत्पूरितवान् स्त्रीव्यञ्जनं प्रति । तेन एनां स्त्रियमभ्यसृजत् अभिसंसर्गं कृतवान् । शंकर.

**[1]तस्या वेदिरुपस्थः । लोमानि बर्हिः । चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ । स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति । य एवं विद्वानधोपहासं चरत्यासां स्त्रीणां सुकृतं वृङ्क्ते । अथ य इदमविद्वानधोपहासं चरत्याऽस्य स्त्रियः सुकृतं वृञ्जते ॥**

तस्या वेदिरित्यादि सर्वं सामान्यं प्रसिद्धम् । समिद्धोऽग्निः मध्यतः स्त्रीव्यञ्जनस्य । तौ मुष्कौ अधिषवणफलके इति व्यवहितेन संबध्यते । वाजपेययाजिनो यावान् लोकः प्रसिद्धः, तावान् विदुषः मैथुनकर्मणो लोकः फलमिति स्तूयते । तस्मात् बीभत्सा नो कार्येति । य एवं विद्वानधोपहासं चरति आसां स्त्रीणां सुकृतं वृङ्क्ते आवर्जयति । अथ पुनः यः वाजपेयसंपत्तिं न जानाति अविद्वान् रेतसो रसतमत्वं च अधोपहासं चरति आ अस्य स्त्रियः सुकृतमावृञ्जते अविदुषः । शंकर.

**[2]एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आह । एतद्ध स्म वै तद्विद्वान्कुमारहारित आह । बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वांसोऽधोपहासं चरन्तीति ॥**

एतद्ध स्म वै तत् विद्वान् उद्दालक आरुणिः आह अधोपहासाख्यं मैथुनकर्म वाजपेयसंपन्नं विद्वानित्यर्थः । तथा नाको मौद्गल्यः कुमारहारितश्च । किं त आहुरित्युच्यते– बहवः मर्याः मरणधर्मिणः मनुष्याः । ब्राह्मणा अयनं येषां ते ब्राह्मणायनाः ब्रह्मबन्धवः । जातिमात्रोपजीविन इत्येतत् । निरिन्द्रियाः विश्लिष्टेन्द्रियाः । विसुकृतः विगतसुकृतकर्माणः । अविद्वांसः मैथुनकर्मासक्ता इत्यर्थः । ते किम् ? अस्मात् लोकात् प्रयन्ति परलोकात् परिभ्रष्टा इति । मैथुनकर्मणोऽत्यन्तपापहेतुत्वं दर्शयति– य इदमविद्वांसोऽधोपहासं चरन्तीति । शंकर.

**[1]बहु वा इदं सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत– 'यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे ॥' । 'पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ताम् ॥' इत्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥**

श्रीमन्थं कृत्वा पत्न्या ऋतुकालं ब्रह्मचर्येण प्रतीक्षते । यदि इदं रेतः स्कन्दति बहु वा अल्पं वा सुप्तस्य वा जाग्रतो वा रागप्राबल्यात्, तदभिमृशेत् अनुमन्त्रयेत वा अनुजपेदित्यर्थः । यदा अभिमृशति तदा अनामिकाङ्गुष्ठाभ्यां तद्रेत आदत्ते 'आददे' इत्येवमन्तेन मन्त्रेण । 'पुनर्माम्' इत्येतेन निमृज्यात् अन्तरेण मध्ये भ्रुवौ भ्रुवोर्वा स्तनौ स्तनयोर्वा । शंकर.

**... [2]श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासाः । तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥**

---

(१) बृउ. ६।४।३ ; शब्रा. १४।९।४।३ त्यासां स्त्रीणां ( त्या स स्त्रीणां ).

(२) बृउ. ६।४।४ ; शब्रा. १४।९।४।४.

(१) बृउ. ६।४।४–५ ; शब्रा. १४।९।४।५ रग्निर्धि ( रग्नयो धि ) निमृज्यात् ( निमृञ्ज्यात् ).

(२) बृउ. ६।४।६ ; शब्रा. १४।९।४।६, ७.

... श्रीर्ह वा एषा पत्नी स्त्रीणां मध्ये यत् यस्मात् मलोद्वासाः उद्गतमलवद्वासाः, तस्मात् तां मलोद्वाससं यशस्विनीं श्रीमतीमभिक्रम्य अभिगत्य उपमन्त्रयेत इदम्– 'अद्य आवाभ्यां कार्यं यत्पुत्रोत्पादनम्' इति, त्रिरात्रान्ते आप्लुताम्। शंकर.

**[1]सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्। सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेत्– 'इन्द्रियेण ते यशसा यश आददे' इति। अयशा एव भवति॥**

सा चेदस्मै न दद्यात् मैथुनं कर्तुम्, काममेनामवक्रीणीयात् आभरणादिना ज्ञापयेत्। तथापि सा नैव दद्यात्, काममेनां यष्ट्या वा पाणिना वा उपहत्य अतिक्रामेत् मैथुनाय 'शप्स्यामि, त्वां दुर्भगां करिष्यामि' इति प्रख्याप्य तामनेन मन्त्रेणोपगच्छेत्– 'इन्द्रियेण ते यशसा यश आददे' इति। सा तस्मात् तदभिशापात् वन्ध्या दुर्भगेति ख्याता अयशा एव भवति। शंकर.

**[2]सा चेदस्मै दद्यात् 'इन्द्रियेण ते यशसा यश आदधामि' इति। यशस्विनावेव भवतः॥**

सा चेदस्मै दद्यात् अनुगुणैव स्याद्भर्तुः, तदा अनेन मन्त्रेण उपगच्छेत्– 'इन्द्रियेण ते यशसा यश आदधामि' इति। तदा यशस्विनावेव उभावपि भवतः। शंकर.

**[3]स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखं संधायोपस्थमस्या अभिमृश्य जपेत्– 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे। स त्वमङ्ग कषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयि' इति॥**

(१) बृउ. ६।४।७ ; शब्रा. १४।९।४।७ मवक्री ( मपक्री ).

(२) बृउ. ६।४।८.

(३) बृउ. ६।४।९ ; शब्रा. १४।९।४।८ निष्ठाय ( निष्ठाप्य ) मादयेमाममूं मयि' इति ( मादय ' इति ).

स यां स्वभार्यामिच्छेत्– इयं मां कामयेतेति, तस्याम् अर्थे प्रजननेन्द्रियं निष्ठाय निक्षिप्य, मुखेन मुखं संधाय, उपस्थमस्या अभिमृश्य, जपेदिमं मन्त्रम्– 'अङ्गादङ्गात्' इति। शंकर.

**[1]अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं संधायाभिप्राण्यापान्यात्– 'इन्द्रियेण ते रेतसा रेत आददे' इति। अरेता एव भवति॥**

अथ यामिच्छेत्– न गर्भं दधीत न धारयेत्, गर्भिणी मा भूदिति, तस्यामर्थमिति पूर्ववत्। अभिप्राण्य अभिप्राणनं प्रथमं कृत्वा पश्चात् अपान्यात् 'इन्द्रियेण ते रेतसा रेत आददे' इत्यनेन मन्त्रेण। अरेता एव भवति। न गर्भिणी भवतीत्यर्थः। शंकर.

**[2]अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं संधायापान्याभिप्राण्यात्– 'इन्द्रियेण ते रेतसा रेत आदधामि' इति। गर्भिण्येव भवति॥**

अथ यामिच्छेत्– दधीत गर्भमिति, तस्यामर्थमित्यादि पूर्ववत्। पूर्वविपर्ययेण अपान्य अभिप्राण्यात्– 'इन्द्रियेण ते रेतसा रेत आदधामि' इति। गर्भिण्येव भवति। शंकर.

**[3]'अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमं शर-**

(१) बृउ. ६।४।१० ; शब्रा. १४।९।४।९ निष्ठाय ( निष्ठाप्य ).

(२) बृउ. ६।४।११ ; शब्रा. १४।९।४।१० मिच्छेद्द ( मिच्छेद्गर्भं द ) निष्ठाय ( निष्ठाप्य ).

(३) बृउ. ६।४।१२ ; शब्रा. १४।९।४।११ तस्मिन्नेताः + ( तिस्रः ) प्राणापानौ त ... पराकाशौ त आददेऽसौ' इति (आशापराकाशौ त आददेऽसाविति नाम गृह्णाति। मम समिद्धेऽहौषीः पुत्रपशूंस्त आददेऽसाविति नाम गृह्णाति। मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति नाम गृह्णाति) सुकृतोऽस्मा (सुकृदस्मा) दारेण नोपहासमिच्छेत् (जायाया उपहासं नेच्छेत्).

**बर्हि स्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयात्— 'मम समिद्धेऽहौषीः । प्राणापानौ त आददेऽसौ ' इति । 'मम समिद्धेऽहौषीः । पुत्रपशूंस्त आददेऽसौ ' इति । 'मम समिद्धेऽहौषीः । इष्टासुकृते त आददेऽसौ ' इति । 'मम समिद्धेऽहौषीः । आशापराकाशौ त आददेऽसौ ' इति । स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति । तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत् । उत ह्येवंवित्परो भवति ॥**

अथ पुनर्यस्य जायायै जारः उपपतिः स्यात्, तं चेत् द्विष्यात् 'अभिचरिष्याम्येनम्' इति मन्येत, तस्येदं कर्म । आमपात्रे अग्निमुपसमाधाय सर्वं प्रतिलोमं कुर्यात् । तस्मिन्नग्नौ एताः शरभृष्टीः शरेषीकाः प्रतिलोमाः सर्पिषा अक्ताः घृताभ्यक्ताः जुहुयात्— 'मम समिद्धेऽहौषीः' इत्याद्या आहुतीः । अन्ते सर्वासामसाविति नामग्रहणं प्रत्येकम् । स एषः एवंवित् यं ब्राह्मणः शपति स विसुकृतः विगतपुण्यकर्मा प्रैति । तस्मात् एवंवित् श्रोत्रियस्य दारेण नोपहासमिच्छेत् नर्मापि न कुर्यात्, किमुत अन्योपहासम् ? हि यस्मात् एवंविदपि तावत् परो भवति शत्रुर्भवतीत्यर्थः । शंकर.

**[1]अथ यस्य जायामार्तवं विन्देत्त्र्यहं कंसेन पिबेत् । अहतवासाः । नैनां वृषलो न वृषल्युपहन्यात् । त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥**

अथ यस्य जायाम् आर्तवं विन्देत् ऋतुभावं प्राप्नुयात्— इत्येवमादिग्रन्थः 'श्रीर्ह वा एषा स्त्रीणाम्' इत्यतः पूर्वं द्रष्टव्यः, सामर्थ्यात् । त्र्यहं कंसेन पिबेत्, अहतवासाश्च स्यात् । नैनां स्नाताम् अस्नातां च वृषलो वृषली वा नोपहन्यात् नोपस्पृशेत् । त्रिरात्रान्ते त्रिरात्रव्रतसमाप्तौ आप्लुत्य स्नात्वा अहतवासाः स्यादिति व्यवहितेन संबन्धः । ताम् आप्लुतां व्रीहीन् अवघातयेत् व्रीह्यवघाताय तामेव विनियुञ्ज्यात् । शंकर.

**[2]स य इच्छेत्पुत्रो मे शुक्लो जायेत, वेदमनुब्रुवीत, सर्वमायुरियादिति, क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥**

स य इच्छेत्— 'पुत्रो मे शुक्लो वर्णतो जायेत', वेदमेकमनुब्रुवीत सर्वमायुरियात् वर्षशतम् । क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ समर्थौ जनयितवै जनयितुम् । शंकर.

**अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत, द्वौ वेदावनुब्रुवीत, सर्वमायुरियादिति, दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥**

दध्योदनं दध्ना चरुं पाचयित्वा । द्विवेदं चेदिच्छति पुत्रम्, तदा एवमशननियमः । शंकर.

**अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत, त्रीन् वेदाननुब्रुवीत, सर्वमायुरियादिति, उदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥**

केवलमेव स्वाभाविकमोदनम् । उदग्रहणमन्यप्रसङ्गनिवृत्त्यर्थम् । शंकर.

**अथ य इच्छेद्दुहिता मे पण्डिता जायेत, सर्वमायुरियादिति, तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥**

दुहितुः पाण्डित्यं गृहतन्त्रविषयमेव, वेदेऽनधिकारात् । तिलौदनं कृशरम् । शंकर.

**[3]अथ य इच्छेत्पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत,**

---

(१) बृउ. ६।४।११ ; शब्रा. १४।९।१२ आप्लुत्य (आप्लूय).

(१) बृउ. ६।४।१४ ; शब्रा. १४।९।४।१३ शुक्लो (गौरो).

(२) बृउ. ६।४।१५–१७ ; शब्रा. १४।९।४।१४–१५.

(३) बृउ. ६।४।१८ ; शब्रा. १४।९।४।१७ विगीतः (विजिगीषः) औक्षेण (आर्षभेण).

सर्वान् वेदाननुब्रुवीत, सर्वमायुरियादिति, मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै । औक्ष्णेण वाऽऽर्षभेण वा ॥

विविधं गीतो विगीतः प्रख्यात इत्यर्थः । समितिंगमः सभां गच्छतीति, प्रगल्भ इत्यर्थः, पाण्डित्यस्य पृथग्ग्रहणात् । शुश्रूषितां श्रोतुमिष्टां रमणीयां वाचं भाषिता संस्कृताया अर्थवत्या वाचो भाषितेत्यर्थः । मांसमिश्रमोदनं मांसौदनम् । तन्मांसनियमार्थमाह– औक्षेण वा मांसेन । उक्षा सेचनसमर्थः पुंगवः, तदीयं मांसम् । ऋषभः ततोऽप्यधिकवयाः, तदीयम् आर्षभं मांसम् । शंकर.

'अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोति– 'अग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहा ' इति । हुत्वोद्धृत्य प्राश्नाति । प्राश्येतरस्याः प्रयच्छति । प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षति– 'उत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सं जायां पत्या सह ' इति ॥

अथाभिप्रातरेव काले अवघातनिर्वृत्तान् तण्डुलानादाय स्थालीपाकावृता स्थालीपाकविधिना आज्यं चेष्टित्वा आज्यसंस्कारं कृत्वा चरुं श्रपयित्वा स्थालीपाकस्य आहुतीः जुहोति उपघातम् उपहत्योपहत्य 'अग्नये स्वाहा' इत्याद्याः । गार्ह्यः सर्वो विधिर्द्रष्टव्योऽत्र । हुत्वा उद्धृत्य चरुशेषं प्राश्नाति । स्वयं प्राश्य इतरस्याः पत्न्यै प्रयच्छति उच्छिष्टम् । प्रक्षाल्य पाणी आचम्य उदपात्रं पूरयित्वा तेनोदकेन एनां त्रिरभ्युक्षति अनेन मन्त्रेण ' उत्तिष्ठातः ' इति । सकृन्मन्त्रोच्चारणम् । शंकर.

(१) बृउ. ६।४।१९ ; शब्रा. १४।९।४।१८ प्रपूर्व्यां ( प्रफर्व्यं ).

'अथैनामभिपद्यते– ' अमोऽहमस्मि सा त्वम् । सा त्वमस्यमोऽहम् । सामाहमस्मि ऋक्त्वम् । द्यौरहं पृथिवी त्वम् । तावेहि संरभावहै । सह रेतो दधावहै पुंसे पुत्राय वित्तये ' इति ॥

अथैनामभिमन्त्र्य क्षीरौदनादि यथापत्यकामं भुक्त्वेति क्रमो द्रष्टव्यः । संवेशनकाले ' अमोऽहमस्मि ' इत्यादिमन्त्रेणाभिपद्यते । शंकर.

'अथास्या ऊरू विहापयति– ' विजिहीथां द्यावापृथिवी ' इति । तस्यामर्थं निष्ठाय मुखेन मुखं संधाय त्रिरेनामनुलोमामनुमार्ष्टि– ' विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥

अथास्या ऊरू विहापयति– ' विजिहीथां द्यावापृथिवी ' इत्यनेन । तस्यामर्थमित्यादि पूर्ववत् । त्रिः एनां शिरःप्रभृति अनुलोमामनुमार्ष्टि ' विष्णुर्योनिम् ' इत्यादि प्रतिमन्त्रम् । शंकर.

' हिरण्मयी अरणी याभ्यां निर्मन्थताश्विनौ । तं ते गर्भं हवामहे दशमे मासि सूतये । यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसौ ॥ ' इति ॥

अन्ते नाम गृह्णाति– असाविति तस्याः । शंकर.

(१) बृउ. ६।४।२० ; शब्रा. १४।९।४।१९.

(२) बृउ. ६।४।२१ ; शब्रा. १४।९।४।२० निष्ठाय ( निष्ठाप्य ).

(३) बृउ. ६।४।२२ ; शब्रा. १४।९।४।२१ मश्विनौ + ( देवौ ) हवामहे ( दधामहे ) सूतये (सूतवे) इति + ( नाम गृह्णाति ).

# प्रथमर्तुविचारः

## वसिष्ठः

चन्द्रवशात् द्वादशेऽब्दे प्रथमरजोदर्शनम्,
चन्द्रभौमयोगात्प्रतिमासं रजोदर्शनम्

[1]सोमात्मिकाः स्त्रियः सर्वाः पुरुषा भास्करात्मकाः ।
तस्माच्चन्द्रवशात्तासां तेषां सर्वं हि सूर्यतः ॥

'अग्नीषोमात्मकं जगत्' इति पुराणेषु पठ्यते । तत्राग्निस्तेजोरूपः, तन्मयत्वाच्च रवेरग्निशब्देन सूर्यो गृह्यते, द्विगता( ? जगता ) च सृष्टिः स्त्रीपुरुषालम्बना । तत्र सौम्यप्रकृतिकत्वात्सोमः स्त्रीग्रहः, सूर्यः पुरुषग्रहः, पुत्र-( ? उग्र )प्रकृतिकत्वात् । तदा चन्द्रबलवशेन स्त्रीणां शुभाशुभनिरूपणं योग्यम्, पुरुषस्य तु सूर्यबलेनेति । तदाह वसिष्ठः— सोमात्मिका इति । संसौ. ३

[2]अर्कान्मुक्तः शशी यद्वद्द्वादशांशैः प्रदृश्यते ।
रजोदर्शनमप्यासां द्वादशेऽब्दे स्वजन्मनः ॥

जन्मन इति निषेककालोपलक्षणम् । तेन निषेककालद्वादशे जन्मत एकादशे रजो भवति । संसौ. ३–४

[3]अत ऊर्ध्वं प्रतिमासं भवति रजो भौमयोगतस्तासाम् ।
अनुपचयस्थे चन्द्रे धरणिसुतवीक्षणाद्वाऽपि ॥

जन्मतो लग्नतो वा बलिनः सकाशात् तृतीयषष्ठदशमैकादशराशय उपचयाख्याः । तद्व्यतिरिक्ता अनुपचयाः । तत्स्थे चन्द्रे । संसौ. ४–५

(१) वसं. २४।१ ; संसौ. ३ सर्वं हि ( सर्वे तु).

(२) वसं. २४।२ शैः प्रदृश्यते ( शादुदेष्यति ) शेऽब्दे स्वजन्मनः ( शांशैश्च जन्मतः ) ; संसौ. ३.

(३) वसं. २४।३ ; संसौ. ४ प्रथमपादे ( प्रतिमासं च तदूर्ध्वं ) धरणि ( धरणी ) द्वाऽपि ( द्भवति ).

प्रथमरजोदर्शने नक्षत्रफलानि

[1]प्रथमरजोदर्शनतः शुभाशुभं भवति सर्ववनितानाम् ।
तस्मात् प्रतिधिष्ण्यफलं वक्ष्ये दस्रादितः क्रमशः ॥

[2]बहुसुतधनसंपच्छीलसौभाग्ययुक्ता
विगतनिखिलदोषा दस्रभे पुष्पिणी या ।
सुरगुरुपतिभक्ता मानिनी गीतनृत्यप्रवरकुसुमवस्त्रैर्भूषणैर्भूषिता स्यात् ॥

[3]परपुरुषरता स्याद्दुर्भगा याम्यधिष्ण्ये
विविधचपलभावाऽभूषणाऽसक्तवार्ता ।
नियतमनृतवाक्या सज्जनद्वेषयुक्ता
कुलजनगुणहीना छन्नपापा खला स्यात् ॥

[4]वैश्वानरर्क्षे बहुमित्रपुत्रधनान्विता सत्यपरा गुणाढ्या ।
विकीर्णकामा प्रियवादिनी च
नारी सहोत्थप्रवरा कलाढ्या ॥

(१) वसं. २४।४ ; संसौ. ५–६.

(२) वसं. २४।५ ; प्रपा. ९८ दस्र ( दास्र ) गीतनृत्यप्रवरकुसुमवस्त्रै ( बन्धुमान्या बहुधनवसनाद्यै ) ; संसौ. ६ पुष्पिणी या ( सुप्रणेया ).

(३) वसं. २४।६ भावाऽभू ( भाषा भू ) तृतीयपादे ( नियतमनतवाक्यत्रस्तविद्वेषिणी सा ) ; प्रपा. ९८–९९ भावाऽभूषणाऽसक्त ( भाषा भूषणासक्त ) कुलजनगुण ( स्वपतिहितवि ) ; संसौ. ६ तृतीयपादे ( नियतमनृतवादा शाठ्यविद्वेरिणी सा ).

(४) वसं. २४।७ ; प्रपा. ९९ मित्रपुत्र ( पुत्रमित्र) परा ( वती ) विकीर्ण ( विस्तीर्ण ) च नारी सहोत्थ

¹पितामहर्क्षे सुगुणा सुवृत्ता
पतिप्रिया सत्यवती धनाढया।
बन्धुप्रिया मानरता सुरूपा
प्रहृष्टचित्ता प्रविकीर्णकामा ॥
²सदा मृगे भाग्यवती सुवृत्ता
कलानुरक्ता विपुलार्थयुक्ता।
पतिप्रिया मानवती बहुज्ञा
प्रजावती बन्धुजनैः सुमान्या ॥
³महेशभे पुष्पवती विशीला
मृषानुरक्ता परकार्यसक्ता।
पत्युज्झिता प्रेष्यवती विनिःस्वा
परप्रिया दुःखवती विपुत्रा ॥
प्रेष्यं दासकर्म। संसौ. ६
⁴मायाविनी कापटिका विशीला-
ऽऽदित्याख्यधिष्ण्ये कुचरित्रयुक्ता।
वन्ध्या पुनर्भूः परसद्मसक्ता
दुश्चेष्टिता पुष्पवती कलाढया ॥
⁵सुगन्धपुष्पाम्बरभूषणेप्सुः
सदा कलागीतनिबद्धचित्ता।
पुष्ये त्वगम्यागमना गतार्ता(?)
प्रजावती दुष्प्रतिभान्विता सा ॥

¹खला पुनर्भूर्बहुदोषसक्ता
भौजङ्गभे पुष्पवती विशीला।
मायापटुर्लम्पटिकाऽर्थहीना
स्वच्छन्दगा व्याधिमती कलाज्ञा ॥
²पतिप्रिया पुष्पवती मघायां
प्रजावती सा कुलटा तथाऽपि।
सिंहीव योषिद्वरवृन्दमध्ये
विभाति खद्योतवदम्बरेऽपि ॥
³भाग्ये भाग्यवती बहुव्ययपरा पान-
प्रसक्ताऽनृता
सद्द्वेष्या कुलटा कलासु निपुणा
नीरुक् च भग्नव्रता।
दुःपुत्रा कुलपांसनी खलरता भग्नो-
द्यमा पांसुला
दुःखा पापरता विधर्मनिरता
षण्डप्रिया संततम् ॥
⁴कुलद्वयानन्दकरी विभक्त-
कार्या कलाढया विनिगूह्यचित्ता।
विकीर्णकामा रुचिरा सुवृत्ता
श्लक्ष्णाऽर्यमर्क्षे विगतारिवैरा ॥

(स्यात्नाना सहोटा) कलाज्ञा (कलाढ्या); संसौ. ६ मित्रपुत्रश्च (पुत्रमित्रा च) परा (वती) सहोत्थप्रवरा (महार्थप्रचुरा).

(१) वसं. २४।८; प्रपा. ९९ गुणा सु (गुणानु) सत्य (धर्म) प्रहृष्ट (प्रवृत्त); संसौ. ६ सुगु (सगु) प्रिया सत्य (व्रता पुत्र) रता (वती).

(२) वसं. २४।९; प्रपा. ९९; संसौ. ६.

(३) वसं. २४।१०; प्रपा. ९९ प्रेष्यवती विनिःस्वा (पुष्पवती गतस्वा); संसौ. ७ पुष्पवती विशीला (तु प्रविकीर्णकामा) विनिःस्वा (विवस्त्रा).

(४) वसं. २४।११ काप (कार्प); प्रपा. ९९ सक्ता दुश्चेष्टिता (रक्ता मृषापरा); संसौ. ७ चतुर्थपादे (पुंश्चेष्टिता पुष्पवती कलाज्ञा).

(५) वसं. २४।१२ णेप्सुः (णेषु); प्रपा. ९९ प्सुः सदा कला (षु रता सदा) ना गतार्ता (ने रतार्ता); संसौ. ७ गीतनिबद्ध (ज्ञाननिविष्ट) त्वग (ऽप्यग)तार्ता (तार्तिः) सा (स्यात्).

(१) वसं. २४।१३ मती (कटी); प्रपा. ९९ सक्ता (युक्ता) पटुर्ल (पटुर्ला) मती कलाज्ञा (वशा कलाढ्या); संसौ. ७ खला (बाला).

(२) वसं. २४।१४; प्रपा. ९९ विभाति ख (प्रभातख); संसौ. ७ सा (स्यात्) तथाऽपि। सिंहीव (विशीला। तथाऽपि).

(३) वसं. २४।१५ क्ताऽनृता सद्द्वेष्या (क्ता वृता सत्स्वीर्ष्या) पांऽनी (पांसिनी); प्रपा. ९९ क्ताऽनृता सद्द्वेष्या (क्ता कृता सच्छिष्या) नीरुक् च (मीरुश्च) पांसनी (नाशिनी) दुःखा (दुःखी) षण्ड (बन्धु); संसौ. ७ विधर्म (न धर्म) षण्डप्रिया संततम् (व्याध्यादिभिः पीडिता).

(४) वसं. २४।१६; प्रपा. ९९ भक्तकार्या (भक्ता कार्ये) कामा रुचिरा सुवृत्ता (कामानुचरा विशुद्धा);

[1]संभोगशीला परकार्यकर्त्री
बन्धुर्चिता श्रेष्ठगुणानुरक्ता ।
गताभ्यसूया विगतारिवर्गा
हस्तेऽङ्गना पुष्पवती विलोला ॥

[2]त्वाष्ट्रे कृपालुः सुरतप्रिया स्या-
द्गुणैकगृह्याऽऽत्महिते नियुक्ता ।
निवृत्तवैराऽऽमयपीडिताङ्गी
संगीतविद्या निपुणा कलासु ॥

[3]दृढव्रता सत्यपरा सुवृत्ता
निवृत्तरागा पररन्ध्रगोप्त्री ।
गजाभिगामिन्यनिलाह्वयर्क्षे
प्रमोदिनी मङ्गलकार्यवृन्दे ॥

[4]द्विदैवभे पुष्पवती प्रमत्ता
विचित्तमोघामयवैरिसंघा ( ? ) ।
विवादशीला विपुलप्रतापा
संभोगमाप्नोति शुनीव शश्वत् ॥

---

संसौ. ८ पूर्वार्धे (कुलद्वयानन्दकरी कलाज्ञा विभक्तकार्याऽतिनिगूढचित्ता).

(१) वसं. २४।१७ कर्त्री (कारिणी); प्रपा. ९९ शीला ( लीना ) श्रेष्ठ (सत्य) गताभ्यसूया (गतव्ययस्वा) वर्गा (पक्षा) विलोला (ह्यलोला) ; संसौ. ८ शीला (लीला ) कर्त्री ( कारी ) हस्तेऽङ्गना ( हस्ते यदा ) विलोला ( च लोला ).

(२) वसं. २४।१८ कृपा ( प्रिया ) प्रिया स्याद्गुणैक ( प्रियोद्यद्वैरा नि ) ; प्रपा. ९९ कृपा ( प्रिया ) ; संसौ. ८ स्याद्गुणैक ( च वैरं नि) निवृत्तवैराऽऽमयपीडि ( निर्वृत्तसौख्या ह्यतिपण्डि ).

(३) वसं. २४।१९ ; प्रपा. ९९ परा ( रता ) गजाभि ( गजानु ) ; संसौ. ८ परा ( वती ) रागा पररन्ध्रगोप्त्री ( रोगार्थपरार्थगोष्ठी ) मिन्यनिलाह्वय ( मी न खलाऽनिल ).

(४) वसं. २४।२० मत्ता ( वृत्ता ) ; प्रपा. ९९ द्वितीयपादे ( करोति वैरं परवैरिसंघम् ) ; संसौ. ८ ( द्विदैवभे पुष्पवती प्रसन्ना कृत्यैव मोघार्थविवादशीला । गुणैर्विशाला विपुलप्रतापा संभोगमाप्नोति सुनीचलोकैः ॥ ) ; संच. ४ प्रथमपादमात्रम् .

[1]मैत्रे विमिश्रा सगदाऽङ्गहीना
विवादशीला विगुणा सवैरा ।
प्रवृत्तरागा प्रविकीर्णकामा
स्वगर्भसंस्रावपरा विरक्ता ॥

[2]पौरंदरे पुष्पवती विमर्षा
विनिन्दिताऽतिव्यसना सुगूढा ।
परंतपा प्रव्रजिते रतात्मा
परप्रजासूयवती सपापा ॥

[3]मूले प्रकामाऽधिकसत्त्वहीना
व्यसुर्बुभुक्षोद्धतदोषचित्ता ।
निरन्तरं दूषितकर्मवृत्ता
प्रजावती गोगजगामिनी च ॥

[4]पानीयभे पुष्पवती विवाद-
शीला कलाकर्मणि दुष्टचित्ता ।
परानुरक्ता वनशैलसक्ता
प्रच्छन्नपापाऽद्भुतकर्मरक्ता ॥

[5]वैश्वे सती पुष्पवती सुवृत्ता
महागुणैरुन्नतिमातनोति ।
चित्तानुरक्ता स्वपतेरुदारा
युक्ता विवैरा विनिवृत्तदोषा ॥

---

(१) वसं. २४।२१ ; प्रपा. ९९ विगुणा सवैरा ( विपुलप्रतापा ) स्राव ( स्कार ) ; संसौ. ८ वृत्तरागा ( कृष्टचित्ता ) रक्ता ( भक्ता ).

(२) वसं. २४।२२ सना ( सनी ) ; प्रपा. ९९ विमर्षा ( त्वमर्षा ) जिते र ( जनोद्य ) ; संसौ. ८ विमर्षा विनिन्दिताऽति ( ह्यमर्षविनिन्दितारम ) प्रव्रजिते ( पापजने ).

(३) वसं. २४।२३ द्धत ( द्धृत ) ; प्रपा. ९९ सत्त्वहीना ( हीनसत्त्वा ) प्रजा ( प्रज्ञा ) ; संसौ. ९ सत्त्वहीना ( हीनसत्त्वा ) च ( वा ) ; संच. ४ प्रथमपादमात्रम् .

(४) वसं. २४।२४ ; प्रपा. ९९ कलाक (खला क) ; संसौ. ९ भे पुष्पवती ( धिष्ण्येष्वसती ) शीला कलाकर्मणि दु ( विशीर्णकर्मा परदु ) वनशैलसक्ता ( व्यवसायशीला ).

(५) वसं. २४।२५ ; प्रपा. ९९ वृत्ता ( रक्ता ) ; संसौ. ९.

[1]बहुसुतधनधान्यप्रोल्लसद्भूषणाढ्या
प्रचुरगुणगणाद्यैर्भर्तुरानन्ददा स्यात् ।
युवतिजनमता सा विष्णुधिष्ण्ये विचित्रा
प्रवरनटमगीता तोयवाद्ये ह्यभिज्ञा ॥

[2]अतिवसुधनभाक् स्यान्मानिनी सच्चरित्रा
विगतभयकुवृत्ता संनताङ्गी गुणाढ्या ।
पतिहितनिरता स्याद्बन्धुवर्गैः सुपूज्या
प्रियहितकरकर्मण्युत्सुका वासवर्क्षे ॥

[3]निखिलवरकलाढ्या नृत्यगीतानुरक्ता
विविधगुणगणाढ्या मानिनी भाग्ययुक्ता ।
विविधपरिवरौघैः संनियुक्ता शतर्क्षे
पतिकुलजनमान्या पुण्यवत्यङ्गना सा ॥

[1]शुभगुणगणहीना कर्कशा भाग्यहीना
त्वनृतपरुषमन्त्रैर्दुर्जनान्तर्जयन्ती ।
विचरति गुणमध्ये दुर्भगा चाजपादे
जनकसदनवासा नष्टकामाऽऽढ्य-रूपा ॥

[2]गुणसुतसुखसंपद्भूषिताङ्गी त्वभिज्ञा
त्वमिभवति सपत्नान् सज्जनान् मानयन्ती ।
मृदुमधुरसुवाचा गीतनृत्योद्यता सा
प्रवरबहुकलाज्ञा चोत्तराभाद्रपादे ॥

[3]पौष्णे विशीला बहुदुःखशोका
विवादशीला पितृवेश्मसंस्था ।
पराजितसा पतिपुत्रदूरा
नीचे रता कापटिका च कन्या ॥

प्रथमरजोदर्शने दुष्टतिथियोगकरणादि, वारफलानि, षड्वर्गफलानि, लौकिकमङ्गलकर्मकर्तव्यता

[4]रिक्तासु पर्वस्वथ कार्तिकेय-
हर्योः क्षयाहे व्यतिपातविष्टयाम् ।
एकार्गले पारिघवैधृतेषु
चोत्पातसंध्यासु रजोऽप्यनिष्टम् ॥

(१) वसं. २४।२६ ; प्रपा. ९९ धान्यप्रो ( धान्याप्रो ) प्रचुरगुणगणाद्यै ( प्रवरगुणसमूहे ) मता ( नुता ) चित्रा प्र ( चित्रप्र ) वाद्ये ह्य ( वाद्याद्य ) ; संसौ. ९ प्रचुर ( प्रवर ) गणाद्यै ( गुणौघै ) मता सा ( सुधामा ) वाद्ये ह्य ( वाद्यैर ).

(२) वसं. २४।२७ सुपूज्या ( प्रपूज्या ) वासवर्क्षे ( प्रोष्ठपद्याम् ) ; प्रपा. ९९ भाक् स्यान्मा ( भोगा मा ) प्रियहितकर ( परहितवर ) ; संसौ. ९ भाक् स्यान्मा ( भोगा मा ) संनताङ्गी गु ( छन्नवाग्गीर्गु ) वर्गैः ( वर्गे ) चतुर्थपादे ( प्रियहितवरकर्मा वासवे पुष्पिता चेत् ).

(३) वसं. २४।२८ संनि ( संधि ) ; प्रपा. ९९-१०० वर ( रत ) नुरक्ता (ह्यभिज्ञा) परि (रिपु) सा ( स्यात् ) ; संसौ. १० विविधपरिवरौघैः ( रिपुविविधवरोच्चैः ).

(१) वसं. २४।२९ चाज ( वाऽज ) ऽऽढ्य ( ऽऽद्य ) ; प्रपा. १०० परुषमन्त्रैर्दुर्जनान् ( पुरुषभाषा दुर्जना) विचरति गुणमध्ये ( विभवगुणविहीना ) कामाऽऽढ्य ( कामा सु ) ; संसौ. १० द्वितीयपादे ( अनृतवचनवर्षा दुर्जया तर्जयन्ती ) विचर (विभव).

(२) वसं. २४।३० त्वभि ( अभि ) ; प्रपा. १०० षिताङ्गी त्वभिज्ञा ( षणैर्भूषिताङ्गी ) नृत्योद्यता सा ( नृत्यैर्युता स्यात् ) कलाज्ञा (कलाढ्या) ; संसौ. १० त्वभि ( अभि ) नृत्योद्यता सा ( नृत्याम्यवासा ) शेषं प्रपावत्.

(३) वसं. २४।३१ नीचे ( नीचै ) ; प्रपा. १०० विशीला ( विशाला ) शोका वि ( शोकवि ) तसा (शस्ता) ; संसौ. १०-११.

(४) वसं. २४।३२ ; प्रपा. १०० पारिघवैधृतेषु चो (वाऽप्यथ वैधृतौ स्याद्) उत्त. वृद्धवसिष्ठः .

[1]सदा गदार्ता सुपतिव्रता सा
वन्ध्या प्रजावत्यतुलार्थयुक्ता ।
आनन्दकर्त्री त्वसती च पुष्प-
वती क्रमाद्भास्करवासरेषु ॥
[2]आरोग्यसौभाग्यवती च सौम्य-
वर्गेषु सा पुष्पवती च कन्या ।
दुःखा तथाऽनर्थविवादशीला
वर्गेष्वसौम्येषु च दुर्मतिः स्यात् ॥
[3]नक्षत्रवारतिथियोगदिनार्धकाल-
षड्वर्गसंकथितमिष्टमनिष्टमेतत् ।
ज्ञात्वाऽल्पदोषमथ भूरिगुणं च पश्चाद्
वृद्धाङ्गनोक्तमपरं शुभकर्म कार्यम् ॥

प्रथमरजोदर्शनतिथिफलानि

[4]प्रथमे दिवसे रजस्वला स्याद्
भर्तृविहीना धनाढयता द्वितीयायाम् ।
पुष्टाङ्गी विमलमतिस्तृतीय-
दिवसे वृषलीचरिता चतुर्थ्यां तु ॥
पञ्चमेऽहनि सौभाग्ययुता
षष्ठकेऽहनि विकारकारिणी ।
सप्तमे धनवती सुभोगा स्या-
दष्टमेऽहनि सदा कलहप्रिया ॥
नवम्यां विधवा नारी दशम्यां भोगवर्धिनी ।
एकादश्यां शुचिर्नारी द्वादश्यां परदूषणी ॥

(१) वसं. २४।३३ ; संसौ. १४ कर्त्री त्वसती (युक्पापवती) सरेषु (रकेषु).

(२) वसं. २४।३४ ; संसौ. १५ (=) तथा (मया) षु च दुर्मतिः स्यात् (व्यभिचारिणी सा) ; ज्योनि. १०८ (=) दुःखा तथा (दुःखामया).

(३) वसं. २४।३५ वृद्धाङ्गनोक्त (वृद्धान् गुणोत्त) ; प्रपा. १०१ संकथि (जं कथि) ल्पदोष (स्य दोष) गुणं च (गुणांश्च) मपरं (मुचितं) वृद्धवसिष्ठः ; संसौ. २२ मेतत् (मादौ) कार्यम् (कार्ये), २३ शुभकर्म कार्यम् (खलु कर्म कुर्यात्) चतुर्थपादमात्रम्.

(४) संसौ. १३.

त्रयोदश्यां तु तेजस्वी पापिष्ठा भूतवासरे ।
नष्टेन्दौ विधवा पूर्णे नष्टचारित्रगामिनी ॥

प्रथमरजोदर्शनयोगफलानि

[1]आद्यतौ दुर्भगा नारी विष्कम्भे चेद्रजस्वला ।
वन्ध्या चैवातिगण्डे च शूले शूलवती भवेत् ॥
[2]गण्डे तु पुंश्चली नारी व्याघाते चाऽऽत्म-
घातिनी ।
वज्रे च स्वैरिणी प्रोक्ता पाते च पतिघातिनी ॥
परिघे मृतवन्ध्या च वैधृतौ पतिमारिणी ।
शेषाः शुभावहा योगा यथानामफलप्रदाः ॥

प्रथमरजोदर्शने लग्नफलानि ग्रहसंस्थानफलानि च

[3]मेषे सव्यभिचारा स्याद्वृषभे परभोगिनी ।
मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥
[4]पुत्राढ्या सिंहराशौ तु कन्यायां श्रीमती तथा ।
विचक्षणा तुलायां च वृश्चिके तु पतिव्रता ॥

(१) सिन्धु. ८०४ ज्योतिर्निबन्धे वसिष्ठः ; ज्योनि. १०७ (=) ; संकौ. २ दैवज्ञमनोहरे ; संव. ६ दैवज्ञमनोहरे ; संर. ६५२ चैवाति (स्यादति) ज्योतिर्निबन्धे वसिष्ठः.

(२) सिन्धु. ८०४ ज्योतिर्निबन्धे वसिष्ठः ; ज्योनि. १०७ (=) ; संकौ. २ दैवज्ञमनोहरे ; संव. ६ दैवज्ञमनोहरे ; संर. ६५२ ज्योतिर्निबन्धे वसिष्ठः.

(३) प्रपा. १०० (=) पर (वर) ; संसौ. १४ (=) ; संप्र. १४६ पूर्वार्धे (मेषे स्याद्व्यभिचाराढ्या वृषभे परदारिणी ।) दैवज्ञभूषणे ; चिपा. ४६ (=) ; संकौ. १-२ (=), संग. ३५९ सर्वं संप्रवत् ; संव. ६ (=) ; संर. ६५३ प्रथमपादे (व्यभिचारवती मेषे) ज्योतिर्निबन्धे वसिष्ठः.

(४) प्रपा. १०० (=) ; संसौ. १५ (=) राशौ तु (राशौ च) तथा (भवेत्) विच (विल) च (तु) ; संप्र. १४६ प्रथमपादे (सिंहे तु पुत्रसंयुक्ता) च (तु) तु (च) दैवज्ञभूषणे ; चिपा. ४६ (=) पुत्रा (पुष्पा) विच (विल) च (तु) ; संकौ. २ (=) तथा (भवेत्) च (तु) ; संग. ३५९ सर्वं संप्रवत् ; संव. ६ सर्वं संकौवत् ; संर. ६५३ राशौ तु (राशौ स्यात्) च (तु) ज्योतिर्निबन्धे वसिष्ठः.

¹दुश्चारिणी धनुष्पूर्वे अपरे च पतिव्रता ।
मकरे मानहीना च कुम्भे निर्धनवन्ध्यता ।
मीने विचक्षणा लग्ने ग्रहसंस्था विवाहवत् ॥

(१) अथ लग्नफलम्— मेषे स्यादिति । * संप्र. १४६

(२) अथ ‡राशिफलम्— मेषे सव्यभिचारेति ।
विपा. ४६

(३) धनुषः पूर्वभागे दुश्चारिणी परभागे पतिव्रतेत्यर्थः । ‡ ग्रहसंस्था ग्रहपूजा विवाहवत् । शक्त्या द्वित्रिगुणा भवतीत्यर्थः । संर. ६५३

¹वैधव्यमष्टमस्थेऽर्के चन्द्रे क्षीणरुचिर्भवेत् ।
अङ्गारके भर्तृहीना बुधे चेदनपत्यता ॥

* विपाभिन्नाः सर्वे संप्रवत् ।

‡राशिपदमिदं रूढ्या चन्द्रराशिपरम्, विपाग्रन्थे परस्तात् 'अथ लग्नफलम्' इति लग्नप्रकरणोपक्रमाच्च । इदमत्र विचारणीयम्— एषां वचनानां राशिफलपरत्वाभिधानमाश्चर्यावहम्, मेषादिपदार्थानामन्तिमश्लोकस्थितलग्नपदार्थेनाभेदान्वयेन मूलविरोधस्य स्पष्टत्वात् । न च लग्नपदार्थस्य ग्रहसंस्थापदार्थेनान्वयोपगमाद्विरोधाभावः, तथा सत्यपि प्रत्यासत्त्या मेषादीनां लग्नरूपताङ्गीकारस्यैव न्याय्यत्वेन विरोधापरिहारात् ।

‡ इदं व्याख्यानं न मनोहरम्, संस्थाशब्दस्य पूजार्थपरत्वस्य कुत्रापि कोशेऽनुपलम्भात्, पूर्वं ग्रहप्रातिकूल्यस्यानुक्तत्वेन ग्रहपूजातिदेशस्यासंगत्यापत्तेश्च । तस्मात् ग्रहसंस्था लग्नादिभावेषु ग्रहस्थितिः लक्षणया तत्प्रयुक्तशुभाशुभफलानि विवाहवज्ज्ञेयानीति मनोहरम् ।

(१) प्रपा. १०० (=) व्रता (प्रिया); संसौ. १५ (=) विच (विल); संप्र. १४६ मान (त्वन) वन्ध्यता (युक्तता) प्रथमार्धे नास्ति, दैवज्ञभूषणे; विपा. ४६ (=) प्रथमार्धे (दुश्चारिणी च धनुषि तथा चाप्रियवादिनी ।) चक्षणा (लक्षणे); संकौ. २ (=) संप्रवत्; संग. ३६० सर्वे संप्रवत्; संच. ६ (=) संप्रवत्; संर. ६५३ अपरे च (परे चैव) चक्षणा (लक्षणे) ज्योतिर्निबन्धे वसिष्ठः.

(२) प्रपा. १०० (=) चेद (स्याद); संकौ. २; कुम. ८०३.

¹दौर्भाग्यमिन्द्रसचिवे सापत्न्यं भार्गवे भवेत् ।
प्रव्रज्या सूर्यपुत्रे तु राहौ तु कलहः सदा ।
अशुभं चैव केतौ स्याज्जामित्रे शुभदाः शुभाः ॥

अष्टमस्थे इत्यस्य सप्तम्यन्तेषु प्रत्येकमनुषङ्गः । जामित्रे सप्तमस्थाने । † संकौ. २

प्रष्टुः रजस्वलासंबन्धभेदेन दिग्भेदेन च ज्ञापितः फलभेदः, प्रष्टृसंख्यायास्तावत्संख्याकरक्तबिन्दुज्ञापकत्वम्

²माता यदिदं पृच्छेत् स्त्रीसुतिः स्यादथो जनकः ।
यदि पृच्छेद्दारिद्र्यं श्वश्रूरल्पायुता तदा भवति ॥
श्वशुरो यद्यल्पार्था पुण्या स्त्री चेदनेक-
पुण्याढ्या ।
विज्ञायैवं पृच्छेदन्या पुण्याङ्गना मुहूर्तज्ञम् ॥
दिक्स्वादिगर्भे पुत्रः स्यात् कोणेषु दुहिता स्मृता ।
प्रष्टारः सन्ति यावन्तस्तावन्तो रक्तबिन्दवः ॥

प्रश्नलग्नात् तात्कालिकरजस्वलावस्त्रविशेषज्ञानम्

मेषसिंहोक्षचापानामुदये धवलाम्बरा ।
मीनालिकर्किनक्राणामुदये मलिनाम्बरा ॥
कुम्भयुग्माङ्गनातौलिलग्ने चित्रयुताम्बरा ।
पृच्छाकाले भवत्येवं बालिका प्रथमार्तवा ॥

रजोदर्शनदिशा रजोबिन्दु–फलसंख्याज्ञानम्

³इन्द्रे गुणा धूमयमे च वार्धिः
श्वाने वृषे गर्दभकेऽपि युग्मम् ।
नागोरगे स्त्री गुणवेदसंख्या
रक्तं च पुष्पं फलदं च वस्त्रे ॥

इन्द्रे प्राच्यां यदि स्थिता पुष्पवती स्रवेत् तदा त्रयो बिन्दवः पतन्ति वस्त्रे तावन्ति च फलानि वाच्यानि । धूमोऽग्निदिक् । श्वानवृषभगर्दभनागैः नैर्ऋती प्रतीची वायव्योत्तरा दिशः । शेषं स्पष्टम् । संसौ. १६–१७

† कुम. संकौगतम् ।

(१) प्रपा. १०० (=) वे भवेत् (वेण तु) चैव केतौ स्याज्जा (केतुरन्ये तु जा); संकौ. २; कुम. ८०४.

(२) संसौ. १५–१६.

(३) संसौ. १६.

रजोबिन्दुसंख्यातः फलविशेषज्ञानम्

¹वक्त्रेषु रक्ते विषमे च पुंसां(? पुत्रः)
समे च कन्या प्रथमे च गर्भे ।
रक्तश्चतुर्थश्च सदा च रुग्णा
द्वये च लक्ष्मीगुणजातवृद्धिः ॥
शैलचन्द्राष्टवेदाश्च ऋतवो ह्यङ्कदिक् तथा ।
प्राणाद्याः पुत्रसंख्या च बालिका प्रथमार्तवे ॥

प्रथमरजोदर्शने प्रश्नदिशा पतिपुत्रवस्त्रज्ञानम्

दुष्टः पतिः प्रजाः सप्त जीर्णं च धवलाम्बरम् ।
रजोवत्याः स्त्रियः पूर्वे प्रश्नकाले समादिशेत् ॥
भर्ता च सततं क्रूर एकस्तस्याश्च नन्दनः ।
हव्यवाहदिशायां तु नीलं निवसनं भवेत् ॥
अष्ट पुत्रा रक्तवासाः पापोऽपि बलवान् पतिः ।
दक्षिणस्यां दिशि प्रश्ने पुष्पवत्याः स्त्रियो भवेत् ॥
स्वयं नेच्छति भर्तारमन्यसक्ता सदा भवेत् ।
शुक्लं वस्त्रं च पुत्रास्तु चत्वारो रक्षसां दिशि ॥
स्त्रीपुंसोर्वरुणाशायां स्नेहमक्षयमादिशेत् ।
भवेद्वस्त्रं च मलिनं सुशीलास्तनयाश्च षट् ॥
साध्वी पतिप्रियं वाक्यं स्वीकुर्यान्मरुतो दिशि ।
द्वावेव तनयौ तस्या रक्तमाच्छादनं भवेत् ॥
तथा वैश्रवणाशायां पतिः श्रीमान् भवेत्सुखी ।
रक्तयुक्तं सितं वस्त्रं सुपुत्रा नवसंमिताः ॥
नैवेच्छति स्वभर्तारं स्वैरिणी सततं भवेत् ।
ईशान्यां दशपुत्रा स्याद्धौतवस्त्रं समादिशेत् ॥

लग्नवशात् प्रथमरजोदर्शनस्थानज्ञानम्

मेषे च सिंहे च रजस्वला या
ग्रामे परस्मिन् प्रथमार्तवं स्यात् ।
वृषे तु गोष्ठे धनुषि स्वगेह-
मध्ये तुले ग्रामजनस्य मध्ये ॥
रात्रौ नृयुग्मे तु दिगम्बरा स्यात्
कन्योदयेऽन्यस्य गृहे रजः स्यात् ।
मृगे घटे कर्कटके विलग्ने
रजस्वला सा जलसंनिधौ स्यात् ।
वनस्य मध्ये किल वृश्चिके तु
न संशयं शास्त्रविदो वदन्ति ॥
मीने तु सौतिके तस्याः कन्यायाः प्रथमार्तवम् ॥

प्रथमरजोदर्शनस्थानफलानि

²ग्रामाद्बहिः परग्रामे नारी स्याद्व्यभिचारिणी ।
पतिव्रता ¶पतिस्थाने सुशीला गृहमध्यके ॥
²ग्राममध्ये तु वृद्धिश्च विधवा च दिगम्बरा ।
परागारे च दुःशीला आयुष्यं जलसंनिधौ ।
वनमध्ये तु कन्या या धनधान्यसमृद्धिदा ॥

(१) परगृहे इत्यनेन पित्रादिगृहमपि गृह्यते ।
संम. ९

(२) परागारे इत्यनेनैव पितृभ्रातृगृहं निषिद्धम् ।
तथा च शिष्टाचारः । विशेषनिषेधस्तु न दृश्यते ।
शाम. ५५

---

(१) संसौ. १७-१९.

¶ 'ग्रामाद्बहिः' 'इत्यादिवचनेषु 'मेषे च सिंहे च' इत्यादि-पूर्ववचनोक्तमेषादिलग्नज्ञाप्यस्थानानि यथाक्रममेव फलान्य-भिधातुमनुक्रान्तानि दृश्यन्ते । तथा च पूर्वत्र गोष्ठस्योक्तत्वा-दत्र 'पतिस्थाने' इति 'शुभस्थाने' इति च पाठ उपलभ्य-मानः प्रामादिक एव, 'पशुस्थाने' इत्येवं मूलपाठः स्यादिति संभाव्यते । अत एवाग्रे 'वनमध्ये' इत्यत्र 'धनमध्ये' इति बहुग्रन्थसंमतोऽपि पाठः प्रामादिक एव । तथा पूर्व-वचनोक्तमीनज्ञाप्यसौतिकस्थानस्य फलप्रतिपादको ग्रन्थ उच्छिन्न इत्यपि प्रतिपत्तव्यम् ।

(१) संसौ. १९ नारी स्याद्व (चेत्स्त्री सा व्य) ध्यके (ध्यमे) ; संप्र. १४६ ध्यके (ध्यतः) ; संम. ९ नारी स्याद्व (चेत्स्यात्सा व्य) ; शाम. ५५ नारी (वा चेत्) ; संकौ. २ (=) चतुर्थपादे (सुभगा गृह-मध्यतः) ; संग. ३६० संप्रवत् ; संव. ६ (=) संकौ-वत् ; कुभ. ८०३ (=) चतुर्थपादे (शुभगा गृहमध्यतः).

(२) संसौ. १९ वृद्धिश्च (वृद्धिः स्यात्) वनमध्ये तु (धनस्य मध्ये) समृद्धिदा (समृद्धयन्) ; संप्र. १४६ -१४७ वन (धन) ; संम. ९ तु वृ (च वृ) तृतीयार्धं नास्ति ; शाम. ५५ ; संकौ. २ (=) परागारे (उपरागे) वन (धन) ; संग. ३६० गारे च (गारे तु) वन (धन) ; संव. ६ (=) संकौवत् ; कुभ. ८०३ (=) संकौवत्.

प्रथमरजोदर्शने अशुभयोगापवादः

'अशुभमपि समस्तं चाऽऽर्तवे संप्रभूतं
सुरगुरुसितयुक्ते वीक्षिते वा विलग्ने ।
तिमिरमिव कठोरज्योतिरुत्पत्तिकाले
क्षयमथ समुपैति प्राप्नुयाऽऽदीप्सितानि ॥

## मनुः

प्रथमरजोदर्शने लग्नस्थितग्रहफलानि

'भास्करस्योदये मृत्युश्चन्द्रे स्त्रीमातृका भवेत् ।
गर्भस्रावः कुजे चैव बुधे पुत्रवती भवेत् ॥
'आयुः श्रीः प्रीतिरारोग्यमुदये गुरुशुक्रयोः ।
मन्दोदये विरोधः स्यात् क्लेशः स्यात्तामसोदये ॥

तामसः राहुरित्यर्थः । विपा. ४७

## नारदः

प्रथमरजोदर्शने अशुभतिथ्यादयः

'अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि ।
परिघस्य तु पूर्वार्धे व्यतीपाते च वैधृतौ ।
संध्यासूपप्लवे विष्टयामशुभं प्रथमार्तवम् ॥

( १ ) उपप्लवः ग्रहणम् । $ संम. ९

( २ ) विष्टिः भद्रेत्यर्थः । विपा. ४६

प्रथमरजोदर्शने वारफलानि

'रुग्णा पतिव्रता दुःखा पुत्रिणी भोगभागिनी ।
पतिप्रिया क्लेशयुक्ता सूर्यवारादिषु क्रमात् ॥

¶ मृतप्रजेति कृष्णपक्षसोमवारविषयम्, पतिव्रतेति शुक्लसोमवारविषयम्, नातो विरोधः । संर. ६५१

प्रथमरजोदर्शने नक्षत्रफलानि

'श्रीयुक्ता सुभगा पुत्रवती सौख्यान्विता स्थिरा ।
मानी कुलाधिका नारी चाश्विन्यां प्रथमार्तवा ॥
दुःशीला स्वैरिणी वन्ध्या गर्भपातनतत्परा ।
परप्रेष्या काकवन्ध्या भरण्यां प्रथमार्तवा ॥
'अनर्था पुंश्चली वन्ध्या गर्भपातनतत्परा ।
वेश्या मृतप्रजा चापि वह्निभे प्रथमार्तवा ॥
'सुशीला सुप्रजा चान्या पतिभक्ता दृढव्रता ।
ब्रह्मार्चनरता नित्यं धातृभे प्रथमार्तवा ॥
गुणान्विता धर्मरता नारी सर्वसहा सती ।
पतिप्रिया सुपुत्रा या चन्द्रभे प्रथमार्तवा ॥
कुलटा दुर्भगा दुष्टा मृतपुत्रा खला जडा ।
दुष्टव्रतपरिभ्रष्टा रौद्रभे प्रथमार्तवा ॥

---

$ कूम. संमवत् ।

(१) संसौ. २५; संव. ४ संप्र ( तत्प्र ) विलग्ने ( ऽथ लग्ने ).

(२) प्रपा. १००.

(३) प्रपा. १००; विपा. ४७ ( = ) द्वितीयपादे ( मुदिते गुरुभार्गवे ).

(४) ज्योना. १५।१–२ ; संसौ. १३ च ( ऽथ ) ; संप्र. १४५ प्रथमार्धे नास्ति; संम. ८–९ तु ( च ); स्मृम. ५५ तु ( च ) स्मृतिचन्द्रिकायाम्; सिन्धु. ८०१ मदनरत्ने नारदः ; विपा. ४५ प्रथमार्धं नास्ति, क्रमेण वराहसंहितायाम्; ज्योनि. १०६ ; संकौ. २ प्रथमार्धे नास्ति, नृसिंहः ; संग. ३५९ द्वितीयार्धमात्रम्; संव. ६ सर्वं संकौवत् ; संर. ६५६ ( = ) तृतीयार्धमात्रम्.

¶ 'सोमे चैव मृतप्रजा' इतिवाराहवचनगतमिदं पदम् ।

(१) ज्योना. १५।२–३ दुःखा ( दुःखी ) ; प्रपा. ९८ दुःखा ( दुःखी ) युक्ता ( वती ) ; संप्र. १४५ युक्ता ( भागा ) ; संम. ९ रुग्णा ( रोगी ) दुःखा ( दुःखी ) प्रिया ( व्रता ) ; स्मृम. ५५ संमवत्, स्मृतिचन्द्रिकायाम् ; सिन्धु. ८०१–८०२ युक्ता (भागी) शेषं संमवत्, मदनरत्ने नारदः ; विपा. ४३ ( = ) संमवत् सिन्धुवच्च ; संकौ. १ ( = ) दुःखा ( दुःखी) युक्ता ( भागा ) ; संव. ५ ( = ) संकौवत् ; संर. ६५१ दुःखा ( दुःखी ) युक्ता (भागी).

(२) ज्योना. १५।३–४.

(३) ज्योना. १५।५ अनर्था ( अन्यथा ) ; प्रपा. ९९ वेश्या ( प्रेष्या ) चापि ( वाऽपि ).

(४) ज्योना. १५।६–८.

[1]पतिभक्ता पुत्रवती पतिसंतानमोदिनी ।
कुलाचारानुरक्ताढयाऽदितिभे प्रथमार्तवा ॥
[2]पतिप्रिया पुत्रवती मानभोगवती शुभा ।
सुकर्मनिरता दक्षा तिष्यर्क्षे प्रथमार्तवा ॥
परभर्तृरता प्रेष्या कोपिनी निर्घृणाऽलसा ।
मृषावादी च दुष्पुत्रा भौजङ्गे प्रथमार्तवा ॥
निर्द्वेष्या रोगसंयुक्ता सर्वदा क्षेयलोलुपा ।
पितृवेश्मरता मान्या पैतृभे प्रथमार्तवा ॥
परकार्यरता दीना दुष्पुत्रा क्लेशभागिनी ।
मलिनी कर्कशा क्रुद्धा भाग्यभे प्रथमार्तवा ॥
प्रजावती धर्मरता निर्वैरा मित्रपूजिता ।
सती मित्रगृहे सक्ताऽर्यमर्क्षे तु रजस्वला ॥
निर्द्वेष्या भूरिविभवा पुत्राढया भोगभोगिनी ।
प्रधाना दानकुशला हस्तर्क्षे प्रथमार्तवा ॥
चित्रकर्मा भोगिनी च कुशला क्रयविक्रये ।
विकीर्णकामा सुलक्षणा त्वाष्ट्रभे प्रथमार्तवा ॥
बहुवित्तवती नासीत् (?नारी) कुशला शिल्पकर्मणि ।
पुत्रपौत्रवती साध्वी वायुभे प्रथमार्तवा ॥
नीचकर्मरता दुष्टा परसक्ता परप्रिया ।
विपुत्रा मलिनी क्रुद्धा द्विदैवे प्रथमार्तवा ॥
[3]स्वामिपक्षार्चिता स्वस्य गुणैः सम्यग्विभूषिता ।
सुपुत्रा शुभदा कान्ता मित्रर्क्षे प्रथमार्तवा ॥
[4]दुश्चरित्ररता क्लेशिन्यार्तवा पुंश्चली व्यसुः ।
दुःसंतानवती ज्येष्ठानक्षत्रे प्रथमार्तवा ॥
संतानार्थगुणैरन्यैर्युक्ताऽन्यक्लेशमोचिनी ।
स्वकर्मनिरता नित्यं मूलभे प्रथमार्तवा ॥

प्रच्छन्नपापा दुष्पुत्रा प्राणिहिंसनतत्परा ।
अजस्रव्यसनासक्ता तोयभे प्रथमार्तवा ॥
कार्याकार्येषु कुशला सदा धर्मानुवर्तिनी ।
गुणाश्रया भोगवती विश्वभे प्रथमार्तवा ॥
धनधान्यवती भोगपुत्रपौत्रसमन्विता ।
कुलानुमोदिनी मान्या विष्णुभे प्रथमार्तवा ॥
पुत्रपौत्रान्विता भोगधनधान्यवती सती ।
स्वकर्मनिरता मान्या वसुभे प्रथमार्तवा ॥
[1]बहुपुत्रा धनवती स्वकर्मनिरता सती ।
कुलानुमोदिनी मान्या वारुणे प्रथमार्तवा ॥
[2]बन्धकी बन्धुविद्वेष्या नित्यं दुष्टरता खला ।
शिल्पकार्येषु कुशलाऽजाङ्घ्रिभे प्रथमार्तवा ॥
आढया पुत्रवती मान्या सुप्रसन्ना पतिप्रिया ।
बन्धुपूज्या धर्मवत्याहिर्बुध्न्ये प्रथमार्तवा ॥
[3]दृढव्रता धर्मवती पुत्रसौख्यार्थसंयुता ।
विख्यातगुणसंपन्ना पौष्णभे प्रथमार्तवा ॥

प्रथमरजोदर्शने शुभराशयः

[4]कुलीरवृषचापान्त्यनृयुक्कन्यातुलाघराः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥

कुलीरः कर्कटः । चापं धनुः । अन्त्यः मीनः । नृयुक् मिथुनम् । घटः कुम्भः । *एषु सूर्ये विद्यमान इत्यर्थः । ¶ संम. ८

---

(१) ज्योना. १५।९ पतिसं (परसं) कुला (कला) रक्ताढ्या ( रक्ताद्या ) ; प्रपा. ९९ दिनी ( हिनी ).

(२) ज्योना. १५। १०–१८.

(३) ज्योना. १५।१९ ; प्रपा. ९९ शुभदा (शुभगा) मित्रर्क्षे ( मैत्रभे ).

(४) ज्योना. १५।२०–२५.

* राशिपदस्य शास्त्रलोकयोश्चन्द्रराशौ रूढत्वादिदं व्याख्यानं चिन्तनीयम् ।

¶ शाम. , कृम. संमगतम् ।

(१) ज्योना. १५।२६ ; प्रपा. १०० कर्म ( धर्म ).

(२) ज्योना १५।२७–२८.

(३) ज्योना. १५।२९ ख्यात ( शाखा ) ; प्रपा. १००.

(४) ज्योना. १५।३० ; संसौ. १५ ( = ) ; संप्र. १४६ ; संम. ८ धराः ( घटाः ) ; शाम. ५४ संमवत् ; सिन्धु. ८०२ संमवत् ; संग. ३५९.

प्रथमरजोदर्शने एकार्गल-संध्याकाल-तिथि-वारफलानि

[1]एकार्गले मृतिं विद्यात् संध्याकाले तु पुंश्चली ।
आद्यर्तौ सुभगा नारी प्रतिपत्सु रजस्वला ॥
[2]द्वितीया भाग्यजननी तृतीयायां सुतान्विता ।
चतुर्थ्यां विधवा नारी पञ्चम्यां धनदायिनी ॥
[3]षष्ठ्यां च क्लेशभाक् चैव सप्तम्यां धनवर्धिनी ।
अष्टम्यां राक्षसी नारी नवम्यां पापवर्धिनी ॥
[4]दशम्यां प्रीतिकरी स्यादेकादश्यां सुतान्विता ।
द्वादश्यां दुर्भगा नारी त्रयोदश्यां हिरण्यदा ॥
[5]चतुर्दश्यां पुंश्चली स्यात् पौर्णमास्यां सुपुत्रिका ।
यदि भद्रा न जायेत दर्शे स्याच्चौरिका ध्रुवम् ॥
[6]आदित्ये विधवा नारी सोमे चैव मृतप्रजा ।
अङ्गारे चाऽऽत्महानिश्च बुधे कन्यां प्रसूयते ॥
पुत्रिणी गुरुवारे च कन्यां शुक्रे प्रसूयते ।
शनौ तु पुंश्चली नारी प्रथमर्तौ विदुर्बुधाः ॥
त्रयस्त्रीणि त्रिकं त्रीणि पञ्चकं सप्तकं त्रिकम् ।
उत्तराषाढामारभ्य प्रथमं त्वृतुलक्षणम् ॥
[7]वैधव्यं सुतलाभश्च मैत्रं शत्रुविवर्धनम् ।
मित्रलाभः शत्रुवृद्धिः कुलर्द्धिर्बन्धुनाशनम् ॥
मरणं वंशवृद्धिश्च निराहारः कुलक्षयः ।
तेजश्च सुतनाशश्च कुलहानिस्तिथिक्रमात् ॥

(१) ज्योनि. १०६ ; संर. ६५० (=) उक्त. ज्योतिर्ग्रन्थान्तरे.

(२) ज्योनि. १०६.

(३) ज्योनि. १०६ ; संर. ६५० (=) सप्तम्यां (सप्तमी) द्वितीयतृतीयपादमात्रम्, ज्योतिर्ग्रन्थान्तरे.

(४) ज्योनि. १०६; संर. ६५० (=) सुता (सुखा) द्वितीयतृतीयपादमात्रम्, ज्योतिर्ग्रन्थान्तरे.

(५) ज्योनि. १०६ ; संर. ६५० (=) त्रिका (त्रिणी) द्वितीयपादमात्रम्, ज्योतिर्ग्रन्थान्तरे.

(६) ज्योनि. १०६.

(७) सिन्धु. ८०२.

## बृहस्पतिः

प्रथमरजोदर्शनकालः

[1]एकादशे द्वादशे वा नारीणामार्तवं भवेत् ।
वह्निदीपशिखायोगाच्छेदः कोशस्य दृश्यते ॥

प्रथमरजोदर्शने तिथिवारफलानि

[2]प्रथमायां पतिं हन्ति द्वितीयायां सुखं भवेत् ।
तृतीयायां श्रियै स्याच्च चतुर्थ्यां वृषली भवेत् ॥
[3]पञ्चम्यां पुत्रलाभश्च षष्ठ्यां चारित्रविक्रिया ।
सप्तम्यां पुत्रवृद्धिः स्यादष्टम्यां सुतनाशनम् ॥
[4]नवम्यां रुदती नित्यं दशम्यां धर्मशालिनी ।
एकादश्यां पतिस्निग्धा द्वादश्यां क्रन्दिनी भवेत् ॥
[5]त्रयोदश्यां मानधना त्वपरा बहुदोषकृत् ।
पर्वण्यन्यगृहीता स्याद्धियादेवं तिथेः फलम् ॥
[6]तिथीनां फलमेवं हि वाराणां फलमुच्यते ।
भानुवारे भवेद्व्याधिश्चन्द्रवारे पतिव्रता ।
बहुरोगा बहुक्लेशा पतिहीना कुजे दिने ॥

(१) संसौ. ४ ; संग. ३५७.

(२) प्रपा. ९८ ; संसौ. १२ सुखं (धनं) श्रियै स्याच्च च (श्रियो वृद्धिश्च) च्यवनः ; संप्र. १४४ ; संकौ. १ ; संग. ३५८ ; संब. ५ श्रियै (श्रिये).

(३) प्रपा. ९८ ; संसौ. १२ नाशनम् (नाशिनी) च्यवनः ; संप्र. १४४ चारित्र (चारित्र्य); संकौ. १ क्रिया (क्रया) सुत (पुत्र) ; संग. ३५८ संप्रवत् ; संब. ५ सुत (पुत्र).

(४) प्रपा. ९८ क्रन्दिनी (क्रन्दती) ; संसौ. १२ क्रन्दिनी भ (क्रन्दतिर्भ) च्यवनः ; संप्र. १४४ शालि (शीलि) शेषं प्रपावत् ; संकौ. १; संग. ३५८ प्रपावत् ; संब. ५.

(५) प्रपा. ९८ त्वप (तत्प) ण्यन्य (ण्यनु) चतुर्थपादे (द्वन्ध्या देवतिथेर्वशात्) ; संसौ. १३ द्वितीयपादे (चतुर्दश्यां च दोषिणी) च्यवनः ; संप्र. १४४ थेः फलम् (थेर्वशात्) ; संकौ. १ ; संग. ३५८ चतुर्थपादे (द्विन्ध्यादेवं तिथेर्वशात्) ; संब. ५.

(६) प्रपा. ९८ श्चन्द्र (रिन्दु) ; संप्र. १४४; संग. ३५८ प्रथमार्धे नास्ति, क्रमेण गुरुः .

[1]बहुपुत्रवती सौम्ये सर्वसंपद्गुरोर्दिने ।
सौभाग्यं सुखसंपत्तिः शुक्रवारे पतिव्रता ॥
[2]कष्टबुद्धिर्महाव्याधिः स्वयमर्थस्य चोरिणी ।
मन्दवारे विनाशः स्यात् प्रथमर्तौ रजस्वला ॥

## भृगुः

प्रथमरजोदर्शने मासफलानि, शुभं ग्रहसंस्थानम्

[3]चैत्रे स्यात् प्रथमर्तौ तु नारी वैधव्यभागिनी ।
वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता तथा ॥
[4]शुचौ मृतप्रजा प्रोक्ता श्रावणे धनधान्यदा ।
नभस्ये दुर्भगा क्लिष्टा आश्विने च तपस्विनी ॥
[5]ऊर्जे त्वायुष्मती नारी मार्गशीर्षे बहुप्रजा ।
पौषे च पुंश्चली नारी माघे पुत्रसुखान्विता ।
फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ॥

[6]शुभग्रहर्क्षे शुभदृष्टियुक्ते
शुभांशके जीवसितेन्दुवारे ।
शुभे मुहूर्ते ऋतुसंभवश्चेत्
सा रत्नगर्भेव विराजते स्त्री ॥

(१) प्रपा. ९८ भाग्यं सु ( भाग्यसु ) ; संप्र. १४५; संग. ३५९ क्रमेण गुरुः .

(२) प्रपा. ९८; संप्र. १४५; संग. ३५९ क्रमेण गुरुः.

(३) संसौ. ११ स्मृतिचन्द्रिकायाम् ; संप्र. १४३ स्यात् ( तु ) तु ना ( स्यान्ना ) ज्योतिश्चन्द्रिकायाम् ; संकौ. १; संग. ३५८ सर्वं संप्रवत् ; संव. ५ तथा (शुभा).

(४) संसौ. १२ स्मृतिचन्द्रिकायाम्; संप्र. १४४ क्लिष्टा (क्लीबा) ज्योतिश्चन्द्रिकायाम् ; संकौ. १ धान्यदा ( धान्यभाक् ) आश्वि ( ऽप्याश्वि ) तप ( यश ) ; संग. ३५८ सर्वं संप्रवत् ; संव. ५ तप ( पय ) शेषं संकौवत् .

(५) संसौ. १२ त्वायु ( ऽल्पायु) पौषे च (पुष्ये तु ) स्मृतिचन्द्रिकायाम् ; संप्र. १४४ ज्योतिश्चन्द्रिकायाम् ; संकौ. १ त्वायु ( ऽप्यायु) च (तु) साध्वी...... स्मृतम् (नारी रजोमासफलं क्रमात् ) ; संग. ३५८ ज्योतिश्चन्द्रिकायाम् ; संव. ५ साध्वी ...... स्मृतम् (नारी प्रोक्तं मासफलं क्रमात् ). (६) प्रपा. १००.

## कश्यपः

प्रथमरजोदर्शने दुष्टतिथ्यादयः , कालदोषे मङ्गलाचारनिषेधः गमननिषेधश्च, मङ्गलाचारविधानम्

[1]अष्टमी षष्ठयमा रिक्ता द्वादशी संक्रमेऽपि च ।
वैधृतौ च व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ।
विष्ट्यां संध्यासु निद्रायां दुर्भगा प्रथमार्तवे ॥
[2]मलिना मन्दवारे तु रात्रावपि तथैव च ॥
[3]निन्दिते दिनवारर्क्षे नाऽऽचरेत्तत्र मङ्गलम् ।
तस्मात्सम्यग्विचार्यैव ततो मङ्गलमाचरेत् ॥
[4]प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवती स्त्रियाः ।
अक्षतैरासनं कुर्यात्तस्मिंस्तामुपवेशयेत् ॥
[5]हरिद्रागन्धपुष्पादीन् दद्यात्ताम्बूलकं स्रजम् ।
आशिषो वाचयेयुस्ताः पतिपुत्रवती भव ॥

(१) शाम. ५५ पि च ( पि वा ) च व्यतीपाते ( व्यतीपाते च ) र्तवे (र्तवा) ; संकौ. १ ; संव. ५.

(२) संम. ९ ; शाम. ५५.

(३) प्रपा. १०१.

(४) प्रपा. १०१ वती स्त्रियाः (युताः स्त्रियः) कुर्यात्त (कुर्युस्त) स्मृतिचन्द्रिकायाम् ; संसौ. २२ स्त्रियाः (स्त्रियः) कुर्यात्तस्मिंस्ता (दद्यात्तत्र ता) चन्द्रिकायाम् ; संप्र. १४७ पुष्पिण्याः ( पुष्पिण्यां ) स्मृतिचन्द्रिकायाम् ; संम. ९ कुर्यात्त ( कृत्वा त ) स्मृतिचन्द्रिकायाम् ; सिन्धु. ८०८ सर्वं संमवत् ; विपा. ४७ ; संकौ. २ स्त्रियाः ( स्त्रियः ) कुर्यात्त ( कुर्युस्त ) ; संग. ३६१ स्त्रियाः ( स्त्रियः ) स्मृतिचन्द्रिकायाम् ; संव. ६ संकौवत् ; संर. ६६० पूर्वार्धे ( उद्वाहिताङ्गनायाश्च प्रथमे त्वार्तवे ततः। ) कुर्यात्त ( कृत्वा त ) स्मृतिचन्द्रिकायाम् .

(५) प्रपा. १०१ स्मृतिचन्द्रिकायाम् ; संसौ. २२ स्रजम् ( स्रजः ) येयुस्ताः ( येत्तस्याः ) ; संप्र. १४७ भव ( भवेत् ) स्मृतिचन्द्रिकायाम् ; संम. ९ दद्यात्ता ( दद्युस्ता) पू., स्मृतिचन्द्रिकायाम् ; सिन्धु. ८०८ दीन् दद्यात्ता (दि दद्युस्ता) पू., स्मृतिचन्द्रिकायाम्; विपा. ४७ स्मृतिचन्द्रिकायाम् ; संकौ. २ ; संग. ३६१ सर्वं संप्रवत् ; संव. ६ संप्रवत् ; संर. ६६० दद्याता ( दद्युस्ता ) स्मृतिचन्द्रिकायाम् .

[1]दीपैर्नीराजनं कुर्यात् सदीपे वासयेद्गृहे ।
ताः सर्वाः पूजयेत् पश्चाद्गन्धपुष्पाक्षतादिभिः ।
लवणापूपमुद्रादि दद्यात्ताभ्यः स्वशक्तितः ॥
[2]तिथिवासरधिष्ण्येषु पुष्पं दुष्टेषु दृश्यते ।
गमनं वर्जयेत्तत्र पुनः शस्तेषु दर्शनात् ॥

## लघ्वाश्वलायनः

प्रथमरजोदर्शने दुष्टनक्षत्रफलानि

[3]पतिवल्या( ? त्न्या )श्च दुर्भेषं प्रथमं स्याद्रजो यदि ।
पत्युस्तस्या भवेन्मृत्युस्त्रिपूर्वाहियमेषु च ॥
मघाशक्रशिवादित्यवह्निभेषु च वा भवेत् ।
तत्रापि स्यान्महाशोको दरिद्रं चानपत्यता ॥

## गर्गः

प्रथमरजोदर्शने नक्षत्रफलानि

[4]सुभगा चैव दुःशीला वन्ध्या पुत्रसमन्विता ।
धर्मयुक्ता व्रतघ्नी च परसंतानमोदिनी ॥
[5]सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ।
दीना प्रजावती चैव पुत्राढया चित्रकारिणी ॥

(१) प्रपा. १०१ लवणा ( भक्षणा ) स्मृतिचन्द्रिकायाम् ; संसौ. २३ दद्यात्ताभ्यः ( ताभ्यो दद्यात् ) चन्द्रिकायाम् ; संप्र. १४७ स्मृतिचन्द्रिकायाम् ; संम. ९ द्वितीयार्धं नास्ति , स्मृतिचन्द्रिकायाम् ; सिन्धु. ८०८ सर्वे संमवत् ; विपा. ४७-४८ स्मृतिचन्द्रिकायाम् ; संको. २ ; संग. ३६१ स्मृतिचन्द्रिकायाम् ; संव. ६ ; संर. ६६० प्रथमार्धमात्रम् , स्मृतिचन्द्रिकायाम् .

(२) प्रपा. १०५ ज्योतिःकश्यपः ; संर. ६९३ ज्योतिष्कश्यपः .

(३) लघ्वाश्वस्मृ. ३।१४-१५.

(४) संसौ. ११ ; संप्र. १४५ ; संम. ९ मोदि (मोहि); शाम. ५५ ; सिन्धु. ८०२ ; संको. १ ; संग. ३५९; संव. ५.

(५) संसौ. ११ चित्र (चित्त) ; संप्र. १४५ ; संम. ९ प्रजा (प्रज्ञा) ; शाम. ५५ संमवत् ; सिन्धु. ८०२ ; संको. १ ; संग. ३५९ ; संव. ५.

[1]साध्वी पतिव्रता नित्यं सुपुत्रा कष्टचारिणी ।
स्वकर्मनिरता हिंस्रा पुण्या पुत्रादिसंयुता ॥
[2]नित्यं धनकथासक्ता पुत्रधान्यसमन्विता ।
मूर्खाऽर्थाढ्या पुण्यवती दस्राक्षादिः क्रमात् फलम् ॥

प्रथमरजोदर्शने वस्त्र-रजोबिन्दुसंख्याफलानि

[3]सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता ।
क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥

क्षौमवस्त्रं पट्टवस्त्रम् । संसौ. १६

[4]दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा ।
नीलाम्बरधरा नारी विधवा पुष्पिता यदि ।
मलिनाम्बरधृङ्नारी दरिद्रा स्याद्रजस्वला ॥

(१) संसौ. ११ पुण्या पु (पुत्रपौ) ; संप्र. १४५ व्रता (प्रिया) पुण्या पु (पुण्यपु) ; संम. ९ पुत्रा (पौत्रा) ; शाम. ५५ संमवत् ; सिन्धु. ८०२ संप्रवत् ; संको. १; संग. ३५९ व्रता (प्रिया) चारि (कारि) ; संव. ५.

(२) संसौ. ११; संप्र. १४५ कथा (व्यया) ऽर्थाढ्या (चाज्ञा) ; संम. ९ पुण्य (गुण) ; शाम. ५५ संमवत् ; सिन्धु. ८०२ कथा (चया) ऽर्थाढ्या (चाज्ञा) ; संको. १ कथा (व्यया) पुत्र (पुत्री) ऽर्थाढ्या (चारा); संग. ३५९ दस्र (दास्र) शेषं संप्रवत् संमवच्च ; संव. ५ कथा (व्यया) ऽर्थाढ्या (चारा).

(३) प्रपा. १०० वस्त्रा स्याद्दृ (वस्त्राढया दृ) वस्त्रा क्षितीशा स्यान्न (वस्त्रान्विता प्राज्ञ न) ; संसौ. १६ क्षौम (आम) क्रमेण वसिष्ठः ; संप्र. १४६ ; संम. ९ वसिष्ठः ; शाम. ५५ वसिष्ठः ; सिन्धु. ८०२ ; संको. २ ; संग. ३६० ; संव. ६ (=).

(४) प्रपा. १०० चतुर्थपादे (पुष्पिणी विधवा भवेत्) ; संसौ. १६ द्रोगि (द्रोहि) धृङ्नारी ( तो नारी) क्रमेण वसिष्ठः ; संप्र. १४६ यदि (ततः) धृङ् (धरा) ; संम. ९ संसौवत् , वसिष्ठः ; शाम. ५५-५६ संसौवत् , वसिष्ठः ; सिन्धु. ८०२ चतुर्थपादे (पुष्पिता विधवा ततः) तृतीयार्धं नास्ति ; संको. २ संप्रवत् ; संग. ३६० संप्रवत् ; संव. ६ (=) संप्रवत् .

[1]**वक्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् ।**
**समाश्चेत्कन्यकां चेति फलं स्यात्प्रथमार्तवे ॥**

## देवरातः

प्रथमरजोदर्शनकाले हस्तधृतसंमार्जन्यादीनामशुभं फलम्, तल्पोपभोगतपश्चरणयोः शुभं फलम्

[2]**संमार्जनीकाष्ठतृणाग्निशूर्पान्**
**हस्ते दधाना कुलटा तदा स्यात् ।**
**तल्पोपभोगे तपसि स्थिता चेद्**
**दृष्टं रजो भाग्यवती तदा स्यात् ॥**

प्रथमरजोदर्शने तिथि-नक्षत्र-वार-मास-वस्त्र-दर्शनाना-मुत्तरोत्तरं बलीयस्त्वम्, रजोदोषे शान्तेः कर्तव्यता

[3]**तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् ।**
**वारस्तु षड्गुणो ज्ञेयो मासश्चाष्टगुणः स्मृतः ।**
**वस्त्रं दशगुणं विद्याद्दर्शनं च ततोऽधिकम् ॥**
[4]**अशुभं चेद्रजः स्त्रीणां प्रथमर्तौ हि दृश्यते ।**
**विधानं तत्र कर्तव्यमरिष्टघ्नं विशेषतः ॥**

विधानं शान्तिः । संर. ६५७

## सप्तर्षिमते विवाहपटले

दशवर्षोत्तरं रजसोऽदर्शनेऽप्यन्तःसत्त्वम्

[5]**दशवर्षाधिका कन्या भवत्येव रजस्वला ।**
**बहिः पुष्पास्फुटीभावादन्तः पुष्पं स्फुरत्यपि ॥**

(१) प्रपा. १०० पूर्वार्धे ( वक्त्रेषु विषमैः रक्तबिन्दुभिः पुत्रमाप्नुयात् । ) समाश्चेत् (समैश्च) चेति (चैव); संसौ. १७ कां चेति (का इत्थं) क्रमेण वसिष्ठः; संप्र. १४६ न्यकां (न्यका); संम. ९ संप्रवत्, वसिष्ठः; शाम. ५६ संप्रवत्, वसिष्ठः; सिन्धु. ८०२ कां चेति (काश्चेति); संकौ. २ संप्रवत्; संग. ३६०; संव. ६ (=) संप्रवत्.

(२) प्रपा. १००; संप्र. १४६ गर्गसंहितायाम्; संम. ९; शाम. ५६; संकौ. २; संग. ३६० भाग्य (भाग) गर्गसंहितायाम्; कृम. ८०१ तृणाग्नि (तृणादि) देवरातः; संर. ६५६.

(३) विपा. ४५ वारस्तु षड् (वारः षष्ठ) वराहसंहितायाम्; संर. ६५७.

(४) विपा. ४५ वराहसंहितायाम्; संर. ६५७.

(५) संसौ. ४; संग. ३५७ पुष्पास्फु (पुष्पं स्फु).

## स्मृत्यन्तरम्

प्रथमरजोदर्शने अहोरात्रभागफलानि अशुभस्थानानि च

[1]**प्रातःकाले सुतधना सायाह्ने सर्वभोगिनी ।**
**मध्याह्ने तु भवेद्वेश्या निशीथे विधवा भवेत् ॥**
[2]**देवस्थाने पितृस्थाने निन्द्यस्थानेऽन्यवेश्मनि ।**
**पुष्पवत्याः फलं न स्यान्मार्गे चाण्डालवेश्मनि ॥**

## ब्रह्माण्डपुराणम्

सुवासिनीभ्योऽन्नादिदानम्

[3]**अन्नं पानं फलं मूलं गन्धपुष्पाणि चैव हि ।**
**दद्याद्ब्राह्मणपत्नीभ्यः ...... ॥**

प्रथमर्तौ स्नानदिने निषेकदिने च नारिकेलपक्वकदली-शर्करालाजादिकं स्त्रीभ्यो ददातीति समाचारः, 'अन्नं पानं ......' इति ब्रह्माण्डोक्तेः । गप. ४७२

## अनिर्दिष्टकर्तृकवचनानि

प्रथमरजोदर्शने सौरचान्द्रमासफलानि

[4]**दारिद्र्यं मेषमासे स्याद्वृषे गोधनपुत्रवः ।**
**सौभाग्यं मिथुने चैव कर्कटे सुखमाप्नुयात् ॥**
**सिंहे सकृत्प्रसूतिः स्यात् कन्ये कन्या न संशयः ।**
**तुले धनान्विता नारी वृश्चिके कुलटा भवेत् ॥**
**धनुषि चञ्चला नारी मकरे सुखमाप्नुयात् ।**
**कुम्भे बहुसुता सा च मीने वेगवती भवेत् ॥**
[5]**प्रथमर्तौ मधौ नारी विधवा भवति ध्रुवम् ।**
**वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता भवेत् ॥**
**आषाढे च मृतापत्या श्रावणे च धनान्विता ।**
**भाद्रे तु दुर्भगा नारी आश्विने च तपस्विनी ॥**

(१) संसौ. १४ तु (च); शाम. ५५ द्वेश्या (द्वन्ध्या) उत्त; संकौ. १.

(२) संप्र. १४७ चाण्डा (चण्डा); ज्योनि. १०७ (=); संग. ३६०.

(३) गप. ४७२.

(४) गप. ४७०-४७१ ज्योतिःशास्त्रे.

(५) ज्योनि. १०७.

ऊर्जेऽप्यायुष्मती नारी मार्गशीर्षे बहुप्रजा ।
पुष्ये तु पुंश्चली नारी माघे पुत्रसुतान्विता ।
फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ॥

प्रथमरजोदर्शने तिथिवारफलानि

*[१]दौर्भाग्यं च शुभं क्षेममारोग्यं रोगयुक्तता ।
सौभाग्यं परगात्वं श्रीः स्यात्पतिव्याधिकारिता ॥
वैधव्यं सुसुतप्राप्तिर्मृतवत्सात्वमेव च ।
स्वैरिणीत्वं पुत्रधनप्राप्तिश्चञ्चलबुद्धिता ।
मृत्युस्तिथिष्वमान्तेषु पूर्णिमायां तु संपदः ॥
सूर्येन्दुभौमबुधजीवसितार्किवारे
स्त्रीणामृतौ फलमिदं प्रथमप्रवृत्तौ ।
व्याध्यन्विता पतिहिता मरणं सुखाढ्या
पत्यर्थभाग्बहुसुता रहिता च भाग्यैः ॥

[२]भानुवारे भवेद्व्याधिः सोमवारे पतिव्रता ।
दुःखिता भौमवारे तु बुधे सौभाग्यसंयुता ॥
श्रीसंयुता गुरोर्वारे पतिभक्ता भृगोर्दिने ।
मन्दवारे निराशा स्यात् प्रथमर्तौ रजस्वला ॥

प्रथमरजोदर्शने नक्षत्रफलानि पूर्वाह्णादिफलानि च

[३]सुतार्थसंपद्बहुभोगयुक्ता
सौभाग्यशीला प्रियवादिनी च ।
स्यादश्विभे वेगवती यमर्क्षे
त्वन्यप्रसक्ता खलु दुर्भगा च ॥
मातङ्गिनीनां च बलिप्रवृत्ता
विहीनपुत्रा दहने पुरन्ध्री ।
परोपकर्त्री सुतसौख्ययुक्ता
धनान्विता स्यात् कमलासनर्क्षे ॥
सौभाग्यसौख्यातिसुशीलयुक्ता
धनान्विता पुष्पवती मृगर्क्षे ।
दुष्टा विवृत्ता पतिविप्रयुक्ता
व्ययोज्झिता शंकरतारकायाम् ॥
मायाविनी संप्रविकीर्णकामा
स्याद्बन्धकी पापरताऽदितौ च ।
साध्वी गुणाढ्या सुतवित्तयुक्ता
पतिप्रिया वाक्पतिभेऽङ्गना स्यात् ॥
वैधव्ययुग्वेगवती च कन्या
वियोगिनी स्यात्पवनाशनर्क्षे ।
सौभाग्यसौख्यातिसुशीलयुक्ता
रजोवियोगो बहुदुःखयोगः ॥
भर्तुर्वियोगस्त्वथवा मघायाम् ।
स्याद्दुर्भगा दुश्चरिताऽर्थहीना
प्रच्छन्नपापा भगदेवतायाम् ।
धनान्विता चार्थयुताऽर्यमर्क्षे
सुतान्विता स्यात्प्रियवादिनी च ॥
साध्वी गुणाढ्या सुतवित्तयुक्ता
सदात्मजा धर्मवती करे मे ।
भोगान्विता ख्यातिवती सुशीला
चित्रासु साध्वी गुणवित्तयुक्ता ॥
स्वातौ गुणाढ्या पतिवल्लभा स्या-
दिन्द्राग्निभे पुत्रवती गुणाढ्या ।
मैत्रेषु सौभाग्यवती सुपुत्रा-
ऽभीष्टार्थसंपत्तियुता च कन्या ॥
तेजस्विनी पुत्रवती च साध्वी
धनान्विता चार्थवती च शाक्रे ।
मूले सती भर्तृपरायणा स्या-
त्प्रभान्विता सौख्यवती च कन्या ॥
वियोगदुःखा विधवा दरिद्रा
स्याद्दुर्विनीता कुलटा जलर्क्षे ।
सौख्यान्विता पुत्रवती गुणाढ्या
कुलद्वयानन्दकरी च विश्वे ॥

---

*अत्र तिथयः षोडश, फलानि सप्तदशेति विरोधः । स च शुभक्षेमयोः यथाकथंचिद्विशेषणविशेष्यभावमाश्रित्य द्वैधफलत्वं वाऽऽश्रित्य समाधेयः ।

(१) गप. ४६८ ज्योतिःशास्त्रे.

(२) संको. १ ; संब. ५.

(३) गप. ४६८–४६९ ज्योतिःशास्त्रे.

धर्मार्थकामात्मजशीलयुक्ता
संपत्तिसौभाग्यवती हरेर्भे ।
भोगान्विता वित्तवती च कन्या
धनान्विता स्याद्वसुभे सुवेशा ॥

इष्टान्विता पुत्रवती धनाढ्या
सुखान्विता स्याच्छततारकायाम् ।
भीषा कुवृत्ता मलिनाऽप्रियंवदा
निःस्वाऽतिदुःखा खलु पूर्वभाद्रभे ॥

स्यादुत्तरायां धनधान्ययुक्ता
प्रतापिनी भोगवती सुपुत्रा ।
पौष्णे तु चारित्रवती च साध्वी
द्रव्यान्विता स्यात्पतिवल्लभा च ॥

[1]सहिता धनपुत्राभ्यामश्विन्यां चेद्रजस्वला ।
दोषयुक्ता भरण्यां तु कृत्तिकायां सुपुत्रिणी ॥

रोहिण्यां धनसंयुक्ता मृगे स्यात्सुतशालिनी ।
आर्द्रायां भर्तृनिरता निर्वैरा च भवेत्सती ॥

पतिव्रता पुनर्वसौ पुष्ये च व्यालभद्वये ।
पूर्वाद्वये च युवती मारिका च करद्वये ॥

स्वातीद्वये धनवती विधवा स्यात्परद्वये ।
मूलद्वये नित्ययुक्ता सुभगा स्यात् परद्वये ॥

धनिष्ठायां स्वैरिणी च सती शतभिषग्द्वये ।
अहिर्बुध्न्यद्वये नारी सुभगा भर्तृतत्परा ॥

पूर्वाह्णे चाशुभं स्यादशुभमपरतो मध्यमं
मध्यभागे
रात्रौ चैव द्विषट्के शुभमिति कथय-
न्त्युत्तराषाढभाद्रौ ।
सप्तस्वार्द्रादिषु स्यादशुभमिति वदन्त्येव
हस्तादिकेषु
मैत्रादौ भर्तृहीना प्रथमरजसि यच्चापि
तत्सर्वमुक्तम् ॥

(१) ज्योनि. १०६–१०७.

रोहिण्यार्द्राग्निमित्रामरपतिदिनकृत्सौम्य-
भाग्याहिर्बुध्न्य-
प्रौष्ठाद्याप्याश्रविष्ठार्यमनिर्ऋतिमघा-
वारुणेष्वङ्गनायाः ।
माङ्गल्यं सर्वसौख्यं भवति नवरजोदर्शने
त्वन्यथात्वं
मेष्वन्येष्वेव दीना पतिविरहवती सर्व-
सौभाग्यहीना ॥

[1]आद्यंशे दस्रमघामूलानां सर्पशक्रपौष्णानाम् ।
चरमे यदि पुष्पवती कुलटा वन्ध्या मृतप्रजा
भवति ॥

दस्रौ अश्विनी । सर्प आश्लेषाः । शक्रः ज्येष्ठा । पौष्णं रेवती । अत्र अस्मिन्नक्षत्रफलप्रकरणे केषुचिन्नक्षत्रेषु परस्परं फलविरोधोऽस्ति, स शुक्लकृष्णपक्षान्तर्गतत्वेन व्यवस्थापनीयः । शुभं फलं शुक्लपक्षान्तर्गतनक्षत्रविषयम् , निषिद्धं फलं कृष्णपक्षान्तर्गतनक्षत्रविषयम् ।

संर. ६५२

नक्षत्रगण्डेषु रजोदर्शने त्यागः त्यागकालमानं च

[2]त्रिपूर्वासु सप्त मासान् मघाग्न्योः पञ्च-
मासकम् ।
याम्येन्द्रयोर्दश शिवसर्पयोर्वत्सरं त्यजेत् ॥

इति गण्डपुष्पनिर्णयः । गप. ४७०

रजश्चक्रं तद्बोधितफलानि च

कृत्तिकादीनि ऋक्षाणि दिक्ष्वष्टसु लिखेद्बुधः ।
चत्वारि दिक्षु ऋक्षाणि काशेषु( ? कोणेषु )
त्रितयं लिखेत् ॥
कृत्तिकादीनि ऋक्षाणि दिक्षु कृत्वा च सं-
लिखेत् ।
विदिक्षु त्रीणि ऋक्षाणि अभिजिच्छ्रवणोत्तराः ॥
श्रीर्वन्ध्या सुभगा चैव विपुत्रा पुत्रिणी तथा ।
विधवा सर्वसंपन्ना वेश्या चेति क्रमात् फलम् ।
नक्षत्राणां तु गणना स्यादतः कृत्तिकादितः ॥

(१) संर. ६५२. (२) गप. ४७० ज्योतिःशास्त्रे.

प्रथमरजोदर्शने करणफलानि

[1]बवे पुष्पवती नारी वन्ध्या वा विधवा भवेत् ।
बालवे पुत्रिणी नारी कौलवे प्रमदा भवेत् ॥
[2]तैतिले संमतवती गरे नारी विनश्यति ।
नष्टप्रजा वणिक्संज्ञे विष्ट्यां वन्ध्या
धनोज्झिता ॥
[3]शकुनौ च चतुष्पादे नारी वैधव्यमाप्नुयात् ।
नागे न रमते नारी किंस्तुघ्ने विधवा भवेत् ॥

प्रथमरजोदर्शने लग्नफलानि

[4]अजे दरिद्रा गवि गोधनाढ्या
धनान्विता सौख्यवती नृयुग्मे ।
कुलद्वयानन्दकरी चतुर्थे
सकृत्प्रसूतिः किल सिंहलग्ने ॥
कन्याप्रसूः कन्यगते विलग्ने
धनान्विता लग्नगते तुलाभे ।
अलौ विलग्ने कुलटाऽतिपापा
चापाख्यलग्ने व्यभिचारिणी स्यात् ॥
मृगे प्रिया स्याज्जनहर्षिणी च
कुलद्वयानन्दकरी घटाख्ये ।
मत्स्ये विलग्ने व्यभिचारिणी च
लग्ने फलं त्वाद्यरजःप्रवृत्तौ ॥

प्रथमरजोदर्शने दुष्टतिथ्यादिफलानि

कुतिथिकुलिकवेलापापवर्गोदयानां
दुरितखचरदृष्टे वैधृतौ पात-
विष्ट्योः ।
मदननिधनराशौ पापदृष्टेऽथ युक्ते-
ष्व( ? त्व )शुभमिलितपुष्पं विद्धि
मृत्युं वरस्य ॥

पातः व्यतीपातः । गप. ४७१

प्रत्यरौ जन्मनक्षत्रे विपत्तारे मिरंशके ।
आदौ रजसि नारीणां भर्तृरोगो धनक्षयः ॥
अष्टमस्थे निशानाथे भर्तुर्निधनतारके ।
यदि स्यात् प्रथमं पुष्पं तस्य मृत्युं विनि-
र्दिशेत् ॥

प्रथमरजोदर्शने अशुभतिथ्यादियोगापवादः, लग्नदोषे शान्तेः कर्तव्यता शुभलग्नरजोदर्शनपर्यन्तं गमननिषेधश्च

[1]गुरुशुक्रयुते लग्ने प्रेक्षिते चात्र पुष्पजे ।
निन्द्यं फलं समस्तं तु नाशमेति शुभं भवेत् ॥
[2]पुष्पं दृष्टं निन्दिते भे यदि स्या-
च्छान्तिं कुर्यादङ्गनानां च पूर्वम् ।
तत्संयोगं वल्लभा वर्जयेयु-
र्यावद्भूयः शस्तभे चैव दृष्टम् ॥
[3]शेषं विवाहवत्सर्वं पुष्पे लग्नादि चिन्तयेत् ॥

प्रथमरजोदर्शने दुष्टकालाः, तेषां फलानि, योगानामशुभघटिकाः

[4]अमायां संक्रमे विष्ट्यां व्यतीपाते च वैधृतौ ।
परिघस्य तु पूर्वार्धे षट् च गण्डातिगण्डयोः ।
व्याघाते नव शूले तु नाड्यः पञ्चर्तुदर्शने ॥

वर्जनीया इति शेषः । संर. ६५४

---

(१) ज्योनि. १०७ ; संर. ६५३.

(२) ज्योनि. १०७ ; संर. ६५३ वन्ध्या धनोज्झिता ( धनविवर्जिता ).

(३) ज्योनि. १०७ ; संर. ६५३ शकुनौ (शकुने).

(४) गप. ४७०–४७१.

(१) ज्योनि. १०८.

(२) गप. ४७२ शस्तभे चैव दृष्टम् ( दृश्यते शस्तभे तत् ) ; ज्योनि. १०८.

(३) ज्योनि. १०८.

(४) प्रपा. १०० षट् च ( षट्सु ) ; संसौ. १४ यां संक्रमे विष्ट्यां ( संक्रान्तिविष्ट्यां च ) शूले तु ( शूले च ) ; संप्र. १४५ यां संक्रमे विष्ट्यां (संक्रान्तिविष्ट्यां च) ; संम. ९ घस्य तु (घस्य च) शेषं संप्रवत् ; ग्राम. ५५ षट् च ( षट् षट् ) पञ्चर्तुदर्शने ( पञ्च चतुर्दश ) शेषं संप्रवत् ; बिपा. ४६ यां संक्रमे विष्ट्यां ( संक्रान्तिविष्ट्यादौ ) पञ्चर्तुदर्शने ( पञ्च चतुर्दश ) ; संग. ३५९ षट् च ( षट् षट् ) प्रथमार्धं नास्ति, ग्रन्थस्त्रुटितः ; संर. ६५२ यां संक्रमे विष्ट्यां ( संक्रान्तिविष्ट्यादौ ) शूले तु ( शूले च ).

[1]वैधव्यमर्थहानिं च सुतनाशं महद्भयम् ।
वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षीणजीवनम् ।
तेजोहानिं दुर्भगत्वमेषु पुष्पवती क्रमात् ॥

एतेषां ( अमादीनां ) फलानि तत्रैव– 'वैधव्यमर्थ.... क्रमात् ॥' इति । संर. ६५४

प्रथमरजोदर्शने प्रातराद्यहोरात्रभागफलानि

[2]पुष्पवत्याः शुभं प्रातः पूर्वाह्णे प्रीतिवर्धनम् ।
मध्याह्ने सुखसौभाग्यं पराह्णे पुंश्चारिणी ॥

सायाह्ने बहुभर्ता स्यात्संध्यायां गणिका सदा ।
पूर्वरात्रे भवेद्वन्ध्या विधवा मध्यरात्रके ।
निशान्ते सुखसौभाग्ये रात्रावेवं फलं लभेत् ॥

[3]पुत्रवती शुभं प्राता पूर्वाह्णे तु रजस्वला ।
मध्याह्ने तु शुभप्राप्तिः स्वैरिणी चापराह्णके ॥
संध्ययोरुभयोर्वेश्या निशायां विधवा तथा ।
पूर्वरात्रौ च वन्ध्या स्याद्दुर्भगा सर्वसंधिषु ॥

प्रथमरजोदर्शने वस्त्रफलानि

[4]शुभं स्याच्छ्वेतवस्त्रेण रोगिणी च कुवाससा ।
नीलाम्बरधरा नारी विधवा पुष्पयोगतः ॥

मलाम्बरधरा नारी दरिद्रा स्याद्रजस्वला ।
भोगिनी पीतवस्त्रा स्याच्चित्रवस्त्रा पतिप्रिया ॥
अशुभा जीर्णवस्त्रा स्याच्छुक्ल(?)वस्त्रा पति-व्रता ।
क्षौमवस्त्रा राजपत्नी नववस्त्रा सुखप्रदा ॥

प्रथमरजोदर्शने प्रष्टृविशेषप्रयुक्तः फलविशेषः

[5]माता पृच्छति चेदर्थं पिता पृच्छति चेत्सुखम् ॥

(१) प्रपा. १०० दुर्भगत्वमेषु ( समायाति सदा ) ; संलौ. १४ प्रथमार्धमात्रम् ; संप्र. १४५–१४६ प्रपावत् ; संम. ९ प्रपावत् ; ज्ञाम. ५५ क्षीण ( क्षण ) शेषं प्रपावत् ; विपा. ४६ दुर्भगत्वमेषु ( समायाति एषु ) ; संग. ३५९ प्रपावत् , द्वितीयार्धं नास्ति ; संर. ६५२.

(२) गप. ४७१. (३) ज्योनि. १०७.

(४) गप. ४७२.

(५) संर. ६५५.

श्यालो दारिद्र्यमाप्नोति स्वसा चेदायुषः सुखम् ॥
पितृष्वसा धनं याति सोदरा विपुलं धनम् ।
प्रष्टा भ्राताऽऽयुषः क्षैण्यमित्येवं लभतेऽङ्गना ॥

श्यालः पृच्छति चेत्तदा रजोवती दारिद्र्यमाप्नोतीत्यर्थः । पितृष्वसा पितृभगिनी पृच्छति चेत्तदा धनं याति धनं प्राप्नोतीत्यर्थः । संर. ६५५

रजोवर्णफलानि, रजःपरिमाणफलानि

[1]प्रथमर्तौ फलं स्त्रीणामुच्यते रजसोऽधुना ।
सुभगा पुत्रसंयुक्ता शुक्लवर्णे सदाऽऽर्तवे ॥

[2]शशशोणितसंकाशे यद्वाऽलक्तकसंनिभे ।
पुत्रकन्याप्रसूतिः स्यान्नीले तु स्यान्मृतप्रजा ॥

[3]कर्बुरे म्रियते सा च पिङ्गले च मृतप्रजा ।
कृष्णे तु विधवा नारी रजस्येवं विनिर्दिशेत् ॥

[4]शोणिते बिन्दुमात्रे तु स्वैरिणी चाल्पशोणिता ।
वरा मध्यस्रवा स्यात्तु दुर्भगा बहुशोणिता ॥

[5]रक्ते रक्ते भवेत्पुत्रः कृष्णे च मृतपुत्रिका ।
पिच्छिलाभे भवेद्वन्ध्या काकवन्ध्या च पाण्डुरे ॥

[6]पीते च स्वैरिणी प्रोक्ता गुञ्जाभे सुभगा भवेत् ।
सिन्दूराभे भवेत्कन्या रजःशोणितलक्षणम् ॥

(१) ज्योनि. १०७ सोऽधुना ( स्यात्तु तत् ) ; संर. ६५५ सदा ( तथा ).

(२) ज्योनि. १०७ यद्वाऽल (यद्वा र) ; संग. ३६०–३६१ शशशो ( सा च शो ) ; संर. ६५५.

(३) ज्योनि. १०७ ; संग. ३६१ ; संर. ६५५ कर्बु ( कर्पू ) सा च ( सद्यः ).

(४) ज्योनि. १०७ मध्य ( मधु ) ; संग. ३६१ तु ( च ) पू. ; संर. ६५५ चाल्पशोणिता ( स्वल्पशोणिते).

(५) ज्योनि. १०७–१०८ रक्ते भ ( रक्तो भ ) मृत ( बहु ) लाभे ( ले च ) ; संर. ६५५.

(६) ज्योनि. १०८ सिन्दू ( सिन्दु ) ; संर. ६५५ द्वितीयपादे ( सुभगा गुञ्जवर्णके ).

रजोबिन्दुफलानि

[1]प्राप्नोति बिन्दुनैकेन सौभाग्यं तु रजोवती ।
द्विबिन्दुना भवेद्भोगो भवेद्रोगस्त्रिबिन्दुभिः ।
दारिद्र्यमधिकेषु स्याद्रजस्येतत्तु लक्षणम् ॥

प्रथमरजोदर्शने मङ्गलकृत्यम्

[2]अलंकृतामार्तवसंयुतां च
गेहे शुभे दीपयुते निवेशयेत् ।
तिलान् गुडापूपयुतं च पूगं
स्त्रीमिश्च दद्याद्द्विजमत्र पूजयेत् ॥
आरोपयेदिमां तत्र पादुके शोभने ततः ।
पुण्याहं वाचयित्वा तु ब्राह्मणान् पूजयेत्सुधीः ॥
त्रिरात्रं तु सकृद्भुक्त्वा स्मृतिप्रोक्तैर्व्रतैर्युता ।
चतुर्थे संगवेऽतीते स्नात्वा स्त्री धर्ममाचरेत् ॥

## वराहसंहितायाम्

प्रथमद्वितीययो रजोदर्शनयोः शुभाशुभनिरीक्षणस्य कर्तव्यता

[3]प्रथमर्तौ द्वितीये वा शुभाशुभनिरीक्षणम् ।
कर्तव्यं ज्ञातिभिः सम्यग्धर्मशास्त्रविधानतः ॥

प्रथमरजोदर्शने मासफलानि

[4]चैत्रे मासि विशेषेण वैधव्यं लभते ध्रुवम् ।
वैशाखे बहुपुत्राढ्या ज्येष्ठे रोगावृता भवेत् ॥
[5]आषाढे ह्यप्रजा प्रोक्ता श्रावणे धनिनी भवेत् ।
भाद्रे तु दुर्भगा क्लीबा ह्याश्विने च यशस्विनी ॥
[6]कार्तिके निर्धना बाला मार्गशीर्षे बहुप्रजा ।
पौषे स्यात् पुंश्चली नारी माघे पुत्रसुखान्विता ।
फाल्गुने सर्वसंपन्ना प्रथमर्तौ फलं स्मृतम् ॥

(१) संर. ६५६. (२) ज्योनि. १०८.

(३) विपा. ४२; संग. ३६१ (=) निरीक्ष (निरूप) पू.

(४) विपा. ४३; संर. ६४९ (आद्यर्तौ विधवा नारी चैत्रमासे भवेद् ध्रुवम् । वैशाखे बहुपुत्रा स्याज्ज्येष्ठे रोगातुरा भवेत् ॥ ).

(५) विपा. ४३; संर. ६५० ह्यप्रजा प्रोक्ता श्रा (त्वनपत्या स्याच्छ्रा) यश (तप).

(६) विपा. ४३; संर. ६५० निर्धना (विधवा) सर्व (सुख).

प्रथमरजोदर्शने तिथिफलानि

[1]वैधव्यदा हि प्रतिपद्द्वितीया पुत्रवर्धिनी ।
सौभाग्यदा तृतीया च चतुर्थी सुखनाशिनी ॥
[2]पञ्चमी सुखदा चैव षष्ठी संततिनाशिनी ।
सप्तमी धननाशाय पुत्रसौभाग्यदाऽष्टमी ॥
[3]नवमी क्लेशदा स्त्रीणां दशमी च सुखप्रदा ।
एकादश्यर्थनाशाय द्वादशी रतिवर्धिनी ॥
[4]त्रयोदशी तु शुभदा दुर्भगा च चतुर्दशी ।
पौर्णमासी त्वमावास्या दुःखरोगविवर्धिनी ॥

ज्योतिर्ग्रन्थान्तरे तु — 'आद्यर्तौ सुभगा नारी प्रतिपत्सु रजस्वला ।' इति, तथा 'सप्तमी धनवर्धिनी' इति, तथा 'अष्टम्यां राक्षसी नारी' इति, तथा 'एकादश्यां सुखान्विता । द्वादश्यां दुर्भगा नारी' इति, तथा 'पौर्णमास्यां सुपुत्रिणी' इति प्रतिपदादि(द्वादश्यन्त ?)तिथिषु विपरीतफलमुक्तम् । अत्र प्रतिपत् पूर्णिमासमीपस्थैव ग्राह्या । 'वैधव्यदा हि प्रतिपत्' इत्यत्र तु अमासमीपस्था प्रतिपत् ग्राह्या, तस्याश्चन्द्रक्षया-विशेषेणामातुल्यत्वात् । सप्तमीनिषेधे कृष्णा ग्राह्या । एवमष्टम्येकादशीद्वादशीष्वपि ज्ञेयम् । पौर्णमासीनिषेधस्तु पौर्णमासीपूर्वार्धपरः, तस्य भद्रारूपत्वात्, विधिस्त्वितरांशे इति ज्ञेयम् । संर. ६५०

प्रथमरजोदर्शने वारफलानि

[5]आदित्ये विधवा नारी सोमे दैन्यमवाप्नुयात् ।
मङ्गले चाऽऽत्मघाताय बुधे च धनिनी भवेत् ॥

(१) विपा. ४२ दा हि प्रतिपद् (दं प्रतिपदि); संर. ६५०.

(२) विपा. ४२ सुखदा (सुभगा) संतति (संपत्ति) सौभाग्य (दा सौख्य); संर. ६५०.

(३) विपा. ४२; संर. ६५०.

(४) विपा. ४३ तु शुभदा (शुभा ज्ञेया); संर. ६५०.

(५) विपा. ४३; संर. ६५१ (आदित्ये विधवा नारी सोमे चैव मृतप्रजा । आत्मनो घातिनी भौमे बुधे कन्याप्रसूर्भवेत् ॥ ).

[1]गुरौ च भर्तृसुखदा कन्यापुत्रप्रसूर्भृगौ ।
पौंश्चल्यकारणं मन्दे म्रियते भर्तुरग्रतः ॥

सा रजोवती । नारदीये तु– ' रुग्णा पतिव्रता दुःखी पुत्रिणी भोगभागिनी । पतिप्रिया क्लेशभागी सूर्यवारादिषु क्रमात् ॥ ' इत्युक्तम् । मृतप्रजेति कृष्णपक्षसोमवारविषयम् , पतिव्रतेति शुक्लसोमवारविषयम् , नातो विरोधः । संर. ६५१

प्रथमरजोदर्शने नक्षत्रफलानि

[2]अश्विनी सुखदा स्त्रीणां भरणी कामवर्धिनी ।
कृत्तिका वैन्यदा ज्ञेया रोहिणी सुखदा भवेत् ॥
[3]मृगस्तु कामभोगाय सुखदं रुद्रदैवतम् ।
अदित्यृक्षं सुखं दद्याद्गुरुभं सुखवर्धनम् ॥
[4]आश्लेषाः सुखनाशाय मघा वैधव्यदाः स्मृताः ।
पूर्वा फल्गुनिका पुत्रकन्यासुखविवर्धिनी ॥
[5]उत्तरा ह्यर्थनाशाय हस्तः पुत्रप्रवर्धनः ।
चित्रा चित्रतनुं नारीं कुरुते नात्र संशयः ॥
[6]स्वाती शुभाय नारीणां विशाखा सुखनाशिनी ।
अनुराधाऽर्थभोगाय ज्येष्ठा भर्तृवियोगदा ॥
[7]शुभं वाऽप्यशुभं मूलं पूर्वाषाढाऽर्थनाशिनी ।
सुखदा चोत्तराषाढा श्रवणः सुखवर्धनः ।
धनिष्ठापञ्चकं स्त्रीणां प्रथमर्तौ सुखप्रदम् ॥

(१) विपा. ४३ ; संर. ६५१ (गुरौ पुत्रवती नारी कन्यापुत्रप्रसूर्भृगौ । पौंश्चल्यकारिणी मन्दे मर्तुरग्रे म्रियेत सा ॥).

(२) विपा. ४४ ; संर. ६५१.

(३) विपा. ४४ अदित्यृक्षं (आदित्यर्क्षं) ; संर. ६५१.

(४) विपा. ४४ आश्लेषाः (अश्लेषा) प्रथमपादमात्रम् ; संर. ६५१.

(५) विपा. ४४ प्रव (विव) प्रथमपादो नास्ति ; संर. ६५१.

(६) विपा. ४५ ; संर. ६५१ अनु (अनू).

(७) विपा. ४५ शुभं वाऽप्य (शुभदा चा) ; संर. ६५१.

प्रथमरजोदर्शने लग्नफलानि

[1]आत्मघ्नी भ्रूणहा मेषे वृषे पुत्रवती भवेत् ।
द्वन्द्वे कन्याप्रसूर्नारी मृतापत्या च कर्कटे ॥
[2]सिंहे वैधव्यमाप्नोति कन्यायां स्त्रीप्रसूर्भवेत् ।
तुलायां बहुपुत्राढ्या दुष्टकर्मरताऽलिनि ॥
[3]चापे पुत्रधनाढ्या स्यान्मृगे दुश्चारिणी भवेत् ।
सकृत्प्रजावती कुम्भे मीने चाल्पप्रजा भवेत् ॥

अलिः वृश्चिकः । अलिनीति आर्षप्रयोगः । अत्रापि शुक्लकृष्णपक्षान्तर्गतत्वेन पूर्ववद्व्यवस्था ज्ञेया । संर. ६५३

प्रथमरजोदर्शने प्रातराद्यहोरात्रभागफलानि

[4]प्रातःकाले रजः स्त्रीणां प्रथमं शोकवर्धनम् ।
संगवे सुखसंतत्यै मध्याह्ने धनसंतती ॥
[5]अपराह्णे धनावाप्तिः सायाह्ने मध्यमं फलम् ।
पूर्वरात्रे सुखायालं मध्यरात्रे धनक्षयः ॥
[6]पररात्रेऽर्थनाशश्च प्रथमर्तौ फलं स्मृतम् ।
महद्भयं संध्ययोः स्यादर्थहानिस्तथैव च ॥

प्रथमरजोदर्शने वस्त्रफलानि रजोवर्णफलानि च

[7]सुभगा श्वेतवस्त्रा च रोगिणी रक्तवाससा ।
नीलाम्बरधरा नारी विधवा प्रथमार्तवे ॥
[8]भोगिनी पीतवस्त्रा च दृढवस्त्रा पतिव्रता ।
दुर्भगा शीर्णवस्त्रा च सुभगा क्षौमवस्त्रिणी ॥

(१) ज्योनि. १०७ कर्कटे (कर्किणि) ; संर. ६५३.

(२) ज्योनि. १०७ माप्नोति (मायाति) ; संर. ६५३.

(३) ज्योनि. १०७ न्मृगे दुश्चारिणी (न्मकरे सुखिनी) ; संर. ६५३.

(४) विपा. ४३ संतत्यै म (संपत्तिर्म) तती (ततिः) ; संर. ६५४ नारसिंहीये.

(५) विपा. ४४ ; संर. ६५४ नारसिंहीये.

(६) विपा. ४४ (अपरात्रेऽर्थनाशाय प्रथमर्तुफलं स्मृतम् । ) पू. ; संर. ६५४ नारसिंहीये.

(७) विपा. ४२ सुभगा (शुभाय) वस्त्रा च (वस्त्राढ्या) प्रथमार्तवे (जायते ध्रुवम्) ; ज्योनि. १०७ (=).

(८) विपा. ४२ ; ज्योनि. १०७ (=) क्षौम (चारु) ; संर. ६५५ (=) भोगिनी पीतवस्त्रा च दृढ

§[1]आलोहिते भवेद्वेश्या श्वेतवर्णे च पुत्रिणी ।
कृष्णे च विधवा नारी रजस्येतत्तु लक्षणम् ॥

प्रथमरजोदर्शने स्थानफलानि

[2]गृहमध्ये सुखावाप्तिर्गृहद्वारे वियोगता ।
शय्योत्था सुखदा भूमावनेकापत्यसंततिः ॥
[3]पितुर्गेहे रजो दैन्यं विदधाति पितुः कुले ।
देवस्थाने पितृस्थाने निन्द्यस्थानेऽन्यवेश्मनि ।
मार्गे भर्तृवियोगं च बन्धागारे मृतप्रजा ॥

देवस्थानं देवालयः । पितृस्थानं श्मशानम् । निन्द्यस्थानं कुत्सितस्थानम् । अन्यवेश्म भर्तृगृहादन्यद्गृहम् । संर. ६५६

---

§ यद्यपि श्लोकस्यास्य वस्त्रवर्णफलपरत्वमिति संरग्रन्थाभिप्रायः स्पष्टं प्रतीयते, तथापि विपापाठे श्वेतवर्णफलविषये संरपाठे लोहितवर्णफलविषये च पूर्वश्लोकद्वयापेक्षया वर्णांशे पौनरुक्त्यात् फलांशे विरोधाच्च, पूर्वश्लोकयोः सर्वत्र प्रयुक्तस्य वस्त्रशब्दस्यात्राप्रयोगाच्च, ज्योनिग्रन्थे पूर्वश्लोकानुद्धृत्याप्यस्यानुद्धृतत्वाच्च रजोवर्णफलपरत्वमेवास्येति प्रतीमः । विपाग्रन्थे वस्त्रफलमुपक्रम्यास्योद्धृतत्वेऽपि अत उत्तरं विवाहरजोदर्शनान्तरालकालफलविषयकश्लोकस्याप्युद्धृतत्वात्तदभिप्रायो न निर्णीयते ।

( सुभगा श्वेतवस्त्रा स्यान्नव ) शीर्णवस्त्रा च ( जीर्णवस्त्रा स्यात् )•

(१) विपा. ४२ ; संर. ६५५ (=) पूर्वार्धे (लोहिते तु भवेद्वन्ध्या चित्रवर्णे तु पुत्रिणी । ) कृष्णे च (कृष्णे तु).

(२) विपा. ४४ योगता ( योगिनी ) शय्योत्था ( शय्यायां ) ; संर. ६५६ भूमावनेका ( भूयाद्धनं चा ) ज्योतिर्निबन्धे.

(३) विपा. ४४ पितृ ( पितुः ) निन्द्य (धन) गं च बन्धागारे ( गे च चण्डालाद्ये ) ; ज्योनि. १०७ (=) तृतीयार्धे ( पुष्पवत्याः फलं न स्यान्मार्गे चाण्डालवेश्मनि ॥ ) प्रथमार्धं नास्ति ; संर. ६५६ गेहे ( गृहे ) ज्योतिर्निबन्धे.

प्रथमरजोदर्शने द्रष्टृफलानि

[1]पुरन्ध्र्या दृश्यते यत्तु रजः स्त्रीणां सुखाय तत् ।
विश्रस्तया तु यद्दृष्टं रजो वैधव्यदं स्मृतम् ॥

( १ ) विश्रस्ता विधवा । विपा. ४४
( २ ) पुरन्ध्री सौभाग्यवती स्त्री । संर. ६५५

[2]रजः पश्यति चेत् कन्या पुमान् वा तत्सुखं भवेत् ।
स्वयं दृष्टं तथा स्त्रीणामात्मघाताय कल्पते ॥

विवाहरजोदर्शनयोरशुभमन्तरम्

[3]ऊढा(? ऊढ्वा) संवत्सरार्धेन मासे पक्षे तथा खलु ।
रजस्तु दृश्यते स्त्रीणां सर्वदैवाशुभावहम् ॥

## स्मृतिचन्द्रिकायाम्

प्रथमरजोदर्शने पक्षफलानि

[4]शुक्लपक्षे सुशीला स्यात् कृष्णे सा कुलटा भवेत् ।
कृष्णस्य दशमीं यावन्मध्यमं फलमादिशेत् ॥
[5]एकादश्यादिषु फलमधमं परिकीर्तितम् ॥

## नृसिंहः

प्रथमरजोदर्शने सप्तमस्थग्रहफलानि, ग्रहाणां वारवर्गोदयेक्षणफलानि, स्थाननक्षत्रराशिफलानि

[6]लग्नस्य सप्तमस्थाने सूर्यो वैधव्यकारकः ।
चन्द्रः सत्पुत्रदो ज्ञेयः सौभाग्यं च लभेद् ध्रुवम् ॥

---

(१) विपा. ४४ विश्र ( विश्व ) ; संग. ३६१ ( = ) पूर्वार्धे ( पुरन्ध्रयो यत्तु पश्यन्ति रजः स्त्रीणां सुखावहम् । ) विश्र (विश्व) ; संर. ६५४ ( = ).

(२) विपा. ४४ ; संग. ३६१ ( = ) ; संर. ६५५ ( = ). ( ३ ) विपा. ४२.

(४) संसौ. १२ ; संप्र. १४४ ज्योतिश्चन्द्रिकायाम् ; संम. ९ कुलटा ( कुटिला ) शमीं ( शमी ) ; शाम. ५४ ; संग. ३५८ ज्योतिश्चन्द्रिकायाम् ; संर. ६५० शमीं ( शमी ). (५) संर. ६५०.

(६) प्रपा. १०० पू. ; विपा. ४६ मस्थाने ( मे स्थाने ) कारकः ( कारणम् ) पू. ; संकौ. २ पू. ; कुम. ८०४ सप्त ( प्रथ ) पू. ; संर. ६५४.

[1]पुत्रहानिकरस्त्वारो बुधः सत्पुत्रदो भवेत् ।
बृहस्पतिर्धनायुष्ये शुक्रः सापत्न्यमेव च ।
शनैश्चरे तु वन्ध्या स्याद्राहौ तु मरणं ध्रुवम् ॥

आरः मङ्गल इत्यर्थः । विपा. ४६

[2]आदित्यभौममन्दानां वारवर्गोदयेक्षणैः ।
मरणं गर्भनाशश्च कुलटात्वं यथाक्रमम् ॥

सौम्यभार्गवजीवानां वारवर्गोदयेक्षणैः ।
सत्पुत्रसुखमारोग्यं दीर्घमायुः क्रमाद्भवेत् ॥

[3]चन्द्रे सद्गुणसंयुक्ते देवरातमताच्छुभम् ॥

[4]शुष्काक्षततुषैः शूर्पमार्जन्याद्यशुभैर्युते ।
देशे शुभं( ? ऽशुभं ) रजो दृष्टं यथा स्यात्प्रथमार्तवे ॥

[5]शुक्लौ तल्पे च याने च तपनीये च धार्मिके ।
शुभोपकरणैर्युक्ते शुभदेशे शुभैर्युते ।
शुभं स्यादनुकूलर्क्षे राशौ सत्कर्मसंयुते ॥

प्रथमरजोदर्शने व्याघातशूलयोर्दुष्टा घटिकाः

[6]व्याघाते नव शूले तु नाड्यः पञ्च चतुर्दश ॥

अत्र संख्ययोर्विकल्पः । $ संकौ. २

$ संव. संकौवत् ।

(१) प्रपा. १०० युष्ये ( युष्यं ) ; विपा. ४६–४७ युष्ये ( युष्यं) मेव च ( कारकः) तु वन्ध्या (च वन्ध्या); संकौ. २ युष्ये ( युष्यं ) पत्न्य ( फल्य ) ; कुम. ८०४ पत्न्य ( फल्य ) ; संर. ६५४ करस्त्वारो ( करो भौमो ) युष्ये ( युष्यं ) मेव च ( कारकः ).

(२) प्रपा. १००.

(३) प्रपा. १०० ; शाम. ५५ (=) ; संकौ. २ युक्ते ( युक्ता ) ; कुम. ८०४.

(४) प्रपा. १०१ ; संर. ६५६ (=) ( शुष्ककाष्ठतुषैः शूर्पमार्जन्याद्यशुभैर्युतम् । देशे शुभे यथा दृष्टे तथा स्यात् प्रथमार्तवे ॥ ).

(५) प्रपा. १०१ ; संर. ६५४ (=) शुभदेशे शुभे ( शुभैर्लग्नग्रहे ) सत्कर्मसंयुते ( स्यात् खगसंयुता ).

(६) संकौ. २ ; संव. ६.

## रत्नमालायाम्

प्रथमरजोदर्शने नक्षत्रफलानि लग्नफलानि च

[1]करादिपञ्चोत्तरमूलपूष-
विष्णुत्रयाश्वीज्यविधीन्दुभेषु ।
आद्यं रजः सौख्यसुतायुरर्थ-
सौभाग्यवृद्धिं कुरुतेऽङ्गनानाम् ॥

[2]पूर्वात्रये याम्यभुजङ्गधिष्ण्ये
वैधव्यमस्या विदधीत नूनम् ।
मघेशयोः शोकमथादितेर्भे
वन्ध्या तथैन्द्रेऽप्यनले दरिद्रा ॥

करादिपञ्चकं हस्तचित्रास्वातीविशाखानूराधानक्षत्राणि । उत्तरशब्देनोत्तरात्रयम् । ईशः आर्द्रा । ऐन्द्रं ज्येष्ठा । अनलः कृत्तिका । संर. ६५२

†[3]आरिणी सुचरिता जनाश्रया
सत्सुता कलहकृद्बहुप्रजा ।
सज्जना व्रतरता च निर्गुणा
निःफलाऽनृतवती विकारिणी ॥

## महेश्वरः

प्रथमरजोदर्शने रजश्चक्रवशात् नक्षत्रफलानि

[4]अन्तर्धिष्ण्यचतुष्कमग्निपतिभादादित्यमाद्भत्रयं
स्याद्वाह्यं बहिरङ्केषु( ? रङ्गकेषु )
कुलटा दासी च नष्टप्रजा ।
नष्टा स्यात् प्रथमार्तवे सति वधूः
शेषेष्वनेकप्रजा
श्रीयुक्ता सगुणा क्रमात् सुखवती
लग्नं विवाहोक्तवत् ॥

† संसौप्रामाण्यादिदं वचनं लग्नफलविषयकम् ।

(१) संसौ. ११ पूष (पूषा) श्रीपतिः ; संर. ६५१ सुतायुरर्थसौ ( सुतायुरर्थं सौ ).

(२) संसौ. ११ मस्या विदधीत (मस्माद्भवतीह) वन्ध्या तथै (सा वन्ध्यकी) श्रीपतिः ; संर. ६५१ दरिद्रा (दरिद्रिणी).

(३) संसौ. १५ श्रीपतिः . (४) संसौ. २९.

अस्यार्थः— एकं चतुःकोणं चक्रं लिखित्वा बहिरपि च चतुःकोणं लिखित्वा कृत्तिकादिनक्षत्रचतुष्टयमन्तर्गतचतुःकोणे प्राच्यां लिखेत्। ततः पुनर्वसुतस्त्रयं बहिश्चतुरस्रे प्राच्यामेव लिखेत्। पुनरपि मघादिचतुष्कं दक्षिणदिशि मध्यचतुरस्रे, बहिरपि चित्रादित्रयम्। इत्थं साभिजिदष्टाविंशतिनक्षत्राणि विन्यसेत्। एवं च मध्यमचतुरस्रे दिक्चतुष्टये षोडश नक्षत्राणि, बहिरपि द्वादशेति (विचार्यम् ?)। तत्र बाह्यनक्षत्राणां क्रमेण फलानि कुलटादीनि चत्वारि, अन्तर्गतानां च अनेकप्रजेत्यादीनि वेदितव्यानि। संसौ. २६.

## मुहूर्तचिन्तामणिः

प्रथमरजोदर्शने शुभाशुभा मासादिकालाः वस्त्रविशेषाश्च

**[1]आद्यं रजः शुभं माघमार्गराधेषफाल्गुने।**
**ज्येष्ठश्रावणयोः शुक्ले सद्वारे सत्तनौ दिवा॥**

शुभफलसूचकं प्रथमरजोदर्शनमनुष्टुभाऽऽह— आद्यमिति। राधः वैशाखः। इषः आश्विनः। शेषं स्पष्टम्। आद्यं प्रथमोद्भवं रजः स्त्रीधर्मः माघमार्गशीर्षवैशाखाश्विनफाल्गुनमासेषु तथा ज्येष्ठश्रावणमासयोश्चेत् तदा शुभं भविष्यच्छुभसूचकम्। अर्थाच्चैत्राषाढभाद्रपदकार्तिकपौषमासा अशुभाः। तथा शुक्ले शुक्लपक्षे सत् (?शुभम्)। अर्थात् कृष्णपक्षे रजोदर्शनं दुष्टम्। तदुक्तं स्मृतिचन्द्रिकायाम्— 'शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत्। कृष्णस्य दशमी यावन्मध्यमं फलमादिशेत्॥' अतः कृष्णपक्षदशम्युत्तरं कुलटात्वं स्यादित्यर्थः। सद्वारे सतां चन्द्रबुधगुरुशुक्राणां वारे आद्यं रजः शुभम्, अर्थादन्यवारेषु दुष्टफलम्। सत्तनौ समीचीनलग्ने शुभस्वामिकराशावित्यर्थं इति केचित्। तत्र शुभफलमाद्यं रजः। केचित्तु— सत्तनौ सद्भिर्दृष्टे तनौ युते वा इति व्याख्यां कुर्वते। दिवा दिवसे आद्यं रजः शुभम्। $ पीटी.

**[2]श्रुतित्रयमृदुक्षिप्रध्रुवस्वातौ सिताम्बरे।**
**मध्यं च मूलादितिभे पित्र्यमिश्रे परेष्वसत्॥**

अथ प्रथमरजोदर्शने शुभनक्षत्राण्यनुष्टुभाऽऽह —श्रुतित्रयेति। श्रुतित्रयं श्रवणधनिष्ठाशतभिषाः मृदुक्षिप्रध्रुवाणि चित्रानुराधामृगरेवत्यश्विनीपुष्यहस्तरोहिण्युत्तरात्रय- (?त्रयाणि,)स्वाती च, एतेषु भेषु आद्यं रजः शुभमिति पूर्वेण संबन्धः। अत्र समाहारद्वन्द्वः, आगमशासनस्यानित्यत्वान्नुमभावः। मूलेति मूलपुनर्वसुमघाविशाखाकृत्तिकासु मध्यं मध्यमफलम्। परेषु भरणीज्येष्ठार्द्राश्लेषापूर्वात्रयेषु असत् अनिष्टफलम्। अत्र यद्यपि लिखितयोः (गर्गश्रीपत्योः) द्वयोरपि संमतिवाक्ययोरैकार्थ्यम्, तथापि ग्रन्थकृता विशाखामूलयोर्मध्यत्वाभिधानं §वसिष्ठवाक्यस्यानुरोधात् कृतम्। सिताम्बरे श्वेतवस्त्रे आद्यं रजः शुभमिति पूर्वेण संबन्धः। उपलक्षणं चैतत्क्षौमनूतनवस्त्रयोः। अर्थादन्येषु दुष्टेषु वस्त्रेषु रजोदर्शनं निन्द्यमित्यर्थः। * पीटी.

**भद्रानिद्रासंक्रमे दर्शरिक्ता-**
**संध्याषष्ठीद्वादशीवैधृतेषु।**
**रोगेऽष्टम्यां चन्द्रसूर्योपरागे**
**पाते चाऽऽद्यं नो रजोदर्शनं सत्॥**

निन्द्यरजोदर्शनं शालिन्याऽऽह— भद्रेति। भद्रा प्रसिद्धैव। निद्रा स्वापः। संक्रमः संक्रान्तिः। दर्शः अमावास्या। रिक्ताः प्रसिद्धाः। संध्याः प्रातःसंध्या मध्याह्नसंध्या सायंसंध्या च। षष्ठीद्वादश्यौ प्रसिद्धे। वैधृताख्यः सप्तविंशतितमो योगः। रोगः ज्वरादिः प्रदरादिश्च। अष्टमी। चन्द्रसूर्योपरागः ग्रहणम्। व्यतिपातः सप्तदशो योगो महापातश्च। एषु दुष्टयोगेष्वाद्यं रजोदर्शनं नो सत् अनिष्टफलदमित्यर्थः। * पीटी.

## सारावल्याम्

सोमभौमयो रजोदर्शनकारकता

**[1]इन्दुर्जलं कुजोऽग्निर्जलमसृक्त्वग्निरेव पित्तं स्यात्।**
**एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीणाम्॥**

$ संव. पीटीगतम्।

(१) मुचि ५।१; संव. ४ मुहूर्तचिन्तामणिदीपिकायां वसिष्ठः. (२) मुचि. ५।२–३; संव. ४.

§ गर्गश्रीपतिवसिष्ठवचनानि एतस्मिन्नेव प्रकरणे यथास्थानं द्रष्टव्यानि।

* संव. पीटीगतम्।

(१) संसौ. ४.

अनुपचयराशिसंस्थे कुमुदाकरबान्धवे रुधिरदृष्टे ।
प्रतिमासं युवतीनां भवति रजोदर्शनं ध्रुवमन्यन्ये ॥

जन्मतो वा लग्नतो वा बलिनः सकाशात् तृतीयषष्ठदशमैकादशराशय उपचयाख्याः । तद्व्यतिरिक्ता अनुपचयाः । तत्स्थे चन्द्रे । संसौ. ४–५

## स्मृतिरत्ने

प्रथमरजोदर्शने वारफलानि अहोरात्रभागफलानि मङ्गलकृत्यं च

[1]आदित्ये विधवा नारी सोमे चैव पतिव्रता ।
भौमे तथाऽऽत्मघाता च बुधे कन्याप्रसूतिका ॥
गुरौ च पुत्रलाभाय कन्यापत्या भृगौ स्मृता ।
शनौ तु पुंश्चली नारी ह्येतद्वारफलं स्मृतम् ॥
[2]शुभं चैव तु पूर्वाह्णे मध्याह्ने मध्यमं फलम् ।
अपराह्णे तु वैधव्यं पूर्वरात्रे शुभं भवेत् ।
मध्यरात्रे तु मध्यं स्यात्पररात्रेऽशुभान्विता ॥

शुभान्यकम् अशुभम् । संर. ६५४

[3]उद्वाहिताङ्गनायास्तु आर्तवे प्रथमे तदा ।
अक्षतैरासने क्लृप्ते सदीपे वासयेत्ततः ॥
[4]अपूपं लवणं मुद्गं गुडमिश्रं तथा हविः ।
दद्याद्ब्राह्मणपत्नीभ्यस्ताभ्यो दद्याच्च भोजनम् ॥

(१) संसौ. १४.

(२) प्रपा. ९८ तृतीयार्धे (मध्यरात्रौ तु मध्यं स्यात्पररात्रौ शुभान्यथ ॥ ); संसौ. १३–१४ शुभं चैव ( शोकं चैव ) मध्यमं फलम् ( शीलवर्जिता ) ; संप्र. १४४ ; संम. ९ रात्रे ( रात्रौ ) तृतीयार्धं नास्ति ; शाम. ५५ रात्रेऽशु (रात्रे शु); संकौ. १ तु मध्यं (मध्यमं); संग. ३६० रात्रे ( रात्रौ ) रात्रेऽशु ( रात्रौ शु ) ; संव. ५ संकौवत् ; कुम. ८०१ तृतीयार्धं नास्ति ; संर. ६५४ शुभं चैव ( लाभं चैव ) तु मध्यं ( मध्यमं ) रात्रेऽशुभान्विता ( रात्रे शुभान्यकम् ).

(३) प्रपा. १०१.

(४) प्रपा. १०१ ; संर. ६६० पूपं ल ( पूपौल्ल ) मुद्गं गु ( मुद्गगु ) द्याच्च ( द्यात्तु ) प्रयोगपारिजाते स्मृतिचन्द्रिकायाम् .

## मुहूर्तगणपतौ

प्रथमरजोदर्शने शुभाशुभकालवस्त्रस्थानानि, शान्त्या दोषपरिहारः, सर्वदोषापवादः

[1]वैशाखे फाल्गुने माघे मार्गाख्यश्रावणाश्विने ।
पक्षे शुक्ले शुभाह्ने च सद्विलग्ने तथा दिवा ॥
श्रवत्रयेऽनुराधायां रेवतीद्वितये मृगे ।
हस्तत्रये च रोहिण्यां पुष्यभे चोत्तरासु च ॥
सितवस्त्रे शुभं स्त्रीणां प्रथमं पुष्पदर्शनम् ।
मध्यं ज्येष्ठापुनर्वस्वोर्मूले चान्यत्र निन्दितम् ॥
अष्टम्यां द्वादशीषष्ठयो रिक्तादर्शेऽथ संक्रमे ।
भद्रानिद्राव्यतीपाते ग्रहणे रुजि वैधृतौ ॥
परतातगृहे संध्याकुदेशे कृष्णवाससि ।
प्राग्रजोदर्शनं नेष्टं शान्त्या तु शुभदं भवेत् ॥
प्रागुक्ता विलयं यान्ति रजोदर्शनसंभवाः ।
सर्वे दोषास्तु सल्लग्ने सितेज्ययुतवीक्षिते ॥

## शौनककारिकाः

प्रथमरजोदर्शने चन्द्रसूर्यग्रहणफलानि

[2]ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥
[3]इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥

यस्य प्रसूतिस्तस्य यस्य स्त्रिया ऋतुदर्शनं तस्य चेत्यर्थः । संर. ६५४

(१) संव. ४.

(२) शौका. १ पृ. १२२ ; गभा. १२८, १६६ ; शाम. ७७ ; सिन्धु. ८५६ ; विपा. ६७ व्याधिपीडा ( व्याधिः पीडा ) ; संर. ६५४ ( प्रसूतिर्यदि जायेत ग्रहणे चन्द्रसूर्ययोः । संक्रान्तौ च तदा स्त्रीणामादौ च ऋतुदर्शने ॥) भार्गवः .

(३) शौका. २ पृ. १२२ ; गभा. १२८, १६६ यस्तु (यस्य) पृ. ; शाम. ७७ ; सिन्धु. ८५६ सर्वं गभावत् ; विपा. ६७ व्याधिपीडा (व्याधिः पीडा) ; संर. ६५४ विपावत् , भार्गवः .

## रेणुकारिकाः

प्रथमरजोदर्शने नक्षत्रवारफलानि दोषापवादश्च

[1]रहिता धनपुत्राभ्यामश्विन्यां चेद्रजस्वला ।
दोषयुक्ता भरण्यां च कृत्तिकायां सुपुत्रिणी ॥

रोहिण्यां धनसंयुक्ता मृगे स्यात्सुतनाशिनी ।
आर्द्रायां चेत्पररतेऽभिरता च भवेत् सती ॥

पतिव्रता पुनर्वस्वोः पुत्रिणी स्यात्परद्वये ।
पूर्वाद्वये युवतिषु सराक्रान्ता करद्वये ॥

स्वातीद्वये धनवती विधवा स्यात् परद्वये ।
मूलद्वये पतित्यक्ता सुभगा स्यात् परत्रये ॥

(१) रेका. ८-१५ पृ. २.

रेवत्यां स्वैरिणी दुष्टा सुभगा शतभिक्त्रये ।
रजसि प्रथमे चैवं न द्वितीयादिषु स्मृतम् ॥

आदित्ये विधवा नारी सोमे चैव मृतप्रजा ।
कुजे स्यादपमृत्युश्च बुधे कन्याप्रसूतिका ॥

गुरौ पुत्रवती नारी कन्यापुत्रसमा भृगौ ।

मन्दे च पुंश्चली नारी वाराणां फलमीदृशम् ।
रजसि प्रथमे चैवं न द्वितीयादिषु स्मृतम् ॥

शशधरे गुरुणा शशिजेन वा
भृगुसुतेन युतेऽथ विलोकिते ।
शुभमप्यशुभं सममुत्तमं
यदि शुभं फलमत्र विनिर्दिशेत् ॥

# स्त्रीणां रजःप्राप्तिः

## वसिष्ठः

स्त्रीभिः स्वीकृताया इन्द्रकृतभ्रूणहत्याया रजोरूपेणाऽऽविर्भावः

[1]विज्ञायते हि—इन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाधर्मसंबद्धोऽहमित्येवमात्मानममन्यत। तं सर्वाणि भूतान्यभ्याक्रोशन्—'भ्रूणहन् भ्रूणहन्' इति। स स्त्रिय उपाधावत्—'अस्यै मे भ्रूणहत्यायै तृतीयं भागं प्रतिगृह्णीत' इति। ता अब्रुवन्—'किं नो भूयात्' इति। सोऽब्रवीत्—'वरं वृणीध्वम्' इति। ता अब्रुवन्—'ऋतौ प्रजां विन्दामहा इति, काममा विजनितोः संभवाम' इति। तथेति। ताः प्रतिजगृहुस्तृतीयं भ्रूणहत्यायाः॥

पाप्मना गृहीतममन्यत पापसमुद्रोऽहमिति मतिं कृतवान्। आ विजनितोः संभवामेति आ विजननात् आ प्रसवात् संभवाम मिथुनीभवामेत्यर्थः। आ विजनितोः इति 'भावलक्षणे' (पा. ३।४।१६) इत्यादिना भावे तोसुन्प्रत्ययः। गृर. ४०७

[2]सैषा भ्रूणहत्या मासि मास्याविर्भवति॥

## पैठीनसिः

स्त्रीभिः स्वीकृताया इन्द्रकृतभ्रूणहत्याया रजोरूपेणाऽऽविर्भावः

[3]त्वाष्ट्रं विश्वरूपं जघान वज्रेणेन्द्रः॥

[1]तं देवा भ्रूणहन्नित्यवदन्॥

[2]स स्त्रिय उपादधीत॥

[3]अस्यै भ्रूणहत्यायै तृतीयं भागं प्रतिगृह्णीत वरं दास्यामीति॥

[4]ततोऽशं तृतीयं ब्रह्महत्यायाः स्त्रियः प्रपद्यन्ते, एकं भूमिर्वनस्पतयश्चैकम्॥

[5]तासां वरं तुष्टः प्रायच्छत्॥

[6]भूमेः स्थिरत्वम्, वृक्षाणां छिन्नप्ररोहणम्, स्त्रीणां सर्वकाले संभवः॥

संभवः संभोगः। आत. ४६२

## पुराणे

स्त्रीभिः स्वीकृताया इन्द्रकृतब्रह्महत्याया रजोरूपेणाऽऽविर्भावः, यौवने नाभिस्थितकुसुमाद्रजःस्रावः

[7]देवतानां पुरोधास्तु त्वष्टा नाम द्विजोत्तमः।
भगिनी पूर्वदेवानां तस्य भार्या तयोः सुतः॥
[8]विश्वरूप इति ख्यातः शिरोभिर्जायते त्रिभिः।
एकस्मिन् सोमपानं च सुरापानं च मध्यमे॥

---

(१) वस्मृ. ५।८; गृर. ४०६ पाप्म ...' मात्मान (पाप्मना गृहीतमात्मान) भ्रूणहन् भ्रूण (भ्रूण) वृणीध्व (वृणुध्व) विन्दामहा (विन्दामह) (तृतीयं भ्रूणहत्यायाः ०); वीक. १।८१ निर्देशमात्रम्; वीमि. १।८१ पृ. १४४ भ्रूणहत्यायै (ब्रह्महत्यायै) (ताः ... हत्यायाः ०).

(२) वस्मृ. ५।९; गृर. ४०६-४०७ भ्रूण (ब्रह्म).

(३) गृर. ४०८; आत. ४६२.

(१) गृर. ४०८; आत. ४६२ भ्रूण (ब्रह्म).

(२) गृर. ४०८; आत. ४६२ (उपादधीत ०).

(३) गृर. ४०८ मीति (मि); आत. ४६२ (अस्यै ... भागं ०) प्रति (उपा).

(४) गृर. ४०८ एकं (एवं); आत. ४६२ ततोंऽशं तृ (ततोऽस्यास्तृ).

(५) गृर. ४०८; आत. ४६२ (आसां मघवा तुष्टः प्रायच्छत वरम्).

(६) गृर. ४०८; आत. ४६२.

(७) प्रपा. ९७; संप्र. १४१; संग. ३५५. अत्र पौराणत्वेन संगृहीताः सर्वे श्लोकाः प्रयोगपारिजाते 'पुराणे स्मृतिमञ्जर्याम्' इत्युक्त्वा, संस्कारप्रकाशे संस्कारगणपतौ च 'स्मृतिमञ्जर्याम्' इत्युक्त्वा संगृहीताः.

(८) प्रपा. ९७ एकस्मिन् (एकास्ये); संप्र. १४२; संग. ३५६.

[१]वामपार्श्वेऽसमर्श्वश्च स्वेच्छया चरते दिवि।
देवताभ्यो हविर्भागान् ¶पिधाय च ददात्यसौ॥
[२]अपिधायासुरेभ्यस्तु मातुलप्रेमसंयुतः।
उत्पाता दिवि जायन्ते ह्येतद्व्यत्ययकर्मणा॥
[३]तस्मात्सुरपतिर्भीतः स्वराष्ट्रच्युतिशङ्कया।
अच्छिनत्तस्य शीर्षाणि वज्रमादाय सत्वरः॥
[४]यत्सोमपानवदनमभवत्स कपिञ्जलः।
अभवद्यत्सुरापानं कलविङ्कः स शीर्षकम्॥

¶ अत्र संप्रसंगग्रन्थयोः 'अपिधाय' इति पाठः। उत्तरश्लोके 'अपिधाय' इति सर्वसंमतः पाठः। अत्र पाठनिर्णयार्थमिदं विचारणीयम् – "वचनस्यास्य 'स प्रत्यक्षं देवेभ्यो भागमवदत्परोक्षमसुरेभ्यः' (तैसं. २।५।१) इत्यादितैत्तिरीयवचनमूलकत्वमाश्रीयते, तथाच अत्रापि 'अपिधाय' इत्येव पाठः, 'न पिधाय अपिधाय' इति नञ्तत्पुरुषः, उत्तरत्र 'अपिधाय' इत्यत्र अपिरुपसर्गः, ददातिः 'दातुमादिशति' इत्यस्मिन्नर्थे लाक्षणिकः, फलतो हविर्भागदानमसुरेभ्य एव" इत्येकः पक्षः। अस्मिन्पक्षे ददातिपदे लक्षणादोषः, अपिधायपदयोरर्थभेदस्यासुज्ञानत्वादुत्तरत्रोक्तो व्यत्ययोऽपि न सुज्ञानः। अथ च "व्यत्ययानुरोधेन पिधायपदानुसंधाने अपिधायपदे नञ्तत्पुरुषस्य शीघ्रोपस्थितिकत्वात् व्यत्ययस्यापि सुज्ञानत्वात् ददातेश्च स्वार्थपरत्वस्य न्याय्यत्वात् 'पिधाय' इति पाठे एव वचनस्वारस्यम्, तथाच उत्तरत्र अपिधायेति नञ्तत्पुरुषः, देवताभ्यः पिधायदानमसुरेभ्योऽपिधायदानमित्युभयेभ्यो हविर्भागदानम्, वचनमूलं च तैत्तिरीयात् श्रुत्यन्तरम्" इत्यपरः पक्षः। अस्मिन् पक्षे पिधायशब्दापिधायशब्दयोस्तात्पर्यमपिधायदानात्पिधायदानस्य जघन्यत्वं च चिन्तनीयम्।

(१) प्रपा. ९७; संप्र. १४२ मश्वश्च (मद्याच्च) गान् पिधाय च (गानपिधाय); संग. ३५६ संप्रवत्.

(२) प्रपा. ९७ दिवि जायन्ते ह्ये (दिव्यजायन्त ए); संप्र. १४२ संयुतः (या सह); संग. ३५६ संप्रवत्.

(३) प्रपा. ९७–९८; संप्र. १४२ राष्ट्र (राज्य); संग. ३५६.

(४) प्रपा. ९८; संप्र. १४२; संग. ३५६.

यदन्नादनमास्यं तु क्रमादासीत् स तित्तिरिः।
ततस्तां ब्रह्महत्यां च वासवोऽञ्जलिनाऽग्रहीत्॥
[१]ब्रह्महत्यासमोपेतः प्रच्छन्नोऽब्दं चचार सः।
स्वर्गे भूतानि चाऽऽक्रोशन् देवेन्द्रं ब्रह्महन्निति॥
[२]स धरित्रीमुपास्यैतां पृथिवीमब्रवीद्वृषा।
ब्रह्महत्यातृतीयांशं त्वं गृहाणेति मत्कृतम्॥
[३]खातात् पराभवो मा भूदितीन्द्रं प्रत्युवाच सा।
सोऽब्रवीद्वत्सरादर्वाग् गर्तः पूर्णो भविष्यति॥
[४]इन्द्राद्वरं प्रतिगृह्य हर्षवत्यभवद्धरा।
तस्मात्संवत्सरादर्वाक् खातं च परिपूर्यते॥
[५]सेन्द्रस्य ब्रह्महत्यायास्तृतीयं भागमग्रहीत्।
तत्पापमीरिणं भूमावभवत्स्वकृतं यतः॥
[६]ईरिणं न स्पृशेत्तस्माद् ब्रह्महत्यासवर्णकम्।
ततस्तरूनुपास्यैतान् सोऽब्रवीद्यन्मया कृतम्॥
[७]भवन्तः प्रतिगृह्णन्तु ब्रह्महत्यातृतीयकम्।
वासवं तरवोऽप्यूचुरस्माकं छेदनात्परम्॥
[८]प्रभवन्त्वङ्कुराश्चेति वरो देयस्त्वयाऽधुना।
इन्द्रस्तथा करोमीति वृक्षाणामददाद्वरम्॥

(१) प्रपा. ९८ स्वर्गे भू (स्वास्यैर्भू) शन् देवेन्द्रं (शद्देवेन्द्रो); संप्र. १४२ देवेन्द्रं (देवेन्द्र); संग. ३५६.

(२) प्रपा. ९८; संप्र. १४२ स्यैतां (सीदत्); संग. ३५६ स्यैतां (सीत).

(३) प्रपा. ९८ खातात् प (सा तत्प) सा (ह); संप्र. १४२; संग. ३५६.

(४) प्रपा. ९८ गृह्य (ग्राह्य) वत्यभवद्धरा (यन्त्यभवद्वरात्); संप्र. १४२; संग. ३५६ वत्य (यन्त्य).

(५) प्रपा. ९८ मीरि (मिरि); संप्र. १४२; संग. ३५६.

(६) प्रपा. ९८ ईरी (इरि); संप्र. १४२ स्यैतान् (सीदत्); संग. ३५६ स्यैतान् (सीत).

(७) प्रपा. ९८; संप्र. १४२–१४३; संग. ३५६.

(८) प्रपा. ९८; संप्र. १४३; संग. ३५७ मददा (मदद).

[1]तस्माद्वृक्षाश्च भूयांस उत्तिष्ठन्ति लुनात्परम् ।
ब्रह्महत्यातृतीयांशं प्रत्यगृह्णन्महीरुहाः ॥

[2]सोऽभवद्द्रुकनिर्यासो ब्रह्महत्यासवर्णकः ।
तस्माल्लोहितनिर्यासं न स्पृशेन्न च खादयेत् ॥

[3]स भूयः स्त्रीसभां गत्वा ह्युपासीदद्यथाब्रवीत् ।
ब्रह्महत्यातृतीयांशं प्रतिगृह्णीत मत्कृतम् ॥

[4]ता अब्रुवन् वरं शक्रमृत्वियाच्च प्रजोद्भवम् ।
वृणीमहै काममोगमा प्रसूतेर्यथेप्सितम् ॥

[5]ब्रह्महत्यातृतीयांशं प्रत्यगृह्णन् स्त्रियोऽपि च ।
तस्मात् स्त्रियः प्रजालाभमृतौ सुरतसंगमात् ॥

[1]आ प्रसूतेः प्रियैः सार्धं संभोगांश्च लभन्ति हि ।
ततश्च मलवद्वस्त्रा अभवन् योषितस्तदा ॥

[2]नाभिमूले स्थितं पुष्पं चतुर्दलसमन्वितम् ।
तस्मिन् सर्वाश्च दधते गर्भसंभवकारणम् ॥

[3]अधोमुखं स्थितं स्त्रीणां तद्बाल्ये मुकुलीकृतम् ।
बाल्यात्परवयःप्राप्तौ मुकुलं विकसद्भवेत् ॥

[4]उत्फुल्लं कुसुमं स्त्रीणां स्वभावेन स्रवेद्रजः ।
तदाप्रभृति सर्वासां मासि मासि ऋतुर्भवेत् ॥

## अनिर्दिष्टकर्तृकवचनम्

ब्रह्महत्याया रजोरूपेणाऽऽविर्भावः

[5]सैषा ब्रह्महत्या स्त्रीणां यन्मासि मासि रजोदर्शनम् ॥

---

(१) प्रपा. ९८ रुहाः (रुहः) ; संप्र. १४३ ; संग. ३५७ स उत्तिष्ठ (सं प्रभव) रुहाः (रुहः).

(२) प्रपा. ९८ द्रुक (द्रुक्ष) ; संप्र. १४३ ; संग. ३५७.

(३) प्रपा. ९८ ; संप्र. १४३ दद्यथाब्रवीत् (ताब्रवीदिति) ; संग. ३५७ संप्रवत्.

(४) प्रपा. ९८ क्रमृत्वियाच्च प्रजोद्भवम् (क्रं प्रियाद्यावत् प्रजोद्भवेत्) महै (महे) ; संप्र. १४३ ; संग. ३५७.

(५) प्रपा. ९८ ; संप्र. १४३ ; संग. ३५७.

(१) प्रपा. ९८ ; संप्र. १४३ गांश्च लभ (गाः संभव) ततश्च (तथा च) वद्वस्त्रा (वद्वासा) स्तदा (स्तथा) ; संग. ३५७ संप्रवत्.

(२) प्रपा. ९८ ; संप्र. १४३ ; विपा. ४५ वराहसंहितायाम् ; संग. ३५७.

(३) प्रपा. ९८ प्राप्तौ (प्राप्ते) ; संप्र. १४३ परवयःप्राप्तौ (परं वयः प्राप्ते) ; विपा. ४५ वराहसंहितायाम् ; संग. ३५७ संप्रवत्.

(४) प्रपा. ९८ ल्लं कु (ल्लकु) ; संप्र. १४३ ; विपा. ४५ वराहसंहितायाम् ; संग. ३५७.

(५) स्मृच. १५.

# *रजस्वलाधर्माः

## बौधायनगृह्यसूत्रम्

[1]अथ यदैषा मलवद्वासाः स्यात्– नैनया सह संवदेत, न सहाऽऽसीत, नास्या अन्नमद्यात्। ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्ते। अथो खल्वाहुः– अभ्यञ्जनं वाव स्त्रिया अन्नम्, अभ्यञ्जनमेव न प्रतिगृह्यम्, काममन्यदिति ॥

नैनामुपेयात् ॥

नारण्ये ॥

न पराचीम् ॥

न स्नाति ॥

नाभ्यङ्क्ते ॥

न प्रलिखते ॥

नाङ्क्ते ॥

न दतो धावते ॥

न नखानि निकृन्तते ॥

न कृणत्ति ॥

न रज्जुं सृजति ॥

न पर्णेन पिबति ॥

न खर्वेण पिबति ॥

'तस्यै खर्वेस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय' इति ब्राह्मणम् ॥

## बौधायनगृह्यपरिभाषासूत्रम्

[2]यस्य पत्नी गृह ऋतुमती भवति तस्यै-तद्व्रतं यथा विवाहे त्रिरात्रम् ॥

एतावदेव नाना–नात्र पत्नी दण्डेन सह शेते। न स्नाति। चतुर्थ्यां स्नाति। ब्रह्मौदनस्य च प्राश्नाति ॥

यः कामयेत देवेभ्य ऋषिभ्यः पितृभ्योऽनृणो भूयासमिति तस्यैतद्व्रतमृतावृतौ भवति ॥

## आपस्तम्बगृह्यसूत्रम्

[1]यदा मलवद्वासाः स्यादथैनां ब्राह्मणप्रति-षिद्धानि कर्माणि संशास्ति 'यां मलवद्वाससम्' इत्येतानि ॥

(१) मलवद्वासा इति रजस्वलाया अभिधानम्। यदेतिवचनं विवाहादूर्ध्वमपि प्राप्त्यर्थम्। अन्यथा विवाहमध्य एव स्यात्, प्रकरणात्। संशासनं च प्रथम-र्तौ सकृत् भवति। तदेव सर्वार्थं भवति। यथा ब्रह्म-चारिण उपनयने। एनामित्यनुच्यमाने अन्य एनौ संशा-स्तीत्येवं विशायेत, 'अन्यो वैनौ' इति प्रकृतत्वात्। ब्राह्मणप्रतिषिद्धानीत्युच्यते लोकप्रतिषिद्धानि उपरिशय्या-सनादीनि लोकत एव प्रत्येतव्यानीति ज्ञापनार्थम्। कर्माणीति वचनात् कर्मणामेव शब्दान्तरैरवबोधनम्, न ब्राह्मणवाक्येन संप्रैषः। एतानीति वचनम् 'यां मलवद्वाससम्' इत्यादीनां प्रतिषिद्धानां विहितानां च संशासनं यथा स्यात्। तेन 'तिस्रो रात्रीर्व्रतं चरेदञ्ज-लिना वा पिबेत्' (तैसं. २।५।१) इति विहितयोरपि संशासनं भवति। एवं च 'ब्राह्मणप्रतिषिद्धानि' इति प्रतिषिद्धग्रहणमुपलक्षणम्। तत्र 'यां मलवद्वाससम्' इति वाक्ये स्नानात् प्राक् समागमप्रतिषेधः। 'याम-रण्ये' इति देशप्रतिषेधः। स्नातायामपि 'यां पराचीम्' इति पराङ्मुख्या गमनप्रतिषेधः। 'या स्नाति' इति त्रिरात्रमध्ये स्नानस्य प्रतिषेधः। 'याऽभ्यङ्क्ते' इत्य-भ्यञ्जनस्य। 'या प्रलिखते' इति शिरसि प्रलेखनस्य कङ्कतादिना। 'याऽऽङ्क्ते' इति चक्षुषोरञ्जनस्य। 'या

---

* रजस्वलानुष्ठेया रजस्वलापत्यनुष्ठेयाश्च धर्मा इत्यर्थः। अस्मिन् प्रकरणे सामान्यरूपेण सूक्ष्मविषया निर्देष्टुमशक्य-त्वान्न निर्दिष्टाः।

(१) बौगृ. १।७।२२–३६.

(२) बौगृप. १।१०।१०–१२.

(१) आपगृ. ८।१२; बाल. १।८१ पृ. २२५.

दतः' इति दन्तधावनस्य । 'या नखानि' इति नखनिकृन्तनस्य । 'या कृणत्ति' इति कार्पासादेस्तन्तुकर्मणः । 'या रज्जुम्' इति रज्जुक्रियायाः । 'या पर्णेन' इति पर्णेनाशनस्य । 'या खर्वेण' इति खर्वेण पात्रेण । एकदेशविलुप्तं खर्वम् । 'तिस्रो रात्रीः' इति एतेषां प्रतिषेधानां कालनियमः । 'अञ्जलिना वा पिबेत्' इत्यादिर्भोजने पात्रविधिः । $ अनाकुला.

(२) मलवद्वासाः कालनिर्गतेन शोणितेन मलिनं वासः वसनं यस्याः सा, रजस्वलेत्यर्थः, रूढशब्दत्वात् । यदृच्छया निर्मलवासा अपि यदेयं रजस्वला स्यात् तदा पतिरेवैनां ब्राह्मणप्रतिषिद्धानि कर्माणि संशास्ति लौकिकभाषया शिक्षयति । कानि तानि ब्राह्मणप्रतिषिद्धानि ? इत्यत आह– 'यां मलवद्वाससम्' इत्येतानि । 'यां मलवद्वाससं संभवन्ति' (तैसं. २।५।१।६) इत्येतद्ब्राह्मणचोदितानि । तान्येतान्यपि सर्वाणीत्यर्थः । अथ तानि सुग्रहार्थं क्रमेणोच्यन्ते– न स्नानात्पूर्वं मैथुनम् । तदेव न स्नानादूर्ध्वमप्यरण्ये । तदेव न स्नातयाऽपि पराङ्मुख्या अनिच्छन्त्या वा । अपूर्णे त्रिरात्रे न स्नानम् । न तैलाभ्यञ्जनम् । न कङ्कतादिना शिरसि लेखनम् । न चक्षुषोरञ्जनम् । न दन्तधावनम् । न नखनिकृन्तनम् । न कार्पासादिना तन्तुकरणम् । न रज्जुक्रिया । इत्येतान्येकादश । अथाशनपात्रमञ्जलिरखर्वो वा । खर्वः अल्पः खण्डो वा दग्धोऽपि वा । ततोऽन्यः अखर्वः । अत्र चामी मैथुनादिनिषेधा अमैथुनादिसंकल्पविषयो वेति भाष्ये न विविक्तम् । न्यायतस्तु 'तिस्रो रात्रीर्व्रतं चरेत्' (तैसं. २।५।१) इति वचनात् 'नेक्षेतोद्यन्तमस्तं यन्तमादित्यम्' इत्यादिप्राजापत्यविधिवत् संकल्पविषय एव । ताद.

## हिरण्यकेशिगृह्यसूत्रम्

**'त्रिरात्रं मलवद्वासा ब्राह्मणव्याख्यातानि व्रतानि चरति ॥**

$ बाल. अनाकुलागतम् ।

(१) हिगृ. १९।७।२९ ; संर. ६५७ द्वासा (द्वाससा) 'द्वासा' इत्यपि पाठः .

(१) गर्भाधानमिदानीमुच्यते-- त्रिरात्रमिति । सर्वा स्त्री रजस्वला मलवद्वासास्तिस्रो रात्रीः 'तस्मान्मलवद्वाससा न संवदेत' इति प्रकृत्य ब्राह्मणोक्तानि व्रतानि चरति । सिद्धानुवाद एष उत्तरविधि(व ?)स्त्वार्थः । दर्शपूर्णमासप्रकरणमतिक्रम्य सर्वार्थता चैषां व्रतानां (व्याख्या ?)निर्णीता 'प्रागपरोधान्मलवद्वाससः' ¶ (जैसू. ३।४।१८) इत्यत्र । मातृद.

(२) मलवद्वस्त्रम्, तेन सहिता व्रतं चरतीत्यर्थः । अथवा मलवद्वाससा रजस्वला । मलवद्वाससेति तृतीया प्रथमार्थे । मलवद्वासा इति पाठस्तु युक्त एव । 'तस्मान्मलवद्वाससा न संवदेत' इत्यादीनि ब्राह्मणोक्तानि व्रतानि चरतीत्यर्थः । मलः रजः विद्यते यस्मिंस्तन्मलवत् । एतेनैव ज्ञायते एकवस्त्रैव रजस्वला स्नानपर्यन्तं भवेदिति । अतो पर्णेन पानस्यैव निषेधनात् पर्णे भोजनस्य निषेधो नास्तीत्यवगम्यते । एतन्मूलमग्रे प्रदर्शयिष्यते । तच्च पलाशादियज्ञियवृक्षव्यतिरिक्तमाचाराज्ज्ञेयम् । एतस्माद्ब्राह्मणवाक्यात् सौभाग्यवत्या रजस्वलाया एव स्नानप्रलेखनदन्तधावनखनिकृन्तनतृणादिच्छेदनरज्जुसर्गपर्णशाधनकपानखर्वपात्रसाधनकपानरूपा धर्मा निषिद्धाः, न विधवाया रजस्वलायाः, तत्र प्रजोत्पत्तेरेवाभावेन प्रजागतदोषाणामसंभवात्, अभ्यङ्गादिकं तु विधवात्वेनैव निषिद्धमिति यद्यपि प्राप्तं तथाऽपि 'विधवाया रजोवत्या अपि स्नानादयो न हि ।' इति स्मृतिदर्पणस्थगालववचनात्तस्या अपि स्नानादयो धर्मा निषिद्धा एवेति ज्ञेयम् । आदिशब्देन प्रलेखनादि । संर. ६५७–६५८

## भारद्वाजगृह्यसूत्रम्

**'यदा मलवद्वासाः स्यादथैनां ब्राह्मणप्रतिषिद्धानि व्रतानि संशास्ति– 'यां मलवद्वाससम्' इति ॥**

¶ सर्वमीमांसापुस्तकेषु 'मलवद्वाससः' इति षष्ठ्यन्तः पाठः ।

(१) भागृ. १।२०.

## वैखानसगृह्यसूत्रम्

'अथ त्रिरात्रमृतौ मलवद्वासाः स्नानाञ्जनादीनि वर्जयेत्। एकभुक्ता स्यात्। अखर्वेणाञ्जलिनाऽऽयसेन वा पिबेत्। न शुल्बेनाश्नाति। न ग्रहानीक्षेत। न दिवा स्वपेत्। यथोक्तं व्रतं कुर्यात्॥

## हारीतः

[1]रजःप्राप्ता चेदधः शयीत। न च देवकार्यं कुर्यात्। भूमौ कार्ष्णायसे पाणौ मृन्मये वाऽश्नीयात्॥

(१) रजःप्राप्ता रजः प्राप्तवती। अधः भूमौ। अस्पृश्यत्वादेव साक्षाद्देवकार्यनिषेधे सिद्धे 'न च देवकार्यं कुर्यात्' इत्यभिधानं तदन्नप्रेक्षणं तद्द्रव्यपुष्पनैवेद्यादिप्रत्यवेक्षणमपि न कुर्यादित्येतत्परम्। कार्ष्णायसम् अयःपात्रम्। † गृर. ४०६

(२) देवकार्यं देवोद्देशेन पत्रपुष्पप्रेषणादिरूपम्। कार्ष्णायसम् अयःपात्रम्। मर. ३८०

## लघुहारीतः

[3]हस्तेऽश्नन्ती(? ऽश्नती) मृन्मये वा निशि स्यात्क्षितिशायिनी॥

## बौधायनः

[4]'यस्ततो जायते सोऽभिशस्तः' इति व्याख्यातान्यस्यै व्रतानि॥

'यस्ततः' इत्यादिना 'प्रजायै गोपीथाय' इत्येवमन्तेन ब्राह्मणवाक्येन रजस्वलाया व्रतान्युक्तानि। तानि तया परिपालनीयानीत्यर्थः। तथा च वसिष्ठः—'त्रिरात्रं रजस्वलाऽशुद्धिर्भवेत्' इत्येवमादिना प्रपञ्चितवान्। बौवि.

## वसिष्ठः

[1]त्रिरात्रं रजस्वलाऽशुचिर्भवति। सा नाञ्ज्यात्। नाभ्यञ्ज्यात्। नाप्सु स्नायात्। अधः शयीत। दिवा न स्वप्यात्। नाग्निं स्पृशेत्। न रज्जुं सृजेत्। न दन्तान् धावयेत्। न मांसमश्नीयात्। न ग्रहान्निरीक्षेत। न हसेत्। न किंचिदाचरेत्। अखर्वेण पात्रेण पिबेत्। अञ्जलिना वा पिबेत्। लोहितायसेन वा॥

(१) *पाक्षिकम्, 'अञ्जलिना वा पिबेत्' इति श्रुतेः। लोहितायसं ताम्रम्। एतच्च व्रतजातं त्रिरात्राशौचनिमित्तायां रजःप्रवृत्तौ द्रष्टव्यम्, न रजोमात्रप्रवृत्तौ। § अप. ११८०

(२) ग्रहान् आदित्यादीन्। किंचित् गृहलेपनाद्यपि। खर्वः वामहस्तः। ¶ गृर. ४०७

(३) खर्वः वामहस्तः। अयं च वामहस्तस्य निषेधः केवलस्यैव। अथवा खर्वपात्रम्। $ मपा. ३४८

(४) न रज्जुं प्रमृजेत् न रज्जुं कुर्यादित्यर्थः। † आत. ४६२

---

† गप. गृरगतम्।

(१) वंगृ. २१९.

(२) गृर. ४०६ चेदधः (चाधः) पाणौ मृ (पाण्योर्मृ); मर. ११९; गप. ४६३ पाणौ मृन्मये वा (मृत्पात्रे पाणौ वा); सिन्धु. ८०८ प्राप्ता चेद (प्राप्ताव) (न च देवकार्यं कुर्यात् ०).

(३) लघुहास्मृ. ३८.

(४) बौध. १।११।३३.

* अपरार्कसंमतम् 'नाञ्जलिना पिबेत्' इति मूलपाठं विषयीकृत्येदं व्याख्यानम्। विरुद्धश्रुतिबलादुक्तनिषेधो वैकल्पिक इति तदर्थः। 'इति श्रुतेः' इत्यन्तमिदं व्याख्यानमादर्शपुस्तके प्रमादात् वसिष्ठवचनत्वेन मुद्रितम्।

§ मर. अपगतम्।

¶ शेषम् अपगतम्। गभा., गप. गृरगतम्।

$ शेषं अपगतम्।

† शेषं गृरगतम्।

(१) वस्मृ. ५।७; मिता. ३।२० (रजस्वला त्रिरात्रमशुचिर्भवति। सा च नाञ्जीत, नाभ्यञ्जीत, नाप्सु स्नायात्, अधः शयीत, न दिवा स्वप्यात्, न ग्रहान् वीक्षेत, नाग्निं स्पृशेत्, नाश्नीयात्, न रज्जुं सृजेत्, न च

(५) खर्वः वामहस्तः। अखर्वपात्रं मृन्मयपात्रं वा शरावादि। तथा च शारीरके सुश्रुतः– 'ऋतौ प्रथमदिवसात्प्रभृति ब्रह्मचारिणी दिवास्वापाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसन( अति )कथनातिशब्दश्रवणावलेखनानिलायासान् परिवर्जयेत् अलंकाराबलेखनमाल्यविरहिता। किं कारणम्? यतो दिवा स्वापात् अपत्यं स्वापशीलम्, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनात् दुःखशीलः, तैलाभ्यङ्गात् कुष्ठी, नखोपकर्तनात् कुनखी, प्रधावनाच्चपलः, हसनाच्छ्यावदन्तोष्ठजिह्वः, प्रलापी चातिकथनात्, (अति)शब्दश्रवणात् बधिरः, अवलेखनात् खलतिः, मारुतायासासेवनात् उन्मत्तो गर्भो भवति। एवमेतान् परिहरेत्। दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्याहारां त्र्यहं भर्तुः संरक्षेत्। ततश्चतुर्थरात्रिपश्चिमभागे स्नायात्'। संसौ. २१–२२

(६) यद्यपि दक्षेण 'अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम्। न कुर्यात् सार्तवा नारी ग्रहाणामीक्षणं तथा॥' इति स्नानमात्रं निषिद्धं तथाऽप्युपरागा-

---

दन्तान् धावयेत्, न हसेत्, न च किंचिदाचरेत्, अखर्वेण पात्रेण पिबेत्, अञ्जलिना वा, पात्रेण लोहितायसेन वेति विज्ञायते); अप. १।८० पृ. १०५ दिवा न (न दिवा) (न दन्तान् धावयेत् ०) अखर्वेण ... वा पिबेत् (न खर्वेण, नाञ्जलिना पिबेत्); मभा. ९।३० (त्रिरात्रं रजस्वलाऽशुचिर्भवति) एतावदेव, स्मृत्यन्तरम्; गृर. ४०६ (नाभ्यञ्ज्यात् ०) दिवा न स्व (न दिवा सु) स्पृशेत् + (न खर्वेणापः पिबेत्) सृजेत् (प्रमृजेत्) क्षेत (क्षेत्) अखर्वेण ... वा पिबेत् (नाञ्जलिना जलं पिबेत्, न); मपा. ३४८ दिवा ... रज्जुं सृ (न दिवा सुप्यात्, न रज्जुं प्रमृ) अखर्वेण ... वा पिबेत् (नाञ्जलिना जलं पिबेत्, न खर्वेण पात्रेण); प्रपा. १०१–१०२ त्रिरात्रं (त्रिरात्रेण) ऽशुचि (शुद्धि) नाप्सु (नाशु) दिवा न (न दिवा) न किं ... यसेन वा (नासकिंचिदाचरेत्, न खर्वेण पिबेत्, अञ्जलिना पिबेत्, लोहेन वाऽऽयसेन वेति विज्ञायते); मर. ११९–१२० (रजस्वला त्रिरात्रमशुचिर्भवति, सा च नाञ्जीत, नाभ्यञ्जीत, नाप्सु स्नायात्, न दिवा स्वप्यात्, न ग्रहाग्निरीक्षेत, नाग्निं संस्पृशेत्, न रज्जुं सृजेत्, न मांसमश्नीयात्, न च दन्तान् धावयेत्, न हसेत्, न च किंचिदाचरेत्, खर्वेण पात्रेण लोहितायसेन वा); गभा. १२४ (सा नाञ्ज्यात्, नाभ्यञ्ज्यात्, नाप्सु स्नायात्, अधः शयीत, न दिवा सुप्यात्, न रज्जुं सृजेत्, न मांसमश्नीयात्, न ग्रहाग्निरीक्षेत, न हस्तेन किंचिदाचरेत्, अखर्वेण पात्रेण पिबेत्, अञ्जलिना वा, पात्रेण लोहितायसेन वा); नप. ४६३ (न दिवा स्वप्यात्, न मांसमश्नीयात्, न ग्रहान् परीक्षेत, न हसेत्, न किंचिदाचरेत्, नाञ्जलिना पिबेत्, न लोहितायसेन वा); आत. ४६२ दिवा ... सृजेत् (न दिवा स्वप्यात्, न रज्जुं प्रमृजेत्, नाग्निं स्पृशेत्) धाव (क्षाल) अखर्वेण ... सेन वा (नाञ्जलिना जलं पिबेत्, न लोहितायसेन, न खर्वेण वा); संसौ. २०–२१ दिवा न ... यसेन वा (न दिवा सुप्यात्, न ग्रहाग्निरीक्षेत, न हसेत्, न रज्जुं स्पृशेत्, न मांसमश्नीयात्, न किंचिदाचरेत्, न गव्यमश्नीयात्, अखर्वेण पिबेत्, पात्रेण पिबेत्, अञ्जलिना वा, लोहितायसेन वा) हारीतः; संम. १० स्वलाऽशुचिर्भवति सा (स्वला स्नानाच्छुचिर्भवति) दिवा न (न दिवा) (न ग्रहा ... यसेन वा ०); संकौ. २ दिवा न (न दिवा) न हसेत् ... यसेन वा (नाश्लीलं किंचिदीरयेत्, न खर्वेण पिबेत्, अञ्जलिना वा पिबेत्, लोहेनाऽऽयसेन वा विज्ञायते); बाल. १।८१ पृ. २२४ (तत्र त्रिरात्रं रजस्वलाऽशुचिर्भवति। सा त्याज्याभ्यञ्जनात्पूर्वं नाऽऽशु स्नायात् त्र्यहादधः। नाधः शयीत, न दिवा स्वप्यात्, न रज्जुं सृजेत्, न दन्तान् धावयेत्, न मांसमश्नीयात्, न ग्रहाग्निरीक्षेत, न हसेत्, न किंचिदुच्चैर्वदेत्, न खर्वेण पात्रेण पिबेत्, अञ्जलिना वा, पात्रेण लोहितायसेन वा); संव. ६–७ दिवा न (न दिवा) सृजेत् (स्पृशेत्) न हसेत् ... यसेन वा (नाश्लीलं किंचिदाचरेत्, खर्वेण पिबेत्, अञ्जलिना वा पिबेत्, लोहेनाऽऽयसेन वा विज्ञायते); बौधि. १।११।३३ निर्देशमात्रम्; कृम. ८०९ (अधः शयीत०) (नाग्निं स्पृशेत् ०) शेषं संमवत्; संर. ६५९ दिवा न (न दिवा) न किंचि ... यसेन वा (नाश्लीलं किंचिदाचरेत्, अखर्वेण पिबेत्, अञ्जलिना वा पिबेत्, लौहेनाऽऽयसेन वा विज्ञायते).

दिनिमित्तकस्नाने प्रसक्ते वसिष्ठेन 'नाप्सु स्नायात्' इति मज्जनं निषिध्यते। ‡ संकौ. ३

(७) अशुचिरिति पदच्छेदः। अखर्वेण महतेत्यर्थः। ¶ संर. ६५९

[1]तस्माद्रजस्वलाया अन्नं नाश्नीयात्॥

अन्नम् अञ्जनमभ्यञ्जनं च। अञ्जनं मैथुनम्, स्नेहवद्द्रव्य(?स्नेहवत्त्व)लक्षणसाम्यात्। अभ्यञ्जनमालिङ्गनम्, अञ्जनमपि तस्य वृत्तेः, 'न चैनां श्लिष्येत्' इति गौतमवचनात्। अश्नीयात् उपभुञ्जीत। गृर. ४०७

भ्रूणहत्याया एवैषा रूपं प्रतिमुच्याऽऽस्ते कम्चुकमिव॥

भ्रूणहत्या ब्रह्महत्या। प्रतिमुच्य आबध्य। गृर. ४०७

[2]तदाहुर्ब्रह्मवादिनः॥

[3]अञ्जनाभ्यञ्जनमेवास्या न प्रतिग्राह्यम्, तद्धि स्त्रिया अन्नमिति॥

[4]तस्मात्तस्यै च तत्र च बीभत्सन्ते मेधमुपागादिति॥

यतस्तस्या अञ्जनाभ्यञ्जनमेवान्नं तस्मात्तस्या ओदनादिरूपमन्नं न बीभत्सन्ते न निन्दन्ति। यद्यञ्जनाभ्यञ्जनमात्रे सा अशुचिस्तदा यज्ञचर्यायां शुचिः स्यादित्यत आह– मैवं मेधमुपागमदिति। मेधः यज्ञः। मा एवं विधास्यती(? एवंविधा सती) यज्ञं गच्छेदित्यर्थः। गृर. ४०७

[5]उदक्यास्त्वासते येषां ये च केचिदनग्नयः॥

कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः॥ इति॥

अन्वासते उपासनं कुरुते। गृर. ४०७

[1]आर्तवाभिप्लुता नारी नैकवेश्मनि संश्रयेत्।
न चान्त्यजातिसंस्पर्शो स्पर्शो कुर्यान्न कस्यचित्॥
त्रिरात्रं (तु) मुखं नैव दर्शयेदस्य कस्यचित्।
स्ववाक्यं श्रावयेन्नैव न कुर्याद्दन्तधावनम्॥
न कुर्यादार्तवे नारी ग्रहाणामीक्षणं तथा।
अञ्जनाभ्यञ्जनं स्नानं प्रवासं वर्जयेत्तथा॥
नखादिकृन्तनं रज्जुतालपत्रादिबन्धनम्।
नवे शरावे भुञ्जीत तोयं वाऽञ्जलिना पिबेत्॥

## कात्यायनः

[2]न निषेव्यमुदक्याभिः स्नानं माल्यानुलेपनम्।
हस्ते वा मृन्मये पात्रे दिवैव लघुभोजनम्॥
हविष्यं मधुरं चान्नं कटुतिक्तादिवर्जितम्।
एकान्ते प्राक्शिरा भूमावास्तृतायां शयीत सा॥

## व्यासः

[3]योषितो नित्यकर्मोक्तं नैमित्तिकमथोच्यते।
रजसो दर्शनाद्दोषात्सर्वमेव परित्यजेत्॥
[4]सर्वैरलक्षिता शीघ्रं लज्जिताऽन्तर्गृहे वसेत्।
एकाम्बरा कृशा दीना स्नानालंकारवर्जिता॥
[5]मौनिन्यधोमुखी चक्षुष्पाणिपद्भिरचञ्चला।
अश्नीयात्केवलं भक्तं नक्तं मृन्मयभाजने॥
[6]स्वपेद्भूमावप्रमत्ता क्ष(? क्षि)पेदेवमहस्त्रयम्॥

---

‡ शेषं अपगतम्। संव. संकौवत्।

¶ शेषं संकौगतम्।

(१) वस्मृ. ५।१०–११; गृर. ४०७.

(२) वस्मृ. ५।१२; गृर. ४०७ (ब्रह्मवादिनः०).

(३) वस्मृ. ५।१३; गृर. ४०७.

(४) वस्मृ. ५।१४–१५; गृर. ४०७ (तस्मात्तस्यामन्नं न बीभत्सन्ते। मैवं मेधमुपागमदिति).

(५) वस्मृ. ५।१६; गृर. ४०७ क्यास्त्वा (क्याऽन्वा) (इति०).

(१) संसौ. २०.

(२) संर. ६६२.

(३) व्यास्मृ. २।३७; संवी. १८७ (भागः २) नाद्दोषात् (नान्नारी) उक्त.

(४) व्यास्मृ. २।३८; संवी. १८७ (भागः २) तान्तर्गृहे (ता स्वगृहे) रा कृशा (रधरा).

(५) व्यास्मृ. २।३९; संवी. १८७ (भागः २) भक्तं नक्तं (नक्तं भक्तं).

(६) व्यास्मृ. २।४०; संवी. १८७ (भागः २).

दक्षः

[1]आर्तवाभिप्लुता नारी नैव वेश्मनि संविशेत् ।
न संसर्गं व्रजेत् सद्भिः स्नात्वा पापात्प्रमुच्यते ॥
[2]अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् ।
न कुर्यात् सार्तवा नारी ग्रहाणामीक्षणं तथा ॥
[3]नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम् ॥

(१) नेति सर्वत्रानुषज्यते । विपा. ४८

(२) अत्र नित्यस्नानं निषिध्यते । संर. ६५९

[4]दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् ॥
[5]एवमुक्तप्रकारेण तिस्रो रात्रीर्व्रतं चरेत् ॥

पराशरः

[6]स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
[7]सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथंचन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥

अत्रिः

[8]प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तेन तद्व्रतं तासां विनश्यति कदाचन ॥

(१) प्रपा. १०१ ; विपा. ४८ नैव ( नैका ).

(२) प्रपा. १०१ ; संम. १० ; सिन्धु ८०८ ; विपा. ४८ ; संकौ. ३ ; संव. ७ ; संर. ६५९.

(३) प्रपा. १०१ ; संम. १० ; विपा. ४८ ; कृम. ८०९ ; संर. ३५९ ( दिवानिद्रां च ताम्बूलं तालवृन्तादिबन्धनम् ॥ ).

(४) प्रपा. १०१; संम. १० ; विपा. ४८ ; कृम. ८०९. (५) संर ६५९.

(६) मिता. ३।२० ; स्मृच. १२१ ; गमा. १२४ ; मुक्ता. २७८ ; सिन्धु. ८२९ ; संकौ. ३ ; आन. ९८ ; संग. ३६४ ; संव. ७ ; संर. ६५९ : ६६२ व्यासः.

(७) मिता. ३।२० ; स्मृच. १२१ ; गमा. १२४ ; मुक्ता. २७८ पाङ्गा (पाङ्गां) ; सिन्धु. ८२९ ; संकौ. ३ ; आन. ९८ ; संग. ३६४ ; संव. ७ ; संर. ६६२.

(८) अत्रिसं. २०२.

[1]वर्जयेन्मधु मांसं च पात्रे खर्वे* च भोजनम् ।
गन्धमाल्ये दिवास्वापं ताम्बूलं चाऽऽस्यशोधनम् ॥

*अखर्वम् अह्रस्वं पात्रम् । आस्यशोधनं मुखशोधनम् । संर. ६५९

[2]दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् ।
पात्रेण वाऽप्यखर्वेण खर्वं दभ्रं विदुर्बुधाः ॥

दभ्रं नीचं पर्णादि । प्रपा. १०१

[3]पाणिपात्रजलस्पर्शपादशौचादि वर्जयेत् ।
न शय्यां च प्रजादोषमन्यथा श्रुतिचोदनात् ॥

* मूलवचने ' पात्रे खर्वे ' इत्येव पाठः संस्काररत्नमालायामन्यत्र च सर्वत्र मुद्रित उपलभ्यते, न कुत्रापि ' पात्रेऽखर्वे ' इति सावग्रहचिह्नः । तथा चास्मिन्व्याख्याने खर्वह्रस्वशब्दयोरादावकारसंयोजनं लेखकादिप्रमादमूलमित्येका संभावना । इयं चापरा– रत्नमालायां संगृहीतेषु वचनेषु कुत्रापि खर्वपात्रभोजननिषेधो नास्ति, खर्वपात्रपानमेव सर्वत्र निषिध्यते । खर्वपात्रभोजननिषेधपरः स्मृतिमञ्जरीपाठो न रत्नमालासंमत इत्यग्रे स्पष्टम् । न च पानं भोजनस्याप्युपलक्षणं रत्नमालाकृतोऽभिमतमिति वाच्यम्, हिरण्यकेशिगृह्यसूत्रव्याख्यानावसरे ' श्रुतौ पर्णेन पानस्यैव निषेधनात् पर्णे भोजनस्य निषेधो नास्तीत्यवगम्यते ' इति तदुक्त्या तुल्यन्यायेन सर्वत्रास्मिन्प्रकरणे पानार्थकशब्दस्य स्वार्थपरत्वस्यैव तदभिमतस्यावगमात्, ' खर्वे शरावे भुञ्जीत ' इति खर्वशरावनिषेधफलकस्मृतिमञ्जरीपाठस्थाने ' खर्वपात्रेऽपः साऽश्नीयात् ' इति क्वाचित्कं पाठमुल्लिख्य ' अयमेव पाठः श्रुत्यनुगुणत्वाद्युक्तः ' इत्युक्तत्वाच्च । तस्मादखर्वपात्रभोजननिषेधस्य वचनान्तरविरोधाभावात् ' पात्रेऽखर्वे ' इत्येव पाठो रत्नमालाभिमत इति ।

(१) प्रपा. १०१ न्मधु मांसं (न्मधुमांसे) गन्धमाल्ये (गन्धं माल्यं) ; सिन्धु. ८०८; संर. ६५९ माल्ये (माल्यं).

(२) प्रपा. १०१ ; सिन्धु. ८०८ पू.; संर. ६५९ पू.

(३) प्रपा. १०१.

## पैठीनसिः

[1]अथ रजस्वलां परिहरेत् ॥

तस्माद्रजस्वलां नोपासीत ॥

[2]त्रिरात्रं मलवद्वासो धारयमाणा न स्नायात्। न भुञ्जीत। नाभ्यञ्ज्यात्। न नखान् निकृन्तेत्। नोपमार्जयेत्। न रज्जुं सृजेत्। न दन्तान् धावयेत्। न स्रजं धारयेत्। न गन्धान् सेवेत। न वृष्याणि। न कृणीयात्। न विभूषयीत। नाग्निं स्पृशेत्। न खर्वेण पिबेत्। न पर्णेन पिबेत्। न गोपीथम् ॥

(१) वृष्याणि वीर्यवर्धकानि द्रव्याणि। खर्वः वामहस्तः। अप. १।८०

(२) न कृणीयात् न हिंस्यात्। गोपीथः गोवत्जलादिपानम्। मर. १२०

## अङ्गिराः

[3]प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्।
न तेन तद्व्रतं तासामुपहन्येत कर्हिचित् ॥
स्वभाव एष नारीणां ज्ञेयो मूत्रपुरीषवत्।
अत ऊर्ध्वं न दुष्यन्ति चरेयुश्चैव तद्व्रतम् ॥

*[1]नियमस्था यदा नारी प्रपश्येदन्तरा रजः।
उपोष्यैव तु ता रात्रीः शेषं स्नात्वा चरेद्व्रतम् ॥
[2]हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी ॥

हविर्भुक् हविष्यभोजिनी। मर. ११९

## गर्गः

[3]आहारं गोरसानां च पुष्पालंकारधारणम्।
अञ्जनं कङ्कतं गन्धान्पीठशय्याधिरोहणम्।
अग्निसंस्पर्शनं चैव वर्जयेत्सा दिनत्रयम् ॥

(१) कङ्कतमिति तालपत्रादेरुपलक्षणम्, 'नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम्।' इति वर्ज्यानुवृत्तौ दक्षोक्तेः। कृभ. ८०९

(२) कङ्कतं केशप्रसाधनम्। पीठं च शय्या च पीठशय्ये, तयोरधिरोहणमिति विग्रहः। अत्र पीठशय्ययोर्ग्रहणात् सोपानारोहणे निषेधो न। सा रजस्वला। संर. ६५९

## सत्यव्रतः

$[4]प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥

## ऋष्यशृङ्गः

[5]संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ॥

द्वादशीव्रतमित्युपलक्षणम्, 'प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्। न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥'

---

(१) गृर. ४०८.

(२) अप. १।८० पृ. १०५ (त्रिरात्रं मलवद्वस्त्रधारणम्, न स्नायात्, नाभ्यञ्ज्यात्, न नखान्निकृन्तेत्, न रज्जुं सृजेत्, न दन्तान् धावेत्, न स्रजं धारयेत्, न गन्धान् सेवेत, न वृष्याणि, न खर्वेण पिबेत्); गृर. ४०८ धारय (धार्य) नाभ्यञ्ज्यात् (नाञ्ज्यात्) नोप (नाप) सृजेत् (स्पृशेत्) (न स्रजं धारयेत्०) (न वृष्याणि०) (न विभू...शेत्०) पर्णेन पिबेत् (पर्णैश्च न प्रयायिणीम्); मर. १२० (न भुञ्जीत०) (न दन्तान् धावयेत्०) (न वृष्याणि०) (न विभू...शेत्०) पीथम् (पीथेन); गप. ४६३ (मलवद्वासो धारयमाणा नोपमार्जयेत्, न स्रजं धारयेत्, न गन्धान् सेवेत, न विभूषयीत, नाग्निं स्पृशेत्).

(३) अङ्गिस्मृ. २४–२५.

* ऋष्यशृङ्गवचने संरव्याख्यानं द्रष्टव्यम्।

$ व्याख्यानमृष्यशृङ्गवचने द्रष्टव्यम्।

(१) अङ्गिस्मृ. ५०; संर. ६६३ ष्यैव तु ता (ष्य चतुरो) शेषं स्नात्वा (स्नात्वा शेषं).

(२) मिता. ३।२०; मर. ११९ वा (वाऽपि); संग. ३६२.

(३) सिन्धु. ८०८–८०९ विष्णुधर्मे; संर. ६५९.

(४) संर. ६६३.

(५) मुक्ता. ८४८ कौर्मे; संर. ६६३.

इति सत्यव्रतोक्तेः । सत्यव्रतवचनस्यायमर्थः– नवरात्रमासोपवासादिदीर्घकालसाध्यकाम्यव्रतवती नारी मध्ये रजः पश्यति तदोपवासादि कुर्यादेव, तद्दिनसाध्यपूजादिकं तु पञ्चमेऽहनि कुर्यात्, "पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि ।' इति वचनात् अतिक्रान्तपूजादानादि पञ्चमेऽहनि कुर्यात्" इति माधवोक्तेः । हेमाद्रिस्तु– 'गर्भिणी सूतकी चैव कुमारी वाऽथ रोहिणी । यदाऽशुद्धा तदाऽन्येन कारयेत् प्रयता सती ॥' इति पाद्ममेवं व्याचख्यौ—लिङ्गस्याविवक्षितत्वात्पुमान्वा स्त्री वाऽशुद्धावुपवासपूजादियुक्ते व्रते स्वयमुपोष्य पूजाद्यन्येन कारयेदिति । तिथ्यादिनियतकाल(वि)शेषविहितेष्वेवम् । अन्येषु तु कोकिलादिव्रतेषु 'पञ्चमेऽहनि' इत्यादि । किंच, एकादश्यादौ पञ्चषाशौचपाते मासान्ते पारणापत्तिर्मासोपवासान्ते पञ्चषाशौचपाते जीवनासंभवश्च । यत्तु– 'नियमस्था यदा नारी प्रपश्येदन्तरा रजः । उपोष्य चतुरो (? तस्रो) रात्रीः स्नात्वा शेषं चरेद्व्रतम् ॥' इत्यङ्गिरसो वचनम्, यच्च हारीतवचनम्– 'नियमस्था यदा नारी रजः पश्येत्कथंचन । त्रिरात्रं तु क्षपेदूर्ध्वं व्रतशेषं समापयेत् ॥' इति, तद्द्विधवोपवासविषयम्, तासां तत्र भोजननिषेधादिति केचित् । अन्ये तु सत्यव्रतवचने दीर्घतपसामिति विशेषणोपादानाद्द्वादशीव्रतव्यतिरिक्तसकलैकाहोपवासविषयोऽयं निषेधः । त्रिरात्रनवरात्रादिदीर्घव्रतेषु तु रजोमध्य एव पारणेत्याहुः । अपरे तु दीर्घतपःशब्देनैकाहोपवासस्यापि ग्रहणम्, नक्ताद्यपेक्षयैतस्यापि दीर्घत्वात् । तेनैकाहोपवासस्यापि रजोमध्य एव पारणेत्याहुः । संर. ६६३–६६४

### गालवः

[1]'विधवाया रजोवत्या अपि स्नानादयो न हि ॥

आदिशब्देन प्रलेखनादि । संर. ६५८

### देवरातः

[2]'वर्जयेन्मधु मांसं च पात्रे खर्वे च भोजनम् ।
गन्धमाल्यं दिवास्वापं ताम्बूलं कांस्यभाजनम् ॥

(१) संर. ६५८. (२) संर. ६५९.

सं. का. २९१

कांस्यभाजननिषेधेन सौवर्णराजताद्यभ्यनुज्ञा गम्यते । संर. ६६०

### स्मृत्यन्तरम्

[3]'भूमौ कार्ष्णायसे पाणौ शरावे दग्ध एव वा ।
रजस्वला तु भुञ्जीत लौहेन तु जलं पिबेत् ॥

[4]'रजस्वला तु ग्रहनक्षत्रनिरीक्षणदिवास्वापमधुमांसताम्बूलनखनिकृन्तनदन्तधावनप्रवासस्नानाभ्यञ्जनानि वर्जयेत् ॥

### ब्रह्माण्डपुराणम्

[5]'पटाच्छादनसंयुक्ता गृहाभ्यन्तरमाविशेत् ।
न कस्यचिन्मुखमपि द्रष्टुमर्हा भवेत्तु सा ॥

रम्भापत्रेण चाश्नीयादन्नमामिषवर्जितम् ।
न च्छिन्द्याच्च नखैः किंचिच्च सुवेषप्रधारिणी ॥

### स्कन्दपुराणम्

'स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।
स्ववाक्यं श्रावयेन्नापि यावत् स्नाता न शुध्यति ॥

### पद्मपुराणम्

*'गर्भिणी सूतकी चैव कुमारी वाऽथ रोहिणी ।
यदाऽशुद्धा तदाऽन्येन कारयेत्प्रयता सती ॥

* व्याख्यानमृष्यशृङ्गवचने द्रष्टव्यम् ।

(१) संर. ६५९.

(२) कूम. ८२९.

(३) गप. ४६५.

(४) मपा. १९३–१९४ स्ववा (स्वं वा); मर. ११९ स्नाता न शुध्यति (स्नानेन शुद्धितः); संम. ७५ न शुध्य (विशुध्य); संग. ३६२ स्नाता न (स्नानेन); कूम. ८०९ स्नाता न (स्नानान्न) योगी; संर. ६७५ याज्ञवल्क्यः.

(५) संर. ६६३.

## अनिर्दिष्टकर्तृकवचनम्

*[1]त्रिरात्रं प्राशयेदन्नं न चेद्दोषवती भवेत् ॥

'त्रिरात्रं प्राशयेदन्नं०' इति वचनात् यस्या दोषो नास्ति तां दिनत्रयमपि पात्रेण वा अञ्जलिना वा अन्नं प्राशयेत् भोजयेदित्यर्थः। दोषं च बोधायन आह— 'रजस्वला तु संस्पृष्टा चण्डालान्त्यश्ववायसैः। तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यति ॥' इति।

आन. ९७

## स्मृत्यर्थसारः

[2]कृच्छ्रचान्द्रादिव्रतस्थायाः स्नाने नैमित्तिके प्राप्ते रजोदृष्टौ पात्रान्तरिततोयेन स्नानं ततोऽद्भिः सिक्तगात्रा वस्त्रनिष्पीडनमन्यवस्त्रधारणं $ वा कृत्वा(? चाकृत्वा) व्रतं समाचरेत् ॥

[3]रजस्वला त्वञ्जनाभ्यञ्जनस्नानप्रचारदन्तधावननखनिकृन्तनरज्जुस्पर्शव्यापारताम्बूलमधुमांसगन्धपुष्पदिवास्वापग्रहनक्षत्रनिरीक्षणादि वर्जयेत्। पाणौ मृन्मये वा खर्परे वा भुञ्जीतेत्यादिनियमस्तथा च ॥

## स्मृतिमञ्जर्याम्

[1]तस्मादुदक्यया सार्धमेकगेहे न संवसेत्।
प्रतिग्रहं च संवादमस्या अन्नं च वर्जयेत् ॥
[2]रजस्वला पतिं गच्छेच्चण्डालो जायते सुतः।
अरण्ये तां यदा गच्छेत्तज्जः स्तेनस्तदा भवेत् ॥
[3]पराङ्मुखीं तां गच्छेच्चेत्तज्जो ह्रीतमुखी भवेत्।
पराङ्मुख्या उदक्याया जातः सोऽप्यपगल्भकः ॥
[4]आर्तवे यदि सा स्नाति जातस्त्वप्सु मरिष्यति।
तैलेनाभ्यञ्जनं कुर्यात् कुष्ठरोगी प्रजायते ॥
[5]आर्तवे निखनेद्भूमिमल्पायुर्जायते खलः।
नेत्रयोरञ्जनं कुर्यात् काणो वाऽन्धश्च जायते ॥
[6]पुष्पिणी दन्तधावी स्याज्जायते श्यावदन्तकः।
नखानां कृन्तनं कुर्यात् कुनखी जायते सुतः ॥
[7]ऋतौ रज्ज्वादिकच्छेदं कुर्यात्क्लीबः प्रजायते।
तन्तुना सृजते रज्जुमुद्बन्धनमृतो भवेत् ॥

---

* यद्यपीदं वचनं मुक्ताफले कतिपयसंग्रहवचनान्ते संगृहीतम्, तथापि रजस्वलाशुद्धिविषयकपूर्ववचनैः सहास्य संगत्यभावात् मुक्तागृहीतान्येव वचनानि तेनैव क्रमेण संगृह्णाने आचारनवनीते इतिकारेण संग्रहाधिकारं समाप्य संग्रहवचनं व्याख्याय तदुत्तरमेतद्वचनोद्धाराच्चास्य सांग्रहत्वाभावं निश्चित्य अनिर्दिष्टकर्तृकत्वेनात्र संगृहीतमस्माभिः।

$ अयं पाठः प्रपा– विपापाठश्च माधवाचार्यकमलाकरानन्तदेवादिभिरुपद्वादशैर्निबन्धकारैः पराशरीयत्वेन वा वैयासिकत्वेन वोद्धृतेन नैमित्तिकस्नानविषयकेण 'न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत्।' इति वचनेन विरोधात्प्रामादिक इति भाति। अतः 'चाकृत्वा' इति पाठं संभावयामः।

(१) मुक्ता. २७८ रात्रं (वारं); आन. ९७.

(२) स्मृसार. १२६; प्रपा. १०२ (स्नाने नैमित्तिके प्राप्ते रजोदृष्टौ पात्रान्तरिततोयेन स्नात्वाऽद्भिः सिक्तपात्रसाङ्गोपाङ्गवस्त्रपीडनमन्यवस्त्रधारणं च कृत्वा व्रतं चरेत्); विपा. ५० (स्नाने नैमित्तिके प्राप्ते रजोदर्शने पात्रान्तरिततोयेन स्नात्वाऽद्भिः सिक्तगात्रा साङ्गोपाङ्गा वस्त्रमनिष्पीड्य अन्यवस्त्रधारणं कृत्वा व्रतं चरेत्).

(३) स्मृसार. १२७.

(१) प्रपा. १०१; संग. ३६२; संर. ६५७ वसेत् (विशेत्).

(२) प्रपा. १०१ पू.; संग. ३६२ च्चण्डा (च्चाण्डा) पू.; संर. ६५७ ला पतिं ग (लां पतिर्ग).

(३) संर. ६५७.

(४) प्रपा. १०१ प्रथमपादे (आर्तवाभिप्लुताऽस्नाता); संग. ३६२ प्रपावत्; संर. ६५७ जातस्त्वप्सु (तज्जातोऽप्सु).

(५) प्रपा. १०१; संग. ३६२ निखने (चेत्खने) खलः (नरः); संर. ६५८ निखने (प्रलिखे) न्धश्च जा (न्धः प्रजा).

(६) प्रपा. १०१; संग. ३६२; संर. ६५८ प्रथमपादे (दन्तानां धावनं कुर्यात्).

(७) प्रपा. १०१; संग. ३६२ तन्तुना (तन्तूनां); संर. ६५८ प्रथमपादे (रज्ज्वादिकच्छेदनं चेत्) तन्तुना (तन्तुभिः).

[१]पर्णपात्रेऽन्नमश्नीयादुन्मादी जायते सुतः।
खर्वे शरावे भुञ्जीयाद्वामनो वा प्रजायते ॥
'ऋतौ पात्रेऽपः साऽश्नीयादुन्मादी जायते सुतः।
खर्वपात्रेऽपः साऽश्नीयाद्वामनोऽसौ प्रजायते॥' इत्यपि क्वचित्पाठः। अयमेव पाठः श्रुत्यनुगुणत्वाद्युक्तः।

संर. ६५८

[२]उदक्या पललं क्षौद्रं गन्धं पुष्पं घृतं त्यजेत्।
खर्वपात्रे न भुञ्जीयात्तोयमञ्जलिना पिबेत् ॥
[३]प्रवासं सार्तवा नारी ग्रहाणामीक्षणं त्यजेत्।
दिवानिद्रां च ताम्बूलं तालवृन्तादिबन्धनम् ॥
[४]शौचादिशोधनं जह्यात् प्रजादोषकरं स्मृतम्।
कांस्यपात्रेऽन्नमश्नीयात् कठिनं क्षीरवर्तितम् ॥
चर्मकाष्ठमये वाऽपि पादुके चाधिरोहयेत्।
एकमु(? एवमु)कप्रकारेण तिस्रो रात्रीर्व्रतं चरेत् ॥

## भावप्रकाशे

[५]आर्तवस्रावदिवसाद्भवेत् सा ब्रह्मचारिणी।
शयीत दर्भशय्यायां पश्येदपि पतिं न च ॥
करे शरावे पर्णे वा हविष्यं त्र्यहमाचरेत् ॥

(१) प्रपा. १०१; संग. ३६२; संर. ६५८ पर्णपा (ऋतौ पा) याद्वामनो वा (त वामनोऽसौ) (ऋतौ पात्रेऽपः साऽश्नीयादुन्मादी जायते सुतः। खर्वपात्रेऽपः साऽश्नीयाद्वामनोऽसौ प्रजायते॥) इत्यपि पाठः.

(२) प्रपा. १०१; संग. ३६२ (=) गन्धं पुष्पं घृ (गन्धपुष्पघृ) खर्वपात्रे न (अखर्वपात्रे).

(३) प्रपा. १०१; संग. ३६२ (=) प्रवासं (प्रस्रवात्).

(४) प्रपा. १०१.

(५) संर. ६५८.

अश्रुपातं नखच्छेदमभ्यङ्गमनुलेपनम्।
नेत्रयोरञ्जनं स्नानं दिवास्वापं प्रधावनम् ॥
अत्युच्चशब्दश्रवणं हसनं बहुभाषणम्।
आयासं भूमिखननं प्रवासं च विवर्जयेत् ॥

## विश्वप्रकाशे

[१]दिवास्वापमलंकारं क्रीडां शिल्पक्रियां तथा।
गृहकर्म च ताम्बूलमध्वानं रात्रिभोजनम् ॥
ज्योतिषां दर्शनं स्पर्शं परपुंसां च दर्शनम्।
हसनं जल्पनं चैव वर्जयेच्च रजस्वला ॥
जल्पनं बहुभाषणम्। संर. ६७०

## रेणुकारिकाः

[२]न निषेव्यमुदक्याभिः स्नानं माल्यानुलेपनम्।
हस्ते वा मृन्मये पात्रे दिवैव लघुभोजनम् ॥
हविष्यं मधुरं चान्नं कटुतिक्तादिवर्जितम्।
एकान्ते प्राक्शिरा भूमावास्तृतायां शयीत सा ॥

## कारिका

[३]उच्छिष्टा तु द्विजातीनां रजःस्त्री यदि पश्यति।
उपवासमधोच्छिष्टे* ऊर्ध्वोच्छिष्टे त्र्यहं क्षिपेत् ॥

* 'मूत्रपुरीषोत्सर्गोत्तरम् (अकृत ?) प्रक्षालनादिशौचात्पूर्वावस्था अधरोच्छिष्टम्, भोजनोत्तरं मुखप्रक्षालनादितः प्राक्तन्यवस्था ऊर्ध्वोच्छिष्टमिति ज्ञेयम्।' इत्यादर्शपुस्तके नेने–गोपालशास्त्रिणां टिप्पणी। अधोच्छिष्टे इति संधिरार्षः।

(१) संर. ६६०.

(२) रेका. १६–१७ पृ. २.

(३) सिन्धु. ८३१.

# रजस्वलाशुद्धिः

——:०:——

## वैखानसगृह्यसूत्रम्

चतुर्थेऽहनि दन्तधावनपूर्वकं गन्धामलकादिभिः स्नानम्

[1]**चतुर्थ्यां दन्तधावनम् । गन्धामलकादिभिः स्नात्वा ... ॥**

## हारीतः

रजोदर्शनाभ्यन्तरकालतारतम्यप्रयुक्तमशुचित्व-कालतारतम्यम्

[2]**रजस्वला यदि स्नाता पुनरेव रजस्वला ।**
**अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥**

[3]**एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ।**
**विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥**

अष्टादशदिनादर्वाक् सप्तदशदिनाभ्यन्तर इत्यर्थः । एवमुत्तरत्रापि । इयं च गणना रजोदर्शनदिनादारभ्य । यत्तूक्तम्– 'चतुर्दशदिनादर्वागशुचित्वं न विद्यते। ' इति, तत्तु स्नानप्रभृति इति न विरोधः । प्रौढयौवनायास्तु अष्टादशदिनाभ्यन्तरे रजोदर्शनेऽपि त्रिरात्रमशुचित्वम् ।

*मपा. ३४८–३४९

## लघुहारीतः

चतुर्थेऽहनि स्नानाच्छुद्धिः

[4]**रजस्वला चतुर्थेऽह्नि स्नाता शुद्धिमवाप्नुयात् ॥**

* आत. , संग. मपावत् ।

(१) **वैगृ.** ३।९.

(२) **मपा.** ३४८ ; **आत.** ४६१–४६२ स्नाता (स्नात्वा) ; **विपा.** ५१ (=) ; **बाल.** ११८० पृ. २२४ (=) ; **संग.** ३६३ यदि (यदा).

(३) **मपा.** ३४८ ; **आत.** ४६२ विंशत्प्र (विंशप्र) ; **विपा.** ५२ (=) ; **बाल.** ११८० पृ. २२४ ( = ) ; **संग.** ३६३.

(४) **लहास्मृ.** १८.

## आपस्तम्बः

रोगप्रयुक्ते रजसि अशुचित्वाभावः , यावद्रजसः प्रवृत्तिस्तावद्व्यवहारबाह्यता, चतुर्षु दिवसेषूत्तरोत्तरमशुचित्वाल्पीयस्त्वम्

[1]**रोगेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्तते ।**
**अशुद्धास्तास्तु नैवेह तासां वैकारिको मदः ॥**

[2]**साध्वाचारा न तावत् सा रजो यावत् प्रवर्तते ।**
**वृत्ते रजसि साध्वी स्याद्गृहकर्मणि चेन्द्रिये ॥**

[3]**प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।**
**तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥**

## वसिष्ठः

उत्तरोत्तरदिनेऽशुचित्वाल्पीयस्त्वम् , पञ्चमदिने कर्मार्हता

[4]**चाण्डाली पतितासमाऽथ रजकी शूद्रा दिनादिक्रमा-**
**च्छुद्धा पुष्पवती च पञ्चमदिने हव्येषु कव्येषु च ॥**

## विष्णुः

चतुर्थेऽहनि स्नानाच्छुद्धिः

[5]**रजस्वला चतुर्थेऽह्नि स्नानाच्छुध्यति ॥**

(१) **आपस्मृ.** ७।२ ; **गभा.** १२३ त्यर्थं ( न्वहं ) उत्तरार्धे ( नाशुचिस्तु भवेत्तेन यस्माद्वैकारिकं मतम् ॥ ) प्रयोगपारिजाते ; **सिन्धु.** ८२०–८२१ गभावत् , संग्रहे.

(२) **आपस्मृ.** ७।३–४.

(३) **वसं.** २४।३७ ; **प्रपा.** १०२ चाण्डा (चण्डा) ; **संसौ.** १९ चाण्डा (चण्डा) समा (मिधा) शूद्रा दिनादि (शूद्रोदिता द्यु ) हव्येषु (हव्ये तु).

(४) **विस्मृ.** २२।७२.

## मरीचिः

चतुर्थेऽहनि स्नानाच्छुद्धिः, पञ्चमे कर्मार्हता

**'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला।**
**दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥**

(१) पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणार्थम्।

मिता. ३।२०

(२) यद्यपि 'शुद्धा भर्तुश्च ... शुध्यति' इति मरीचिना चतुर्थेऽहनि दैवकर्मार्हता नेति ध्वनितम्, तथाऽपि 'पञ्चमेऽहनि' इत्यस्य 'साध्वाचारा' इत्यग्रिमवाक्येन रजोनिवृत्तिकालार्थकतया 'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।' इति मनुवचने 'साध्वी गर्भाधानादिदैवकर्मयोग्या' इति व्याख्यानात् न दोषः। एवं च तत्र चतुर्थेऽह्नि गर्भाधानवत्तदङ्गभूतशान्तिरपि तत्रैवानावृत्त्या कार्या। एवं श्रौतकर्मण्यपि रजस्वलायाश्चतुर्थेऽह्नि अधिकारः, 'अथ यदा त्रिरात्रिणी स्यादथैनामुपह्वयेत' इत्यापस्तम्बसूत्रात् 'चतुर्थेऽह्नि गोमूत्रमिश्राभिरद्भिः स्नाता वासोयोक्त्रवालानि मन्त्रैर्धारयेत्' इति सोमे आपस्तम्बोक्त्या तद्वत् सर्वत्रापि श्रौतकर्मणि अविशेषेणाधिकारसिद्धेः। एवमुपनयनादौ श्रीसूक्तहोमादिना चतुर्थेऽह्नि अधिकारं वक्ष्यति। अत एव गर्भाधानादीत्यादिपदेन साध्वीपदव्याख्यानं संगच्छते। तथा च 'गम्या निवृत्ते रजसि' इत्यस्य प्रथमऋतुपरत्वेऽपि न क्षतिः।

$ कृम. ८१३–८१४

यावद्रजःप्रवृत्तिस्तावत्कर्मानर्हता

**'साध्वाचारा न तावत् स्यात् स्नाताऽपि स्त्री रजस्वला।**
**यावत् प्रवर्तमानं हि रजो नैव निवर्तते ॥**

साध्वाचारा कर्मयोग्या। स्पर्शयोग्या तु स्नानादनन्तरं भवत्येव।

† चश्रा. ८०४

वैकारिके रजस्यशुचित्वाभावः

**'रोगेण यद्रजः स्त्रीणामत्यर्थं तु प्रवर्तते।**
**अशुच्यो नैव तास्तेन येन वैकारिकं हि तत् ॥**

## मनुः

रजोनिवृत्तौ स्नानेन धर्मकृत्यार्हता

**'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥**

(१) इह रजस्वलाया रजस्युपरते स्नानेन शुद्धिराम्नाता। स्मृत्यन्तरे त्र्यहादूर्ध्वम्। तत्रैवं व्यवस्था– प्राक् त्र्यहाद्रजोनिवृत्तावपि नास्ति शुद्धिः, ऊर्ध्वमनुपरतेऽपि भवति। किं तु विशुध्यतीति प्रकृते पुनः साध्वीति वचनादनिवृत्ते रजसि वैदिककर्माधिकारानुप्रवेशो नास्ति, न पुनः स्पर्शादिनिषेधः। उक्तम्– 'आद्याश्चतस्रो निन्दिताः' इति। रजस्वला स्त्री रजस्युपरते स्नानेन साध्वी भवति शुद्धा कर्मयोग्येत्येवं पदयोजना। स्त्रीग्रहणं वर्णमात्रस्त्र्यर्थम्। पूर्वे तु श्लोका ब्राह्मणविषया व्याख्यातास्तदाशङ्कानिवृत्त्यर्थं स्त्रीग्रहणम्।

---

$ संर. कृमवत्।

(१) शंस्मृ. १६।१७ ; मिता. ३।२० स्मृत्यन्तरम् ; मपा. ३४७ (=) ; वीक. १।७९ द्वितीयपादे (अशुद्धा देवपित्र्ययोः) ; गभा. १२२ हारीतः ; चप्र. ५४ स्नानेन स्त्री (स्नाता नारी) दैवे क (देवक) याज्ञवल्क्यः ; शुत. २६२ द्वितीयपादे (अशुद्धा देवपैत्रयोः) पित्र्ये (पैत्रे) ; मच. ५।६६ याज्ञवल्क्यः ; संको. १७ मदनपारिजातोदाहृतवचनम् ; बाल. १।८० पृ. २२४ (=) ; संग. ३६३ याज्ञवल्क्यः ; कृम. ८१३ मरीचिः ; संर. ४८८ (=) उत्त : ६६१ मरीचिः ; संदी. १८७ (भागः २) मरीचिः.

† संर. चश्रावत्।

(१) चश्रा. ८०४ ; सिन्धु. ८२१ ; कृम. ८२१ ; सर. ६६६.

(२) चश्रा. ८०४.

(३) मस्मृ. ५।६६ ; मिता. ३।२० ; अप. १।७९ पृ. १०४ ; मभा. ९।३० ; स्मृच. ११७ ; चका. ७२६ ; पमा. ५०४ ; मपा. ३४७ ; मर. ११० ; गभा. १२२ ; आत. ४६१ ; शुत. २६२ ; चम. ५ ; मुक्ता. २७७ ; संको. १७ ; आन. ९७ रजस्वला (विशुध्यति) ; बाल. १।७९ पृ. २२१ ; पुम. ४३१ ; कृम. ८१३ ; संर. ६६१, ६८२.

## वृद्धमनुः

चतुर्थेऽहनि व्यवहारे शुद्धिः

[1]चतुर्थेऽहनि संशुद्धा भवति व्यावहारिकी ॥

## याज्ञवल्क्यः

त्रिरात्रमशुचित्वम्, चतुर्थदिवसे स्नानेन शुद्धिः

[2]रजःस्रावे तु नारीणां रजोदोषो दिनत्रयम् ।
चतुर्थे दिवसे स्नात्वा स्पर्शनादावनिन्दिता ॥

## नारदः

चतुर्षु दिनेष्वस्पृश्यत्वम्, पञ्चमे कर्मार्हता

[3]रजोदर्शनतोऽस्पृश्या नार्यो दिनचतुष्टयम् ।
ततः शुद्धाः क्रियास्वेताः सर्ववर्णेष्वयं विधिः ॥

क्रियासु देवपूजादि(षु) पितृकार्यादिकेषु च । संसौ. १९

## बृहस्पतिः

रागजे रोगजे द्रव्यजे च रक्ते नाशुचित्वम्, कालजे रजस्यशुचित्वम्

[4]रागजं रोगजं चैव द्रव्यजं कालजं तथा ।
यद्रागरोगद्रव्योत्थं तद्रक्तं प्राह भार्गवः ।
कालजं तु रजःसंज्ञं तस्मात्तत्रैव साऽशुचिः ॥

अशुचिरिति पदच्छेदः । तत्रैव कालजे रजस्येव सा स्त्री त्रिरात्रमशुचिर्भवतीत्यर्थः । संर. ६६४

(१) मिता. ३।२०.

(२) अप्र. ५४ दोषो दिनत्रयम् ( दोषादिना गृहम् ) स्नात्वा ( स्नाता ) दावनिन्दिता ( देव निन्दितः ) ; संग. ३६३.

(३) ज्योना. १६।१ क्रियास्वे ( क्रियाश्चै ) ; संसौ. १९ ; ज्योनि. १०९.

(४) प्रपा. १०२ साऽशुचिः (सा शुचिः) ; विपा. ५१ तद्रक्तं ( तद्रजः ) कात्यायनः ; संर. ६६४.

उत्तरत्रापि यत्र विशेषप्रमाणं नास्ति तत्रापि वर्णमात्रविषयतैव, यथा 'नृणामकृतचूडानाम्' इति । ‡ मेधा.

(२) रजस्वला स्त्री रजोनिवृत्तौ सत्यां स्नाने साध्वी अदृष्टार्थकर्मयोग्या भवति । स्पर्शयोग्या पुनः 'त्रिरात्रं रजस्वलाऽशुचिर्भवति' इति वसिष्ठस्मरणात् चतुर्थे एवाह्नि स्नानं कृत्वा शुद्धा भवति । गोरा.

(३) साध्वी गर्भाधानादिविहितकर्मयोग्येत्यर्थः । †अप.

(४) रजस्वला तु स्त्री रजस्युपरते स्नाता सती धर्मकार्येषु शुध्यति यदि सा साध्वी भवति मनसाऽपि पतिं न व्यभिचरति । अन्यथा त्वागामिरजःपर्यन्तमेव तस्या आशौचमित्यर्थः । रजस्युपरते इति वचनादनुपरते रजसि चतुर्थेऽह्नि स्नाताऽपि न धर्मकृत्ये शुध्यतीत्युक्तम् । मवि.

(५) रजस्वला च स्त्री रजसि निवृत्ते सति पञ्चमे दिने स्नानेनादृष्टार्थकल्पनयोग्या भवति । स्पर्शयोग्या तु त्रिरात्रव्यपगमे चतुर्थेऽहनि कृतस्नानेनैव शुद्धा भवति । ममु.

(६) 'ऋतुः स्वाभाविकः' इत्यत्राशुद्धिरुक्ता, न शुद्धिः, तत्राऽऽह– रजसि उपरते निवृत्ते स्नानेन मैथुनयोग्या, साध्वीति विशेषणात् पञ्चमेऽहनि तासामदृष्टार्था शुद्धिः, 'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥' इति याज्ञवल्क्योक्तेः । मच.

(७) रजस्युपरते त्रिरात्रेऽतीते इत्यर्थः । स्नानेन, विशुध्यतीत्यनुवर्तते । नन्द.

(८) रजसि उपरते निवृत्ते पुनः रजोद्गमे स्नानेन साध्वी शुद्धा भवेत् । असाध्वी चेदृत्वन्तरपर्यन्तमशुद्धा स्यात् । माच.

‡ मिता., ममा., स्मृच., मुक्ता., आन. मेधागतम् ।

† चका., पमा., मपा., मर., गभा., आत., चम., संकौ., कृभ., संर. अपवत् ।

रागज–रोगज–द्रव्यज–कालजानां लक्षणानि, विंशदिनोत्तरं भूयोरजोदर्शने त्रिरात्रमशुचित्वम्, रोगजे अशुचित्वाभावः

[1]अर्वाक्प्रसूतेरुत्पन्नं मेदोवृद्ध्याऽङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं प्रजोत्क्लेदसमुद्भवम् ॥
[2]पित्तादिदोषवैषम्यादसकृत् संप्रवर्तते ।
रोगजं तत् समुद्दिष्टमथ द्रव्यजमुच्यते ॥
[3]भवेद्यद्धातुवैषम्यहेतुद्रव्योपभोगजम् ।
तद्द्रव्यजं समुद्दिष्टमथ कालजमुच्यते ॥
[4]आरभ्य चाऽऽर्तवदिनादेकविंशतिवासरे ।
मासादूर्ध्वं रजो यत्स्यात्तत्कालजमुदाहृतम् ॥
[5]रजस्वला यदा नारी पुनरेव रजस्वला ।
सा त्रिंशतिदिनादूर्ध्वं त्रिरात्रमशुचिर्भवेत् ॥
[6]रोगेण यद्रजः स्त्रीणामन्वहं हि प्रवर्तते ।
नाशुचिस्तु भवेत्तेन यस्माद्वैकारिकं मतम् ॥

विकारात् जातं वैकारिकम् । रोगेणेति वचनं रागज-द्रव्यजयोरुपलक्षणम् । अन्वहमिति श्रवणात् मध्ये व्यवधाने यदि प्रायो विंशतिदिनोत्तरमेव सा रजोवती तदा विंशतिप्रभृति त्रिरात्रम्, ऊनविंशे द्व्यहम्, अष्टादशे एकरात्रम्, सप्तदशदिनपर्यन्तं स्नानमात्रमिति पूर्वोक्तव्यवस्थाऽत्र ज्ञेया । यदि तु षोडशदिनात् प्रागेव प्राचुर्येण रजोवती तदा त्वेकादशे एकरात्रम्, द्वादशे द्विरात्रम्, त्रयोदशप्रभृति त्रिरात्रमित्येषा व्यवस्था । यदि तु कदाचित् प्रथमरजोदर्शनमारभ्यैवान्वहं रजोदर्शनं तदाऽप्येष एव प्रकारः । संर. ६६५–६६६

रजोनिश्चये एवाशुचित्वम्

[1]निःसंदेहं परिज्ञात आर्तवेऽशुद्धिकारणम् ।
संदेहमात्रे शुद्धिः स्यादित्युवाच प्रजापतिः ॥

पूर्वत्र अशुद्धिरिति पदच्छेदः । संर. ६६६

## भृगुः

अकालजे रजसि दोषाभावः

[2]अकाले यद्भवेत् स्त्रीणां शुचि तत्तु विनिर्दिशेत् ।
अशुद्धं तद्विजानीयान्मासि मासि भवेत्तु यत् ॥

## कात्यायनः

उत्तरोत्तरमशुचित्वाल्पीयस्त्वं दिनत्रये, चतुर्थे भर्तारं प्रति शुचित्वम्, पञ्चमे कर्मार्हता, रात्रौ रजोदर्शने प्रथमाहादिनिर्णयः, आतुरास्नानं कोष्णवारिणा

[3]रजस्वला यदा नारी त्रिरात्रमशुचिर्भवेत् ।
प्रथमेऽहनि चाण्डाली द्वितीये रजकी स्मृता ।
तृतीयेऽहनि शूद्री स्याच्चतुर्थेऽहनि शुध्यति ॥

---

(१) प्रपा. १०२ प्रजो ( पक्षो ) ; विपा. ५१ मेदोवृद्ध्या ( मेदो वन्ध्या ) कात्यायनः ; संग. ३६१ ; कुभ. ८२० (=) प्रजो ( मेदो ) ; संर. ६६४ प्रजोत्क्ले ( मज्जामे ).

(२) प्रपा. १०२ ; विपा. ५१ कात्यायनः ; संग. ३६१ चतुर्थचरणो नास्ति ; संर. ६६५ कृत् संप्र ( कृद्यत्प्र ) रोगजं तत् ( तद्रोगजं ).

(३) प्रपा. १०२ पूर्वार्धे ( द्रव्यजं धातुवैषम्यहेतु द्रव्येण भोगजम् । ) पू. संग्रहे ; विपा. ५१ भवेद्यद्धा ( द्रव्यजं धा ) पू. कात्यायनः ; संर. ६६५.

(४) प्रपा. १०२ दिनादे ( दिनाच्चै ) संग्रहे ; विपा. ५१ कात्यायनः ; आन. १०० चाऽऽर्तवदिनादे ( वाऽऽर्तवदिनमे ) मासादू ( मासे चो) ; संर. ६६५.

(५) प्रपा. १०२ संग्रहे ; विपा. ५१ कात्यायनः ; आन. १०० यदा ( तु या ) सा विंशतिदि ( एकविंशद्दि ) ; संर. ६६५.

(६) प्रपा. १०२ उत्तरार्धे ( नाशुचिस्तु ततस्तेन तस्या वैकारिकं मलम् ॥ ) संग्रहे ; सिन्धु. ८२०–८२१ संग्रहे ; विपा. ५१ हि प्र ( संप्र ) उत्तरार्धे ( नाशुचिः स्त्री ततस्तेन यतो वैकारिकं मलम् ॥ ) कात्यायनः ; संर. ६६५ उत्तरार्धे (नाशुचिः स्यात्ततस्तेन यतो वैकारिकं मतम् ॥ ).

(१) संर. ६६६.

(२) मभा. ९३०.

(३) प्रपा. १०२ चाण्डा ( चण्डा ) ; विपा. ५० रजकी स्मृता ( ब्रह्मघातिनी) ऽहनि शूद्री स्याच्च ( रजकी प्रोक्ता च ).

[1]भर्तुः शुद्धा चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

[2]रात्रौ तृतीयभागात् प्राग्यदि नारी रजस्वला ।
पूर्वेण स्नानतः शुध्येदूर्ध्वं चेदुत्तरेण तु ॥

[3]चतुर्थे दिवसे स्नायादातुरा कोष्णवारिणा ॥

[4]रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात् ॥

## व्यासः

चतुर्थदिवसे शुद्धिविधिः

[5]स्नायात्तु सा त्रिरात्रान्ते सचैलमुदिते रवौ ।
विलोक्य भर्तृवदनं शुद्धा भवति धर्मतः ।
कृतशौचा पुनः कर्म पूर्ववच्च समाचरेत् ॥

## देवलः

आतुरायाः शुद्धिविधिः

[6]आतुरा चेदृतुमती तस्याः स्नानं कथं भवेत् ।
स्पृष्ट्वा तु तां परा स्नायाद्दशकृत्वो ह्यनातुरा ।
वासोभिर्दशभिश्चैव परिधाप्य यथाक्रमम् ॥
ब्राह्मणान् भोजयित्वाऽथ पुण्याहेन विशुध्यति ।
आतुराणां तु सर्वेषामेवं शुद्धिर्विधीयते ॥

## उशना

आतुरायाः शुद्धिविधिः

[7]ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्मणा ॥

[1]चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥

[2]दश द्वादशकृत्वो वा आचामेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥

[3]दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति ।
आतुराणां च सर्वेषामेवं शुद्धिर्विधीयते ॥

## प्रजापतिः

सूतिकाया रजोदर्शने शुद्धिनिर्णयः, रजसोऽज्ञाने संदेहे निश्चये च शुद्धिनिर्णयः, दिवा रात्रौ वा रजोदर्शने त्रिरात्रगणनाप्रकारः

[4]प्रसूतिका तु या नारी स्नानतो विंशतेः परम् ।
आर्तवी रजसा प्रोक्ता प्राक् तु नैमित्तिकं रजः ॥

[5]न तु नैमित्तिकेन स्याद्रजसा स्त्री रजस्वला ।
रजस्युपरते तत्र स्नानेनैव शुचिर्भवेत् ॥

---

(१) प्रपा. १०२ ; विपा. ५०–५१.

(२) प्रपा. १०३. (३) संर. ६६२.

(४) स्मृच. १५, ११७ ; चका. ७२५ ; मुक्ता. ७४ : २७७ स्नानाच्छु ( स्नात्वा शु ).

(५) व्यास्मृ. २।४०–४१ स्नायात्तु ( स्नायीत ) ; संवी. १८७ ( भागः २ ) तृतीयार्धं नास्ति.

(६) संग. ३६४.

(७) समु. ९ चतुर्थपादे ( शुध्यते केन वारिणा ) पराशरः ; मिता. ३।२० ; स्मृच. १२१ च्छौचं (त्स्नानं) केन ( तेन ) ; पमा. १६९ ( खण्डः २ भागः १ ) ; मुक्ता. २७९ ; सिन्धु. ८२९ ; विपा. ५३ च (ऽपि) ; आन. ९९ ; संर. ६६२.

(१) मिता. ३।२० चैला ( चेला) ; स्मृच. १२१ ; पमा. १६९ ( खण्डः २ भागः १ ) स्नात्वा पु ( चैव पु ) ; मुक्ता. १७९ ; सिन्धु. ८२९ ; विपा. ५३ मितावत् ; आन. ९९ मितावत् ; संर. ६६३.

(२) मिता. ३।२० आचा (आच) भवेत्तु (भवेच्च); स्मृच. १२१ च ( तु ) ; पमा. १६९–१७० ( खण्डः २ भागः १ ) ; मुक्ता. २७९ आचा (ह्याचा) तृतीयपादे ( अन्यान्यानि च वासांसि ) ; सिन्धु. ८२९ ; विपा. ५३ ; आन. ९९ मुक्तावत् ; संर. ६६३ आचा (ह्याच).

(३) मिता. ३।२० पू. ; स्मृच. १२१ पू. ; पमा. १७० (खण्डः २ भागः १) पू. ; मुक्ता. २७९ पू. ; विपा. ५३ च सर्वेषा ( तु सर्वासा ) ; आन. ९९ पू. ; संर. ६६३.

(४) पमा. १६७ ( खण्डः २ भागः १ ) ; मुक्ता. २७७ ; संर. ६६६.

(५) पमा. १६७ ( खण्डः २ भागः १ ) ; मुक्ता. २७७ उत्त. ; संर. ६६६ पूर्वार्धे ( तत्तु नैमित्तिके न स्यादाशौचमिति सूरयः । ) पू.

[1]अविज्ञाते मले सा च मलवद्वसना यदि ।
कृतं गेहेष्वदुष्टं स्याच्छुद्धिस्तस्यास्त्रिरात्रतः ॥

शुद्धिस्तस्यास्त्रिरात्रत इति । यदा ज्ञायते ततस्त्रिरात्रादित्यर्थः । 'शुद्धिर्न स्यात्' इति वा पाठः । तदा प्राजापत्यादिकमधिकं कल्प्यमित्यभिप्रायः । कृभ. ८३०

[2]निःसंदिग्धे परिज्ञाते चाऽऽर्तवे शु(?ऽशु)द्धिकारणम् ।
संदिग्धमात्रे स्नानं स्यादित्युवाच प्रजापतिः ॥

[3]अतो दिवा वा रात्रौ वा मलवद्वसना यदि ।
तद्दिनादि त्रिरात्रं स्यान्न संख्या नाडिकावशात् ॥

[4]तृतीयभागे संप्राप्ते मलं स्यान्निशि चेत् स्त्रियाः ।
प्रभातात्तु त्रिरात्रेण शुद्धिं तस्या विनिर्दिशेत् ॥

**यमः**

रजस उपरमे स्नानेन शुद्धिः, रजसोऽपरिज्ञानेऽशुचित्वाभावः पुण्याहवाचनकर्तव्यता च

[5]रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥

[6]व्यसनात्कार्यकरणान्निद्राविस्मरणादपि ।
रजःस्रावमविज्ञाय सा शुचिः पूर्वकर्मसु ॥
ज्ञाताज्ञातेषु दोषेषु अनुक्तेष्वशुभेषु च ।
पुण्याहवाचनं कुर्याद्विप्राणामनुशासनात् ॥

**भरद्वाजः**

दिनत्रयेऽशुचित्वतारतम्यम्, चतुर्थेऽहनि शुद्धिः

[1]प्रथमेऽहनि चाण्डाली द्वितीये रजकी स्मृता ।
तृतीयेऽहनि शूद्रा स्याच्चतुर्थेऽहनि शुध्यति ॥

**पराशरः**

चतुर्थेऽहनि स्नानेन शुद्धिः, रजोनिवृत्तौ कर्माधिकारः, रोगजेऽशुचित्वाभावः, दिनत्रये दोषतारतम्यम्, आतुराशुद्धिः, पुनारजोदर्शनेऽशुचित्वकालव्यवस्था

[2]स्नाता रजस्वला या तु चतुर्थेऽहनि शुध्यति ।
कुर्याद्रजोनिवृत्तौ तु दैवपित्र्यादि कर्म च ॥

इदानीं रजोनिमित्तां शुद्धिं दर्शयति– स्नातेति । रजोदर्शनमारभ्य दिनत्रयं नास्ति शुद्धिः । चतुर्थेऽहनि स्नाताया रजोनिवृत्त्यभावेऽपि भर्तुः शुश्रूषादौ शुद्धिः । पञ्चमेऽहनि दैवपित्र्ययोः । तदाहाऽऽपस्तम्बः– 'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥' इति । कानिचिद्दिनानि रजो यद्यनुवर्तेत तदा तन्निवृत्तिपर्यन्तं दैवपित्र्ययोः शुद्धिर्नास्ति । निवृत्ते तु रजसि दैवं पित्र्यं च कर्तव्यम् । पमा.

[3]रोगेण यद्रजः स्त्रीणामन्वहं तु प्रवर्तते ।
नाशुचिः सा ततस्तेन तत्स्याद्वैकालिकं मलम् ॥

रोगजन्यानुवृत्तौ विशेषमाह– रोगेणेति । प्रतिदिनं नैरन्तर्यस्रावेण रोगजं विद्यात् । तेन रोगजेन रजसा ततः रजोदर्शनानन्तरं सा स्त्री कालप्राप्तरजसेवाशुचिर्न भवति । तत्र हेतुः– वैकालिकमिति । सामान्येन रजोयोग्यः कालो मासः, 'मासि मासि रजः स्त्रीणाम्' इति शास्त्रात् लोक-

---

(१) प्रपा. १०३ ; सिन्धु. ८३० गेहेष्वदुष्टं ( गृहेषु दुष्टं ) ; विपा. ५२ ष्वदुष्टं ( षु दुष्टं ) ; कृभ. ८३० स्तस्यास्त्रि ( र्न स्यात्त्रि ) इत्यपि पाठः .

(२) पमा. १६७ ( खण्डः २ भागः १ ) ; प्रपा. १०३ चाऽऽर्ते ( आर्ते ) ; विपा. ५२ दिग्धे (देहे) ते चाऽऽर्तवे ( ने आर्तवं ) प्रजाप ( बृहस्प ).

(३) पमा. १६७ ( खण्डः २ भागः १ ) ; प्रपा. १०३ अतो ( ततो ) रात्रौ वा ( रात्रौ तु ) यदि ( भवेत् ) स्यान्न संख्या ( स्याच्छर्वर्या ).

(४) पमा. १६७ ( खण्डः २ भागः १ ) ; प्रपा. १०३ भागे ( भागं ) चेत् स्त्रियाः ( चेदथ ) तात्तु त्रि ( तादित्रि ).

(५) यमस्मृ. ७७.

(६) संर. ६६६.

(१) संसौ. १९.

(२) पस्मृ. ७।१७ ; मुक्ता. ७५, २७७ ; आन. ९७ पित्र्यादि कर्म च (पित्र्ये च कर्मणी) : १४५ उत्त.

(३) पस्मृ. ७।१८ ; सस्मृ. ५७ तु प्र ( संप्र ) चतुर्थपादे ( तस्या वैकारिकर्म तत् ).

प्रसिद्धेश्च । यस्याः कस्याश्चित् धातुस्वभावविशेषाद्विंशतिरात्रादिकः कालविशेषः प्रतिनियतो भवति । ततो विपरीतकालो विकालः । प्रतिदिनं तत्रानुवर्तनाद्वैकालिकत्वम् । पमा.

**[1]साध्वाचारा न तावत्स्याद्रजो यावत् प्रवर्तते ।**
**रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि ॥**

रोगजन्यरजोनुवृत्तौ अस्पृश्यत्वलक्षणाशुचित्वाभावेऽपि दैवे पित्र्ये चास्त्येवाशुचित्वमित्याह— साध्वाचारेति । साधुः दैवपित्र्यर्थे पाकादिरूपः आचारो यस्याः सा साध्वाचारा । रजसि निवृत्ते पश्चात् पुरुषेण गम्या भवति, उक्तपाकादिगृहकर्मणि च योग्या भवति । पमा.

**[2]प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी ।**
**तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥**

(१) पूर्वम् ' चतुर्थेऽहनि शुध्यति ' (७।१७) इत्युक्तम्, ततः प्राचीने दिनत्रये शुद्ध्यभावं विशदयति— प्रथम इति । चण्डाल्यादिगमने यावान् प्रत्यवायः तावानुदक्यागमने इत्यभिप्रेत्य तैर्नामभिर्व्यवहारः । यथा कुण्डपायिनामयने ' मासमग्निहोत्रं जुहोति ' इति अग्निहोत्रनामनिर्देशेन नित्याग्निहोत्रधर्मातिदेशः तद्वत् । पमा.

(२) यद्यप्यत्र माधवाचार्यैः ' चाण्डाल्यादिगमने यावान् प्रत्यवायः तावानुदक्यागमने ' इत्युक्तम्, तथाऽपि अग्रे " कुण्डपायिनामयने ' मासमग्निहोत्रं जुहोति ' इति (वाक्यस्य ?) अग्निहोत्रनामनिर्देशेन नित्याग्निहोत्रधर्मातिदेशस्तद्वत् " इति युक्त्यभिधानेन चाण्डालादेर्धान्यवस्त्रपात्रादिस्पर्शे दर्शनसंभाषणादौ पङ्क्तिभोजनादौ च यावान् दोषस्तावानुदक्याया अपि लभ्यते । श्राद्धादावुदक्यानिमन्त्रणे च सहनिमन्त्रितब्राह्मणानां चाण्डालादिपङ्क्तिभोजनप्रत्यवायः, यजमानस्य तु तन्निमन्त्रणप्रत्यवायोऽपीति । कृभ. ८११–८१२

(१) पस्मृ. ७।१९ ; मुक्ता. ७५ त्स्याद्रजो (त्सा रजो) ; आन. १४५ मुक्तावत् .

(२) पस्मृ. ७।२० ; मुक्ता. ७५ घातिनी (घातकी); कृभ. ८११ चण्डा ( चाण्डा ) माधवीये स्मृत्यन्तरे.

***[1]आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।**
**स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत् स आतुरः ॥**

(१) आतुरः रोगी । स्मृच. १२१

(२) यदा ज्वरादिभिरातुरस्य रजस्वलाभिः स्पर्शने प्रत्यासन्नबन्धुमरणे वा स्नानं प्राप्नोति तदा कथं कर्तव्यमित्यत आह— आतुर इति । तत्र प्रतिस्नानमातुरस्य वासो विपरिवर्तनीयम् । पमा.

**[2]अष्टादशदिनादर्वाक् स्नानमेव रजस्वला ।**
**अत ऊर्ध्वं त्रिरात्रं स्यादुशना मुनिरब्रवीत् ॥**

अथ रजस्वलाविषये कंचिद्विशेषमाह— अष्टादशेति । रजोदर्शनमारभ्य चतुर्थे दिवसे स्नाता स्त्री पुनस्तत आरभ्य अष्टादशदिनादर्वाग्रजस्वला भवति चेत् तदा स्नानमेवाऽऽचरेत्, न तु त्रिरात्राशौचं कुर्यात् । अष्टादशदिनादूर्ध्वं रजोदर्शने त्रिरात्राशौचं कर्तव्यम् । पमा.

## अत्रिः

आतुराशुद्धिः, पुनारजोदर्शनदिनसंख्याभेदेनाशुचित्वदिनव्यवस्था, चतुर्थेऽहनि शुद्धिविधिः

**[3]आतुरस्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।**
**स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत स विशुध्येत आतुरः ॥**

* यद्यपीदं वचनं माधवेन रजस्वलाभिन्नातुरपरत्वेन व्याख्यातम्, तथापि देवलोशनोभ्याम् ' आतुराणां तु सर्वेषामेवं शुद्धिर्विधीयते । ' इत्यातुररजस्वलाशुद्धेः सर्वातुरेष्वतिदेशादेतदपि वचनमातुररजस्वलामपि विषयीकरोतीति मन्यामहे । एवमत्रिवचनमपि ।

(१) पस्मृ. ७।२१ ; समु. ९ उत्पन्ने ( उन्मुख्ये ) ; मिता. ३।२० ; स्मृच. १२१ ; मुक्ता. २७९ तुरे स्ना ( तुरस्ना ) ; सिन्धु. ८३० पू. ; आन. ९९ मुक्तावत् ; संग. ३६४ उत्तरार्धे ( स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत स विशुध्येत आतुरः ॥ ) शेषं मुक्तावत् ; कृभ. ८३० तृतीयपादे ( स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत ) उत्त.

(२) पस्मृ. १२।५० ; समु. ९ मुनि ( मनु ).

(३) पमा. १६९ (खण्डः २ भागः १ ) ; संग. ३६४ ; कृभ. ८३० आतुरस्ना ( आतुरे स्ना ) स विशुध्येत ( एवं शुध्येत्स ).

'वासोभिर्दशभिश्चैव परिधाय यथाक्रमम् ।
दद्यात्तु शक्तितो दानं पुण्याहेन विशुध्यति ॥

तत्र प्रतिस्नानमातुरस्य वासो विपरिवर्तनीयम् । तदाहात्रिः— वासोभिरिति ।

¶ पमा. १६९ ( खण्डः २ भागः १ )

'रजस्वला यदि स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥
'एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥

( १ ) यदा रजोदर्शनादारभ्य पुनः सप्तदशदिनाभ्यन्तरे रजोदर्शनं तदा अशुचित्वं नास्त्येव । अष्टादशे त्वेकाहाच्छुद्धिः । एकोनविंशे द्व्यहात् । तत उत्तरेषु त्र्यहाच्छुद्धिः । यथाऽऽहात्रिः— रजस्वलेत्यादि । यत्तु ' चतुर्दशदिनादर्वागशुचित्वं न विद्यते ।' इति स्मृत्यन्तरम्, तत्र स्नानप्रभृतित्वमभिप्रेतम्, अतो न विरोधः । अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तरकालमेव प्रायशो रजोदर्शनं तद्विषयः । यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादशदिनात् प्राचुर्येण रजोनिर्गमस्तस्यास्त्रिरात्रमेवाऽऽशौचम् । तया च यावत्त्रिरात्रं स्नानादिरहितया स्थातव्यम् ।     † मिता. ३।२०

( २ ) एषा च दिनसंख्या स्नानदिनपूर्विका, स्नाता इति वचनात् । यत्तु ' चतुर्दशदिनादर्वागशुचित्वं न विद्यते ।' इति स्मृत्यन्तरम्, तेन सह ऋतुप्रवृत्तिस्वभाववयोऽवस्थामाश्रित्याविरोधः कार्यः ।

अप. १।८० पृ. १०६

¶ कृम. पमावत् ।

† मुक्ता. मितानुवादः ।

(१) पमा. १६९ (खण्डः २ भागः १); कृम. ८३०.

(२) मिता. ३।२० ; अप. १।८० पृ. १०५ ; प्रपा. १०३ ; मुक्ता. २७७ प्रथमपादे (रजस्वलायां स्नातायां) ; संम. २२ (=) उत्त. ; कृम. ८१९-८२० : ९२८ (=) उत्त. ; संदी. १८८ ( भागः २ ) यदि ( यदा ).

(३) मिता. ३।२० ; अप. १।८० पृ. १०६ विंश (त्रिंश) ; प्रपा. १०३ विंश ( विंशा ) ; कृम. ८२० काहं ( काहः ).

'रजस्वला चतुर्थेऽह्नि मृत्तिकाषष्टिभिः पृथक् ।
शौचं कृत्वा यथान्यायं दन्तानां धावनं तथा ॥
कृत्वा तु संगवेऽतीते सचैलं स्नानमाचरेत् ।
भस्मगोमयमृद्भिश्च सर्वैरन्यतमेन वा ॥

स्मृत्यन्तरे तु ' चतुर्थेऽहनि कुर्वीत स्नानमभ्युदिते रवौ । ' इत्युदयानन्तरमेव स्नानमुक्तम् । तेन विकल्पः । सूर्योदयात्पूर्वं स्नानाचरणं तु दुराचार एव । संर. ६६२

## पैठीनसिः

चतुर्थेऽहनि स्नानेन शुद्धिः

'ब्रह्महत्याप्रमुक्तां तां चतूरात्रेण स्नातां सर्वकर्माणि कारयेत् ॥

सर्वकर्माणि दैवपित्र्यव्यतिरिक्तानि ।     गृर. ४०८

## अङ्गिराः

चतुर्थदिवसे स्नानेन स्पृश्यता, रजोनिवृत्तौ स्नानेन कर्माधिकारः, आतुराशुद्धिः, रोगजादयो रजोभेदाः तत्राशुचित्वव्यवस्था च, दिनत्रये दोषतारतम्यम्, पुनारजोदर्शनेऽशुचित्वदिनव्यवस्था, रजसः प्रवृत्तेर्निवृत्तेश्च वयोरूपः कालः

'रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात् ॥
'आतुरा चैव या नारी रजसा मलिनी भवेत् ।
चतुर्थेऽहनि संप्राप्ते स्पृष्ट्वा तामप्यनातुरः ॥
दशैकादश वारान् वा स्नानं कुर्याद्विचक्षणः ।
एवं तस्या विशुद्धिः स्यात् परिवर्तितवाससः ॥
'स्नानं रजस्वलायास्तु चतुर्थेऽहनि निर्दिशेत् ।
कुर्याद्रजसि निर्वृत्ते शौचार्थं तु ततः पुनः ॥

(१) संर. ६६१.     (२) गृर. ४०८.

(३) मिता. ३।२० ; मर. ११९ ; संग. ३६२.

(४) अङ्गिस्मृ. २२-२३.

(५) अङ्गिस्मृ. ४१ निर्दिशेत् ( शुध्यति ) चतुर्थपादे ( नानिर्वृत्ते कदाचन ) ; स्मृच. ११७ ; मुक्ता. २७६ ; आन. ९७ निर्वृत्ते ( निर्णिक्ते ).

¹रोगेण यद्रजः स्त्रीणामत्यर्थं तु प्रवर्तते ।
अशुद्धा नैव तास्तेन यस्माद्वैकारिकं हि तत् ॥

( १ ) एवमकालेऽपि रजोदर्शने द्रष्टव्यम् ।

* स्मृच. ११७

( २ ) प्रथमरजसि स्त्रीणामेकादशाद्द्वादशाद्वा वर्षादूर्ध्वं यद्रजः रागाद्रोगाद्वा द्रव्याद्वा प्रवर्तते तत् कालजमेव भवति, प्रथमरजसि विशेषज्ञानायोगात् । तत्र त्रिरात्राशुचित्वमस्त्येव । तदाह वरदराजः— 'द्रव्याद्रागाच्च रोगाद्यदजनि रजस्तद्रजः कालजं स्यात् तत्राऽऽशौचं त्रिरात्रम्' इति । द्वितीयादिरजसि तु रजोदर्शनमारभ्य पञ्चदशदिवसाभ्यन्तरे यदि पुना रजोदर्शनं भवति तस्य रागादिजन्यत्वादशुचित्वं नास्त्येव । तदूर्ध्वं रजोदर्शने सद्यो निवृत्ते स्नात्वा शुचिः । अनुवर्तमाने तु गृह एव अस्पृश्यतया पृथगवस्थानम् । तत्र एकविंशतिदिनप्रभृति रजस्वलाधर्मो भवति । आन. १००

²साध्वाचारा न तावत् सा रजो यावत्
प्रवर्तते ।
वृत्ते रजसि साध्वी स्याद् गृहकर्मणि चेन्द्रिये ॥

साध्वाचारा देवादिकर्मयोग्येत्यर्थः । स्पर्शयोग्या तु स्नानानन्तरं भवत्येव । † स्मृच. ११७

³प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी चैव चतुर्थेऽहनि शुध्यति ॥

¹आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेद्वाऽपि ततः शुध्येत् स
आतुरः ॥

²शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

यत् पुनरङ्गिरोवचनम् 'शुद्धा भर्तुश्चतुर्थे ...' इति, तत् रजोनिवृत्तिकालोपलक्षणार्थम् ।

$ स्मृच. ११७

³आ द्वादशाहान्नारीणां मूत्रवच्छौचमिष्यते ।
आऽष्टादशाहात् स्नानं स्यात् त्रिरात्रं परतोऽशुचिः ।
एतत्तु द्रव्यजे विद्याद्रोगजे पूर्वमीरितम् ॥

⁴रजश्चतुर्विधं ज्ञेयं रोगजं रागजं तथा ।
धातुजं कालजं चेति योषितां तु बुधोत्तमैः ॥
एकादशाद्द्वादशाद्वा वर्षादूर्ध्वं भवेद्रजः ।
पञ्चाशद्वत्सरादूर्ध्वं स्त्रीणां तत्तु निवर्तते ॥

## कश्यपः

पुनारजोदर्शने अशुचित्वदिनव्यवस्था, रजोदर्शने प्रथमदिननिर्णयः

⁵रजस्वला यदा नारी पुनरेव रजस्वला ।
अष्टादशाहात् प्राग्वाऽपि अशुचिः स्यात्
त्रिरात्रकम् ॥

---

* मुक्ता. स्मृचवत् ।

† मुक्ता., आन. स्मृचवत् ।

(१) अङ्गिस्मृ. ४३ त्यर्थं तु प्र (त्यन्तं संप्र) उत्तरार्धे ( अशुच्यस्ता न तेन स्युस्तासां वैकारिको मदः ॥ ) ; स्मृच. ११७ ; मुक्ता. २७७ तास्तेन ( सा तेन ) ; आन. ९९.

(२) अङ्गिस्मृ. ४४ ; स्मृच. ११७ (साध्वाचारा न तावत् स्यात् स्नाताऽपि स्त्री रजस्वला । यावत् प्रवर्तमानं हि रजो न विनिवर्तते ॥ ) ; मुक्ता. २७७ (साध्वाचारा न तावत् सा स्नाताऽपि स्त्री रजस्वला । यावत् प्रवर्तमानं हि रजोऽस्या न निवर्तते ॥ ) ; आन. ९७ मुक्तावत् .

(३) अङ्गिस्मृ. ४५.

$ मुक्ता., आन. स्मृचवत् ।

(१) अङ्गिस्मृ. ५१ कृत्वो ह्य ( कृत्वस्त्व ) स्पृशेद्वाऽपि ( च दशधा ) ध्येत् स आ ( ध्येदना ) : १४५ स्नान उ ( स्नानमु ).

(२) स्मृच. ११७ ; मुक्ता. २७७ स्नाता (स्नात्वा); आन. ९७ शुद्धा भर्तुश्च (भर्तुः शुद्धा च).

(३) पमा. १६६ ( खण्डः २ भागः १ ) आऽष्टा ( अष्टा ) ; मुक्ता. २७७ चतुर्थपादे ( त्रिरात्रात् परतः शुचिः ) ; आन. १०० ; संग. ३६३ ह्यान्नारी ( हं नारी ). (४) मुक्ता. २७७ ; आन. ९९.

(५) प्रपा. १०३ यदा (सती) अशुचिः (ह्युदक्या); विपा. ५२ ; संर. ६५५.

¹अथोदयदिनादूर्ध्वं रजोदोषवती यदा ।
अष्टादशाहात् प्राग्वाऽपि त्रिरात्रमिति निश्चयः ॥

²एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि ।
ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिनोदितम् ॥

एतत् पश्चादूर्ध्वं यस्या रजोनियमस्तद्विषयम् ।

§ संकौ. ३

³उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥

⁴अर्धरात्रावधिः कालः सूतकादौ विधीयते ।
रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ।
उत्तरांशः प्रभातेन युज्यते ऋतुसूतके ॥

⁵रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥

एतच्च रजोदर्शनपुत्रजन्मादि यद्युदयोत्तरकालमुत्पन्नं तदा तद्दिवसप्रभृत्याशौचाहोरात्रगणना कार्या । यदा तु रजन्यां रजोदर्शनपुत्रजन्मादि जातं तदाऽर्धरात्रात् प्राक् जननाद्युत्पत्तौ पूर्वदिवसैकदेशव्यापित्वेऽपि आशौचस्य तत्पूर्वदिवसप्रभृत्येव गणना कार्येति एकः कल्पः । रात्रिं त्रेधा विभज्याऽऽद्ये भागद्वये जननादौ जाते पूर्वदिनं ग्राह्यमिति द्वितीयः । प्रागुदयादित्यपरः । यथाऽऽह कश्यपः— उदिते त्वित्यादि । एतेषां च कल्पानां देशाचारतो व्यवस्था विज्ञेया । § मिता. ३।२०

¹अर्धरात्रादार्धरात्रं दिनं स्यात्सूतकादिषु ॥

आर्धरात्रम् अर्धरात्रपर्यन्तमित्यर्थः । आदिपदेन ऋतुर्गृह्यते । संर. ६६६

²उषसः प्राग्रजो यस्यास्तच्छुद्धौ पूर्वकं दिनम् ।
अहोरात्रादिभिः कालः सूतकादिषु युज्यते ॥

## ऋष्यशृङ्गः

रोगजेऽपि रजसि यथाकालं कालजस्य प्रादुर्भावः तत्राशुचित्वादेः पाल्नीयत्वं च

³रोगजे वर्तमानेऽपि काले निर्याति कालजम् ।
तस्मात्कालेऽप्रमत्ता स्यादन्यथा संकरो भवेत् ॥

## स्मृत्यन्तरम्

चतुर्थेऽहनि स्नानकालः, पुनारजोदर्शनदिनसंख्यया- ऽशुचित्वव्यवस्था, रागजादिभेदाः तल्लक्षणानि च, रक्तरजःपदार्थौ

⁴चतुर्थेऽहनि कुर्वीत स्नानमभ्युदिते रवौ ॥
⁵¶चतुर्दशदिनादर्वागशुचित्वं न विद्यते ॥

---

§ संव., संर. संकौवत् ।

(१) प्रपा. १०३ ; विपा. ५२ रजोदोषवती ( रजसा युज्यते) मिति निश्चयः ( मशुचिर्भवेत् ) ; संग. ३६३ द्वितीयपादे ( रजो दृष्टवती यदि ) चतुर्थपादे ( युवत्याः स्यात्त्रिरात्रकम् ).

(२) प्रपा. १०३ कुण्डलिनो ( कुण्डिलच्चो ) ; विपा. ५२ दशाहे त्वेकाहं ( दशे त्वहोरात्रं ) नोदि ( चोदि ) ; संकौ. ३ ; संग. ३६४ द्वि ( त्रि ) ; संव. ७ द्वि (त्रि ) ; संर. ६६५ कुण्डलिनोदितम् (कौण्डिन्यभाषितम्).

(३) मिता. ३।२० ; स्मृसा. १११ तु ( च ) ; अन्त्येष्टि. २६ ; विपा. ५३ ; कृभ. ८१९ (=).

(४) मिता. ३।२० ; अन्त्येष्टि. २६ रांशः (रोंऽशः) ऋतु ( मृत ) ; विपा. ५३ पूर्व एव तु (पूर्वगामिनौ) शेषं अन्त्येष्टिवत् ; कृभ. ८१९ रांशः ( मोंऽशः ) प्रथमार्धमनिर्दिष्टकर्तृकम् ; संर. ६६६ विपावत् कृभवच्च, प्रथमार्धे नास्ति, याज्ञवल्क्यः .

(५) मिता. ३।२० न्नाभ्युदितो ( न्नोदयते ) ; स्मृसा. १११ मितावत् ; प्रपा. १०३ विद्यामाधवीये ; अन्त्येष्टि. २६ ; धप्र. ५४ ( =) मितावत् ; विपा. ५३; संग. ३६४ (=) मितावत् ; संर. ६६७ स्मृत्यन्तरम् .

---

§ विपा., संर. मितावत् .

¶ अस्य मिता-अपव्याख्याने अत्रौ, मपाव्याख्यानं हारीते द्रष्टव्यानि ।

(१) संर. ६६६. (२) स्मृसा. १११.

(३) प्रपा. १०३ त्कालेऽप्रम ( त्काले प्रद ) ; गभा. १२३ (=) त्कालेऽप्र ( दप्यप्र ) ; सिन्धु. ८२१.

(४) संर. ६६२.

(५) मिता. ३।२० ; अप. १।८० पृ. १०६ ; मपा. ३४९(=) ; संम. २२ ( = ) न विद्यते (विधीयते) ; सिन्धु. ८२० ( = ) ; संग. ३६३( = ) ; कृभ. ९२८ ( = ).

यत्तु 'चतुर्दशदिनादर्वागशुचित्वं न विद्यते।' इति तत्र स्नानप्रभृतित्वमभिप्रेतम्। *सिन्धु. ८२०

[1]रागजं रोगजं चैव कालोत्पन्नं तथैव च।
द्रव्यजं चैव संप्रोक्तं तच्चतुर्धा प्रदृश्यते॥
अर्वाक् प्रसूतेरुत्पन्नं मेदोवृद्ध्याऽङ्गनासु यत्।
तद्रागजमिति प्रोक्तं मदोद्रेकसमुद्भवम्॥
अत्यर्थं यद्रजः स्त्रीणां तद्रोगजमिति स्मृतम्।
अष्टादशदिनादूर्ध्वं स्नानप्रभृति संख्यया।
यद्रजस्तु समुत्पन्नं तत्कालोत्पन्नमुच्यते॥
भक्ष्यद्रव्यस्य वैषम्याद्धातुवैषम्यसंभवम्।
द्रव्यजं रज इत्युक्तं तत् कादाचित्कसंभवम्॥
[2]अकाले यद्भवेत्स्त्रीणां रक्तमाहुर्मनीषिणः।
काले तु तद्रजः प्रोक्तं तस्मात्तत्रैव साऽशुचिः॥

## ब्रह्माण्डपुराणम्

दिनत्रयेऽशुचित्वतारतम्यम्, चतुर्थे शुद्धिः, पञ्चमे पाके शुद्धिः, स्नानकालः, स्नानविधिः

[3]प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति।
पञ्चमेऽहनि पाकाय संशुद्धा नात्र संशयः॥
यावत्सूर्योदयो न स्यान्न रटन्तीह पक्षिणः।
तावत्कालं समारभ्य स्नायात् सुविमले जले॥
सुप्रसन्नमनाः साध्वी चतुर्थेऽहनि शोभना।
पटाच्छादितसर्वाङ्गा ध्यायन् (? ध्यायेद्) विष्णुं प्रजापतिम्।
न कस्यचिन्मुखं पश्यन् (? पश्येत्) स्नायात्सुविमले जले॥
अन्त्यजातिमुखं दृष्ट्वा दृष्ट्वाऽन्त्य(? न्य)-प्राणिनामपि।
यदि गर्भधरा कन्या सूते पुत्रं च कुत्सितम्॥

तथा चतुर्थदिवसे श्रौतकर्मण्यधिकारो भर्तृपादसंवाहनादौ च। अपत्यगतदोषसहिष्णोश्चतुर्थेऽपि संभोगः। पञ्चमेऽहनि स्मार्तकर्मण्यधिकारः संभोगे च। सर्वमिदमस्मत्कृते कालसारे सप्रमाणं लिखितम्। गप. ४६५

## लिङ्गपुराणम्

दिनत्रयेऽशुचित्वतारतम्यम्, चतुर्थे शुद्धिः

[1]प्रथमेऽहनि चाण्डाली यथा वर्ज्या तथाऽङ्गना।
द्वितीयेऽहनि विज्ञेया यथा वै ब्रह्मघातिनी।
तृतीये (ऽहनि ?) वृषली ज्ञेया चतुर्थेऽहनि शुध्यति॥

## प्रभासखण्डे

चतुर्थे शुद्धिः, पञ्चमे कर्मार्हता

[2]शुद्धा सा तु चतुर्थेऽह्नि स्नानाचारी रजस्वला।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति॥

## अनिर्दिष्टकर्तृकवचनानि

रजोभेदाः, कालजलक्षणम्, कालजेनैवाशुचित्वम्, कालजेऽकालजे चाशुचित्वदिनसंख्याव्यवस्था, रात्रौ रजोदर्शने प्रथमदिननिर्णयः, चतुर्थेऽहनि भर्तारं प्रति शुद्धिः, पञ्चमे कर्माधिकारः

[3]रागजं रोगजं चैव द्रव्यजं कालजं तथा।
स्त्रीणां चैव रजः प्रोक्तं कालजं दोषकृद्भवेत्॥
[4]यावत्पञ्चाशदब्दानि परतो दशवत्सरात्।
मासि मासि रजः स्त्रीणां कालजं तत्प्रचक्षते॥
[5]रागजं रोगजं चैव द्रव्यजं चापि यद्भवेत्।
अकाले यदि चेत् स्त्रीणां तद्रजो नैव दुष्यति॥

---

* संग. सिन्धुवत्।

(१) पमा. १६५–१६६ (खण्डः २ भागः १).

(२) ममा. ९।३० ; स्मृच. ११८ तद्र (यद्र) ; मुक्ता. २७७ साऽशु (सा शु) तद्र (यद्र) चन्द्रिकायाम्. (३) गप. ४६५.

(१) मर. १०९–११०.

(२) पमा. ४७६.

(३) धप्र. ५४ ; संग. ३६१ उत्त.

(४) धप्र. ५४ ; संग. ३६१–३६२.

(५) धप्र. ५४ चापि (वाऽपि) ; संग. ३६२.

[1]रजस्वलायाः पुनरेव चेद्रजः
प्राग्दृश्यतेऽष्टादशवासराच्छुचिः ।
अष्टादशाहे यदि चेद्दिनद्व( ? नाद्द्व )या-
देकोनविंशे त्रिदिनात्ततः परम् ॥
रजोयुताऽष्टादशवासरे पुनः
प्रायेण या यौवनशालिनी वधूः ।
त्र्यहेण सा शुध्यति दैवपित्र्ययो
रजोनियुक्तं शुचमाप्लवे( ? रजो-
वियुक्ता शुचिराप्लवे ) सति ॥
[2]ऋतुकाले व्यतीते तु यदि नारी रजस्वला ।
तत्र स्नानेन शुद्धिः स्यादष्टादशदिनात् पुरा ॥
[3]दिनाच्चेत् षोडशादर्वाङ् नारी या चाति-
यौवना ।
पुना रजस्वलाऽपि स्याच्छुद्धा स्नानेन केवल ॥
[4]रात्रेः कुर्यात्त्रिभागं तु द्वौ भागौ पूर्ववासरे ।
ऋतौ जाते मृते चैव ज्ञेयोऽन्त्यांशः परेऽहनि ॥
[5]भर्तुः स्पृश्या चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।
पञ्चमेऽहनि योग्या सा दैवे पित्र्ये च कर्मणि ॥

## चतुर्विंशतिमतम्

रजोदर्शने प्रथमादिदिनगणनायां मतत्रयम्

[6]पूर्वांशयोस्तु रात्रौ चेज्जननं मरणं रजः ।
दृष्टं पूर्वदिनादित्वं तृतीये तूत्तरेऽहनि ॥

(१) धप्र. ५४.

(२) धप्र. ५४ ; संग. ३६४ धर्मप्रवृत्तौ.

(३) धप्र. ५४ च्छुद्धा (च्छुद्धिः) ; संग. ३६४ धर्म-प्रवृत्तौ.

(४) धप्र. ५४ रात्रेः ( रात्रौ ) ; संग. ३६४ जाते ( सूते ) धर्मप्रवृत्तौ.

(५) संसौ. १९ धर्मशास्त्रे ; संर. ६६३ योग्या सा दै ( शुद्धा स्याद्दै ) उत्त.

(६) प्रपा. १०३ दिनादित्वं (दिनं तत्र) ; संको. ३ दृष्टं ( दृष्टं ) ; संव. ७ संकौवत् .

[1]केचिद्देवोदिते सूर्ये जननं मरणं तथा ।
रजो वा दृश्यते स्त्रीणां यस्याहस्तस्य शर्वरी ॥
[2]अपरे त्वर्धरात्रात् प्राङ्मृतौ रजसि सूतके ।
पूर्वमेव दिनं प्राहुरूर्ध्वं चेदुत्तरेऽहनि ॥

एतेषां तिसृणामपि पक्षाणां देशपरत्वेन व्यवस्था ज्ञेया । ¶ प्रपा. १०३

## संग्रहः

पुनारजोदर्शनेऽशुचित्वदिनसंख्याव्यवस्था, प्रथमादिदिन-गणनायां मतभेदव्यवस्था, आतुराशुद्धिः, दिनचतुष्टये-ऽशुचित्वतारतम्यम् , स्नानस्य कालः विधिश्च

[3]त्रयोदशाहादूर्ध्वं तु युवती पुष्पिणी भवेत् ।
वयोगुणविशेषेण त्रिरात्राच्छुद्धिरिष्यते ॥
[4]ऋतुस्नाता तु या प्रौढा पुनरेव रजस्वला ।
स्नानात् सप्तदशाहे तु शौचेनैव शुचिर्भवेत् ॥
[5]अष्टादशाहे त्वेकाहं द्व्यहमेकोनविंशतौ ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥

( १ ) स्नातायाः कालान्तरे पुना रजोदर्शने त्रिरात्र-व्रताभावे व्यवस्थोक्ता तत्रैव संग्रहे— ऋतुस्नातेत्यादि । एतद्यस्याः किंचिदूने पूर्णे वा मासि रजोनियमस्तद्विष-यम् । * संको. ३

( २ ) प्रौढा गतयौवना । संग. ३६३

[6]त्रयाणामपि पक्षाणां व्यवस्था देशभेदतः ॥

¶ संको., संव. प्रपावत् ।

* संव. संकौवत् ।

(१) प्रपा. १०३ केचि (किंचि) तथा ( च वा ) ; संको. ३ ; संव. ७.

(२) प्रपा. १०३ त्वर्ध ( चार्ध ) ; संको. ३ ; संव. ७.

(३) प्रपा. १०३.

(४) प्रपा. १०३ ; संको. ३ शाहे तु ( शाहे च ) ; संग. ३६३ कश्यपः ; संव. ७ तु ( च ).

(५) प्रपा. १०३ विंशत्प्र ( विंशप्र ) ; संको. ३ ; संग. ३६३ कश्यपः ; संव. ७.

(६) संर. ६६७.

पूर्वरात्रेरन्त्यार्धमारभ्योत्तररात्रेः पूर्वार्धपर्यन्तं दिनम्, त्रिधा विभक्ताया रात्रेस्तृतीयभागमारभ्योत्तररात्रेराद्यभागद्वयपर्यन्तं दिनम्, सूर्योदयमारभ्य सूर्योदयपर्यन्तं दिनमित्येवं पक्षत्रयं सिद्धम्। तच्च देशाद्यवस्थितं ज्ञेयम्, 'त्रयाणामपि०' इति संग्रहोक्तेः। संर. ६६७

'आतुरा चेदृतुमती तस्याः स्नानं कथं भवेत्।
स्पृष्ट्वा तु तां परा स्नायाद्दशकृत्वो ह्यनातुरा॥
वासोभिर्दशभिश्चैव परिधाप्य यथाक्रमम्।
ब्राह्मणान् भोजयित्वाऽथ पुण्याहेन विशुध्यति।
आतुराणां तु सर्वेषामेवं शुद्धिर्विधीयते॥

(१) वासोभिर्दशभिः परिधाप्येत्यत्र णिचः प्रयोगात् सूतक्याः स्नानक्रमेण दशवासोभिः परिधापनं कर्तव्यमित्यर्थः। प्रपा. १०३

(२) ज्वरितायाः शुद्धिस्तु संग्रहे– आतुरा चेदिति। † संकौ. ३

'प्रथमेऽहनि चण्डाली द्वितीये सूतिका भवेत्।
तृतीये रजकी प्रोक्ता चतुर्थे पतिता यथा।
संगवान्ते चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात्॥

चतुर्थे पतितात्वातिदेशः रजो(ऽ)निवृत्तिनिबन्धन इति वेदितव्यम्, अन्यथा 'भर्तुः शुद्धा चतुर्थेऽह्नि' इति वचनविरोधात्। आन. ९७

'मृते च सूतकेऽघान्ते संगवे स्नानमाचरेत्।
संगवात् परतः स्नानमार्तवे तु विशिष्यते॥
'एकविंशतिधा लिम्प्य सर्वाङ्गं शुद्धया मृदा।
कृत्वा स्नानशतं पश्चाच्छुचिर्भवति नान्यथा।
स्नानान्ते भास्करं दृष्ट्वा पुत्रं प्रार्थ्य सुमङ्गली॥

सुमङ्गलीति विधानात् विधवानां शतद्वयनिमज्जनं द्विचत्वारिंशन्मृदा लेपश्च न्यायसिद्धः। आन. ९७

† संव. संकौवत्।

(१) प्रपा. १०३; संकौ. ३; संव. ७.

(२) मुक्ता. २७८ ये रजकी प्रोक्ता (येऽह्नि स्वधर्मस्था); आन. ९७.

(३) मुक्ता. २७७ केऽघा (के चा); आन. ९७.

(४) मुक्ता. २७८; आन. ९७.

'रजस्वला चतुर्थेऽह्नि प्रक्षाल्याङ्गोद्भवं मलम्।
दन्तानां धावनं कृत्वा संगवे स्नानमाचरेत्॥
परिधानांशुकं सम्यगपरेण जलेन तु।
घर्षणं क्षालनं कुर्याद्यथा मलविवर्जितम्॥

## स्मृत्यर्थसारः

रजसि रोगजेऽशुचित्वाभावः, दिनगणनायां मतानि तेषां व्यवस्था च, रजसो ज्ञाताज्ञातत्वेऽशुचित्वनिर्णयः, त्रिरात्रमशुचित्वम्, चतुर्थेऽहनि भर्तारं प्रति शुद्धिः, रजोनिवृत्तौ पञ्चमादिदिनेषु दैवादिकर्माधिकारः, ब्राह्मण्यादीनां शुद्धिविधिः, पुनारजोदर्शनेऽशुचित्वनिर्णयः, आतुराशुद्धिः

'रोगेण यद्रजः स्त्रीणां न तेनाशुचयः स्मृताः॥

'दिवा रजःस्रावे जनने मरणे वा तद्दिनादिकमशुचित्वं स्यात्। रात्रौ रजःस्रावादौ सत्यर्धरात्राद‍र्वाक्पूर्वदिनमित्येकः पक्षः। रात्रिं त्रेधा विभज्य पूर्वभागद्वये चेत् पूर्वदिनमित्यन्यः पक्षः। उदयात्पूर्वं चेत्पूर्वदिनमित्यपरः पक्षः। एषां पक्षाणां देशाचारतो व्यवस्था। अज्ञाते रजःस्रावे चतुर्दिनेषु ज्ञाते तु रजःस्रावादिकमशुचित्वं स्यात्। सर्वथाऽज्ञाते शुचित्वमेव। अतो ज्ञानात्पूर्वं रजस्वलास्पृष्टमदुष्टमेव। रजस्वला त्रिरात्रमशुचिः स्यात्। चतुर्थेऽहनि स्नात्वा शुध्येत्। भर्तुः स्पृश्या स्यात्। दैवे पित्र्ये च कार्ये रजोनिवृत्तौ पञ्चमादिदिने शुद्धा।

(१) प्रपा. १०३.

(२) स्मृसार. ३२.

(३) स्मृसार. ७८–७९; प्रपा. १०३ (रजस्वला षष्टिमृत्तिकाभिः शौचं कृत्वा क्षत्रादिस्त्री पादपादन्यूनमृत्तिकाभिर्विधवा द्विगुणमृत्तिकाभिः शौचं विधाय मलं प्रक्षाल्य दन्तधावनपूर्वकं संगवे स्नायात्) एतावदेव; गभा. १२३ (दिवा रजःस्रावे तद्दिनमशुचित्वं स्यात्। रात्रौ

**रजस्वला चतुर्थेऽहनि षष्टिमृत्तिकाभिः शौचं कृत्वा, क्षत्रादिस्त्री च पादपादन्यूनमृत्तिकाभिर्विधवा द्विगुणमृत्तिकाभिः शौचं कृत्वा मलं प्रक्षाल्य दन्तधावनपूर्वकं संगवे सचैलं स्नायात्। रजस्वलायाः स्नातायाः पुनरपि रजोदृष्टावष्टादशदिनादर्वागशुचित्वं नास्ति। अष्टादशदिने रजोदृष्टावेकरात्रमशुचित्वम्। नवदशदिने द्विरात्रम्। विंशादिदिने त्रिरात्रम्। प्रायो विंशादिदिनादूर्ध्वं रजःस्राविणीनामेवं भवति। विंशतिदिनादर्वाक्प्रायशो रजोदर्शनवतीनामष्टादशदिनेऽपि त्रिरात्रमशुचित्वम्। किंच, त्रयोदशदिनादूर्ध्वं प्रायशो रजःस्राविणीनामेकादशदिनादर्वागशुचित्वं नास्ति। एकादशदिने रजोदृष्टावेकरात्रमशुचित्वम्। द्वादशे द्विरात्रम्। त्रयोदशादिदिनेषु त्रिरात्रमेव॥**

**[1]रजस्वलायां ज्वरितायां चतुर्थेऽहन्यन्या स्त्री रजस्वलां स्पृष्ट्वा सचैलाऽवगाह्याऽऽचम्य दशकृत्वो द्वादशकृत्वो वा स्पृशेत्। अन्ते वाससां त्यागः। ततः सा रजस्वला शुद्धा। शक्त्या दानं कृत्वा पुण्याहेन विशेषतः शुद्धिः॥**

---

रजःस्रावे सति अर्धरात्रादर्वाक् चेत् पूर्वदिनमित्येकः पक्षः। रात्रिं त्रिधा विभज्य पूर्वभागद्वये चेत् पूर्वदिनमित्यन्यः पक्षः। उदयात् पूर्वं चेत् पूर्वदिनमित्यपरः पक्षः। एषां पक्षाणां देशाचारतो व्यवस्था। अविज्ञाते रजःस्रावे तु दिनेषु जातेषु रजःस्रावादिकमशुचित्वं स्यात्। ज्ञानात्पूर्वं च रजस्वलास्पृष्टं दुष्टमेव। रजस्वला त्रिरात्रमशुचिः स्यात्। चतुर्थेऽहनि स्नाता शुद्धा भवति भर्तुः स्पृश्या। दैवे पित्र्ये च कार्ये रजोनिवृत्तौ शुचिः। रजस्वला चतुर्थेऽहनि मृत्तिकादिभिः शौचं कृत्वा क्षत्रियादिस्त्री च पादपादन्यूनमृत्तिकाभिर्विधवा द्विगुणमृत्तिकाभिः शौचं कृत्वा दन्तधावनपूर्वकं संगवे सचैलं स्नायात्। रजस्वलायाः स्नातायाः पुनरपि रजोदृष्टावष्टादशदिनादर्वागशुचित्वं नास्ति। अष्टादशे दिने रजोदृष्टावेकरात्रमशुचित्वम्, नवदशदिने द्विरात्रम्, विंशतिदिने त्रिरात्रमेव। प्रायो विंशतिदिनादूर्ध्वं रजःस्राविणीनामेवं भवति। विंशतिदिनादर्वाक् प्रायशो रजोदर्शनवतीनामष्टादशदिनेऽपि त्रिरात्रमशुचित्वम्। त्रयोदशदिनादूर्ध्वं प्रायो रजःस्राविणीनामेकादशदिनादर्वागशुचित्वं नास्ति। एकादशदिने रजोदृष्टावेकदिनमशुचित्वम्। द्वादशदिने द्विरात्रम्। त्रयोदशदिने त्रिरात्रमेव); **मुक्ता.** २७७ (रजस्वला चतुर्थेऽह्नि षष्टिमृत्तिकाभिः शौचं कृत्वा विधवा चेत् द्विगुणमृत्तिकाभिः शौचं कृत्वा दन्तधावनपूर्वं संगवे सचैलं स्नायात्। स्नातायाः पुनरपि रजोदृष्टावष्टादशदिनादर्वागशुचित्वं नास्ति। अष्टादशदिने रजोदृष्टावेकरात्रमशुचिः। एकोनविंशे द्विरात्रम्। विंशे त्रिरात्रमेव। प्रायो विंशतिदिनादूर्ध्वं रजःस्राविणीनामेवम्) एतावदेव; **सिन्धु.** ८२० (त्रयोदशदिनादूर्ध्वं प्रायो रजोवतीनामेकादशदिनात् प्रागशुचित्वं नास्ति। एकादशदिन एकरात्रम्। द्वादशे द्विरात्रम्। ऊर्ध्वं त्रिरात्रम्) एतावदेव; **विपा.** ५० (रजस्वला षष्टिमृत्तिकाभिः शौचं कृत्वा मलं प्रक्षाल्य दन्तधावनपूर्वकं संगवे स्नायात्) एतावदेव; **संको.** ३ विपावत्; **बान.** ९७ (रजस्वला चतुर्थेऽह्नि षष्टिमृत्तिकाभिः शौचं कृत्वा विधवा चेत् द्विगुणाभिः शौचं कृत्वा दन्तधावनपूर्वकं संगवे सचेला स्नायात्) एतावदेव; **संव.** ७ विपावत्; **कुम.** ८०९ (ब्राह्मणी रजस्वला चतुर्थेऽहनि षष्टिमृत्तिकाभिः शौचं कृत्वा क्षत्रियादिश्च पादपादन्यूनं मृत्तिकभिर्विधवा द्विगुणाभिः शौचं कृत्वा मलं प्रक्षाल्य सचैलं संगवे स्नायात्) एतावदेव; **संर.** ६६१ (ब्राह्मणी रजस्वला चतुर्थेऽह्नि षष्टिपलमृत्तिकाभिः शौचं कुर्यात्। क्षत्रियादिस्त्रियः पादन्यूनमृत्तिकाभिर्विधवा द्विगुणमृत्तिकाभिः। ततो मलं प्रक्षाल्य दन्तधावनपूर्वकं सचैलं संगवे स्नायात्) एतावदेव: ६६५ (सप्तदशदिनमध्ये पुना रजोदर्शने स्नानमात्रम्। अष्टादश एकरात्रम्। ऊनविंशे द्व्यहम्। विंशतिप्रभृति त्रिरात्रम्। त्रयोदशदिनादूर्ध्वं प्रायो रजोवतीनामेकादशदिनादर्वागशुचित्वं नास्ति। एकादशदिन एकरात्रम्। द्वादशे द्विरात्रम्। ऊर्ध्वं त्रिरात्रम्) एतावदेव.

(१) **स्मृसार.** ८९; **प्रपा.** १०३ (रजस्वलां ज्वरितामन्या स्पृष्ट्वा चतुर्थेऽहनि सचैलमवगाह्याऽऽचम्य दशकृत्वो द्वादशकृत्वो वा स्नात्वा तामुपस्पृशेत्। ततः सा रजस्वला शुद्धा शक्त्या दानं कृत्वा पुण्याहेन विशेषतः शुध्येत्); **विपा.** ५३ (रजस्वलां ज्वरितां चतुर्थेऽहनि सचैलमवगाह्याऽऽचम्य दशकृत्वो द्वादशकृत्वो वाऽन्या तां स्पृष्ट्वाऽऽचामेत्) एतावदेव.

## स्मृतिमञ्जरी

उदक्योपयुक्तपात्रस्थानादिशुद्धिः

'पुष्पिणी कांस्यपात्रेऽद्यात् तापयेत् परिलेखयेत् ।
एकविंशतिवारेण भस्मना मार्जयेच्छुचिः ॥
उदक्या शयनस्थानं भुक्तिदेशं च गोमयैः ।
उपलिप्य गवाक्रान्त्या शुद्धिर्भवति नान्यथा ॥
उदक्यासीनपीठस्य घर्षणाच्छुद्धिरिष्यते ।
कटादीनां क्षालनं च तृणानां त्याग एव तु ।
इत्यादिशुद्धिभेदेन यथार्हं शोधयेद्बुधः ॥

## मुहूर्तचिन्तामणिः

प्रथमरजस्वलायाः स्नानमुहूर्तः

'हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैः
शक्रान्वितैः शुभतिथौ शुभवासरे च ।
स्नायादथाऽऽर्तववती मृगपौष्णवायु-
हस्ताश्विधातृभिररं लभते च गर्भम् ॥

अथ प्रथमरजस्वलायाः स्नानमुहूर्तं वसन्ततिलकयाऽऽह– हस्तेति । हस्तस्वात्यश्विनीमृगानुराधाधनिष्ठारोहिण्युत्तरात्रयज्येष्ठाभिः शुभतिथौ 'भद्रानिद्रासंक्रमे' इत्याद्यनिष्टदिनव्यतिरिक्तदिवसे, शुभवारे शुभानां चन्द्रबुधगुरुशुक्राणां वासरे च आर्तववती– ऋतुरेवाऽऽर्तवम्, प्रज्ञादित्वात् स्वार्थेऽण्, तद्विद्यते यस्याः सा तथोक्ता सा रजोवती स्नायात् । विशेषमाह– मृगेति । मृगरेवतीस्वातीहस्ताश्विनीरोहिणीभिर्नक्षत्रैः स्नाताऽऽर्तववती अरं शीघ्रं गर्भं लभते । अत्रैकादश नक्षत्राणि स्नानविधायुक्तानि । $ तत्रापि षट्सु मेषु शीघ्रं गर्भोत्पत्तिर्भवेत् । अन्येषु किंचिद्विलम्बेनेत्यर्थः । सर्वथा विहितभिन्नेषु स्नानं न कार्यमिति निष्कृष्टोऽर्थः । उक्तं च– 'कृत्तिका भरणी मूलमार्द्रा पुष्यः पुनर्वसुः । मघा चित्रा विशाखा च श्रवणो दशमस्तथा । एताः प्राणहरास्तारास्तासु स्नानं न कारयेत् । यदि स्नानं प्रकुर्वीत पुनः सूतिर्न विद्यते ॥' इति । अर्थाच्छततारास्लेषापूर्वात्रयेषु मध्यममिति । इयं च देशाचारतो व्यवस्थाऽनुसंधेया, शिष्टाचारस्यापि स्मृतिवत् प्रामाण्यात् । दाक्षिणात्यास्तु चतुर्थे एव दिवसे स्नानमाहुः, 'चतुर्थेऽहनि शुध्यति' इति, 'भर्तुः स्पृहया चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।' इति स्मृतिवचनात् । § पीटी.

## पद्धतौ

स्नानकालः

'त्रिरात्रं च व्रतं कृत्वा श्रुतिस्मृतिसमीरितम् ।
चतुर्थे संगवे स्नात्वा स्त्रीधर्मं तु समाचरेत् ॥

संगवे अतीते संगवस्यान्ते द्वादश्यां घटिकायां वा स्नायादित्यर्थः । आन. ९७

## रेणुकारिका:

पञ्जरे कोष्णवारिणा स्नानम्

'चतुर्थे दिवसे स्नायात् पञ्जरे कोष्णवारिणा ॥

---

$ अत्र रेवतीनक्षत्रस्य स्नानमुहूर्तविधिवाक्यगतैकादशनक्षत्र्यामन्तर्भावस्तत्रापिशब्दात्प्रतीयते, स मूलविरुद्धः । मूलेऽपि रेवतीनक्षत्रस्य शीघ्रगर्भलम्भकत्वात् टीकोक्ताधममध्यमनक्षत्रेष्वनन्तर्भावाच्च सिद्धेऽप्युत्तमत्वे तस्य विधिवाक्येऽनन्तर्भावश्चिन्त्यः ।

§ संव. पीटीगतम् ।

(१) प्रपा. १०३.
(२) मुचि. ५।४ ; संव. ४–५ ररं ( रलं ).

(१) मुक्ता. २७७ ; आन. ९७ ( = ).
(२) रेका. १८ पृ. २.

# ऋतुस्नाताकृत्यम्

## आग्निवेश्यगृह्यसूत्रम्

भर्तृमुखानवेक्षणम् (१)

[1]अथर्तुस्नानाद्भर्तुर्मुखे नान्वीक्षमाणा प्रयत्ना-द्वाह( ? दृबहि )र्मुखं दर्शयेत् ॥

## वैखानसगृह्यसूत्रम्

स्नातायाः श्वेतवस्त्रधारणम्, अनुलेपनम्, प्रथमतो भर्तृदर्शनम्, प्रथमदृष्टसदृशप्रजाजननम्

[2]चतुर्थ्यां दन्तधावनम्। गन्धामलकादिभिः स्नात्वा श्वेतवस्त्रानुलेपना स्त्रीशूद्राभ्यामनभि-भाष्यापरमदृष्ट्वा भर्तारं पश्येत्। यस्मादृतुस्नाता यादृशं पुरुषं पश्येत्तादृशी प्रजा भवति ॥

## वृद्धवसिष्ठः

स्नानोत्तरं शुक्लवस्त्रपरिधानम्, अलंकरणम्, आदित्य-पूजनम्, प्रथमदृष्टसदृशप्रजाजननम्, भर्तृदर्शनम्

[3]स्नात्वा तु शुक्लवासांसि परिधाय प्रयत्नतः।
गन्धपुष्पैरलंकृत्य समाचम्य सुवाग्यता ॥
चन्दनाक्षतपुष्पैश्च आदित्यं पूजयेद्यथा।
ऐन्द्रं वरं प्रभो मह्यमिदानीं दातुमर्हसि।
इत्युक्त्वा चेन्द्रभावेन प्रार्थयेत पतिं वधूः ॥
ऋतुस्नाता सती नारी यं स्नेहान्नरमीक्षते।
तादृशं जनयेत् पुत्रं तस्मात् पश्येन्निजं पतिम् ॥

## कात्यायनः

स्नानोत्तरमादित्यादिदर्शनम्

[4]चतुर्थे दिवसे स्नात्वा भक्त्याऽऽदित्यं समी-क्षते।
भर्तारं देवरं वाऽपि श्वशुरं नान्यमीक्षयेत् ॥

(१) आग्निगृ. २।७।६.
(२) वैगृ. ३।९.
(३) प्रपा. १०४.
(४) संर. ६६२.

## अत्रिः

स्नानोत्तरं वस्त्रालंकारधारणम्, आदित्यार्चनम्, प्रथमदृष्टसदृशप्रजाजननम्, भर्तृदर्शनम्

[1]स्नात्वांऽशुकं परिच्छाद्य गन्धपुष्पैरलंकृता।
आचम्य पुष्पैरादित्यमर्चयित्वा यथोचितम् ॥
ऐन्द्रं वरं प्रभो मह्यमिदानीं दातुमर्हसि।
इत्युक्त्वाऽथैन्द्रभावेन प्रार्थयेत्तु स्वकं पतिम् ॥
ऋतुस्नाता तु या नारी यं स्नेहान्नरमीक्षते।
तादृशं जनयेत् पुत्रं पतिमेव निरीक्षयेत् ॥

## अङ्गिराः

स्नानोत्तरं भर्तृदर्शनम्, प्रथमदृष्टसदृशप्रजाजननम्

[2]सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य च क्वचित्।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
ऋतुस्नाता तु या नारी यं स्नेहान्नरमीक्षते।
तादृशं जनयेद्गर्भं पतिमेव निरीक्षयेत् ॥

## विवस्वान्

स्नानोत्तरं श्वेतवस्त्रालंकारधारणं सूर्यार्चनं च

[3]ऋतुस्नाता भवेन्नारी धृत्वा शुक्लाम्बरं शुभम्।
आचम्यालंकृता भूत्वा पुष्पाद्यैः सूर्यमर्चयेत् ॥

## अनिर्दिष्टकर्तृकवचनम्

प्रथमदृष्टसदृशप्रजाजननम्, प्रथमतो भर्तृदर्शनम्

[4]पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना।
तादृशं जनयेत् पुत्रं भर्तारं दर्शयेत्ततः ॥

(१) संर. ६६२.
(२) संग. ३६३.
(३) प्रपा. १०४.
(४) संसौ. २६-२७ धर्मशास्त्रे : ३१ येत्ततः ( येदतः ).

## स्मृतिसंग्रहे

आदौ रविदर्शनम्, ततो भर्तृदर्शनं भर्त्रा भाषणं च

[1]कोष्णेन वारिणा स्नायात् स्नाताऽऽदौ रविमीक्षयेत्।
ततो भर्ता प्रेक्षितव्यः कुर्यात्तेनैव भाषणम्॥

(१) संर. ६९०.

## रेणुकारिकाः

आदित्यभर्त्रादिदर्शनम्

[1]चतुर्थे दिवसे स्नायाद्भक्त्याऽऽदित्यं समीक्षते।
भर्तारं देवरं वाऽपि श्वशुरं नान्यमीक्षते॥

(१) रेका. २२-२३ पृ. ३.

# गर्भाधानविधिः*

## आश्वलायनगृह्यसूत्रम्

गर्भाधानस्य कर्तव्यता

**[1]उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च ॥**

(१) उपनिषन्नाम रहस्यम् । तस्यामुपनिषदि गर्भलम्भनम् । गर्भो येन कर्मणा लभ्यते तत् गर्भलम्भनं नाम । तदुपनिषदि व्याख्यातम् । तत्र हि गर्भाधानादयः आत्मज्ञानान्ताः संस्कारा आम्नाताः । अयमपि संस्कारः तत्रैवाऽऽम्नातः । यदि तत्राऽऽम्नातः, किं कर्तव्यम् ? येन प्रकारेण तत्राऽऽम्नातं तथा कर्तव्यम् । एवमेतानि त्रीणि कर्माणि उपनिषदि यथाऽऽम्नातानि तथा कर्तव्यानीति ब्रवीति । ननु चोपदेशादेवैषां क्रिया सिध्यति । कस्मात् ? स्वस्यामुपनिषदि नैतान्याम्नातानि, तेनान्यस्यामुपनिषद्याम्नातानामन्यस्य कथं प्रयोगः स्यादित्यत उपदेशः । उत्तरविवक्षार्थं वा उपदेशः ।

१।१३।१

गर्भलम्भनं नोपदिष्टमिति तत्रैके ऋतुकालेऽप्यनादेशहोममिच्छन्ति । अपरे तु पाठान्तरम्— " अध्याण्डामूलं पेषयित्वा ऋतुवेलायाम् ' उदीर्ष्वातः ' इत्यनया दक्षिणस्यां नासिकायां नस्तः करोतीत्येतद्गर्भलम्भनम् " ।

देभा. १।१३।७

(२) उपनिषदि उपनिषत्संज्ञके वेदभागे गर्भलम्भनं पुंसवनमनवलोभनम्, आम्नातमिति शेषः । पुमान् सूयते अनेन कर्मणेति पुंसवनम् । अनवलोभनम् अनवलोपनं रक्षणमिति यावत् ।

ब्रक. ८२

(३) आम्नातमिति शेषः । गर्भो लभ्यते येन कर्मणा निषिक्तं वीर्यममोघं भवति तत् गर्भलम्भनम्, एतानि कस्यांचिदुपनिषद्याम्नातानि । न केवलमेतानि, किं तर्हि ? गर्भाधानादय आत्मज्ञानपर्यन्ता आम्नाताः । अस्मच्छाखायां सा न विद्यते अतस्तत्कर्म कर्तव्यमित्युपदिश्यते ।

१।१३।१

गर्भाधानमाचार्येणानुक्तमिति कृत्वा न कार्यमित्येके । अन्ये पुनः शौनकाद्युक्तमार्गेण कार्यमित्याहुः ।

गानावृ. १।१३।२

(४) येन स गर्भो न क्षुभ्यति न स्रवति तदनवलोभनम् ।

§ अना.

(५) उपनिषदि आरण्यके रहस्यब्राह्मणे ' स्वकर्मवशादात्मशरीरमुपादत्ते ' इत्यादिप्रसङ्गेन यदाम्नातं गर्भलम्भनकर्मत्रयं तत् कर्तव्यमित्यर्थः ।

§ प्रपा. ९७

## विष्णुः

रजोदर्शनात्परं गर्भाधानम्

**[1]गर्भस्य स्पष्टताज्ञाने निषेककर्म ॥**

गर्भः ऋतुः । तस्य स्पष्टतां प्रादुर्भावं ज्ञात्वा निषेकः गर्भाधानाख्यं कर्म कार्यम् । इदं च क्षेत्रसंस्कारत्वात् सकृत्कार्यम्, ' अथ ऋतुमत्याः प्राजापत्यमृतौ प्रथमे ' ( आगृप. १।२५ ) इति परिशिष्टात् ।

वै.

## शङ्खः

रजोदर्शनात्परं गर्भाधानम्

**[2]गर्भस्य स्फुटताज्ञाने निषेकः परिकीर्तितः ॥**

---

* विधिशब्दोऽत्र प्रयोगविधि–मुहूर्तविध्यतिरिक्तसर्वशास्त्रार्थपरः । एवमुत्तरसंस्कारेष्वपि विधिशब्दार्थो बोध्यः ।

(१) आगृ. १।१३।१ ; आप. १।११ पृ. २५ लम्भनं ( लम्भने ) ; ब्रक. ८१ ; प्रपा. ९७ ; ब्रप्र. ३६ सवनम ( सवना ) ; संप्र. १७१ ; संको. १ ( पुंस ... च० ).

§ शेषं गानावृवत् ।

* वचनमिदं चकाग्रन्थे ' अभिषेकः ' इति पाठम् ' अनवलोभनम् ' इति तदर्थं च स्वीकृत्यानवलोभनप्रकरणे संगृहीतम् ।

(१) विस्मृ. २७।१ ; चका. ७३३ ( गर्भस्य स्फुटताज्ञानेऽभिषेकः कर्म ) .

(२) शंस्मृ. २।१ ; चका. ७३३ ने नि( नेऽभि ).

## याज्ञवल्क्यः

गर्भाधानमृतौ कार्यम्

¹गर्भाधानमृतौ ॥

(१) गर्भाधानाख्यः प्रथमः संस्कारो निषेकलक्षणः। स ऋतौ कार्यः। सामर्थ्याद्दतुर्वक्ष्यमाणः, न वसन्तादिकः। $विश्व.

(२) गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्। ‡मिता.

(३) गर्भ आधीयतेऽनेन कर्मणेति गर्भाधानम्, तदृतौ कार्यमित्यन्य( र्थं )तः सिद्धम्। अप.

(४) गर्भ आधीयतेऽनेनेत्यादिव्युत्पत्तिभिर्गर्भाधानादिशब्दैस्तत्तत्संस्कारकर्माण्युच्यन्ते। ऋतौ (वा?) वक्ष्यमाणे काले। वीमि.

## बृहस्पतिः

गर्भाधानमृतौ कार्यम्

¹गर्भाधानमृतौ कुर्यात् ॥

गर्भ आधीयते येन कर्मणा तद्गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्, उद्भिदधिकरणन्यायात्। इयर्ति गर्भधारणं गच्छतीति ऋतुः। स च नाभिकमलादुत्पन्नं शोणितम्। तच्चेन्द्रकृतब्रह्महत्यायास्तृतीयोंऽशः। ¶ संप्र. १४१

## व्यासः

गर्भाधानं प्रथमतो कार्यम्, गर्भाधानादिसंस्काराधिकारिणः

¹गर्भाधानं प्रथमतः ॥

²मृते देशान्तरगते पत्यौ स्त्री यद्यसंस्कृता।
देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत् ॥

## देवलः

गर्भाधानादिसंस्काराधिकारिणः

¹ऋतुकालेऽभिगमनं भर्त्रा कार्यं प्रयत्नतः।
पुंसवादीनि कर्माणि बान्धवैर्वाऽपि कारयेत् ॥

अथ गर्भाधानादौ कर्तृनिर्णयः। तत्र देवलः— 'ऋतुकालेऽभि...' इति। अत्र भर्त्रेति कर्तृनियमादसंनिधाने अशक्तौ वा अन्यः प्रतिनिधिर्नास्तीति गम्यते। अत एव पैठीनसिः— 'गर्भाधानं पिता कुर्यादृतुस्नातासु शक्तिमान्। ऋत्वन्तरे वा कुर्वीत हीनसत्त्वो न दोषभाक् ॥' इत्यशक्तस्य कालान्तरमनुकल्पयति, न कर्त्रन्तरम्। पितेति जनिष्यमाणगर्भापेक्षया। ऋत्वन्तरे द्वितीयादावपि हीनसत्त्वो दोषभाक् नेत्यर्थः। पुंसवनादिषु तु अनुकल्पमप्याह— पुंसवादीनीति। आदिशब्दादनवलोभनसीमन्तादीनां ग्रहणम्। ¶ संप्र. १६४

## आश्वलायनः

गर्भाधानस्य सकृत्कर्तव्यता, अकरणे प्रत्यवायः प्रायश्चित्तं च

¹सकृत्कृते भवेत्तस्य गर्भाधानं कृतं स्त्रियाः ॥
²गर्भाधानस्याकरणात् तस्यां जातस्तु दुष्यति।
अकृत्वा गां द्विजे दत्त्वा कुर्यात्पुंसवनं पतिः ॥

---

$ दीक. विश्वगतम्।

‡ शेषं विश्वगतम्।

¶ संग. संप्रवत्।

(१) यास्मृ. १।११ शेषः स्थलादिनिर्देशः 'संस्कारोपोद्घातः' इति प्रकरणे ( सं. का. पृ. ४७ ) द्रष्टव्यः.

(२) स्मृच. १७ ; संप्र. १४१ ; मुक्ता. ७८ ; संग. ३५५.

(३) व्यास्मृ. १।१७.

$ अस्य व्याख्यानं वैजवापे द्रष्टव्यम्।

¶ संग. संप्रवत्।

(१) संप्र. १६४ ; मुक्ता. ७९ मृते (मृतो) गते पत्यौ (गतो भर्ता) वंश्यो वाऽपि (सपिण्डो वा) गार्ग्यः ; आन. १४७ सर्वं मुक्तावत् ; संग. ३८१.

(२) संप्र. १६४ ; संग. २८१.

(३) आश्वस्मृ. ११।४९ ; प्रपा. १०७ प्रथमपादे (असकृत भवेदस्या).

(४) आश्वस्मृ. ११।५१ ; प्रपा. १०८ ; प्रर. ६७ (=) ; संप्र. १५८ पू. : १६४ करणात् (करणे) द्विजे (ततो) पतिः (व्रती) ; सिन्धु. ८१७ ; विपा.

(१) गर्भाधानाङ्गहोमाकरणे प्रायश्चित्तमाह पारिजाते आश्वलायनः– गर्भाधानस्येति। सिन्धु. ८१७

(२) गर्भाधानाकरणे प्रायश्चित्तमाहाऽऽश्वलायनः– 'गर्भाधानस्या...' इति। अकृत्वेत्यनन्तरमपिशब्दोऽध्याहार्यः, 'प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै। कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः॥' इति वचनसंवादात्। गां द्विजाय दत्त्वा अकृत्वाऽपि गर्भाधानं पतिः पुंसवनं कुर्यादित्युत्तरार्धार्थः। एतच्च प्रायश्चित्तं केवलस्य गर्भाधानस्य मुख्यकालानतिक्रान्तेन केवलेन पुंसवनेन सह क्रियायाम्, मुख्यकालातिक्रान्तेन पुंसवनेन सह क्रियायां तु पूर्वोक्तं कृच्छ्रात्मकं ज्ञेयम्। अथवोभयत्रापि समुच्चयः। संर. ६९३

## लघ्वाश्वलायनः

गर्भाधानं प्रथमर्तौ कार्यम्

**'गर्भाधानं द्विजः कुर्यादृतौ प्रथम एव हि।**
**चतुर्थदिवसादूर्ध्वं पुत्रार्थी दिवसे समे॥**

## पैङ्ग्यः

गर्भाधाने गौणकालः

**§'गर्भाधानं पिता कुर्यादृतुस्नातासु शक्तिमान्।**
**ऋत्वन्तरे वा कुर्वीत हीनसत्त्वो न दोषभाक्॥**

## बैजवापः

गर्भाधानादिसंस्काराधिकारिणः

**'पिता पुत्रस्य संस्कारं कुर्याद्यदि न शक्नुयात्।**
**अन्येन गुणयुक्तेन कारयेत्स्वस्वशाखतः॥**

संस्कारं पुंसवनादिकम्। अशक्तिरसंनिधानस्याप्युपलक्षणम्। अत एव व्यासः– 'मृते देशान्तरगते पत्यौ स्त्री यद्यसंस्कृता। देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत्॥'। मृते, गर्भे सम्भावयेति शेषः। अथवेदं वाक्यद्वयं भर्तृमरणक्लीबत्वादौ गर्भाधानेऽपि प्रतिनिधिविधानार्थत्वेन व्याख्येयम्। अस्मिन्पक्षे संस्कारशब्दोऽसंकोचेन गर्भाधानादौ सर्वत्र वर्तते। न शक्नुयादिति पदं क्लैब्यादिना सर्वात्मना शक्त्यभावपरं व्याख्येयम्। देशान्तरगते सर्वात्मना अश्रूयमाणवार्ते इति वक्तव्यम्, मरणसाहचर्यात्, 'पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे। तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः॥' इत्याश्वलायनस्मरणाच्च। गुरुः ज्येष्ठः, वंश्यः सपिण्डः। इदमेवाभिप्रेत्याऽऽह याज्ञवल्क्यः– 'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥' इति। एतमेवार्थं स्पष्टमाचष्ट ब्रह्मपुराणम्– 'गर्भाधानादिसंस्कर्ता पिता श्रेष्ठतमः स्मृतः। अभावे स्वकुलीनः स्याद्बान्धवो वाऽन्यगोत्रजः॥' इति। एतदभावे असंबन्ध्यपि ब्राह्मणः प्रतिनिधिः कार्यः, 'बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम्।' इति महाभारते सत्यवतीं प्रति भीष्मवचनात्। तत्स्वरूपमाह तदेव– 'आर्यावर्तसमुद्भूतः स्वशास्त्री श्रेष्ठ उच्यते।'। स्वशाखी स्वशाखीयः। 'ब्राह्मणः सर्ववर्णानां श्रोत्रियो वा स्ववर्णजः। गृहस्थः सर्ववर्णेषु श्रेष्ठ इत्यभिधीयते॥ अभार्यस्त्वधमो ज्ञेय उपकुर्वाणनैष्ठिकौ। आचार्यौ मध्यमौ ज्ञेयावसगोत्रौ तु मध्यमौ॥ वानप्रस्थयतीनां तु कर्तृत्वं नेष्यते सदा॥'।

† संप्र. १६४–१६६

## स्कन्दपुराणम्

गर्भाधानाङ्गस्नानम्, जलपानम्, सूर्य–पति–मुखावेक्षणम्, व्रताचरणम्, शुभदिवसे रतिप्रार्थना

**'स्नायात् सवासा यत्नेन भस्मगोमयमृज्जलैः।**
**स्नानीयचूर्णेन ततः उद्वर्त्य शुभवेष्टिता॥**

---

§ अस्य व्याख्यानम् 'ऋतुकालेऽभिगमनम्' इति देवलवचनव्याख्याने द्रष्टव्यम्।

२४० (=) पतिः (ततः); संको. ५६; संग. १८० करणात् (करणे) द्विजे (ततो); संव. ४९, ५२; संर. ६९३.

(१) लघ्वाश्वस्मृ. ३।१.

(२) संप्र. १६४; संग. ३८१.

(३) संप्र. १६४; संग. ३८१.

† संग. संप्रवत्।

(१) प्रपा. १०६ स्कान्दे कपिलसंहितायाम्.

हरिद्राचन्दनोन्मिश्रं जलं पीत्वा दिवाकरम् ।
दृष्ट्वा शुक्लाम्बरधरा पत्युर्मुखमवेक्षयेत् ॥
तद्दिने नियताहारा कट्वम्ललवणानि च ।
वर्जयेन्मधुराहारा पतिसङ्गं च वर्जयेत् ॥
शास्त्रोक्तदिवसे शुद्धा कामं रात्रौ पतिव्रता ।
पतिमेव हरिं मत्वा स्वयमेव रमेति च ॥

## विष्णुधर्मोत्तरपुराणम्

गर्भाधानाङ्गस्नानविधिः, कुम्भदानम्, देवप्रतिमायाः भर्तुर्वा दर्शनम्, प्रथमदृष्टसदृशप्रजाजननम्, रात्रौ भर्त्रा संगमनम्

'चतुर्थेऽहनि कुर्वीत स्नाता स्नानं यथाविधि ।
अभिषेकोदिताभिश्च मृद्भिरद्भिश्च सारसैः ॥
ओषधीश्च ततः कुम्भे निक्षिप्य स्नापयेत्तथा ।
बिल्वगन्धांश्च रत्नानि पञ्चगव्यं तथैव च ॥
कुम्भे निक्षिप्य कुम्भं च गन्धमाल्यानुलेपनैः ।
पूजयित्वा ततो देयं तत् स्यात् तत्सुतवर्धनम् ॥
मन्त्रं ग्रहाभिषेकोक्तं पठेद्विप्रस्तु मन्त्रवित् ।
वस्त्रं च धृत्वा सुस्नाता स्नापके च विनिर्गते ॥
पश्येत देवप्रतिमां वासुदेवस्वरूपिणीम् ।
अथवा स्वं च भर्तारं नान्यं कंचन सत्वरा ॥
तत्काले वदनं यस्य पश्यत्यथ तथाविधम् ।
सा प्रसूते सुतं राम शुभं वाऽप्यथवाऽशुभम् ॥
पूजनं वासुदेवस्य सा कृत्वाऽऽत्मन एव च ।
मण्डनं तु यथान्यायं शुक्लवस्त्रोत्तरच्छदा ॥
स्नाताऽनुलिप्ता भर्तारं पुष्पैर्बृंहितमेव च ।
यायाद्रात्रौ तदा नारी गन्धपुष्पादिवासिते ॥

## ब्रह्मपुराणम्

गर्भाधानादिसंस्काराधिकारिणः

'गर्भाधानादिसंस्कर्ता पिता श्रेष्ठतमः स्मृतः ।
अभावे स्वकुलीनः स्याद्बान्धवो वाऽन्य-
गोत्रजः ॥

(१) प्रपा. १०६.
(२) संप्र. १६५ ; सिन्धु. ३८२ पिता (पतिः) वाऽन्यगो (ऽन्यत्र गो) ; संग. ३८२.

अन्यत्र स्वकुलीनाभावे । गोत्रज इति तदन्य-व्यावृत्तये । कृभ. ८३२

## अनिर्दिष्टकर्तृकवचने

दिवा कर्मकरणं रात्रौ गर्भबीजारोपणं च

'गर्भाधानाङ्गभूतं यत्कर्म कुर्याद्दिवैव हि ।
रात्रौ कुर्याद्विधानेन गर्भबीजस्य रोपणम् ॥

गर्भाधानाङ्गस्नानम्

'सुतसौभाग्यविवृद्ध्या एलाघनचन्दनोशीरैः ।
नवपुष्पवती युवती स्नायादुषसीति मुनि-
वादः ॥

एतच्च चतुर्थदिवसे स्नानं रजोदोषशुद्ध्यर्थं नियतकालम् । तत्र नक्षत्रादिविचाराभावः । परे तु पुरुषसङ्गोपयोगिनि स्नाने नक्षत्रादिनियममाहुः । तथा च पठन्ति दैवज्ञवल्लभे— 'ब्रह्मानुराधाश्विभसौम्यमेषु ... ॥', रत्नसारे— 'ज्येष्ठानुराधाश्विनिरेवतीषु ... ॥' इति । संसौ. २४

## स्मृत्यर्थसारः

ऋतौ गर्भाधानम्

'तत्रर्तौ गर्भाधानं कार्यम् ॥

## श्रीपतिः

गर्भाधानाङ्गस्नानम्

'वेदागमोक्तसमये रुचिरे प्रदेशे
वाजीकृतेन जितरोषभयेन पुंसा ।
मन्त्रौषधप्रवरतीर्थजलोज्ज्वलेषु
कान्ताजनेष्वथ निषेकविधिर्विधेयः ॥

(१) धप्र. ३५ ; संग. ३७२ धर्मप्रवृत्तौ.
(२) संसौ. २३–२४.
(३) स्मृसार. ३.
(४) प्रपा. १०६ ; संसौ. २७ रुचिरे प्र (तु चिरप्र) भयेन (चयेन) जलोज्ज्व (जलोत्प).

### दैवज्ञवल्लभे

नक्षत्रविशेषेषु गर्भाधानाङ्गभूतं स्नानम्

[1]ब्रह्मानुराधाश्विभसौम्यमेषु
हस्तानिलाखण्डलवासवेषु ।
विश्वार्यमर्क्षोत्तरभाद्रमेषु
वराङ्गनास्नानविधिः प्रदिष्टः ॥

(१) परे तु पुरुषसङ्गोपयोगिनि स्नाने नक्षत्रादि-नियममाहुः । तथा च पठन्ति दैवज्ञवल्लभे– 'ब्रह्मा-नुराधा... ॥', रत्नसारे– 'ज्येष्ठानुराधाश्विनिरेवतीषु ... ॥' इति । संसौ. २४

(२) अथ रजस्वलास्नानम् । दैवज्ञवल्लभः– 'ब्रह्मानुराधा... ॥'। सिन्धु. ८२९

[ रजस्वलास्नानमिति । 'चतुर्थ्यां स्नाताम्' इति विहितं स्नानं शुद्ध्यर्थम् । एतच्च पुंजननादिनिमित्तभूता-तिशयाधायकम् । एवं सूतिकास्नानमपि । एतच्च चतुर्थ-दिवसासंभवे तदग्रे कार्यम् । एतेन चतुर्थदिने नक्षत्रा-भावे स्नानं न स्यादिति न शङ्क्यम् ।
कुम. ८२९–८३० ]

### रत्नसारे

नक्षत्र–वारविशेषेषु गर्भाधानाङ्गभूतं स्नानम्

[2]ज्येष्ठानुराधाश्विनिरेवतीषु
प्रजापतौ वासवसौम्यधिष्ण्ये ।
पूर्वात्रयं त्रीणि तथोत्तराणि
वराङ्गनास्नानशुभानि भानि ॥

(१) संसौ. २४ मर्क्षो (मर्क्षौ) ; सिन्धु. ८२९ श्विम (श्विन) .

(२) संसौ. २४.

आदित्ये विधवा नारी सोमे चापि मृतप्रजा ।
शनौ वन्ध्या भवेन्नारी पतद्वारफलं स्मृतम् ॥

### शाकलकारिकाः

प्रथमर्तौ गर्भाधानम्

[1]ऋतौ तु प्रथमे कुर्याद्गर्भाधानं विधानतः ॥

### शौनककारिकाः

गर्भाधानस्य कर्तव्यता, नामधेयस्यान्वर्थता

[2]गर्भलम्भः पुंसवनं गर्भस्यानवलोभनम् ।
इति कर्मत्रयमिदं यज्ञोपनिषदीरितम् ॥
[3]तामधीतवतः कर्मत्रयं तत्रैव सुग्रहम् ।
अनधीतवतस्त्वेष प्रयोगोऽत्र निबध्यते ॥
[4]निषिक्तो यत्प्रयोगेण गर्भः संधार्यते स्त्रिया ।
तद्गर्भलम्भनं नाम कर्म प्रोक्तं मनीषिभिः ॥

यस्य कर्मणः प्रयोगेण अनुष्ठानेन । * संप्र. १४१

### रेणुकारिकाः

ऋतौ गर्भाधानस्य कर्तव्यता

[5]गर्भाधानमृतौ कार्यं पुत्रस्योत्पत्तिहेतवे ।
नास्त्यपुत्रस्य लोकोऽसावतस्तस्य च नित्यता ॥

* संग. संप्रवत् ।

(१) शाका. २६१ पृ. २९.

(२) शौका. १ पृ. ३४ ; प्रपा. ९७.

(३) शौका. २ पृ. ३४ ; प्रपा. ९७ तामधी (तमधी).

(४) शौका. ३ पृ. ३४ ; प्रपा. ९७ ; संप्र. १४१ ; संग. ३५५.

(५) रेका. ४ पृ. १.

# भार्यागमनम्

## बौधायनगृह्यसूत्रम्

ऋतुकाले उत्तरोत्तरयुग्मरात्रीणां श्रेयस्त्वम्, ऋतुगमने प्राशस्त्यम्, मन्त्रवद्गमने मतभेदः

**[1]स एवमेव* चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैति ॥**

**प्रजानिःश्रेयसमृतुगमनमित्याचार्याः ॥**

**सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः ॥**

**यथाऽऽदौ यथर्ताविति शालिकिः ॥**

## बौधायनगृह्यपरिभाषासूत्रम्

अपररात्रे गमनविधिः

**[2]जघन्ये रात्रिपर्याये सर्वत्रोपगमः स्मृतः ॥**

## आपस्तम्बगृह्यसूत्रम्

ऋतुकाले उत्तरोत्तरयुग्मरात्रीणां श्रेयस्त्वम्

**[3]चतुर्थिप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमन इत्युपदिशन्ति ॥**

---

* चतुर्थीकर्मोक्तगमनविध्यतिदेशोऽयम् ।

(१) बौगृ. १।७।४५–४८. (२) बौगृप. २।७।४.

(३) आपगृ. ९।१ ; उ. २।१।१७ मन इ (मनमि); स्मृच. १४ चतुर्थि ( चतुर्थी ) मुत्तरामुत्तरां ( मुत्तरां ) शेषं उवत् ; चका. ७२२ चतुर्थि ( चतुर्थी ) षोडशीमु ( षोडशसु उ ) शेषं उवत् ; गृर. ४०३ (चतुर्थीप्रभृत्युत्तरोत्तरां प्रजानिःश्रेयसार्थम् ) एतावदेव ; गप. ४५४ ( चतुर्थात्प्रभृत्युत्तरोत्तराः प्रजानिःश्रेयसार्थम् ) एतावदेव ; आत. ४६१ ( चतुर्थीप्रभृत्युत्तरोत्तरा प्रजानिःश्रेयसार्थम् ) एतावदेव ; वीमि. १।७९ ( चतुर्थीप्रभृत्युत्तरोत्तराम् ) एतावदेव ; संप्र. १५५ चतुर्थि (चतुर्थी) न इत्युप (नमुप) ; आप्र. ५६० ( चतुर्थीप्रभृत्युत्तरं प्रजानिःश्रेयसमृतुगमने ) एतावदेव ; मुक्ता. ७४ चतुर्थि ( चतुर्थी ) ; संको. १६ मृतुगमन इत्यु ( मित्यु ) शेषं मुक्तावत् ; आन. १४६ मुक्तावत् ; बाल. १।८१ पृ. २२३ ( चतुर्थीप्रभृत्युत्तरोत्तरं प्रजानिःश्रेयसमृतुगमने ) एतावदेव ; संर. ६८२ स्मृचवत्.

( १ ) षोडशीमिति पञ्चम्यर्थे द्वितीया । आ षोडश्या इत्यर्थः । आङ् चाभिविधौ । रजसः प्रादुर्भावादारभ्य चतुर्थीषोडश्यौ गृह्येते, प्रकरणात् । चतुर्थीप्रभृत्या षोडश्याः सर्वा रात्रय ऋतुगमनकालाः । तत्रापि उत्तरामुत्तरां युग्मां रात्रिं प्रजानिःश्रेयसं विद्यादिति । ऋतुगमन इति वचनात् वैवाहिके प्रथमगमने सत्यपि ऋतुनिमित्ते नायमुपदेशः प्रवर्तते । चतुर्थ्यां अपररात्रे नियमेन गमनं भवति । तत्र च 'शेषं समावेशने जपेत्' 'उत्तराभिरभिमन्त्रयते' इति च गमनमन्त्राणां समुच्चयो भवति । तत्र पूर्वमृतुगमनमन्त्राः, पश्चात् समावेशनमन्त्राः । विपरीतमन्ये ।

अनाकुला.

( २ ) आचार्यस्तु चतुर्थीप्रभृति गमनमाह– चतुर्थीति । तदिह षोडशसु रात्रिष्वादितस्तिस्रः सर्वथा वर्ज्याः । चतुर्थ्येकादशी त्रयोदशी चाऽऽचार्येणानुज्ञाताः, मनुना निषिद्धाः । इतरासु दशसु युग्मासु पुत्रा जायन्ते, स्त्रियोऽयुग्मासु । तत्र च 'उत्तरामुत्तराम्' इति वचनात् षोडश्यां रात्रौ मघादियोगाभावे गच्छतः सर्वत उत्कृष्टः पुत्रो भवति । चतुर्थ्यामवमः । मध्ये कल्प्यम् । एवं पञ्चदश्यामुत्कृष्टा दुहिता । पञ्चम्यामवमा । मध्ये कल्प्यम् । षोडशस्वेव गमनं गर्भहेतुः । तत्रापि प्रथमम् ।

उ. २।१।१७

( ३ ) युग्मासु उत्तरोत्तरैव रात्रिः पुत्रोत्पत्तौ प्रशस्ता । तथा च आपस्तम्बः– चतुर्थीत्यादि ।

स्मृच. १४

( ४ ) चतुर्थीप्रभृतीति दीर्घेणार्षपाठः । चतुर्थीं रात्रिमारभ्याऽऽषोडशीम् । आङ् अभिविधौ, द्वितीया च पञ्चम्यर्थे, आ षोडश्या इति यावत् । उत्तरामुत्तरां युग्मां रात्रिं प्रति ऋतुगमने ऋतौ मैथुने कृते प्रजानिःश्रेयसम्– प्रजाः पुत्राः, तेषां निःश्रेयसम् आयुरादीप्सितगुणसंपत्तिः भवतीत्युपदिशन्ति मन्वादयः । एतदुक्तं भवति– त्रयोदशसु रात्रिषु ऋतुगमने शुक्लाधिक्ये सति पुत्रा

जायन्ते। उत्तरोत्तरासु च युग्मासु यथाक्रमं तरतमभावेन ते सद्गुणाधिका भवन्ति। ¶ ताद.

(५) एतच्चतुर्थेऽह्नि गमनं रजोनिवृत्तौ द्रष्टव्यम्। * मुक्ता. ७४

## हिरण्यकेशिगृह्यसूत्रम्

मन्त्रवद्गमने मतभेदः

[1]सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीत्यात्रेयः॥

सर्वाणीति ऋतोरन्यत्रापि 'काममा विजनितोः संभवाम' इति श्रुतेरुपलब्धानि। (अन्यथा गच्छन्नपि?) मन्त्रवन्ति भवन्तीत्यात्रेयाचार्यो मन्यते। कुतः? उपगमनार्थत्वान्मन्त्राणाम्। प्रधानावृत्तौ मन्त्रावृत्तिरिति। (व्याख्या?) अर्थवादश्च 'वीरं हैव जनयति' इत्येतदिति। † मातृद्व.

यच्चाऽऽदौ यच्चर्ताविति बादरायणः॥

बादरायणः पुनराचार्यो यच्चाऽऽदौ चतुर्थ्यामुपगमनं यच्चर्तौ चतुर्थ्यादिषु रात्रिषूपगमनं तदेव मन्त्रवदिति मन्यते। कुतः? स्त्रीसंस्कारार्थत्वात् प्रथमोपगमनस्य यावज्जीवं विभवात्, गर्भाधानार्थत्वाच्चर्तौ गमनस्य, तयोश्च वाचनिकत्वादन्यत्र लिङ्गविरोधादवाचनिकत्वाच्च तयोर्मन्त्राणामिति। § मातृद्व.

## मानवगृह्यसूत्रम्

ऋतुगमने चतुर्थीकर्मोक्तधर्मातिदेशः

[2]एतेन धर्मेण ऋतावृतौ संनिपातयेत्॥

## भारद्वाजगृह्यसूत्रम्

मन्त्रवद्गमने मतभेदः

[3]सर्वाण्युपायनानि मन्त्रवन्ति भवन्तीत्याश्मरथ्यः॥

यच्चाऽऽदौ यच्चर्तावित्यालेखनः॥

## वाराहगृह्यसूत्रम्

गर्भाधानोक्तधर्मातिदेशः प्रत्यर्तुगमनम्

[1]एतेन धर्मेण ऋतावृतौ संनिपातयेत्॥

## आग्निवेश्यगृह्यसूत्रम्

सर्वर्तुगमनेषु चतुर्थीकर्मोक्तधर्मातिदेशः, चतुर्थ्यां रात्रौ गमनस्य निषेधः, चतुर्थ्यादिरात्रिगमनफलानि, शुक्राधिक्ये पुत्रस्य शोणिताधिक्ये कन्यायाश्चोत्पत्तिः, निषिद्धकालगमने प्रायश्चित्तम्, निषिद्धकालाः

[2]एवमेव मासि मास्यृतुवेलायाम्॥

[3]न तदहः संवेशनं कुर्यात्। यदि संवेशयेत्—

तदहर्जायते पुत्रः सोऽल्पायुर्धनवर्जितः।

पञ्चम्यां तु श्रमेद्या वा वन्ध्यां नारीं प्रसूयते॥

षष्ठयां तु या श्रमेत् साध्वी पुत्रपौत्रवती भवेत्।

सप्तम्यां तु तथा नारी अष्टम्यां षण्मुखोपमः॥

परप्रिया नवम्यां तु दशम्यामुत्तमः सुतः।

एकादश्यां तु दुष्टात्मा द्वादश्यां तु धनेश्वरः॥

त्रयोदश्यां तु दौर्भाग्या चतुर्दश्यघवान् सुतः।

लभेत् पतिव्रतां नारीं पञ्चदश्यां तथैव च॥

षोडश्यां लभते पुत्रं ब्रह्मकीर्तिं नताद्दशाम्।

तदूर्ध्वोपयमं नास्ति कामभोगैव केवलम्॥

तस्मात् सर्वप्रयत्नेन षोडश्यन्तं प्रतिश्रमेत्।

शुक्लोत्कर्षे लभेत् पुत्रं शोणितस्य स्त्रियं लभेत्॥

निन्दितेऽहनि संवेशं न कुर्यात्तु प्रयत्नतः।

यदि प्रमादात् कुर्याच्चेज्जपेत् तां वैष्णवीमृचम्॥

केशवादीनि नामानि जपेत्तु विविधानि च।

अग्न्यगारे ततो गत्वा हुत्वा पूर्णाहुतिं ततः॥

---

¶ आन. तादगतम्।

* संकौ., संर. मुक्तावत्।

† संर. मातृद्वगतम्।

§ संर. मातृद्ववत्।

(१) हिगृ. १९।७।३३–३४.

(२) मागृ. १।१४।२०.

(३) भागृ. १।२०.

(१) वागृ. १८.

(२) आग्निगृ. १।६।३.

(३) आग्निगृ. २।७।६.

एवमेव मासि मासि ऋतुवेलायां कृत्वा पुत्रं चारुबुद्धिमन्तं बलिष्ठं लभते बलिष्ठं लभत इत्याह भगवानाग्निवेश्यः ॥

## पारस्करगृह्यसूत्रम्

ऋतौ अनृतौ च गमनम्, गमने गर्भाधानविध्यतिदेशः

[1]तामुदुह्य यथर्तु प्रवेशनम् ॥

यथाकामी वा 'काममा विजनितोः संभवाम' इति वचनात् ॥

एवमत ऊर्ध्वम् ॥

(१) साऽनेन प्रकारेण ऊढा भवति । तामूढ्वा च यथर्तु ऋतावृतौ प्रवेशनम् अभिगमनं कुर्यात् । यथाकामं वा भवत्यभिगमः, न ऋतावृतावेव । कुत एतत् ? प्रजापतिना हि वरो दत्तः स्त्रीणाम्, ताभिश्च वृतः काममा विजनितोः इच्छया आ विजनितोः आ विजनन-कालात् पुंसा सह संभवाम इति । एवं च सति विकल्प एवायम् । तथा च स्मरणम्— 'ऋतौ भार्या-मुपेयात् सर्वत्र वा प्रतिषिद्धवर्जम्' इति । ऋतावृतावेवं कर्म कर्तव्यम् । * कभा.

(२) प्रजापतिना इन्द्रेण वरो दत्तः । 'संभवाम' इति वचनात् पुंसा संगता गर्भानुपघातेन भवामेति । ‡ जभा.

(३) स्त्रीणाम् इन्द्राद्वरप्रार्थनावचनात् । प्रजापते-रिति केचित् । अत्र यद्यपि यथर्तुप्रवेशनमिति सामान्ये-नोक्तं तथाऽपि स्मृत्यन्तरोक्तपर्वादिनिषेधपालनं कुर्यात् । 'लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । यस्मा-त्तस्मात् स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥' इत्यादिभिः स्मृतिभिः स्त्रीरक्षाया विहितत्वात्, तासां कामातिक्रमणे व्यभिचारशङ्कासंभवात्तद्रक्षार्थं याथा-काम्यम् । तस्माद्याथाकाम्ये तु न नियमः, यथाकामी वेति विकल्पेनाभिधानात्, अनभिगमने तु प्रत्यवाय-स्मरणाभावाच्च । अतो लोकानन्त्यं दिवः प्राप्तिश्च । एवम् अनेनैव प्रकारेण अतोऽनन्तरमृतावृतौ प्रवेशनं यथाकामं वा । § हभा.

(४) एवं तामुद्वाह्य यथर्तु ऋतुसमयमनतिक्रम्य प्रवेशनम् अभिगमनं कुर्यात् । † विभा.

## कात्यायनपरिशिष्टम्

गमनविधिः, दिवामैथुने दोषः

¶[2]अथर्तुमतीं जायामधिगच्छेत् ॥

पुत्रकामोऽभिगच्छेन्नित्यम् ॥

[3]यदि दिवा मैथुनं व्रजेत् क्लीबा अल्पवीर्या अल्पायुषाश्च प्रसूयन्ते । तस्मादेतद्वर्जयेत् प्रजा-कामो हि श्रुतिस्मृतिविरोधाभ्याम् ॥

## गोभिलगृह्यसूत्रम्

विवाहव्रतोत्तरं गमनमित्येकं मतम्, ऋतावेव रजोनिवृत्तौ गमनमित्यपरं मतम्

[3]ऊर्ध्वं त्रिरात्रात् संभव इत्येके ॥

---

* गभा. कभागतम्, जभागतं हभागतं च ।

‡ शेषं कभावत् ।

(१) पागृ. १।११।७–८, १०.

§ शेषं कभागतम् ।

† अतिदेशवाक्यार्थः हभावत् ।

¶ चौखम्बामुद्रितपारस्करगृह्यसूत्रपुस्तके 'अथर्तुमतीं जायामधिगच्छेत्' इत्यादिः 'पुत्रकामोऽभिगच्छेन्नित्यम्' इत्यन्ता कण्डिका त्रयोदशत्वेन, 'अथ गर्भाधानम्' इत्यादिः 'रेतो मूत्रमिति चैके स्रावणं कुर्यात्' इत्यन्ता कण्डिका चतुर्दशत्वेन मुद्रिताऽस्ति । तत्र त्रयोदश-कण्डिकायामत्रत्यं सूत्रद्वयं चतुर्दशकण्डिकायां च 'यदि दिवा' इति सूत्रमस्ति । भाष्यपञ्चकपुस्तके कण्डिकाद्वयमिदं नास्ति, नापि भाष्यकृता केनाप्यत्र व्याख्यातम् । संस्कार-गणपतौ 'यदि दिवा' इति सूत्रं कात्यायनपरिशिष्टीयत्वेन धृतम् । तस्मात्परिशिष्टीयं खण्डद्वयमिदमित्यभ्युपगम्यते । परिशिष्टपुस्तकानुपलम्भादनयोः कण्डिकयोः स्थलनिर्देशः चौखम्बापुस्तकमनुसृत्य गृह्यसूत्रीयत्वेन एव कृतः ।

(१) पागृ. (चौखम्बामुद्रितपुस्तके) १।१३.

(२) पागृ. (चौखम्बामुद्रितपुस्तके) १।१४; संग. ३६९ (हि०).

(३) गोगृ. २।५।७; मपा. ३४९ (ऊर्ध्वं त्रिरात्रं संभव इत्येके); संत. ९०७.

(१) †प्रकृतात्त्रिरात्रादूर्ध्वं संभवः संयोगः मैथुनं कर्तव्यमित्येके आचार्या मन्यन्ते । संत. ९०७

(२) प्रकृतत्रिरात्रादूर्ध्वं परतः संगतो भवत्यनेनेति संभवः संभोगः कर्तव्य इत्येके आचार्या मन्यन्ते । एष च 'त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।' इत्येवं मन्वादिनाऽभिहितपुंयोगवयस्का वृषस्यन्ती चेद्वधूस्तदा 'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् । स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥' इति याज्ञवल्क्यवचनाद्रागतः प्राप्तोऽपि सकामस्य स्त्रीधर्मरक्षणार्थं त्रिरात्रादूर्ध्वं पर्ववर्जं स्वस्यस्य विधीयते, ततः प्राग्ब्रह्मचर्यस्य पुरस्तादभिहितत्वात् । तथा च मनुः— 'सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥' इति, 'ऋतुकालेऽभिगमनं कार्यं पुंसा प्रयत्नतः । सदैव वा पर्ववर्जं स्त्रीणामभिमतं हि यत् ॥' इति चैवमादि पराशरादिवचनं चात्र प्रमाणम् । शुभकर्मनिर्णये तु नैतत्सूत्रं मुरारिमिश्रैर्धृतम् । मृदुला.

[1]**यदर्तुमती भवत्युपरतशोणिता तदा संभवकालः ॥**

(१) ऋतुः प्रजाजननयोग्यकालः तन्निमित्तेन नैमित्तिकं गमनं कार्यम् । अकुर्वतः प्रत्यवायान्नियमः, 'ऋतुमतीं तु यो भार्यां संनिधौ नोपसर्पति । अवाप्नोति स मन्दात्मा भ्रूणहत्यामृतावृतौ ॥' इति स्मृतेः । संत. ९०७–९०८

(२) स्वमते गर्भाधानकालमाह— यदेति । स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः काल ऋतुः । स च रजोदर्शनदिवसादारभ्य षोडशाहोरात्रः । सोऽस्या अस्तीत्यृतुमती । सा यदा भवति । तत्रापि उपरतशोणिता शोणितस्रावरहिता । तथाविधा च प्रायश्चतुर्भिरहोरात्रैर्भवति । तदा संभवस्य संगमस्य मैथुनस्य कालो भवति । तदेतत्सामान्यतोऽभिहितम् । विशेषतस्तु तत्रापि पर्वादिवर्जित एव । सोऽपि संनिहितस्य शक्तस्य, न सर्वस्येति बोध्यम् । तथा च याज्ञवल्क्यः— 'षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥ एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् । सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत् पुमान् ॥' इति । तस्मिन् ऋतौ । युग्मासु समासु षष्ठाष्टमादिषु रात्रिषु । रात्रिग्रहणाद्दिवसप्रतिषेधः । संविशेत् गच्छेत् पुत्रार्थम् । युग्मास्विति बहुवचनं समुच्चयार्थम् । अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु सर्वासु युग्मासु रात्रिषु गच्छेत् । एवं गच्छन्नपि ब्रह्मचार्येव भवति इति शेषः । अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्राग्रे समयालाभे गच्छतोऽपि न ब्रह्मचर्यस्खलनदोषोऽस्ति । किंतु पर्वाणि आद्याश्चतस्रश्च रात्रीर्वर्जयेत् । पर्वाणि पञ्च । यथा च स्मर्यते— 'चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥' इति । रविसंक्रान्तिर्मेषादिषु राशिषु सूर्यस्य गमनसमयः । मनुरप्याह— 'अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥' इति । अतोऽमावास्यादीनि रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेदिति मिताक्षराकारः । § पर्वाणीति बहुवचननिर्देशादाद्यर्थावगमादन्येषामपि ग्रहणम्, यथा चाग्रे स्फुटीभविष्यति । मृदुला.

---

† विवाहदिनादि त्रिरात्रमत्र प्रकृतम्, न रजोदर्शनादि ।

(१) गोगृ. २।५।८ ; ब्रक. ७९ ; स्मृच. १५ ; चका. ७२६ ; मपा. ३४९ ; संत. ९०७ ; संप्र. १५६ ; मुक्ता. ७४.

§ रभसोक्तिरियम् । यत्र बहुवचनानुपपत्तिस्तत्रैव बहुवचनस्याद्यर्थावगमकत्वम् । यथा 'सप्तमी शौण्डैः' (पा. सू. २।१।४०) इत्यत्र । अन्यथाऽतिप्रसङ्गः । अत्र तु पर्वणां पञ्चत्वस्य स्वयमेव सप्रमाणं प्रागुक्तत्वान्न बहुवचनानुपपत्तिः । 'पर्वाणीति बहुवचनादाद्यर्थावगमादष्टमीचतुर्दश्योर्ग्रहणम्' इति मिताक्षरायां तु 'पर्व्यते पूर्यते मासः अस्मिन्' इति व्युत्पत्त्या पूर्णिमामावास्ययोरेव पर्वशब्दाभिधेयत्वमभिप्रेतमिति स्पष्टम्, अष्टमीचतुर्दश्योराद्यर्थकबहुवचनग्राह्यत्वात् । एवं च पर्वणोर्द्वित्वादनुपपन्नस्य बहुवचनस्याऽऽद्यर्थावगमकत्वं मिताक्षरोक्तं नानुपपन्नम् । अतो मृदुलाकारेण पर्वशब्दस्योपलक्षणत्वं वक्तव्यम् ।

## वैखानसगृह्यसूत्रम्

ऋतुकालविषयकमतभेदः, आद्ये रात्रित्रये गमननिषेधः, समासु गमने पुत्रस्य विषमासु कन्याया उत्पत्तिः

**[1]ऋतुरात्रयो द्वादश भवन्ति षोडशेति चाऽऽचक्षते । प्रथमास्तिस्रो न गम्याः । पुमान् समासु विषमासु स्त्री जायते ॥**

## गौतमः

ऋतौ अनृतौ चानिषिद्धकाले गमनविधिः, अकल्या-रजस्वलागमनस्य रजस्वलाश्लेषस्य च निषेधः, गौरीगमनानुज्ञा

[2]†**ऋतावुपेयात् ॥**

(१) अपत्योत्पादनार्थे कर्मार्थे च भार्यापरिणयनमुक्तम् । तत्र पूर्वमपत्योत्पादनविधिमाह– ऋतौ इति । ऋतुः गर्भग्रहणसामर्थ्येन स्त्रीगतेनोपलक्षितः कालः षोडशाहोरात्रः । तथा च मनुः– 'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः । चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥' इति । तस्मिन् उपेयात् उपगच्छेत् प्रकृतां भार्यां प्रहर्षयन्, न तु पशुवत्, उपोपसर्गयोगात् । नायं विधिः, कामत एवार्थप्राप्तत्वात् । नापि नियमः । कोऽसौ नियमः ? पक्षे प्राप्तस्य पुनर्वचनं नियमः, इच्छातः प्रवृत्तेः ऋतौ गमने चागमने च प्राप्ते ऋतावुपेयादेवेति । अस्मिन् पक्षे गृहीते अनृतौ न विधिः, न प्रतिषेध इति प्रवृत्तिरेव भवति मरीचादिवत् । मरीचं भक्षयेन्न भक्षयेद्वेति न क्वचिद्धर्मशास्त्रे श्रूयते, तथाऽपि शिष्टा भक्षयन्ति । तद्वदत्रापि प्रवृत्तिरेव भवतीति 'सर्वत्र वा' इत्यस्यानारम्भः प्राप्नोति, अगमने प्रायश्चित्तं च । ननु चोभयमपीष्यते, 'यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति, तदनुवर्तमानो नरकाय राध्यति' इतीच्छातः प्रवृत्तौ नरकपातश्रवणात्तन्निवारणार्थः 'सर्वत्र वा' इत्यस्याऽऽरम्भः । स्मृत्यन्तरे अगमने प्रायश्चित्तं श्रूयते– 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥' इति । नैतदेवम्, 'यत्र तु प्रीत्युपलब्धितः प्रवृत्तिः' इत्यादेस्तावदयमर्थः– यत्र यस्मिन्ननुष्ठाने प्रीत्युपलब्धितः प्रवृत्तिः फलं ज्ञात्वा तत्प्रीत्या प्रवृत्तिः, फलाभिसंधिना प्रवृत्तिरित्यर्थः, तस्यां प्रवृत्तौ न शास्त्रमस्ति, अत्यन्तं न (? अतस्तन्न) फलतीत्यर्थः । तदनुवर्तमानः फलाभिसंधिनाऽनुष्ठानं कुर्वन्नरकाय राध्यति नरकं गच्छतीति । संध्योपासनादेः फलाभिसंधित्यागेनानुष्ठानार्थमिदं वचनम् । तथा च भगवान् वासुदेवः– 'मा कर्मफलहेतुर्भूः' इत्यादि । यदि सर्वत्र प्रीतिप्रवृत्तिनिवारणं स्यात् तदानीं मरीचादीनामपि शास्त्रं वक्तव्यम्, शास्त्रेण विना नरकपतनं भवतीति । तस्मात् 'सर्वत्र वा' इत्येतदपि शास्त्रेणानुग्रहार्थं न वक्तव्यम् । यच्चोक्तम् 'ऋतुस्नातां तु यो भार्याम्' इत्यादि, तदपि ऋतुस्नाताया भार्याया आत्मदर्शनार्थं वचनम् । कुतः ? जाबालिश्रुतिदर्शनात् । एवं च श्रूयते– 'ऋतुस्नाता भार्या यं पूर्वं पश्येत्तादृशं पुत्रं जनयति तस्मात् संनिधौ भर्तैव प्रथममात्मानं दर्शयेत्' इति । ततश्चागमने प्रायश्चित्ताभावात् नियमेन दोषाभावः प्राप्नोति । प्राप्तस्य पुनर्वचनं नियम इति येषां पक्षः तेषां नियमाशङ्काऽपि नोपपद्यते, ऋतुगमनस्यैव प्राप्त्यभावात् इच्छातः प्रवृत्तिः सर्वत्र भवतीति । तस्मात् परिसंख्यार्थमिदं सूत्रम् । का च परिसंख्या ? तत्र चान्यत्र च प्राप्तौ वचनम्, इच्छातः प्रवृत्तेः ऋतावनृतौ च प्राप्तौ सत्याम् ऋतावेव गमनं कर्तव्यमिति । इदमप्यनर्थकम् 'सर्वत्र वा' इत्यारम्भादिति चेत् न, व्यवस्थितविकल्पार्थत्वात् । व्यवस्था चैवं द्रष्टव्या– यदि पुत्रार्थैव प्रवृत्तिः तदानीमृतावेवोपेयात्, रत्यर्था चेत्

† अस्य अग्रिमसूत्रस्य च विश्वव्याख्यानं 'एवं गच्छन्' इति याज्ञवल्क्यश्लोकव्याख्याने, मेधाव्याख्यानं च 'ऋतुकालाभिगामी' इति मनुश्लोकव्याख्याने द्रष्टव्यम् ।

(१) वैगृ. ३।९.

(२) गौध. ५।१ ; विश्व. १।७९ ; मेधा. ३।४५ ; मिता. १।८१ ; कमा. ११८ (ऋतौ भार्यामुपेयात्) स्मरणम् ; मभा. ; गौमि. ; ममु. ३।४५,५।१५३ ; चका. ७३० ; जभा. ११९ स्मरणम् ; मर. १११ ; गभा. १२४ स्मृतिः ; मच. ३।५०,५।१५३ ; संप्र. १५२ ; मुक्ता. ७६ ; सिन्धु. ८०१ ; विपा. ९४.

'सर्वत्र वा' इति। ऋणत्रयश्रुत्या पुत्रोत्पादनार्थमनुष्ठानार्थं च भार्याग्रहणम्, न रत्यर्थमिति चेन्न, 'रतिपुत्रफला नारी' इति स्मृत्यन्तरदर्शनात्, 'या स्वादनतिचारेण रतिः सा धर्मसंश्रिता।' इति वासिष्ठदर्शनात्, 'स्वदारतुष्ट एव भवेत्' इत्यौशनसदर्शनात्, 'अपि नार्यो विजनिष्यमाणाः पतिभिः सह शयीरन्' इति वाजसनेयश्रुतिदर्शनात्, 'विरक्तो भिक्षुर्भवेदितरो गार्हस्थ्यं प्रविशेत्' इति च स्मृत्यन्तरदर्शनात्, 'कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः।' इति मनुदर्शनात्, ऋणत्रयश्रुत्याऽपि वैकल्पिकाचार्यपक्ष एवानृतौ ब्रह्मचर्योपदेशात्, समुच्चयपक्षे तु यज्ञप्रजाभ्यामित्युदाहरणत्वेनोपपद्यमानत्वात्, गार्हस्थ्यचोदनायाः स्मृतिविरोधो मा भूदिति। तस्मादनष्टरागस्य रत्यर्थमपि दारग्रहणमस्त्येव। ततश्च यदि जायापती विरक्तौ भवतः, गमनं च पुत्रार्थमेव, तदानीमृतावेवोपेयात्। सरक्तयोः 'सर्वत्र वा' इत्युपपद्यत इति। तर्हि ऋतावुपगमनमकुर्वतो दोषाभावः प्राप्नोति, न दोष इति चेन्न, अस्माभिरपि दोषाभावस्यैवेष्यमाणत्वात्। एवमपि पुत्रार्थिनः अनृतौ गमनं कुर्वतः प्रायश्चित्तं प्राप्नोति, स दोष इति चेन्न, तस्यैव परिसंख्याफलत्वात्। येषां शास्त्रप्राप्तस्य पुनर्वचनं परिसंख्येति तेषामप्युपपद्यते। तद्यथा— 'जातपुत्रोऽग्नीनादधीत' 'त्रिभिर्ऋणवान् जायते' इति श्रुतेः, 'पुनन्ति साधवः पुत्राः' इति च स्मृतेः। पुत्रोत्पादनार्थे गर्भग्रहणसामर्थ्यादृतावेव गमने प्राप्ते अनुत्पन्नपुत्रस्य पुनरिदं वचनम् अनृतुकालीनगमनप्रतिषेधपरं विज्ञायत इति। तस्मात् परिसंख्यैवेयं यदुपेयादृतावेवेति। ननु यदि पुत्रार्थे गमनं तदा उत्पन्नपुत्रस्य न प्राप्नोति इति। उच्यते बहुपुत्रस्यामीष्टत्वात्। यथाऽऽह शङ्खः— 'पुत्रपौत्रप्रतिष्ठस्य बहुपत्यस्य जीवतः।' इत्यादि। तथा च श्रुतिः— 'दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि।' इति। तस्मात् परिसंख्यार्थं सूत्रमिति स्थितम्। मभा.

(२) तदिह षोडशसु रात्रिष्वादितस्तिस्रः सर्वथा वर्ज्याः। इतरासु गच्छेदिति। सर्वस्मृतिचोदितनिषेधान् परित्यज्य गच्छन्नुत्कृष्टं पुत्रं जनयति। द्वेषादिना ऋतावनुपयन् प्रत्यवेयादिति। तथा च देवलः— 'यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति। भ्रूणहत्यामवाप्नोति गर्भे प्राप्तं विनाश्य सः॥' इति। स्मृत्यन्तरं च— 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। तस्या रजसि तं मासं पितरस्तस्य शेरते॥' इति। अयं तु रागतः प्राप्तत्वे सत्यप्यकरणे प्रत्यवायश्रवणाद्विधिश्च भवति। ऋतावुपेयादेव इति कस्यचिन्मतेन नियमश्च भवति, आचार्यस्तु परिसंख्यानं च प्रतिपादयति। गौमि.

## 'सर्वत्र वा प्रतिषिद्धवर्जम्॥

(१) 'ऋतावुपेयात्, सर्वत्र वा प्रतिषिद्धवर्जम्' इत्येतदपि गौतमीयं सूत्रद्वयं नियमपरमेव ऋतावुपेयादनृतावपि स्त्रीकामनायां सत्यां प्रतिषिद्धवर्जमुपेयादेव इत्यलमतिप्रसङ्गेन †। मिता. १।८१

(२) पर्वादीनि प्रतिषिद्धानि। यथाऽऽह मनुः— 'अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्। ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥' (मस्मृ. ४।१२८) इति। वाशब्दो व्यवस्थितविकल्पार्थः। अन्ये तु व्याचक्षते— 'ऋतावुपेयात्' इत्यनेन ऋतावेव सकृद्गमनं चोद्यते, 'सर्वत्र वा' इत्यनेन सर्वस्मिन् काले सकृद्गमनमिति। तदयुक्तम्, 'ऋतावुपेयात् द्विरेकतो वा, अनृतौ कामतः' इति श्रुतिदर्शनात्। मभा.

---

† मेधातिथिमिताक्षरादीनां विधिविषयको विचारप्रपञ्चो मनुयाज्ञवल्क्यादिवचनेषु द्रष्टव्यः।

(१) गौध. ५।२; विश्व. १।७९; मेधा. ३।४५:५। १५१ (=) त्र वा (त्रैव); गौरा. ५।१५३ (सर्वत्र वा प्रीतिविवर्जितम्); मिता. १।८१; कमा. ११८ स्मरणम्; मभा.; गौमि.; ममु. ३।४५ (अनृतौ च पर्ववर्जम्): ५।१५३; चका. ७३०; अभा. ११९ स्मरणम्; मर. १११; गभा. १२४ स्मृतिः; मच. ३।५० सर्वत्र वा (अनृतौ च): ५।१५३ वर्जम् (वर्ज्यम्); संप्र. १५२; मुक्ता. ७६; सिन्धु. ८१०; विपा. ९४,३७० (भागः २); कुभ. ८१० निर्देशमात्रम्.

(३) सर्वेषु वा कालेषूपेयाद्दतावनृतौ च प्रतिषिद्धदिवसान् वर्जयित्वा, 'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्।' इति। वरश्च– 'काममा विजनितोः संभवाम' इति। यदपि आत्मनो जितेन्द्रियत्वे सत्यपि धर्मदाराः सर्वदा रक्षणीया इति स्मर्यते– 'अप्रमत्ता रक्षत तन्तुमेनं मा वः क्षेत्रे परबीजानि वाप्सुः' इति। गौमि.

## [1]न मिथुनीभूत्वा शौचं प्रति विलम्बेत ॥

(१) मिथुनीभूत्वा स्त्रियमासेव्य शौचं प्रति न विलम्बेत, सद्य एव शौचं कुर्यादित्यर्थः। वीत्युपसर्गाद्यावता कालेन रतिर्न निवर्तते तावन्तं कालं विलम्बेतापि। न मैथुनविषये एव शौचविलम्बनम्, किंतु मूत्रपुरीषादिविषयेऽपि न विलम्बनं कार्यमित्येवमर्थं प्रतिग्रहणम्। ननु 'नित्यं शुचिः' (गौध. ९।२) इत्यनेनैवैतत्सिद्धम्। अत्रोच्यते– अत्र शौचशब्देन मलापकर्षणमात्रमुच्यते, आचमनार्होदकासंभवे तल्लेपापकर्षणं येनकेनचित्कर्तव्यमित्येवमर्थः सूत्रारम्भ इति। एवं च 'नित्यं शुचिः' इत्यस्य सति संभवे नित्यं शुचिः स्यादित्येषोऽर्थो लभ्यते। ततश्चासंभवादशुचेः सतो न दोषः। § मभा.

(२) अत्र शौचं क्षालनम्, न तु वस्त्रादीनां शोधनम्, 'शुक्रे तिस्रो मृत्तिकाः' इति वचनात्। ¶ मुक्ता. ७७

## [2]नाकल्यां नारीमभिरमयेत् ॥

(१) अस्वस्थशरीराम् अनलंकृतशरीरां वा अकल्यां नारीं स्त्रियं नाभिरमयेत्। अभीत्युपगमार्थम्। ततः विनोदार्थायाः क्रीडाया अप्रतिषेधः। * मभा.

(२) अकल्यां रोगादिनाऽस्वस्थां नारीं नाभिरमयेत् नानया मिथुनीभवेत्। गौमि.

## [1]न रजस्वलाम् ॥

उदक्यां च नोपेयात्। ननु च 'उदक्यागमने त्रिरात्रम्' (गौध. २३।३५) इति प्रायश्चित्तविधानादेव प्रतिषेधः सिध्यति। उच्यते– 'त्रिरात्रं रजस्वलाऽशुचिर्भवति' इति स्मृत्यन्तरदर्शनात् त्रिरात्रान्तर्गमने प्रायश्चित्तमुक्तम्। इह तूर्ध्वमनिवृत्ते रजसि प्रतिषेधः। अन्ये त्वकालप्रवृत्ते रजसि रजस्वलामाहुः। तदयुक्तम्, कालप्रवृत्ते एव रक्ते रजःशब्दप्रवृत्तेः, तस्यैवाशुचिकरत्वाच्च। तथा च स्मृत्यन्तरम्– 'अकाले यद्भवेत् स्त्रीणां रक्तमाहुर्मनीषिणः। काले तु तद्रजः प्रोक्तं तस्मात्तत्रैव साऽशुचिः॥' इति। तथा च भार्गवीयमपि– 'अकाले यद्भवेत् स्त्रीणां शुचि तत्तु विनिर्दिशेत्। अशुद्धं तद्विजानीयान्मासि मासि भवेत्तु यत्॥' इति। तथा च वसिष्ठः– 'स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित्। मासि मासि रजो ह्यासां दुरितान्यपकर्षति॥' इति। तथा च श्रुतिः– 'सैषा भ्रूणहत्या मासि मास्याविर्भवति' इति। तस्मात् त्रिरात्रादूर्ध्वे प्रतिषेधार्थः। एवं च त्रिरात्रादूर्ध्वमप्यनुपरते रजस्येषाऽशुचिरेव। तथा च मनुः– 'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।' इति। तत्र त्रिरात्रादूर्ध्वमनुपरतेऽपि स्पर्शयोग्यैव, 'रजस्वला चतुर्थेऽहनि स्नायात्' इति स्पर्शनार्थत्वात् स्नानचोदनायाः। 'रजस्वलां च' इति सिद्धे उत्तरार्थः पृथगारम्भः। ¶ मभा.

## [2]न चैनां श्लिष्येत् ॥

---

§ गौमि. मभागतम्।

¶ शेषं मभागतम्।

(१) गौध. ९।२६ ; अप. १।७९ पृ. १०५ भूत्वा (भूय) ; मभा. ; गौमि. ; गृर. ४०० अपवत् ; मर. ११२ (मिथुनीभूय शौचं प्रति न विलम्बेत) ; आप्र. ५६१ अपवत् ; मुक्ता. ७७ ; आन. १४५ (=) ; बाल. १।८१ पृ. २२३ अपवत्.

(२) गौध. ९।२९ ; मभा. ; गौमि. कल्यां (कल्पां) ; गृर. ४०२ रमयेत् (रमेत) ; चम. ८२ ; संकौ. १७१ (नाकल्यां नारीमभिगच्छेत्).

* गृर., चम. मभागतम्।

¶ गौमि. मभागतम्।

(१) गौध. ९।३० ; मभा. ; गौमि. ; गृर. ४०२.

(२) गौध. ९।३१ ; मभा. ; गौमि. ; गृर. ४०२, ४०७.

एनामिति त्रिरात्राभ्यन्तररजस्वलोपसंग्रहार्थम् । 'न रजस्वलाम्' इति पृथगारम्भस्याप्येतदेव प्रयोजनम् । एवं त्रिरात्रादूर्ध्वमनुपरतेऽप्यालिङ्गने न दोषः । ननु च– 'पतितचण्डालसूतिकोदक्याशव॰'(गौध. १४।२९) इत्यादिना स्पर्शप्रतिषेधादालिङ्गनस्याप्यर्थतः प्रतिषेधः सिध्यतीति । अत्रोच्यते– आलिङ्गने कृते स्नातकव्रतलोपप्रायश्चित्तप्रवेशार्थं आरम्भ इति । चकारः एनां चाकल्यां चेति समुच्चयार्थः । $ मभा.

[1]गौरीमपि च रत्यर्थे गच्छेत् पुरुष आकुलः ।
अन्यथा वीर्यपातो हि सहस्रकुलपातकः ॥
[2]ऋतावपि ( च ? ) सदा वर्ज्याः प्रथमाद्या निशास्त्रयः ॥

## हारीतः

चतुर्थेऽह्नि युग्मासु च गमनम्, गर्भाधानविध्यतिदेशः

[3]चतुर्थेऽह्नि स्नातायां युग्मासु च गर्भाधानवदुपेतो ब्रह्मगर्भं संदधाति ॥

(१) गर्भाधानवत् गर्भाधानविधिना 'विष्णुर्योनिं कल्पयतु' इत्यादिना । उपेतः स्त्रियमुपगतः । ब्रह्मगर्भं संदधातीति । ब्रह्म वेदः तद्ग्रहणयोग्यं गर्भं संदधाति संजनयति । * ब्रक. ७५

(२) यत्तु गर्भाधानमधिकृत्य हारीतेनोक्तम्– 'चतुर्थेऽह्नि स्नातायां युग्मासु च' इति तत् चतुर्थेऽह्नि रजोनिवृत्तौ द्रष्टव्यम् । $ स्मृच. १५

(३) चतुर्थेऽहनि गमनं विहितप्रतिषिद्धत्वात् वैकल्पिकम् । तत्र व्यवस्था–चतुर्थदिने रजोनुवृत्तौ न गमनम्, इतरथा गमनम् । तथा च मनुः – 'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला । ' । साध्वी गर्भाधानयोग्या । कृत्यकल्पतरौ तु हारीतादिवाक्येषु गमनविधानं गन्तुः पुरुषस्य दोषाभावाभिप्रायेण, मन्वादिवाक्येषु गमननिषेधस्त्वपत्यगताल्पायुष्ट्वादिदोषाभिप्रायेणेति व्यवस्था कृता । ¶ मर. ११०

## वृद्धहारीतः

ऋतुगमनविधिः, युग्मायुग्मरात्रिगमनं यथाक्रमं पुत्रकन्योत्पत्तिनिमित्तम्, श्राद्धदिनादीनि गमननिवृत्तिनिमित्तानि, अपररात्रे गमनम्, गमने उपवीतव्यवस्था

[1]ऋतौ गच्छेद्धर्मपत्नीं विना पञ्चसु पर्वसु ।
पुत्रार्थी चेत्तु युग्मासु स्त्रीकामी विषमासु च ॥
न श्राद्धदिवसे चैव नोपवासदिने तथा ।
नाशुचिर्मलिनो वाऽपि न चैव मलिनां तथा ॥
न क्रुद्धां न च क्रुद्धः सन्न रोगी न च रोगिणीम् ॥
[2]सुपुत्रकामो यः सोऽपररात्रे मैथुनं स्वदारे कुर्यात् । ऋतुगमने यज्ञोपवीतमनृतुगमने निवीतम् ॥

---

$ गौमि. मभागतम् ।

(१) सिन्धु. ८०९.

(२) संव. ४९.

(३) अप. १।७९ पृ. १०४ ऽह्नि ( ऽहनि ) च ( वा ) ; ब्रक. ७५ ( चतु ... सु च॰ ) ; स्मृच. १५ ( गर्भा ... धाति॰ ) ; चका. ७२६ र्थेऽह्नि ( र्थेऽहनि) च ( वा ) दुपेतो ( दुपेतं ) ; हभा. १८८ ब्रकवत् ; पमा. ५०४ ( चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भाधानम् ) ; मपा. ३४६–३४७ र्थेऽह्नि ( र्थेऽहनि) नवदुपेतो ( नं तदुपेतं ) ; मर. ११० (चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भं संदधति ) ; गप. ४५४ च ( वा ) ब्रह्मगर्भं ( ब्राह्मणो गर्भं ) ; आत. ४६१ संदधाति ( दधाति ) शेषं मपावत् ; संत. ८५७ ब्रकवत् ; संप्र. १५६ र्थेऽह्नि स्ना ( र्थेऽहनि ऋतुस्ना ) धानवदुपेतो ( धानं ) ; आप्र. ५६० र्थेऽह्नि ( र्थेऽहनि ) ( च॰ ) वदुपेतो ( रूपतो ) ; चम. ५ (चतुर्थेऽहनि स्नातायां युग्मासु गर्भाधानम् ) ; मुक्ता. ७४ स्मृचवत् ; सिन्धु. ८१४ ( चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भं संदधाति ) ; बाल. १।७९ पृ. २२१ ( चतुर्थेऽहनि स्नातायां युग्मासु च गर्भाधानम् ); हर. ६८२ मपावत् .

* संत. ब्रकवत् ।

$ आत. , संप्र. , चम. स्मृचवत् ।

¶ बाल. मरगतम् ।

(१) बृहास्मृ. ८।३०७–३०९.

(२) मुक्ता. ४५८ मैथुनं स्वदारे ( स्वदारमैथुनं ) ; आन. १४०.

## बौधायनः

ऋतुगमनप्रशंसा, ऋतावगमने अनृतौ अयोनौ च गमने दोषः, ऋतावगमने प्रायश्चित्तम्, ऋतुस्कन्दने भार्यात्यागः, भार्यास्य- मैथुने दोषः

**[1]ऋतौ च गच्छन् विधिवच्च जुह्व- न्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥**

ऋतुः आर्तवः। अर्तेर्गतिकर्मणः। गर्भाधानक्षमकालः, न वसन्तादिः। तत्र गच्छन् मैथुनमाचरन्। आह— 'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः। चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः॥ तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या। त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः॥'। एतच्च स्वभार्यायामेव। विधिवच्च जुह्वत् श्रुतिस्मृतिचोदितेन मार्गेण। ब्रह्मलोकान्न च्यवते। ब्रह्म च तल्लोकश्च ब्रह्मलोकः। तस्मान्न च्यवते न भेदं प्रतिपद्यते इत्यर्थः। बौवि.

**[2]त्रीणि वर्षाण्यृतुमतीं यो भार्यां नाधिगच्छति। स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयम् ॥**

भर्तृविषय एव किंचिदुच्यते— त्रीणीति। यथा गर्भप्रध्वंसने भ्रूणहत्या भवति तथा तत्प्रागभावेऽपि, अविशेषादित्यभिप्रायः। बौवि.

**[3]ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। पितरस्तस्य तन्मासं तस्मिन्रजसि शेरते ॥**

(१) संनिधेर्ग्रहणादसंनिधाने न दोष इति मन्तव्यम्। संनिधावपि यावदशक्तस्तावददोष एव। तथा च स्मृतिः— 'यः स्वदारानृतुस्नातान्सुस्थः सन्नोपगच्छति। भ्रूणहत्यामवाप्नोति प्रजाः प्राप्य विनश्यति॥' इति। § स्मृच. १६

(२) ऋतुगमनातिक्रमनिन्दैषा। बौवि.

**[1]ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति। तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति ॥**

(१) ‡ यत्तु बौधायनवचनम् 'ऋतौ नोपैति...' इति, तत् स्त्रीणामिच्छाभावे वेदितव्यम्। *चका. ७३१

(२) ऋतावगत्वाऽनृतौ गमनेऽयं दोषः, न तु ऋतुगमनानन्तरमनृतुगमने, स्त्रीवरेण तस्यादुष्टत्वात्। गप. ४५५

(३) त्रयाणामपि भ्रूणहत्यादोषस्तुल्यः, सत्पुत्रोत्पत्तिनिरोधात्। बौवि.

**[2]भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम्। तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं निर्धमेद्गृहात् ॥**

प्रतिनिवेशः प्रतिकूलता अनिच्छा वा। स्कन्दयेत् गमयेत् शोषयेद्वा। भर्तृद्वेषाद्रज औषधादिभिः शोषयन्तीमित्यर्थः। ग्राममध्ये जनसंनिधौ निर्धमेत् प्रस्थापयेत् त्यजेत्। ऋत्वतिक्रमे भर्तुर्यथा भ्रूणहत्या तथाऽस्या अपीति निन्दैषा। बौवि.

---

(१) बौध. २।३।१ ; मुक्ता. १६६.

(२) बौध. ४।१।१९ हत्याया ( हत्यायै ) ; चका. ७२९ नाधि ( नानु ) भ्रूण ( ब्रह्म ) ; गृर. ४०१ नाधिगच्छति ( नोपसर्पति ) ; पमा. ४९८ नाधि (नोप) ; आप्र. ५६२ पमावत् ; मुक्ता. ७६ पमावत्, देवलः ; बाल. १।८१ पृ. २२६ नाधि ( नोप ) शयम् (शयः).

(३) बौध. ४।१।२० ; विश्व. १।७९ स्नातां ( मतीं ) उत्तरार्धे ( तस्या रजसि तं मासं पितरस्तस्य शेरते ॥ ); उ. २।१।१७ उत्तरार्धं विश्ववत् ; स्मृच. १६ न्रज (न्रेत) ; चका. ७२९ तन्मा ( तं मा ) न्रज ( न्रेत ) ; मुक्ता. ७६ स्मृचवत् ; आन. १४६ स्मृचवत्.

§ मुक्ता. स्मृचवत्।

‡ इदं संदर्भवशात् उपपत्तिवशाच्च 'अनृतौ यश्च गच्छति' इत्येतत्परम्।

* आत., मुक्ता., संम., संर. चकावत्।

(१) बौध. ४।१।२१ ; चका. ७३१ यश्च ग ( वोपग ) ; गृर. ४०१ ; पमा. ४९८ योर्दोष ( योः पाप ) ; गप. ४५५ ; आत. ४६२ सिञ्च ( गच्छ ) ; बौमि. १।७९ आतवत् ; आप्र. ५६२ ; चम. ६ पमावत् ; मुक्ता. ७६ पमावत्, देवलः ; संम. ११ ऋतौ ( ऋतुं ) शेषं पमावत् ; बाल. १।८१ पृ. २२२ पमावत् ; कृभ. ८१० ( = ) पमावत् ; संर. ६८७ पमावत्.

(२) बौध. ४।१।२२.

**'ऋतुस्नातां न चेद्गच्छेन्नियतां धर्मचारिणीम् । नियमातिक्रमे तस्य प्राणायामशतं स्मृतम् ॥**

(१) ऋतुगमनातिक्रमे प्रायश्चित्तमाह– ऋतुस्नातामिति । नियमातिक्रमः ऋतुगमनातिक्रमः ऋत्वतिक्रमो वा । ऋज्वन्यत् । बौवि.

(२) कृच्छ्रार्धमित्यर्थः, प्राणायामशतद्वयस्य कृच्छ्रप्रत्याम्नायत्वात्, 'ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत् ।' इति बृहस्पत्युक्तेश्च । तादृश्याः स्त्रिया अप्येतदेव, दोषसाम्यात् । भर्तुरवमाने तु कृच्छ्रम्, 'भर्तुर्व्यतिक्रमे कृच्छ्रम्' इत्यापस्तम्बोक्तेः । कुम.८१६

**'यस्तु पाणिगृहीताया आस्ये गच्छति मैथुनम् । तस्येह निष्कृतिर्नास्तीत्येवमाह प्रजापतिः ॥**

अत्र निष्कृत्यभावेन महापातकप्रायश्चित्तेन शुद्धिः । एतच्च रेतःसेकपर्यन्तम् । स्त्रियाश्च 'व्यवाये तीर्थगमने धर्मेभ्यश्च निवर्तते ।' इति धर्मानधिकारः । तत्र तस्या रेतोमूत्रप्राशने चान्द्रायणं पुनःसंस्कारश्च प्रायश्चित्तम् । रेतःसेकात्पूर्वं यः पुनर्ब्राह्मणो धर्मपत्नीमुखे मैथुनं सेवते स प्राजापत्येन शुध्यति । गप. ४६२

---

¶ अस्य पमाव्याख्यानं 'ऋतौ न गच्छेत्' इति बृहस्पतिवचनव्याख्याने द्रष्टव्यम् ।

(१) बौध. ४।१।२३ ; पमा. ३५ (खण्डः २ भागः १) प्रथमपादे (ऋतौ न गच्छेद्यो भार्यां) ; कुम. ८१६ नियमा (नियता) शेषं पमावत् ; संर. ६८५ प्रथमपादे (ऋतौ नोपैति यो भार्यां) धर्म (व्रत) क्रमे त (क्रमात्त) संवर्तः .

(२) अप. १।७९ पृ. १०४ ; नृर. ४०५ आस्ये (मुखे) ; गप. ४६२ ; मुका. ७६.

---

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

गमनोत्तरमेकशय्यानिषेधः, दिवागमननिषेधः, ऋतौ अनृतौ च निषिद्धवर्ज्यं गमनम्, गमने वस्त्रनियमः, पुरुषस्य गमनोत्तरशुद्धिविधिः, नारीणां शयनोत्थितानां स्वतः शुद्धिः, रजोनिवृत्तौ गम्यत्वम्, उत्तरोत्तररात्रिप्राशस्त्यम्

**'मिथुनीभूय च न तया सह सर्वां रात्रिं शयीत ॥**

(१) मिथुनीभूय मैथुनं कृत्वा तया भार्यया सह तां रात्रिं सर्वां न शयीत । उ.

(२) सर्वाम्, रात्रिमिति शेषः । गप. ४४९

**'अहन्यसंवेशनम् ॥**

संवेशनं मैथुनम्, तदहनि न कर्तव्यम् । उ.

**'ऋतौ च संनिपातो दारेणानुव्रतम् ॥**

रजोदर्शनादारभ्य षोडशाहोरात्रा ऋतुः । तत्र च संनिपातः संयोगो दारेण सह कर्तव्यः । छान्दसमेकवचनम् । नित्यं बहुवचनान्तो हि दारशब्दः । अनुव्रतम्– शास्त्रतो नियमो व्रतम्, तदनुरोधेन । तत्र मनुः– 'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः । चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥ तासामाद्याश्चतस्रस्तु निन्द्या एकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता

---

(१) आध. १।३२।२ ; हिध. २६।८।४४ च न (न च) ; अप. १।७९ पृ. १०५ न तया सह सर्वां (तया सह न) ; चका. ६९२ च न (न च) ; गप. ४४९ (=) (मिथुनीभूय तया सह सर्वां न शयीत) ; आप्र. ५६१ (च०) ; मुका. ७७ रात्रिं (रात्रीं) ; बाल. १।८१ पृ. २२३ (च०).

(२) आध. २।१।१६ ; हिध. २७।१।१५ ; अप. १।७९ पृ. १०४ ; चका. ७२३.

(३) आध. २।१।१७ ; हिध. २७।१।१६ च (तु) ; चका. ७२३ (ऋतौ) एतावदेव पूर्वसूत्रान्ते प्रमादात्पतितम् ; गप. ४४८ ; आप्र. ५६२ ऋतौ च (ऋतावेव) ; संर. ६८० हिरण्यकेशिधर्मसूत्रम्.

दश रात्रयः ॥ अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥ ' इति । याज्ञवल्क्यस्तु— ' एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् । ' इति । आचार्यस्तु चतुर्थीप्रभृति गमनमाह— ' चतुर्थिप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमनमित्युपदिशन्ति ' ( आपगृ. ९।१ ) इति । तदिह षोडशसु रात्रिष्वादितस्तिस्रः सर्वथा वर्ज्याः । चतुर्थ्येकादशी त्रयोदशी चाऽऽचार्येणानुज्ञाता मनुना निषिद्धाः । इतरासु दशसु युग्मासु पुत्रा जायन्ते, स्त्रियोऽयुग्मासु । तत्र च ' उत्तरामुत्तराम् ' इति वचनात् षोडश्यां रात्रौ मघादियोगाभावे गच्छतः सर्वत उत्कृष्टः पुत्रो भवति । चतुर्थ्यामवमः । मध्ये कल्प्यम् । एवं पञ्चदश्यामुत्कृष्टा दुहिता । पञ्चम्यामवमा । मध्ये कल्प्यम् । षोडशस्वेव गमनं गर्भहेतुः । तत्रापि प्रथमम् । एवं स्थिते नियमविधिरयम्— ' योग्यत्वे सत्यृताववश्यं संनिपतेत् , असंनिपतन् पुत्रोत्पत्तिं निरुन्धानः प्रत्यवेयात् ' इति । तथा च दोषस्मृतिः— ' ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । तस्या रजसि तं मासं पितरस्तस्य शेरते ॥ ' इति । पुत्रगुणार्थितया पूर्वां पूर्वां वर्जयतो न दोषः । अन्ये तु परिसंख्यां मन्यन्ते ' ऋतावेव संनिपतेन्नान्यत्र ' इति । तेषामृतावनियमादगमनेऽपि दोषाभावाद्दोषस्मरणमनुपपन्नं स्यात् । सर्वथा विधिर्न भवति, रागप्राप्तत्वात् संनिपातस्य । * उ.

[1]**अन्तरालेऽपि दार एव ॥**

अन्तरालं मध्यम् । ऋत्वोरन्तराले मध्येऽपि संनिपातः स्यात् दार एव सकामे सति । यद्यात्मनो जितेन्द्रियतया न तादृशं पारवश्यम्, तथाऽपि भार्यामिच्छन्त्यां तद्रक्षणार्थमवश्यं संनिपतेदिति । वक्ष्यति च ' अप्रमत्ता रक्षथ तन्तुमेतम् ' ( आध. २।१३।६ ) इत्यादि । अनुव्रतमित्यनुवृत्तेः प्रतिषिद्धेषु दिनेषु न भवति । ¶ उ.

[2]**ब्राह्मणवचनाच्च संवेशनम् ॥**

यदिदमनन्तरोक्तं संवेशनं तत्र ब्राह्मणवचनं प्रमाणम् ' काममा विजनितोः संभवाम ' इति । ¶ उ.

[3]**स्त्रीवाससैव संनिपातः स्यात् ॥**

( १ ) एवकारो भिन्नक्रमः । स्त्र्युपभोगार्थं वासः स्त्रीवासः । तेन संनिपात एव स्यात् । न तेन सुप्रक्षालितेनापि ब्रह्मयज्ञादि कर्तव्यमिति यावत् । § उ.

( २ ) संनिपातः अभिगमः । ‡ आप्र. ५६३

( ३ ) स्त्रीवासः स्त्रीसंभोगार्थे परिगृहीतं वासः । कर्मकालधृतस्य वाससः संभोगकाले निषिद्धत्वादिति भावः । आन. १४६

[4]**यावत्संनिपातं चैव सह शय्या ॥**

( १ ) यावत्संनिपातमेव दम्पत्योः सह शयनम् । उ.

( २ ) संनिपातः संगमः । मर. ११२

[5]**ततो नाना ॥**

ततः पृथक् शयीयाताम् । $ उ.

---

* गप. , आप्र. , संर. उगतम् ।

(१) आध. २।१।१८ ; हिध. २७।१।१७ ; गप. ४४८ ; आप्र. ५६२ ; संर. ६८७ हिरण्यकेशिधर्मसूत्रम्.

¶ गप. , आप्र. उगतम् ।

§ गप. उगतम् ।

‡ शेषम् उवत् । मुक्ता. उगतम् आप्रगतं च ।

$ गप. , आप्र. , आन. उवत् ।

(१) आध. २।१।१९ ; हिध. २७।१।१८ ; गप. ४४८ ; आप्र. ५६२ ; संर. ६८७ नाच्च ( नाद्वा ).

(२) आध. २।१।२० ; हिध. २७।१।१९ ; गप. ४४८ ; आप्र. ५६२ ; मुक्ता. ७७ ; आन. १४५ (=).

(३) आध. २।१।२१ ; हिध. २७।१।२० सह शय्या (सहचर्या ) ; मर. ११२ चैव ( च वै ) ; गप. ४४८ चैव ( च ) ; आप्र. ५६२ चैव ( च ) ; मुक्ता. ७७ चैव ( च ) ; आन. १४५ (=) चैव ( च ).

(४) आध. २।१।२२ ; हिध. २७।१।२१ ; गप. ४४८ ; आप्र. ५६२ ; मुक्ता. ७७ ; आन. १४५ (=).

[1]**उदकोपस्पर्शनम् ॥**

(१) ततो द्वयोरप्युदकोपस्पर्शनं स्नानं कर्तव्यम्। इदमृतुकाले। ¶ उ.

(२) उदकोपस्पर्शनं स्नानम्। एतदृतौ। अनृतौ तु प्रोक्षणम्। गप. ४४९

[2]**अपि वा लेपान् प्रक्षाल्याऽऽचम्य प्रोक्षणमङ्गानाम् ॥**

(१) अपि वा रेतसो रजसश्च ये लेपास्तानद्भिर्मृदा च प्रक्षाल्याऽऽचम्य अङ्गानां प्रोक्षणं शिरःप्रभृतीनां कर्तव्यम्। § रुचितो व्यवस्था। यावता प्रयतो मन्यते। उ.

(२) अपि वेत्यादि पक्षान्तरमनृतौ। ‡ आप्र. ५६३

[3]**मैथुने मूत्रवद्रेतस उत्सर्गे शौचम् ॥**

[4]**तत्राप्युत्तरोत्तराः प्रशस्ताः ॥**

[5]**स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते।**
**गम्या निवृत्ते रजसि नानिवृत्ते कथंचन ॥**

निवृत्ते रजसीति। निःसरणादनुपरते रजसि तु रजस्वला स्नानेन स्पर्शादौ योग्या, न तु गर्भाधानोपनयनादिस्मार्ते श्रौते वेत्यर्थः। कुभ. ८१४

[1]**ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम्।**
**अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥**

[2]**द्वावेतावशुची स्यातां दम्पती शयनं गतौ।**
**शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥**

## वसिष्ठः

भुक्तशूद्रान्नस्य भुक्तश्राद्धस्य दत्तश्राद्धस्य च गमननिषेधः, ऋतुगमनविधिः, मलिनवाससा रजस्वलया अयोग्यया च सह मैथुननिषेधः, तिर्यग्गमनस्य मुखमैथुनस्य च निषेधः, आ प्रसवाद्गमनानुमतिः, गमने ऋतुदशमदिवसप्राशस्त्यम्

[3]**शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।**
**यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत् ॥**

[4]**ऋतौ च गच्छन् विधिवच्च जुह्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥**

[5]**श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं योऽधिगच्छति।**
**भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः ॥**

---

¶ आप्र. उवत्। संर. 'द्वयोरपि' इत्यंशं विहाय उज्ज्वलानुवादः।

§ 'रुचितः' इत्यादिग्रन्थस्य स्थाने 'इदमनृतुकाले' इति पाठः टिप्पण्यां वर्तते।

‡ संर. आप्रवत्।

(१) आध. २।१।२३ ; हिध. २७।१।२२ ; गौमि. ९।२६ ; गप. ४४८ ; आप्र. ५६२ ; मुक्ता. ७७ ; संर. ६९१ हिरण्यकेशिधर्मसूत्रम्.

(२) आध. २।२।१ ; हिध. २७।१।२३ प्रक्षाल्या (प्रक्षाल्य पादौ चा) ; अप. ३।२९ पृ. ९२६ लेपान् (लेपं) ; गौमि. ९।२६ ; गप. ४४८ ; आप्र. ५६२ ; मुक्ता. ७७ ; संर. ६९१ (अपि वा०) शेषं हिधवत्, हिरण्यकेशिधर्मसूत्रम्.

(३) अप. ३।२९ पृ. ९२६.

(४) गभा. १२३ ; सिन्धु. ८१३ ; संव. ४९.

(५) आपस्मृ. ७।१ तृतीयपादे (वृत्ते रजसि गम्या स्त्री) ; बम. ५ ; संम. १० ; सिन्धु. ८१४ ; बाल. १। ७९ पृ. २२१ ; संव. ४९ ; संर. ६६१ उत्त. : ६८२.

(१) मपा. ३४८ यदा गच्छेच्छौ (सदा कार्यं शौ) ; गभा. १२३ ; आत. ४६३ मपावत् .

(२) मपा. ३४८ ; आत. ४६३ (=) ; विपा. ३७२ (मागः २).

(३) वस्मृ. ६।२७ ; अप. १।१६८ पृ. २४४ न तु भुक्तेन (नोदरस्थेन) चतुर्थपादे (अन्नाच्छुक्रं प्रवर्तते) ; मभा. १७।५ (शूद्रान्नेनोदरस्थेन योऽधिगच्छति मैथुनम्। यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते ॥) ; स्मृच. ४२५ पूर्वार्धे (शूद्रान्नेनोदरस्थेन योऽधिगच्छति मैथुनम्।) र्हको (रुहो) ; गृर. ३३५ ; आत. ४६३ चतुर्थपादे (अस्वर्ग्याः शूद्रवद्द्विजाः).

(४) वस्मृ. ८।१७ ; विश्व. १।७८ ; अप. १।८१ पृ. १०६ ; वीमि. १।७९ वच्च जुह्वन्न (वच्च).

(५) वस्मृ. ११।३४-३५.

**यस्ततो जायते गर्भो दत्त्वा भुक्त्वा च पैतृकम्।**
**न स विद्यां समाप्नोति क्षीणायुश्चैव जायते ॥**
[1]**न मलिनवाससा सह संवसेत, न रजस्वलया, नायोग्यया ॥**

( १ ) अयोग्या अप्राप्ततारुण्या। गृर. ४०२

( २ ) मलवद्वाससाऽमेध्यलिप्तवस्त्रया। ‡ गप. ४६१

( ३ ) संवासः मैथुनम्। ‡ आप्र. ५६४

( ४ ) संवेशः मैथुनम्। अयोग्या अप्राप्तयौवना अतिवृद्धा च। बाल. १।८१ पृ. २२४

[2]**ऋतुकालगामी स्यात्पर्ववर्जं स्वदारेषु ॥**

पर्वग्रहणं च कालान्तरोपलक्षणार्थम्। चका. ७२४

[3]**अतिर्थगुपेयात् ॥**

तीर्थमत्र योनिः। § गृर. ४०४

[4]**अथाप्युदाहरन्ति-**

[5]**यस्तु पाणिगृहीताया आस्ये कुर्वीत मैथुनम्।**
**भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः ॥**
[6]**या स्यादनतिचारेण रतिः सा धर्मसंश्रिता ॥**

अनभिचारः योन्यनतिक्रमः। गृर. ४०४

[1]**अपि च काठके विज्ञायते-**

[2]**अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयीरन्निति स्त्रीणामिन्द्रदत्तो वर इति ॥**

( १ ) विजनिष्यमाणाः प्रसविष्यः। शयन्ते शेरते। लटो रूपं छान्दसम्। आत. ४६२

( २ ) अद्य श्वो वा विजनिष्यमाणा आसन्नप्रसवा इत्यर्थः। इदं तु सकामपरम्। † आप्र. ५६४

[3]**न च दशमनिशाविवर्जनं प्रकुर्या-**
**दृतुसमये पुरुषः स्त्रियाः कदाचित्।**
**ऋतुरपि दश षट् च वासराणि**
**प्रथमनिशात्रितयं न तत्र गम्यम् ॥**

* प्रथमदिनत्रयस्यागम्यत्वे कारणं च सुश्रुतेनोक्तम्- 'प्रथमे दिवसे ऋतुमत्या मैथुनमनायुष्यं भवति पुंसाम्। यश्च तत्राऽऽधीयते गर्भः स प्रसव एव विमुच्यते। द्वितीयेऽप्येवम्, सूतिकागृहे वा। तृतीयेऽप्येवमसंपूर्णाङ्गोऽल्पायुर्वा भवति। तस्मात् त्रिरात्रं परिहरेत्। न च प्रवर्तमाने रक्ते प्रविष्टं बीजं गुणकरं भवति। यथा नद्याः

---

‡ शेषं गृरवत्।

§ गप. गृरवत्।

(१) वस्मृ. १२।४; गृर. ४०२ वसेत ( विशेत् ); गप. ४६१ मलिनवा ( मलवद्वा ) शेषं गृरवत्; आप्र. ५६४ वसेत ( वसेत् ); बाल. १।८१ पृ. २२४ ( न मलिनवाससा रजस्वलया नायोग्यया सह संविशेत् ).

(२) वस्मृ. १२।१८; चका. ७२४ काल (कालाभि) ( स्वदारेषु० ); गप. ४६२ काल ( कालाभि ).

(३) वस्मृ. १२।१९; गृर. ४०४ ( नातीर्थे उपेयात् ); गप. ४६२ गृरवत्.

(४) वस्मृ. १२।२०; गृर. ४०४ (अथोदाहरन्ति); गप. ४६२.

(५) वस्मृ. १२।२१; गृर. ४०४ चतुर्थपादे ( मांसरेतोभुजः सदा ); गप. ४६२ भवन्ति (पिबन्ति).

(६) वस्मृ. १२।२२ दनति ( दनित्य ) सा ध (साऽध); विव. १।८०; ममा. ५।११; गृर. ४०४ नति ( नमि ) धर्मसं ( धर्म्यमा ).

† बाल. आप्रवत्।

* सौख्ये ग्रन्थस्याशुद्धिबहुलत्वात् सुश्रुतात् ( शारीरस्थानम् अ. २ पृ. ८७-८८ ) अयं ग्रन्थो गृहीतः।

(१) वस्मृ. १२।२३; अप. १।७९ पृ. १०४ काठके + ( प्रवचने ); चका. ७३१ ( अपि च काठकैर्वचनैर्विज्ञायते ); गृर. ४०४ अपवत्; आप्र. ५६४ अपवत्; बाल. १।८१ पृ. २२४ अपवत्.

(२) वस्मृ. १२।२४; अप. १।७९ पृ. १०४ शयीरन्निति ( शयतामिति ) ( इति० ); चका. ७३१ माणाः ( माणान् ) सह शयीरन्निति ( संयत इति ) ( इति० ); गृर. ४०४ ( नः० ) ( इति० ); आत. ४६२ अपि नः श्वो ( अद्य श्वो वा ) शयीरन्निति ( शयन्ते इति ); आप्र. ५६४ अपि नः स्वो ( अद्य श्वो वा ); बाल. १।८१ पृ. २२४ रन्निति ( त इति ) शेषं आप्रवत्.

(३) वसं. २४।४८ स्त्रियाः ( स्त्रियः ) षट् च ( षड् ); संसौ. २८ प्रथमपादे ( न नखदशनविक्षतानि कुर्याद् ) कदा ( कथं ).

प्रतिस्रोतः प्लावि द्रव्यं प्रतिनिवर्तते, नोर्ध्वं गच्छति, तद्वदेतद्द्रष्टव्यम्। तस्मान्नियमवर्ती त्रिरात्रं परिहरेत्' इति। संगो. २८

[1]ऋतुस्नातां च यो भार्यां संनिधौ नाधिगच्छति।
स गच्छेन्नरकं घोरं ब्रह्महेति तथोच्यते॥

संनिधावित्यभिधानादसंनिहितस्य गमनाभावे न दोषः। आत. ४६३

## बृहद्वसिष्ठः

गमनोत्तरस्नानमशिरस्कम्

[2]अशिरस्कमेव मज्जनं कुर्यात्॥

## विष्णुः

श्राद्धभोजनादिपुरुषधर्मनिमित्तकाः मलिनतादिस्त्रीपुरुषधर्मनिमित्तकाः हीनाङ्गीत्वादिस्त्रीधर्मनिमित्तकाः देवायतनादिस्थानविशेषनिमित्तकाश्च गमननिषेधाः

[3]न श्राद्धं भुक्त्वा॥

[4]न दत्त्वा॥

श्राद्धकरणानन्तरम्। वै.

[5]नोपनिमन्त्रितः श्राद्धे॥

(१) चका. ७२९ नाधि (नोप) पराशरः; गृर. ४०० च (तु) शेषं सर्वं चकावत्; आत. ४६३; आप्र. ५६१ सर्वं गृरवत्.

(२) संर. ६९१.

(३) विस्मृ. ६९।२; अप. १।७९ पृ. १०४ श्राद्धं (श्राद्धे) आपस्तम्बः, ऋषिनिर्देशोऽयमत्रत्यसर्वविष्णुवचनेषु द्रष्टव्यः; चका. ७२४; गृर. ४०३; मर. ११२; गप. ४६२(=); आप्र. ५६४; बाल. १।८१ पृ. २२४.

(४) विस्मृ. ६९।३; अप. १।७९ पृ. १०४; चका. ७२४; गृर. ४०३ (न श्राद्धं दत्त्वा); मर. ११२; गप. ४६२ (=); आप्र. ५६४; बाल. १।८१ पृ. २२४.

(५) विस्मृ. ६९।४; अप. १।७९ पृ. १०४; गृर. ४०३ (नाऽऽमन्त्रितः श्राद्धे); मर. ११२ गृरवत्; गप. ४६२ (=); आप्र. ५६४ गृरवत्; बाल. १।८१ पृ. २२४ गृरवत्.

[1]न व्रती॥

(१) व्रतं प्रायश्चित्तम्। अप. १।७९

(२) व्रतं श्राद्धदिनपूर्वेद्युस्तनमेकादश्यादिकं च, तद्वान्। वै.

[2]न दीक्षितः॥

दीक्षितः दीक्षाख्यसंस्कारवान्। अवभृथेष्टिं यावत्, तत्र दीक्षोन्मोचनात्। गृर. ४०४

[3]न देवायतनश्मशानशून्यालयेषु॥

[4]न वृक्षमूलेषु॥

[5]न दिवा॥

[6]न संध्ययोः॥

[7]न मलिनाम्॥

(१) विस्मृ. ६९।५; अप. १।७९ पृ. १०४; गृर. ४०३; मर. ११२; गप. ४६२ (=); आप्र. ५६४; बाल. १।८१ पृ. २२४.

(२) विस्मृ. ६९।६; अप. १।७९ पृ. १०४ तः (तश्च); गृर. ४०३; मर. ११२ अपवत्; गप. ४६२(=) अपवत्; आप्र. ५६४; बाल. १।८१ पृ. २२४.

(३) विस्मृ. ६९।७; अप. १।७९ पृ. १०४; गृर. ४०३ यतनश्म (यतने। न श्म); मर. ११२ गृरवत्; गप. ४६२ (=); आप्र. ५६४; बाल. १।८१ पृ. २२४.

(४) विस्मृ. ६९।८; अप. १।७९ पृ. १०४; गृर. ४०३; मर. ११२; गप. ४६२ (=) लेषु (ले); आप्र. ५६४ गपवत्; बाल. १।८१ पृ. २२४ गपवत्.

(५) विस्मृ. ६९।९; अप. १।७९ पृ. १०४; गृर. ४०३–४०४; मर. ११२; गप. ४६२(=); आप्र. ५६४; बाल. १।८१ पृ. २२४.

(६) विस्मृ. ६९।१०; अप. १।७९ पृ. १०४; चका. ७२४ (ऋतुसंध्ययोः); गृर. ४०४; मर. ११२; गप. ४६३(=); आप्र. ५६४; बाल. १।८१ पृ. २२४.

(७) विस्मृ. ६९।११; अप. १।७९ पृ. १०४; गृर. ४०४; मर. ११२; गप. ४६१ नाम् + (नाशक्ताम्) शङ्खलिखितौ; आप्र. ५६४; बाल. १।८१ पृ. २२४.

[5]न मलिनः ॥
[6]नाभ्यक्ताम् ॥
नाभ्यक्तः ॥
[7]न रोगार्ताम् ॥
[8]न रोगार्तः ॥

(१) रोगार्तां व्याधिपीडिताम्। स्त्रियाः पुरुषस्य वा उपगमनजनितः तत्संबद्धो वा रोगो विवक्षितः। गृर. ४०४

(२) रोगोऽत्र संभोगवर्धनीयः। गप. ४६१

(३) रोगार्तः रोगपीडितः। स्त्रियाः पुरुषस्य वा उपगमनजन्यः तत्संवर्धनीयो वा रोगो विवक्षितः। आप्र. ५६४

(४) स्त्रियाः पुरुषस्य वोपगमनप्रतिबन्धस्तत्संवर्धनीयो वा रोगो विवक्षितः। बाल. ११८१ पृ. २२४

[9]न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोधिकाम्।
नोपेयाद्गुर्विणीं नारीं दीर्घमायुर्जिजीविषुः ॥

(१) गर्भिण्यामिच्छन्त्यां न दोषः। अप. ११७९

(२) वयोधिकाऽत्र उपरतरजस्का। †गृर. ४०४

---

† मर., गप., आप्र., बाल. गृरवत्।

(१) विस्मृ. ६९।१२ ; अप. ११७९ पृ. १०४.

(२) विस्मृ. ६९।१३–१४ ; अप. ११७९ पृ. १०४ ; गृर. ४०४ ; मर. ११२ ; गप. ४६१ शङ्खलिखितौ ; आप्र. ५६४ ; बाल. ११८१ पृ. २२४.

(३) विस्मृ. ६९।१५ ; अप. ११७९ पृ. १०४ ; गृर. ४०४ ; गप. ४६१ शङ्खलिखितौ ; आप्र. ५६४ ; बाल. ११८१ पृ. २२४.

(४) विस्मृ. ६९।१६ ; अप. ११७९ पृ. १०४ ; मर. ११२ ; गप. ४६१ शङ्खलिखितौ ; आप्र. ५६४ ; बाल. ११८१ पृ. २२४.

(५) विस्मृ. ६९।१७ ; अप. ११७९ पृ. १०४ दुर्गुर्विणीं (दुर्भिर्णीं) ; गृर. ४०४ दुर्गुर्विणीं नारीं (दुर्भिर्णीं भार्यां) ; मर. ११२ अपवत् ; गप. ४६१ अपवत्, शङ्खलिखितौ ; आप्र. ५६४ अपवत् ; बाल. ११८१ पृ. २२४ (न हीनाङ्गीं नाधिकाङ्गीं न वयोधिकां न गर्भिणीमुपेयाद्दीर्घमायुर्जिजीविषुः ).

## शङ्खः शङ्खलिखितौ च

युग्मासु रात्रिषु गमने पुत्रोत्पत्तिः, अयुग्मासु कन्योत्पत्तिः, चतुर्थदिवसे गमननिषेधः

[1]ऋतौ संगच्छतः पुंसो यावत्षोडशमं दिनम्।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ॥

[2]ऋतुस्नातां तदहोरात्रं परिहरेत्। नाऽऽर्तवे दिवा मैथुनं व्रजेत्। क्लीबा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च। तस्मादेतद्वर्जयेत् प्रजाकामः। पितॄणां नेह वै तन्तुं विच्छिन्द्यात्। प्रयतेताच्छेदाय। येनाप्रतिष्ठः पतति। तस्मात्प्रतिष्ठाकामः प्रजया प्रतिष्ठेत ॥

---

(१) चका. ७२२ ; गमा. १२३ उत्त. ; सिन्धु. ८१३ उत्त. ; संव. ४९ उत्त.

(२) अप. ११७९ पृ. १०४ (न दिवा मैथुनं व्रजेत्। क्लीबा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च। तस्मादेतत् परिवर्जयेत्।) एतावदेव ; स्मृच. १५ (नाऽऽर्तवे दिवा मैथुनं व्रजेत। क्लीबा अल्पवीर्याश्च दिवा प्रजायन्तेऽल्पायुषश्च।) एतावदेव ; चका. ७२३ (न दिवा मैथुनं व्रजेत्। क्लीबा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च। तस्मात् परिवर्जयेत्।) एतावदेव ; गृर. ४०२ नाऽऽर्तवे + (न) त्प्रतिष्ठा (त्प्रजा) ; पमा. ४९७–४९८ (नाऽऽर्तवे दिवा मैथुनं व्रजेत्) एतावदेव ; मर. १११ (न दिवा मैथुनं व्रजेत्। क्लीबा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च।) एतावदेव ; गप. ४६२ (न दिवा मैथुनं व्रजेत्। क्लीबा अल्पवीर्या दिवा प्रसूयन्तेऽल्पायुषश्च। तस्मादेतद्वर्जयेत् प्रजाकामः। पितॄणां नोह वै तन्तुं छिन्द्यात्।) एतावदेव ; आत. ४६३ नाऽऽर्तवे (नाऽऽतुरो न) तद्वर्जे (तद्विवर्जे) नेह वै (नो हरेत्) पतति (भवति) प्रतिष्ठेत (तिष्ठति) ; संप्र. १५४ (नाऽऽर्तवे दिवा मैथुनमर्जयेत्। अल्पभाग्या अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च।) एतावदेव ; चम. ४ (नाऽऽर्तवेऽपि दिवा व्रजेत्) एतावदेव ; मुक्ता. ७४ (नाऽऽर्तवे दिवा मैथुनं व्रजेत्, अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च।) एतावदेव ; संम. १० चमवत् ; संको. १६ पमावत् ; बाल. ११७९ पृ. २२० चमवत् ; कृम. ८१० चमवत् ; संर. ६८०,६८१ चमवत्.

( १ ) तन्तुः संतानः । अच्छेदाय संतानस्याविच्छेदाय । नशब्दो निषेधाय । अप्रतिष्ठः प्रजानुत्पत्त्याऽप्राप्तनिष्ठः पतति । तस्मादुत्पत्त्यर्थे यतितव्यम् ।

गृर. ४०२

( २ ) तन्तुं छिन्द्यादिति प्रतिषिद्धमैथुनेनेत्यर्थः ।

गप. ४६२

( ३ ) ¶ श्राद्धानन्तरं तु निषेधमाहतुः शङ्खलिखितौ– 'ऋतुस्नातां...' इति । एवं च श्राद्धदिने यदभिगमनं प्रागुक्तयाज्ञवल्क्यवचनादुक्तं मिताक्षरायां तद्धेयम् ।

† आत. ४६३

( ४ ) आर्तवे इति विशेषोपादानादनृतौ दिवा गमने न निषेध इति यत्, तन्न, 'गत्वा चैव दिवा स्त्रियम्' इति याज्ञवल्क्येन सामान्यतः प्रायश्चित्ताभिधानात् ।

संप्र. १५४

## महाभारतम्

चतुर्थदिवसगमनविधिः, ऋतुगमनविधिः

**'स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ॥**

( १ ) एतद्वचनानुसाराच्च 'तासामाद्याश्चतस्रः' इति मानवीयचतुर्थदिननिषेधोऽपत्यगताल्पायुष्ट्वादिदोषख्यापनार्थः ।

$ आप्र. ५६०

( २ ) यत्तु 'स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ।' इति महाभारतादिवचनं तत् रजोनिवृत्तौ दोषाभावपरम् ।

पुम. ४३१

**'अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।**
**रतिपुत्रफला दारा शीलवृत्तफलं श्रुतम् ॥**

---

¶ अस्य वचनस्य श्राद्धानन्तरगमननिषेधपरत्वं तत्त्वाभिप्रेतं चिन्त्यम् ।

† शेषं गृरवत् ।

$ बाल. आप्रवत् ।

(१) मर. ११० चतुर्थे दि ( चतुर्थदि ) ; गप. ४५४ मरवत् ; वीमि. १।७९ ; सिन्धु. ८१३ ; बाल. १।८१ पृ. २२३ ; संग. ३७० ; पुम. ४३१.

(२) मुक्ता. ७६.



**'ऋतौ गच्छति यो भार्यामनृतौ नैव गच्छति ।**
**यावज्जीवं ब्रह्मचारी मुनिभिः परिकीर्तितः ॥**

महाभारते त्वनृतुगमनपरिहारेण ऋतुगाम्येव ब्रह्मचारीत्युक्तम्– ऋतौ... इति । अनेन ऋतावेव गच्छेन्नान्यदेति परिसंख्यैव व्याख्याता भवति । अन्ये तु 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥' इत्यगमने दोषश्रवणान्नियमं व्याचक्षते । ऋतुश्च प्रथम एव, 'अथर्तुमत्याः प्राजापत्यमृतौ प्रथमे' इत्याश्वलायनपरिशिष्टात् ।

संप्र. १५३

जिह्वया मैथुनस्य निषेधः

**'मैथुनं कुरुते यस्तु जिह्वया ब्राह्मणो नृप ।**
**तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥**

## मनुः

ऋतुकालगमनविधिः, परभार्यागमननिषेधः, अनृतावपि स्त्रीरक्षणार्थं गमनम्

**'ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।**
**पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥**

( १ ) उक्तो विवाहः, तस्मिन् निर्वृत्ते समुपयाते दारत्वे तदहरेवेच्छयोपगमे प्राप्ते तन्निवृत्त्यर्थमिदमारभ्यते । न विवाहसमनन्तरं तदहरेव गच्छेत्, किं तर्हि ? ऋतुकालं प्रतीक्षेत । गृह्यकारैस्तु 'अत ऊर्ध्वमक्षारलवणाशिनौ ब्रह्मचारिणावधःशायिनौ स्याताम्, त्रिरात्रं द्वादशरात्रं

---

(१) संप्र. १५३ ; संको. १७ ; संग. ३६९.

(२) आन. १४०–१४१ आश्वमेधिके.

(३) मस्मृ. ३।४५ ; गोरा. ४।१२८ तृतीयपादमात्रम् ; स्मृच. १६ स्यात् ( च ) ; ममु. ४।१२८ गोरावत् ; चका. ७२४ तद्व्रतो ( न ऋतौ ) ; गृर. ३९९ जेच्चैनां ( जेदेनां ) ; पमा. ४९७ ; मर. १०९ तद्व्रतो ( तद्वृतो ) 'तद्व्रतः' इति पाठनिर्देशोऽपि ; गप. ४५० ; मच. ४।१२८ गोरावत् ; संप्र. १६२ जेच्चैनां ( जेदेनां ) रति ( व्रत ) ; आप्र. ५५८–५५९ गृरवत् ; मुक्ता. ७४ : ४५८ नां तद्व्रतो ( नामनृतौ ) ; संको. १६ गोरावत् ; आन. १४० तद्व्रतो ( तद्वृतो ) ; बाल. १।७९ पृ. २२० गृरवत् .

संवत्सरं वा' (आगृ. १।८।१०,११) इति पठितम्। तत्र सत्यपि संवत्सरस्यान्तरा आपतिते ऋतौ गमनं नास्ति। एवमस्मात्कालादूर्ध्वमसत्यृतौ गमनं नास्ति। एवमेते स्मृती अविरोधिन्यौ भवतः। त्रिरात्रादीनां तु विकल्पः अत्यन्तरागपीडितयोर्गमनम्, धैर्यवतोस्तु ब्रह्मचर्यम्।

ऋतुर्नाम स्त्रीणां शोणितदर्शनोपलक्षितः शरीरावस्थाविशेषः गर्भग्रहणसमर्थः (कालः?) उच्यते। उपलक्षणत्वाच्च दर्शनस्य निवृत्तेऽ(प्य)स्मिन् वक्ष्यमाणकालानुवर्ती भवत्येव। तस्य काल ऋतुकालः। साहचर्याद्वा काल एव ऋतुः। तथा च समानाधिकरणसमासः। ऋतुकालेऽभिगन्तुं व्रतमस्येत्यृतुकालाभिगामी। 'व्रते' (पासू. ३।२।८०) इति णिनिः, यथा स्थण्डिलशायी अश्राद्धभोजीति। स्यात् भवेदित्यर्थः। यद्यप्यस्तिपरा विधिविभक्तिस्तथाऽप्युपगमव्यापारं विदधाति। अभिगामी स्यात् अभिगच्छेदित्यर्थः। न ह्यनुपगच्छन्नभिगामी भवति।

कीदृशं पुनरेतद्व्रतम्? किमृतावभिगन्तव्यमेव, अथर्तावेव गन्तव्यमिति? एतदुक्तं भवति – किमयं नियमः, उत परिसंख्या? इति।

ननु च व्रतमिति शास्त्रतो नियम उच्यते। तत्रैव चायं णिनिः। अतः परिसंख्या कथमाशङ्क्यते? उच्यते– परिसंख्यायामपि शास्त्रीयत्वं नियमरूपता च विद्यत इति दर्शयिष्यामः। कस्तर्ह्यनयोर्विशेषः? विधिविशेषो नियमः। अथ विधिः कः? यः शब्दः कर्तव्यताबोधकः 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति। न ह्यग्निहोत्रस्यैतद्वचनमन्तरेणान्यतः कुतश्चित्कर्तव्यतावगमः। नियमः पुनर्यत्रादृष्टसिद्ध्यर्थस्य वचनमन्तरेण पाक्षिकी प्राप्तिः। यथा 'समे यजेत' इति। दर्शपौर्णमासादियागविधानाद्देशमात्रमाक्षिप्तम्। न हि कश्चिद्देशमनाश्रित्य यागप्रयोगः संभवति। द्विविधश्च देशः समो विषमश्च। तत्र यदा तावत्समे यजेत तदैतद्वचनमनुवाद एव। यदा त्विच्छाया निरङ्कुशत्वाद्विषमे यियक्षति तदैतद्वचनं समदेशं विदधदर्थवत्। विहिते समे विषमस्यानाश्रयणमविधानात्। एतत्सामर्थ्यात्तन्निवृत्तिः। विधिनिबन्धने ह्यनुष्ठाने किमित्यविहितं क्रियेत? तत्करणे हि न यथाचोदितानुष्ठानसिद्धिः। इदं चात्र स्मार्तमुदाहरणम्– 'प्राङ्मुखोऽन्नानि भुञ्जीत'। भुञ्जानस्य यदृच्छया यां कांचिद्दिशमाश्रित्य भोजनं प्राप्तम्। तत्र कदाचित् प्राची कदाचिदितरा या काचित् प्राप्ता। तत्र यदा प्राची, न तदेतरा, यदेतरा, न तदा प्राचीति तत्राप्राप्तिपक्षे विध्यर्थं वचनं 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति। तत्रातिक्रमाच्छास्त्रार्थं जहाति। एवमिह यदृच्छयोपगमनमृतावनुपगमनम्। पक्षे विधीयमानमुपगमनमननुष्ठीयमानं शास्त्रातिक्रमकारितां जनयेत्। यथाऽन्ये शास्त्रविहितार्था अतिक्रम्यमाणाः प्रायश्चित्तहेतवो भवन्ति तथाऽनु(प)गमनम्।

अथर्ताविनृतौ च गमने रागतः प्राप्ते वचनम् 'ऋतावुपेयात्' इति, तदैवं वचनं मृग्यते 'ऋतावेवोपेयात्, अनृतौ न गच्छेत्'। यथा 'पञ्च पञ्चनखा भक्ष्याः' इति। क्षुत्प्रतिघातेनार्थेन शशकादिष्वपि पञ्चनखेषु भक्ष्यता प्रसक्ता तद्व्यतिरिक्तेष्वपि वानरादिषु। न च तत्र पर्यायेणैव प्रवृत्तिः। युगपत्तत्र चान्यत्र च प्रसक्तौ 'पञ्च पञ्चनखा भक्ष्याः' इति वचनमितरपरिसंख्यानार्थं संपद्यते। एवमिह परिसंख्येति।

ननु च परिसंख्यां दोषत्रयवतीमाचक्षते। त्रयो हि तत्र दोषाः प्रादुःष्युः– स्वार्थत्यागः परार्थकल्पना प्राप्तबाधश्च। 'पञ्च पञ्चनखा भक्ष्याः' इति यदाऽन्वयतः पञ्चनखविषयं भक्षणं प्रतीयते तदा तत्यक्तं भवति, तद्व्यतिरिक्तनिषेधपरत्वाद्वाक्यस्य। अश्रुतश्च निषेधः, अतः परार्थकल्पना। अर्थित्वाच्च सर्वविषयं भक्षणं यत्प्राप्तं तस्य बाधः। एवमेते परिसंख्यायां त्रयो दोषाः। नैतत् सारम्। सत्यर्थित्वे श्रुतार्थासंभवे वाक्यस्यानर्थक्यं मा भूदित्येतत्परता न विरुद्धा। 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते॥'। किं पुनरत्र युक्तम्? 'तत्र चान्यत्र च प्राप्तौ' इति परिसंख्यालक्षणस्य विद्यमानत्वात् परिसंख्येति। ऋतावपि गमनं प्राप्तमनृतावपि, न तु यदर्तौ तदाऽनृताविति। यथा सत्यर्थित्वे यत् भोजनं तत्र

नियमोऽभाद्धम्, न पुनराहारत्यागेन अभाद्धमेव भुञ्जान आस्ते। एवमिह सति खेदे यद्गमनं तत्र नियमोऽनृतौ न गच्छेदित्यवगच्छति। अर्थित्वाच्च गमने प्रसक्ते कालविधानपरतैव युक्ता वाक्यस्य। अन्यथाऽनारब्धोऽर्थ उपदिष्टः स्यात्। किं चापत्योत्पत्तिविधेः कृतविवाहस्यानुष्ठेयत्वादृतौ च तत्संभवात् प्राप्तमेव गमनम्। उत्पन्नपुत्रस्य च न द्वितीयपुत्रोत्पादनं वैधम्, 'अपत्यमुत्पादयेत्' इत्येकत्वविवक्षायां विध्यर्थनिवृत्तेः। न च गमनमेवादृष्टार्थतया शक्यं विधातुम्। संस्कारविधित्वाधिकारश्रवणात् कल्पनायाश्चाशक्यत्वात्, अपत्योत्पत्तिविध्याक्षेपादृतौ गमनस्य। यच्चात्रर्तावुपेयादिति तदनृतुप्रतिषेधार्थम्। तत्रानुवादः, परं परिसंख्या। तत्र चार्थान्तरलक्षणयाऽप्यर्थवत्ता भवति।

एवं च कृत्वा गौतमीयेनाविप्रतिपत्तिः। एवं तत्रोक्तम्— 'ऋतावुपेयात्, सर्वत्र वा प्रतिषिद्धवर्जम्' (गौध. ५।१–२) इति। सर्वत्र वा इत्येष विकल्पः कामचारानुज्ञानार्थः। न पुनः सर्वदर्तावनृतौ च नियमोपपत्तिः। यदि च पूर्वत्र 'ऋतावुपेयात्' इति नियमः, 'सर्वत्र वा' इत्यत्रापि स एव 'उपेयात्' इत्यनुप्रयुज्यमानशब्दो नियमार्थः प्राप्नोति, एकप्रक्रमत्वात्। न हि स एव शब्दः पुनरनुच्चार्यमाणो भिन्नार्थो भवितुं युक्तः। न चर्तोरन्यत्र नियमार्थतोपपद्यत इत्युक्तम्। तस्मादृतौ गमनवचनमनृतौ प्रतिषेधार्थम्। तत्रानुत्पन्नपुत्रस्य त्रिध्यन्तरान्नियम एव। उत्पन्नपुत्रस्तु यथाकामी। अनृतौ प्रतिषिद्धे(? द्धं) गमनं भार्येच्छया पुनः प्रतिप्रसूयते—पर्ववर्जं व्रजेच्चैनां तद्व्रत इति। तदिति भार्यायाः प्रत्यवमर्शः। तच्चित्तग्रहणं व्रतमस्येति तद्व्रतः। रतिकाम्यया विनाऽप्यपत्यार्थेनोत्पन्नपुत्र ऋतावनुत्पन्नपुत्रो वाऽनृतौ सुरतसंभोगेच्छया तद्व्रत एनां व्रजेत्, नाऽऽत्मेच्छयेत्यर्थः। अथ वा तच्छब्दो रतिकाम्ययेत्यत्राप्यपेक्ष्यते स्मृतिशास्त्रत्वादस्य। तद्रतिकाम्यया पर्ववर्जमन्यत्रापि व्रजेत्। तत्रैवाकारश्लेषो द्रष्टव्यः, अरतिकाम्यया। आत्मन इति शेषः। यथा तु व्याख्यातं तथा न किंचिदत्राप्रश्लेषेणापि वा तच्छब्दस्य समासोपसर्जनस्यासंबन्धेन। पर्वाणि वक्ष्यति— 'अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्।' इति। स्वदारनिरतः। स्वदारेषु निरतः स्यात्तत्प्रीतिभावनापरः। अथ वा स्वदारेष्वेव रमते, न परदारान् रमयेदिति परदारप्रतिषेधः। सदा यावज्जीवम् एतद्व्रतं परिपालनीयम्। अतः स्थितमेतत्, त्रीणि वाक्यान्यत्र— ऋतुकालाभिगामी स्यादित्येतदेकम् अनुत्पन्नपुत्रस्य नियमानुवादरूपम्। द्वितीयं भार्याप्रयुक्तस्य पर्ववर्जमृतावनृतौ च (न?) सुरतेच्छया। स्वदारनिरत इति तृतीयम्। एषां च पदयोजना— ऋतुकालाभिगामी स्यादपत्यार्थम्, रतिकाम्यया तु तद्व्रत एनां व्रजेत्, स्वदारनिरतश्च स्यात्।

$ मेधा.

(२) ऋतुः गर्भाधानसमर्था स्त्रियोऽवस्था। तत्काले भार्यामजातपुत्रो नियमत उपगच्छेत्, अनुपगमने दोषश्रवणात्। तथा च पराशरः— 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥'। किंच, 'त्रिभिर्ऋणैर्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्यः' इत्येतच्छ्रुतिमूलं त्वस्य(? मूलत्वेऽस्य) संभवति मूलान्तरकल्पनाया अन्याय्यत्वम्। तथा च 'पुत्रार्थी संविशेत्' इत्यनेनैतच्छ्रुतिमूलत्वमस्याऽऽचार्य आविष्करिष्यति। एवं चैतन्मूलत्वादप्यस्य नियमत्वमवसीयते। जातपुत्रस्य त्वनियमः, एकपुत्रोत्पादने विधेश्चरितार्थत्वात्। तथा च 'कामजान्तु (? कामजानितरान्)' इति दर्शनात् 'नैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा। स हि संतानाय पूर्वेषाम्' इति च। यत्तु 'दशास्यां पुत्रानाधेहि' इति, तद्बह्वपत्यप्रशंसापरम्। जातपुत्रस्यापि ऋतुकाले नियमगमने कथं दशस्वेवावतिष्ठेत्? एवं च नियमोऽयम्, न त्वनृतुकाले गमननिषेधार्था परिसंख्येति। कः पुनरनयोर्भेद(? दः? विधि)विशेषो नियमः। तत्राप्राप्तप्रापको विधिः। नियमः पक्षे प्राप्तं(? प्तौ) चाऽऽहुः, 'समे यजेत' इति। यदत्र हि 'दर्शपौर्णमासाभ्यां यजेत' इत्येवमादियागनोदनावाक्यत एव पक्षे यागाधिकरणभूतसमदेशप्राप्तिरस्त्येव, अधिकरणं विना यागानुपपत्तेः। तत्र समे

$ गृर., मच., भाच. मेधागतम्।

यियक्षमाणस्यैतद्वचनमुदास्ते, स्वत एव प्रवृत्तेः। विषमे तु यियक्षमाणस्य समाप्राप्तावेतद्वचनं समार्थविधायकत्वे- नार्थवत्। एवं च विधिफल एव श्रुतेर्नियमः। अपरे तु प्राप्तस्य पुनर्वचनं नियममाहुः, यथा 'सर्वत एवाऽऽत्मानं गोपायेत्' इति। तत्र चान्यत्र च प्राप्तौ परिसंख्या भवति। यथा 'पञ्च पञ्चनखा भक्ष्याः' इति। अस्त्यत्र शशादीनां (श्वादीनां) च जिघांसा(? जिघत्सा)प्रयुक्त- त्वात् युगपद्भक्षणप्राप्तिः। अतः परे च(? न) भक्ष्या इति परिसंख्यायन्ते। यद्यपि च स्वार्थहानिपरार्थपरिकल्पना- प्राप्तबाधदोषाक्रान्तत्वं परिसंख्यायाः, तथाऽपि वाक्यार्था- नर्थक्यापत्तिरुभयतस्तथा श्रवणं(? वाक्यानर्थक्यापत्ते- रुपगमतस्तदाश्रयणं) वरमित्यसावप्याश्रीयते। स्वार्थहानि- र्विधिप्रतिपादकश्रवणेऽपि विध्यर्थपरित्यागः। तत्र च आद्यापेतवाक्यप्रमेयभूतस्य प्रतिषेधकल्पना(? नञाद्यपेत- वाक्याप्रमेयभूतस्य प्रतिषेधस्य कल्पना परार्थपरिकल्पना)। पञ्चव्यतिरिक्तपञ्चनखानां जिघांसा(? जिघत्सा)प्रयुक्तस्य भक्षण(? णस्य)बाधनमिति प्राप्तबाधः। एवं चेहर्ताविनृतौ चार्थित्वप्राप्तौ(? चार्थित्वप्रयुक्तस्य गमनस्य प्राप्तौ) सत्याम् 'अनृतौ न गच्छेत्' इत्येवं यद्यपि परिसंख्यातु- मापद्यते, न नियमरूपता, पाक्षिकत्वाभावात्, तथाऽप्य- ननुगमने दोषश्रवणान्नियमार्थतैव न्याय्या। स्वदारसंतुष्टश्च नित्यं स्यात्, न स्त्र्यन्तरमुपगच्छेदिति। ऋतौ उपगच्छे- दिति भार्यागमनप्राप्ता च भार्या(? भार्याऽभार्यागमन- प्राप्तावभार्या)गमनपरिसंख्यैषा। अमावास्यादिवक्ष्यमाण- पर्ववर्ज(न ?)मनृतावपि भार्यां तत्संरक्षणवतः संतति- काम्यया(? भार्यासंरक्षणव्रतः रतिकाम्यया) विनाऽप्य- पत्योत्पत्तिं तत्सुरतसंभोगेच्छया नियमत उपेयात्। यत्तु 'अमावास्यामष्टमीं च' इत्यादि वक्ष्यति तत् 'ऋतुकालाभिगामी स्यात्' इत्यनेनर्तौ पर्वस्वपि गमनप्राप्तौ निषेधार्थम्। तथा च 'अप्यृतौ' इति तत्र च वक्ष्यति।

$ गोरा.

(३) तद्व्रतः पुत्रोत्पत्तिव्रत इत्यर्थः। अनेन विनापि रतिकाम्यया पुत्रार्थमृतौ गच्छेदेवेति नियम्यते, अन्यथा दोषश्रवणात्। ¶ स्मृच. १६

(४) ऋतुकालमात्राभिगमने चेत्य(? रत्य)संपत्तौ स्व- दारनिरत इति पश्चान्तरम्। तत्र च पर्ववर्जमिति विशेष उक्तः। तद्व्रतः पर्ववर्जं स्वदारगमनमात्रगृहीतव्रतः रतिकाम्यया स्वस्य भोगार्थितया, न तु तादृग्धर्मलाभ- स्तत्रेत्यर्थः। मवि.

(५) ऋतुर्नाम शोणितदर्शनोपलक्षितो गर्भधारण- योग्यः स्त्रीणामवस्थाविशेषः। तत्कालाभिगामी स्यादित्ययं नियमविधिः, न तु परिसंख्या, स्वार्थहानिपरार्थकल्पना- प्राप्तबाधात्मकदोषत्रयदुष्टत्वात्। ऋतुकालेऽपि रागतः पक्षे गमनप्राप्तौ यस्मिन् पक्षेऽप्राप्तिस्तत्र विधिः 'समे यजेत' इतिवत्। अत एव ऋतावगमने दोषमाह पराशरः— 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। घोरायां भ्रूणहत्यायां पतते नात्र संशयः॥'। अनुत्पन्नपुत्रस्य चायं नियमः, 'ब्राह्मणो ह वै जायमानस्त्रिभिर्ऋणै- र्ऋणवाञ्जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन- र्षिभ्यः' इत्येतत्प्रत्यक्षश्रुतिमूलत्वेऽस्य संभवति मूलान्तर- कल्पनस्यायुक्तत्वात्। 'तस्माद्युग्मासु पुत्रार्थी संविशे- दार्तवे स्त्रियम्।' इति च वक्ष्यति। ततोऽ- प्येतच्छ्रुतिमूलत्वमवगम्यते। पुत्रोत्पादनशास्त्रस्य चैक- पुत्रोत्पादनेनैव चरितार्थत्वात् 'कामजानितरान् विदुः' इति दर्शनादजातपुत्रस्यैव नियमः। 'दशास्यां पुत्राना- धेहि' इति मन्त्रस्तु बहुपुत्रप्रशंसापरः। जातपुत्रस्याप्यृतु- कालगमननियमो न दशस्वेवावतिष्ठते। स्वदारनिरतः सदेति 'नित्यं स्वदारसंतुष्टः स्यात्, नान्यभार्यामुप- गच्छेत्' इति विधानात् परिसंख्यैव, वाक्यानर्थक्यात् स्वदारगमनस्य प्रशस्तत्वात् ऋता(? अनृता)वगमने दोषाश्रवणाच्च (न) नियमविधिः। पर्ववर्जं व्रजेच्चैना- मिति। पर्वाण्यमावास्यादीनि वक्ष्यन्ते। तानि वर्जयित्वा भार्याप्रीतिः व्रतं यस्य स तद्व्रतः अनृतावप्युपेयात्। अत एव रतिकाम्यया, न तु पुत्रोत्पादनशास्त्रबुद्ध्या।

$ नन्द. गोरागतम्।

¶ संप्र. स्मृचवत्।

तस्माद्विधित्रयमिदम्– ऋतावुपेयादेव, अन्यभार्यो नोपगच्छेत्, अनृतावपि भार्याप्रीतये गच्छेदिति । अत्र च गौतमः– 'ऋतावुपेयादनृतौ च पर्ववर्जम्' । याज्ञवल्क्योऽप्याह– 'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ।' । पर्ववर्जमिति ऋतावनृतौ चोभयत्र संबध्यते । ‡ ममु.

(६) 'ऋतुकालाभिगामी स्यात्' इत्यत्र नियमद्वयं वेदितव्यम्– 'ऋतौ गच्छेदेव, न तु वर्जयेत्' इत्येको नियमः, 'ऋतावेव गच्छेत्, नानृतौ' इत्यपरः । पर्ववर्जमित्यनेन निषिद्धतिथिनक्षत्राण्युपलक्ष्यन्ते । निषिद्धपर्व त्वमावास्या पौर्णमासी च । तत्र स्त्रीगमनं श्रुत्या निषिद्धम्– 'नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रियः स्यात्' इति । † पमा. ४९८

(७) तद्व्रतः तया भार्यया प्रार्थितः अनृतावपि गच्छेदित्यर्थः । तद्व्रत इति पाठमङ्गीकृत्य तस्यार्थ उक्तः कृत्यकल्पतरौ– तत् भार्यायां रतिकाम्यया गमनमेव व्रतं यस्य स तद्व्रतः । पर्ववर्जमित्युभयत्र ऋतावनृतौ च संबध्यते । ¶ मर. १०९

(८) तत्र ऋतुकाले अभिगमनमेव व्रतं यस्येति तद्व्रतः । एतच्च गमनं सकामाया रक्षणार्थम् । $ आप्र. ५५९

ऋतुलक्षणं प्रशस्ताप्रशस्तरात्रयश्च

**'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।**
**चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥**

(१) ऋतुलक्षणार्थं श्लोकोऽयम् । वैद्यकादिशास्त्रावगम्योऽयमर्थः, न विधिमूल एव । एवं 'युग्मासु पुत्राः' इत्येतावपि श्लोकौ । षोडश रात्रयस्ताः स्त्रीणां मासि मासि स्वाभाविक ऋतुः । प्रमाणान्तरमूलत्वाच्चाश्रुतमपि मासि मासीति गम्यते । स्वभावे भवः स्वाभाविकः स्वस्थप्रकृतीनां यो भवति । व्याध्यादिना कस्याश्चित्प्राप्तकालोऽपि निवर्तते, घृततिलाद्यौषधीप्रयोगेण रतिवशेन चाकालेऽपि संवर्तते । अतः स्वाभाविक ऋतुस्ता रात्रय उच्यन्ते । चतुर्भिरितरैः । चत्वार्यहानि यानि सद्भिर्विगर्हितानि प्रतिषिद्धस्त्रीस्पर्शसंभाषणादीनि । तानि च प्रथमशोणितप्रदर्शनात्प्रभृति । अहर्ग्रहणं च सर्वाहोरात्रोपलक्षणार्थम् । तैः सह । ¶ मेधा.

(२) स्वाभाविकः स्त्रीस्वभावनियतः । कस्याश्चित्स्वाधिक्यमपि व्याध्यादिना शोणिताधिक्येन भवतीत्यर्थः । इतरै रजःकालीनैश्चतुर्भिः सहेति वदन्नवशिष्टान्यहानि द्वादशेति दर्शयति । रात्रय इति वचनमुपगमयोग्यद्वादशाहोरात्रेषु रात्रावेव गमनम्, न दिवेति कथयितुम् । अहोभिरिति त्वहोरात्रोपलक्षणम् । मवि.

(३) चतुर्थदिवसस्य विगर्हितत्वं रजोनुवृत्त्यभिप्रायेण । आन. १४५

(४) स्वाभाविकः न व्याध्यादिनिमित्तादुत्पन्नः स्त्रीणामृतुर्भवति । ※ नन्द.

**'तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।**
**त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥**

---

‡ अस्य गोरागतार्थत्वेऽपि गोराव्याख्यानस्याशुद्धिबहुलत्वादिदं गृहीतम् ।

† शेषं मेधागतम् । संको. पमागतम् ।

¶ गप., आन. मरगतम् ।

$ बाल. आप्रवत् ।

(१) मस्मृ. ३।४६ ; मभा. ५।१ ; गौमि. ५।१ ; उ. २।१।१७ ; स्मृच. १५ ; चका. ७२५ : ७२७ पू. ; गृर. ३९९ मिः सद्वि (मिर्मृतु) ; पमा. ४३७-४३८ ; मर. १०९ ; गप. ४५० पू. ; आप्र. ५५९ ; मुक्ता. ७४;

¶ गोरा. अशुद्धमिति न गृहीतम् । ममु., पमा., आप्र., मच., बाल., माच. मेधागतम् ।

※ शेषं मेधागतम् ।

सिन्धु. ८११ पू. ; आन. १४५ ; बाल. १।७९ पृ. २२० ; बौधि. २।३।१ (=) ; संर. ६८० सद्विग (सह ग).

(१) मस्मृ. ३।४७ ; गोरा. शेषास्तु (शेषाः स्युः) ; अप. १।७९ पृ. १०४ च या (तथा) शेषास्तु (शेषाः स्युः) ; गौमि. ५।१ निन्दितै (निन्द्या ए) च या (तु या) ; उ. २।१।१७ निन्दितै (निन्द्या ए) ; स्मृच. १५ अपवत् ; ममु. गोरावत् ; चका. ७२७ तासा

(१) तासां रात्रीणां या आद्याः प्रथमशोणितदर्शनाच्चतस्रः ता निन्दिताः, न तत्र गमनमस्ति । तिसृषु तावत् स्पर्शोऽपि नास्ति, अशुचित्वात् । चतुर्थ्यां तु स्नाताया वशिष्ठवचनात् सत्यपि शुचित्वे रतिसंभोगो नास्ति, चतसृणां गर्हितत्ववचनात् । या चैकादशी या च त्रयोदशी साऽपि निन्दिता एवं प्रतिषिद्धगमना । ऋतुदर्शनात्प्रभृत्येकादशीत्रयोदश्यौ गृह्येते, न चन्द्रतिथी, तासामिति निर्धारणविषयत्वेन रात्रीणां संबन्धात् । समानजातीयश्च निर्धार्यतया प्रतीयते 'कृष्णा गवां संपन्नक्षीरा' इति । षड्रात्रगमनप्रतिषेधोऽयमदृष्टार्थः । शेषाः प्रशस्ता दश रात्रयः । षण्णां प्रतिषेधात् दशसु प्राशस्त्यं सिद्धमेवानूद्यते । $ मेधा.

(२) निन्दितैकादशीत्यत्र संधिरार्षः । § नन्द.

(३) एकादशीत्रयोदश्यौ ऋतोः, न पक्षस्येति मदनपारिजाते । यत्तु– 'चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामाचम्योपह्वयते' इति गृह्योक्तं चतुर्थ्यां रात्रौ गमनम्, यच्चाऽऽपस्तम्बोक्तम्– 'चतुर्थीप्रभृत्याषोडशीमुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमनमित्युपदिशन्ति' इति, यच्च हारीतोक्तम्– 'चतुर्थेऽहनि स्नातायां युग्मासु च गर्भाधानं तदुपेतं ब्रह्मगर्भं संदधाति' इति, तद्रजोनिवृत्तौ ज्ञेयम्, 'स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते । गम्या निवृत्ते रजसि नानिवृत्ते कथंचन ॥' इत्यापस्तम्बोक्तेः, 'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ।' इति मनूक्तेश्च । वस्तुतस्तु स्वसूत्रे स्पष्टतयोक्तस्य चतुर्थीगमनस्य स्मृत्या संकोचोऽत्यन्तानुचितः । तथा च अनिवृत्तेऽपि रजसि चतुर्थ्यां गमनं भवत्येवेत्ययमेव कल्पः साधीयान् । मनुवचने 'साध्वी गमनार्हा' इति माधवः । एवं चानन्तरोक्ते मनुवचने चतुर्थीनिषेधो रजोनिवृत्ति( ? नुवृत्ति )सद्भावपरः । अनन्तरोक्ते हारीतवचने युग्मास्वित्यनेनैव चतुर्थीग्रहणे सिद्धे पृथगुपादानं मुख्यत्वद्योतनार्थमिति ज्ञेयम् । एतदपि रजोनिवृत्तावेव । संर. ६८२

युग्मायुग्मरात्रिषु गमने क्रमेण पुत्रकन्ययोरुत्पत्तिः,
स्त्रीपुंबीजन्यूनत्वाधिकत्वादि पुंस्त्वादिप्रयोजकम्

**'युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।**
**तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥**

(१) तासु दशसु या युग्मा रात्रयः षष्ठ्यष्टमी दशमी द्वादशी चतुर्दशी षोडशी तासूपगच्छतः पुत्रा जायन्ते । अयुग्मासु स्त्रियः दुहितरः । तस्मात् पुत्रोत्पत्तिसिद्ध्यर्थं युग्मासु संविशेत् भजेत मैथुनधर्मेण स्त्रियमार्तवे । अनुवादोऽयम् । अयमपि नियम एव, अनुत्पन्नपुत्रस्यायुग्मास्वगमनम् । § मेधा.

(२) युग्मासु षष्ठ्यष्टम्याद्यासु गच्छतः पुत्रा जायन्ते । अयुग्मासु सप्तमीनवम्याद्यासु स्त्रियः । अतः पुत्रार्थी युग्मासु ऋतुकाले भार्यां व्रजेत्, तास्वल्पीभावादार्तवस्य । तथा चाऽऽयुर्वेदः– '† युग्मास्वल्पीभवत्यार्तवमयुग्मां तस्मात् पुत्रस्य दुहितुर्जन्मोत्पद्यते' । गोरा.

---

$ गोरा., अप., मवि., ममु., चका., गृर., मपा., मर., गभा., आप्र., मच. मेधागतम् ।

§ शेषं मेधागतम् ।

( आसा ) शेषं अपवत् ; गृर. ३९९ स्तस्तु ( स्तश्च ) ; पमा. ४३८ शेषास्तु ( शेषाः स्युः ), ४९८ ; मपा. ३४६ अपवत् गृरवच्च ; मर. १०९ पमावत् ; गभा. १२२ अपवत् ; गप. ४५० पमावत् ; आप्र. ५५९ पमावत् ; मुक्ता. ७४ ; आम. ८६ च या ( तया ) ; सिन्धु. ८११ अपवत् ; विपा. ३६८ ( भागः २ ) प्रथमपादे ( तासामा पञ्चतः सर्वा ) शेषं अपवत् ; बाल. १।७९ पृ. २२० पमावत् ; बौधि. २।३।१ (=) ; संर. ६८२ उवत् पमावच्च.

§ मवि., ममु., गृर., पमा., आप्र., नन्द. मेधागतम् ।

† अशुद्धमिदं वचनम् । गदाधरपद्धतौ ( पृ. ४५१ ) 'युग्मास्वल्पीभवत्यार्तवमयुग्मास्वाप्यायते, तस्मादासु क्रमात्पुत्रा दुहितरश्च जायन्ते' इति वचनं श्रुतित्वेन धृतम् ।

(१) मस्मृ. ३।४८ ; अप. १।७९ पृ. १०३; गौमि. ५।१ पू. ; स्मृच. १४ ; चका. ७२२ ; गृर. ३९९ ; पमा. ४३८ ; मर. १०९ ; वीक. १।७९ ( युग्मासु गच्छेत्पुत्रार्थं कन्याऽयुग्मासु रात्रिषु । ) पू. ; गप. ४५०

( ३ ) तत्रैव प्रासङ्गिकं दृष्टं फलमाह— युग्मास्विति । स्त्रियः अयुग्मासु इति च्छेदः । ( सं )विशेत् निविष्टमना गच्छेत् । अन्यथाऽङ्गवैकल्यादि स्यादपत्यस्य । मच.

( ४ ) रात्रिग्रहणं दिवसप्रतिषेधार्थम् । † भाच.

**$ पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।**
**समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥**

( १ ) शुक्रं वीर्यं पुरुषस्य रेतः, स्त्रियाः शोणितम् । उक्तं भगवता वसिष्ठेन— 'शुक्रशोणितसंभवः पुरुषः' ( वस्मृ. १५।१ ) इति । स्त्रीबीजादधिके पुंबीजेऽयुग्मास्वपि पुत्रो जायते, युग्मास्वपि स्त्रीबीजस्याऽऽधिक्ये कन्यैव । अयुग्मास्वपि रात्रिषु पुत्रार्थिनो गमनानुष्ठानार्थमेतत् । यदा परिपुष्टमात्मानं वृष्याहारयोगेन समधिकवीर्यं मन्येत स्त्रियाश्च कथंचिदपचयं तदा पुत्रार्थी गच्छेदित्युपदिष्टं भवति । आधिक्यं चात्र न परिमाणतः, किं तर्हि ? सारतः । समेऽपुमान् मिश्रीकृते पुंस्त्रियौ । अपुमान् नपुंसकमिति केचित् । अन्ये 'साम्ये' इति पठन्ति । उभयोः साम्येऽपुमानेव । पुंस्त्रियौ वा गर्भाधान्यां यदा वायुर्द्रवरूपत्वात् संसृष्टे शुक्रशोणिते समं विभजेत एकत्र भागमन्यत्र तावदेव तदा यमौ जायेते । तत्र समे विभागेऽपि स्त्रीबीजाधिक्ये स्त्री, पुंबीजाधिक्ये पुमान् । क्षीणे बीजे सारतः विपर्ययोऽग्रहणं गर्भस्य, नपुंसकोत्पत्तिर्वा । * मेधा.

( २ ) पुंसोऽधिकबीजे अयुग्मास्वपि रात्रिषु पुमान् स्त्र्याकृतिर्दुर्बलो हीनाङ्गो (वा) जायते, आयुर्वेद एवाभिधानात् । स्त्रीबीजे त्वधिके युग्मास्वपि स्त्री पुरुषाकृतिर्दुर्बला हीनाङ्गा वा जायते, आयुर्वेददर्शनात् । समे स्त्रीपुरुषबीजे युग्मास्वयुग्मास्वपि नपुंसकं जायते । स्त्रीपुंसयोर्वा(? स्त्रीपुमांसौ वा) वायुना बीजभेदे सति । निःसारेऽल्पे च बीजे अग्रहणं गर्भस्य । ‡ गोरा.

( ३ ) अत्र व्यभिचारो दृश्यते, तेन तत्र कारणमाह — पुमानिति । स्त्रियाः शुक्रे शोणिततां गते । समे अपुमान् नपुंसकम् । पुंस्त्रियौ यमौ । एतच्चोभयोरतिवृद्धबहुशुक्रत्वे । तदपेक्षया पुंसोऽधिकशुक्रत्वे पुमांसौ, स्त्रिया अधिकशुक्रत्वे स्त्रियावित्यपि ग्राह्यम् । क्षीणे अनयोः शुक्रे रोगादिना क्षीणे स्वभावतो वाऽल्पे विपर्ययः अपत्यानुत्पत्तिः । मवि.

( ४ ) अपुमानिति च्छेदः । पमा. ४९९

( ५ ) अधिके स्त्रिया इति । रजसीति शेषः । ¶ मच.

( ६ ) शुक्रं रेतः पुरुषस्य, स्त्रियाः शोणितम्, 'शुक्रशोणितसंभवः पुरुषः' इति वसिष्ठोक्तेः । तस्मिन् पुंबीजे स्त्रीबीजादधिके अयुग्मास्वपि पुमानेव भवति, परं तु स्त्र्याकारः, स्त्रीबीजाधिक्ये युग्मास्वपि कन्यैव, परं तु पुरुषाकारा, बीजस्योपादानकारणत्वेन प्राबल्यात् कालस्य च निमित्तकारणत्वेन दौर्बल्यात् । उभयोः समे शुक्रे

---

† शेषं मेधागतम् । संर. भाचवत् ।

$ अस्य मिताव्याख्यानम् 'एवं गच्छन्' इति याज्ञवल्क्यश्लोकव्याख्याने द्रष्टव्यम् ।

युग्मासु ( युग्मेषु ); संसौ. २८ पू. याज्ञवल्क्यः (?) ; वीमि. १।७९ ; संप्र. १५३ ; आप्र. ५५९ ; चम. ४ पू. ; मुक्ता. ७४ ; संम. १० पू. ; बाल. १।७९ पृ. २२० ; संर. ६८०.

(१) मस्मृ. ३।४९ ; विश्व. १।७९ शुक्रे ( शुक्ले ) प्रथमपादमात्रम् ; मेधा. समे ( साम्ये ) इत्यपि पाठः ; मिता. १।८० ( = ) स्त्रियाः ( स्त्रियः ) पू. ; स्मृच. १६ ; गृर. ३९९ भवत्य ( भवेद ) स्त्रियाः (स्त्रियः) ; पमा. ४९९ स्त्रियौ वा ( स्त्रियोर्वा ) ; गप. ४५० भवत्य ( भवेद ) ; वीमि. १।८१ पू. ; संप्र. १६० ; आप्र. ५५९ क्षीणेऽल्पे च ( क्षीणे चाल्पे ) ; मुक्ता. ७५ ; संम. १० ( = ) पू. ; विपा. ३६९ ( भागः २ ) (=) पू. ; बाल. १।८० पृ. २२२ उत्त. ; संग. ३७१ स्त्रियाः ( स्त्रियः ) उत्तरार्धे ( समे नपुंसकं ज्ञेयं पुंस्त्रियोर्वाऽन्ययोगतः ॥ ) ; कुम. ८१३ ( = ) पू. ; संर. ६८३.

* स्मृच., ममु., गृर., गप., आप्र., बाल., नन्द., संर. मेधागतम् ।

‡ विपा. गोरागतम् ।

¶ शेषं मविगतं मेधागतं च ।

अपुमान् नपुंसकम् । अथवोत्सृज्यमानस्य शुक्रस्य द्वैधी-भावेन स्थलद्वयपाते समे सति पुंस्त्रियौ यमौ जायेते । तदुक्तम्– 'यदा विशेद्द्विधाभूतं बीजं पुष्पं परिस्रुतत् । तदा भवेद्द्विधा गर्भः सूतिर्वेशविपर्ययात् ॥' । अस्यार्थः – यदा बीजं शुक्रं परिस्रुतत् पतत् सत् पुष्पं शोणितं प्रति द्विधाभूतं विशेत् गर्भकोशे प्रविशेत्, तदा गर्भो द्विधा स्थलद्वये भवेदित्यर्थः । तत्रापि स्थलद्वयेऽपि पुंशुक्रे अधिके पुमांसौ भवतः । स्थलद्वयेऽपि स्त्रीशुक्रे अधिके स्त्रियावेव । स्थलद्वयेऽपि स्त्रीपुंशुक्रयोः अल्पत्वबहुत्वाभ्यां पुंस्त्रियौ भवतः । पुमांश्च स्त्री चेति पुंस्त्रियौ । स्थलद्वयेऽपि स्त्रीपुं-बीजयोः समे साम्ये नपुंसकाविति । रोगादिना उभयोः शुक्रे क्षीणे परिमाणतो वा अल्पे सति विपर्ययः गर्भानुत्पत्ति-रित्यर्थः । $ संप्र. १६०–१६१

(७) 'स्त्री भवत्यधिके स्त्रियाः' इत्यत्र रजसी-त्यध्याहारः । अथवा शुक्रशब्दस्यैव रजोवाचकत्वं चे-त्यवगन्तव्यम् । † मुक्ता. ७५

(८) क्षीणे वा शुक्रे अल्पे वा रजसि विपर्ययः गर्भस्यासंभवः अनुत्पत्तिः । § भाच.

मतभेदेन रात्रिद्वयादिगमनं ब्रह्मचर्यानपबाधकम्

**'निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयन् ।**

**ब्रह्मचार्येव भवति यत्रतत्राऽऽश्रमे वसन् ॥**

(१) षट् निन्द्याः आद्याश्चतस्रः एकादशी त्रयो-दशी च । अष्टावन्या अनिन्द्याः । एवं चतुर्दश वर्ज्याः । शिष्टं रात्रिद्वयम् । † तत्रैका स्त्र्यर्थेति मन्वभिप्रायः । विश्व. १।७९

(२) निन्द्यासु षट्स्वन्यासु चानिन्द्यास्वप्यष्टासु रात्रिषु स्त्रियो वर्जयन् परिहरन् द्वे रात्री अवशिष्टे यदि गच्छति पर्ववर्जं तदा ब्रह्मचार्येव भवति ब्रह्मचर्यफलं प्राप्नोति । यत्रतत्राऽऽश्रमे वसन् । अर्थवादोऽयम्, न तु वानप्रस्थाद्याश्रमेषु राज्यनुज्ञा, जितेन्द्रियत्वविधानात् सर्वाश्रमेषु गार्हस्थ्यादन्येषु, वीप्सायाश्चार्थवादतयाऽप्युप-पत्तेः । एताश्च रात्रयो वर्ज्या न क्रमेणैव, किं तर्हि ? यथेच्छया पर्ववर्जं गमनं यथा भवति तथा रात्रिद्वय-मप्यनुज्ञायते । किं पुनर्ब्रह्मचर्यस्य फलम् ? विशेषा-श्रवणात् स्वर्गः । क्वचित्तु श्रूयते– 'न ब्रह्मचारी प्रत्यवैति' इति, स्वल्पैरतिक्रमैर्न दुष्यतीति । § मेधा.

(३) निन्द्यासु षट्सु अन्यासु चाष्टासु रात्रिषु यासु कासुचित्, न क्रमेणैव, स्त्रियं परिहरन् रात्रिद्वयेऽवशिष्टे गच्छन् गार्हस्थ्यादाश्रमान्तरेऽपि वसन् ब्रह्मचार्येव भवति, न ब्रह्मचर्यखण्डनदोषोऽस्य भवतीति । उत्पन्नविनष्टपुत्रस्याऽऽश्रमान्तरस्थस्यापीच्छया पुत्रार्थे रात्रिद्वयगमने (दोषाभावप्रतिपादनार्थमेतत्–) 'यत्र तत्राऽऽश्रमे वसन्' अपि (? इति), 'पुत्रार्थी संविशेत्' इति प्रस्तुतत्वात्, पुत्रस्य च महोपकारकत्वेन श्रवणात् । यथाऽऽ( ? यत्त्वा )श्रमान्तरेऽत्यन्तब्रह्मचर्योपदेशादयुक्त-मेतदित्याहुस्तदसत्, अस्यापि शास्त्रगोचरत्वात् । गोरा.

(४) यत्रतत्रेति वचनात् गार्हस्थ्य इव सपत्नीक-वानप्रस्थेऽपि ऋतुगमनमस्तीति गम्यते, अन्यथा गार्हस्थ्येऽपीत्येवावक्ष्यत् । ¶ मवि.

---

$ वीमि., संम., संग. संप्रगतम् ।

† शेषं मेधागतम् ।

§ शेषं मेधागतं मचगतं च ।

(१) मस्मृ. ३।५० ; विश्व. १।७९ यन् (येत्) ; चका. ७२७ स्वष्टा (स्वाद्या) व्याख्यानात् 'स्वष्टा' इति पाठस्यैव संभवः, वसन् (वसेत्) यन् (येत्) ; गृर. ३९९ स्वष्टासु चान्यासु (सु षट्स्वपि हि) ; गप. ४५० स्वष्टा (स्वष्ट) ; आप्र. ५५९ स्वष्टासु चान्या (सु चान्यास्वष्टा) ; सिन्धु. ८१५ उत्त ; बाल. १।७९ पृ. २२१ विश्ववत् आप्रवच्च ; भाच. स्वष्टा (स्वाद्या) इति पाठो व्याख्यानात् निर्णीयते.

† 'सुस्थ इन्दौ सकृत्पुत्रम्' इति पुत्रोत्पादनाभिप्रायक-सकृद्गमनविधायकयाज्ञवल्क्यवचनेन रात्रिद्वयगमनविधायक-प्रकृतमनुवचनस्य विरोधं परिहर्तुमिदमुक्तम् । एतदुक्तं भवति–निन्द्यातिरिक्तरात्रिषु एका अयुग्मा एका युग्मा चेत्येतादृशमेव द्वयं ब्रह्मचर्यानपबाधकगमनार्हं मनोरभि-प्रेतम्, न युग्माद्वयमयुग्माद्वयं वेति ।

§ चका. मेधागतम् ।

¶ शेषं मेधागतम् ।

(५) 'यत्रतत्राऽऽश्रमे वसन्' इति वानप्रस्थापेक्षया। तस्य हि भार्यया सह गमनपक्षे ऋतुगमनं प्रसक्तम्। न च वनस्थभार्याया ऋतुर्न भवतीति वाच्यम्, 'वनं पश्चाद्यतो व्रजेत्' इति, 'वर्षैरेकगुणां भार्यामुद्वहेद्द्विगुणः पुमान्।' इत्यादिशास्त्रपर्यालोचनया तत्संभवात्। मेधातिथिस्तु– "'यत्रतत्राऽऽश्रमे वसन्' इत्यनुवादमात्रम्, गृहस्थेतराश्रमत्रये जितेन्द्रियत्वविधानाद्रात्रिद्वयाभ्यनुज्ञानाभावात्" इत्याह। गोविन्दराजस्तु– "उत्पन्नविनष्टपुत्रस्याऽऽश्रमान्तर(स्थ)स्यापीच्छया पुत्रार्थं रात्रिद्वयगमने दोषाभावप्रतिपादनार्थमेतत्, 'यत्रतत्राऽऽश्रमे वसन्' इति वचनात्, 'पुत्रार्थी संविशेत्' इति च महोपकारकत्वात्" इत्याह। 'हन्त गोविन्दराजेन विशेषमविवृण्वता। व्यक्तमङ्गीकृतमृतौ स्वदारसुरतं यतेः॥'। † मनु.

(६) यत्रतत्राश्रमे गार्हस्थ्येऽपीत्यर्थः। स्त्रीवरसत्वेऽपि ब्रह्मचर्यफलकामस्यानृतौ न गमनशङ्केत्यर्थः। § गप. ४५२

(७) निन्दिता एकादशी त्रयोदशी आद्याश्चतस्र इति षट्सु अष्टासु च अनिन्दितासु निशासु। एवं रात्रिद्वयमवशिष्यते। तयोर्गच्छन् ब्रह्मचार्येव भवति ‡ इत्यर्थवाद इति मेधातिथिः। गोविन्दराजस्तु– 'ऋतावुपेयादेव, अन्यभार्यो न व्रजेत्, अनृतावपि भार्याप्रीतये व्रजेत्' इति। पर्ववर्जमित्युभयत्र संबध्यते। अत एव गौतमः– 'ऋतावुपेयात्, अनृतौ च प्रतिषिद्धवर्जम्'। याज्ञवल्क्योऽपि– 'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्।'। संतत्यभावे आश्रमान्तरयोः कुटीचकवानप्रस्थयोरपि 'यत्र तत्राऽऽश्रमे वसन्' इति स्वरसात् तादृशदिनद्वये गमनं युक्तम्। तद्दिनद्वयमष्टमीं वा चतुर्दशीमित्याद्यपर्वोक्तेरिति(?)। पञ्चाशदुत्तरं वनं प्रति भार्यया सह गमनविधानेन स्त्रियाः पुत्रोत्पादनयोग्यकालत्वात् 'पुत्रार्थी संविशेदार्तवे स्त्रियम्' इति साधारण्याच्च। यत्तु 'गृहस्थ एवैषां योनिः' इति गौतमसूत्रम्, व्याख्यातं च हरदत्तेन 'तेषामपत्यं चण्डालः' इति, तदप्राप्तपत्नीविषयम्। स्वपत्न्यां न दोषः, अन्यथा 'यत्रतत्र' इति मनुवचनविरोधः, 'कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः।' इति श्रीकृष्णोक्तेः। नाप्यर्थवादः, द्रव्यसंस्काराङ्गकर्मस्वेव स इति। गृहस्थानां तु दिनषट्कं प्रशस्तम्। तदुक्तं याज्ञवल्क्येन– 'षोडशर्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत्। ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्॥' इति। मच.

(८) † निन्द्याः प्रथमाश्चतस्रः एकादशी त्रयोदशी च तासु, अष्टासु चान्यासु स्त्रीजननिमित्तप्रतिनिषिद्धास्व-

† शेषं मेधागतम्।

§ बाल. मेधागतं गपगतं च। आप्र. गपगतम्।

‡ गार्हस्थ्यभिन्नाश्रमविषयकत्वांशे इत्यर्थः। अग्रिमः 'गोविन्दराजस्तु' इत्यादिः 'वरमनुस्मरन्' इत्यन्तो ग्रन्थः 'ऋतुकालाभिगामी स्यात्' इतिश्लोकव्याख्यानांशरूपोऽत्र प्रमादात्पतित इति भाति।

† ग्रन्थोऽयमशुद्धः। तत्र संभवन्ती शुद्धिः कंसे प्रदर्शिता। एवमत्र नन्दनाभिप्रायं प्रतिपद्यामहे– 'निन्द्यास्वष्टासु' इति प्रस्तुतश्लोकस्य मेधातिथ्यादिवत् ऋतुकालमात्रपरता न नन्दनेनाभ्युपगम्यते, अपि तु ऋत्वनृतूभयकालपरता। तत्रापि 'कालजं तु रजःसंज्ञं तस्मात्तत्रैव साऽशुचिः॥ आरभ्य चाऽऽर्तवदिनादेकविंशतिवासरे। मासादूर्ध्वं रजो यत् स्यात्तत्कालजमुदाहृतम्॥ रजस्वला यदा नारी पुनरेव रजस्वला। सा विंशतिदिनादूर्ध्वं त्रिरात्रमशुचिर्भवेत्॥' (बृह० स्मृ०) इत्यादिशास्त्रानुरोधेनैकविंश्यादिरात्रिषु ऋत्वन्तरत्वसंभवात्तासामुपेक्षणेन विंशतिरात्रपरता स्वीक्रियते। तत्र निन्द्याः षट्, स्त्रीजननिमित्तप्रतिषिद्धा अयुग्माः पञ्चम्यादयश्चतस्रः, अनृतुकालत्वेन प्रजाफलरहिताः षोडश्यादयो विंश्यन्ताश्चतस्रश्चेत्यष्टौ चेति मिलित्वा चतुर्दश रात्रयो वर्ज्याः, अवशिष्टासु षट्सु षष्ठ्यादियुग्मरात्रिषु गमनं न ब्रह्मचर्यबाधकमिति। तदेवमस्य श्लोकस्य तात्पर्ये षट् पक्षाः संपन्नाः– ऋतुगतरात्रिद्वयपरत्वं गार्हस्थ्यमात्रपरत्वं चेत्येको मेधादिपक्षः, ऋतुगतरात्रिद्वयपरत्वं गार्हस्थ्य-तदितराश्रमपरत्वं चेति द्वितीयो गोरादिपक्षः, ऋतुगतरात्रिद्वयपरत्वं गार्हस्थ्यभिन्नाश्रमपरत्वं चेति तृतीयो मचपक्षः, ऋत्वनृतुसंबन्धिरात्रिषट्कपरत्वं गार्हस्थ्यमात्रपरत्वं चेति चतुर्थो नन्दपक्षः, ऋतुगतरात्रिषट्कपरत्वं गार्हस्थ्यमात्रपरत्वं

युग्मासु पञ्चमीसप्तमीनवमीपञ्चदशीप्रभृतिषु ( ? पञ्चदशीषु सप्तदशीप्रभृतिषु ) प्रजाफलरहितासु चतसृषु चेत्यर्थः । एकविंशीप्रभृतीनामृतोरकालत्वा( ? मृत्वन्तरकालत्वा )-दष्टास्वित्युक्तम् । नन्द.

( ९ ) निन्द्यास्वन्यासु अयुग्मासु रात्रिषु स्त्रियो वर्जयेदित्यर्थः । *अवशिष्टासु गच्छन् ब्रह्मचारी भवति । $ भाच.

रजोदर्शनकाले गमननिषेधः एकशयने शयननिषेधश्च

**'नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्तवदर्शने ।**
**समानशयने चैव न शयीत तया सह ॥**

( १ ) प्रमत्तः कामशरैः पीडितोऽपि । आर्तवं स्त्रीलिङ्गशोणितं मासि मासि प्रसिद्धम् । तद्दर्शने न गच्छेत् । एकस्यां च शय्यायां तया सह न शयीत । स्पर्शप्रतिषेधादेव तत् सिद्धमिति चेत् , नायं प्रतिषेधः , व्रतमिदम् । प्रायश्चित्तभेदश्च । † मेधा.

( २ ) उदक्यागमनं हि लोकद्वयविनाशकमित्याह — नोपगच्छेदिति । स्त्रीभिर्गमनेच्छाभावेऽपि न शयीत स्पर्शाशङ्कया, ' ( पात्रे चोदकीति ? ) तिस्रो रात्रीर्व्रतं चरेत् , अञ्जलिना वा पिबेत् ' इति श्रुतेः । अञ्जलिनोदकसंबन्धादिति । मच.

**'रजसाऽभिप्लुतां नारीं नरस्य ह्युपगच्छतः ।**
**प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रहीयते ॥**

---

चेति पञ्चमो भाचपक्षः , गृरपाठमनुसृत्य ऋतुगतदशरात्रपरत्व( आश्रमविषये न निर्णयः )मिति षष्ठो गृरपक्ष इति । रात्रिद्वयमपि युग्मायुग्मरूपमिति विश्वरूपः , यत्किंचिदित्यन्ये ।

* बहुवचनात् रात्रिद्वयपरत्वं न मन्यते इति प्रतीयते ।

$ शेषं मेधागतम् ।

† गोरा. , मवि. , ममु. , नन्द. , माच. , मेधागतम् ।

(१) मस्मृ. ४।४० ; चका. ७२६ पू. ; गृर. ४०१ मानश ( माने श ) बौधायनः ; आप्र. ५६२ ; आन. २१०.

(२) मस्मृ. ४।४१ ; चका. ७२६ बलं च (यशश्च) ; गृर. ४०१ साऽभि ( सा वि ) स्य ह्यु ( स्याभ्यु ) बलं च ( यशश्च ) बौधायनः ; गप. ४६० ; आप्र. ५६२ स्य ह्यु ( स्याभ्यु ) बलं च ( यशश्च ) ; बाल. १।८१ पृ. २२३ आप्रवत् .

( १ ) रजः पूर्वोक्तमार्तवम् । अभिप्लुतां तेन संबद्धाम् । पूर्वस्यार्थवादः । मेधा.

( २ ) यस्माद्रजस्वलास्त्रियं पुंस उपगच्छतः प्रज्ञावीर्यादीनि नश्यन्ति तस्मात्तां नोपेयात् । † गोरा.

( ३ ) तेजः ब्रह्मवर्चसम् । * मवि.

( ४ ) एतत् त्रिरात्रविषयम् , ' अशुद्धदिवसेषु ' इति देवलोक्तेः ' प्रथमेऽहनि चाण्डाली ' इति वक्ष्यमाणब्रह्माण्डोक्तेश्च । गप. ४६०

**'तां विवर्जयतस्तस्य रजसा समभिप्लुताम् ।**
**प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रवर्धते ॥**

( १ ) वृद्धिवचनं स्तुतिरेव । मेधा.

( २ ) तां पुनः रजस्वलां न गच्छतः प्रज्ञादीनि वर्धन्ते, तस्मात्तां न व्रजेदिति । ‡ गोरा.

( ३ ) तां विवर्जयत इति मांसाद्यभक्षण इव निवृत्तिरत्रापि फलवतीति दर्शितम् । मवि.

( ४ ) विपर्यस्यतः वर्जयतः प्रज्ञादीनां वृद्धिरित्यर्थः । आप्र. ५६२

गमनोत्तरशुद्धिः , गमनकाले उत्तमवस्त्रादिधारणं मन्त्रजपश्च

**'स्नानं मैथुनिनः स्मृतम् ॥**

( १ ) मैथुनिनः । स्त्रियां कृतशुक्रोत्सर्गः स्नानेन शुध्यति । ¶ मेधा.

---

† ममु. गोरावत् । आप्र. , भाच. गोरागतम् ।

* मच. मविवत् ।

‡ ममु. , मच. , भाच. गोरावत् ।

¶ गोरा. मेधावत् ।

(१) मस्मृ. ४।४२ ; चका. ७२६ विव ( विस ) तेजो बलं च ( लक्ष्मीर्यशश्च ) श्चैव प्र ( श्च परि ) ; गृर. ४०१ विव ( विस ) तेजो बलं च ( लक्ष्मीर्यशश्च ) बौधायनः ; आप्र. ५६५ वर्जय ( पर्यस्य ) तेजो बलं च ( लक्ष्मीर्यशश्च ) ; बाल. १।८१ पृ. २२३ द्वितीयपादे ( तेषां वृद्धिः स्मृता बुधैः ) पू. .

( २ ) मस्मृ. ५।१४४ ; मिता. ३।३० ; अप. ३।२९ पृ. ९२२, पृ. ९२६ ; स्मृच. १२० ; स्मृसा. १२० ; चमा. ४ ( खण्डः २ मा॰ २ ).

(२) मैथुनिनः स्नानमृतुकालविषयम्, 'अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत्।' इति बृहस्पतिस्मरणात्। * मिता. ३।३०

(३) मैथुनिन ऋतुमत्या सह, अन्यत्र मूत्रवदित्युक्तम्। संनिधेर्भोजनाव्यवहितमैथुनिनो वा। मच.

(४) मैथुनिनः मैथुनकर्तुः। ऋतावपि गमने न शुध्यति यज्ञादिकार्यार्थम्। भाच.

[1]उत्तमाम्बरगन्धाद्यैः शुचिर्भूत्वा समाहितः।
विष्णुर्योनिं सुदर्शं च जपित्वाऽऽधानमाचरेत्॥

गमनकाले उपवीतनिवीतयोर्व्यवस्था,
स्त्रीपुरुषयोः सवस्त्रत्वविवस्त्रत्वनियमः, अलंकरणकर्तव्यता,
संवेशनावधिः

[2]उपवीती स्त्रियं गच्छेदृतुकाले तु वै बुधः।
निवीतमनृतौ कुर्यात्तद्दोषस्य निवृत्तये॥

तद्दोषस्य। यज्ञोपवीतस्य दोषनिवृत्तये इत्यर्थः, अन्यथा तस्य त्यागविधानात्। 'ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम्।' इति शातातपवचनेन गर्भोत्पत्तिदिनमजानताऽनेन पुंसा सर्वाण्यपि ऋतुदिनानि मैथुनानन्तरं स्नानयोग्यानीति मत्वा स्नातव्यमेव भवति। यस्तु ज्योतिःशास्त्रेण ऋतुकालमवेक्ष्य अस्मिन् ऋतौ अवश्यं गर्भो भविष्यतीति निश्चित्य मैथुने यतते तेन एकस्मिन्नेव दिने यज्ञोपवीतिना सह शयनं कर्तव्यम्, अनन्तरं स्नानं च भवति। आन. ८९

[3]अमुक्तवसना योषिद्विमुक्तवसनः पुमान्।
संविशेतामुभौ मुक्तवसनौ कलिराविशेत्॥

(१) संविशेत्(? शेताम्) इत्युक्त्या रतिकाले मुक्तवसनत्वमादृतमासीत्(? दृतम्, तस्मात्) अमुक्तवसनत्वं निद्राकाल इति। मुक्ता. ७७

(२) विमुक्तवसनः विमुक्तकच्छ इत्यर्थः। अमुक्तवसनेति बद्धनीवीत्यर्थः। अन्यथा 'स्त्रीवाससैव संनिपातः स्यात्' इत्यस्य विरोधः स्यात्। आन. १४६

[1]दारप्रियैरलंकारैरलंकृत्य प्रसन्नधीः।
प्रियासमीपे शयने संविशेत्प्रहरद्वयम्॥

### वृद्धमनुः

श्राद्धे निमन्त्रितस्य गमननिषेधः

[2]ऋतुकाले नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित्।
तत्र गच्छन्समाप्नोति ह्यनिष्टं फलमेव तु॥

यस्तु आमन्त्रितो वा श्राद्धकर्ता वा ब्रह्मचर्यं न करोति तस्य दोषमाह वृद्धमनुः– ऋतुकाल इति। ऋतुकाले इति वदन् स्वभार्यागमनेऽपि दोषमाह। नियुक्त इति वदन् रागतः प्रवृत्त्यभावेऽपि दोष इत्याह। स्मृच. ४०८

### याज्ञवल्क्यः

ऋतुलक्षणम्, पुत्रार्थं युग्मासु गमनमावश्यकम्,
विहितगमनेन ब्रह्मचर्याबाधः, वर्ज्यकालाः

[3]षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्॥

---

* अप., मवि., स्मृच., ममु., स्मृसा. मितावत्।

(१) प्रपा. १०७.

(२) मुक्ता. ७७ : ४५८ स्य निवृ (विनिवृ); आन. ८८–८९ : १४० (=).

(३) मुक्ता. ७७,४५८ ; आन. १४० (=) : १४६ (=) उत्तरार्धे (उभौ विमुक्तवसनौ कलिराविशते ध्रुवम्॥).

(१) मुक्ता. ७७ शयने (शयनं) सावणीये, ४५८ ; आन. १४० (=).

(२) स्मृच. ४०८ तु (हि) ; पमा. ७०१ काले (कालं) निष्टं फ (निष्फ) ; संप्र. १५२–१५३ फलमेव (महदेव) बृहन्मनुः ; चम. ४ तत्र ग (तत्राग) शेषं पमावत् ; सिन्धु. ८१५ पमावत् ; बाल. १।७९ पृ. १२१ काले (कालं) ; संर. ६८१ ले नियुक्तो वा (लनियुक्तोऽपि) पू.

(३) याज्ञ. १।७९ ; विश्व. १।७८ तस्रस्तु (तस्रश्च) ; मिता. : १।८१ द्वितीयपादमात्रम् ; अप. पर्वा (पर्व) ; स्मृच. १४ पू. ; चका. ७२१ अपवत् ; गृर. ४०२–४०३ तस्मिन् (तासां) ण्याद्याश्चतस्रस्तु व

(१) स्त्रियः सेव्या इत्युक्तम्। तत्रानियमप्राप्तावाह— षोडशर्तुरिति। रजोदर्शनादिः षोडश रात्रयः ऋतुसंज्ञकः कालः, तत्र नार्यो गर्भग्रहणसमर्था भवन्तीति। तासु युग्मासु रात्रिषूपगच्छेत्। किमेवं स्यात्? ब्रह्मचार्येव। 'एवं गच्छन्' इत्यनेनोपरितनश्लोकेनास्य संबन्धः। ब्रह्मचर्यशब्दश्चायं विरोधात् तत्फले वर्तते। ब्रह्मचर्यफलं ब्रह्मलोकप्राप्तिरस्येत्यर्थः। तथा च वसिष्ठः— 'ऋतौ च गच्छन् विधिवच्च जुह्वन् ब्राह्मणश्च्यवते ब्रह्मलोकात्।' इति। यद्वा कारणान्तरात् ब्रह्मचर्ये स्थितोऽपि गच्छेत्। यतो गच्छन्नपि ब्रह्मचार्येव, व्रतान्न हीयते इत्यर्थः। एवं चातिप्रसक्तावाह— पर्वाणि अमावास्यादीनि आद्याश्चर्तौ चतस्रो रात्रीर्वर्जयेदिति। विश्व.

(२) पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्युक्तम्, तत्र विशेषणमाह— षोडशेति। स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः। स च रजोदर्शनदिवसादारभ्य षोडशाहोरात्रः(त्राः)। तस्मिन् ऋतौ युग्मासु समासु रात्रिषु। रात्रिग्रहणात् दिवसप्रतिषेधः। संविशेत् गच्छेत् पुत्रार्थम्। युग्मास्विति बहुवचनं समुच्चयार्थम्। अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत्। एवं गच्छन् ब्रह्मचार्येव भवति। अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्र गच्छतोऽपि न ब्रह्मचर्यस्खलनदोषोऽस्ति। किंच पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्। पर्वाणीति बहुवचनादाद्यर्थावगमादष्टमीचतुर्दश्योर्ग्रहणम्। यथाह मनुः— 'अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्। ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥' इति। अतोऽमावास्यादीनि रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेत्। $ मिता.

(३) ब्रह्मचार्येव मैथुनविमुख एव पर्वणि पञ्चदशीद्वये भवेत्। 'ऋतुकालाभिगामी स्यात्' 'यथाकामी भवेद्वाऽपि' इति प्रसक्ते स्त्र्युपगमने पर्वपर्युदासोऽयम्— ब्रह्मचार्येव पर्वणीति। पर्वग्रहणं तिथ्यन्तराणि शास्त्रान्तरपर्युदस्तानि संगृह्णाति। तथा ऋतोराद्याश्चतस्रो रात्रीर्वर्जयेत्। हारीतस्तु चतुर्थ्यां गर्भाधानमिच्छति— 'चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भाधानवदुपेतो ब्रह्मगर्भं संदधाति' इति। ततश्च विहितप्रतिषिद्धत्वाच्चतुर्थ्यां स्त्र्युपगमनं वैकल्पिकम्। व्यवस्थितविकल्पश्चायम्। रजोनिवृत्तौ चतुर्थ्यां विधिः, तदनिवृत्तौ प्रतिषेधः। तथा च मनुः— 'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।' इति। साध्वी गर्भाधानादिविहितकर्मयोग्येत्यर्थः। † अप.

(४) कन्यार्थी तु अयुग्मासु। यदाह मनुः— 'युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु। तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम्॥'। ब्रह्मचार्येव पर्वणीति। अष्टमी चतुर्दशी पूर्णिमा अमावास्या रविसंक्रान्तिश्चेति पञ्च पर्वाणि पर्वानुष्ठेयप्रस्तावे दर्शितानि। तत्र ब्रह्मचार्येव, स्त्रियं नोपेयादित्यर्थः। पर्वग्रहणं च कालान्तरोपलक्षणार्थम्। आद्याश्चतस्र इति। रजोदर्शनादारभ्य चतस्रो रात्रीर्वर्जयेत्। तथा च पैठीनसिः— '(न) प्रथमे न द्वितीये न तृतीये न चतुर्थे आह्वयेत'। अन्ये त्वाहुः— स्नानादारभ्य चतस्रो वर्जयेत्, पूर्वे

---

(द्याश्चतस्रश्च विव); हमा. १२० तस्मिन् (तासु) पर्वा (पर्व) तस्रस्तु (तस्रश्च): १२१ पूर्ववत्, उत्त.; पमा. ४९७ विश्ववत्; मपा. ३४६ तस्मिन् (तासु); मर. १०९ पर्वा (पर्व) तस्रस्तु (तस्रश्च); गभा. १२२ हमावत्: १२३ मरवत्, उत्त.; गप. ४५२ येत् (यन्) शेषं मपावत्; आत. ४६१ हमावत्; संत. ९०८ मपावत्, पू.; संसौ. २८ पू.; मच. ३।५० तस्मिन् (तासु) तस्रस्तु (तस्रश्च); वीमि.; संप्र. १५२; आप्र. ५५९; चम. ३–४ विश्ववत्; मुक्ता. ७४ विश्ववत्: १५९ पू.; संम. १० विश्ववत्; आम. ८६; सिन्धु. ८१० पू.: ८१४ विश्ववत्, उत्त.; विपा. ९२ मचवत्: ३६८ (भागः २) मपावत्; संकौ. १६ विश्ववत्; संग. ३६८ मचवत्: ३७० विश्ववत्, उत्त.; पुम. ४३१ विश्ववत्; संर. ६६५ (=) प्रथमपादमात्रम्: ६८०,६८२ चार्येव (चर्ये च) स्रस्तु व (स्रो विव); संदी. १८६ (भागः २) विश्ववत्.

$ स्मृच., गृर., मपा., गभा., संदी. मितागतम्। संम. मितागतं अपगतं च। मर., आत., मुक्ता. अंशतो मितानुवादः।

† शेषं मितागतम्।

तस्याः स्पर्शननिषेधेनैव गमनस्यापि निषिद्धत्वादिति। तदयुक्तम्, स्पर्शनिषेधाद्धि स्पर्शात्प्रत्यवायः, गमननिषेधे तु तस्मादपीति फलभेदात्। अत एव रजस्वलास्पर्शे गमने च भिन्नं प्रायश्चित्तमाम्नातम्। 'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः। चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः॥' इति मनुवचनविरोधाच्च, स्नानादूर्ध्वं गर्हितरात्र्यसंभवात्। तथा च कात्यायनः – 'रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात्।'। अर्वाक् पुनर्गर्हिता रात्रयः संभवन्ति, 'शेषा ब्रह्महत्या स्त्रीणां यन्मासि मासि रजोदर्शनम्, यस्तावाज्ज जायते(?) सोऽभिशस्तः' इत्यादिभिर्वाक्यैर्गर्हाश्रवणात्। तस्माद्रजोदर्शनादारभ्य चतस्रो वर्ज्याः। 'आद्याश्चतस्रः' इत्युपलक्षणम्, एकादश्यां त्रयोदश्यामपि निषिद्धत्वात्। तथा च मनुः – 'आसामाद्याश्चतस्रस्तु निन्दितैकादशी तथा। त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः॥'। अत्रैकादशीत्रयोदश्यौ ऋतोः, न पक्षस्य।

¶ चका. ७२२–७२७

(५) अयुग्मासु स्त्रीजन्मभयादगमनम्, न तु प्रतिषेधात्। § पमा. ४९७

(६) गर्भधारणयोग्यो रजोयुक्तोऽवस्थाविशेषः स्त्रिया ऋतुः। *'युग्मासु गच्छेत्पुत्रार्थं कन्याऽयुग्मासु रात्रिषु।' इति मनुवचनात्। ब्रह्मचार्येव भवति ब्रह्मचर्यस्य फलं प्राप्नोति। पर्वाणि अमावास्यादीनि। आद्या रात्रीर्नोपगच्छेत्। यत्तु शङ्खवचनम्– 'शुद्धा भर्तुश्चतुर्थेऽह्नि अशुद्धा दैवपित्र्ययोः। दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति॥' इति, तच्छुश्रूषाविषयम्। उत्कृष्टलक्षण्यपुत्रार्थे तु चतुर्थरात्रिवर्जनम्। अत एव 'लक्षण्यं जनयेत्पुमान्' इत्युक्तम्। ऋतुकाले गन्तव्यमिति 'अग्निहोत्रं जुहोति' इतिवन्न विधिः, गमनस्य रागप्राप्तत्वात्। न च पञ्चनखभक्षणवत् परिसंख्या, स्वार्थहान्यस्वार्थपरिकल्पनरागप्राप्तबाधात्मकत्रिदोषदुष्टत्वात्। नियमस्तु 'समे देशे यजति' इतिवदिष्यत एव। ऋतावावश्यं गन्तव्यमित्यर्थः। रागतः पक्षे प्राप्तौ पक्षेऽप्राप्तौ विधिः। अत एवागमने दोषमाह यमः– 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः॥'। एतत् प्रथमपुत्रपर्यन्तम्, 'प्रजया पितृभ्यः' इति श्रुतेः। 'दशास्यां पुत्रानाधेहि' इति तु प्रशंसार्थः।

दीक.

(७) अत्रायुग्मरात्रित्यागो नाधर्महेतुः, किंतु पुत्रोत्पादनार्थ एव, पर्वत्यागस्तु अधर्महेतुतयैवेति शेयम्।

गप. ४५३

(८) स्त्रियः सेव्या इत्युक्तं तत्र विशेषमाह– षोडशेति। रजःसंबन्धाधिकरणाहोरात्रावधिकाः षोडश निशाः अहोरात्राणि स्त्रीणाम् ऋतुः गर्भप्रयोजकः समयविशेषः। इयं च स्मृतौ ऋतुशब्दस्य परिभाषा। अतः 'ऋतुः स्त्रीकुसुमेऽपि च' इति कोशविरोधो नाऽऽशङ्कनीयः। केचित्तु–स्त्रियाः कुसुमं यस्मिन् काले स स्त्रीकुसुमः इत्येव प्रकृतकोशार्थः। अत एव 'स्याद्रजः पुष्पमार्तवम्' इति संगच्छते। अन्यथा 'ऋतुः' इत्येव स्यात्। 'ऋतुमत्यप्युदक्याऽपि' इत्यत्र रजःसंबन्धविशेषवत्कालीयविलक्षणसंबन्ध एव मतुबर्थ इत्याहुः। पक्षद्वयेऽपि ऋतुमतीशब्द उदक्यापर्याय एवेत्यवधेयम्। तस्मिन् ऋतौ युग्मासु द्विचतुरादिषु समासु रात्रिषु संविशेत् पुत्रार्थी भार्यां गच्छेत्। तथा च मनुः– 'युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु। तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम्॥'। अत्र 'ऋतौ गच्छेत्' इति 'अग्निहोत्रं जुहोति' 'अष्टकाः कर्तव्याः' इतिवन्न विधिः, गमनस्य रागप्राप्तत्वात्। न च स्वर्गजनकत्वेनाप्राप्तत्वात्तथा विधिः, 'ऋतौ च गच्छन् विधिव(च्च जुह्व)न् ब्राह्मणश्च्यवते ब्रह्मलोकात्।' इति वसिष्ठवचनादिति वाच्यम्। (वक्ष्यमाण?) भट्टाचार्या यदाहुः– 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति कथ्यते॥' इत्यन्यत्र विस्तारः (?स्तरः)।

---

¶ शेषं मितागतम् अपगतं च।

§ शेषं मितागतम्।

* अत्रत्यः 'युग्मास्विति। पुत्रोत्पादनाभिप्रायेणैतत्' इत्यर्थको ग्रन्थ उच्छिन्न इत्युन्नीयते, मनुवचनस्य पूर्वोक्तर्तुलक्षणं प्रति हेतुत्वानुपपत्तेः।

नापि 'पञ्च पञ्चनखा भक्ष्याः' इतिवत् परिसंख्या, स्वार्थहानिपरार्थकल्पनाप्राप्तबाधात्मकदोषत्रयदुष्टत्वात् । किंतु नियमविधिः। स चोभयरूपः 'ऋतौ गच्छेदेव, ऋतावेव गच्छेत्' इति। तथा च यमः – 'भार्यामृतु( ? मृतु )मुखे यस्तु संनिधौ नोपगच्छति। पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते॥'। देवलः – 'यः स्वदारानृतुस्नातान् संनिधौ नोपगच्छति। भ्रूणहत्यामवाप्नोति गर्भं प्राप्य( ? प्राप्तं ) विनाश्य सः॥'। बौधायनः – 'ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति। तुल्यमाहुस्तयोर्दोषमनृतौ( ? मयोनौ ) यश्च गच्छति॥'। तत्र ऋतौ गच्छेदेवेति फलितं नियमं प्रतिप्रसूते–ब्रह्मचार्येवेति। पर्वाणि 'चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥' इति विष्णुपुराणपरिभाषितानि व्याप्य ब्रह्मचार्येव मैथुननिवृत्त एव स्यात्। 'कालाध्वनोरत्यन्तसंयोगे' (पासू. २।३।५) इति द्वितीया। क्वचित्तु पर्वणीति सप्तम्यन्तः पाठः। आद्याः पुष्पोद्गमदिनमारभ्य चतस्रश्च निशा वर्जयेत्। तुशब्दश्चार्थः। तेन 'पूर्णासु योषित् परिवर्जनीया योषिन्मघासूत्तरकृत्तिकासु। बुधे च योषां न समाचरेत' इत्यादिस्मृत्यन्तरादिव्युदस्तस्यात्र ( विशिष्यत इति पुनस्तस्य ? ) समुच्चयः। अत्र चतुर्थरात्रिनिषेध उत्कृष्टपुत्रोत्पत्त्यर्थिन एव। 'लक्षण्यं जनयेत् पुमान्' इति वक्ष्यति। अन्यस्य तु 'स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः।' इति भारतवचनात् 'चतुर्थीप्रभृत्युत्तरोत्तराम्' इत्यापस्तम्बवचनाच्चानिषेध इति स्मर्तव्यम्।

¶ वीमि.

(९) नाभिकमलीयशोणितप्रत्यक्षतादिनमारभ्य षोडशाहोरात्राणि गर्भधारणयोग्यः कालः ऋतुर्भवति। तत्र आद्याश्चतस्रो निशाः पर्वाणि वक्ष्यमाणानि अयुग्माश्च रात्रीर्वर्जयित्वा पुत्रार्थी संविशेत् ब्रह्मचारी ऋतुकालगमनात् प्राक् अकृततत्संसर्गः। तथा च आश्वलायनः – 'प्राग्रजोदर्शनात् पत्नीं नेयाद्गत्वा पतत्यधः। व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात्॥' इति। यत्तु मिताक्षरायाम् 'यत्र श्राद्धदिनादौ ब्रह्मचर्यं चोदितं तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलनदोषः' इति, तच्चिन्त्यम्, 'ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्जम्' इति गौतमवचनविरोधात्। प्रतिषिद्धं च श्राद्धदिनमृतावप्याश्वलायनेन– 'भोक्ष्यन् करिष्यन् वा श्राद्धं पूर्वरात्रौ प्रयत्नतः। व्यवायं भोजनं चैव ऋतावपि विवर्जयेत्॥ श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वाऽपि निमन्त्रितः। उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि॥' इति। 'ऋतुकाले नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित्। तत्र गच्छन् समाप्नोति ह्यनिष्टं महदेव तु॥' इति बृहन्मनुस्मरणविरोधाच्च। पित्रोर्मरणे यावत्संवत्सरमृतौ नोपेयादित्यप्याह आश्वलायनाचार्यः – 'दीक्षितस्तु महायज्ञैः पित्रोः प्राग्वत्सराद्द्विजः। नेयाद्भार्यां प्रयत्नेन ऋतावप्यर्थितो बुधः॥'। महायज्ञैर्ज्योतिष्टोमादिभिः दीक्षितः दीक्षासंस्कारवान् अवभृथं यावत् ऋतावपि स्त्रियं नोपेयात्। तथा पित्रोर्मरणदिनमारभ्य यावत्संवत्सरम्। तुशब्दश्चार्थः। माधवस्तु 'रात्रौ गच्छन् ब्रह्मचार्येव भवति' इति व्याचष्टे, 'प्राणं वा ते स्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते' इत्याथर्वणिकश्रुतेः। महाभारते त्वनृतुगमनपरिहारेण ऋतुगाम्येव ब्रह्मचारीत्युक्तम्– 'ऋतौ गच्छति यो भार्यामनृतौ नैव गच्छति। यावज्जीवं ब्रह्मचारी मुनिभिः परिकीर्तितः॥' इति। अनेन † 'ऋतावेव गच्छेत्, नान्यदा' इति परिसंख्यैव व्याख्याता भवति। अन्ये तु 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥' इत्यगमने दोषश्रवणान्नियमं व्याचक्षते। ऋतुश्च प्रथम एव, 'अथ ऋतुमत्याः प्राजापत्यमृतौ

---

¶ आप्र. वीमिगतम्।

† अत्र 'ऋतावेव गच्छेत्' इति वाक्यव्यक्तेः परिसंख्याविषयत्वमुक्तम्, 'ऋतौ गच्छेदेव' इति वाक्यव्यक्तेर्नियमविषयत्वं च द्योतितम्। मेधातिथ्यादयोऽप्येवम्। अनेनैव ग्रन्थकृता पूर्वत्र संगृहीतायां याज्ञवल्क्यटीकायां तु अपूर्वविधिपक्षं परिसंख्याविधिपक्षं च निरस्य नियमविधिपक्षं सिद्धान्तयित्वा नियमस्यैव 'ऋतावेव, गच्छेदेव' इत्युभयरूपताऽङ्गीकृता। माधवेनापि नियमस्यैवैवमुभयरूपता मनुव्याख्याने उक्ता।

प्रथमे' इत्याश्वलायनपरिशिष्टात्। तस्मिन्पुत्रार्थी युग्मासु समासु रात्रिषु संविशेत्, अयुग्मासु कन्यार्थी। निशाशब्दग्रहणाद्दिवसप्रतिषेधः।

$ संप्र. १५२–१५४

(१०) 'यत्र श्राद्धादिषु ब्रह्मचर्यं विहितं तत्राप्यृतौ गच्छतो न दोष इत्याह– ब्रह्मचार्येवेति' (इति) विज्ञानेश्वरः। वस्तुतस्तु 'ब्रह्मचर्यमेव तत् यद्रात्रौ संयुज्यन्ते' इति प्रागुदाहृताथर्वणश्रुतिस्थब्रह्मचर्यपदवदिदमपि अर्थवादमात्रमित्युचितम्। तथा च श्राद्धकर्तृभोक्त्रोर्ब्रह्मचर्यमृतावप्यावश्यकमिति प्रतिज्ञाय माधवाचार्यैर्वृद्धमनुवचनमुदाहृतम्– 'ऋतुकालं नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित्। तत्र गच्छन् समाप्नोति ह्यनिष्टफलमेव तु॥' इति। चम. ४

(११) एवं प्रकारेण गच्छतः श्राद्धादौ न ब्रह्मचर्यक्षतिदोष इति मिताक्षरायाम्। पञ्चदशदिनपर्यन्तं गमनाभावेऽन्यदिने च श्राद्धप्रसक्तौ तद्दिने गच्छतो दोषाभावपरमिति हेमाद्रिः। प्रमाणं त्वत्र चिन्त्यम्।

आम. ८६

(१२) इदं चर्तौ गमनमन्यकाले प्रतिबन्धादिना गमनासंभवे श्राद्धैकादश्यादावपि कार्यम्, 'ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्।' इति याज्ञवल्क्योक्तेः। व्याख्यातं चेदं मिताक्षरायाम्– 'यत्र श्राद्धादौ ब्रह्मचर्यं विहितं तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलनदोषः' इति। 'पर्वाणीति बहुत्वेनाष्टमीचतुर्दश्योर्ग्रहणम्' इति च। मदनरत्नेऽप्येवम्। यत्तु हेमाद्रौ शिवरहस्ये– 'दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती। श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोर्थी न च पर्वसु॥' इति, तदनृतुविषयम्, 'ब्रह्मचार्येव भवति यत्रतत्राऽऽश्रमे वसन्।' इति मनूक्तेः। दर्शादौ तु न भवत्येव, पर्वणां पर्युदस्तत्वात्। माधवीये तु 'ऋतुकालं नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित्। तत्र गच्छन् समाप्नोति ह्यनिष्टफलमेव तु॥' इति इति वृद्धमनूक्तेः श्राद्धे ब्रह्मचर्यं नियतमित्युक्तम्। पृथ्वीचन्द्रोदयेऽप्येवम्। एतत्सति संभवे ज्ञेयम्। सिन्धु. ८१४

(१३) अत्र तु संविशेदित्यस्य नियमविधित्वेऽपि 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥', तथा 'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥' अत्र 'संनिधौ' 'स्वस्थः' इत्यादिविशेषणबलात् समर्थः संनिहितः सन् यदि ऋतौ नोपगच्छति तदा दोषः, न त्वसंनिधानादाविति ज्ञेयम्। * विपा. ३६९ (भागः २)

(१४) यत्तु 'षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्। ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्॥' इत्येतद्व्याख्यावसरे मिताक्षराकारेणोक्तम् 'ऋतौ श्राद्धदिनेऽपि गच्छतो न ब्रह्मचर्यहानिः' इति, तत्षोडशदिनेषु तदितरकालासंभवविषयम्। संकौ. १६

(१५) यस्तु हेमाद्रौ शिवरहस्ये– 'दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती। श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोर्थी न च पर्वसु॥' इति श्राद्धदानभोजनदिवसे स्त्रीगमननिषेधः सोऽनृतुविषयः। दर्शादौ तु न भवत्येव, पर्वणां पर्युदस्तत्वात्। $ संर. ६८१

**'एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्।**
**सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत् पुमान्॥**

---

$ संग. संप्रगतं सिन्धुगतं च।

* शेषं संप्रगतम्।

$ शेषं मितानुवादः।

(१) यास्मृ. १।८०; विश्व. १।७९ मघां मूलं (मघामूलं) (मघापौष्णं) इतिपाठनिर्देशः; मिता. स्थ इन्दौ (स्थे चेन्दौ); अप.; गौमि. ५।१ पू.; उ. २।१।१७ पू.; स्मृच. १५; चका. ७२२; गृर. ४०३; पमा. ४९८ पू.; मपा. ३४७ त्पुत्रं लक्षण्यं (त्पुत्रलक्षणं); मर. ११० सुस्थ (स्वस्थ); गभा. १२३ उत्त.; गप. ४५२ मरवत्; आत. ४६४–४६५ सुस्थ (शस्त); संसौ. ३६; वीमि. सुस्थ (शस्त) इत्यपि पाठः; आप्र. ५६० आतवत्: ५६४ द्वितीयपादमात्रम्; चम. ५ (=) सुस्थ (स्वस्थ) त्पुत्रं (त्पूज्यं); मुक्ता. ७५ मघां मूलं (मघामूलं)

( १ ) किंचान्यत्– एवमिति । क्षामा दुर्बला रोगिणी वा । वन्ध्येत्यन्ये । यथाऽऽह भृगुः– 'अधिविन्नां तु यो भार्यामुपेयादप्यृतौ द्विजः । रक्षणार्थमकामश्चेत् प्राजापत्येन शुध्यति ॥' इति । तत्पुनः पुत्रार्थत्वादधिगमनस्यात्राप्रसक्तमेव । 'मघापौष्णं' च इत्यन्ते( ? न्ये) पठन्ति । तथा च गणितज्ञाः– 'प्रसवस्तु निषेकर्क्षात् दशमे योषितामुडौ । यस्मात्तं वर्जयेत् तस्माद्रेवतीषु मघासु च ।' इति । तत् पुनश्चशब्दादेव रेवत्यवाप्तेरकिंचित् । मूलमप्यश्विन्यादेर्गण्डान्तत्वात् वर्जनीयमेव । उपलक्षणार्थत्वाच्च मूलश्रुतेरन्यदपीदृक् परिहरणीयम्, प्रमाणान्तरमूलत्वाच्चास्य पुनर्वर्जनवचनस्य । किंच, सुस्थ इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान् । सकृदित्यस्य पूर्वश्लोकगतेन संबन्धः संविशेदित्यनेन । तथा चाऽऽह मनुः– 'निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयेत् । ब्रह्मचार्येव भवति यत्र तत्राऽऽश्रमे वसन् ॥' इति । षट् निन्द्याः आद्याश्चतस्रः एकादशी त्रयोदशी च । अष्टावन्या अनिन्द्याः । एवं चतुर्दश वर्ज्याः । शिष्टं रात्रिद्वयम् । तत्रैका स्त्र्यर्थेति मन्वभिप्रायः । आचार्यस्तु पुत्रोत्पादनमेव नैयोगिकं मन्यमानः सकृदित्याह । अत एव चतस्रश्चेत्ययमपि चकारो न राज्यन्तरार्थः । चतस्र इति प्रतिषेधोऽन्यदा वर्जनार्थः । अस्तु वैवं राज्यन्तरग्रहणार्थश्चकारोऽपि, अर्थातिरेकात् । एवं गच्छन् लक्षण्यं जनयेत् पुमान् स्त्रीतोऽतिरिक्तशुक्रः । तथा चाऽऽह मनुः– 'पुमान् पुंसोऽधिके शुक्रे' इति । सर्वथा शास्त्राबाधेन भिषग्दैवज्ञाद्युपदेशानुसारात् तथाऽभिगमनक्रिया यथा च लक्षण्यपुत्रोत्पादः स्यादिति श्लोकद्वयस्यार्थः । पुत्रमिति चोद्देश्यत्वादतन्त्रं संख्या । तथा च शङ्खः– 'पुत्रपौत्रप्रतिष्ठस्य बहुपत्यस्य जीवतः ।' इति । मन्त्रवर्णश्च 'अश्रुन्योपस्था जीवतामस्तु माता' इति बहुपुत्रतां दर्शयति, 'दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ।' इति च । युग्मराज्यादिवचनं तु लिङ्गविवक्षयेत्यदोषः ।

पूर्वश्लोकादेव च पुत्रार्थे स्त्रियः सेव्या इत्यृतावेव गमनप्राप्तेः सकृद्गमननियमपरतयैतच्छ्लोकद्वयमृतुगतराज्यन्तरनिवृत्तिफलं द्रष्टव्यम् । मानवं तु 'ऋतुकालाभिगामी स्यात्' इति व्रतेऽर्थे स्मर्यमाणणिनिप्रत्ययान्तत्वान्नियमपरतयैव व्याख्येयम् । श्लोकान्तरानुसारात्तु पुत्रार्थिनः सकृद्गमननियम इति व्याख्यातम् । एतेनैव वासिष्ठं व्याख्यातम्– 'ऋतुकालाभिगामी स्यात्' इति । फलश्रुतेश्च 'ऋतौ( च ) गच्छन्' इति, स्मृत्यन्तरानुसाराच्च युग्मायां रात्रौ सकृदिति व्याख्येयम् । गौतमीयं त्वनृतुपरिसंख्यार्थम् 'ऋतावुपेयात्' इति (इति) केचित्, ऋतावनृतौ वाऽर्थादेव गमनप्राप्तेः, सूत्रान्तरारम्भाच्च– 'सर्वत्र वा प्रतिषिद्धवर्जम्' इति । तथा सूत्रद्वयमप्यनर्थकं स्यात्, अर्थादेव विकल्पप्राप्तेः । तस्मात् तदपि नियमार्थमेव व्याख्येयम् । उत्तरसूत्रं त्वर्थप्राप्तमेवानृतौ गमनविकल्पमनूद्य प्रतिषिद्धवर्जमित्येवमर्थम् । अयं त्वत्र संप्रदायः– ऋतावजातपुत्रः सकृदगच्छन् प्रत्यवैति । जातपुत्रस्य त्वगमनेऽप्यदोषः । तथा चाऽऽहुः– 'ज्येष्ठ एव तु पुत्रः स्यात् कामजानितरान् विदुः ।' इति । यावदर्थं चैकैकपुत्रानुत्पादने प्रत्यवायः, तदपेक्षयैव पुत्रोत्पादनविधानात् । असवर्णासु तु जातपुत्रस्य याथाकाम्यम्, स्मृत्यन्तरात्– 'कृतदारो वरान् दारान् भिक्षित्वा योऽधिगच्छति । रतिमात्रं फलं तस्य द्रव्यदातुस्तु संततिः ॥' इति । अवरशब्दोऽयमसवर्णाभिप्रायः, सवर्णयैव कृतदारत्वात् । यथा चैतदेवं तयोक्तं प्राक् । जातूकर्ण्यश्चाऽऽह– 'सवर्णया कृतदारो नान्यामिच्छेत् संतानस्यान्यगामित्वात्' इति । नार्युत्पादने तु विकल्पः, रात्रिद्वयस्य मनुनोक्तत्वात्, अत्र च सकृच्छ्रुतेः । अनृतौ तु स्त्रीकामादेव गमनम्, 'सर्वत्र वा' इति सूत्रारम्भात् । ऋतावप्युक्तकालातिरेकेणानृतुतुल्यत्वात् स्त्र्यनुरोधेनैव गमनमिति स्थितिः ।

नन्वृतावपि स्त्रीकामादेव गमनं युक्तम्, कामात्मतानिषेधात्, मन्त्रवर्णाच्च– 'उतो त्वस्मै तन्वं विसस्रे

---

सुस्थ (स्वस्थ) ; संम. १० (=) ; सिन्धु. ८१२ पू. : ८१४ उत्त. ; विपा. ९२ आतवत् : ३६८–३६९ (भागः २) ; संको. १६ (=) पू. ; संग. ३७० उत्त. ; पुम. ४३१ ; संर. ६८३.

जायेव पत्य उशती सुवासाः ' इति । अप्येकस्मै वाक् विस्रब्धमात्मानमर्पयति जायेव पत्ये उशती कामयमाना सुवासाः ऋतुकालेष्विति स्त्रीकामादेव गमनप्रवृत्तिं दर्शयति । नैवम् । उभयनियमद्योतनार्थोऽयं मन्त्रवर्ण इति । विशेषेण पुत्रोत्पादनचोदना स्त्रीपुंसयोर्यतः । तथा च द्वयोरप्यगमने प्रत्यवायाम्नानम् । तथा चाऽऽह बौधायनः– ' ऋतुमतीं तु यो भार्यां संनिधौ नोपगच्छति । तस्या रजसि तं मासं पितरस्तस्य शेरते ॥ ', स्त्रियोऽपि ' भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम् । तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं निर्धमेद्गृहात् ॥ ' इति । तस्मादृतौ न स्त्रीकामादेव गमनं युक्तम् इत्येषा दिक् । विश्व.

( २ ) एवम् उक्तेन प्रकारेण स्त्रियं गच्छन् क्षामां गच्छेत् । क्षामता च तस्मिन् काले रजस्वलाव्रतेनैव भवति । अथ चेन्न भवति तदा कर्तव्या क्षामता पुत्रोत्पत्त्यर्थमल्पास्निग्धभोजनादिना, ' पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः(याः) । ' इति वचनात् । यदा युग्मायामपि रात्रौ शोणिताधिक्यं तदा स्त्र्येव भवति पुरुषाकृतिः, अयुग्मायामपि शुक्राधिक्ये पुमानेव भवति स्त्र्याकृतिः, कालस्य निमित्तत्वात् शुक्रशोणितयोश्चोपादानकारणत्वेन प्राबल्यात् । तस्मात् क्षामा कर्तव्या । मघामूलनक्षत्रे वर्जयेत् । चन्द्रे चैकादशादिशुभस्थानगते । * चकारात् पुंनक्षत्रशुभयोगलग्नादिसंपत्तौ । सकृदेकस्यां रात्रौ, न द्विस्त्रिर्वा । ततो लक्षणैर्युक्तं पुत्रं जनयति । पुमान् अप्रतिहतपुंस्त्वः । ‡ मिता.

( ३ ) चन्द्रसौस्थित्येन च ज्योतिःशास्त्रयुक्तं (शास्त्रोक्तं) पुत्रजन्मप्रदं तत्कालीनं ग्रहसंस्थानं लक्ष्यते । § अप.

* अस्माद्व्याख्यानात् ' सुस्थे चेन्दौ ' इति मितापाठो निर्णीयते, ' मूलं च ' इति निषेधवाक्यगतचकारस्यास्मिन्विधिवाक्येऽन्वयायोगात् ।

‡ चका., स्मृच., पमा., मपा., मर., दीक., चम., मुक्ता., संम., संकौ., कुभ., संर. मितागतम् । आप्र. मितागतं शूरगतं च ।

§ शेषं मितागतम् ।

( ४ ) सुस्थे बलवति । इन्दुग्रहणं शुभग्रहान्तरस्योपलक्षणम् । ‡ शूर. ४०३

( ५ ) मघां मूलं चेति गण्डलक्षणम् । स्वस्थ इन्दौ बलवति चन्द्रे । एतच्चान्यशुभग्रहोपलक्षणम् । एतत्प्रथमर्तुनिरूपणे वाच्यम् । ‡ गप. ४५२

( ६ ) सुस्थ इन्दाविति पुत्रजन्मप्रदग्रहसंस्थानां पुष्यनक्षत्रा( ? संस्थानपुंनक्षत्रा )द्युपलक्षकम् । ' शस्त इन्दौ ' इति पाठेऽप्ययमेवार्थः । ‡ वीमि.

अनृतावपि यथास्त्रीकामं गमनम्, स्वस्त्रीं प्रत्येव गमनम्

'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥

( १ ) एवं तावदृतौ गमनविधिमुक्त्वाऽथेदानीमर्थप्राप्तत्वात् गमनस्यानियमे प्राप्त आह– यथेति । अपिशब्दस्य क्रमभेदेन योजना– यथाकाम्यपि वा भवेत् । स्त्रीवत् कामो यस्य स यथाकामी, वचनाभावेऽपि यदृच्छया गमनस्य प्राप्तत्वात् । यद्वा यथाकामी अपि वा यथाकाम्येव स्यादित्यवधारणार्थो वाशब्दः । कस्मात् ? स्त्रीणां वरमनुस्मरन् । ' अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयीरन् ' इत्यादिवाक्यं सूचयति । स्त्रीकामादनृतावपि गच्छेदिति श्लोकार्थः । किंच, स्वदारनिरतश्चैव स्यात् । कुतः ? स्त्रियो रक्ष्या यतः स्मृताः । उक्तमेतत्– ' भर्तव्याश्च सुरक्षिताः ' इति । रक्षा च स्त्रीणां स्वदारनिरतत्वमेव परमार्थत्वेन, न तु ताडनादिका । तया तासामनर्थोऽपि संभाव्येत । तथा च

‡ शेषं मितागतम् ।

(१) यास्मृ. १।८१ ; विश्व. १।८० ; मिता. ; अप. ; गौमि. ५।२ (=) पृ. ; मनु. ३।४५ पृ. ; चका. ७२२ पृ. ; शूर. ४०३ पृ. ; पमा. ५०१ ; मर. १११ पृ. ; गप. ४५१ पृ. ; मच. ३।५० पृ. ; वीमि. ; आप्र. ५६० पृ. ; चम. ५ पृ. ; मुक्ता. ७४ ; संम. ११ पृ. ; आम. ८६ पृ. ; विपा. ९२ यतः स्मृताः ( प्रयत्नतः ) : ३७० ( भागः २ ) पृ. ; आन. ८८ पृ. : १४५ निरत ( निवृत ) ; कुभ. ८१० पृ. योगीश्वरोक्तिः ; संर. ६८७.

लौकिकाः 'पाञ्चालस्त्रीषु मार्दवम्' इति पठन्ति। चकार एवकारश्च पादपूरणार्थौ। यद्वोत्कृष्य 'स्त्रियो रक्ष्या एव यतः स्मृताः' इति योज्यम्। रक्षणविधिनैव स्वदारनिरतत्वनियमान्न विध्यन्तरापेक्षेत्यभिप्रायः। तथा च वसिष्ठः— 'या स्यादनतिचारेण रतिः सा धर्मसंश्रिता।' इति। मनुरप्याह— 'स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च। स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति॥' इति। 'प्रसूतिरक्षणमसंकरो धर्मः' (गौध. ८।३) इति च गौतमः। तेन रक्षणार्थं वरश्रुतेरनृतावपि स्त्रीकामादगच्छतो दोष इत्यनवद्यम्। 　　　　विश्व.

(२) एवमृतौ नियममुक्त्वा इदानीमनृतौ नियममाह— यथेति। भार्यया इच्छानतिक्रमेण प्रवृत्तिरस्यास्तीति यथाकामी भवेत्। वाशब्दो नियमान्तरपरिग्रहार्थः, न पूर्वनियमनिवृत्त्यर्थः। स्त्रीणां वरमिन्द्रदत्तमनुस्मरन् 'भवतीनां काममविहन्ता पातकी स्यात्' इति। यथा 'ता अब्रुवन् वरं वृणीमहा ऋत्विया प्रजां विन्दामहै काममा विजनितोः संभवामेति तस्मादृत्वियाः स्त्रियः प्रजां विन्दन्ते काममा विजनितोः संभवन्ति वारेवृतं ह्यासाम्' इति। अपि च स्वदारेष्वेव निरतः नितरां रतः तन्मनस्कः, भवेदित्यनुषज्यते। एवकारेण स्त्र्यन्तरगमनं निवर्तयति, प्रायश्चित्तस्मरणात्। उभयत्रापि दृष्टप्रयोजनमाह— स्त्रियो रक्ष्या यतः स्मृता इति। यस्मात् स्त्रियो रक्ष्याः स्मृताः उक्ताः 'कर्तव्याश्च सुरक्षिताः' इति। तत्र सुरक्षितत्वं यथाकामित्वेन स्त्र्यन्तरागमनेन च भवतीति।

अत्राऽऽह 'तस्मिन् युग्मासु संविशेत्' इति किमयं विधिः, नियमः, परिसंख्या वा? उच्यते। न तावद्विधिः, प्राप्तार्थत्वात्। नापि परिसंख्या, दोषत्रयसमासक्तेः। अतो नियमं प्रतिपेदिरे न्यायविदः। कः पुनरेषां भेदः? अत्यन्ताप्राप्तप्रापणं विधिः। यथा 'अग्निहोत्रं जुहुयात्' 'अष्टकाः कर्तव्याः' इति। पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः। यथा 'समे देशे यजेत' (इति)। 'दर्शपूर्णमासाभ्यां यजेत' इति यागः कर्तव्यतया विहितः। स च देशमन्तरेण कर्तुमशक्य इत्यर्थाद्देशः प्राप्तः। स च द्विविधः समो विषमश्चेति। यदा यजमानः समे यियक्षते तदा 'समे यजेत' इति वचनमुदास्ते, स्वार्थस्य प्राप्तत्वात्। यदा तु विषमे देशे यियक्षते तदा 'समे यजेत' इति स्वार्थे विधत्ते, स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृत्तिस्त्वार्थिकी। चोदितदेशेनैव यागनिष्पत्तेरचोदितदेशोपादानेन यथाशास्त्रं यागो नानुष्ठितः स्यादिति। तथा 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति। इदमपि स्मार्तमुदाहरणं पूर्वेण व्याख्यातम्। एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या। तद्यथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः पुनः 'अश्वाभिधानीमादत्ते' इत्यनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्याः निवर्तते। तथा 'पञ्च पञ्चनखा भक्ष्याः' इति। अत्र हि यदृच्छया शशादिषु श्वादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्तत इति। किं पुनरत्र युक्तम्? परिसंख्येत्याह। तथाहि— कृतदारसंग्रहस्य स्वेच्छयैवर्तौ गमनं प्राप्तमिति न विधेरयं विषयः। नापि नियमस्य, गृह्यस्मृतिविरोधात्। एवं हि स्मरन्ति गृह्यकाराः— 'दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यात्' इति। तत्र द्वादशरात्रात् संवत्सराद्वा पूर्वमेवर्तुसंभवे 'ऋतौ गच्छेदेव' इति नियमात् ब्रह्मचर्यस्मरणं बाध्येत। अपि च प्राप्ते भावार्थे वचनं विशेषणपरं युक्तम्। प्राप्तं चर्तौ भार्यागमनमिच्छयैव। अतः 'यदि गच्छेदृतावेव' इति वचनव्यक्तिर्युक्ता। किंच, नैयमिकात् पुत्रोत्पत्तिविधेरेव ऋतौ गमनं नित्यप्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात्। नियमे चादृष्टं कल्पनीयम्। किंच, ऋतौ गन्तव्यमेवेति नियमे असंनिहितस्य व्याध्यादिना असमर्थस्यानिच्छोश्चाशक्योऽर्थ उपदिष्टः स्यात्। विध्यनुवादविरोधश्च नियमे। तथाहि— एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षेऽनुवदति, पक्षेऽनुविधत्ते चेति। तस्मात् 'ऋतावेव गच्छेन्नान्यत्र' इति परिसंख्यैव युक्ता। तदिदं भारुचिविश्वरूपादयो नानु-

मन्यन्ते । अतो नियम एव युक्तः, पक्षे स्वार्थविधिसंभवात्, अगमने दोषश्रवणाच्च–'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥' इति । न च विध्यनुवादविरोधः, अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य । तत्र हि विध्यनुवादविरोधो यत्र विधेयावधितया तदेवानुवदितव्यम्, अप्राप्ततयाऽन्योद्देशेन विधातव्यं च । यथा वाजपेयाधिकरणपूर्वपक्षे 'वाजपेयेन स्वाराज्यकामो यजेत' इति वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवदितव्यः, स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति । न चानुवादेनेह कृत्यमस्ति । यत्तु नियमेऽदृष्टं कल्प्यमित्युक्तं तत् परिसंख्यायामपि समानम्, अनृतौ गच्छतो दोषकल्पनात् । यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति, तदसत् । स एवायं नैयमिकपुत्रोत्पादनविधिः । स्यान्मतम् 'एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेत्' इति स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति । तन्न । गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रदश्यते 'एवं गच्छन् लक्षण्यं पुत्रं जनयेत्' इत्यनेन । यथा 'अग्निहोत्रं जुह्वन् स्वर्गं भावयेत्' इति । न चासंनिहितादेरशक्यार्थविधिप्रसङ्गः, संनिहितशक्तयोरेवोपदेशात्, 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति ।' 'यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति ।' इति विशेषोपादानात् । अनिच्छनिवृत्तिस्तु नियमविधानादेव । न च विशेषणपरताऽपि, पक्षे भावार्थविधिसंभवात् । नापि गृह्यस्मृतिविरोधः । संवत्सरात्पूर्वमेवर्तुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषो यथा श्राद्धादिषु । तस्मात् स्वार्थहानि–परार्थकल्पना–प्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता । एवं 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः, शशादिषु श्वादिषु च प्राप्तेः परिसंख्येत्युभयसंभवस्तथाऽपि नियमपक्षे शशाद्यभक्षणे दोषप्रसङ्गः, श्वादिभक्षणे चादोषप्रसङ्गेन प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवाऽऽश्रिता । एतेन 'सायंप्रातर्द्विजातीनामशनं स्मृतिनोदितम् ।' इत्यत्रापि नियमो व्याख्यातः । 'नान्तरा भोजनं कुर्यात्' इति च पुनरुक्तं स्यात् परिसंख्यायाम् ।

एवं च नियमे सति ऋतावृताविति वीप्सा लभ्यते, 'निमित्तावृत्तौ नैमित्तिकमप्यावर्तते' इति न्यायात् । 'यथाकामी भवेत्' इत्ययमपि नियम एव 'अनृतावपि स्त्रीकामनायां सत्यां स्त्रियमभिरमयेदेव' इति । 'ऋतावुपेयात्, सर्वत्र वा प्रतिषिद्धवर्जम्' इत्येतदपि गौतमीयं सूत्रद्वयं नियमपरमेव 'ऋतावुपेयादेव, अनृतावपि स्त्रीकामनायां सत्यां प्रतिषिद्धवर्जमुपेयादेव' (इति,) इत्यलमतिप्रसङ्गेन । † मिता.

(३) वाशब्दोऽनृतुगमनं वैकल्पिकमाह । ततश्चागच्छतोऽपि स्त्रीरक्षणसामर्थ्ये यस्यासावृतावेव गच्छेत् । तस्य च फलातिशयं वसिष्ठ आह– 'ऋतौ च गच्छन् विधिवच्च जुह्वन् ब्राह्मणश्च्यवते ब्रह्मलोकात् ।' इति । इतरस्तु यथाकामी भवेत् । § अप.

(४) यथाकामीत्यनेन अनृतावपि स्त्रीणामिच्छानतिक्रमेण गच्छेदिति विधीयते । अत्र केचिदाहुः– "वाशब्दोऽनृतुगमनं वैकल्पिकमाह । ततश्चागच्छतोऽपि स्त्रीरक्षणसामर्थ्ये यस्यासावृतावेव गच्छेदिति । तथा च हेतुरुक्तः 'स्त्रियो रक्ष्या यतः स्मृताः" इति । तदयुक्तम् । यदि स्त्रीणामिच्छायां सत्यामपि न गमनं तदा 'यथाकामी भवेत्' इति विरुध्यते । वाशब्दः पूर्वोक्तर्तुगमनापेक्षया (विकल्पार्थः) । द्वैवे चार्थेन(?) हेतुवशात् व्यवस्था । 'स्त्रीणां वरमनुस्मरन्' इत्येतत्पर्यालोचनयाऽप्येवमेवावगम्यते । चक्रा. ७३०

(५) 'ऋतावेव गच्छेत्' इति नियमं प्रतिप्रसूयते– यथेति । काममनतिक्रम्य यथाकामं तदस्यास्तीति यथाकामी । एवं च स्त्रीणामिच्छामनतिक्रमन्ननृतावपि गच्छेदित्यर्थः । वाशब्दो यथाश्रुतनियमव्यवच्छेदे विरोधकारणमात्रे वा, न तु विकल्पे । अत्र हेतुगर्भविशेषणं स्त्रीणामित्यादि । वरमिन्द्रदत्तम् । तथा चेन्द्रं स्त्रियश्च प्रकृत्य

† दीक., गप., आप्र., संम., विपा., संर. मितागतम् ।

§ शेषं मितागतम् ।

तैत्तिरीयके श्रूयते— 'ता अब्रुवन् वरं वृणीमहै ऋत्वियाः प्रजां विन्दामहै काममा विजनितोः संभवामेति तस्मादृत्वियः स्त्रियः प्रजां विन्दन्ते काममा विजनितोः संभवन्ति वरं वृतं ह्यासाम्' इति। विजनितोरिति भावे तोसुन्। तेन आ प्रसवान्मिथुनीभवामेत्यर्थः। वसिष्ठश्च— 'विज्ञायते हि — इन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाधर्मसंबद्धोऽहमित्येवमात्मानममन्यत। तं सर्वाणि भूतान्यभ्यक्रोशन् भ्रूणहन् भ्रूणहन्निति। स स्त्रिय उपाधावत्, अस्यै मे ब्रह्महत्यायै तृतीयं भागं प्रतिगृह्णीतेति। ता अब्रुवन् किं नो भूयादिति। सोऽब्रवीत् वरं वृणीध्वमिति। ता अब्रुवन् ऋतौ प्रजां विन्दामह इति काममा विजनितोः संभवामेति। तथेति'। अनुस्मरन् प्रकृतार्थानुगुणतया विचारयन्। स्त्रियोऽपि ह्येतादृश्यो मैथुनार्थिन्यो यद्भ्रूणहत्याभागमपि तदर्थमङ्गीकृतवत्यः, तथा च तदसंपादयितारं पतिं प्रायेण व्यभिचरेयुरिति विचाराकारः। किंच, स्वदारनिरत एव भवेत्। स्वदारेष्वेव नितरां रतो मैथुनी स्यादित्यर्थः। स्वस्य भार्याव्यभिचारित्वे तस्या अपि स्वव्यभिचारस्य प्रायिकत्वादिति भावः। अत्र निशब्देन 'स्वदारानेव गच्छेत्' इति नियमप्रतिप्रसवः। तेन क्षेत्रजोत्पादनाय देवरदारगमनमनुजानीते।

एवं च 'मैथुनसंवर्धनीयरोगरहितत्वादिविशेषणविशिष्टः पर्वाद्यतिरिक्ते ऋतौ भार्यामुपगच्छेदेव' इति प्रथमनियमपर्यवसितार्थः। 'स्त्रिया इच्छाविरहे ऋत्वतिरिक्तसमये न गच्छेत्' इति द्वितीयनियमपर्यवसितार्थः। 'क्षेत्रजोत्पादनाप्रवृत्तः स्वदारानेव गच्छेत्' इति तृतीयनियमार्थः। केचित्तु 'स्त्रियाः सेच्छत्वेऽनृतावप्यवश्यं गच्छेत्' इति अनृतुगमने नियमं वर्णयन्ति। परे तु विकल्पार्थवाशब्दात् 'स्त्रियाः सकामत्वे अनृतावपि गच्छेत्, अन्यथाऽनृतौ न गच्छेत्' इति व्यवस्थामूरीकुर्वते। युग्मास्वित्यादि तु 'पुत्रकामः पुत्रेष्टिं निर्वपेत्' इतिवत्पुत्रार्थिनं प्रति विरोध( ? विधिः ) एवेति। इदं तु स्मर्तव्यम्— यदा युग्मायामपि रात्रौ रजस आधिक्यं तदा स्त्र्येव जायते, परंतु पुरुषाकृतिः। तथाऽयुग्मायामपि शुक्राधिक्ये पुमानेव जायते, परंतु स्त्र्याकृतिः, 'पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः(? याः)।' इति वचनात्, युग्मनिशादिरूपपुत्रनिमित्तकारणापेक्षया तदुपादानशुक्रशोणितयोः प्राबल्यात्। अत एव शुक्रशोणितयोः साम्ये युग्मास्वयुग्मासु च नपुंसक एव जायते। अत एव च पुत्रार्थिनं प्रति युग्मास्वित्युक्त्वाऽपि क्षामामित्यधिकमुक्तम्। अत एव च पुमानित्युक्तम्, पुत्रजननौपयिकशुक्राधिक्यबोधकतयैव तस्य सार्थकत्वात्। न चैवं युग्माद्यनुसरणनैरर्थक्यमाशङ्क्यम्, स्त्र्याकृतिपुत्रव्यवच्छेदकत्वात्। अत एवोक्तं 'लक्षण्यं जनयेत्' इति। एवं च कन्यादानजन्यस्वर्गविशेषार्थितया कन्योत्पत्तिकामं प्रति अयुग्मासु पुष्टां गच्छेदित्यपि विधिरूह्य इत्यास्तां विस्तरः।

यथाकामित्वे स्वदारनिरतत्वे चोभयत्र हेतुमाह— स्त्रिय इत्यादि। रक्ष्याः स्मृताः 'कर्तव्याश्च सुरक्षिताः' इति अत्रैव, 'सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।' इति मन्वादौ चोक्ताः। वस्तुतस्तु 'स्वदारनिरतः स्वदारेषु निरतान्तरः अनृतावपि रतिशीलो भवेदिति प्रतिप्रसवः। तं विशिनष्टि—यथाकामीति। तत्र हेतुः— स्त्रियो रक्ष्या इति कथितः' इति तत्त्वम्।

बीमि.

## बृहस्पतिः

ऋतुगमनमावश्यकम्, अनृतावपि गमनानुज्ञा

'ऋतुकालाभिगमनं पुंसा कार्यं प्रयत्नतः।
सदैव वा पर्ववर्जं स्त्रीणामभिमतं हि तत्॥

(१) 'ऋतुकालाभिगमनम्' इत्यत्र केचिदेवमाचक्षते— अजातपुत्रस्यैवैष नियमः, न तु जातपुत्रस्येति। उपपादयन्ति च— तत्र कूर्मपुराणे— 'ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते।' इति।

(१) चका. ७३१ कालाभि ( कालेऽभि ) वा पर्ववर्जं ( पर्ववर्जं च ) देवलः; पमा. ५०१; मर. १११; उत. १४७; मुक्ता. ७४ वर्जं ( वर्ज्यं ); संर. ६८७ पुंसा ( पुंभिः ) शेषं मुक्तावत्.

ऋणापाकरणार्थं हि पुत्रोत्पादनम् । तथा च श्रुतिः– 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः, एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इति । मन्त्रवर्णोऽपि– 'ऋणमस्मिन् संनयति अमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥' इति । तदेतदृणापाकरणमेकपुत्रोत्पादनेन संपद्यते, तावताऽपि पुत्रित्वसिद्धेः । तथा च मनुः– 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात् सर्वमर्हति ॥ यस्मिन्नृणं संनयति येन चाऽऽनन्त्यमश्नुते । स एव धर्मजः पुत्रः कामजानितरान् विदुः ॥' इति । ननु बहुपुत्रत्वमपि क्वचिच्छ्रूयते– 'इमां त्वमिन्द्रमीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ॥' इति, 'क्रीडन्तौ पुत्रैः' इति, 'रयिं च पुत्रांश्चादात्' इति च । सत्यम् । नायं विधिः, किंतु बह्वपत्यप्रशंसा । तस्मादजातपुत्रस्यैवायमृतुगमननियम इति ।

तदपरे न क्षमन्ते । यद्यपि पुत्रित्वमानृण्यं चैकेनैव पुत्रेण संपद्यते, तथाऽप्यस्ति बहुपुत्रत्वविधिः, 'एतमु एवाहमभ्यगाशिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच, रश्मींस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्ति' इति छन्दोगैराम्नानात् । तस्य चायमर्थः– कौषीतकिनाम मुनिः स्वयमादित्यमण्डलमेकमेवोपासीन उद्गानं कृत्वा तत्फलत्वेन पुत्रमेकं प्रतिलभ्य तमुवाच– 'अहमेतमेकमेवाऽऽदित्यं ध्यायन् गानमकार्षम्, तस्माद्दोषान्मम त्वमेक एव पुत्रोऽसि, एकपुत्रत्वं च न प्रशस्तम्, अतस्त्वं बहुपुत्रतायै रश्मीन् बहूनुपास्तिवेलायामावर्तय' इति । महाभारतेऽपि– 'अपत्यं तु ममैवैकं कुले महति भारत । * अपुत्रं चैकपुत्रत्वमित्याहुर्धर्मवादिनः ॥ चक्षुरेकं च पुत्रश्च अस्ति नास्तीति भारत । चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥ अनित्यता च मर्त्यानां मत्वा शोचामि पुत्रक । संतानस्याविनाशं तु कामये भद्रमस्तु ते ॥' इति ।

ननु ज्येष्ठेनैव पुत्रेणानृण्यसिद्धेर्निरर्थकं पुत्रान्तरोत्पादनम् । तन्न, सर्वेषां पुत्राणामानृण्यहेतुत्वात् । न हि पुत्रजननमात्रेण पितुरानृण्यम्, किं तर्हि ? सम्यगनुशिष्टेन पुत्रेण शास्त्रीयेषु कर्मस्वनुष्ठितेषु पश्चादानृण्यं संपद्यते । अत एव वाजसनेयिब्राह्मणे पुत्रानुशासनविधिः समाम्नातः– 'तस्मात् पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति यदनेन किंचिदक्ष्णया कृतं भवति तस्मादेनमेनसः सर्वस्मात् पुत्रो मोचयति तस्मात् पुत्रो नाम पुत्रेणैवास्मिंल्लोके प्रतितिष्ठति' इति । अस्यायमर्थः– अस्ति किंचित् संप्रतिपत्तिनामकं कर्म । यदा पितुर्मरणावसरो भवति, तदा पुत्रमाहूय वेदाध्ययने यज्ञे लौकिकव्यापारे च यद्यत्कर्तव्यजातं तस्य सर्वस्य पुत्रे संप्रदानं कर्तव्यम् । सेयं संप्रतिपत्तिः । तस्यां च संप्रतिपत्तौ यस्मादनुशिष्ट एव पुत्रोऽधिकारी तस्मादनुशिष्टं पुत्रं परलोकहितमाहुः शास्त्रज्ञाः । अत एव पुत्रानुशासनं कुर्युः पितरः । स चानुशिष्टः पुत्रः यत्किंचित् स्वपित्रा शास्त्रीयं कर्म अक्ष्णया वक्रत्वेन शास्त्रवैपरीत्येन कृतं भवति तस्मात् सर्वस्मात् पापादेनं स्वपितरं स्वयं शास्त्रीयं कर्म सम्यगनुतिष्ठन्मोचयति । तस्मात् पुंनाम्नो नरकात् त्रायते इति व्युत्पत्त्या पुत्रो नाम । स च पिता स्वयं मृतः पुत्रशरीरेणैवास्मिन् लोके यथाशास्त्रं कर्म कुर्वन् अनु( ? प्रति )तिष्ठति इति । एवं सति बहूनां मध्ये यथावदनुशासनं प्रज्ञामान्द्यादिप्रतिबन्धबाहुल्यात् कस्यचिदेव संपद्यते । अनुशिष्टेष्वपि बहुषु यथावदनुष्ठानं कस्यचिदेव । अतो ज्येष्ठः कनिष्ठो वा यस्तादृशः स एवाऽऽनृण्यहेतुः । अत एव पुराणेऽभिहितम्– 'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।' इति । 'दशास्यां पुत्रानाधेहि' इत्यादिमन्त्राश्चैवं सति बहुपुत्रत्वविधिमुपोद्बलयन्ति । यत्तु 'कामजानितरान्' इत्युदाहृतम्, तदननुशिष्टविषयम् । तस्मात् जातपुत्रोऽप्यृतावुपेयादेव ।

पमा. ५०१–५०४

(२) पर्वग्रहणं निषिद्धकालान्तरस्याप्युपलक्षणम् ।

मर. १११

---

* अर्थाभावार्थेऽव्ययीभावः ।

ऋतुकालः, वर्ज्यदिनानि, चतुर्थे गमनागमनव्यवस्था, ऋतुगमनाभावे प्रायश्चित्तम्

[1]निशाषोडशकं नारी संज्ञितर्तुमती सदा।
तावद्योग्या प्रजास्थाने विनाऽऽद्याह्नचतुष्टयम्॥

[2]ऋतोराद्याश्चतस्रश्च तस्मादेकादशीतिथिम्।
त्रयोदशीं त्यजेदेता गमनेऽनिष्टदाः स्मृताः॥

गमने पत्नीगमने। संसौ. ३०

चतुर्थेऽहनि यत् प्रोक्तं गमनं देवलादिभिः।
रजोनिवृत्तौ द्रष्टव्यं प्रशस्तास्वपि रात्रिषु॥

अल्पबीजं दिवाक्लीबं प्रसूयाद्यो दिवा व्रजेत्।
आहतुः शङ्खलिखितौ जायेताल्पायुरेव सः॥

¶[3]आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि।
ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत्॥

ऋतुरत्र स्नानदिनमारभ्य त्रयोदश दिनानि पञ्चमदिनमारभ्य द्वादश दिनानि वा। संर. ६८५

[4]ऋतौ च मैथुनं धर्म्यं पुत्रोत्पत्तिनिमित्ततः।
स्वर्गं प्राप्नोति नैवं तु प्रत्यवायेन युज्यते॥

गमनोत्तरशुद्धिः, पुंबीजाधिक्ये पुत्रोत्पत्तिः, पुंसो वृष्याद्याहारः स्त्रिया लघ्वाहारश्च पुंबीजाधिक्यहेतुः

[5]मैथुने कटधूमे च सद्यः स्नानं विधीयते।
अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत्॥

[1]स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान् पुंसोऽधिके भवेत्।
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत्।
लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत् सुतम्॥

वृष्यं वीर्यवर्धनं द्रव्यम्। § स्मृच. १५

## व्यासः

ऋतुकालः, वर्ज्या रात्रयः, ऋतुगमननियमः तेन ब्रह्मचर्याबाधश्च, स्त्रीपुंसयोर्व्यभिचारनिषेधः, चतुर्थादिदिवसगमनोत्पन्नपुत्रकन्यालक्षणानि, अगमननिमित्ता भार्यावस्थाः, गमनकर्तृधर्माः, प्रवासादिनिमित्तेषु ऋतावगमनेऽनृतौ गमने च दोषाभावः

[2]रजोदर्शनतो याः स्यू रात्रयः षोडशर्तवः।
ततः पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति॥
चतस्रश्चाऽऽदिमा रात्रीः पर्ववच्च विवर्जयेत्।
गच्छेद्युग्मास्वयं मुक्त्वा पौष्णपित्र्यर्क्षराक्षसान्॥

प्रच्छादितादित्यपथे पुमान्गच्छेत्स्वयोषिति।
क्षामाऽलंकृदवाप्नोति पुत्रं पूजितलक्षणम्॥
ऋतुकालाभिगाम्येवं ब्रह्मचार्येव धर्मतः।
गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यहृत्॥
भ्रूणहत्यामवाप्नोति ऋतौ भार्यापराङ्मुखः।
सा त्ववाप्यान्यतो गर्भं त्याज्या भवति पापिनी॥

---

¶ अस्य पमाव्याख्यानं गपव्याख्यानं च 'यः स्वदारानृतु०' इति देवलवचनव्याख्याने द्रष्टव्यम्।

(१) प्रपा. १०५ सदा (तु सा); संप्र. १५६; संग. ३७० वीरमित्रोदये.

(२) संसौ. ३०.

(३) पमा. ३५ (खण्डः २ भागः १) उत्त.; गप. ४५६ द्यो भार्यां (द्भार्यां यः) उत्त.; कृम. ८१६; संर. ६१२ द्यो भार्यां (द्भार्यां वा), ६८५.

(४) मवि. ५।५६.

(५) मिता. ३।३० ; अप. ३।२९ पृ. ९२२.

§ संप्र., मुक्ता., संग. स्मृचवत्।

(१) अप. १।८० पृ. १०६ विवृ (प्रवृ); स्मृच. १५; पमा. ४९९ वृष्यं स्निग्धं (स्निग्धं हृद्यं); मर. ११०–१११; गप. ४६७ भक्ष (भोज) द्वितीयार्धमात्रम्; संप्र. १६०; चम. ५ वृष्यं स्निग्धं च भक्ष (स्निग्धं भक्ष्यं प्रकल्प); मुक्ता. ७५; संकौ. १६ शुक्रेऽधि (शुक्राधि) वृष्यं स्निग्धं (स्निग्धं भक्ष्यं); बाल. १।८० पृ. २२२ चमवत्; संग. ३७१; कृम. ८१२ तृतीयार्धमात्रम्; संर. ६८३ चमवत्.

(२) व्यास्मृ. २।४२–४६.

[1]चतुर्थे सा न गम्याऽहि गताऽल्पायुः प्रसूयते ॥
[2]रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः ।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ॥
[3]सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः ।
नवम्यां सुभगा नारी दशम्यां चतुरः पुमान् ॥
[4]एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां सुता तस्य वर्णसंकरकारिणी ।
जायते सर्वदुष्टा स्त्री दुःखशोकभयप्रदा ॥

(१) पमा. ५०४ ; बाल. १।७९ पृ. २२१ ( चतुर्थे सा न गन्तव्या ) एतावदेव.

(२) स्मृच. १४ ; चका. ७२२ ; मर. ११० ; गभा. १२३; गप. ४५४ (=) धन (गुण) ; संसौ. ३१ ; संप्र. १५५ ; मुक्ता. ७५ ; सिन्धु. ८१३ ; संकौ. १६ ; बाल. १।७९ पृ. २२१ पृ. ; संग. ३६९ ; संव. ४९ ; पुम. ४३१.

(३) स्मृच. १४ नारी ( दारा ) चतुरः ( च वरः ) ; चका. ७२२ सुतः ( पुमान् ) चतुरः पुमान् ( प्रवरः सुतः ) ; मर. ११० सुतः ( पुमान् ) सुभगा नारी (मध्यमा योषिद् ) चतुरः पुमान् (पण्डितः सुतः); गभा. १२३ चकावत् ; गप ४५४ (=) सुभगा (शुभगा) चतुरः ( प्रवरः ) ; संसौ. ३१ सुभगा नारी ( शुभगा दारा ) ; संप्र. १५५ ; मुक्ता. ७५ नारी ( दारा ) चतुरः ( च परः ) ; सिन्धु. ८१३ चकावत् ; संकौ. १६ ; संग. ३६९ ; संव. ४९ चकावत् ; पुम. ४३१ सुतः (पुमान्) सुभगा नारी ( मध्यमा योषिद् ) चतुरः ( पण्डितः ).

(४) स्मृच. १४ धर्मा ( धर्म्या ) तृतीयार्धं नास्ति ; चका. ७२३ सुता तस्य ( शठा पापा ) ; मर. ११० सर्वं स्मृचवत् ; गभा. १२३ तस्य ( पापा ) तृतीयार्धं नास्ति ; गप. ४५४ (=) सुता तस्य वर्ण ( सपापा स्त्री धर्म ) तृतीयार्धं नास्ति ; संसौ. ३१ तृतीयार्धं नास्ति ; संप्र. १५५ संसौवत् ; मुक्ता. ७५ तस्य व ( लोकव ) शेषं सर्वं स्मृचवत् ; सिन्धु. ८१३ सर्वं गभावत् ; संकौ. १६ संसौवत् ; संग. ३६९ संसौवत् ; संव. ४९ सर्वं गभावत् ; पुम. ४३१ तस्य व ( च स्याद ) शेषं सर्वं स्मृचवत् .

[1]धर्मध्वजः कृतज्ञः स्यादात्मवेदी दृढव्रतः ।
प्रजायते चतुर्दश्यां गुणौघैर्जगतीपतिः ॥
[2]राजपत्नी महाभागा राजवंशगताऽथवा ।
जायते पञ्चदश्यां तु बहुपुत्रा पतिव्रता ॥
[3]विद्यालक्षणसंपूर्णः सत्यवादी जितेन्द्रियः ।
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥
[4]नास्नातां तु स्त्रियं गच्छेन्नाऽऽतुरां न रजस्वलाम् ।
नोपेयाद्गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः ॥

(१) स्मृच. १४ ; चका. ७२३ चतुर्थपादे ( गुणाढ्यैर्जगतः पतिः ) ; मर. ११० कृतज्ञः ( कृतघ्नः ) चतुर्थपादे ( गुणाढ्यो जगतः पतिः ) ; गभा. १२३ ध्वजः ( श्मश्रु ) ज्ञः स्यादा ( श्मश्रु आ ) चतुर्थपादे ( पञ्चदश्यां पतिव्रता ) ; गप. ४५४ (=) ध्वजः ( ध्वजी ) ज्ञः स्यादा ( श्मश्रु आ ) चतुर्थपादे ( गुणौघैरन्वितः सुतः ) ; संसौ. ३१ जगती ( जगतः ) ; संप्र. १५५ ; मुक्ता. ७५ ध्वजः ( विच्च ) वेदी ( वेत्ता ) ; सिन्धु. ८१३ गभावत् ; संकौ. १६ ध्वजः ( श्मश्रु ) ज्ञः स्यादा ( श्मश्रु आ) ; संग. ३६९ पूर्वोत्तरार्धे व्यत्यासेन पठिते ; संव. ८९ गभावत् ; पुम. ४३१ चतुर्थपादे ( गुणाढ्यो जगतः प्रभुः ).

(२) स्मृच. १५ ; चका. ७२३ पत्नी ( पुत्री ) राजवंशगता ( सा राजवशगा ) ; मर. ११० राजवंशगता ( सा राजवशगा ) ; गप. ४५४ ( = ) उत्त. ; संसौ. ३२ मरवत् ; संप्र. १५५ ताऽथवा ( ता तथा ) ; मुक्ता. ७५ भागा ( भोगा ) ; संकौ. १६ संप्रवत् ; संग. ३६९ संप्रवत् ; पुम. ४३१ द्वितीयपादे ( सारा धनवती तु वा ).

(३) स्मृच. १५ पूर्णः ( पन्नः ) ; चका. ७२३ ; मर. ११० ; गभा. १२३ उत्त. ; गप. ४५४-४५५(=) विद्या ( विद्वान् ) पुमान् ( सुतः ) ; संसौ. ३२ ; संप्र. १५५ ; मुक्ता. ७५ षोडश्यां ( षोडशे ) पूर्णः ( पन्नः ) ; सिन्धु. ८१३ उत्त. ; संकौ. १६ ; संग. ३६९ ; संव. ४९ उत्त. ; पुम. ४३१ स्मृचवत् .

(४) मुक्ता. ७७ गच्छेन्नाऽऽ( गच्छेदा ) ; संर. ६८७ पृ.

'नामिष्टां न प्रकुपितां नाप्रशस्तां न रोगिणीम्।
नादक्षिणां नान्यकामां नाकामां नान्ययोषितम्॥

छद्मवत्त्वादिदोषरहिता प्रशस्ता, न प्रशस्ता अप्रशस्ता, तां वर्जयेदित्यर्थः। संर. ६८७

'क्षुत्क्षामां नातिभुक्तां वा स्वयं चैतैर्गुणैर्युतः।
स्नातः स्रग्गन्धधृक् प्रीतो व्यवायं पुरुषो व्रजेत्॥

'व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु।
ऋतुकालेऽपि नारीणां भ्रूणहत्या प्रमुच्यते॥

(१) भ्रूणहत्या भ्रूणहननेन। ¶ मर. १११

(२) नारीणामृतौ प्रवासादिगते पत्यौ अगमनेऽपि भ्रूणहत्या न भवतीत्यर्थः। एतदजातपुत्रविषयम्, 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा स्यात्' इति श्रुतेः। संप्र. १६३

(३) ऋतुकाल इत्यनन्तरमगमन इति शेषः। संर. ६८६

'वृद्धां वन्ध्यामसद्वृत्तां मृतापत्यामपुष्पिणीम्।
कन्यासूं बहुपुत्रां च वर्जयन्मुच्यते भयात्॥

(१) वृद्धां गतरजस्काम्। सिन्धु. ८१७

(२) वृद्धा सरजस्काऽपि गर्भधारणादावशक्ता, न तु गतरजस्का, अपुष्पिणीमित्यस्य पौनरुक्त्यापत्तेः। संकौ. १७

(३) वृद्धां सरजस्कामपि अशक्तां गर्भधारणे। पुष्पिणी ऋतुमती, तदन्या अपुष्पिणी। अप्राप्तार्तवा गतार्तवा च गमनेऽनेन निषिध्यते। बहुपुत्रवतीमित्यत्र बहुपुत्रशब्देनैकादश(त्व)प्रभृतिरेव संख्या ग्राह्या, 'दशास्यां पुत्रानाधेहि' इति लिङ्गात्। संर. ६८७

'परदारान्न गच्छेत्तु मनसाऽपि कथंचन।
परदाररतिः पुंसामुभयत्रापि भीतिदा।
इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत्॥

'अनृतावृतुकाले वा दिवा रात्रावथापि वा।
प्रोषितस्तु स्त्रियं गच्छेत् प्रायश्चित्ती भवेन्न च॥

## देवलः

ऋतुगमनेन ब्रह्मचर्याबाधः, अशुद्धिकाले गमननिषेधः, वर्णानुक्रमेण ऋतावपि गमनार्हकालसंकोचः, ऋतुगमनाभावे दोषः, अनेकभार्यत्वेयौगपद्ये गमनव्यवस्था, ऋतुसंगूहने स्त्रिया ऋतुगमनाभावदोषादधिको दोषः

'स्त्रीणां तु प्रेक्षणात् स्पर्शात्ताभिः संकथनादपि।
निष्यन्दते ब्रह्मचर्यं न दारेष्वृतुसंगमात्॥

---

¶ मुक्ता. मरवत्।

(१) मुक्ता. ७७ नाप्रशस्तां (न सशक्तां); संर. ६८७ रोगि (गर्भि) पू.

(२) मुक्ता. ७७.

(३) पमा. ५०५; मर. १११ लेऽपि (ले तु); गभा. १२३ मदनरत्ने; संप्र. १६३ तो बन्धनस्थो (ते बन्धनस्थे) लेऽपि (लेषु); मुक्ता. ७६ लेऽपि (लेषु); सिन्धु. ८१६; बाल. १।८१ पृ. २२६; संग. ३७४ मदनरत्ने; संर ६८६ प्रमुच्य (न युज्य) शेषं मरवत्.

(४) पमा. ५०५ सद्वृत्तां (वृत्तां च) पुष्पिणीम् (पुष्पिताम्) कन्यासूं (कन्यां च); मर. १११ कन्यासूं (कन्यां च); गभा. १२३ मरवत्, मदनरत्ने; सिन्धु. ८१७ वर्जय (वर्जये); संकौ. १७ सिन्धुवत्; संग. ३७४ सद्वृत्तां (संवृत्तां) शेषं मरवत् सिन्धुवच्च, मदनरत्ने; संर. ६८७ उत्तरार्धे (बहुपुत्रवतीं चैव गमने परिवर्जयेत्॥).

(१) मुक्ता. ७६.

(२) संप्र. १५४; मुक्ता. ७६ रात्राव (रात्रौ त) त्ती भवेन्न (त्तीयते न); आन. ८८ प्रोषितस्तु (प्रोष्याऽऽगतः) शेषं मुक्तावत्; संग ३६९.

(३) अप. १।१५४ पृ. १९९ गमात् (क्रमात्); स्मृच. ३५५; आत. ४६३ तु प्रेक्ष (संप्रेक्ष) तृतीयपादे (ब्रह्मचर्यं विपद्येत) वृद्धशातातपः; आम. ८६ (=) द्वितीयतृतीयपादयोः (हास्यशृङ्गारभाषणात्। स्पन्दते ब्रह्मचर्यं च).

(१) अत्रायमर्थः— स्त्रीणां परस्त्रीणां वीक्षणात् स्वभावेन(? समावेन) चित्तेनेत्यर्थः। ताभिः अन्यस्त्रीभिरेव संकथनात् संयोगप्रलापाच्च(? स्पर्शात् संयोगात् संकथनात् प्रलापाच्च) ब्रह्मचर्यं दशम्याद्युपवासनिमित्तं निष्यन्दते नश्यतीत्यर्थः। न दारेष्वृतुसंक्रमादिति। दारेषु वीक्षणात् स्पर्शात् संकथनात् स्वगृहव्यवहारकथाप्रपञ्चाच्च तद्ब्रह्मचर्यं न नश्यति। तथा ऋतुसंक्रमात्। संक्रमणं संतानोत्पादनार्थं संभोगः। ऋतोः(? तौ) संक्रमः। तस्मादपि व्रतादौ सेव्यमानात् ब्रह्मचर्यं न निष्यन्दते न नश्यतीति। स्वदारेषु वीक्षणादेर्ब्रह्मचर्यनिष्यन्दाभाव उपवासेष्वसिधाराव्रतनिमित्तत्वादिति।

अप. १।१५४ पृ. १९९

(२) संप्रेक्षणादित्यत्र संशब्दः कामार्थः।

आत. ४६३

'अशुद्धदिवसेष्वेतां मैथुनार्थं यदि व्रजेत्।
आयुः प्रज्ञा च धर्मश्च तस्य पुंसः प्रहीयते॥
'तस्मात्त्रिरात्रं चाण्डालीं पुष्पितां परिवर्जयेत्।
अवेक्षेत च तां नित्यं रथ्याभस्मनिषेवणैः॥

अवेक्षेत रक्षेत। रथ्याभस्मनिषेवणैरित्यत्राध्याहृतोत्सुकशब्दयोगात् 'प्रसितोत्सुकाभ्यां च' इति तृतीया। तेन रथ्याभस्मनिषेवणैरौत्सुक्यं निवारयेदित्यर्थः।

गृर. ४०२

'ब्राह्मण्या द्वादशाहं स्याद्वेषोक्ता ऋतुधारणा।
दशाष्टौ षट् च शेषाणां विधीयन्तेऽनुपूर्वशः॥

(१) इदं च ब्राह्मण्यादीनां द्वादशादिऋतुधारणवचनं गम्यत्वाभिप्रायम्, न ऋतुकालाभिप्रायम्, 'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः।' इति मनुवचनविरोधात्।

चका. ७२७

(२) ऋतावपि जातिभेदेनोपगमनकालसंकोचमाह देवलः— ब्राह्मण्या इति। पञ्चमदिवसमारभ्य द्वादशाहादिसंख्याऽवगन्तव्या।

पमा. ५०४

'एतेष्वपि त्र्यहं पूर्वं वर्जयित्वा रजस्वलाम्।
शुद्धां स्नातां ततो भार्यां समेयुः पुत्रकारणात्॥
'यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति।
भ्रूणहत्यामवाप्नोति गर्भं प्राप्तं विनाश्य सः॥

(१) सुस्थः रोगादिशून्यः। † गृर. ४०१

(२) अत्र चोद्येयं यत् प्रायश्चित्तं तत् बृहस्पतिर्दर्शयति— 'ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत्।' इति। बौधायनोऽपि— 'ऋतौ न गच्छेद्यो भार्यां नियतां धर्मचारिणीम्। नियमातिक्रमे तस्य प्राणायामशतं स्मृतम्॥' (बौध. ४।१।२३) इति। न चात्र प्रायश्चित्तद्वयस्य समविकल्पः शङ्कनीयः, प्राणायामशतस्य अर्धकृच्छ्रप्रत्याम्नायत्वेनानुकल्पत्वात्।

पमा. ३४–३५ (खण्डः २ भागः १)

---

(१) चका. ७२६ प्रज्ञा (प्रजा) : ७२७ अशुद्धदि (अशुद्धां दि); गृर. ४०१; मर. ११० सेष्वेतां (से ष्वेनां).

(२) चका. ७२६ चाण्डालीं पुष्पितां (दारान् वै पुष्पितान्) पू., ७२७ पू.; गृर. ४०२; मर. ११० पू.; संम. १० चकावत्, पू.; सिन्धु. ८११ पू.

(३) चका. ७२७; पमा. ५०४ पूर्वार्धे (ब्राह्मण्यां द्वादशाहं स्याद्देवोक्तमृतुधारणम्।).

† आप्र., बाल. गृरवत्। चकाव्याख्यानमेतादृशस्मृत्यन्तरवचने द्रष्टव्यम्।

(१) चका. ७२७.

(२) मिता. १।८१ (=) पू.; गौमि. ५।१; चका. ७२९ स्वस्थः सन् (संनिधौ) चतुर्थपादे (गर्भप्राप्तिविनाश्यसौ); गृर. ४०१ पूर्वार्धे (स्वदारांश्च ऋतुस्नातान् सुस्थस्त्वेन्नोपगच्छति।) प्राप्तं (प्राप्य); पमा. ४९८ यः स्वदा (स्वयं दा) स्वस्थः स (स्वस्थश्चे) नाश्य सः (नाशयेत्) : ३४ (खण्डः २ भागः १) गर्भं प्राप्तं (प्रजां प्राप्तां); मर. १११; गप. ४५६ प्राप्तं विनाश्य सः (प्राप्य विनश्यति); वीमि. १।७९ स्वस्थः सन् (संनिधौ) प्राप्तं (प्राप्य); संप्र. १६२ पू., पराशरः; आप्र. ५६२ सन्नोपगच्छति (चेन्नोपसर्पति) प्राप्तं (प्राप्य); मुक्ता. ७६ यः स्वदा (स्वयं दा) स्वस्थः स (स्वस्थश्चे); आन. १४६ मुक्तावत्; बाल. १।८१ पृ. २२३ वीमिवत् : पृ. २२७ पू.; संर. ६८६ चतुर्थपादे (प्रजा प्राप्ता विनश्यति).

( ३ ) एवं चास्य चान्द्रायणादिगुरुप्रायश्चित्तार्हत्वेन 'ऋतुं न गच्छेद्भार्यां यः सोऽपि कृच्छ्रार्धमाचरेत् ।' इति बृहस्पत्युक्तिर्देशान्तरस्थविषया । गप. ४५६

( ४ ) ऋतुकालप्राप्तगर्भं विनाश्य भ्रूणहेत्यर्थः, बीजस्य व्यर्थीकरणादिति भावः । आन. १४६

( ५ ) स्वस्थ इति वचनादस्वस्थस्य न दोष इत्युक्तं भवति । संर. ६८६

**'अतीर्थगमनात् पुंसस्तीर्थसंगूहनात् स्त्रियाः ।**
**उभयोर्धर्मलोपः स्याच्छेषेण तु विशेषतः ॥**

( १ ) द्वेषेण ऋतौ पुंसोऽगमने द्वेषेण स्त्रिया ऋतुगोपने च महान् दोषः । गप. ४५५

( २ ) तीर्थम् ऋतुः । संगूहनं प्रच्छादनम् । शेषेण संगूहनेन । ‡ आप्र. ५६०

**'यौगपद्ये तु तीर्थानां *विप्रादिक्रमशो व्रजेत् ।**
**रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा ॥**

---

‡ बाल. आप्रवत् ।

* विप्रादिशब्दस्थाने विवाहशब्दं केचित्पठन्ति । विप्रादिशब्दघटितं देवलस्य, विवाहशब्दघटितं कश्यपस्येति भिन्नर्षिकं वचनद्वयमिति आनन्तर्येण वचनद्वयं गृह्णतोः चका-संरनिबन्धयोः स्पष्टम् । कश्यपवचनेऽपि व्याख्यानं द्रष्टव्यम् ।

(१) गप. ४५५ स्याच्छेषेण तु ( स्याद्द्वेषेण च ); आप्र. ५६०; बाल. १।८१ पृ. २२३ गूहनात् ( ग्रहणात् ).

(२) अप. १।७९ पृ. १०४ तीर्थानां ( योनीनां ) इति पाठः स्यात्; स्मृच. १६ पुत्रां वा ( पुत्राणां ); चका. ७२८; पमा. ५०४; मपा. ३४९ पि वा ( पि च ) शेषं स्मृचवत्; मर. १११ विप्रादि ( विवाह ); गभा. १२३ स्मृचवत्; गप. ४५५ तु ( च ) व्रजेत् ( भवेत् ) शेषं मरवत्; संप्र. १६२ स्मृचवत्; आप्र. ५६० पद्ये तु ( पद्येन ) शेषं मरवत्; वम. ११५ मरवत्; मुक्ता. ७५; संम. ११ शोऽपि ( तोऽपि ); विपा. ९३ मरवत्; बाल. १।८१ पृ. २२३ आप्रवत्: पृ. २३० व्रजेत् ( भवेत् ) शेषं मरवत्; संग. ३७३-३७४ स्मृचवत्; संर. ६८५ तीर्थानां ( तीर्थस्य ).

( १ ) § योनिशब्दलक्षितस्वर्तोरनेकभार्यासु यौगपद्ये वर्णक्रमेण वा विवाहक्रमेण वा भार्यां संगच्छेदपुत्रां वाऽग्र इत्यर्थः । ¶ अप. १।७९

( २ ) तीर्थम् ऋतुः । तीर्थयौगपद्ये वर्णक्रमेणोद्वाहक्रमेण वा गच्छेत्, अपुत्राणां पूर्वमित्यर्थः ।
† स्मृच. १६

( ३ ) तीर्थम् ऋतुः । तद्यौगपद्ये सत्यसवर्णासु वर्णक्रमेण, सवर्णासु विवाहक्रमेण गच्छेत् । यदा तु काचिदपुत्रा, पुत्रवत्य इतराः, तदा अपुत्रामग्रतो गच्छेत् ।
$ पमा. ५०४

( ४ ) ननु वर्णक्रमेणैव विवाहोऽपीति पुनरपि ग्रहणक्रमोपादानमनर्थकमिति चेत्, मैवम्, प्रथमतः स्वजात्यादिक्रमेणोढदारस्य दैवादन्यतरवर्णदारान्तरितस्य पुनस्तद्वर्णकन्यकापरिणीतस्य सवर्णापुत्रवतो दारेषु ऋतुकालयौगपद्ये विवाहक्रमेण गमनं नियम्यत इति ग्रहणक्रमोपादानस्य सार्थकत्वात् । ‡ मपा. ३४९

( ५ ) ग्रहणक्रमशः ऋतुग्रहणक्रमेण । एकस्मिन्नेव दिने अनेकासामृतूद्गमे विवाहक्रमेण गच्छेत् । दिनभेदे तु ऋतुग्रहणक्रमेण गच्छेत् । यदा काचिदपुत्रा अन्याः पुत्रवत्यस्तदा अपुत्रामेव प्रयतो( १ प्रथमतो ) गच्छेदित्यर्थः । × मर. १११

( ६ ) यद्वा सवर्णास्वेव ऋतुयौगपद्ये विवाहक्रमेण गमनमिति पृथक् विवाहग्रहणम् । * संप्र. १६२

( ७ ) अपुत्रां वेति । अन्यासु पुत्रवतीषु मध्ये ऋतुयौगपद्येऽपि अपुत्रामेव प्रथमतो व्रजेत् ऋतुग्रहणक्रमेण वा । आप्र. ५६०

---

§ योनेः शब्दः तीर्थमिति शब्द इत्यर्थः ।

¶ चका., गभा., संग., संर. अपगतं स्मृचगतं च ।

† मुक्ता., संम., स्मृचगतम् ।

$ विपा. पमानुवादः ।

‡ शेषम् अपगतं स्मृचगतं च ।

× गप. मरवत् । बाल. मरगतम् ।

* शेषं मपावत् ।

(८) तीर्थम् ऋतुः, 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारे च' इति निघण्टुबलेन योनिवाचकस्य तद्धर्मलक्षकत्वात्। § चम. ११५

## यमः

गमनोत्तरशुद्धिः, स्त्रिया अशुचित्वाभावः, ऋतुगमनं परिहरतोः स्त्रीपुंसयोः प्रत्यवायः स्त्रिया विवासनं च, द्विधा शुक्रोत्सर्गे यमकोत्पत्तिः, शुक्रशोणितयौगपद्ये (? साम्ये) नपुंसकोत्पत्तिः, मैथुनोत्तरं (शुद्धेः पूर्वम्) मूत्रोत्सर्गनिषेधः

[1]ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम्।
अनृतौ तु स्त्रियं गत्वा शौचं मूत्रपुरीषवत्॥
उभावप्यशुची स्यातां दम्पती शयनं गतौ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्॥
[2]चत्वारि खलु कर्माणि संध्याकाले विवर्जयेत्।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्॥
आहाराज्जायते व्याधिः क्रूरगर्भश्च मैथुने।
निद्रा(?) श्रियो निवर्तन्ते स्वाध्याये मरणं ध्रुवम्॥
[3]ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति।
घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः॥
[4]भार्यामृतुमुखे यस्तु संनिधौ नोपगच्छति।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते॥

[1]ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत्॥

भ्रूणघ्नीयमिति तां स्त्रियं ग्राममध्ये विख्याप्य प्रकटीकृत्य पृथग्वासयेदित्युत्तरार्धार्थः। अत्रापि संनिधाविति ज्ञेयम्। प्रायश्चित्तं तु पूर्वोक्तमेव ज्ञेयम्। व्याधितादीनां स्त्रीणामपि भर्तारं प्रत्यृतावगमने न दोषः, अनन्तरोदाहृतव्यासवाक्ये† पुंलिङ्गस्याविवक्षितत्वात्। संर. ६८७

[2]भर्तुः प्रतिनिवेशेन या वृथा गमयेदृतून्।
तां तु विख्याप्य बन्धूनां भ्रूणघ्नीं तु विवासयेत्॥

प्रतिनिवेशः द्वेषः। बाल. १।७२

[3]यदि संयोगकाले तु पुरुषो रागमोहितः।
द्विधा समुत्सृजेच्छुक्रं यमकं तत्र जायते॥
[4]युगपद्यत्र वर्तेत विद्यात्तत्र नपुंसकम्॥
[5]तैलाभ्यङ्गे तथा वान्ते श्मश्रुकर्मणि मैथुने।
मूत्रोच्चारं यदा कुर्यादहोरात्रेण शुध्यति॥

मैथुनशुद्धेः पूर्वं मलमूत्रोत्सर्गं न कुर्यात्, 'तैलाभ्यङ्गे' इति यमवचनात्। आत. ४६३

---

§ शेषं पमानुवादः।

(१) यमस्मृ. १६–१७.

(२) यमसं. ७६–७७.

(३) मका. ७२९ तु (च) ब्रह्म (भ्रूण) पच्य (युज्य); गृर. ४०१; हमा. १२०, १२१ पच्य (युज्य) मनुः; वीक. १।७९ ब्रह्म (भ्रूण); गप. ४५५; आप्र. ५६१; विपा. ३६९ (भागः २) संनिधौ (स्वस्थः सन्) ब्रह्म (भ्रूण) पच्य (युज्य); बाल. १।८१ पृ. २२३.

(४) गृर. ४०१; गप. ४५५; वीमि. १।७९ भार्यामृ (भार्या ऋ); आप्र. ५६१.

† 'व्याधितो बन्धनस्थो वा' इत्यादिवाक्ये।

(१) अप. १।७२ पृ. ९९ तु या (ऽथ या) मनुः; मका. ७३० (=) तु या (च या); मर. १११ तु वि (तां वि); वीमि. १।७२; संप्र. १६३ नारी (भार्या) तु विवासयेत् (च परित्यजेत्); संम. ११ हेमाद्रौ; शूक. २४२ गच्छ (सर्प); विपा. ३७० (भागः २) तु वि (च वि); बाल. १।७२ पृ. २०६; कृम. ८१६ तु या (च या) हेमाद्रौ; संर. ६८६ घ्नीं तु विवा (घ्नीमिति वा).

(२) बाल. १।७२ पृ. २०६.

(३) स्मृच. १६; गृर. ४००; गप. ४५२ योग (भोग) यमकं (यमलं); मुक्ता. ७५; संर. ६८३ योग (भोग).

(४) गप. ४५२.

(५) आत. ४६३–४६४.

## दक्षः

रजोदर्शनात्प्राक् गमननिषेधः

[1]प्राग्रजोदर्शनात् पत्नीं नेयाद्गत्वा पतत्यधः ।
व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् ॥

इति दक्षाश्वलायनाभ्यां निषेध उक्तः स बह्वृचादिविषयः, तैत्तिरीयैस्तु रागप्राप्तौ गमनं कार्यमेवेति सुदर्शनः । संर. ६९२

## भरद्वाजः

रजोदर्शनात्परं गमनम्, अनृतुगमने निवीतम्

[2]रजस्वला यदा नारी योग्या स्याद्गर्भधारणे ।
ततः कुर्वीत तत्सङ्गं गर्भार्थं बुद्धिमान्नरः ॥

अतो रजोदर्शनात् प्राक् स्त्रीसङ्गो न कार्य इत्यर्थादुक्तं भवति । गमने च प्रत्यवाय इति स्मृतौ पुराणे च प्रसिद्धम् । संसौ. ३

[3]भार्यासंभोगसमये पुष्पकालं विनाऽन्यदा ।
ब्रह्मसूत्रं द्विजः कुर्यान्निवीतं पृष्ठभागतः ॥

ऋतौ( ? अनृतौ ) गमने यज्ञोपवीतविन्यासे विशेषमाह भरद्वाजः— भार्येति । अनेनापि ' पृष्ठदेशावलम्बि ग्राम्यधर्मेषु ' इति सामान्यं निगमवाक्यम् ऋतुकालातिरिक्तकालगमनविषयं व्याख्येयम् । संप्र. १५४–१५५

## संवर्तः

संध्याकालगमननिषेधः, ऋतुगमनाभावे प्रत्यवायः ऋतुगमने फलं च

[4]चत्वार्येतानि कर्माणि संध्यायां वर्जयेद्बुधः ।
आहारं मैथुनं निद्रां तथा संपाठमेव च ॥
आहाराज्जायते व्याधिर्गर्भो वै रौद्र* मैथुनात् ।
निद्रातो जायतेऽलक्ष्मीः संपाठादायुषः क्षयः ॥

* ' सुपां सुलुक्०' ( पासू. ७।१।३९) इति सोर्लुक् ।

(१) संर. ६९२ दक्षाश्वलायनौ.

(२) संसौ. २.

(३) संप्र. १५४ ; मुक्ता. ७७ उत्तरार्धे ( उपवीतमृतौ कुर्यान्निवीतमनृतौ तथा ॥ ).

(४) संस्मृ. ९६–९८.

ऋतुमतीं तु यो भार्यां संनिधौ नोपगच्छति ।
तस्या रजसि तन्मासं पितरस्तस्य शेरते ॥
[1]कृत्वा गृह्याणि कर्माणि स्वभार्यापोषणे रतः ।
ऋतुकालाभिगामी च प्राप्नोति परमां गतिम् ॥

## शातातपः

ऋतावगमने प्रत्यवायः

[2]ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति ।
स चाभ्येति न संदेहो भ्रूणहत्यामृतावृतौ ॥

## लघुशातातपः

ऋतौ गमनेऽभ्युदयः अगमने प्रत्यवायश्च

[3]कुर्याद्गार्ह्याणि कर्माणि स्वभार्यापोषणं परम् ।
ऋतुकालाभिगामी च प्राप्नोति परमां गतिम् ॥
[4]ऋतुमतीं तु यो भार्यां संनिधौ नोपगच्छति ।
तस्या रजसि तन्मासं पितरस्तस्य शेरते ॥

## वृद्धशातातपः

गमनोत्तरशुद्धिः, स्त्रियाः शयनोत्थिताया अशुचित्वाभावः

[5]ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥

(१) संस्मृ. ९९ ; निप्र. ४८१ ( भागः २ ) च ( स्यात् ) मां गतिम् ( मं पदम् ) उत्त.

(२) विपा. ९४.

(३) लशास्मृ. १४३.

(४) लशास्मृ. १४४ ; गौमि. ५।१ मतीं ( स्नातां ) तन्मा ( तं मा ) स्मृत्यन्तरम्.

(५) वृशास्मृ. ३३ शङ्कित्वात् ( शङ्कायां ) अनृतौ तु ( ऋतुं विना ) ; मिता. ३।३० (=) उत्त. ; अप. १।७९ पृ. १०५ यदा गच्छेच्छौ (सदा कार्यं शौ) ; स्मृच. १२० शातातपः ; गृर. ४०० अपवत् ; अभा. ११९ यदा गच्छेच्छौ ( सदा गच्छञ्छौ ) याज्ञवल्क्यः ; स्मृसा. १२० अपवत्, शातातपः ; पमा. ४ ( खण्डः २ भागः २ ) ऋतौ तु ( ऋतौ हि ) शातातपः ; मर. ११२ अपवत् ; गभा. १२४ सर्वं अभावत् ; गप. ४४९ अपवत् ;

(१) अत्र मूत्रपुरीषोत्सर्गवच्छौचद्वयमपि कार्यमित्यर्थः। स्मृच. १२०

(२) 'स्नानं च कर्माधिकारसिद्ध्यर्थम्, न तु ऋतुगमनेन चाण्डालस्पर्शवदप्रायत्यं भवति, यच्च स्नानेन अपनीयते, येन रात्रावपि स्यात्। अतः स्नानं प्रातरेवेति वृद्धाः' इति श्रीदत्तः। तन्न, 'न मिथुनीभूय शौचं प्रति विलम्बेत' इति वक्ष्यमाणगौतमवचनविरोधात्। ¶ आप्र. ५६१

**'द्वावेतावशुची स्यातां दम्पती शयनं गतौ।**
**शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्॥**

(१) शुचित्वं स्नानादिकं विनाऽपि। गृर. ४००

(२) शुचित्वं स्नानप्रोक्षणव्यतिरेकेणापि लेपप्रक्षालनाचमनमात्रात्। ¶ आप्र. ५६१

## पराशरः

ऋतावनुपगच्छतोः स्त्रीपुंसयोः प्रत्यवायः, गमनप्रशंसा

**'ऋतुस्नाता तु या नारी भर्तारं नोपसर्पति।**
**सा मृता नरकं याति विधवा च पुनः पुनः॥**

---

¶ बाल. आप्रवत्।

घप्र. ३६ (=) ; आप्र. ५६१ द्वितीयपादे (स्नानमेव विधीयते) शेषं अपवत्; मुक्ता. ७७ (=) पुरीषवत् (वदिष्यते) : २६५ पराशरः; आम. ८६ (=) गर्भशङ्कित्वात् (गर्भे शङ्कित्वा); सिन्धु. ८१७–८१८ पराशरः; विपा. ९४ अनृतौ तु (ऋतुं विना) शेषं आमवत्, शातातपः; आन. ८८ शातातपः : १४५ (=) मुक्तावत्; बाल. १।८१ पृ. २२३ अपवत् आप्रवच्च; संग. ३७४–३७५ याज्ञवल्क्यः; संर. ६९१ पू., पराशरः : ६९२ उत्त., पराशरः.

(१) बृशास्मृ. ३४ द्वावेताव (तावदेवा); अप. १।७९ पृ. १०५; गृर. ४००; गभा. १२३ द्वावेताव (उभावप्य); घप्र. ३६ (=) द्वावेता (तावुभा) शयनं (मैथुनं); आप्र. ५६१; सिन्धु. ८१८ गभावत्; विपा. ९४ शातातपः; बाल. १।८१ पृ. २२३; संग. ३७४ द्वावेता (तावुभा) शयनं (मिथुनं); संर. ६९२ गभावत्.

(२) पस्मृ. ४।१४; घप्र. ३६ (=) (ऋतुस्नाता तु या नारी पतिं नैवोपविन्दति। शुनी मृगी शृगाली स्या-

रजोदर्शनमारभ्य षोडशदिनान्यृतुः। तत्र चतुर्थदिवसे स्नाता नारी पुत्रोत्पादनार्थमाहूता सती यदि भर्तारं नोपसर्पति तदा नरकमनुभूय पश्चाद्बहुषु जन्मसु विधवा भवति। पमा.

**'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति।**
**घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥**

(१) यथा वध्वा ऋतुकालातिक्रमे प्रत्यवायस्तथा पुरुषस्यापि ऋतुस्नातामनुपगच्छतः प्रत्यवायः। संनिधिशब्दस्त्वत्राऽऽरोग्यादेरुपलक्षकः। पमा.

(२) अत्रासंनिधौ तु न दोषः। संनिधानेऽपि सुस्थस्यैवायं नियमः, 'यः स्वदारामृतुस्नातां सुस्थः सन्नोपगच्छति।' इति स्मरणात्। अयं च ऋतुगमननियमोऽजातपुत्रस्यैव, मनुना ज्येष्ठस्य प्राशस्त्याभिधानादितरेषां कामजत्वनिर्देशाच्च– 'ज्येष्ठेन जातमात्रेण पुत्री भवति

---

च्छूकरी च पुनः पुनः॥); संप्र. १६३ नोपसर्पति (नानुमन्यते) नरकं याति विधवा (तु भवेन्नारी शूकरी); मुक्ता. १५९; बाल. १।८१ पृ. २२५ (=) (ऋतुस्नाता तु या नारी पतिं नैवोपविन्दति। शुनी वृकी शृगाली स्याच्छूकरी च पुनः पुनः॥); संग. ३७४ (ऋतुस्नाता तु या नारी पतिं नैवोपगच्छति। शुनी वृकी शृगाली च शूकरी च पुनः पुनः॥); संर. ६८६ नोपसर्पति (नानुमन्यते) नरकं याति विधवा (तु भवेन्नारी सूकरी) संग्रहे.

(१) पस्मृ. ४।१५; गोरा. ३।४५; मिता. १।८१ (=); मभा. ५।११ स्मृत्यन्तरम्; स्मृच. १६; मनु. ३।४५ युज्य (पत); हमा. १२०, १२१ (=) संनिधौ (शक्तः सन्); मपा. ३५०; मर. ३११ युज्य (पच्य); प्रपा. २४९ (=); गभा. १२३ ऋतुस्ना (ऋतौ स्ना); घप्र. ३६ (=) चतुर्थपादे (पितृभिः सह मज्जति); संप्र. १५३ (=) : १६२ पू.; मुक्ता. ७६, १५९; संम. ११ संनिधौ (स्वस्थः सन्) इत्यपि पाठः; सिन्धु. ८१६ मरवत्; विपा. ३६९ (भागः २) (=); ज्योनि. २३७ चतुर्थपादे (पितृभिः सह गच्छति) नीतिशास्त्रे; संकौ. १७ (=); आम. १४६; संग. ३६९ (=) : ३७४ घप्रवत्; संर. ६८६ : ६८९ (=) घप्रवत्.

मानवः । यस्मिन्नृणं संनयति येन चाऽऽनन्त्यमश्नुते । स एव धर्मजः पुत्रः कामजानितरान् विदुः ॥' इति ।

मपा. ३५०

( ३ ) क्वचित् 'स्वस्थः सन्' इति पाठः ।

संम. ११

( ४ ) अस्य वचनस्य 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्यः' इति श्रुतिमूलत्वेनोपपत्तेः श्रुत्यन्तरकल्पनाया अन्याय्यत्वादजातपुत्रं प्रत्येष नियमः । तथा च मनुः— 'ज्येष्ठेन जातमात्रेण पुत्री भवती मानवः । पितृणामनृणश्चैव स तस्मात् सर्वमर्हति ॥ ( इति ? ) यस्मिन्नृणं संनयति येनैवाऽऽनन्त्यमश्नुते । स एव धर्मज पुत्रः कामजानितरान् विदुः ॥' ( मस्मृ. ९।१०६,१०७ ) इति केचित् । अन्ये तु ऋतोर्निमित्तत्वात्प्रतिनिमित्तं नैमित्तिकावृत्तिरुचिता । स्मरन्ति च 'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।' इत्याहुः । संको. १७

[१]**कामयज्ञमिति प्राहुर्गृहिणामेव सर्वदा ।**
**अनेन लभते पुत्रं संसारार्णवतारकम् ॥**

## बृहत्पराशरः

अनिषिद्धकाले गमने स्त्रीच्छानतिक्रमः, आद्यरात्रिचतुष्टये गमननिषेधः, गर्भवतीव्रतवतीरोगवतीनामगम्यता, वक्त्रगमननिषेधः, गर्भाधानविधिपूर्वकं गमनम्, गन्तुरविकृतत्वम्

[२]**ऋतावृतौ स्त्रियं गच्छेत्स्त्रीच्छया च वरं स्मरन् ।**
**सर्वं तदिच्छया कुर्याद्यथोभयोर्भवेद्धृतिः ॥**
**न दिवाऽपि स्त्रियं गच्छेदिच्छंस्तदिच्छयाऽपि च ।**
**न पर्वसु न संध्यासु नाऽऽद्यर्तुचतुरात्रिषु ॥**
**नोदक्यां न दिवा गच्छेत्सगर्भां च व्रतस्थिताम् ।**
**अधिगच्छेदविद्वान् यस्तदायुः क्षयमेति च ॥**
**न वक्त्रेऽभिगमं कुर्यात्पाणिग्राही स्वयोषितः ।**
**कुर्याच्चेत्पितरस्तस्य पतन्ति नरकेऽशुचौ ॥**
**सुशयने शयीताथ एकान्ते च स्त्रिया सह ।**
**गोपनं मैथुनादीनां वदन्ति मुनिपुङ्गवाः ॥**
**ऋतुक्षपासु पुत्रार्थी आधानविधिना द्विजः ।**
**प्रसाद्य भस्मना योनिमिति मन्त्रनिदर्शनात् ॥**
**कृत्वाऽऽधानविधानं तु स्त्रीयोगमभ्यसेत्पुनः ।**
**मन्येदविकृतो योनौ विकाराद्विकृताः प्रजाः ॥**
**न गच्छेत् स्त्रीं रजोयुक्तां न चाश्नीयात्तया सह ।**
**न गच्छेत् स्त्रीं रोगयुक्तां प्रसुप्यान्न तया सह ॥**

## अत्रिः

प्रसूतेः पूर्वं ऊर्ध्वञ्च गमनावधिः

[१]**'षण्मासान् कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि ।**
**आ दन्तजननादूर्ध्वमेवं धर्मो न हीयते ॥**

( १ ) ऊर्ध्वं प्रसूतेरूर्ध्वं बालस्य दन्तजननं मर्यादीकृत्येत्यर्थः । † चम. ६

( २ ) एवकारः 'षण्मासान्' इत्यनन्तरमन्वेति । न चैवं 'कामममा विजनितोः संभवन्ति ( ? भवाम )' इत्यनया श्रुत्या प्रसवपर्यन्तं गमनस्याभ्यनुज्ञातत्वादनेन विरोध इति वाच्यम्, तत्र प्रसवापरपर्यायविजननशब्देन 'अत ऊर्ध्वं प्रसूतिः स्यात्' इति $पारिभाषिकस्यैव

---

(१) व्यप्र. ३६ प्राहुर्गृ ( प्राह गृ ) ; संग. ३७४.

(२) बृपसं. ६।४१, ६६, ६८–६९, १४१–१४३, २७०.

† संम., बाल., कृम. चमवत् ।

$ इदमत्र विचार्यम्–सूतेः सूयतेर्वा प्राणिगर्भविमोचनार्थत्वात् प्रथमादिमासभवगर्भविमोचनस्यापि प्रसूतिपदवाच्यत्वप्राप्तौ आशौचविषये सप्तममासादिकालोपहितगर्भविमोचनस्यैव प्रसूतिपदवाच्यत्वमुक्तवचनेन परिभाष्यते । उपाधिभूतस्य सप्तममासादिरूपकालस्य तत्कालोपहितगर्भगार्भि-

(१) अत्रिसं. १९६ ( षण्मासान् कामयेन्मर्त्यो गर्भिणीमेव च स्त्रियम् । आ दन्तजननादूर्ध्वमेष धर्मो विधीयते ॥ ) ; चम. ६ ; संम. ११ ; बाल. १।८१ पृ. २२२ ; कृम. ८१७ ; संर. ६९२.

विजननस्य ग्रहणान्न विरोधः । ¶ संर. ६९२

## पैठीनसिः

ऋतुगमनविधिः, पुत्रोत्पादनविधिः, अयुग्मरात्रिगमने स्त्रियाः युग्मरात्रिगमने पुंस उत्पत्तिः, मैथुनदेशस्य संवृतत्वम्, वर्ज्यदिवसाः

[१]ऋतुमुपासीत । तस्मिन्नपि पर्वाणि वर्जयेत् । पुमांसमुपपादयेत् ॥

[२]अयुग्मेनाऽऽचरतः स्त्री जायते । युग्मे पुमान् भवति । संवृते देशे मैथुनायाऽऽह्वयेत् । न प्रथमे न द्वितीये न तृतीये न चतुर्थे आह्वयेत् ॥

(१) 'तासामाद्याश्चतस्रः' इति मनूक्तम् '(न) चतुर्थे आह्वयेत्' इति पैठीनस्यादिनिषेध- (? धश्च) अपत्यस्याल्पायुष्ट्वदोषाय § । एवं चापत्य- दीर्घायुष्ट्वकामो यदि स्यात्तदा न चतुर्थ्यां गच्छेत्, अतत्कामश्चेद्गच्छेदिति व्यवस्था । ४०३

दिवसे इति शेषः । गर. ४०५

(२) संवृत्ते परिश्रिते । संर. ६८८

## अङ्गिराः

गमनोत्तरशुद्धिः, शयनोत्थितायाः स्त्रिया अशुचित्वाभावः, शूद्रान्नभोजनोत्तरगमने अन्नस्वामिशूद्रस्य पुत्रस्वामित्वम्

[१]ऋतौ तु गर्भशङ्कायां स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु सदा कुर्याच्छौचं मूत्रपुरीषवत् ॥
द्वावेतावशुची स्यातां दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति ।
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते ॥

## आश्वलायनः

उत्तररात्रे गमनम्, गम्यताप्रयोजकाः स्त्रीधर्माः, अगम्यताप्रयोजकाः स्त्रीधर्माः, ऋतुगमनं नियतम्, अनृतुगमनं स्त्रीच्छया, ऋतुगमनप्रतिबन्धकानि श्राद्धादिनिमित्तानि, ऋतुलक्षणम्, समविषमरात्रिषु गमने यथाक्रमं पुत्रकन्याजनने, शुक्राधिक्ये पुत्रो रक्ताधिक्ये कन्या, शुक्राधिक्यरक्तन्यूनत्वे प्रयत्नसंपाद्ये, रजोदर्शनात्प्रागगम्यता

[२]पत्नीमृतुमतीं स्निग्धां तृप्तां रोगविवर्जिताम् ।
उपेयान्मध्यरात्रान्ते जीर्णेऽन्ने तृप्तमानसः ॥
[३]अप्रौढां रोगितां क्रुद्धामतृप्तामन्यमानसाम् ।
नोपेयादात्मनो भार्यामसतीं च बहुप्रजाम् ॥
स्त्रीप्रजां बहुला(? स्त्रीप्रजाबहुलां)भार्यां द्वेषिणीं तु रजस्वलाम् ।
कृशां विपन्नां नोपेयाद्व्रतप्रत्यागतामपि ॥
[४]श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा चैव निमन्त्रितः ।
उपोष्य च तथा भुक्त्वा नोपेयात्तामृतावपि ॥

---

व्यन्यतरस्य वा प्रसूतिपदवाच्यत्वं न परिभाष्यते, येन सप्तमादिमासेषु गर्भविमोचनेऽपि आषण्मासान्तिकः संभव एवोक्तश्रुतिविषयः स्यात् विरोधश्च न स्यात् । तथा च पारिभाषिकविजननस्य स्वीकारेऽप्याविजननं सप्तमादिमासेष्वपि गमनमुक्तश्रुतितः प्राप्नोत्येवेति विरोधतादवस्थ्यम् । तस्मात् प्रसूतिपदपर्यायस्य विजनितोःपदस्य परिभाषाविषयोपाधिभूतसप्तममासादिरूपकाललक्षकत्वमिति वक्तुमुचितम् । तेन 'आ सप्तममासात् संभवाम' इति श्रुतितात्पर्यसंपत्तेर्न विरोधः ।

¶ शेषं चमवत् ।

§ दोषं बोधयितुमित्यर्थः ।

(१) चका. ७२४.

(२) स्मृच. १५ (न प्रथमे...आह्वयेत्) एतावदेव; चका. ७२५ (न प्रथमे...आह्वयेत) एतावदेव; गर. ४०३ (चतुर्थे आह्वयेत्) एतावदेव : ४०५; संप्र. १५६ स्मृचवत्; संर. ६८८ (संवृत्ते देशे मैथुनायाऽऽह्वयीत) एतावदेव.

(१) अङ्गिस्मृ. ५२–५३, ६९.

(२) आश्वस्मृ. ५।२७१; संप्र. १५४ रोग (भोग).

(३) आश्वस्मृ. ५।२७२–२७३.

(४) आश्वस्मृ. ५।२७५ वा (च) उपोष्य च (उपोष्यश्च); संप्र. १५२ चैव (वाऽपि) तामृता (न्च ऋता).

[1]पत्नीमप्यनृतौ नेयादियाद्वाऽभ्यर्थितस्तया ।
ऋतौ तु न त्यजेन्मोहाल्लोभात्क्रोधाच्च वा बुधः ॥
[2]अनापन्नस्य पुंसः स्यादृतौ संत्यजतोऽङ्गनाम् ।
यैस्तु( ? यस्तु ) ब्रह्मवधे दोषः स तस्मान्न
त्यजेदृतौ ॥
ऋतुः षोडशरात्रं तु परं स्नानात् स्त्रिया भवेत् ।
समयोगात् पुमान्नारी भवेद्विमषयोगतः ॥
शुक्राधिके पुमान्नारी भवेद्रक्ताधिके समे ।
षण्ढश्च तस्मान्मतिमाञ्छुक्लवृद्धौ यतेत वा ॥
शुक्लं क्षीराशनाद्यैस्तु वर्धयित्वा समे दिने ।
शुक्रा( ? शुष्का)द्यैः शोषयित्वा तां पुंप्रजार्थी
स्त्रियं व्रजेत् ॥
[3]दीक्षितस्तु महायज्ञैः पित्रोः प्राग्वत्सराद्द्विजः ।
नेयाद्भार्यां प्रयत्नेन ऋतावप्यर्थितो बुधः ॥

( १ ) महायज्ञैः ज्योतिष्टोमादिभिः दीक्षितः दीक्षासंस्कारवान् अवभृथं यावत् ऋतावपि स्त्रियं नोपेयात् । तथा पित्रोर्मरणदिनमारभ्य यावत्संवत्सरम् । तुशब्दश्चार्थः । संप्र. १५३

( २ ) नेयात् न गच्छेत् । अर्थितः प्रार्थितः । भोगार्थं भार्ययेति शेषः । संर. ६९२

[4]आयुष्कामो दिवा नारीं नोपेयान्न स्वपेद्दिवा ॥
[5]अनर्तु( ? अनृतु )मत्यां भार्यायां न कार्यं गर्भलम्भनम् । $
ऋतुमत्यां तु तस्यां वै तत्कार्यं ब्रह्मचारिणा ॥

ब्रह्मचार्यत्र स्वदारनिरतः । प्रपा. ९७

[1]प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।
व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् ॥

( १ ) रजो नाम स्त्रीषु देवेन्द्रेण विभज्य स्थापितो ब्रह्महत्यायास्तृतीयो भागः । प्रपा. ९७

( २ ) एतत्तु दशवर्षात् प्राग्ज्ञेयम् । सिन्धु. ८०९

[2]भोक्ष्यन् करिष्यन् वा श्राद्धं पूर्वरात्रौ
प्रयत्नतः ।
व्यवायं भोजनं चैव ऋतावपि विवर्जयेत् ॥

## शौनकः

¶ दुष्टरजोदर्शनतः शुभकालरजोदर्शनपर्यन्तं ऋतायामपि शान्तौ गमनवर्जनम्

[3]भर्ता तत्रापि गमनं वर्जयेत्तद्दर्शनात् ॥

दर्शनं शान्तम् । कृम. ८०८

## कश्यपः

ऋतुदर्शनाभावेऽपि द्वादशवर्षोत्तरं स्त्रिया गम्यत्वम् ,
ऋतुयौगपद्ये गमनक्रमः

[4]वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्न हि ।
अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत् ।
अतस्तत्र प्रकुर्वीत स्त्रीसङ्गं बुद्धिमान्नरः ॥

( १ ) ननु च रजोदर्शनं विना गर्भधारणयोग्यता नास्तीत्युक्तं तदसंगतम् , क्वचिद्रजोदर्शनं विनाऽपि

---

$ अनृतुमत्यां गमलम्भनस्यासंभवात् गर्भलम्भनशब्देनात्र तदनुकूलो गमनात्मको व्यापारो लक्ष्यत इति बोध्यम् ।

(१) आश्वस्मृ. ५।२७६ ; प्रपा. १०५ पू.

(२) आश्वस्मृ. ५।२७७-२८०.

(३) आश्वस्मृ. ५।२८१ पूर्वार्धे ( दीक्षितो मन्त्रयज्ञाद्यैः पित्रोः प्राग्वत्सराद्बुधः । ) ; संप्र. १५३ ; संकौ. १६ ; संर. ६९२ यज्ञैः ( यज्ञे ).

(४) आश्वस्मृ. १०।८०.

(५) आश्वस्मृ. ११।३९ यां न कार्यं ( यामकार्यं ) तृतीयपादे ( भार्यायामृतुमत्यां तु ) ; प्रपा. ९७.

¶ कृष्णंभट्टीगतसंदर्भतोऽयं विषयो निर्णीतः ।

$ अत्र रजोदर्शनशब्दो रजसि लाक्षणिकः । 'गर्भधारणयोग्यता नास्ति' इत्यनेन 'गर्भधारणं नास्ति' इत्यर्थं आक्षिप्यते । एवं रजोगर्भधारणयोः कार्यकारणभावस्य साधकः 'रजसोऽसत्त्वे गर्भधारणासत्त्वम्' इति व्यतिरेक

(१) आश्वस्मृ. ११।४० कारेण शुक्र (कारे तु शुक्र) ; प्रपा. ९७ ; संप्र. १५२ ; सिन्धु. ८०९ ; विपा. ४१ प्रयोगपारिजाते ; संकौ. १६ ; संग. ३६८ ; संर. ६९२ दक्षाश्वलायनौ ; संवी. १८७ ( भागः २ ).

(२) संप्र. १५२. (३) कृम. ८०८.

(४) संसौ. ५ प्रकु ( तु कु ) ; संग. ३५८ प्रकु ( न कु ) ; संर. ६९२ मात्स्यकश्यपौ.

गर्भधारणसंभवोपलम्भात्, क्वचिच्च सत्यपि तदनुपलम्भात्। नायं दोषः, गर्भधारणं हि रजो विना न भवतीत्येषा व्याप्तिः। तच्च रजः क्वचित् प्रकटमुपलभ्यते, क्वचिदप्रकटमन्तरेव तिष्ठति, रोगवशात्। तेनाप्रकटेऽपि रजसि अन्तर्गतरजसो गर्भधारणहेतुत्वादुक्तदोषानवकाशः। तथा च कश्यपसंहितायाम्— 'वर्षद्वादशकात्०' इति। यत्र तु सत्यपि पुष्पे गर्भधारणं न दृश्यते तत्र पुष्पबीजक्षेत्रादिदोषानुसंधानं द्रष्टव्यम्।

संसौ. ५

(२) वर्षद्वादशकादिति भवणादर्थात्पूर्वं गमनं निषिद्धमिति ज्ञेयम्। चतुर्थीकर्मसंबन्धिगमनं तु भवत्येव, तस्य वैधत्वात्।

संर. ६९२

‡'यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा॥

(१) अत्र ग्रहणक्रमः ऋतुग्रहणक्रमः।

$ चका. ७२८

(२) तीर्थानाम् ऋतूनाम् †। क्षेत्रवाचिनस्तीर्थशब्दस्य क्षेत्रपर्याय(योनिशब्दवाच्य)योनिसमुद्भूतत्वेन (च?) ऋतुरर्थः। तथा च सकृदेवेति नियमविधेर्निर्वाहः।

कुभ. ८१६

उक्तो भवति। यथाश्रुतार्थग्रहणे तु अदृश्यमानस्यान्तर्गतरजसो गर्भधारणस्य च कार्यकारणभावाश्रयणेन वक्ष्यमाणं समाधानं न संगच्छेत। 'गर्भधारणसंभवोपलम्भात्' इत्यत्र संभवः अन्वयः, सत्त्वम्। 'रजसोऽसत्त्वे गर्भधारणसत्त्वम्' इति व्यतिरेकव्यभिचारादिति तदर्थः। 'क्वचिच्च सत्यपि०' इत्यनेनान्वयव्यभिचार उक्तः। अग्रे 'व्याप्तिः' इति पदस्य कार्यकारणभावसाधकव्यतिरेकव्याप्तिरित्यर्थः, न तु परामर्शाङ्गम्, अनुमानस्याप्रकृतत्वात्। अस्तु वा परामर्शाङ्गम्, व्यतिरेकव्याप्तिबलेन गर्भधारणहेतुना अदृश्यमानरजसोऽनुमितेः पूर्वोक्तव्यतिरेकव्यभिचाराभावे पर्यवसानात्। 'यत्र तु' इत्यादिना प्रतिबन्धककल्पनयाऽन्वयव्यभिचाराभाव उक्तः।

‡ एतादृशदेवलवचनेऽपि व्याख्यानानि द्रष्टव्यानि।

$ सिन्धु. चकावत्।

† ऋतुशब्दोऽत्र न ऋतुकालपरः, अपि तु स्त्रीरजःपरः, 'योनिसमुद्भूतत्वेन' इत्युक्तेः। वस्तुतस्तु स्त्रीरजसस्तीर्थशब्दार्थत्वं कोशेषूक्तमिति लक्षणाश्रयणमिदं व्यर्थम्। लाक्षणिकार्थस्यैव कोशेषूक्तिरित्यभ्युपगमेऽपि 'योनिवाचिनस्तीर्थशब्दस्य योनिसमुद्भूतत्वेन ऋतुरर्थः' इति सरलं व्याख्यानमस्तु, तीर्थशब्दस्य क्षेत्रवाचित्वोक्तिर्योनिशब्दस्य क्षेत्रशब्दपर्यायत्वोक्तिश्चेत्युक्तिद्वयस्य तीर्थशब्दस्य योनिवाचित्वे पर्यवसानात्।

(१) चका. ७२८; सिन्धु. ८१६; संर. ६८५ तीर्थानां (तीर्थस्य) पू.

## शाण्डिल्यः

गमनप्रतिकूलाः स्त्रीणामवस्थाः, गमनानुकूलाः स्त्रीपुरुषावस्थाः, अयोनिगमननिषेधः, गमनातिरेकेऽनिष्टफलानि

'न गच्छेद्गर्भिणीं भार्यां मलिनां सितमूर्ध्व-(? र्ध)जाम्।
रजस्वलां रोगवतीं नायोगौ(? नायोनौ) न बुभुक्षितः॥
सुवस्त्रवेषधरया स्नातया शुद्धचित्तया।
अरोगया दयितया स्वयमेवंविधं(?धः) स्वपेत्॥
धातुक्षयो रोगवृद्धिरश्रीः सत्कर्मविप्लवः।
सौभाग्यायुर्यशोनाशः पुंसां स्त्रीव्यतिसङ्गिनाम्॥

## मार्कण्डेयः

गर्भिण्यादिषु अयोनौ शयनदेशे दीक्षायां श्राद्धदिने च गमननिषेधः

'न गच्छेद्गर्भिणीं नारीं मलिनां सितमूर्धजाम्।
रजस्वलां भुक्तवतीं नायोनौ न बुभुक्षितः॥
'न स्वपेद्येषु देशेषु तेषु देशेषु चाप्यथ।
दीक्षितो वर्जयेद्यत्नात्कृत्वा श्राद्धं च मानवः॥

(१) दीक्षितः अनुन्मुक्तदीक्षः।

अप. १।१५४ पृ. २२८

(१) मुक्ता. ७७.
(२) अप. १।१५४ पृ. २२८.
(३) अप. १।१५४ पृ. २२८; मुक्ता. ७७ अपरार्के.

(२) § यस्मिन् प्रदेशे स्त्री स्वपिति तत्र न स्वपेत्। वर्जयेत्, मैथुनमिति शेषः। † मुक्ता. ७७

## उपमन्युः

सूतकबन्धनयोर्ऋतावगमनेऽपि दोषाभावः

[१]'सूतके बन्धने विप्रो ह्व्यकव्यादिवर्जितः।
नैनसा लिप्यते तद्वद्दतावगमनादपि ॥

एनसा पापेन। संर. ६८६

## अग्निः

निषिद्धकालेऽपि कामान्धागमनस्य विधिः

[२]'कामान्धां मनुजोऽनिच्छन्नपि पत्नीं बहुप्रजाम्।
प्रशस्तेऽहन्यशस्ते वा रात्रौ वा मतिमान् व्रजेत् ॥

तथा सकामायामपि दिवा गमनमुक्तमग्निस्मृतौ—कामान्धामिति। संप्र. १५४

## स्मृत्यन्तरम्

ऋतुगमनस्य नियतत्वम्

[३]'ऋतुमतीं तु यो भार्यां संनिधौ नोपसर्पति।
अवाप्नोति स मन्दात्मा भ्रूणहत्यामृतावृतौ ॥

$[१]'यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति।
भ्रूणहत्यामवाप्नोति प्रजां प्राप्तां विनाश्य सः ॥

संनिधानेऽप्यशक्तस्य न दोषः। तथा च स्मृत्यन्तरे—यः स्वदारानिति। अत्र केचिदाहुः— एतदजातपुत्रविषयम्, 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः (क?) एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा' इत्यस्याः श्रुतेरेकपुत्रोत्पादनेनैव चरितार्थत्वात्। उक्तं च कूर्मपुराणे—'ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते।'। ननु पुत्रान्तरोत्पत्तिविधायिकाऽप्यस्ति श्रुतिः— 'दशास्यां पुत्रानाधेहि' इति। सत्यं यदीयं विधायिका स्यात्, किंतु बह्वपत्यप्रशंसार्था। अन्ये त्वाहुः— नैतदजातपुत्रविषयम्, 'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥' इत्यादिभिर्वचनैर्बहुपुत्राश्रयणात्। कूर्मपुराणवचनस्य त्वयमर्थः— ऋतुकाल एव यावद्गर्भसंभवो भवति तावद्गन्तव्यम्, गर्भसंभवे न गन्तव्यमिति। गर्भसंभवचिह्नानि सुश्रुते दर्शितानि— 'सद्यो गृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणं च योनेः' इति। चका. ७२९–७३०

## मत्स्यपुराणम्

रजोदर्शनाभावेऽपि द्वादशवर्षोत्तरं गमनम्

¶[२]'वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्न हि।
अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत्।
अतस्तत्र प्रकुर्वीत स्त्रीसङ्गं बुद्धिमान्नरः ॥

---

§ इदं व्याख्यानं न मनोहरम्, 'स्त्री स्वपिति' इति स्वेच्छामात्रप्रमाणकाध्याहारप्रसङ्गात्, गमनविषयकपूर्वोत्तरवाक्यसंदंशपतितस्य स्वापविषयकत्वकल्पनानौचित्याच्च। किंच, उत्तरवाक्यस्य गमनविषयत्वं गमनप्रत्यासत्त्यैव। सा च मध्यमवाक्यस्य स्वापविषयत्वे न संभवति। 'स्वपेत्' इत्यस्य गमनपर्यन्तार्थकत्वकल्पनेऽपि अध्याहारदोषस्तदवस्थ एव। तस्मात् 'येषु देशेषु स्वपेत् (पुरुषः) तेषु देशेषु न गच्छेत्' इतीममेवार्थं सरलं प्रतीमः।

† शेषम् अपवत्।

(१) चम. ४; बाल. १।७९ पृ. २२१; संर. ६८६ मनुः.

(२) संप्र. १५४.

(३) संत. ९०८.

$ यद्यपीदं वचनं देवलवचनकल्पम्, माधवाचार्यस्य तु अयमपि पाठो देवलीयत्वेनाभिमतः, तेनास्य देवलीयत्वं स्वीकर्तुं युक्तम्, तथापि हेमाद्रिणा कंचिद्विषयभेदमुपक्रम्य देवलवचनसमनन्तरमेवास्य ग्रहणादिदमत्र संगृहीतम्।

¶ अस्य व्याख्यानं कश्यपे द्रष्टव्यम्।

(१) चका. ७२९; मपा. ३५० नृतुस्नातान् स्व (मृतुस्नातां सु) पू.

(२) संर. ६९२ मात्स्यकश्यपौ.

## विष्णुपुराणम्

पुत्रार्थमृतुगमनं नियतम्, स्त्रीपुंसयोर्गमनानुकूलावस्थाः, अन्ययोनौ अयोनौ औषधमुपयोज्य च गमननिषेधः, गमने वर्ज्यदेशाः, परदारगमननिषेधः, स्त्रीच्छयाऽनृतावपि गमनम्

[1]ऋतुकालाभिगामी स्याद्यावत्पुत्रो न जायते ।
ऋणापकर्षणार्थं हि पुत्रस्योत्पादनं प्रति ॥

यतितव्यमिति शेषः । आत. ४६३

[2]ऋतावभिगमः शस्तः स्वपत्न्यामवनीपते ।
पुंनामर्क्षे शुभे काले श्रेष्ठे युग्मासु रात्रिषु ॥

मन्त्र इति द्विजातिविषयः । $ मपा. ३४९

[3]नास्नातां तु स्त्रियं गच्छेन्नाऽऽतुरां न रजस्वलाम् ।
नाप्रशस्तां न कुपितां नानिष्टां न च गुर्विणीम् ॥

गर्भिणीगमननिषेधः षण्मासादूर्ध्वम्, 'आरभ्य सप्तमान्मासान्न गच्छेद्गर्भिणीं स्त्रियम् ।' इति वचनात् । विपा. ९३

[4]नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् ।
क्षुत्क्षामामतिभुक्तां वा स्वयं चैतैर्गुणैर्युतः ॥

[1]स्नातः स्रग्गन्धधृक् प्रीतो नाऽऽध्मातः क्षुधितोऽपि वा ।
सकामः सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥

व्यवायः मैथुनम् । आप्र. ५५८

[2]नान्ययोनावयोनौ वा नोपयुक्तौषधस्तु वा ।
देवद्विजगुरूणां च व्यवायी नाऽऽश्रमे वसन् ॥

[3]चैत्यचत्वरसौधेषु न चैव च चतुष्पथे ।
नैव श्मशानोपवनसलिलेषु महीपते ॥

[4]प्रोक्तपर्वस्वशेषेषु नैव भूपाल संध्ययोः ।
गच्छेद्व्यवायं मतिमान् मूत्रोच्चारप्रपीडितः ॥

[5]परदारान्न गच्छेत्तु मनसाऽपि कथंचन ।
मृतो नरकमभ्येति हीयेतात्रापि चाऽऽयुषः ।
परदाररतिः पुंसामुभयत्रापि भीतिदा ॥

---

$ संसौ. मपावत् ।

(१) आत. ४६३.

(२) हमा. १२१ ; मपा. ३४९ वमि (बुप) द्वितीयपादे (स्वपत्न्यां मन्त्रतो द्विज) पू. ; गप. ४६१ मर्क्षे (न्मृक्षे) श्रेष्ठे (स्त्रियो) ब्रह्माण्डे ; संसौ. ३५ वमि (बुप) द्वितीयपादे (सुपत्न्यां मन्त्रतो द्विज) पू. ; पुम. ४३१ सर्वं मपावत्.

(३) हमा. १२१ तु (तां) ; पमा. ५०० नास्नातां (न स्नातां) उत्तरार्धे (नानिष्टां न प्रकुपितां नाप्रशस्तां न रोगिणीम् ॥) ; मर. ११२ ; गप. ४६१ नास्नातां (न स्नातां) ब्रह्माण्डे ; आप्र. ५६३ उत्तरार्धे (नानिष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम् ॥) ; विपा. ९३ (=) उत्तरार्धे (नानिष्टां न प्रकुपितां नाप्रशस्तां न गुर्विणीम् ॥) ; बाल. १।८१ पृ. २२४ आप्रवत्.

(४) हमा. १२१ मामति (मां नाति) चैतै (चैभि) ; पमा. ५०० मामति (मां नाति) ; मर. ११२ द्वितीयपादे (नान्यकामां च योषितम्) ; गप. ४६१ स्वयं चैतै (स्त्रियं चैभि) ब्रह्माण्डे ; आप्र. ५६३ चैतै (चैभि) ; बाल. १।८१ पृ. २२४ भुक्तां वा (भुक्तान्नां) चैतै (चैभि).

(१) हमा. १२१ ; पमा. ५०० (नाऽऽध्मातः ... रागश्च०) ; मर. ११२ क्षुधि (कुपि) तृतीयपादे (सकामां सानुरागां च) ; गप. ४६१ प्रीतो (श्रान्तो) ब्रह्माण्डे ; आप्र. ५५८ स्रग्गन्ध (सुगन्ध).

(२) मर. ११२ नावयोनौ वा (नौ सदा गच्छेत्) स्तु वा (स्तथा) ; आप्र. ५६३ ; बाल. १।८१ पृ. २२४ धस्तु वा (धासु वा) ; संर. ६८८ उत्त.

(३) पमा. ४९९ ; मर. ११२ सौधेषु न चैव च (सारेषु गोष्ठे नैव) ; आप्र. ५६३ सौधे (शीते) वनस (वने स) ; बाल. १।८१ पृ. २२४ आप्रवत् ; संर. ६८८ सौधे (सीरे) पू.

(४) पमा. ४९९ उत्त. ; मर. ११२ ; आप्र. ५६३ प्रोक्तपर्व (प्रोक्ते पर्व) ; बाल. १।८१ पृ. २२४ आप्रवत्.

(५) पमा. ५०० द्वितीयार्धं नास्ति ; आत. ४६२ प्रथमार्धं नास्ति.

'इति मत्वा स्वदारेषु ऋतुमत्सु नरो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥

(१) एवं चानृतौ गमननिषेधपराणि वचनानि स्त्रियाः कामनाविरहे बोध्यानि । * चम. ६

## भागवतपुराणम्

व्यूढातिरिक्तस्त्रीगमननिषेधः

'लोके व्यवायामिषमद्यसेवा
नित्यास्तु जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञ-
सुराग्रहैरासु निवृत्तिरिष्टा ॥

नित्याः, रागतः प्राप्तेः । जन्तोः प्राणिमात्रस्य । अतस्तत्र चोदना विधिः नास्ति । नन्वेवम् 'ऋतौ भार्यामुपेयात्' 'हुतशेषं भक्षयेत्' '‡ सौत्रामण्यां सुराग्रहान् गृह्णाति' इत्येतेषां वैयर्थ्यम्, तत्राऽऽह– व्यवस्थितिरिति । तेषु पुनःप्रापणमित्यर्थः । रागतो नित्यप्राप्तत्वान्नैते विधयः, पाक्षिक्यां हि प्राप्तौ नियमो भवति, किंतु प्राप्तस्याप्यर्थस्य पुनः प्रापणमनर्थकमित्यपूर्वविधिद्वाराऽन्यनिवृत्तिं फलन्ति । तदाह– आसु निवृत्तिरिति । बाल. १।८१ पृ. २२८

## लिङ्गपुराणम्

चतुर्थ्यादिदिवसगमनजन्यपुत्रकन्यागुणदोषवर्णनम्

'चतुर्थे सा न गम्याऽहि गताऽल्पायुः प्रसूयते ।
विद्याहीनं व्रतभ्रष्टं पतितं पारदारिकम् ॥

* बाल. चमवत् ।

‡ वस्तुतोऽत्र 'सुराग्रहान् दक्षिणतः प्राचीनावीतिनो भक्षयन्ति' इति सुरापानविधायकं वचनं ग्रहीतुं योग्यम् ।

(१) पमा. ५०० नरो व्रजेत् ( व्रजेद्बुधः ) पू.; आत. ४६२ नरो ( बुधो ); चम. ६; बाल. १।८१ पृ. २२२; संर. ६८७.

(२) बाल. १।८१ पृ. २२८.

(३) पमा. ५०५; मर. ११० म्याऽहि ( म्या हि ); संको. १६ व्रतभ्रष्टं ( व्रताभ्रेष्ठं ); पुम. ४३१ गम्याऽहि गता ( गम्या हि यतो ) पारदारिकम् ( वा प्रसूयते ).

'दारिद्र्यार्णवमग्नं च तनयं वा प्रसूयते ।
कन्यार्थिनैव गन्तव्या पञ्चम्यां विधिवत् पुनः ॥

'षष्ठ्यां गम्या महाभाग सत्पुत्रजननी भवेत् ।
सप्तम्यां चैव कन्यार्थी गच्छेत्सैव प्रसूयते ॥
अष्टम्यां सर्वसंपन्नं तनयं संप्रसूयते ।
नवम्यां दारिकार्थं स्याद्दशम्यां पण्डितं तथा ॥
एकादश्यां तथा नारीं जनयत्येव पूर्ववत् ।
द्वादश्यां धर्मतत्त्वज्ञं श्रौतस्मार्तप्रवर्तकम् ॥
त्रयोदश्यां तथा नारीं वर्णसंकरकारिणीम् ।
जनयत्यङ्गना तस्मान्न गच्छेत्सर्वयत्नतः ॥
चतुर्दश्यां यदा गच्छेत्सुपुत्रजननी भवेत् ।
पञ्चदश्यां च धर्मज्ञां षोडश्यां ज्ञानपारगम् ॥

## स्कन्दपुराणम्

ऋतुगमनं नियतं ब्रह्मचर्यानपबाधकं च, दिवा श्राद्धदिने च गमननिषेधः, स्वदारनिरतत्वम्, ऋतुलक्षणम्, आद्यदिनचतुष्टयं वर्ज्यम्, युग्मायुग्मरात्रिगमने यथाक्रमं पुत्रकन्योत्पत्तिः

'ऋतुकालाभिगमनं धर्मोऽयं गृहिणां परः ।
स्त्रीणां वरमनुस्मृत्य यथाकाम्यथवा भवेत् ॥
दिवाऽभिगमनं पुंसामनायुष्यं परं मतम् ।
श्राद्धाहः सर्वपर्वाणि यत्नात्त्याज्यानि धीमता ।
तत्र गच्छन् स्त्रियं मोहाद्धर्मात्प्रच्यवते परात् ॥
ऋतुकालाभिगामी यः स्वदारनिरतश्च यः ।
स सदा ब्रह्मचारीह विज्ञेयः स गृहाश्रमी ॥
ऋतुः षोडश यामिन्यश्चतस्रस्तासु गर्हिताः ।
पुत्रास्तास्वपि युग्मासु अयुग्मासु च कन्यकाः ॥

भवन्तीति शेषः । विपा. ९३

(१) पमा. ५०५; मर. ११० पू.; संको. १६ दारिद्र्या ( दारिद्रा ) वा ( सा ) पू.

(२) पमा. ५०५.

(३) विपा. ९२–९३.

## पद्मपुराणम्

ऋतुलक्षणम्, युग्मायुग्मदिनगमने यथाक्रमं पुत्रकन्योत्पत्तिः

[1]ऋतुस्नाता भवेन्नारी चतुर्थे दिवसे ततः।
ऋतुकालस्तु निर्दिष्ट आषोडशदिनावधि।
तत्रायुग्मदिने स्त्री स्यात्पुमान्युग्मदिने भवेत्॥

षोडशदिनरूपोऽवधिः षोडशदिनावधिः, तमभिव्याप्येत्याषोडशदिनावधि। तथा च रजोदर्शनदिनमारभ्य षोडशदिनात्मक ऋतुकालो निर्दिष्टः। शास्त्रकारैरिति शेषः। एवं स्थिते नारी चतुर्थदिवसे ऋतुस्नाता भवेत्। ततः चतुर्थदिवसानन्तरं तत्र ऋतौ अयुग्मदिने पञ्चमादौ स्त्री स्यात्, युग्मदिने षष्ठादौ पुमान् भवेत्। यद्यपि रजोबाहुल्यादिकं स्त्रीत्वादौ हेतुतयोक्तं तथाऽप्ययुग्मायां रजोबाहुल्ये युग्मायां शुक्रबाहुल्ये च तावदविरोध एव। 'यदा त्वयुग्मायां शुक्रबाहुल्यं तदा तु पुमानेव भवति, किंतु स्त्र्याकृतिः। कालरूपनिमित्तकारणापेक्षयोपादानकारणीभूतस्य रजसः प्राबल्यात्' इति त्रिशानेश्वरप्रभृतयः। एवं युग्मायां रजोबाहुल्येऽपि स्त्र्येव पुरुषाकृतिर्भवतीत्यपि बोध्यम्। अत्र च षोडशदिनात्मकमृतुं निर्दिश्य चतुर्थदिवसानन्तरमेव पुत्राद्युत्पत्तिं वदता आद्यचतुष्टयं वर्ज्यमिति सूचितम्। संर. ६८१–६८२

## कूर्मपुराणम्

आपुत्रोत्पत्ति ऋतुगमनस्य नियतत्वम्, ऋतुकाले अनिषिद्धदिनेषु स्वदारगमनं ब्रह्मचर्यानपबाधकम्

*[2]ऋतुकालाभिगामी स्याद्यावत् पुत्रोऽभिजायते॥

* अस्य चकाव्याख्यानं 'यः स्वदारान्' इति स्मृत्यन्तरवचनव्याख्याने द्रष्टव्यम्।

(१) संर. ६८१ पाद्मीयशिवगीतास्थवचनम्.

(२) स्मृच. १६; चका. ७३०; पमा. ५०१; गप. ४५७ द्वितीयपादे (यदि पुत्रो न जायते); उत. १४७ त्रोऽभिजा (त्रो न जा); मुक्ता. ७६; संम. ११; कृम. ८१७ मनुः; संर. ६८६.

[1]ऋतुकालाभिगामित्वं स्वदारेषु रतात्मनः।
पर्ववर्ज्यं गृहस्थस्य ब्रह्मचर्यमुदाहृतम्॥

## शिवरहस्ये

दिवा जन्मदिनादिषु च मैथुननिषेधः

[2]दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती।
श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोर्थी न च पर्वसु॥

यत्तु हेमाद्रौ शिवरहस्ये 'दिवा जन्मदिने०' इति श्राद्धदानभोजनदिवसे स्त्रीगमननिषेधः सोऽनृतुविषयः। दर्शादौ तु न भवत्येव, पर्वणां पर्युदस्तत्वात्। संर. ६८१

## अनिर्दिष्टकर्तृकवचनानि

ऋतावेव गमनम्, अपररात्रे मूत्रोत्सर्गयोनिपादप्रक्षालनभर्तृपादवन्दनपूर्वकं मृदुशय्यासमावेशनम्, उपानद्वेणुदण्डजलपात्रादिस्थापनम्, स्त्रियाः प्राक्शिरस्कत्वम्, स्त्रीपुंसयोस्ताम्बूलभक्षणम्, वर्ज्यताप्रयोजकस्त्रीविशेषणानि, गमनेतिकर्तव्यता, दीपप्रकाशे एव मैथुनम्, गमने ताडनपादलग्नतादिरूपं मर्यादातिक्रमणं न दोषावहम्, निन्दितदिनेषु प्रदोषे च गमननिषेधः, गमनकाले कञ्चुकताडपत्रधारणनिषेधः, भर्तृकामभङ्गे दोषः, अधरपाने उच्छिष्टदोषाभावः, भर्तृशरीरे छायापाते दोषः, गमनकालस्मृतपुरुषसादृश्यमपत्यस्य, पतिस्मरणविधिः, स्त्रिया आर्द्रपादतानिषेधः, ऋतुलक्षणम्, गमनोत्तरं प्रस्वापो हितावहः

[3]ऋतुमत्यां तु भार्यायां तत्र सङ्गादिकं चरेत्।
अनर्तुमत्यां भार्यायां न सङ्गमिति केचन॥
[4]मूत्रादिकं ततः कृत्वा योनिं प्रक्षालयेज्जलैः।
पूर्वरात्रे व्यतीते तु संगच्छेद्रतिमन्दिरे॥

(१) आम. ८६.

(२) चका. ७२४; मर. ११२; सिन्धु. ८१५; संर. ६८१.

(३) धप्र. ३५.

(४) धप्र. ३५ ते तु (पाते); संग. ३७२ संगच्छे (स गच्छे) मन्दिरे (मन्दिरम्) धर्मप्रवृत्तौ.

[1]पादौ प्रक्षालयेत्पूर्वं पश्चाच्छय्यां समाविशेत् ।
मृदुशय्यास्थितः शेते रिक्तशय्यां परित्यजेत् ॥
[2]उपानहौ वेणुदण्डमम्बुपात्रं तथैव च ।
ताम्बूलादीनि सर्वाणि समीपे स्थापयेद्गृही ॥
[3]कुङ्कुमं चाञ्जनं चैव सिन्दूरं चन्दनं तथा ।
धौतवस्त्रं च ताम्बूलं संयोगे च शुभावहम् ॥
[4]भर्तुः पादौ नमस्कृत्य पश्चाच्छय्यां समाविशेत् ।
सा नारी सुखमाप्नोति न भवेद्दुःखभागिनी ॥
[5]स्वपेत् स्त्री प्राक् शिरः कृत्वा प्रत्यक् पादौ प्रसारयेत् ।
ताम्बूलचर्वणं कृत्वा सकामो भार्यया सह ॥
[6]ताम्बूलेन मुखं पूर्णं कुङ्कुमादिसमन्वितम् ।
प्रीतिमाह्लाद( ? मद्ह्लाद )संयुक्तं कृत्वा योगं समाचरेत् ॥
[7]विना ताम्बूलवदनां नग्नामत्यन्तरोदनाम् ।
दुर्मुखां च क्षुधा युक्तां संयोगे च परित्यजेत् ॥

(१) धप्र. ३५ ; संग. ३७२ पू., धर्मप्रवृत्तौ.

(२) धप्र. ३५ ; संग. ३७२ धर्मप्रवृत्तौ.

(३) धप्र. ३५ द्वितीयपादे ( तथा हरितसुन्दरे ) ; ज्योनि. २३७ सिन्दूरं चन्दनं ( ताम्बूलं सिन्दूरं ) ताम्बूलं ( कुसुमं ) नीतिशास्त्रे ; बाल. १।८१ पृ. २२५ ; संग. ३७२ द्वितीयपादे ( तथा हारिद्रसिन्दुरम् ) धर्मप्रवृत्तौ ; संर. ६८९ ज्योनिवत् .

(४) धप्र. ३५ ; आम. ८६ पू. ; ज्योनि. २३७ प्रथमपादे ( नमस्कृत्य भर्तृपादौ ) नीतिशास्त्रे ; बाल. १।८१ पृ. २२५ ; संग. ३७२ उत्त., धर्मप्रवृत्तौ ; संर. ६८९ ( नमस्कृत्वा भर्तृपादौ पश्चाच्छय्यां समाविशेत् । नारी सुखमवाप्नोति न चेद्दुःखस्य भागिनी ॥ ).

(५) धप्र. ३५–३६ ; संग. ३७२ कृत्वा ( कुर्यात् ) धर्मप्रवृत्तौ.

(६) धप्र. ३६ ; बाल. १।८१ पृ. २२५ माह्लाद-संयुक्तं ( हर्षसमुद्योगं ) ; संग. ३७२ दसंयुक्तं (दिकैर्युक्तं) योगं स ( संयोग ) धर्मप्रवृत्तौ.

(७) धप्र. ३६ नग्नामत्यन्त ( न कामाक्रान्ति ) ; ज्योनि. २३७ विना ता ( गलत्ता ) मत्यन्तरोदनाम् ( माक्रन्दतीं तदा ) च परित्यजेत् ( परिवर्जयेत् ) नीतिशास्त्रे ; बाल. १।८१ पृ. २२५ क्षुधा युक्तां (क्षुधार्तां च) ; संग. ३७२ मत्यन्तरोदनाम् । दुर्मुखां ( माक्रान्तरोगिणीम् । दुर्मुखीं ) धर्मप्रवृत्तौ ; संर. ६८९ विना ता ( गलत्ता ) मत्यन्त ( माक्रन्द ) च परित्यजेत् ( परिवर्जयेत् ).

[1]भुक्तवानुपविष्टस्तु शय्यायामभिसंमुखः ।
संस्मृत्य परमात्मानं पत्न्या जङ्घे प्रसारयेत् ॥
[2]आलोमशां च सुदृढामनार्द्रां सुमनोहराम् ।
योनिं स्पृष्ट्वा जपेत्सूक्तं विष्णुर्योनिं प्रजापते ॥
[3]योनिं पश्येज्जपेन्मन्त्रावसुनीते पुनस्त्विति ।
मादृशस्तु भवेत्पुत्र इति मत्वा स्मरेद्धरिम् ॥
[4]ओष्ठौ विवर्जयेद्वर्गम(?)न्योन्यमवलोकयेत् ।
स्तनौ धृत्वा तु पाणिभ्यामन्योन्यं चुम्बयेन्मुखम् ॥
[5]बलं धेहीति मन्त्रेण योन्यां शिश्नं प्रवेशयेत् ।
योनेश्च किंचिदधिको भवेल्लिङ्गो बलान्वितः ॥
[6]संभोगे चैव भार्यायाः सुदृढः स्थिरवीर्यवान् ।
स्कन्धौ वाऽथ कटिं धृत्वा यथेष्टं मैथुनं चरेत् ॥
[7]इष्टापूर्तं( ? इच्छापूर्तिर् ) भवेद्यावदुभयोः कामयुक्तयोः ।
रेतः सिञ्चेत्ततो योन्यां तस्माद्गर्भं बिभर्ति सा ॥

(१) धप्र. ३६ जङ्घे ( जङ्घां ) ; आम. ८६ उत्त. ; संग. ३७२–३७३ धर्मप्रवृत्तौ स्मृत्यन्तरे.

(२) धप्र. ३६ पते ( पतिम् ) ; आम. ८६ पते ( पतेः ) उत्त. ; संग. ३७३ आलोम ( अलोम ) धर्मप्रवृत्तौ स्मृत्यन्तरे.

(३) धप्र. ३६ ; संग. ३७३ मादृशस्तु ( मत्सदृशो ) धर्मप्रवृत्तौ स्मृत्यन्तरे.

(४) धप्र. ३६ ; संग. ३७३ वर्जयेद्वर्गम ( सर्जयेन्मन्त्रेणा ) धर्मप्रवृत्तौ.

(५) धप्र. ३६ दधिको ( दाधिक्यो ) लिङ्गो ब ( लिङ्गब ) ; संग. ३७३ योनेश्च ( योनेस्तु ) धर्मप्रवृत्तौ.

(६) धप्र. ३६ ; संग. ३७३ संभोगे ( संभोगं ) सुदृढः ( सुदृढं ) धर्मप्रवृत्तौ.

(७) धप्र. ३६ ; आम. ८६ उत्त. ; संग. ३७३ इष्टापूर्तं ( इच्छापूर्णं ) धर्मप्रवृत्तौ.

[1]ऋतुकालोपगामी तु प्राप्नोति परमां गतिम् ।
सत्कुले प्रभवेत्पुत्रः पितॄणां स्वर्गदो भवेत् ॥

[2]ताम्बूलमादौ चर्वित्वा भार्यासङ्गं समाचरेत् ॥

[3]चन्दनं चानुलिप्याङ्गे धृत्वा पुष्पाणि दम्पती ।
ताम्बूलचर्वणे कृत्वा प्रदीपे मैथुनं चरेत् ॥

[4]दीपे नष्टे च यः सङ्गं करोति मनुजो यदि ।
यावज्जन्म दरिद्रत्वं लभते नात्र संशयः ॥

[5]पादलग्नतनुश्चैव ह्युच्छिष्टं ताडनं तथा ।
कोपो रोषश्च निर्भर्त्सा संयोगे न च दोषभाक् ॥

[6]प्रदोषकाले या नारी पतिसङ्गं समाचरेत् ।
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥

[7]कञ्चुकेन समं नारी भर्तृसङ्गं समाचरेत् ।
त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम् ॥

(१) धप्र. ३६ ; संग. ३७३ तु ( यः ) धर्मप्रवृत्तौ.

(२) संर. ६९० ज्योतिर्ग्रन्थे.

(३) धप्र. ३५ पुष्पाणि ( पुष्पादि ) ; संग. ३७२ धर्मप्रवृत्तौ स्मृत्यन्तरे.

(४) धप्र. ३६ लभते ( भवते ) ; ज्योनि. २३७ नष्टे च यः सङ्गं ( प्रदीप्ते संभोगं ) नीतिशास्त्रे ; संग. ३७२ च ( तु ) लभते ( जायते ) धर्मप्रवृत्तौ स्मृत्यन्तरे ; संर. ६८८ दीपे नष्टे च ( दीपेऽप्रदीप्ते ) ज्योतिर्निबन्धे.

(५) धप्र. ३५ ह्युच्छि ( उच्छि ) तृतीयपादे ( कोपं रोषं च निर्भर्त्स्य ) ; ज्योनि. २३७ नीतिशास्त्रे ; संग. ३७२ ह्युच्छि ( द्व्युच्छि ) उत्तरार्धे ( कोपं रोषं च निर्भर्त्स्यं संयोगे च न कर्मभाक् ॥ ) धर्मप्रवृत्तौ स्मृत्यन्तरे ; संर. ६८९ पादल ( पादो ल ) ह्युच्छि ( उच्छि ) तृतीयपादे ( कोपं रोषं च निर्भर्त्सं ).

(६) बाल. १।८१ पृ. २२५ उत्त. तच्च उत्तरश्लोकपूर्वार्धानन्तरम् ; संर. ६८९.

(७) ज्योनि. २३७ नीतिशास्त्रे ; बाल. १।८१ पृ. २२५ केन समं ( कीसहिता ) भर्तृ ( पति ) पूर्वोत्तरार्धयोर्मध्ये पूर्वश्लोकोत्तरार्धे पठितम् ; संर. ६८९ भर्तृस ( भर्तुः स ).

[1]ताडपत्रमिलत्कर्णा यदि मैथुनमाचरेत् ।
पञ्चमे सप्तमे वर्षे वैधव्यमिह जायते ॥

[2]कामातुरेण पतिना संयोगे यदि याचिता ।
निवारयति तं नारी बालरण्डा भवेत्सदा ॥

[3]भर्तुरुच्छिष्टं सदा भोज्यमन्नं ताम्बूलमेव च ।
उच्छिष्टं न तु भुञ्जीत गृहस्थो ह्यधरं विना ॥

[4]दीपेनाऽऽत्मतनुच्छायां भर्तुश्चोपरि चेत्त्यजेत् ।
तौ दम्पती दरिद्रत्वमाप्नुवीतां विनिश्चितम् ॥

[5]नारी संयोगकाले तु कान्तादन्यं स्मरेत्सदा ।
तद्रूपशीलवर्णाढ्यं बालं सूते सुनिश्चितम् ॥
तस्मात्पतिव्रता नारी स्मरेदृतुमती पतिम् ।
सूते पतिगुणैर्युक्तमायुष्मन्तं च सात्त्विकम् ॥

[6]आर्द्रपादा च या नारी पतिसङ्गं समाचरेत् ।
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥

[7]वर्जयेद्गुर्विणीं वृद्धामतिबालां रजस्वलाम् ।
वर्जयेद्विधवां वन्ध्यां रोगिणीं च तपस्विनीम् ।
नानुरक्तामुदासीनां व्रतस्थां चैव वर्जयेत् ॥

[8]ऋतुस्नातां स्त्रियं गच्छेन्नाऽऽतुरां न रजस्वलाम् ।
नातिबालां न कुपितां नाप्रशस्तां न गर्भिणीम् ॥

(१) ज्योनि. २३७ पूर्वार्धे ( तद्वत्पत्रमिलत्कर्णा दानं वा मैथुनं चरेत् । ) नीतिशास्त्रे ; बाल. १।८१ पृ. २२५ पूर्वार्धे ( तालपत्रमिलत्कर्णा दयिता मैथुनं चरेत् । ) ; संर. ६८९.

(२) ज्योनि. २३७ पतिना संयोगे (या भर्त्रा संयोगं) तं ( सा ) नीतिशास्त्रे ; संर. ६८९.

(३) ज्योनि. २३७ नीतिशास्त्रे ; संर. ६८९.

(४) संर. ६९०.

(५) बाल. १।८१ पृ. २२५.

(६) ज्योनि. २३७ आर्द्रपादा च ( अप्रजा यदि ) नीतिशास्त्रे ; बाल. १।८१ पृ. २२५.

(७) बाल. १।८१ पृ. २२५.

(८) विपा. ३७० ( भागः २ ).

[1]ऋतुस्तु षोडशाहानि यामिन्योऽष्टौ विनिन्दिताः।
तासामाद्याश्चतस्रश्च सप्तम्येकादशी च या।
त्रयोदशी च नवमी शस्ता शेषास्तु रात्रयः॥
[2]रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि॥

गृहकर्मणि पाकादौ। कूम. ८२१

[3]दिवा वा यदि वा रात्रौ यत्कालं मैथुनं व्रजेत्।
अनन्तरं प्रस्वपतो बलवर्णौ प्रसीदतः॥

यद्यपि दिवा मैथुनं निषिद्धं तथाऽप्येतद्वाक्यस्य निषेधमुल्लङ्घ्य तदाचरणवतोऽशक्य पथ्योपदेशकत्वाद्विरोधः। गप. ४४९

पुरुषायुषस्य षोडशवर्षात्पूर्वे सप्ततितमात्परं च मैथुने दोषः, सप्तममासात्परं गर्भिणीगमननिषेधः, अनृतुगमननिषेधः, नित्यनान्दीमुखश्राद्धयोर्गमनाप्रतिबन्धकत्वम्, मैथुने उपवीतम्, अनिषिद्धभोगत्यागस्य निन्दा, ऋतुभेदेन गमनान्तरालव्यवस्था, शुक्रवेगधारणे दोषः तदपवादश्च, सकृन्मैथुनविधिः, स्त्रीपुंसयोराहाराचारचेष्टानां पुत्रे संक्रमः, स्त्रीपुंसयोर्गमनानुकूलवयोनियमः, रजस्वलागमननिषेधः, दिवागमननिषेधः

[4]नर्ते वै षोडशाद्वर्षात् सप्तत्याः परतोऽपि वा।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति॥

स्त्रिया ऋतुसत्वे स्त्रीकामनायां सप्ततिवर्षस्यापि पुरुषस्य ऋतावनृतौ स्त्रीगमनेऽधिकारः। तथा च वृद्धाः— नर्ते वै इति। षोडशवर्षादृते षोडशं विनेत्यर्थः। तथा च षोडशवर्षादूर्ध्वे सप्ततिवर्षपर्यन्तं स्त्रीगमनेऽधिकार इत्यर्थः। ननु 'द्वितीयमायुषो भागं कृतदारो गृहे वसेत्।' इत्युक्त्या पञ्चाशद्वर्षपर्यन्तमेव गार्हस्थ्योक्तेस्तदूर्ध्वे गृहस्थधर्ममध्यपतितस्त्रीगमनस्यापि निषेधः प्रतीत इति चेत्, न, 'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्॥' इति मनूक्तौ अव्यवस्थितकालवलीपलितपौत्रोत्पत्त्यवधित्वेन गार्हस्थ्यस्मृतेः, एवं चतुर्विंशतिवर्षावधिकस्याऽऽयुःप्रथमभागस्य ब्रह्मचर्यकालत्वेनोक्तावपि तन्मध्ये संपूर्णवेदैकशाखस्य स्नातकत्वेन पञ्चदशचतुर्दशवर्षादौ विवाहे पञ्चविंशतिवर्षात्पूर्वमृतावभिगमनस्याशास्त्रीयत्वापत्तेश्च। तथा च पञ्चाशद्वर्षादूर्ध्वमपि गृहस्थाश्रमित्वे ऋतुगमनं न विरुद्धम्, कूर्मपुराणे 'उदासीनः साधकश्च गृहस्थो द्विविधो मतः। कुटुम्बभरणे सक्तः साधकोऽसौ गृही भवेत्॥ ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्यागृहादिकम्। एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः॥' इति गृहस्थस्यैव द्वैविध्योक्तेः। गप. ४५८

[5]आरभ्य सप्तमान्मासान्न गच्छेद्गर्भिणीं स्त्रियम्॥

[6]पर्वण्यनारोग्यम्। अनृतावपि गच्छन् पत्नीं त्रिरात्रमुपवसेत्॥

[7]नित्ये नान्दीमुखश्राद्धे कृते दानाद्यवर्जनम्॥

[8]दक्षकर्णे च मूत्रे तु पुरीषे वामकर्णके।
धारयेद्ब्रह्मसूत्रं तु मैथुने ह्युपवीतवान्॥

अनिषिद्धं सुखं भोगं कलाभ्यासं धनार्जनम्।
धर्मं सत्यं च यो जह्यात् स वै मूढोऽथवा पशुः॥

[9]द्व्यहाद्वसन्ते तस्यान्ते ततः पक्षाद् घनोदये।
सेवेत कामतः कामं हेमन्ते शिशिरेऽपि च॥

[10]पक्षे वसन्तशरदोर्मासे ग्रीष्मनिदाघयोः।
सेवेत कामतः कामं हेमन्ते शिशिरेऽपि च॥

[11]पक्षान्निदाघे हेमन्ते नित्यमन्यर्तुषु त्र्यहात्।
स्त्रियं कामयमानस्य जायते न बलक्षयः॥

(१) मर. १०९. (२) कूम. ८२१.
(३) गप. ४४९ वैद्यशास्त्रे. (४) गप. ४५८.

(१) विपा. ९३. (२) आत. ४६३.
(३) संत. ९०९. (४) ज्योनि. २३७.
(५) चका. ७३२ आयुर्वेदे. (६) चका. ७३२.
(७) ज्योनि. २३६–२३७ कामशास्त्रे; संर. ६८८ कामशास्त्रे.

¹इदं वात्स्यायने प्रोक्तं वाग्भटोक्तमथोच्यते ।
त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षनिदाघयोः ।
सेवेत कामतः कामं हेमन्ते शिशिरे बली ॥

यत्तु वाग्भट्टी( ? टी )ये– 'त्र्यहाद्वसन्त०' इत्युक्तं तत्र बलीत्यभिधानेन दृष्टार्थत्वोक्तेर्यथाबलं व्यवस्था । संर. ६८८

²एतद्विधानं केऽप्याहुः सुगर्भाधानहेतवे ।
अव्यङ्गो रूपवान् पुष्टो गर्भः स्यान्नान्यथा यतः ॥

³आयुर्वेदविदः प्राज्ञा ऊचिरे वेगधारणात् ।
शुक्रविण्मूत्रपूर्वाणां( ? ) देहधातुपरिक्षयम् ॥
व्रती योगी मिताशी च रोगी व्यायामकृत्तथा ।
न सेवेत स्त्रियं तेषां बीजरोधो न बाधकः ॥

⁴वामशायी द्विभोजी च षण्मूत्री द्विः पुरीषकृत् ।
सकृन्मैथुनकारी च ......... ॥

⁵आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ।
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥

⁶पुमान् विंशतिवर्षश्चेत् पूर्णषोडशवर्षया ।
स्त्रिया संगच्छते गर्भाशये शुद्धे रजस्यपि ॥
वीर्ये च स्यादृशापत्यं तयोर्न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥

'सैषा ब्रह्महत्या स्त्रीणां यन्मासि मासि रजोदर्शनम् । यस्ततो जायते सोऽभिशस्तः ॥

⁷अल्पायुरल्पवीर्यो वा क्लीबो वाऽप्यत्र जायते ।
एवं प्रदुष्यते गर्भो दिवामैथुनसंभवः ॥

अनृतावप्येतत् । यदाह आपस्तम्बः– 'गृहमेधिनां व्रतमहन्यसंवेशमृतौ' । चका. ७२३

(१) ज्योनि. २३७ कामशास्त्रे ; संर. ६८८ प्रथमार्धं नास्ति, वाग्भटीये.

(२) ज्योनि. २३७ कामशास्त्रे.

(३) गुर. ४०३ आयुर्वेदे.

(४) संसौ. ३१.

(५) चका. ७२८ ज्योतिःशास्त्रे.

(६) स्मृच. १५.

(७) चका. ७२३ ज्योतिःशास्त्रे.



## संग्रहकारः

मैथुनकाले तर्जन्यां रौप्यधारणे शिखाया ब्रह्मग्रन्थियुतत्वे च प्रायश्चित्तम्

¹तर्जनीं रौप्यसंयुक्तां ब्रह्मग्रन्थियुतां शिखाम् ।
भोजने मैथुने मूत्रे कुर्वन् कृच्छ्रेण शुध्यति ॥

मैथुनकाले तर्जन्यां रौप्यं चेत् तत् परित्याज्यं शिखा च विसर्जनीया, 'तर्जनीं रौप्यसंयुक्तां०' इति संग्रहे प्रायश्चित्तश्रवणात् । संर. ६९१

## वराहसंहितायाम्

शुक्रशोणितयोस्तारतम्ये साम्ये च पुत्रकन्यानपुंसकानामुत्पत्तिः

²रक्तेऽधिके स्त्री पुरुषस्तु शुक्रे
नपुंसकं शोणितशुक्रसाम्ये ॥

## स्मृत्यर्थसारः

ऋतुलक्षणम्, मैथुनेनाशुचित्वम्, शयनोत्थितायाः स्त्रिया अशुचित्वाभावः, गमनोत्तरशुद्धिः

³रजःप्रभृति षोडशरात्रान्त ऋतुकालः ॥
उभावप्यशुची स्यातां दम्पती मिथुनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥
ऋतौ तु मैथुने स्नायाद्गर्भधारणशङ्कया ।
अनृतौ तदभावाच्च शौचं मूत्रपुरीषवत् ॥

## श्रीपतिः

कृतवाजीकरणः जितरोषभयश्च गमनार्हः

⁴वेदागमोक्तसमये रुचिरे प्रदेशे
वाजीकृतेन जितरोषभयेन पुंसा ।
मन्त्रौषधप्रवरतीर्थजलोज्ज्वलेषु
कान्ताजनेष्वथ निषेकविधिर्विधेयः ॥

(१) संर. ६९१.

(२) संसौ. ३५.

(३) स्मृसार. ३, ३१–३२.

(४) प्रपा. १०६ ; संसौ. २७ रुचिरे प्र (तु चिरप्र) भयेन ( चयेन ) जलोज्ज्व ( जलोत्प ) कालविधाने.

वाजीकृतेन कृतकान्दर्पिकद्रव्यसेच( ? व )नेन ।

संकौ. २७

## कालादर्शे

ऋतुलक्षणम्, युग्मायुग्मदिनगमने यथाक्रमं पुत्रकन्योत्पत्तिः, उत्तरोत्तररात्रिप्राशस्त्यम्

[1]रजोदृष्टेश्चतुर्थ्याद्या( ? र्थादा )षोडशाहादृतुः स्मृतः ।
पुत्रोत्पत्तिकरा युग्मा वासराः सप्त शोभनाः ॥
पुत्र्युत्पत्तिकराः षट् च मध्यमाश्चायुजः स्मृताः ।
अतिप्रशस्ता दिवसा उभयत्रोत्तरोत्तराः ॥

रजोदर्शनमारभ्य चतुर्थ्याद्या( ? र्थाद्या ) आषोडश-( ? शं ) त्रयोदश वासरा ऋतुः । गर्भोत्पत्त्यनुगुणकाल ऋतुः । उभयत्र युग्मास्वयुग्मासु च । मुक्ता. ७७

## ज्योतिर्निबन्धे

गमनादौ भार्यया दीपः प्रज्वालनीयो भर्ता नमस्कार्यश्च

[2]भार्यैव दीपं प्रज्वाल्य पत्युश्चित्तानुवर्तिनी ।
नमस्कृत्य तु भर्तारं रमयेत् सह तेन तु ॥

अयं च दीपो भार्ययैव प्रज्वालनीयः । तदुक्तं तत्रैव 'भार्यैव दीपं०' इति । दीपे शलाकां प्रज्वाल्य तेन दीपप्रज्वालनं कार्यम्, न तु साक्षाद्दीपे, 'दीपेन दीपं प्रज्वाल्य दरिद्री( ? द्रो ) व्याधिमान्भवेत् ।' इति लैङ्गे दोषस्योक्तेः ।

संर. ६८८

## रहस्ये

धूपदीपादियुते रतिमन्दिरे सुवेषभूषायुता स्त्री गम्या

[3]विशदविमलदीपे पुष्पमालाप्रकीर्णे
प्रसृतसुरभिधूपे धाम्नि कामी सुवेषाम् ।
सहसहचरवर्गे वामपार्श्वे निवेश्य
स्त्रियमुपहितभूषां भावयेन्नर्मगोष्ठीम् ॥

(१) मुक्ता. ७७.
(२) संर. ६८८.
(३) प्रपा. १०६.

## आचारसारे

श्यामायां यथाकामं गमनम्

[1]यथाकामं स्त्रियं गच्छेच्छक्तः कामी युवा गृही ।
श्यामां कान्तां विशेषेण सुखसंभोगहेतुतः ॥

## रतिप्रकाशे

गमने दीपसांनिध्यम्, स्त्रियाः सकञ्चुकत्वे प्रायश्चित्तम्

[2]दीपसमीपे रतिं कुर्यात् ॥
[3]सकञ्चुकरतिं कृत्वा सचैलं स्नानमाचरेत् ॥

संभोगकाले स्त्रियमकञ्चुकां कृत्वा भोगं कुर्यात्, 'सकञ्चुकरतिं०' इति रतिप्रकाशे प्रायश्चित्तश्रवणात् ।

संर. ६९१

## रेणुकारिकाः

ऋतुलक्षणम्, युग्मायुग्मदिनेषु यथाक्रमं पुत्रकन्योत्पत्तिः, वर्ज्यदिवसाः, रजोनिवृत्तावेव चतुर्थे गमनम्, श्राद्धसंबन्धे दिवा च गमननिषेधः, सकृद्गमनम्, चतुर्थ्यादिरात्रिगमनजातपुत्रकन्यावर्णनम्, ऋतुयोगपद्ये व्यवस्था, ऋतुगमननियमः, गमनेतिकर्तव्यता, पञ्चविधसुरतानां गर्भाधाने रतौ च व्यवस्था, यथास्त्रीकामं गमनम्, गमनोत्तरशुद्धिः, गर्भधारणचिह्नानि, मनसो व्याकुलत्वेऽपत्यदोषः, शुक्रशोणितयोस्तारतम्ये द्विधाभावे च पुत्रकन्यानपुंसकयमलोत्पत्तिः युग्मायुग्मरात्रिषु विशेषश्च, शुक्रस्याल्पत्वनिःसारत्वयोर्गर्भधारणाभावः, शुक्रवृद्ध्युपायाः

[4]गर्भाधानाङ्गभूतत्वादृतुः प्रागभिधीयते ।
रजस्वलाया नियमो गमनागमनादिकम् ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥

(१) ज्योनि. २३७.
(२) संर. ६८८.
(३) संर. ६९१.
(४) रेका. ५–७ पृ. १–२.

स्नानादूर्ध्वं चतस्रस्तु वर्जयेत् कैश्चिदीरितम् ।
मनुवाक्यविरोधेन ज्ञेयं (? हेयं) तद्बहुसंमतात् ॥
स्नानादूर्ध्वमृतौ गच्छेदनिषिद्धासु तां स्त्रियम् ।
समरात्रिषु पुत्रार्थी कन्यार्थी विषमासु च ॥
अमावास्याऽष्टमी चैव पौर्णमासी चतुर्दशी ।
ऋतोराद्याश्चतस्रश्च तस्मादेकादशी तिथिः ।
त्रयोदशी त्यजेदेता गमनेऽनिष्टदाः स्मृताः ॥
चतुर्थेऽहनि यत्प्रोक्तं गमनं देवलादिभिः ।
रजोनिवृत्तौ द्रष्टव्यं प्रशस्तास्वपि रात्रिषु ॥
श्राद्धस्याऽऽद्यां श्राद्धरात्रिं श्राद्धं भुक्त्वा त्यजेत् स्त्रियम् ।
अल्पवीर्यं दिवाक्लीबं प्रसूयाद्यो दिवा व्रजेत् ।
आहतुः शङ्खलिखितौ जायतेऽल्पायुरेव सः ॥
सुस्थ इन्दौ सकृद्गच्छेदृतावा पुत्रजन्मनः ।
तस्योद्गमे शुभायैतदिति ज्योतिर्विदां मतम् ॥
रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः ।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः ।
नवम्यां सुभगा दारा दशम्यां चतुरः पुमान् ॥
एकादश्यामधर्म्या स्त्री द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां सुता तस्य वर्णसंकरकारिणी ॥
धर्मध्वजः कृतघ्नः स्यादात्मवेदी दृढव्रतः ।
प्रजायते चतुर्दश्यां गुणौघैर्जगतः पतिः ॥
राजपत्नी महाभागा सा राजवशगाऽथवा ।
जायते पञ्चदश्यां तु बहुपुत्रा पतिव्रता ॥
विद्यालक्षणसंपूर्णः सत्यवादी जितेन्द्रियः ।
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥
बह्वीनामपि पत्नीनामृतुश्चेद्यु( ? द्यौ )गपद्यतः ।
वर्णक्रमेण वा गच्छेद्विवाहक्रमशोऽपि वा ।
रक्षणार्थमपुत्रां वा पूर्वमित्याह देवलः ॥
स्वस्थः सन् संनिधौ भार्यां न गच्छेदृतुकालतः ।
पितरस्तस्य तन्मासं तस्मिन् रेतसि शेरते ॥

(१) रेका. २३–४२ पृ. ३–४, ४८–५३ पृ. ४–५.

अपुत्रस्यैव दोषोऽयमृत्वतिक्रमणे भवेत् ।
ज्येष्ठे जाते न दोषोऽस्ति कामजा इतरे यतः ॥

पत्योत्तानां स्त्रियं पश्चाद्वाजिनः श्रुतिदर्शनात् ।
निगमोक्त्या ब्रह्मसूत्रं कृत्वा मूत्रपुरीषवत् ।
वायुसूर्यस्थितौ गच्छेत् करणैर्नागरादिभिः ॥

वात्स्यायनादिभिः पञ्चविधं सुरतमीरितम् ।
तत्राऽऽद्यं सुरतं गर्भाधाने शौनकसूत्रतः ।
इतराण्येव चत्वारि रत्यर्थं तानि ते विदुः ॥

नागराद्यवगन्तव्यं करणं रतिशास्त्रतः ।
चुम्बनैर्दशनैर्घातैर्नखाद्यैः सुरतं यदि ।
प्रसूते चतुरं पुत्रं विप्रं छान्दसमन्यथा ॥

यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ।
ब्रह्मणा हि वरो दत्तस्तासां कामो यथेच्छया ॥

ऋतौ तु गर्भशङ्कायां स्नानं मैथुनिनः स्मृतम् ।
अनृतौ मूत्रवच्छौचं द्विगुणं तदृतौ स्त्रियाः ॥

गर्भशङ्काऽवगन्तव्या सुश्रुतोक्तैः श्रमादिभिः ।
श्रमो ग्लानिः पिपासा वाऽनुबन्धे रक्तशुक्रयोः ।
सद्यो गृहीतगर्भायां योन्याश्च स्फुरणं भवेत् ॥

दम्पत्यो रतिकाले चेदुद्वेगव्याकुलितं मनः ।
अन्धाः खञ्जाश्च जायन्ते तथा कुब्जाश्च वामनाः ।
गर्भे ये निषदि प्रोक्ता एतदाथर्वणश्रुतौ ॥

( ?गर्भोपनिषदि प्रोक्तमेतदाथर्वणश्रुतौ ॥ )
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समे नपुंसकं ज्ञेयं पुंस्त्रियोर्वाऽन्ययोगतः ॥
[१]यदि संयोगकाले च पुरुषो रागमोहितः ।
द्विधा समुत्सृजेच्छुक्रं यमलं तत्र जायते ॥
[२]निःसारेऽल्पे च शुक्रे स्यान्न गर्भो मनुवाक्यतः ।
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत् ॥

(१) रेका. ५४ पृ. ५ ; संग. ३७१ च ( तु ).
(२) रेका. ५५ पृ. ५ ; संग. ३७१.

वाजीकृतेन कृतकान्दर्पिकद्रव्यसेच( ? व )नेन ।

संसौ. २७

## कालादर्शे

ऋतुलक्षणम् , युग्मायुग्मदिनगमने यथाक्रमं पुत्रकन्योत्पत्तिः, उत्तरोत्तररात्रिप्राशस्त्यम्

[1]रजोदृष्टेश्चतुर्थ्याद्या( ? र्थादा )षोडशाहादृतुः स्मृतः ।
पुत्रोत्पत्तिकरा युग्मा वासराः सप्त शोभनाः ॥
पुत्र्युत्पत्तिकराः षट् च मध्यमाश्चायुजः स्मृताः ।
अतिप्रशस्ता दिवसा उभयत्रोत्तरोत्तराः ॥

रजोदर्शनमारभ्य चतुर्थ्याद्या( ? र्थाद्या ) आषोडश( ? शं ) त्रयोदश वासरा ऋतुः । गर्भोत्पत्त्यनुगुणकाल ऋतुः । उभयत्र युग्मास्वयुग्मासु च । मुक्ता. ७७

## ज्योतिर्निबन्धे

गमनादौ भार्यया दीपः प्रज्वालनीयो भर्ता नमस्कार्यश्च

[2]भार्यैव दीपं प्रज्वाल्य पत्युश्चित्तानुवर्तिनी ।
नमस्कृत्य तु भर्तारं रमयेत् सह तेन तु ॥

अयं च दीपो भार्ययैव प्रज्वालनीयः । तदुक्तं तत्रैव 'भार्यैव दीपं॰' इति । दीपे शलाकां प्रज्वाल्य तेन दीपप्रज्वालनं कार्यम्, न तु साक्षाद्दीपे, 'दीपेन दीपं प्रज्वाल्य दरिद्री( ? द्रो ) व्याधिमान्भवेत् ।' इति लैङ्गे दोषस्योक्तेः ।

संर. ६८८

## रहस्ये

धूपदीपादियुते रतिमन्दिरे सुवेषभूषायुता स्त्री गम्या

[3]विशदविमलदीपे पुष्पमालाप्रकीर्णे
प्रसृतसुरभिधूपे धाम्नि कामी सुवेषाम् ।
सहसहचरवर्गे वामपार्श्वे निवेश्य
स्त्रियमुपहितभूषां भावयेन्नर्मगोष्ठीम् ॥

(१) मुक्ता. ७७.
(२) संर. ६८८.
(३) प्रपा. १०६.

## आचारसारे

श्यामायां यथाकामं गमनम्

[1]यथाकामं स्त्रियं गच्छेच्छक्तः कामी युवा गृही ।
श्यामां कान्तां विशेषेण सुखसंभोगहेतुतः ॥

## रतिप्रकाशे

गमने दीपसांनिध्यम्, स्त्रियाः सकञ्चुकत्वे प्रायश्चित्तम्

[2]दीपसमीपे रतिं कुर्यात् ॥
[3]सकञ्चुकरतिं कृत्वा सचैलं स्नानमाचरेत् ॥

संभोगकाले स्त्रियमकञ्चुकां कृत्वा भोगं कुर्यात्, 'सकञ्चुकरतिं॰' इति रतिप्रकाशे प्रायश्चित्तश्रवणात् ।

संर. ६९१

## रेणुकारिकाः

ऋतुलक्षणम्, युग्मायुग्मदिनेषु यथाक्रमं पुत्रकन्योत्पत्तिः, वर्ज्यदिवसाः, रजोनिवृत्तावेव चतुर्थे गमनम्, श्राद्धसंबन्धे दिवा च गमननिषेधः, सकृद्गमनम्, चतुर्थ्यादिरात्रिगमनजातपुत्रकन्यावर्णनम्, ऋतुयोगपद्ये व्यवस्था, ऋतुगमननियमः, गमनेतिकर्तव्यता, पञ्चविधसुरतानां गर्भाधाने रतौ च व्यवस्था, यथास्त्रीकामं गमनम्, गमनोत्तरशुद्धिः, गर्भधारणचिह्नानि, मनसो व्याकुलत्वेऽपत्यदोषः, शुक्रशोणितयोस्तारतम्ये द्विधाभावे च पुत्रकन्यानपुंसकयमलोत्पत्तिः युग्मायुग्मरात्रिषु विशेषश्च, शुक्रस्याल्पत्वनिःसारत्वयोर्गर्भधारणाभावः, शुक्रवृद्ध्युपायाः

[4]गर्भाधानाङ्गभूतत्वादृतुः प्रागभिधीयते ।
रजस्वलाया नियमो गमनागमनादिकम् ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥

(१) ज्योनि. २३७.
(२) संर. ६८८.
(३) संर. ६९१.
(४) रेका. ५–७ पृ. १–२.

स्नानादूर्ध्वं चतस्रस्तु वर्जयेत् कैश्चिदीरितम्।
मनुवाक्यविरोधेन ज्ञेयं (? हेयं) तद्बहुसंमतात्॥
स्नानादूर्ध्वमृतौ गच्छेदनिषिद्धासु तां स्त्रियम्।
समरात्रिषु पुत्रार्थी कन्यार्थी विषमासु च ॥
अमावास्याऽष्टमी चैव पौर्णमासी चतुर्दशी।
ऋतोराद्याश्चतस्रश्च तस्मादेकादशी तिथिः।
त्रयोदशी त्यजेदेता गमनेऽनिष्टदाः स्मृताः॥
चतुर्थेऽहनि यत्प्रोक्तं गमनं देवलादिभिः।
रजोनिवृत्तौ द्रष्टव्यं प्रशस्तास्वपि रात्रिषु ॥
श्राद्धस्याऽऽद्यां श्राद्धरात्रिं श्राद्धं भुक्त्वा त्यजेत् स्त्रियम्।
अल्पवीर्यं दिवाक्लीबं प्रसूयाद्यो दिवा व्रजेत्।
आहतुः शङ्खलिखितौ जायतेऽल्पायुरेव सः॥
सुस्थ इन्दौ सकृद्गच्छेदृतावा पुत्रजन्मनः।
तस्योद्गमे शुभायैतदिति ज्योतिर्विदां मतम्॥
रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः।
नवम्यां सुभगा दारा दशम्यां चतुरः पुमान्॥
एकादश्यामधर्म्या स्त्री द्वादश्यां पुरुषोत्तमः।
त्रयोदश्यां सुता तस्य वर्णसंकरकारिणी॥
धर्मध्वजः कृतज्ञः स्यादात्मवेदी दृढव्रतः।
प्रजायते चतुर्दश्यां गुणौघैर्जगतः पतिः॥
राजपत्नी महाभागा सा राजवशगाऽथवा।
जायते पञ्चदश्यां तु बहुपुत्रा पतिव्रता॥
विद्यालक्षणसंपूर्णः सत्यवादी जितेन्द्रियः।
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान्॥
बह्वीनामपि पत्नीनामृतुश्चेद्यु( ? द्यौ )गपद्यतः।
वर्णक्रमेण वा गच्छेद्विवाहक्रमशोऽपि वा।
रक्षणार्थमपुत्रां वा पूर्वमित्याह देवलः॥
स्वस्थः सन् संनिधौ भार्यां न गच्छेदृतुकालतः।
पितरस्तस्य तन्मासं तस्मिन् रेतसि शेरते॥

(१) रेका. २३–४२ पृ. ३–४, ४८–५३ पृ. ४–५.

अपुत्रस्यैव दोषोऽयमृत्वतिक्रमणे भवेत्।
ज्येष्ठे जाते न दोषोऽस्ति कामजा इतरे यतः॥
पत्योत्तानां स्त्रियं पश्चाद्वाजिनः श्रुतिदर्शनात्।
निगमोक्त्या ब्रह्मसूत्रं कृत्वा मूत्रपुरीषवत्।
वायुसूर्यस्थितौ गच्छेत् करणैर्नागरादिभिः॥
वात्स्यायनादिभिः पञ्चविधं सुरतमीरितम्।
तत्राऽऽद्यं सुरतं गर्भाधाने शौनकसूत्रतः।
इतराण्येव चत्वारि रत्यर्थं तानि ते विदुः॥
नागराद्यवगन्तव्यं करणं रतिशास्त्रतः।
चुम्बनैर्दशनैर्घातैर्नखाद्यैः सुरतं यदि।
प्रसूते चतुरं पुत्रं विज्ञं छान्दसमन्यथा॥
यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्।
ब्रह्मणा हि वरो दत्तस्तासां कामो यथेच्छया॥
ऋतौ तु गर्भशङ्कायां स्नानं मैथुनिनः स्मृतम्।
अनृतौ मूत्रवच्छौचं द्विगुणं तदृतौ स्त्रियाः॥
गर्भशङ्काऽवगन्तव्या सुश्रुतोक्तैः श्रमादिभिः।
श्रमो ग्लानिः पिपासा वाऽनुबन्धे रक्तशुक्रयोः।
सद्यो गृहीतगर्भायां योन्याश्च स्फुरणं भवेत्॥
दम्पत्यो रतिकाले चेदुद्वेगाकुलितं मनः।
अन्धाः खञ्जाश्च जायन्ते तथा कुब्जाश्च वामनाः।
गर्भे ये निषदि प्रोक्ता एतदाथर्वणश्रुतौ॥
( ?गर्भोपनिषदि प्रोक्तमेतदाथर्वणश्रुतौ॥ )
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।
समे नपुंसकं ज्ञेयं पुंस्त्रियोर्वाऽन्ययोगतः॥
[1]यदि संयोगकाले च पुरुषो रागमोहितः।
द्विधा समुत्सृजेच्छुक्रं यमलं तत्र जायते॥
[2]निःसारेऽल्पे च शुक्रे स्यान्न गर्भो मनुवाक्यतः।
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत्॥

(१) रेका. ५४ पृ. ५ ; संग. ३७१ च ( तु ).
(२) रेका. ५५ पृ. ५ ; संग. ३७१.

[1]षष्टिशाल्योदनं साज्यं माषसूपसमन्वितम् ।
पिबेत्तदग्निशक्त्यैव वीर्यवर्धनमुच्यते ॥

[2]रसैर्विदारिकाचूर्णं सप्तधा भावितं स्वकैः ।
शर्कराक्षीरसंयुक्तं पिबेत्तद्वृष्यमुत्तमम् ॥

(१) रेका. ५६ पृ. ५ ; संग. ३७१ पिबेत्त (तत्पिबे).

(२) रेका. ५७ पृ. ५ चतुर्थपादे ( पिबेद्वर्धन-मुच्यते ) ; संग. ३७१.

[1]चूर्णमामलकानां वा स्वरसैर्भावितं तथा ।
मध्वाज्यशर्करायुक्तमग्निशक्त्या पयः पिबेत् ।
पयसा वानरीमूलं बीजं वा वृष्यमुच्यते ॥

[2]नार्याकृतिरयुग्मायां पुमान् शुक्रेऽधिके निशि ।
युग्मायां शोणिताधिक्ये नारी स्यात् पुरुषा-कृतिः ॥

(१) रेका. ५८–५९ पृ. ५ ; संग. ३७१–३७२ वृष्य ( वप्य ).

(२) रेका. ५९–६० पृ. ५.

# †भार्यागमनकालः

## आग्निवेश्यगृह्यसूत्रम्

तिथ्यादिपञ्चाङ्गविशेषेषु संक्रान्तौ च गमननिषेधः

[1]एवं जन्मत्रयं वाऽपि श्रवणं च न संविशेत्।
पर्वद्वये च( ? न ) तत्कुर्याच्छ्राद्धं दत्त्वा न वाऽहनि ॥
सोमवारेऽर्कवारे च भौमवारे शनैश्चरे।
विषुवे अयने चैव व्यतीपाते च संक्रमे ॥
एतान्यन्यानि निन्द्यानि दिवसानि न संविशेत्।
विष्टिरष्टम्यथान्ये च पक्षच्छिद्रास्तथैव च ॥

## वृद्धहारीतः

तिथिनक्षत्रविशेषेषु गमननिषेधः प्रायश्चित्तं च

[2]न गच्छेत्क्रूरदिवसे मघामूलद्वयोरपि ॥
[3]अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम्।
कृत्वा सचैलं स्नात्वा च वारुणीभिश्च मार्जयेत् ॥

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

अध्यापकस्य वर्षाशरदोर्गमननिषेधः

[4]प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् ॥

प्रवचनम् अध्यापनम्। तेन युक्तो वर्षासु शरदि च मैथुनं वर्जयेत् ऋतावपि। उ.

## वासिष्ठः

निषिद्धनक्षत्रयोगकरणतिथयः लग्नराशिग्रहस्थितिविचारश्च

[1]पौष्णद्वये पित्र्यभयाम्यसार्प-
विष्णुद्वये नैधनजन्मभेषु।
उत्पातपापग्रहदूषितेषु
न कार्यमाधानमनिष्टलग्ने ॥

अनिष्टलग्नानि मेषवृश्चिकमकरकुम्भाख्यानि। श्रवण-रेवत्योर्विहितप्रतिषिद्धत्वाद्विकल्पः। संर. ६८४

[2]उपप्लवे वैधृतिपातयोश्च
विष्टयां दिवा परिघपूर्वभागे।
संध्यासु पर्वस्वपि मातृपित्रो-
र्मृतेऽह्नि पत्नीगमनं विवर्ज्यम् ॥

मातापित्रोश्च श्राद्धदिवसपूर्वदिवसोऽपि वर्ज्य इत्युक्तं मुहूर्तमार्तण्डे। संर. ६८५

---

† प्रकरणेऽस्मिन् गर्भाधानसंस्कारस्य गमनस्य च तिथि-नक्षत्रादिरूपो ज्यौतिषकालः संगृहीतः। ऋत्वनृतुश्राद्ध-दिनादिरूपो विधिनिषेधविषयो धर्मशास्त्रीयो गमनकालः ' भार्यागमनम् ' इति पूर्वप्रकरणे संगृहीतः। क्वचिदपरिहार्यं विषयसांकर्यं संजातमस्ति।

(१) **आग्निगृ.** २।७।६. (२) **वृहास्मृ.** ८।३०९.

(३) **वृहास्मृ.** ९।३१५ ; **मिता.** ३।३० चैलं (चेलं) स्मृत्यन्तरम्; **अप.** ३।३० पृ. ९२२ स्नात्वा च ( स्नात्वा तु ) स्मृत्यन्तरम् ; **स्मृच.** १२० सर्वं अपवत् ; **आम.** ८६ (=) अपवत् ; **विपा.** ३७३ मितावत् अपवच्च, स्मृतिः ; **मान.** ८८ (=) मितावत् अपवच्च.

(४) **आध.** १।३२।१ ; **हिध.** २६।८।४३ मैथुनं वर्जयेत् ( च मैथुनं न चरेत् ) ; **अप.** १।१४४ ; **गौमि.** २।७।३ ; **चका.** ७३२ शरदं ( शरदौ ) ; **चम.** ६० शरदं ( शरदि ) ; **बाल.** १।१४२ पृ. ४०३ चमवत् ; **संर.** ३१३ शरदं ( शरदन्तं ) हिरण्यकेशिधर्मसूत्रम्.

(१) **वसं.** २४।४० पित्र्य ( पैतृ ) सार्प ( सार्थ ) पाप ( पात ) ; **संसौ.** २९ पित्र्य ( पौष्ण ) विष्णु ( विष्क ) ; **ज्योनि.** १०९ पित्र्यभयाम्यसार्पविष्णु ( दुष्टभसार्पपैत्र्यशक्र ) ; **पुम.** ४३२ नैधनज ( नैव न ज ) ; **संर.** ६८४ पित्र्य ( पैतृ ) नैधनज ( नैव च ज ) वृद्धवसिष्ठसंहितायाम्.

(२) **वसं.** २४।४१ ; **संसौ.** २९ ; **ज्योनि.** १०९ पर्व ( सर्वा ) ; **संको.** १५ विवर्ज्यम् ( च वर्ज्यम् ) ; **संर.** ६८५ विष्टयां दिवा ( विष्टयादिके ) ज्योतिर्वसिष्ठः ,

[1]दिनेषु युग्मेषु च वक्ष्यमाण-
योगैः सुतार्थी स्वसतीमुपेयात् ।
दिनेष्वयुग्मेषु च कन्यकार्थी
हित्वा च गण्डांस्तिथिलग्नमानाम् ॥

[2]आधानलग्ने विषमांशराशौ
जीवेन्दुजाभ्यां युतवीक्षिते वा ।
मान्यैः सुपुत्रस्त्वथ पापखेटैः
पापी च मिश्रैर्बलिभिर्विमिश्रः ॥

[3]युग्मांशलग्ने बलयुक्तशुक्र-
निशाकराभ्यां युतवीक्षिते वा ।
नान्यैः सुकन्या त्वथ पापरूपा
पापैस्त्वशेषं सुविचिन्त्य वाच्यम् ॥

[4]ओजर्क्षांशे लग्नगे वीर्ययुक्ते
जीवेन्द्वर्कैरोजराश्यंशकस्थैः ।
पुंजन्म स्याद्व्यत्यये कन्यका स्या-
न्मिश्रैः षण्ढो द्व्यङ्गगैर्द्वित्रिजन्म ॥

सुश्रुते यमललक्षणम् — ' बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ । यमावित्यभिधीयेते धर्मेतरपुरःसरौ ॥ '। संसौ. ३३

[5]ओजांशकर्क्षाद्विषमर्क्षसंस्थः
पुंजन्मकारी रविसूनुरेकः ।
विचार्य वीर्यं पुरुषग्रहाणां
वाच्योऽथ पुत्रस्त्वथ पुत्रिका वा ॥

[1]चन्द्रार्कशुक्रक्षितिजैः स्ववर्गगै-
र्बृहस्पतौ धर्मविलग्नपुत्रगे ।
योगेष्वपत्यं भवतीह निश्चया-
दमी च योगा विफला विबीजिनाम् ॥

[2]वृषभमिथुनकर्कसिंहकन्या-
घटधरचापझषाः शुभा भवन्ति ।
यदि शुभबलशालिनोऽनुकूला
निधनविशुद्धियुता निषेककार्ये ॥

अयमर्थः— वृषभादिमीनान्ता अष्टौ राशयः सूर्यचन्द्रबुधबृहस्पतिशुक्राणां क्षेत्राणि । अतश्चैते शुभा भवन्ति । निसर्गपापयोः कुजशन्योश्चत्वारो निषिद्धाः, स्वभावतोऽनिष्टत्वात् । तदुक्तम्— ' अतो नेदं कुजार्किभम् ' इति । एतेषु राशिषु शुभग्रहयुक्ता निरीक्षिताश्च अष्टमशुद्धियुक्ताश्च राशयो निषेके शुभाः प्रजावहा इत्यर्थः । ¶ प्रपा. १०६

[3]पुंग्रहाः षट्त्रिलाभस्थाः पञ्चमेशो बली यदा ।
सर्वे विषमराशिस्थाः पुत्रयोगागमे स्मृताः ॥

[4]अष्टमीं नवमीं चैव चतुर्थीं च चतुर्दशीम् ।
पर्वाणि वर्जयेच्छिष्टा निषेके तिथयः शुभाः ॥

## विष्णुः

गमने वर्ज्यतिथयः

[5]नाष्टमीचतुर्दशीपञ्चदशीषु स्त्रियमुपेयात् ॥

---

(१) बसं. २४।४२ ; संसौ. ३० (=) गण्डांस्तिथि ( गण्डं तिथि ) ; ज्योनि. १०९ मानाम् ( भागान् ) ; संर. ६८५ माणयोगैः ( माणैर्योगैः ) चतुर्थपादे ( हित्वा तु गण्डं तिथिलग्नभागान् ) ज्यौतिषे.

(२) बसं. २४।४३ ; संसौ. ३३ वा ( च ) नान्यैः ( मान्यैः ) मिर्विमिश्रः ( मिश्च मिश्रः ).

(३) बसं. २४।४४ सुवि ( तु वि ) ; संसौ. ३३ स्त्वशेषं ( श्च शेषं ).

(४) बसं. २४।४५ ; संसौ. ३३ कस्थैः ( संस्थैः ) ; ज्योनि. १०९ संसौवत्.

(५) बसं. २४।४६ ; संसौ. ३३ चतुर्थपादे ( वाच्योऽत्र पुत्रोऽन्यतरैश्च कन्या ) ; ज्योनि. १०९ वीर्यं पुरुषग्र ( कार्यं पुरुषो ग्र ) पुत्रिका ( कन्यका ).

¶ मुक्ता. प्रपागतम् ।

(१) बसं. २४।४७ शुक्र ( पुत्र ) ; संसौ. ३४ (=) शुक्र ( जीव ) ; ज्योनि. १०९ तीह ( तीति ) बीजि ( जीवि ).

(२) प्रपा. १०६ (=) घट ( तुल ) ; संसौ. ३२ ; मुक्ता. ७५ (=) शालिनो ( कारिणो ) युता ( करा ).

(३) संसौ. ३३. (४) प्रपा. १०५.

(५) विस्मृ. ६९।१ ; अप. १।७९ पृ. १०४ आपस्तम्बः ; चका. ७२४ ; गृर. ४०३ ( पञ्चदशी० ) बहुवचनादयं पाठभेदो लेखकादिप्रमादात् ; मर. ११२ गृरवत् .

## मनुः

गमने वर्ज्यतिथयः, अधिकमासेऽपि गर्भाधानम्

[1]**अमावस्यामष्टमीं च पौर्णमासीं चतुर्दशीम्।**
**ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥**

(१) ब्रह्मचारी भवेत्। ब्रह्मचारिधर्मो मैथुननिवृत्तिरतिदिश्यते, न पुनर्भिक्षाचरणादिः। अप्यृतावितिसंबन्धात्तदेव प्रथमं हृदयमागच्छति। अन्ये तु मधुमांसनिवृत्तिमपीच्छन्त्येतेष्वहःसु। तत्र स्मृत्यन्तरमुदाहार्यम्-- 'षष्ठ्यष्टमीममावास्यामुभयत्र चतुर्दशीम्। वर्जयेत् पौर्णमासीं च तैले मांसे भगे क्षुरे॥'। अन्ये त्वाहुः-- ब्रह्मचारी इति विशिष्टाभिमिणो नामधेयमेतत्। अत आश्रमान्तरवर्तिनि गृहस्थादौ प्रयुज्यमानो वेदग्रहणार्थधर्मलक्षणयाऽतिदेशार्थो भवति, ब्रह्मचारी(? चारिवत्) भवेत्। परशब्दो हि परत्र प्रयुज्यमानो वत्यर्थं गमयति। सर्वेषु ब्रह्मचारिधर्मेषु प्राप्तेषु अग्नीन्धनभैक्ष्यचरणादयः 'आ समावर्तनात्कुर्यात्' इति वचनात् 'गृहस्थः शेषभुक्' इति च प्रत्यक्षे विनिवर्तन्ते। केवलं मधुमांसमैथुनप्रतिषेधमात्रमतिदिश्यते इति। प्रसिद्धस्तु ब्रह्मचारिशब्दो मैथुननिवृत्तावेवेति यत्किंचिदेतत्। मेधा.

(२) अमावास्यादिषु स्नातको द्विजः ऋतावपि नित्यं स्त्रियं नोपेयात्। 'पर्ववर्जं व्रजेच्चैनाम्' इत्यनेन पौनरुक्त्यं तत्रैव परिहृतम्। स्नातकव्रतप्रायश्चित्ताङ्गत्वेनास्येहाभिधानम्। † गोरा.

(३) अत्रामावास्याशब्दसाहचर्याच्चतुर्दश्यष्टमीशब्दौ सितासितपक्षयोश्चतुर्दश्यष्टम्यावाहतुः, न स्मृतौ। अपिशब्दादनृतावप्येतास्तिथयो वर्ज्याः।

अप. १।७९ पृ. १०३

(४) चकाराद्रविसंक्रान्तिमपि। संप्र. १५६

† ममु. गोरावत्। मवि., पमा., नन्द., भाच. गोरागतम्।

(१) मस्मृ. ४।१२८; मिता. १।७९; अप. १।७९ पृ. १०३; ममा. ५।२; गौमि. ५।१; उ. २।१।१७; स्मृच. १५; चका. ७२४; पुर. ४०४ मप्यृतौ (मनृतौ):

[1]**षष्ठ्यष्टम्यौ त्वमावास्यामुभयत्र चतुर्दशीम्।**
**वर्जयेत् पौर्णमासीं च तैले मांसे भगे क्षुरे॥**

तैले तैलाभ्यङ्गे मांसभक्षणे भगे सुरते क्षुरे श्मश्र्वादिक्रियायां वर्जयेत्। भाच.

[2]**गर्भे वार्धुषिकृत्ये च नाधिमासं विदुर्बुधाः॥**

गर्भाधानपुंसवनसीमन्तोन्नयनानि (मलमासेऽपि) कार्याणि, 'गर्भे वार्धुषि ...' इति मनुवचनात्।

संत. ८८५

## याज्ञवल्क्यः

वर्ज्यनक्षत्राणि चन्द्रानुकूल्यं च गमने

***एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्।**
**सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्॥**

## नारदः

गमने चन्द्रलग्नानुकूल्यम्, वर्ज्यनक्षत्राणि, ग्रहयोगानां निर्बीजे निष्फलत्वम्

[1]**ओजराश्यंशगे चन्द्रे लग्ने पुंग्रहवीक्षिते ¶।**
**उपवीती युग्मतिथौ ह्यनग्नां ¶ कामयेत्स्त्रियम्॥**

* अस्य व्याख्यानानि भार्यागमनप्रकरणे द्रष्टव्यानि।

¶ पाठोऽयं पीयूषधारातः (पृ. १६७) संगृहीतः।

४।१३ न्नित्यमप्यृतौ (त्वावत् प्रत्यहं); हमा. १२० पूर्वार्धे (अमावास्याऽष्टमी चैव पौर्णमासी चतुर्दशी।); पमा. ४९८ हमावत्; मपा. ३४६; मर. १६; गमा. १२२ हमावत्; संप्र. १५५; बम. ४-५; मुक्ता. ७४; संम. ११; आम. ८६ हमावत्; कुम. ८१५; संर. ६८३.

(१) मस्मृ. ४।१२८ इत्यस्यानन्तरं प्रक्षिप्तः; मेधा. ४।१२८ ष्टम्यौ त्व (ष्टमीम) स्मृत्यन्तरम्.

(२) संत. ८८५.

(३) यास्मृ. १।८० शेषाः स्थलादिनिर्देशा भार्यागमनप्रकरणे द्रष्टव्याः.

(४) ज्योना. १६।२ पुंग्रह (शुभग्रह) ह्यनग्नां (न नग्नां); संर. ६८३ ह्यनग्नां (न नग्नः) उत्त.

[1]पुत्रार्थी पुरुषस्त्यक्त्वा पौष्णमूलाहिपैतृभम् ॥

पुत्रार्थी पुरुष एतानि नक्षत्राणि त्यक्त्वा युग्मतिथौ गच्छेदित्यर्थः । अहिः आश्लेषाः । पैतृकं मघाः ।

संर. ६८४

[2]युग्मे शुभे शशाङ्के च लग्ने शीग्रहवीक्षिते ।
सुयुग्मे( ? अयुग्मे ) दिवसे भार्यां कन्यार्थी कामयेत्पतिः ॥

निर्बीजानामिमे योगाः सर्वदा निष्फलप्रदाः ।
विदशामिव शीतांशोः किरणास्ते सुधामयाः ॥

## बृहस्पतिः

शुभाशुभमध्यमनक्षत्राणि गर्भाधाने

[3]हरिहस्तानुराधाश्च स्वाती वरुणरेवती ।
उत्तरात्रितयं चैव रोहिणी च शुभा स्मृता ॥

चित्रादित्यैन्द्रवास्तिष्या उरगाश्चेति मध्यमाः ।
शेषाण्यृक्षाणि दुष्टानि स्युर्निषेकाख्यकर्मणि ॥

अत्र रेवती शुभत्वेन गणिता, पूर्वं च निषिद्धतया गणिता वासिष्ठवाक्ये, तयोर्विषयविवेकः— रेवत्या यावत्यो घटिका गण्डान्तत्वेन परिगणितास्ता एवात्र विवर्ज्याः, शेषाः शुभा इति । अन्यथा विरोधो दुष्परिहरः ।

संसौ. ३०

[4]श्राद्धं यात्रां चिकित्सां च मैथुनाभ्यञ्जने तथा ।
चौलोपनयनादीनि वर्जयेत्त्रिषु जन्मसु ॥

त्रिजन्मानि जन्मनक्षत्रं दशमैकोनविंशे च । जन्मनक्षत्रे( ? त्रं ) तत्पूर्वोत्तरे नक्षत्रे इति केचित् ।

संर. ६८४

---

(१) ज्योना. १६।३ षस्त्यक्त्वा ( षं त्यक्त्वा ); संर. ६८३ पौष्ण ( पर्व ) पैतृभम् ( पैतृकम् ).

(२) ज्योना. १६।३–५.

(३) संसौ. २९–३०.

(४) प्रपा. १०६ ; संर. ६८४ यात्रां ( पित्र्यं ) त्रिषु ज ( तु त्रिज ).

## भृगुः

गुरुशुक्रास्तयोरपि गर्भाधानम्

[1]उत्सवेषु च सर्वेषु सीमन्त ऋतुजन्मनोः ।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते ॥

( १ ) गर्भाधानं मलमासगुरुशुक्रास्तादावपि कार्यम् , 'उत्सवेषु०' इति ज्योतिर्निबन्धे भृगूक्तेः । सिन्धु. ८१७

( २ ) चकारान्मलमासातिचारादीनां ग्रहणम् ।

* संर. ८३४

## कात्यायनः

मलमासेऽपि गर्भाधानसंस्कारः

[2]गर्भाधानादिका अन्नप्राशनान्ता मलिम्लुचे ।
आकर्णवेधाः स्युः क्रिया नान्या इत्याह भास्करः ॥

## व्यासः

गमने वर्ज्यनक्षत्राणि

[3]चतस्रश्चाऽऽदिमा रात्रीः पर्ववच्च विवर्जयेत् ।
गच्छेद्युग्मास्वयं मुक्त्वा पौष्णपित्र्यर्क्ष-राक्षसान् ॥

## यमः

अधिमासेऽपि गर्भाधानम्

[4]गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके ।
सपिण्डीकरणे नित्ये जातनामादिकर्मसु ।
सीमन्ते पुंसवे चैव नाधिमासं विवर्जयेत् ॥

( १ ) गर्भे गर्भनिमित्तके । गर्भमात्रप्रयुक्त्या विहिते पुंसवनसीमन्तादिके इति यावत् । स्मृच. ३७३

( २ ) गर्भे इति सामान्यनिर्देशात् गर्भाधानेऽपि न दोषः , तथैव शिष्टाचाराच्च । विपा. ९६

---

* शेषं सिन्धुवत् ।

(१) सिन्धु. ८१७ द्वितीयपादे (सीमन्त ऋतुजन्मसु) ; संर. ६८५, ८३४.

(२) ज्योनि. ८३.　(३) व्यास्मृ. २।४३.

(४) स्मृच. ३७३ ( जात ... चैव० ) ; कथा. २२६ भृत्ये ( कृत्ये ) सं विवर्जयेत् ( सो विधीयते ) शेषं स्मृचवत् ; संसौ. ४५ स्मृचवत् ; लता. २१६ स्मृचवत् ;

(३) गर्भे गर्भाधाने। एतच्च मुख्यकाले अनुष्ठाने। तस्यातिपाते तु शुद्धकाल एव, 'नामकर्म च दर्शेष्टिं यथाकालं समाचरेत्। अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे॥' इति वचनात्। नामकर्मेत्युपलक्षण-मितरसंस्काराणाम्। संर. ८३४

## बृहत्पराशरः

पर्वसु गमननिषेधः

[१]न दिवाऽपि स्त्रियं गच्छेदिच्छंस्तदिच्छयाऽपि च।
न पर्वसु न संध्यासु नाऽऽद्यर्तुचतुरात्रिषु॥

## गर्गः

गमने शुभाशुभग्रहयोगाः वर्ज्यतिथ्यादयश्च, संस्कारे वर्ज्यकालः अधिमासस्यावर्ज्यत्वं च

[२]लग्नस्थो वा सुतस्थो वा धर्मस्थो वा बली गुरुः।
प्रोक्तर्क्षे शुभवारे स्याद्धारयेद्गर्भमुत्तमम्॥
लग्नात्मजेशौ संयुक्तावन्योन्यं चाभिवीक्षितौ।
क्षेत्रे परस्परस्थौ वा पुत्रयोगा इमे स्मृताः॥
[३]शनियुक्तेक्षितः शुक्रः पञ्चमस्थो निशाकरात्।
सपापः कर्मगो वाऽर्को भवेन्मातुरनिष्टदः॥
चन्द्रात् त्रिकोणगो मन्दः कुर्यान्मातृवधं निशि।
भृगुपुत्रात्तथैवाऽऽरो दिवसे पापवीक्षितः॥
क्लेशो मातुः सुखास्तस्थैः पापैर्वा चन्द्रसंयुतैः।
मरणं जायते क्रूरैः शशाङ्कात् सप्तमस्थितैः॥

विपा. ९५ स्मृचवत्; ज्योनि. ८३ श्राद्ध (प्रेत) शेषं स्मृचवत्, पराशरः: १०९ स्मृचवत्; संर. ८१३ नित्ये (चैव) शेषं स्मृचवत्, ८३३.

(१) बृपसं. ६।६६.

(२) संसौ. ३४.

(३) ज्योनि. २७५.



[१]अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत्।
गर्भाधानादिकर्माणि नाधिमासे विवर्जयेत्॥

## आश्वलायनः

गर्भाधाने मानुषं माससमानम्, शुभाशुभनक्षत्राणि, चन्द्रबलम्, गमने वर्ज्यास्तिथिनक्षत्रयोगाः, संक्रान्तौ गमननिषेधः

[२]गर्भाधाने पुंसवने सीमन्ते नामकर्मणि।
संग्राह्यो मानुषो मासो रुद्रा(?)ऽऽशौचविधावपि॥
[३]अष्टम्यां च चतुर्दश्यां पञ्चदश्यां त्रिजन्मसु।
व्यतीपाते च संक्रान्त्यां नोपेयात्तामृतावपि॥
[४]पुंनक्षत्रेण कार्यं स्याद्गर्भाधानं विपश्चिता।
तथा पुंसवसीमन्तबलयश्च विधानतः॥
[५]वर्जयेत्सर्वकर्माणि विपत्प्रत्यरनैधनैः।
चन्द्राष्टमे च यत्नेन वधशत्रुव्ययैस्तथा॥

## लघ्वाश्वलायनः

वर्ज्यतिथिनक्षत्राणि गर्भाधाने

[६]चरं दारुणभं पौष्णं दस्राग्नी च द्विदैवतम्।
श्राद्धाहं चैव रिक्तां च हित्वाऽन्यस्मिन् विधीयते॥

(१) प्रपा. १६३ पू.; गभा. १०५, १७२ पू.; प्रर. ११६ पू.; संप्र. २३५, ८४१ पू.; सिन्धु. ९०४, ११५० पू.; विपा. ३०९ चतुर्थपादे (शुभे काले समाचरेत्); ज्योनि. ११२ पू.; संकौ. १०१, २३० पू.; संग. ५५६ पू.; संव. ६८, १७८ पू.; पुम. ४५५ पू.; संर. ६८५ : ८३३, ८५१ पू.

(२) आश्वस्मृ. ३।५६–५७.

(३) आश्वस्मृ. ५।२७४–२७५.

(४) आश्वस्मृ. ११।५२; प्रपा. ११५.

(५) आश्वस्मृ. ११।५३; प्रपा. ११५ धनैः (धने) उत्तरार्धे (चन्द्रेऽष्टमे प्रयत्नेन वधनाशव्यये तथा॥): १२४ धनैः (धने) शत्रुव्ययैस्तथा (नाशव्यये तथा).

(६) लघ्वाश्वस्मृ. ३।२.

### कश्यपः

शुभाशुभतिथिवाराः गर्भाधाने

[1]षष्ठ्यष्टमीपञ्चदशीचतुर्थी-
चतुर्दशीमप्युभयत्र हित्वा।
शेषाः शुभाः स्युस्तिथयो निषेके
वाराः शशाङ्कार्यसितेन्दुजानाम् ॥

आर्यो गुरुः। सितः शुक्रः। इन्दुजो बुधः।

संकौ. १५

### विष्णुपुराणम्

दुष्टजनननक्षत्रात्प्राचीनं दशमनक्षत्रं गमने वर्ज्यम्

*[2]यस्मिन्नृक्षे भवेद्गर्भस्तस्माद्यद्दशमं भवेत्।
तत्रापत्यं प्रजायेत तस्मादेतत्त्रयं त्यजेत् ॥

त्रयं मघारेवतीज्येष्ठाख्यानि। संकौ. १६

पुंनक्षत्रे शुभकाले च गमनं कार्यम्, वर्ज्यतिथयः

[3]ऋतावभिगमः शस्तः स्वपत्न्यामवनीपते।
पुंनामर्क्षे शुभे काले श्रेष्ठे युग्मासु रात्रिषु ॥
प्रोक्तपर्वस्वशेषेषु नैव भूपाल संध्ययोः।
गच्छेद्व्यवायं मतिमान् मूत्रोच्चारप्रपीडितः ॥
[4]चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥

[1]तैलस्त्रीमांससंभोगी पर्वस्वेतेषु यः पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप ॥

(१) यद्यपि 'पूर्यते मासो यस्मिन्निति पर्व' इति व्युत्पत्त्या पौर्णमास्यमावास्ययोरेव पर्वत्वम्, तथाऽपि पर्वाणीति बहुवचनाच्छत्रिन्यायेन पर्वापर्वसमुदाये पर्वशब्दः प्रयुक्तः। मिताक्षरायां तु 'ब्रह्मचार्येव पर्वाणि' इत्यत्र बहुवचनस्य आद्यर्थतया अष्टमीचतुर्दश्योर्ग्रहणमुक्तम्। संप्र. १५६

(२) चकारादेकादश्या ग्रहणम्। एतेषु पर्वसु। संर. ६८३

### स्कन्दपुराणम्

गमने वर्ज्यचन्द्रयोगनक्षत्राणि

[2]षोडशर्तुनिशास्वेवं (? निशास्त्वेवं)
तस्मिन्युग्मासु संविशेत्।
द्वादशाष्टचतुर्थस्थे चन्द्रे वैनाशिकर्क्षगे ॥
वैधृतौ च व्यतीपाते मघायां मूलभे तथा।
गण्डातिगण्डपरिघशूलयोगेषु वर्जयेत् ॥
एवं नियममाश्रित्य निषेकात्पुरुषो भुवि।
लभते संततिं योग्यामिहामुत्र च शर्मणे ॥
[3]आदधीत सुधीर्गर्भमृतौ मूलमघं त्यजन् ॥

---

* संप्रव्याख्यानम् 'पित्र्यं पौष्णम्' इति रत्नमालावचने द्रष्टव्यम्।

(१) संसौ. २९ शीचतुर्थीश्च (शीं चतुर्थी च) काश्यपकालविधाने; संकौ. १५; पुम. ४३१ प्रथमपादे (षष्ठ्यष्टम्यौ पञ्चदशीं चतुर्थी).

(२) संप्र. १६०; संकौ. १६; संग. ३७१.

(३) अनयोः स्थलादिनिर्देशः भार्यागमनप्रकरणे द्रष्टव्यः।

(४) स्मृच. १२६ चैव (षष्ठी) पुराणे; गृर. ४१२ वास्या च (वस्याऽथ); हमा. १२१ स्या च (स्याऽथ); पमा. ४९९; मपा. ३४६ (=) तृतीयपादे (चत्वार्येतानि पर्वाणि); मर. १०९; संत. ९०८ हमावत्; संसौ. २९ हमावत्; वीमि. १।७९ हमावत्; संप्र. १५६; आप्र. ५६३ हमावत्; मुक्ता. २८३ सर्वे स्मृचवत्; संम. १०; ज्योनि. २३६ अमा (श्चमा); संकौ. १६; बाल. १।८१ पृ. २२४ हमावत्; कृम. ८१५ क्रान्तिरेव च (क्रमणं तथा); संर. ६८३ ब्रह्मपुराणे.

(१) स्मृच. १२६ नृप (ध्रुवम्) पुराणे; गृर. ४१२ यः (वै) नृप (मृतः); हमा. १२१ गृरवत्; पमा. ४९९ संभोगो (योगी च) यः (वै); मर. १०९ पर्वस्वेतेषु यः (पर्वेष्वेतेषु वै); संप्र. १५६ चतुर्थपादे (नरकं प्रतिपद्यते); मुक्ता. २८३ नृप (नरः) पुराणे; ज्योनि. २३६ यः (वै) शेषं संप्रवत्; संकौ. १६ पूर्वार्धे (तैलस्त्रीमांसभोगी च सर्वेष्वेतेषु वै पुमान्।); संर. ६८३ संकौवत्, ब्रह्मपुराणे.

(२) प्रपा. १०६-१०७ स्कान्दे कपिलसंहितायाम्.

(३) सस्मृ. ५१ काशीखण्डे.

## वराहपुराणम्

गमने वर्ज्यतिथयः

[1]षष्ठ्यष्टमीममावास्यामुभे पक्षे चतुर्दशीम्।
मैथुनं नैव सेवेत द्वादशीं च मम प्रियाम्॥

[2]अष्टम्यां च चतुर्दश्यां षष्ठ्यां च द्वादशीं तथा।
अमावास्यां चतुर्थ्यां च मैथुनं यो न गच्छति।
तिर्यग्योनिं न गच्छेत्स मम लोकं च गच्छति॥

* चतुर्थ्यां मैथुनवर्जनं विष्णुलोकप्राप्तिफलकत्वात्काम्यम्, न नित्यम्। गप. ४५३

## वामनपुराणम्

गमने वर्ज्यानि तिथिवारनक्षत्राणि

[3]पूर्णासु योषित् परिवर्जनीया॥

[4]बुधे च योषां न समाक्रमेत॥

[1]योषिन्मघाकृत्तिकासूत्तरासु॥

पूर्णाश्च पञ्चमीदशमीपञ्चदश्यः। तिथिवारनक्षत्रेषु निषेधाः सन्ति ते च प्रथमर्तावेव, 'दक्षिणदिङ्मुखगमनं (गमनं) चाप्यभिनवासु नारीषु। व्ययमपि शस्यफलानां न बुधा बुधवासरे कुर्युः॥' इत्यादिवचनान्तरात्, बहुनिषेधपरिपालने संगमस्य निर्विषयापत्तेश्च। पर्ववर्जनं तु सर्वर्तुष्वपि। सर्वत्र तिथिनक्षत्रयोर्मैथुनादिनिषेधस्तत्तत्तिथ्यादिव्याप्तिसमय एव, न त्वहोरात्रे। संक्रान्तौ तु तदवच्छिन्नाहोरात्रे इति पूर्वमुक्तम्। गप. ४५३–४५४

## कूर्मपुराणम्

गमने वर्ज्यतिथिनक्षत्राणि

[2]षष्ठ्यष्टमीं पञ्चदशीं द्वादशीं च चतुर्दशीम्।
ब्रह्मचारी भवेन्नित्यं तद्वज्जन्मत्रयेऽहनि॥

## सौरपुराणम्

गमने वर्ज्यतिथिनक्षत्राणि

[3]षष्ठ्यष्टमी पञ्चदशी अमावास्या चतुर्दशी।
ब्रह्मचारी भवेन्नित्यं जन्मर्क्षे च विशेषतः॥

## अनिर्दिष्टकर्तृकवचनानि

गमने शुभाशुभतिथिवारनक्षत्राणि, शुभाशुभग्रहयोगाः, प्रथमगमने बुधवारस्य वर्ज्यत्वं विवाहमुहूर्तातिदेशश्च

[4]प्रसवस्तु निषेकर्क्षाद्दशमे योषितामुडौ।
यस्मात्तं वर्जयेत्तस्मात् रेवतीषु मघासु च॥

[5]पापासंयुतमध्यगेषु दिनकृल्लग्नक्षपास्वामिषु
तद्द्यूनेष्वशुभोज्झितेषु विकुजे छिद्रे विपापे सुखे।
सद्युक्तेषु त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते
पापे युग्मनिशास्वगण्डसमये पुंशुद्धितः संगमः॥

---

* यद्यपि गदाधरपद्धतौ 'षष्ठ्यष्टमी०' इत्येक एव श्लोकः तत्र चेदं व्याख्यानं मुद्रितमुपलभ्यते, 'अष्टम्यां च०' इत्यादिवचनं नोपलभ्यते, तथाऽपि एतस्माद्व्याख्यानात् 'अष्टम्यां च०' इत्यादिवचनमुच्छिन्नमिति भाति।

(१) चका. ७२५; गुर. ४१२ पूर्वार्धे (षष्ठी चाष्टम्यमावास्या उभे पक्षे चतुर्दशी।); मर. १११ (षष्ठ्यष्टमी अमावास्या शुभे पक्षे चतुर्दशी। मैथुनं नैव सेवेत द्वादशी च मम प्रिये॥); गप. ४५३ पूर्वार्धे (षष्ठ्यष्टमी अमावस्या उभे पक्षे चतुर्दशी।) नैव (न च).

(२) चका. ७२५ तथा (नृप) चतुर्थ्यां च (पञ्चदशीं) लोकं च (लोकं हि); गुर. ४१२ यो न ग (योऽधिग) न गच्छेत्स मम लोकं च (स गच्छेत मम लोकं न); मर. १११-११२ चतुर्थ्यां (चतुर्थी) लोकं च (लोकं स).

(३) गुर. ४१३; गप. ४५३; वीमि. १।७९ स्मृत्यन्तरम्; आप्र. ५६३; बाल. १।८१ पृ. २२४.

(४) गुर. ४१३; गप. ४५३ (बुधे न योषाम्) एतावदेव; वीमि. १।७९ क्रमेत (चरेत) स्मृत्यन्तरम्; आप्र. ५६३ (बुधेषु योषां न समाचरेत्तथा); बाल. १।८१ पृ. २२४ आप्रवत्.

(१) गुर. ४१३ कासूत्तरासु (कसोत्तरासु); गप. ४५३; वीमि. १।७९ (योषिन्मघासूत्तरकृत्तिकासु) स्मृत्यन्तरम्; आप्र. ५६३ कासूत्त (कयोत्त); बाल. १।८१ पृ. २२४ आप्रवत्. (२) मुका. ७८.

(३) चका. ७२४; मर. ११२ द्वितीयपादो नास्ति.

(४) विश्व. १।७९ गणितज्ञाः.

(५) निप. २२९ तद्द्यूने (तद्दिने) षष्ठा (षष्ठ्य); गप. ४७२ सुखे (शुभे) निशास्वग (निशासु ग).

¹अश्विनीमघमूलानां तिस्रो गण्डाद्यनाडिकाः।
अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव यवना जगुः॥

²उपचयगौ रविशुक्रौ बलिनौ पुंसः स्वमंशकं प्राप्तौ।
युवतेर्वा कुजचन्द्रौ यदा तदा गर्भसंभवो भवति॥

शुक्रार्कभौमशशिभिः स्वांशोपचयस्थितैः सुरेज्ये वा।
धर्मोदयात्मजस्थे बलवति गर्भसंभवो भवति॥

विषमे विषमांशगता होरा शशिजीवभास्करा बलिनः।
पुंसां समे समांशे च युवतीनामोजर्क्षे गुरुसूर्यौ बलिनौ(?)॥

पुंसां समे सितेन्दुकुजाः कन्यानां जन्मकरा गर्भाधाने स्थिता बलिनः(?)।
कुम्भं मुक्त्वा विषमे शनैश्चरः पुत्रजन्मदो भवति॥

योगे विहङ्गमानां बलं वीक्ष्य वदेन्नरं स्त्रियं वाऽपि।
क्रूरान्तस्थे चन्द्रे लग्नं वा युगपदेव मरणाय॥

सौम्येन दृष्टमूर्तिर्युवतीनां गर्भसहितानाम्।
उदयं यातैः पापैः सौम्यैरनवेक्षितैर्मरणमस्याः॥

उदयस्थितेऽर्कजे वा क्षीणे शशिनि भौमसंदृष्टे।
व्ययगेऽर्के शशिनि कृशे पाताले लोहितः सगर्भे वा॥

स्त्री म्रियतेऽस्मिन्नथवा शुक्रे पापद्वयान्तःस्थे।
चन्द्रचतुर्थे क्रूरे विलग्नतो वा विपद्यते गर्भः॥

होराष्टमगे क्षितिसुते म्रियते गर्भः सह जनन्याः(? न्या)।
हिबुकगते धरणिसुतेऽरिष्टं गते क्षपाकरे क्षीणे॥

गर्भेण सह म्रियते पापग्रहदर्शनं प्राप्ते।
लग्ने रविसंयुक्ते क्षीणेन्दौ वा म्रियते गर्भः॥

व्ययधनसंस्थैः पापैस्तथैव सौम्यग्रहादृष्टैः।
जामित्रगेऽर्कदृष्टे लग्नगते वा कुजे निषिक्तस्य॥

गर्भस्य भवति मरणं शस्त्रच्छेदैः सह जनन्याः(? न्या)।

दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ
गदप्रदौ पुद्गलयोषितः क्रमात्।
व्ययस्वगौ मृत्युकरौ युतौ तथा
तदेकदृष्ट्या मरणाय कल्पितौ॥

शुक्रारजीवशशिसौरबुधलग्नपविलग्नमङ्गलाधिपाः।
मासपतयः स्युरेतैर्गर्भस्य शुभाशुभे चिन्त्ये॥

उत्पातक्रूरहते तन्मासस्याधिपे गते स गर्भः।
अथवा निषेककाले विलग्नसंस्थौ यदा रुधिरमन्दौ॥

तद्गृहगतेऽथवेन्दौ तदीक्षिते पतति गर्भः॥
व्ययभुवनस्थश्चन्द्रो वामं चक्षुर्विनाशयति हीनः।

सूर्यस्तथेतराक्षं शुभदृष्टो याप्यतां नयति॥
सौम्ये त्रिकोणस्थे लग्ने च्छेदग्रहैर्बलविहीनैः।
विगुणास्यपादहस्तो योगेऽस्मिन्नाहितो भवति गर्भः॥

वामनको मकरान्ते लग्ने रविचन्द्रसौरिभिर्दृष्टे।
शशिनि विलग्ने कर्किणि कुजार्कदृष्टे तथा कुब्जः॥

अन्योन्यं रविचन्द्रौ विषमर्क्षसमर्क्षगौ निरीक्षेते।
इन्दुजरविपुत्रौ वा दृष्टौ बलिनौ नपुंसकं कुरुतः॥

---

(१) निप. २२९ : २४४ अन्त्याः (अन्ते); गप. ४५२ निपवत्.

(२) निप. २३५-२३७.

सूर्यं समराशिगतं वक्रो विषमर्क्षगोऽवलोकयति ।
विषमर्क्षे लग्नेन्दु(? न्दू)कुजेक्षितौ षण्ढसंभवं कुरुतः ॥

बुधचन्द्रौ कुजदृष्टौ विषमर्क्षसमर्क्षगौ तथैवोक्तौ ।
ओजनवांशकसंस्था लग्नेन्दुसितास्तथैवोक्ताः ॥

पश्यति वक्रः समभे सूर्यं चन्द्रोदयो विषमर्क्षे ।
यद्येवं गर्भस्थः क्लीबो मुनिभिः सदा दृष्टः ॥

ओजसमराशिसंस्थार्केन्दू षण्ढं कुजे कुरुतः ।
चरमे विषमनवांशे होरा चन्द्रसितबुधार्कदृष्टा ॥

[1]दक्षिणदिङ्मुखगमनं (गमनं) चाप्यभिनवासु नारीषु ।
व्ययमपि शस्यफलानां न बुधा बुधवासरे कुर्युः ॥

[2]गर्भाधाने सदा ग्राह्या वारा भौमरवीज्यकाः ॥

[3]कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च ।
नरश्चाण्डालयोनिः स्यात्तैलस्त्रीमांससेवनात् ॥

[4]द्विपदाप्ये तनौ सौम्यदृष्टे युक्ते तनौ शुभे ।
प्रथमाभिगमः श्रेष्ठश्चन्द्रे चोपचयस्थिते ॥

यात्रोक्ते समये यानं प्रवेशोक्ते प्रवेशनम् ।
विवाहोक्ते नवो भोगः शेषं स्त्रीणां शुभोदये ॥

[5]चन्द्रे तूपचयर्क्षस्थे स्त्रीणां कुजनिरीक्षिते ।
यद्रजो दृश्यते तत्स्याद्गर्भग्रहणयोग्यकम् ॥

पुंसामुपचयस्थोऽब्जो गुरुणा यदि दृश्यते ।
स्त्रीपुंसोश्च तदा योगं चन्द्रे नैवान्यथा तयोः ॥

शुक्रार्कौ बलिनौ स्वांशे पुंसामुपचयस्थितौ ।
यदा स्त्रीणां कुजेन्दू वा तदा स्याद्गर्भसंभवः ॥

[6]स्त्रियां तु संगतः पित्र्ये पौष्णे वा नैर्ऋतेऽथवा ।
यः समुत्पद्यते गर्भो न स क्षेमो गुणैर्युतः ॥

(१) गप. ४५३. (२) संत. ९०९.
(३) ज्योनि. २३६. (४) ज्योनि. २३१.
(५) ज्योनि. २७४. (६) चका. ७२८.

[1]ज्येष्ठामूला(? ल)मघाश्लेषारेवतीकृत्तिकाश्विनी-(? नीः)।
उत्तरात्रितयं त्यक्त्वा पर्ववर्जं व्रजेदृतौ ॥

[2]सर्पाश्विमघमूलेन्द्रपौष्णे गर्भो विगर्हितः ।
श्रीकामस्तु त्यजेन्नारीं पञ्चम्यामुत्तरात्रये ॥

श्रवणं रोहिणी हस्ता(? हस्तः) चानुराधोत्तरात्रयम् ।
स्वाती शतभिषक् श्रेष्ठा निषेके फलदाः स्मृताः ॥

उत्तरात्रयस्य विहितप्रतिषिद्धत्वाद्विकल्पः ।

विपा. ९३

## वराहमिहिरः

गमनसाफल्यकरा ग्रहयोगाः

[3]बलयुक्तौ स्वगृहांशे अर्कसितावुपचयर्क्षगौ पुंसाम् ।
स्त्रीणां वा कुजचन्द्रौ यदा तदा संभवति गर्भः ॥

सूर्यस्य पुंग्रहत्वात् स उपचयगतस्तदीयपुंस्त्वोपचयकरः । शुक्रोऽप्युपचये स्थितश्शुक्लपुष्टिकरः । उभयोर्बलं पुरुषस्य युज्यते । चन्द्रस्य स्त्रीग्रहत्वाच्चन्द्रबलं स्त्रीणामुपयुज्यते । भौमबलेन च शोणितोपचयात् पुष्पप्रादुर्भाव इति । शुक्रशोणितसंनिपाते हि गर्भग्रहणं भवति । न्यायसिद्धोऽयमर्थः । अत्रैव गुरुदृष्टौ अवश्यं गर्भधारणं भवत्येव । संसौ. ३५

[4]आधानेऽस्तगृहं यत्तच्छीलो मैथुने पुमान् भवति ।
स्वावासमसद्युतवीक्षितं विदग्धं शुभैरस्तम् ॥

मैथुनकारको ग्रहयोगः

[5]कुजेन्दुहेतु प्रतिमासमार्तवं
गते तु पीडर्क्षमनुष्णदीधितौ ।
अतोऽन्यथास्थे शुभपुंग्रहेक्षिते
नरेण संयोगमुपैति कामिनी ॥

(१) आत. ४६२ ; संत. ९०८ ज्योतिषे.
(२) विपा. ९३ ज्योतिःशास्त्रे.
(३) संसौ. ३४. (४) ज्योनि. २७४.
(५) आन. ८९ बृहज्जातके.

अस्यार्थः— लोके तावत् स्त्रीणां प्रतिमासं यदार्तवं भवति तत् कुजेन्दुहेतु भवति । कुजश्च इन्दुश्च हेतुर्यस्य तत् तथोक्तम् । तु विशेषः— अनुष्णदीधितौ चन्द्रे स्त्रीजन्मराशेः पीडर्क्षे पीडास्थानं गते प्राप्ते भवति । पीडास्थानं नाम अनुपचयस्थानमित्यर्थः । उपचयस्थानं तु 'उपचयान्यरिकर्मलाभदुश्चिक्यसंशितगृहाणि' इति । अरिः षष्ठम्, कर्म दशमम्, लाभः एकादशः(१शम्), दुश्चिक्यं तृतीयम् । एतानि चत्वारि स्थानानि विना शिष्टान्यष्ट स्थानानि । तेषु चन्द्रे स्थिते ऋतुर्भवति । अतः अन्यथाख्ये उपचयसंज्ञेषु चतुर्षु स्थानेषु चन्द्रे शुभपुंग्रहेक्षिते सति स्थिते $यदा ऋतुर्भवति तदा कामिनी नरेण भर्त्रा पुत्रार्थे संयोगमुपैतीत्यर्थः । आन. ८९

## सायणीये

अशुभनक्षत्रात्प्राचीनानि नवमदशमद्वादशानि गमने वर्ज्यानि

'गर्भाधानर्क्षमारभ्य नक्षत्रे जननं भवेत् ।
नवमे दशमे वाऽपि द्वादशे वाऽथ निश्चितम् ॥
आधानर्क्षे समारभ्य प्रसवो द्वादशे यतः ।
विज्ञाय शुभनक्षत्रं तद्गन्तव्यं विशेषतः ॥

## श्रीपतिः

गमने पुत्रोत्पत्त्यनुकूले ग्रहयोगः

'लग्नधर्मसुतराशिमुपेते
वाक्पतौ दनुजराजगुरौ वा ।
पुत्रकाम उदयेऽथ निजे वा
प्रेयसीं प्रमुदितः समुपेयात् ॥

$ यदा ऋतुर्भवति तदा उक्तग्रहयोगे सति संयोगमुपैतीत्यन्वयः । ऋतुकालावच्छेदेन प्रकृतश्लोकोत्तरार्धोक्तग्रहयोगस्य स्त्रीपुंससंयोगकारकत्वम्, न तु टीकायामापाततः प्रतीयमानमुक्तग्रहयोगावच्छेदेनर्तुप्राप्तेः स्त्रीपुंससंयोगकारकत्वम् । किंच, अयं ग्रहयोगः पूर्वार्धोक्तग्रहयोगवत्स्त्रैणः, अपि तु पौंस्न इत्यपि ज्ञेयम् । अस्मिन्नर्थे भट्टोत्पल इमे वचने प्रमाणयति— 'बादरायणः— पुरुषोपचयगृहस्थो गुरुणा यदि दृश्यते हिममयूखः । स्त्रीपुरुषसंप्रयोगं तदा वदेदन्यथा नैव ॥, तथा मणित्थः— ऋतुविरमे स्नातायां यद्युपचयसंस्थितः शशी भवति । बलिना गुरुणा दृष्टो भर्त्रा सह संगमश्च तदा ॥' इति ।

(१) मुक्ता. ७७. (२) संसौ. ३२.

वीर्यभाजि सगुरौ भृगुपुत्रे
दुर्बलेषु च परेषु नितान्तम् ।
पुंप्रसूतिकथितेऽपि च काले
कामयेत्प्रियतमां तनयार्थी ॥

## रत्नमालायाम्

गमने वर्ज्यनक्षत्राणि

'पित्र्यं पौष्णं नैर्ऋतं चापि धिष्ण्यं
त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम् ।
पुष्टः क्षामां पुत्रकामो हि गच्छन्
सल्लक्षण्यं पुत्रमाप्नोति सम्यक् ॥

(१) पित्र्यं मघानक्षत्रम् । पौष्णं रेवतीनक्षत्रम् । नैर्ऋतं मूलम् । धिष्ण्यं नक्षत्रम् । ¶ स्मृच. १५

(२) अत्र च मूलरेवत्योर्विहितप्रतिषिद्धत्वाद्विकल्पः । एतत्त्रितयपरित्यागे निमित्तमुक्तं विष्णुपुराणे— 'यस्मिन्नृक्षे भवेद्गर्भस्तस्माद्यद्दशमं भवेत् । तत्रापत्यं प्रजायेत तस्मादेतत्त्रयं त्यजेत् ॥' इति । क्षामां कृशाम् । क्षामता च रजस्वलाव्रतेनैव । तद्व्रतं चाग्रे दर्शयिष्यते । यदि तेन न भवति तर्हि लघुरूक्षादिभोजनेन पुत्रोत्पत्त्यर्थं कर्तव्या । पुरुषेण च पुष्ट्यर्थं स्निग्धादिभोजनमवश्यं कार्यम् । ‡ संप्र. १५९–१६०

¶ मपा., गभा. स्मृचगतम् ।

‡ शेषं स्मृचगतम् । संग. संप्रगतम् ।

(१) स्मृच. १५ पौष्णं (पौष्ण्यं) हि गच्छन् (ऽधिगच्छेत्) सम्यक् (नित्यम्) ज्योतिःशास्त्रे; व्यका. ७२८ पुष्टः (पुष्टां) सल्ल (सुल) ज्योतिःशास्त्रे; मपा. ३४७ (पित्र्यं पौष्णं नैर्ऋतं वा निधिरूपं त्यक्त्वा) एतावदेव, ज्योतिःशास्त्रे; मर. ११० चापि (चैव) सल्ल (सल); गभा. १२३ (पित्र्यं ... त्यक्त्वा) एतावदेव, ज्योतिःशास्त्रे; संप्र. १५९ चापि (वाऽपि) सम्यक् (धीमान्) ज्योतिःशास्त्रे; संग. ११ चापि (चैव) कामो हि ग (कामोऽभिग) सम्यक् (पित्र्यम्) ज्योतिःशास्त्रे; संग. ३७१ सम्यक् (धीमान्) वीरमित्रोदये.

### राजमार्तण्डः

गर्भाधाने दम्पत्योर्गोचरशुद्धिः

**'स्त्रीणां सर्वक्रियारम्भे भर्तुर्गोचरतः फलम् ।**
**स्वशुद्धया स्वामिशुद्धया च गर्भाधानादिकं पुनः ॥**

**विवाहकार्ये कुसुमप्रतिष्ठा**
**गर्भप्रतिष्ठा वनिताविशुद्धौ ।**
**अन्यानि कार्याणि धवस्य शुद्धौ**
**पत्यौ विहीने प्रमदाविशुद्धया ॥**

### श्रीधरीये

गमने शुभाशुभतिथिवारनक्षत्राणि

**'षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं**
**चतुर्दशीमप्युभयत्र हित्वा ।**
**शेषाः शुभाः स्युस्तिथयो निषेके**
**वाराः शशाङ्कार्यसितेन्दुजानाम् ॥**

एतास्तिथीरुभयपक्षयोर्हित्वा शेषास्तिथयो निषेके शुभावहाः स्युः । तत्र चन्द्रबुधगुरुशुक्रवाराः शुभाः । शेषाः पापवारा वर्ज्या इत्यर्थः । § प्रपा. १०५

**'विष्णुप्रजेशरविमित्रसमीरपौष्ण-**
**मूलोत्तरावरुणभानि निषेककार्ये ।**
**पूज्यानि पुष्यवसुशीतकराश्विचित्रा-**
**दित्याश्च मध्यमफला विफलाः स्युरन्याः ॥**

(१) विष्णुः श्रवणः । प्रजेशः रोहिणी । रविः हस्तः । मित्रः अनूराधा । समीरः स्वाती । पौष्णः रेवती । उत्तरात्रयम् । वरुणः शतभिषक् । एतान्येकादश नक्षत्राणि निषेककर्मणि पूज्यानि । वसुः धनिष्ठा । शीतकरः मृगशिरः । अदितिः पुनर्वसुः । पुष्यः अश्विनी चित्रा । एतानि षट् मध्यमफलानि । अन्यानि भरणी कृत्तिका आर्द्रा आश्लेषा मघा फल्गुनी विशाखा ज्येष्ठा पूर्वाषाढा पूर्वाभाद्रपदेति दश नक्षत्राणि विफलानि वर्ज्यानि । ‡ प्रपा. १०६

(२) विष्ण्वादिदैवत्यनक्षत्राण्युक्तानि रत्नमालायाम्– 'मेशा दस्रयमाग्निधातृशशिनः शर्वोऽदितिर्वाक्पतिः कद्रूजाः पितरो भगोऽर्यमरवी त्वष्टाह्वयो मारुतः । शक्राग्नी त्वथ मित्र इन्द्रनिर्ऋती तोयं च विश्वे विधिर्गोविन्दो वसवोऽम्बुपाजचरणाहिर्बुध्न्यपूषाभिधाः ॥'। उत्तराशब्देनोत्तरात्रयम् । अत्र मूलस्य पूज्यत्वमुक्तम् । याज्ञवल्क्येन तु 'एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।' इत्युक्तम् । तेन पूर्वत्र मूलं चिन्त्यम् । अत्र समासु पुत्राः, विषमासु कन्या इति ज्ञेयम् ।

सिन्धु. ८११

[ पूर्वत्रेति । ज्यौतिषस्यार्थशास्त्रत्वाद्दोषानवधानेनापि ग्रहणसंभवात् न तु विकल्पः, शास्त्रयोरसाम्यात् । किंच, मूलत्यागे शुभपुत्राप्तिरूपोऽभ्युदयः तदत्यागे तु पुत्राप्तिमात्रमिति ह्यर्थः, स च निषेधे पर्यवस्यति । कुभ. ]

(३) मूलस्य विहितप्रतिषिद्धत्वाद्विकल्प इति केचित् । वस्तुतस्तु मूलस्य पूज्यत्वं चिन्त्यमेव । ¶ संर. ६८४

### महेश्वरः

गमने वर्ज्यतिथिनक्षत्राणि

**'लब्ध्वा चन्द्रकलामृतौ स्वयुवतीं**
**गच्छेत्सुतार्थी पुमां-**
**स्त्यक्त्वा रात्रिचतुष्टयं प्रथमजं मूलं**
**मघां रेवतीम् ।**

---

§ संप्र., सिन्धु., संर. प्रपागतम् ।

(१) संसौ. ४४–४५.

(२) प्रपा. १०५ षष्ठ्य ... चतुर्दशी (षष्ठ्यष्टमीपञ्चदशीचतुर्थीचतुर्दशी); संप्र. १५९; मुक्ता. ७५ सायणीये; सिन्धु. ८११; संर. ६८४.

(३) प्रपा. १०५–१०६ (=) दित्याश्च (दित्यश्च); संप्र. १५९ रन्याः (रन्ये); मुक्ता. ७५ विष्णुप्र (विष्णुः प्र) सायणीये; सिन्धु. ८११ संप्रवत्; संकौ. १९ कार्ये (काले) शेषं प्रपावत्, पारिजाते; संर. ६८४ संप्रवत्, रत्नमालायाम्.

‡ संप्र., मुक्ता., संकौ. प्रपावत् ।

¶ शेषं प्रपावत् ।

(१) संसौ. २९.

पक्षार्धे च चतुर्दशीं प्रमुदितः पक्षार्धदर्शो-
(?) निशं
श्राद्धस्याऽऽद्यनिशं दिनं दिननिशोः
संधी च पर्वाण्यपि ॥

**कालनिर्णये**

गमने वर्ज्यतिथिवारनक्षत्राणि

[1]रिक्तापर्वाष्टमीषष्ठयो दिवा जन्मत्रयं तथा ।
पापग्रहाणां वाराश्च त्याज्याश्चैवमृतौ गतिः ॥

**कालादर्शे**

मूलमघे पर्वाणि च गमने वर्ज्यानि

[2]राक्षसर्क्षं मख(? घ)र्क्षं च पञ्च पर्वाणि वर्जयेत् ॥

राक्षसर्क्षं मूलनक्षत्रम् । तन्त्रे ' चतुर्दश्यष्टमी पक्षद्वये दर्शश्च पूर्णिमा । संक्रान्तिश्चेति पर्वाणि पञ्च प्राहुर्महर्षयः ॥ ' इति । मुक्ता. ७७–७८

**ज्योतिषार्णवे**

गमने शुभाशुभवारवर्गोदयद्दष्टयः

[3]सोमज्ञगुरुशुक्राणां वारवर्गोदयाः शुभाः ।
तेषां च दृष्टयश्चैव नेतरेषां कदाचन ॥

**भास्करव्यवहारे**

गमने पुत्रोत्पत्तिकारको ग्रहयोगः

[4]केन्द्रद्यधर्मर्क्षपुत्रस्थितैः साधुभिः
षट्त्रिरुद्रेषु पापैर्विधावुद्गमे ।
सौम्ययुक्ते च पुंजन्मयोगे प्रियां
पुत्रकामो हि युग्मासु रात्रिष्वियात् ॥

**मुहूर्तचिन्तामणिः**

गर्भाधाने वर्ज्यतिथिवारयोगाः , शुभाशुभमध्यमनक्षत्राणि, पुत्रोत्पत्तिकारको ग्रहयोगः , स्त्रियाश्चन्द्रबलम्

[5]गण्डान्तं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलान्तकं
दास्रं पौष्णमथोपरागदिवसं पातं
तथा वैधृतिम् ।
पित्रोः श्राद्धदिनं दिवा च परिघाद्यार्धं
स्वपत्नीगमे
भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः
पापभम् ॥

गर्भाधानमुहूर्ते शार्दूलविक्रीडितशालिनीभ्यामाह— गण्डान्तमिति । तत्र स्वपत्नीगमे स्वपत्नीगमने एतान् दोषान् त्यजेदिति सर्वत्र संबन्धः । एतान् कान् ? त्रिविधं गण्डान्तम् । गण्डान्तलक्षणं रत्नमालायाम्— ' नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम् । नवपञ्चचतुर्थानां द्व्येकार्धघटिकामितम् ॥ ' इति । निधनं जन्मर्क्षात्सप्तमीं वधताराम् , जन्मनक्षत्रं जन्मसंज्ञकनक्षत्रत्रयम् , मूलम् , अन्तकं भरणीम् , दास्रम् अश्विनीम् , पौष्णं रेवतीम् , मघाम् , उपरागदिवसं ग्रहणदिनम् , पातं व्यतीपातं महापातं च, वैधृतिं योगम् , पित्रोः मातापित्रोः श्राद्धदिनम् , दिवा सूर्यावच्छिन्नकालम् , परिघयोगस्य पूर्वार्धम् , तथा उत्पातैः दिव्यान्तरिक्षभौमैस्त्रिविधैरुत्पातैः हतं दूषितम् , जन्मर्क्षतः जन्मलग्नाज्जन्मराशेर्वा मृत्युभवनम् अष्टमं लग्नम् , पापभं पापग्रहयुक्तं भं नक्षत्रं लग्नं वा इति । पीटी.

[1]भद्राषष्ठीपर्वरिक्ताश्च संध्या-
भौमार्कार्की नाऽऽद्यरात्रीश्चतस्रः ।
गर्भाधानं त्र्युत्तरेन्दुर्कमैत्र-
ब्राह्मस्वातीविष्णुवस्वम्बुपे सत् ॥

भद्रा प्रसिद्धा, षष्ठी तिथिश्च । पर्वाणि चतुर्दश्यष्टम्यमावास्यापूर्णिमासंक्रमणानि । रिक्ताः चतुर्थीनवमीचतुर्दश्यः । संध्यां प्रातःसंध्यां सायंसंध्यां च, भौमं मङ्गलवारम् , अर्कम् आदित्यवारम् , आर्किं शनैश्चरवारम् , चतस्रः आद्यरात्रीः रजोदर्शनदिनमारभ्य दिनचतुष्टयं च तत्र त्यजेदित्यर्थः । अधुना नक्षत्राण्याह— गर्भाधानमिति । उत्तरात्रयमृगहस्तानुराधारोहिणीस्वातीश्रवणधनिष्ठाशततारकासु गर्भाधानं सत् शुभदम् । पीटी.

---

(१) प्रपा. १०५. (२) मुक्ता. ७७.
(३) संसौ. ३४. (४) संसौ. ३२.
(५) मुचि. ५१५ ; संग. ३७० (=) घाद्यार्धं (घार्धं).

(१) मुचि. ५१६ ; संग. ३७० (=).

[1]केन्द्रत्रिकोणेषु शुभैश्च पापै-
स्त्र्यायारिगैः पुंग्रहदृष्टलग्ने ।
ओजांशगेन्दावपि युग्मरात्रौ
चित्रादितीज्याश्विषु मध्यमं तत् ॥

(१) अथ गर्भाधाने लग्नबलमिन्द्रवज्रयाऽऽह– केन्द्रेति । तत्र केन्द्रत्रिकोणेषु लग्नचतुर्थसप्तमदशमपञ्चमनवमस्थानेषु स्थितैः शुभग्रहैस्तथा त्र्यायारिगैः तृतीयैकादशषष्ठस्थानस्थितैः पापग्रहैरुपलक्षिते पुंग्रहैः सूर्यभौमगुरुभिर्दृष्टे लग्ने, तथा ओजांशगेन्दौ ओजः विषमराशिः मेषमिथुनादिः, अंशोऽप्योज एव, तत्र स्थिते चन्द्रे सति युग्मरात्रौ समरात्रौ गर्भाधानं कार्यम् । अथ गर्भाधाने विहितनक्षत्राप्राप्तौ मध्यमनक्षत्राण्याह– चित्रेति । चित्रापुनर्वसुपुष्याश्विनीषु तत् गर्भाधानं मध्यमं मध्यमफलदमित्यर्थः । यदाह बृहस्पतिः– 'चित्रादित्ये तथा तिष्यतुरगौ चेति मध्यमाः । शेषाण्यृक्षाणि दुष्टानि स्युर्निषेकाख्यकर्मणि ॥' इति । पीटी.

(२) चन्द्रे विषमराशीनां नवांशगे सति । अपिशब्दाल्लग्नेऽपि विषमांशगे युग्मराशौ समराशौ गर्भाधानं न कार्यम् । संग. ३७०

[2]स्त्रीणां विधोर्बलमुशन्ति विवाहगर्भ-
संस्कारयोरितरकर्मसु भर्तुरेव ॥

गोचरप्रकरणे यद्यप्युभयोः स्त्रीपुंसयोः सामान्यतो ग्रहबलमुक्तम्, तथाऽप्यत्र स्त्रीणां चन्द्रबले विशेषोऽभिधीयते । विवाहे गर्भसंस्कारे गर्भाधानपुंसवनसीमन्तादिरूपे स्त्रीणामपि बलं ग्राह्यम् । इतरकर्मसु वस्त्रपरिधानालंकारधारणादिषु कृत्येषु भर्तुः धवस्यैव चन्द्रबलं ग्राह्यम्, न तु स्त्रीणाम् । यदा तु भर्ता मृतस्तदा स्त्रीणामेव चन्द्रबलं ग्राह्यमित्यर्थसिद्धम् । उक्तं च– 'पाणिपीडनविवेरनन्तरं भर्तुरेव बलमैन्दवादिकम् । चिन्तनीयमिह योषितां क्वचिन्नष्टमङ्गलमृते मनीषिभिः ॥' इति । † पीटी.

† संव. पीटीगतम् ।

(१) मुचि. ५।७ ; संग. ३७० (=) गेन्दावपि (गेऽब्जेऽपि च) रात्रौ (राशौ).

(२) मुचि. ५।९ ; संव. ५१.



## जातकोत्तमे

गर्भाधाने अशुभग्रहयोगाः

[1]प्राग्लग्नस्थौ मन्दभौमौ निषेके
नारीगर्भस्रावहेतू भवेताम् ।
तत्संदृष्टे तद्गृहस्थे हिमांशौ
यद्वा स्त्रीणां जायते गर्भपातः ॥

[2]भौमदृक्काणगे चन्द्रे सौम्यैरायधनस्थितैः ।
सूर्यस्तद्वेष्टितस्तद्वत् पापलग्ने विनिर्दिशेत् ॥
अशुभैर्द्वादशर्क्षस्थैः शुभदृष्टिविवर्जितैः ।
आधानलग्ने मरणं योषितः प्रवदेद्बुधः ॥

## होरामकरन्दे

गर्भाधाने अशुभग्रहयोगाः

[3]क्रूरान्तरस्थौ युगपत्पृथग्वा
विलग्नचन्द्रौ भवतो निषेके ।
शुभग्रहालोकनवर्जितौ चेत्
तदा सगर्भैव विपद्यते स्त्री ॥
इन्दुतो यदि विलग्नतोऽथवा
बन्धुगैरशुभदैः कुजेऽष्टमे ।
बन्धुरिष्फगतयोः कुजार्कयोः
स्यात्कृशे शशिनि पूर्ववन्मृतिः ॥
स्मरतनुगतयोर्दिनकरकुजयोः ।
भवति हि निधनं प्रहरणजनितम् ॥

## जातकतिलके

गर्भाधाने शुभाशुभगोचरग्रहयोगाः

[4]शुक्रार्कभौमशनिभिः स्वांशोपचयगैस्तथा ।
त्रिकोणलग्नगे वेज्ये सबले गर्भसंभवः ॥
स्त्रीपुंसोस्तु मनोभावो यथा गर्भस्तथा रते ।
पुंसोऽर्काद्रोगदौ द्यूने मन्दारौ चेन्दुतः स्त्रियाः ॥
मन्दारमध्यगे सूर्ये पुंसो मृत्युर्विधौ स्त्रियाः ।
मन्देनाऽऽरेण चाब्जेऽर्के दृष्टे युक्ते मृतिस्तयोः ॥

(१) ज्योनि. २७५. (२) ज्योनि. २७६.
(३) ज्योनि. २७५. (४) ज्योनि. २७४–२७५.

शनीन्दू पितृमात्राख्यौ निश्यह्नि रविभार्गवौ ।
ओजयुग्मर्क्षगौ स्वर्क्षस्थितौ च शुभदौ तयोः ॥

[1]ओजर्क्षे विषमांशस्थैर्लग्नेज्यार्केन्दुभिः पुमान् ।
समे समांशकैः स्त्री स्यादाधाने प्रसवेऽपि वा ॥
गुर्वर्कावोजभांशस्थौ गुर्वर्कौ पुंजनुःकरौ ।
शुक्रेन्द्वाराः समर्क्षांशे बलिनः स्त्रीजनुःकराः ॥
गुर्वर्कयोर्धनुर्युग्मभांशके बुधदृष्टयोः ।
पुंद्वयं स्यात्सिताराब्जैस्तद्वत्स्त्रीझषगैः स्त्रियौ ॥
लग्नं विनौजभावस्थे मन्दे पुंजन्म जायते ।
बली वा नृखगः केन्द्रे नृदृष्टश्चाबलोऽन्यथा ॥
ओजेऽब्जलग्नेऽसृग्दृष्टे चन्द्रज्ञौ वा समौजगौ ।
ओजांशे शुक्रलग्नार्काः क्लीबजन्मकरास्तथा ॥
समौजभस्थौ लग्नार्कावन्योन्यं यदि पश्यतः ।
ज्ञार्की वा रविभौमौ वा तद्वत्क्लीबकरौ मतौ ॥
लग्ने धन्वंशके दृष्टे बलिना ज्ञेन वाऽर्किणा ।
सर्वैर्धन्वंशगैः खेटैर्गर्भस्त्र्यधिकजन्तुकः ॥

(१) ज्योनि. २७५-२७६.

## मृगाङ्कजातके

गर्भाधाने शुभाशुभमिश्रग्रहयोगाः

[1]क्षीणेऽब्जे पापसंयुक्ते मातुर्मृत्युरिने पितुः ।
पापैर्दृष्टे भवेद्घार्धर्मिश्रैर्मिश्रं शुभैः शुभम् ॥

## रेणुकारिकाः

गमने वर्ज्यनक्षत्राणि, पुत्रकारको ग्रहयोगः

[2]पैत्रं पौष्णं नि( ? नै )र्ऋतं वाऽपि धिष्ण्यं
त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम् ।
पुष्टः क्षामां पुत्रकामोऽभिवाञ्छेत्
सल्लक्षण्यं पुत्रमाप्नोत्यवश्यम् ॥

[3]त्रिकोणकेन्द्रोपगतेषु सत्सु
क्रूरेषु लाभन्नृ( ? त्रि )रिपुस्थितेषु ।
लग्ने शशाङ्के सुशुभेऽभिगच्छेत्
पुंजन्मयोगे युवतिं सुताप्त्यै ॥

(१) ज्योनि. २७५.
(२) रेका. ३५ पृ. ३.
(३) रेका. ४३ पृ. ४.

# *गर्भाधानप्रयोगः

## बौधायनगृह्यसूत्रम्

भार्याभिमन्त्रणालिङ्गनात्माभिमर्शोपगमनानि समन्त्रकाणि

[1]चतुर्थ्यां जातायां निशायामलंकृत्य शयनेऽभिमन्त्रयते— 'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥

यथाऽग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी । वायुर्यथा दिशां गर्भ एवं गर्भं दधातु ते ॥

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥

हिरण्ययी अरणी यं निर्मन्थतो अश्विना । तं ते गर्भं दधाम्यहं दशमे मासि सूतवे ॥

नेजमेष परापत सपुत्रः पुनरापत । अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान् ॥ ' इति ॥

अथैनां परिष्वजति— 'अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं रेतोऽहं रेतोभृत्त्वं मनोऽहमस्मि वाक् त्वं सामाहमस्मि ऋक् त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ' इति ॥

आत्मानं प्रत्यभिमृशते— 'अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पितॄणामहं जनिभ्यो अपरीषु पुत्रान् ॥' इति ॥

अथैनामुपैति— 'तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम् ॥ ' इति ॥

* मानव-वाराह-जैमिनिगृह्यसूत्रेषु चतुर्थीकर्मोत्तरं गर्भाधानमविधाय पुंसवनादिविधानात् प्रत्येकमृतुगमने चतुर्थीकर्मविध्यन्तस्यातिदेशाच्च तेषां सूत्राणां विवाहप्रकरणगतं चतुर्थीकर्म (सं. का. पृ. २२२७–२२४४) अत्रानुसंधेयम् ।

(१) बौगृ. १।७।३७–४४.

## बौधायनगृह्यशेषसूत्रम्

पक्वहोमः , आज्यहोमः , उत्तरतन्त्रान्ते अन्नाभिमन्त्रणम्, अन्नप्राशनम्, जठराभिमर्शः , कामध्यानम्

[1]अथ गर्भाधानं व्याख्यास्यामः— पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्यृद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति— 'प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतोऽभयमभयं तन्नो अस्त्वव देवान् यजे हेड्यान् स्वाहा ॥ ' इति ॥

स्विष्टकृतमवदाय तमन्तःपरिधि सादयित्वाऽथाऽऽज्याहुतीरुपजुहोति— '‡ज्येष्ठाय स्वाहा, श्रेष्ठाय स्वाहा, कनिष्ठाय स्वाहा, कनिष्ठित्यै स्वाहा, प्रतिष्ठाय स्वाहा, प्रतिष्ठित्यै स्वाहा, दम्पत्यै स्वाहा, दम्पतये स्वाहा, अयने स्वाहा, अयनपतये स्वाहा, प्रजापतये स्वाहा, ब्रह्मणे स्वाहा ' इति ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

‡ अस्मिन्ग्रन्थे ' दम्पत्यै, दम्पतये, अयने ' इत्यत्राऽऽर्षत्वकल्पनाभावे अशुद्धयः स्पष्टं प्रतीयन्ते । 'प्रतिष्ठाय' इतिमन्त्रस्वरूपम् ' कनिष्ठाय, कनिष्ठित्यै, अयनपतये, प्रजापतये ' इतिमन्त्रसद्भावश्च संदिह्यते । बोधायनीयगृह्यकर्मसमुच्चये 'ज्येष्ठाय स्वाहा, श्रेष्ठाय स्वा० , प्रतिष्ठायै स्वा० , प्रतिष्ठित्यै स्वा० , संपत्यै स्वा० , संपतये स्वा० , ब्रह्मणे स्वा० , आयतनवते स्वा० ' इत्याहुतिमन्त्राः पठ्यन्ते । तत्रैव पादटिप्पण्यामुद्धृतम् 'ज्येष्ठाद्यैराज्यमष्टाभिर्हुत्वा स्विष्टकृदादयः । ' इति प्रयोगपल्लवचनमपि संख्यारूपैकदेशानुमत्या सर्वं बो. गृ. समुच्चयपाठमेवानुगृह्णाति ।

(१) बौगृशे. २।२।१–७.

हविष्यमन्नमभिमन्त्रयते– 'तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥' इति ॥

अपरेणाग्निमुभौ जायापती प्राश्नीयाताम्– 'तत्सवितुर्वरेण्यम्' इति ॥

प्राश्याप आचम्य जठरमभिमृशति– 'यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः' इति द्वाभ्याम् ॥

यं कामं कामयते तं मनसा ध्यायेत्। इति गर्भाधानं व्याख्यातम् ॥

## आश्वलायनगृह्यपरिशिष्टम्

प्राजापत्यस्थालीपाकः, मूर्धाभिमर्शः, अग्न्यादित्योपस्थानम्, नस्तःकरणम्, उपस्थाभिमर्शः, विहरणम्, उपगमनम्, अनुप्राणनम्, हृदयाभिमर्शः, नस्तःकरणमात्रं कर्तव्यमिति मतान्तरम्

[1]'अथर्तुमत्याः प्राजापत्यमृतौ प्रथमे। अनुकूलेऽहनि सुस्नातयाऽन्वारब्धः प्राजापत्यस्य स्थालीपाकस्य हुत्वैता आज्याहुतीर्जुहुयात्– 'विष्णुर्योनिम्' इति तिस्रः, 'नेजमेष' इति तिस्रः, 'प्रजापते न त्वत्' इत्येका। अथातो मूर्ध्नि 'अप नः शोशुचदघम्' इत्यभिमृश्य 'याः फलिनीर्या अफलाः' इति जपित्वा 'वधेन दस्युं प्र हि चातयस्व' इति षड्भिः 'अग्निस्तुविश्रवस्तमम्' इति द्वाभ्यामग्निमुपस्थाय 'सूर्यो नो दिवस्पातु' इति सूक्तेनाऽऽदित्यमुपतिष्ठेत। अथ गर्भलम्भनम्। ऋतावनुकूलायां निशि स्वलंकृते सुगन्धवासिते वेश्मनि तथाभूते पर्यङ्कशयने सुस्नातामलंकृतां शुक्लवसनां स्रग्विणीं भार्यां स्वयं तथाभूतः प्रवेश्य दूर्वाः पिष्ट्वाऽश्वगन्धां वा सूक्ष्मेण वाससा संगृह्य 'उदीर्ष्वातः पतिवती' इति द्वाभ्यां स्वाहाकारान्ताभ्यामुभयोर्नासाबिलयोर्निषिच्य संवेश्य 'गन्धर्वस्य विश्वावसोर्मुखमसि' इत्युपस्थमभिमृश्य 'विष्णुर्योनिं कल्पयतु' इति द्वाभ्यां विहृत्य 'यो गर्भमोषधीनाम्' 'अहं गर्भमदधामोषधीषु' इति जपित्वोपगच्छेत्। 'प्राणे ते रेतो दधाम्यसौ' इत्यनुप्राण्यात्। 'यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी। वायुर्यथा दिशां गर्भ एवं ते गर्भं दधाम्यसौ ॥' इति हृदयमभिमृशेत्। नैक उपगमने मन्त्रविधिमिच्छन्ति, न ह्यनेन किंचित् संस्क्रियत इति। त ओषधीभिर्निषेकं कृत्वोपगच्छन्ति ॥

प्रथमग्रहणात् द्वितीयादावृतौ नैतत् सूर्योपस्थानान्तम्। अनुकूलग्रहणादुपगमनं यत्राहोरात्रे चिकीर्षितं तद्दिन एवैतदिति नियम्यते। अत एव दिनान्तरापेक्षया चतुर्थस्यैवानुकूलत्वे तत्रैवैतत्। शान्तिरपि तदुपयोगितया तत्रैव। यद्यपि 'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला। दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥' इति मदनपारिजातोदाहृतवचने चतुर्थेऽह्नि दैवकर्मार्हता नेति प्रतीयते तथापि तेनैव 'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।' इति मनुवाक्ये 'साध्वी गर्भाधानादि-

(१) आगृप. १।२५ प्राण्यात् (प्राण्या); प्रपा. १०७ अथातो (अथ तां) (या अफला:०) (प्र हि चातयस्व०) सुगन्धवा (स्रग्गन्धैर्वा) प्रवेश्य (निवेश्य) उदीर्ष्वातः पतिवती (उदीर्ष्व) नासा (नासिका) त ओषधीभिर्निषेकं कृत्वोपगच्छन्ति (ओषधिनिषेकं कृत्वोपगच्छेत्); संप्र. १५३ (अथर्तुमत्याः प्राजापत्यमृतौ प्रथमे) एतावदेव : १५८ (ऋतुमत्यां प्राजापत्यमृतौ प्रथमे) एतावदेव; संको. १७ (अथर्तुमत्याः .. 'प्रजापते न त्वत्' इत्येकाम्) एतावदेव : ३२ (उभयोर्नासाबिलयोर्निसिच्य) एतावदेव : ३३ (अथर्तुमत्याः प्राजापत्यमृतौ प्रथमे), (अथ गर्भलम्भनमृतौ), (गन्धर्वोऽसि विश्वावसुर्मुखमसीत्युपस्थमभिमृश्य विष्णुर्योनिं कल्पयत्विति द्वाभ्यां विहृत्य यो गर्भमोषधीनामहं गर्भमदधामोषधीष्विति जपित्वोपगच्छेत्। प्राणे ते रेतो दधाम्यसावि० अभिमृशेत्। नैके गमने मन्त्रविधिमिच्छन्ति न त्वनेन किंचित्संस्क्रियत इति। तत्रौषधिनिषेकं कृत्वोपगच्छन्ति) एते त्रयोंऽशा एतावन्त एव विच्छिद्य गृहीताः .

विहितकर्मयोग्या ’ इति व्याख्यानात् प्रधानानुरोधेन तदधिकारसंपत्त्यर्थं शान्तावप्यधिकारसिद्धिः। तथा श्रौतेषु दर्शादिष्वपि, “ यदा त्रिरात्रेण ’ इति वचनात् रजस्वलायाः स्नानदिवसेऽपि श्रौतकर्माणि कर्तव्यान्येव, न तु पञ्चमेऽहनि ” इति आपस्तम्बभाष्यकारोक्तेः। एवमुदाहृतमदनपारिजातग्रन्थे आदिपदं उपनयनाद्यभिप्रायम्, तत्रापि वक्ष्यमाणश्रीसूक्तहोमपूर्वकाभिषेकेण चतुर्थेऽह्न्यधिकारसंभवात्। अन्यदिनानुकूलत्वे शान्तिपूर्वकमेतत्रैवेति व्यवस्था बोध्या। अयं होमोऽनाहिताग्नेः अर्धाधानिनश्चाऽऽहिताग्नेः सत्यौपासने तत्रैव कार्यः।

१७–१८

उक्तहोमासंभवे पूर्वोत्तरपाकयज्ञतन्त्रसहिताः पञ्चाऽऽज्याहुतयो होतव्याः— ‘ अग्नये स्वाहा, इन्द्राय स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, ब्रह्मणे स्वाहा ’। तत्र परिस्तरणमाज्यभागौ ब्रह्मा चेत्यङ्गानि कृताकृतानि। सर्वथैव होमासंभवे अश्वगन्धामूलं पेषयित्वा ‘ उदीर्ष्वातः पतिवती ’ इत्येकयैव ऋचा दक्षिणस्यां नासिकायां निषिच्योपगमनं कार्यम्। यथोक्तं सिद्धान्तभाष्ये— “ तत्रैके ऋतुकाले अनादेशहोममिच्छन्ति, † अपरे तु ‘ उदीर्ष्व ’ इत्यनया दक्षिणस्यां नासिकायां नस्तः करोतीत्येतद्गर्भलम्भनम् ” इति। अनुसृतं च होमरहितस्य एकयर्चा नस्तःकरणमात्रस्य सौत्रगर्भलम्भनपदार्थत्वं जयन्तेन तदनुसारिणा कारिकाकृताऽपि। उक्तं चेत्थं शौनकेनापि— ‘ उदीर्ष्वातः पतिवती-

† अत्र सिद्धान्तभाष्यसमाख्ये देवस्वामिभाष्ये “ अपरे तु पाठान्तरम्— ‘ अध्यात्मसूक्तं पेषयित्वा ऋतुवेलायाम् ‘ उदीर्ष्वातः ’ इत्यनया... ” इति ग्रन्थोऽस्ति। तत्र पाठान्तरमित्यतः परं गृह्यसूत्रे इति शेषः। तथा च अस्मिन् पक्षे होमरहितगर्भलम्भनस्य सूत्रे आदेशादनादेशाहुतयो न भवन्ति। ‘ अध्यात्मसूक्तम् ’ इत्यशुद्धम्। पादटिप्पण्याम् ‘ अभ्याडामूलम् ’ इति पाठः। कौषीतकिगृह्यसूत्रे ‘अभ्याण्डा’ इति शब्दः प्रयुक्तः। कोशेषु तु ‘ अध्यण्डा ’ इति शब्दं पठित्वा अजशृङ्ग्यादयो वनस्पतिविशेषास्तदर्था उक्ताः।

त्येतामृचमुदीर्य तु। ’ इत्यादिना ग्रन्थेन। न चोपगमनमन्त्रा अप्यावश्यकाः, जयन्तादिभिरनादरणात् उदाहृतपरिशिष्टाच्च। प्राजापत्यचरुहोमकरणपक्षेऽपि प्रथमर्तावेवासौ कार्यः, अश्वगन्धारसेन नस्तःकरणं तु प्रत्यृतु आवर्तते, परिशिष्टे ‘ अथर्तुमत्याः प्राजापत्यमृतौ प्रथमे ’ इत्युपक्रम्य होमाम्नानात्, ‘ अथ गर्भलम्भनमृतौ ’ इति ऋतुसामान्यमधिकृत्य नस्तःकरणाम्नानात्, तथैव भाष्यकारादिभिः संकथनाच्च। संको. ३३

## कौषीतकिगृह्यसूत्रम्

नस्तःकरणम्, उपस्थाभिमर्शः, जपः

**[1]‘अभ्याण्डामूलं पेषयित्वर्तुवेलायाम् ‘ उदीर्ष्वातः पतिवती ’ इति द्वाभ्यामन्तेस्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत् ॥**

**[2]‘ गन्धर्वस्य विश्वावसोर्मुखमसि ’ इत्युपस्थं प्रजनयिष्यमाणोऽभिमृशेत् ॥**

**[3]समाप्तेऽर्थे जपेत् ॥**

**‘ प्राणे ते रेतो दधाम्यसौ ’ इत्यनुप्राण्यात् ॥**

**[4]‘यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी।**
**वायुर्यथा दिशां गर्भ एवं गर्भं दधामि तेऽसौ॥ ’**
**इति वा ॥**

**[5]“ आ ते योनिं गर्भ एतु पुमान् बाण इवेषुधिम्।**
**आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः ॥**
**पुमांसं पुत्रं जनय तं पुमाननु जायताम्।**
**तेषां माता भविष्यसि जातानां जनयासि च ॥**

(१) कौगृ. १।१९।१ ; संको. ३२ ( नस्तो दक्षिणतो निःसिञ्चेत् ) एतावदेव, परिशिष्टान्तरम्.

(२) कौगृ. १।१९।२ ; संको. ३३ मृशेत् + ( विष्णुर्योनिमिति द्वारं विदारयेत्तां पूषञ्छिवतमामेरयस्वेत्यनुप्रहरेत् ) परिशिष्टान्तरम्.

(३) कौगृ. १।१९।३–४ ; संको. ३३ परिशिष्टान्तरम्.

(४) कौगृ. १।१९।५ ; संको. ३३ मि तेऽसौ ॥ ’ इति वा ( म्यसौ ) परिशिष्टान्तरम्.

(५) कौगृ. १।१९।६–१२.

पुंसि वै पुरुषे रेतस्तत् स्त्रियामनु षिञ्चतु ।
तथा तदब्रवीद्धाता तत्प्रजापतिरब्रवीत् ॥
प्रजापतिर्व्यदधात् सविता व्यकल्पयत् ।
स्त्रीषूयमन्यात् स्वादधत्(?) पुमांसमा
दधादिह ॥

यानि भद्राणि बीजानि पुरुषा जनयन्ति नः ।
तेभिष्ट्वं पुत्रं जनय सुप्रसूर्धेनुका भव ॥
अभि क्रन्द वीळयस्व गर्भमा धेहि साधय ।
वृषाणं वृषन्ना धेहि प्रजायै त्वा हवामहे ॥
यस्य योनिं पतिरेतो गृभाय
पुमान् पुत्रो धीयतां गर्भे अन्तः ।
तं पिपृहि दशमास्योऽन्तरुदरे
स जायतां श्रैष्ठ्यतमः स्वानाम् ॥ '
इति वा ॥

गर्भाधानकर्म वक्ष्यामः । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । ऋतुस्नातायां वध्वां युग्मेऽहनि उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो महाव्याहृतिचतुष्टयं हुत्वा फलिनीमूलं पेषयित्वा नस्ययोग्यं कृत्वा ततः 'उदीर्ष्वातः पतिवती ह्येषा' इत्याभ्यामृग्भ्यां स्वाहाकारान्ताभ्यां प्रत्यृचं दक्षिणे नासिकापुटे निषिञ्चति आ उदरप्रापणात् । ततो महाव्याहृतिचतुष्टयं हुत्वा पाक्षिकी स्विष्टकृत् । ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति । ततो रात्रौ यस्यां वेलायां मैथुनं कर्तुमिच्छेत्तदा 'गन्धर्वस्य विश्वावसोर्मुखमसि' इत्यनेन मन्त्रेण वधूकायाः योनिदेशे लोमशं प्रदेशमभिस्पृश्य मैथुनमारभ्य ततः समाप्ते मैथुने कर्मणि रेतःसेके तूष्णीं वधूमवघ्राय ततः 'प्राणे रेतो दधामि कल्याणभीः' इत्यनेन मन्त्रेण वधूनामोपलक्षितेन यन्त्रारूढ एव निश्वासं तथा मुञ्चति यथा वधूकास्पर्शनं भवति । एष प्रथमपक्षः । 'यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रेण गर्भिणी । वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते कल्याणभि' इत्यनेन वा मन्त्रेण निश्वासं मुञ्चति । एष द्वितीयः पक्षः । अथ वा 'आ ते योनिं गर्भ एतु पुमान् बाण इवेषुधिम् । आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः ॥ पुमांसं पुत्रं जनय तं पुमाननुजायताम् । तेषां माता भविष्यसि जातानां जनयांसि च ॥ पुंसि वै पुरुषे रेतस्तत् स्त्रियामनु षिञ्चतु । तथा तदब्रवीद्धाता तत्प्रजापतिरब्रवीत् ॥ प्रजापतिर्व्यदधात् सविता व्यकल्पयत् । स्त्रीष्वयमन्यास्वादधात्पुमांसमादधादिह ॥ यानि भद्राणि बीजानि पुरुषा जनयन्ति नः । तेभिष्ट्वं पुत्रं जनय सुप्रसूर्धेनुका भव ॥ अभिक्रन्द वीलयस्व गर्भमा धेहि साधय । वृषाणं वृषन्ना धेहि प्रजायै त्वा हवामहे ॥ यस्य योनिं पतिरेतो गृभाय पुमान् पुत्रो धीयतां गर्भे अन्तः । तं पिपृहि दशमास्योऽन्तरुदरे स जायतां श्रैष्ठ्यतमः स्वानाम् ॥ इति वा' 'आ ते योनिम्' इत्येवमादिर्मन्त्रगणः । अनेन वा अनुप्राणनं कुर्यात् । एष तृतीयः पक्षः । एतच्चोपस्थाभिमर्शना(द्य)नुप्राणनान्तं मैथुने कुर्याद्वा गर्भसंस्थानात् । अपरे व्याचक्षते —मैथुनान्ते शोकं( ? शौचं )कृत्वा अन्यतममनुप्राणनं कुर्यात् । अन्ये त्वाहुः— पूर्वाभ्यां पक्षाभ्यामन्यतरेण पक्षेणानुप्राणनं कृत्वा ततः 'आ ते योनिं गर्भ एतु' इत्येवमादिमन्त्रगणं जपेत् । कौग्सं.

## आपस्तम्बगृह्यसूत्रम्

### भार्याभिमन्त्रणम्

**[1]रजसः प्रादुर्भावात् स्नातामृतुसमावेशन उत्तराभिरभिमन्त्रयते ॥**

( १ ) रजसः लोहितस्य । ऋतौ यत् समावेशनं तत्र कर्तव्ये उत्तराभिर्ऋग्भिः 'विष्णुर्योनिम्' इत्यादिभिः त्रयोदशभिरभिमन्त्रयेत । 'रजसः प्रादुर्भावात्' इति वचनात् सर्वस्मिन् रजसः प्रादुर्भावेऽभिमन्त्रणं भवति, न संशासनवत् प्रथम एवर्तौ । 'स्नाताम्' इत्येतत् ब्राह्मणप्रतिषिद्धानां सर्वेषां प्रतिप्रसवार्थम् । स्नातां कृतमङ्गलामित्यर्थः । तेनाञ्जनाभ्यञ्जनान्य( ? द्य )पि भवति ।

अनाकुला.

( २ ) रजसः शोणितस्य प्रादुर्भावात् काले निर्गमात् कारणात् , न मालिन्यादेः , स्नातां पूर्णे त्रिरात्रे स्नातां भार्याम् ऋतुसमावेशने ऋतुकालीनसमावेशनकाले ।

---

(१) आपगृ. ८।१३.

ऋतुश्च स्त्रीणां रजोनिर्गमनादारभ्य षोडश दिवसाः, 'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः।' (मस्मृ. ३।४६) इति मनुवचनात्। उत्तराभिः 'विष्णुर्योनिं कल्पयतु' इत्यादिभिस्त्रयोदशभिरमिमन्त्रयते। अत्र 'रजसः प्रादुर्भावात् स्नाताम्' इति वचनाच्चतुर्थेऽहनि प्रायत्यार्थमनया स्नातव्यमेव। तात.

## हिरण्यकेशिगृह्यसूत्रम्

समन्त्रकं भार्योपाह्वानमुपगमनं च

**'चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामाचम्योपह्वयते ॥**

[१] **'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते अश्विनावुभावाधत्तां पुष्करस्रजौ ॥ हिरण्ययी अरणीयं निर्मन्थतो अश्विना। तं ते गर्भं हवामहे दशमास्याय सूतवे ॥ यथाऽग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी। वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते ॥ यस्य योनिं प्रति रेतो गृहाण पुमान् पुत्रो जायतां गर्भो अन्तः। तं माता दशमासो बिभर्तु स जायतां वीरतमः स्वानाम् ॥ आ ते गर्भो योनिमेतु पुमान् बाण इवेषुधिम्। आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः ॥ करोमि ते प्राजापत्यमा गर्भो योनिमेतु ते। अनूनः पूर्णो जायतामनन्धोऽस्रोणोऽपिशाचधीरः ॥ यानि प्रभूणि वीर्याण्यृषभा जनयन्तु नः। तैस्त्वं गर्भिणी भव स जायतां वीरतमः स्वानाम् ॥ यो वशायां गर्भो यश्च वेहतीन्द्रस्तं निदधे वनस्पतौ। तेन त्वं गर्भिणी भव सा प्रसूर्धेनुगा भव ॥' 'सं नाम्नः, चाक्रवाकम्' इति च ॥**

(१) हिगृ. १९।७।३० ; संभ. १० ; कुभ. ८१० (स्नातां०) मलंकृतां ब्रा (लंकारां कृतब्रा) ; संर. ६८२, ६९०.

(२) हिगृ. १९।७।३१-३२.

(१) ततो निष्क्रान्ते त्रिरात्रे स्नातां प्रयतवस्त्रां शुद्धवस्त्रामलंकृतां माल्यानुलेपनभूषणैः ब्राह्मणसंभाषां विशिष्टब्राह्मणेन प्रथमं संभाषणं कृतवतीं भर्ता प्रयतोऽपि कर्मार्थे पुनराचम्य चतुर्थ्यां रात्र्यां मैथुनार्थे समीपमाह्वयते– 'विष्णुर्योनिम्' इत्येताभिर्नवभिः 'सं नाम्नः, चाक्रवाकम्' इत्येताभ्यां च। $ मातृद.

(२) ब्राह्मणसंभाषाम् अकौटिलब्राह्मणेन सम्यक् भाषा भाषणं यस्याः सा ताम्। * संर. ६९०

**'भूः प्रजापतिनाऽत्यृषभेण स्कन्दयामि वीरं धत्स्वासौ। भुवः प्रजापतिनाऽत्यृषभेण स्कन्दयामि वीरं धत्स्वासौ। सुवः प्रजापतिनाऽत्यृषभेण स्कन्दयामि वीरं धत्स्वासौ' इति वीरं हैव जनयति ॥**

'भूः प्रजापतिना' इत्येतैस्त्रिभिरुपगच्छेत् रेतोऽवस्कन्दयेत् 'वीरं हैव जनयति' इत्येवं विधिः। मारयितारं क्षितारममित्राणामाभिमुख्येन वाऽमित्राणां हन्तारं विक्रान्तं वा पुत्रं जनयति। अर्थवाद एव। अस्मादेव वाक्यशेषादुपगमनार्थता मन्त्राणाम्। केचित् 'चतुर्थ्याम्' इत्यादि 'धेनुगा भव' इत्येतदन्तं पूर्ववाक्यमिति तथैव मन्त्रा आह्वानार्थाः। यदि मर्त्यपि जनयतीत्येतदन्तमुत्तरम्। अस्यायमर्थः– 'सं नाम्नः' इत्यादि 'चाक्रवाक(म्)' इत्येतदन्तं च मन्त्रपदमनुषज्य स्वयं यथा चतुर्थ्यां तथा स्वेन स्वेन कर्मणैव स्यात्। यथा आपस्तम्बीयानां 'यद्देवा देवहेडनम्' 'त्वमग्ने अयासि' इति पूत इत्याद्यन्तयोर्मन्त्रयोर्ग्रहणेन तन्मध्यपतितानामपि मन्त्राणां ग्रहणं तद्वत् भूरित्यन्ते च त्रयो मन्त्रा लिङ्गात् 'वीरं हैव जनयति' इति वाक्यशेषाच्च रेतःस्कन्दनार्थाः। प्रतिमन्त्रं स्कन्दयितव्यम्। तत्रासाविति भार्यायाः संबुद्धया नाम ग्राह्यम्। अपरे त्वाहुः– 'सं नाम्नः' 'चाक्रवाकम्' इत्येतावेव

$ संभ., कुभ. मातृवृगतम्।

* शेषं मातृवृगतम्। 'भार्यागमनम्' इति प्रकरणे 'तासामाद्याश्चतस्रस्तु' इति मनुवचनेऽपि व्याख्यानं (सं.का.पृ. २३६८) द्रष्टव्यम्।

मन्त्रौ स्वेन स्वेन कर्मणा भवतः, अन्यदनन्तरेण व्याख्यानेन तुल्यम्। अन्ये त्वाह्वानपक्षे 'सं नाम्नः, चाक्रवाकम्' इत्याभ्यां सह वचनमिच्छन्ति। अत्र 'स्त्रीरित्यङ्गुलीः' इति वचनात् स्त्रीजननार्थमुपगमे लिङ्गवाक्यशेषविरोधान्मन्त्रा न इत्येके। अन्ये तु जातिनिर्देशाल्लिङ्गस्याविवक्षितत्वात् दुहितृपुत्रादिपुंजननस्य विद्यमानत्वाल्लिङ्गार्थवादाविरोधाच्च मन्त्राभाव इति ब्रुवन्ति। अत्र 'निवीतं मनुष्याणाम्' इत्यनुवाददर्शनाच्छाखान्तरदर्शनाच्च निवीतिना भवितव्यम्। मातृ.

## भारद्वाजगृह्यसूत्रम्

समन्त्रकमुपसंवेशनम्

[1]'चतुर्थ्यां स्नातां प्रयतवस्त्रां ब्राह्मणसंभाषां 'सं ते मनसा मनः' इत्येतेनानुवाकेनोपसंविशति ॥

## काठकगृह्यसूत्रम्

चतुर्थीकर्मविध्यतिदेशः, योन्यभिमर्शशिश्नाभिमर्शोपगमनानि समन्त्रकाणि

\$[2]'एवमेवर्तौ प्रजाकामौ संविशतः ॥

( १ ) एवमेवर्तौ। तत्र त्विदमधिकम्— ब्राह्म.

( २ ) एवमेतत्प्रथमं संवेशनम्। एवमेव अनेनैव विधिना ऋतौ तु काले प्रजाकाले संविशतः संभवतः। तत्र विशेषः— आवि.

करदिति भसदमभिमृशति ॥

'करत्' इति यजुषा भसदं स्त्रीचिह्नं वरोऽभिमृशति। करत् कुर्वाणं प्रजां भवेत्यर्थः। † देव.

भसदित्युपरि जननम् ॥

पुंचिह्नं 'भसत्' इति यजुषा अभिमृशति स्त्री। हे पुंजनन, त्वं भसत् दीप्यमानं सत्कार्यजननसमर्थं भवेत्यर्थः। † देव.

बृहदिति जातम् ॥

'बृहत्' इत्यनेन जातं वीर्यं प्रक्षिपति। § देव.

इति गर्भाधानम् ॥

अयमसौ निषेकाख्यः संस्कारो गर्भाधानमुच्यते। आवि.

## आग्निवेश्यगृह्यसूत्रम्

नारायणध्यानपूर्वकं भगप्रदर्शनमुपगमनं शौचं जपश्च

[1]'षोडशे द्वादशे वाऽपि पञ्चदश्यां तथैव च।
चतुर्दश्यां नवम्यां च षष्ठ्यामष्टम एव च ॥
एतान्यन्यतमं वीक्ष्य शौचं कुर्याद्यथोदितम्।
अभिवीक्ष्य सुनक्षत्रं पुण्यं चैव ग्रहोदयम् ॥
प्रक्षाल्य पाणिपादौ द्वावाचम्य मनसा हरिम्।
ध्यात्वा नारायणं देवं शङ्खचक्रगदाधरम् ॥
अस्या दक्षिणहस्तेन भगं चैव प्रदर्शयेत्।
शिवेन त्वाऽभिमृशामीति शिश्नं योनौ प्रवेशयेत् ॥
एकया ऋषभेणेति ऋचा सम्यगनीक्षणः ॥

यथा रत्यन्तं कृत्वा तथा शौचं कृत्वा पश्चाज्जपेदृचः सम्यक् 'आ ते योनिम्' इति। य एवं ज्ञात्वाऽभिमृशति स सत्पुत्रं लभते बुधः ॥

## पारस्करगृह्यसूत्रम्

हृदयालम्भः

[2]'अथास्यै दक्षिणांसमधि हृदयमालभते— 'यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम् ॥' इति ॥

( १ ) 'यत्ते सुसीमे' इत्यनेन मन्त्रेण हृदयालम्भश्चाभिगमोत्तरकालीनः। प्राक्कालीन इत्यपरे, अप्रयतत्वादिति। ¶ कभा.

---

\$ अतिदिष्टो विधिश्चतुर्थीकर्मप्रकरणे ( सं. का. पृ. २२३३–२२३४ ) द्रष्टव्यः।

† ब्राह्म., आवि. देवगतम्।

(१) भागृ. १।२०.

(२) कागृ. ३०।४–८.

§ ब्राह्म., आवि. देवगतम्।

¶ विभा. कभागतम्।

(१) आग्निगृ. २।७।६.

(२) पागृ. १।११।९.

(२) हृदयालम्भश्चाभिगमनोत्तरकालीनः । प्राक्कालीन इत्यपरे, अप्रयतत्वात् । नैतत् । यतो गर्भसंभावनायां तदुपयुज्यते । प्रयतत्वं च शौचादिनाऽपि स्यादेव । यथाऽऽह याज्ञवल्क्यः— ' ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् । अनृतौ तु सदा गच्छञ्छौचं मूत्र- पुरीषवत् ॥ ' इति । तत्र मन्त्रः ' यत्ते सुसीमे ' इति । जभा.

( ३ ) अथ अभिगमनानन्तरम् अस्यै अस्या भार्यायाः दक्षिणांसं दक्षिणस्कन्धम् अधि उपरि दक्षिणं हस्तं नीत्वा हृदयमालभते हृदयं वक्षः आलभते स्पृशति ' यत्ते सुसीमे ' इत्यादिना ' शृणुयाम शरदः शतम् ' इत्यनेन (१ त्यन्तेन ) मन्त्रेण । हभा.

( ४ ) अभिगमनानन्तरमनाचान्त एव दक्षिणांस- मधि हृदयमालभत इति भर्तृयज्ञः । मन्त्रार्थः— शोभना सीमा मूर्ध्नि केशमध्ये पद्धतिः यस्याः सा, तस्याः संबोधनं हे सुसीमे शोभनसीमन्तिनि, यत् ते तव हृदयं मनः दिवि स्वर्गे वर्तमाने चन्द्रमसि श्रितं तदधीनतया स्थितं तदहं वेद जानीयां तच्च मां विद्यात् जानातु । एवं परस्परानुगुणितहृदया अपत्यादिसहिता वयम् । ' शरदः शतम् ' इत्याद्युक्तार्थम् । $ गभा.

## कात्यायनपरिशिष्टम्

उपस्थाभिमर्शः, संधानम्, ब्रह्मामन्त्रणम्, मन्थनम्, रेतःस्रावणम्

*** 'एवमथर्तुमतीजायाहृदयमालभ्य पूर्ववत् सव्येन पाणिनोपस्थमभिमृशति— ' भग प्रणेतः ' इति । प्राक् ' उतेदानीम् ' इति ' रेतो मूत्रम् ' इति संधत्ते । ' गायत्रेण ' इति प्रतिमन्त्रं मन्थ- यति । पुत्रकामोऽभिगच्छेन्नित्यम् ॥**

---

$ शेषं क्रभाजभाइत्येतयोरनुवादः हभागतं च ।

* ' भार्यागमनम् ' इति प्रकरणे ( सं. का. पृ. २३५० ) कात्यायनपरिशिष्टोद्देशेन विहिता टिप्पण्यत्रा- नुसंधेया ।

(१) पागृ. ( चौखम्बामुद्रितपुस्तके ) १।१३–१४.

**अथ गर्भाधानम् । स्त्रियाः पुष्पवत्याश्चतुरहा- दूर्ध्वं स्नात्वा विरजायास्तस्मिन्नेव दिवा 'आदित्यं गर्भम् ' इत्यादित्यमवेक्षते गृहे वा स्नापयित्वा तामभिगच्छेदिति श्रुतेः । तस्मिन् प्रजायाः संभवकाले निशायां कुर्यात् । दक्षिणेन पाणिना ऊरू प्रसार्य प्रजास्थानमभिमृशति— ' पूषा भगꣳ सविता मे ददातु रुद्रः कल्पयति ललामगुम् ॥ ' । ' विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ' इति संसृजेथाः । तेजो वैश्वानरो दधात् । ब्रह्माण- मामन्त्रयते— 'ब्रह्मा गर्भं दधातु' इति । प्राङ्मुख उदङ्मुखो वोपविष्टो मन्थेत् । ' रेतो मूत्रम् ' इति चैके स्रावणं कुर्यात् ॥**

## गोभिलगृह्यसूत्रम्

उपस्थामिमर्शः मैथुनं च

**'दक्षिणेन पाणिनोपस्थमभिमृशेत्— ' विष्णु- र्योनिं कल्पयतु ' एतयर्चा, ' गर्भं धेहि सिनी- वालि ' इति च ॥**

( १ ) कुत्सितदेशस्य सव्येन पाणिना शौचदर्शनात् तद्वारणाय दक्षिणेनेति । उपस्थं योनिं स्पृशेत् ' विष्णुः ' इति मन्त्रेण प्रथमम्, ततो ' गर्भं धेहि सिनीवालि ' इत्यादिमन्त्रेण च । ' मन्त्रान्ते कर्मादिसंनिपातः ' इति न्यायात् पाठानन्तरं स्पर्शः, न तु भवदेवभट्टोक्तं स्पृशन् जपति । संत. ९०९

(२) मन्त्रौ यथा— 'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ

---

(१) गोगृ. २।५।९ ; ब्रक. ७९ विष्णु ( विष्णो ) एत ( इत्येत ) ( च० ) ; मपा. ३४९ एत ( इत्येत ) ; संत. ९०९ ( वालि ' इति० ) ; संसौ. ३५ एतयर्चा ( या ऋतुमती ) ( वालि० ).

देवावाधत्तां पुष्करस्रजौ ॥ ' । अनयोरर्थः— हे वधु, विष्णुः नारायणः ते तव योनिं कल्पयतु सुप्रसवसमर्थां करोतु । त्वष्टा भूस्थानदेवता रूपाणि पिंशतु प्रकाशयतु । किंच, प्रजापतिः विधाता तामेव योनिम् आसिञ्चतु यावन्मात्रेण बीजेन गर्भो भवति तावन्मात्रमेव प्रक्षेपयत्वित्यर्थः । किंच, धाता सर्वस्य प्रसविता आदित्यो मध्यस्थानदेवता ते तव गर्भं पुत्रार्थं दधातु स्थापयतु ।

पूर्वामावस्या सिनीवाली दृष्टेन्दुः । सा प्रार्थ्यतेऽस्या अतिशुभलक्षणप्रेप्सया । हे सिनीवालि, अस्यां वध्वां गर्भं धेहि बन्ध्यात्वमस्या अपनयेत्यर्थः । तथा हे सरस्वति, त्वमप्यस्यां गर्भं धेहि, त्वदनुध्यानादस्या गर्भो विद्वत्प्रकाण्डं भवित्वेत्यर्थः । हे वधु, ते तव गर्भं देवौ दीप्त्यादिगुणवन्तौ अश्विनौ सूर्याचन्द्रमसौ द्यावापृथिव्यौ अहोरात्रे वा आधत्तां त्वदात्मना स्थित्वा समाधत्तामिति बृहदारण्यकभाष्यव्याख्यायामानन्दगिरिः । कथंभूतौ ? पुष्करस्रजौ पद्ममालिनौ इति गुणविष्णुः । स्वकीयरश्मिमालिनावित्यानन्दगिरिः । § मृदुला.

**[1]समाप्यर्चौ संभवतः ॥**

(१) ऋचौ समाप्यैव संयोगं कुरुतः, न मध्ये वामदेव्यजपः । संत. ९०९

(२) समाप्येति ऋग्द्वयानन्तरमेवाभिगच्छेदित्यर्थः । यदि दैवादिनाऽत्र मुख्यकालातिपत्तिः स्यात्तत्राऽऽह गृह्यासंग्रहकारः— 'ऋतुपुंसवने दैवात्स्वकाले न कृते यदि । सीमन्तकरणात्पूर्वं कृत्वा सीमन्तमाचरेत् ॥ ' इति । ऋतुः गर्भाधानम् । कात्यायनः— ' देवतानां विपर्यासे जुहोतिषु कथं भवेत् । सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात् पुनः ॥ संस्कारा अतिपद्येरन् स्वकालाच्चेत्कथंचन । हुत्वैतदेव कर्तव्या ये तूपनयनादयः ॥ ' इति । सर्वप्रायश्चित्तं व्याहृतिहोमः । शाट्यायनहोम इति वीरेश्वरः । क्रमेणेति । यतो विपर्यासस्तत एवेत्यर्थः । तदुक्तं तेनैव — ' यतस्तदन्यथाभूतं तत एव समापयेत् । ' इति । एतदेव सर्वप्रायश्चित्तमेव । एतदादौ वृद्धिश्राद्धे प्रमाणमुक्तपूर्वमिति । मृदुला.

§ शेषं संतगतम् ।

(१) गोगृ. २।५।१० ; ब्रक. ७९ ; मपा. ३४९ प्यर्चौ ( र्चौ ) ; संत. ९०९.

## खादिरगृह्यसूत्रम्

उपस्थालम्भो मैथुनं च

**[1]ऋतुकाले दक्षिणेन पाणिनोपस्थमालभेत् ' विष्णुर्योनिं कल्पयतु ' इति समाप्तायाम् ॥**

' दायादिरग्निः ' इत्यस्यापि पक्षस्याभ्युपगमं दर्शयितुमौपासनहोममनुक्त्वेदमुक्तम् । रजोदर्शनप्रभृति षोडशरात्रम् ऋतुकालः । यदि रात्र्यास्तृतीये भागे रजः स्यात् तदोत्तरमेवाहर्विद्यात् । चतुर्थे भाग इति केचित् । समाप्तायामिति सम्यगवस्थायां(?स्यां) प्राप्तायां वध्वामित्यर्थः । काऽसाववस्था ? ' तासामाद्याश्चतस्रस्तु निन्द्या एकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः । युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । ' एवमादिसूचिता । रुद्रभा.

**संभवेत् ' गर्भं धेहि ' इति ॥**

सम्यगालोच्य मुहूर्तादि मिथुनीभवेत् । रुद्रभा.

## कौशिकगृह्यसूत्रम्

चरुप्राशनम्, लिप्तशिश्नेन मैथुनम्

**[2]' पर्वताद्दिवः ' इत्यागमकृशरमाशयति ॥**

**युगतर्द्मना संपातवन्तं द्वितीयम् ॥**

**खे लूनांश्च पलाशत्सरून् निवृत्ते निघृष्याऽऽधाय शिश्ने ग्रामं प्रविशति ॥**

केलूनांश्च पलाशत्सरु( ? त्सरून् )निर्वर्ते निघृष्य शिश्ने आधाय ततो मैथुनं करोति । दाकेटी.

**' यन्ताऽसि ' इति मन्त्रोक्तं बध्नाति ॥**

हस्तावर्तकं कर्णादिकं संपात्याभिमन्त्र्य बध्नाति आथर्वतन्त्रे । दाकेटी.

(१) खागृ. १।४।१५-१६.
(२) कौसू. ३५।५-७, ११.

## वैखानसगृह्यसूत्रम्

पथ्यान्नप्राशनम्, नस्तःकरणम्, प्रोक्षणपूर्वकमुपगमनम्, होमपूर्वकमुपगमनमिति मतान्तरम्

[1]शालिव्रीहियवानामन्नं पयसा प्राश्नीयात् । यस्मादाहारमूला धातवो भवन्ति । लक्ष्मीवटशुङ्गसहदेवीनामन्यतममभिषूय प्रक्षिपेद्दक्षिणे नासापुटे पुत्रकामायाः, वामे स्त्रीकामायाः । न निष्ठीवनं कुर्यात् । शोकरोषौ वर्जयति । तत एनां 'यन्मे गर्भा--'दिभिः प्रोक्षणैः प्रोक्ष्य 'विष्णुर्योनिं कल्पयतु' इति तामुपगच्छेत् । परिषिच्य वैश्वदेवं वैष्णवं मूलहोमाङ्गहोमौ हुत्वा 'विष्णुर्योनिं कल्पयतु' इत्युपगमनमित्येके ॥

## आश्वलायनः

स्मार्ताग्नौ होमः, वृद्धिश्राद्धपुण्याहवाचनपूर्वकोपनिषदध्ययनम्, रतिगृहवर्णनम्, नस्तःकरणम्, उपगमनम्

[2]गर्भपुंसवसीमन्तबलिचौलं च निष्कृतीः ।
काम्यांश्च कुर्यात् स्मार्ताग्नावुत्सर्गोपाकृती च वा ॥

[3]स्नातायाः सुकुशायाश्च ऋतुमत्याः समेऽहनि ।
प्रातरभ्युदयं कृत्वा पुण्याहं चापि वाचयेत् ॥

[4]ततस्तदीरितां पुण्यां स्वयमन्यैरपि द्विजैः ।
अधीयीतोपनिषदमपराह्णे समापयेत् ॥

[5]विप्रैः सहैव भुक्त्वा तु स्वस्तिवाचनमेव च ।
स्नात्वाऽस्तमनवेलायां कृतकृत्यो भवेत्ततः ॥

(१) वैगृ. ३।९.

(२) आश्वस्मृ. ५।३६ ; प्रपा. ३१ : २०७ द्वितीयपादे ( बलयश्चौलनिष्कृती ).

(३) आश्वस्मृ. ११।४१ ; प्रपा. १०७ कुशा ( कृता ) ; संप्र. १५७ (=) प्रपावत्, पू.

(४) आश्वस्मृ. ११।४२ ; प्रपा. १०७ स्वय ( स्वस्व ).

(५) आश्वस्मृ. ११।४३ ; प्रपा. १०७ स्नात्वाऽस्तमन ( ततोऽस्तमय ) त्ततः ( न्नरः ).

[1]शुद्धान्तःसंवृतं गन्धपुष्पाक्षतसमन्वितम् ।
धूपितं प्राज्वलद्दीपं गृहं पत्न्या सहाऽऽविशेत् ॥

[2]अलंकृते गृहे तस्मिन् वितानोपरिमण्डितम् ।
शयनं सुसुखस्पर्शं सर्वोपकरणान्वितम् ॥

[3]आचम्याऽऽरोपयित्वा तां पत्नीं सम्यगलंकृताम् ।
स्वयं चालंकृतस्तुतः शयने समुपाविशेत् ॥

[4]आनयित्वाऽश्वगन्धाया मूलमालोड्य सूक्ष्मवत् ।
आर्षमेण तु मूत्रेण चूतमूलेन वाऽऽनयेत् ॥

[5]कपिलापयसा मिश्रं कांस्यपात्रगतं शुभम् ।
दक्षिणस्यां नासिकायां सिञ्चेन्मन्त्रेण तत्पतिः ॥

[6]संमन्त्र्यगर्भ्यामुदीर्ष्वेति सिक्त्वाऽस्मिन्नुदरं गते ।
तां पूषन्निति मन्त्रेण तामुपेयाद्यथाविधि ॥

[7]एवं कृत्वा सकृद्भर्ता समे नित्यं समाव्रजेत् ॥

(१) आश्वस्मृ. ११।४४ न्वितम् ( र्चितम् ) ; प्रपा. १०७ शुद्धान्तःसं ( मुद्रितं सं ) प्राज्वलद्दीपं गृ ( ज्वलितं दीपैर्गृ ).

(२) आश्वस्मृ. ११।४५ ; प्रपा. १०७ पकर ( पस्कर ).

(३) आश्वस्मृ. ११।४६ ; प्रपा. १०७ शयने ( शयनं ).

(४) आश्वस्मृ. ११।४७ ; प्रपा. १०७ आर्ष (वार्ष).

(५) आश्वस्मृ. ११।४८ सिञ्चे ( पिबे ) ; प्रपा. १०७ कपिला ( कपिली ) ; संप्र. १५७ (=) चतुर्थपादे ( सिञ्चेद्दूर्वारसं पतिः ) उत्त.

(६) आश्वस्मृ. ११।४९ सिक्त्वाऽस्मिन्नु ( सिक्त्वा तदु ) ; प्रपा. १०७.

(७) आश्वस्मृ. ११।५० ; प्रपा. १०७ समे (रागे).

## लघ्वाश्वलायनः

स्वस्तिवाचनम्, नान्दीश्राद्धम्, गर्भाधानहोमः, मन्त्रजपः, नस्तःकरणम्, भार्यायै वस्त्रफलदानम्, आचार्याय दक्षिणादानम्, ब्राह्मणभोजनम्, स्मार्ताग्नौ कर्तव्यता, रात्रौ गर्भारोपणम्

[1]नान्दीश्राद्धं पतिः कुर्यात् स्वस्तिवाचनपूर्वकम्।
उपलेपादिकं कृत्वा प्रातरौपासनादितः ॥

प्रजापतेश्चरोरेकां हुत्वा चाऽऽज्याहुतीरथ।
विष्णुर्योनिं नेजमेष षडेका च प्रजापते ॥

आसीनायाः शिरः स्पृष्ट्वा प्राङ्मुख्याः पाणिना पतिः।
तिष्ठञ्जपेदिमे सूक्ते त्वप नश्य वधेन च ॥

अग्निस्तुविश्रवस्तममित्यृचौ द्वे तथैव च।
सूर्या नो दिव इत्येतैः स्तुत्वा सूर्यं च पञ्चभिः ॥

अश्वगन्धारसं पत्न्या दक्षिणे नासिकापुटे।
उदीर्ष्वेति पठन् मन्त्रं सिञ्चेत्तद्वस्त्रशोधितम् ॥

ततः स्विष्टकृदादि स्याद्वाससी च नवे तयोः।
फलानि च पतिस्तस्यै प्रदद्यात् फलमन्त्रतः ॥

मातुलिङ्गं नारिकेलं रम्भाखर्जूरपूगकम्।
शस्तानि स्युरथान्यानि नारिङ्गादीनि वाऽपि च ॥

वृषभं गां सुवर्णं च होत्रे दद्याच्च दक्षिणाम्।
पुत्रवान् धनवांस्तेन भवेत् कर्ता न संशयः ॥

भोजयित्वा द्विजान् सम्यक् तोषयेद्दक्षिणादिभिः।
संतुष्टा देवताः सर्वाः प्रयच्छन्तीप्सितं फलम् ॥

स्थालीपाकं चाऽऽग्रयणं गर्भसंस्कारकर्मसु।
प्रातरौपासने कुर्यादग्नौकरणमेव च ॥

प्रसन्नात्मा भवेत् कर्ता भुञ्जीत सह बन्धुभिः।
तस्मिन्नेव दिने रात्रौ गर्भारोपणमिष्यते ॥

(१) लघ्वाश्वस्मृ. ३।३-१३.

## ऋग्विधाने

योनिं स्पृष्ट्वा सूक्तजपः

[1]विष्णुर्योनिं जपेत्सूक्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती।
गर्भाधानं ततः कुर्यात् सत्पुत्रो वै प्रजायते ॥

त्रिभिः अङ्गुलीभिः। † प्रपा. १०७

## ब्रह्मपुराणम्

गमनात्पूर्वं स्वस्तिवाचनम्

[2]स्वस्ति वाच्य स्त्रियं गच्छेत् ॥

'स्वस्ति वाच्य स्त्रियं गच्छेत्' इति ब्राह्मोक्तेः स्वस्तिवाचनमत्राऽऽवश्यकम्। 'गर्भाधानकर्मणि स्वस्ति भवन्तो ब्रुवन्तु' इत्यादि वाक्यम्। बहुब्राह्मणभोजनाशक्तौ तु 'गर्भाधानेषु सर्वेषु ब्राह्मणान् भोजयेद्दश।' इति यज्ञपार्श्वोक्तेः कर्माङ्गदशभोजनमावश्यकम्। गप. ४७५

## हेमाद्रौ

प्रातर्वृद्धिश्राद्धकर्तव्यता

[3]स्नातवत्यामृतौ पत्न्यां चतुर्थे पञ्चमेऽह्नि वा।
कृत्वाऽऽभ्युदयिकं प्रातस्तद्रात्रौ मन्त्रपूर्वकम् ॥

## शाकलकारिकाः

वृद्धिश्राद्धम्, औपासने कर्तव्यता, प्रधानहोमः, शिरोभिमन्त्रणम्, मन्त्रजपः, नस्तःकरणम्, फलदानादि

[4]ऋतौ तु प्रथमे कुर्याद्गर्भाधानं विधानतः।
चतुर्थदिवसादूर्ध्वं कृत्वाऽऽभ्युदयिकं ततः ॥
स्थालीपाकं पुंसवनं सीमन्तं प्रथमार्तवम्।
प्रातरौपासने कुर्यादग्नौकरणमेव च ॥
पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत्।
प्रजापतिं समुद्दिश्य निर्वापः प्रोक्षणं भवेत् ॥

† विपा. प्रपावत्।

(१) प्रपा. १०७; संप्र. १५८ (=) पू.; सिन्धु. ८१६ चतुर्थपादे (सुपुत्रो जायते ध्रुवम्); विपा. २४० योनिं (नैजं) सत्पुत्रो (सुपुत्रो).

(२) गप. ४७५.

(३) आन. १४३. (४) शाका. २६१-२६९.

निर्वापप्रोक्षणे स्यातां तूष्णीमेव स(ऽअ)मन्त्रके ।
(स)मन्त्रके तु नाम्नैव सर्वसंस्कारकर्मसु ॥

चक्षुष्यन्तं ततः कृत्वा प्रजापतय इत्यथ ।
एकां चर्वाहुतिं हुत्वा सप्त चाऽऽज्याहुतीरथ ॥

विष्णुर्योनिं नेजमेषेत्येका चैव प्रजापते ।
शिरोऽभिमन्त्रयेत् पत्न्या अप नः शोशुचद्य हि ॥

वधेन दस्युं चद्वाग्निमग्निस्तुविश्रवस्तमम् ।
अग्निर्ददात्येका च जपेद् ... ऋचः क्रमात् ॥

सूर्यो न इति पञ्चर्चो जपेत्तिस्र इमाः पतिः ।
उदीर्ष्वेत्येकया तस्या दक्षिणे नासिकाबिले ॥

अश्वगन्धारसं सिञ्चेदथ स्विष्टकृदादिकम् ।
होमशेषं समाप्याथ फलदानादिकं चरेत् ॥

## शौनककारिकाः

नस्तःकरणम् , उपगमनम्

[1]षोडशस्वृतुसंज्ञेषु दिनेष्वाद्यं चतुर्दिनम् ॥
[2]आर्तवाशौचसंपृक्तं वर्जयित्वा परेषु तु ॥

दिनेषु द्वादशस्वेतेष्वेकस्मिन् पतिभार्ययोः ॥
[3]उभयोरपि जन्मर्क्षानुगुणे तारके ध्रुवम् ।

स्नापयित्वाऽथ गन्धाद्यैर्भूषयित्वा च शोभने ॥
[4]मुहूर्ते त्वश्वगन्धाया मूलं संपीड्य तत्पुनः ।
कृत्वा नवाम्बरच्छन्नं परिगृह्याग्रपाणिना ॥

(१) शौका. ५ पृ. ३४ ; प्रपा. १०७ ; संप्र. १५६ ; विपा. २३९.

(२) शौका. ६ पृ. ३४ शस्वेतेष्वेक ( शेष्वेतत्तद ) ; प्रपा. १०७ ; संप्र. १५६ परेषु तु ( परेष्विति ) पू. ; विपा. २३९ तेष्वेक ( तदन्य ).

(३) शौका. ७ पृ. ३४ थ गन्धा ( श्वगन्धा ) ; प्रपा. १०७ र्क्षानु ( र्क्षेऽनु ) स्नाप ( स्थाप ) ; विपा. २३९.

(४) शौका. ८ पृ. ३४ ; प्रपा. १०७ म्बर (म्बरा) ; विपा. २३९ च्छन्नं ( गतं ).

[1]उदीर्ष्वातः पतिवतीत्याद्यामृचमुदीर्य तु ।
जायाया दक्षिणे नासारन्ध्रे सिञ्चेत्तु तद्रसम् ॥
[2]उदरस्थे रसे तस्मिन्नाचान्तसलिलां सतीम् ।

उपगच्छेद्वधूमेवं विधिनोपगमे कृते ।
गर्भः स्थिरः स्यादित्येवं गर्भलम्भनमूचिरे ॥

## कुमारिलकारिकाः

उभयोरलंकृतत्वम् , नस्तःकरणम् , उपगमनम्

[3]जयन्तोक्तेन मार्गेण गर्भाधानमिहोच्यते ।
चतुर्थदिवसादूर्ध्वं मघामूलादि वर्जयेत् ॥
[4]अलंकृते गृहे गन्धधूपमाल्यादिभिः शुभैः ।
ऋतुस्नातां शुभैर्गन्धमाल्यादिभिरलंकृताम् ॥

[5]अलंकृतः स्वयं तद्वद्दारोप्य शयने शुभे ।
पेषयित्वाऽश्वगन्धाया मूलं शुद्धाम्बरे क्षिपेत् ॥
[6]ऋचोदीर्ष्वात इत्यस्या दक्षिणे नासिकापुटे ।
निष्पीड्य पिष्टं तन्मूलं वस्त्रसंशोधितं ततः ॥
एवं कृत्वोपगमने कृते स्याद्गर्भलम्भनम् ॥

## यज्ञपार्श्वकारिकाः

ब्राह्मणभोजनम्

[7]गर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद्दश ॥

(१) शौका. ९ पृ. ३४ ; प्रपा. १०६ सिञ्चेत्तु ( सिञ्चेच्च ) ; संप्र. १५७ उत्त. ; विपा. २३९-२४० ; संकौ. ३३ त्याद्या ( त्येता ) पू.

(२) शौका. १० पृ. ३४ ; प्रपा. १०७ ; संप्र. १५७-१५८ ; विपा. २४०.

(३) कुका. १।४।१ ; प्रपा. १०७.

(४) कुका. १।४।२ ; प्रपा. १०७ गन्धधूप ( धूपगन्ध ).

(५) कुका. १।४।३ ; प्रपा. १०७ शुभे ( ततः ) शुद्धा ( शुक्ला ).

(६) कुका. १।४।४-५ ; प्रपा. १०७ पुटे ( बिले ).

(७) यका. १।८४ पृ. ७ शेषस्थलादिनिर्देशः परिभाषाप्रकरणे ( सं. का. पृ. १३२८ ) द्रष्टव्यः .

## रेणुकारिकाः

बहुपत्नीकत्वे प्रतिपत्निगमने वृद्धिश्राद्धभेदः , हृदयालम्भः

[1]कृत्वाऽऽभ्युदयिकं श्राद्धं प्रथमं मातृपूर्वकम् ।
बह्वयश्चेत्तत्र भेदेन प्रातस्तद्गमनेऽहनि ॥
गमनानन्तरं पत्न्या मन्त्रेण हृदयं स्पृशेत् ।
नीत्वा करं दक्षिणांसमधि तेन पतिः पुरा ॥
गमनात् केचिदिच्छन्त्यप्रयतत्वादनन्तरम् ।
यत्ते सुसीमे हृदयमालम्भोऽयमृतावृतौ ॥

यत्ते सुसीमे हृदयमृषिरस्य प्रजापतिः ।
हृदयं देवता छन्दो जगती हृदयं स्पृशेत् ॥

(१) रेका. ४४–४७ पृ. ४.

# ऋतुशान्तिः

**बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च**

शान्तिस्नानम्, पञ्चगव्यप्राशनम्, होमः, दक्षिणादानम्

[1]अथ ऋतुशान्तिं व्याख्यास्यामः—

तिथिवारनक्षत्रयोगकरणलग्नदोषशान्त्यर्थं
चतुर्थे वा पञ्चमेऽह्नि वा शान्तिस्नानं प्रकुर्वीत ॥

[2]देवालये गृहे वा प्रस्थाष्टभिर्धान्यैस्तदर्धं तण्डुलैस्तदर्धं तिलैश्चोपर्युपरि चतुरश्रमरत्निमात्रं चतुरश्रं स्थण्डिलं कृत्वा तन्मध्ये नलिनमुल्लिख्य तस्मिन् तन्तुवेष्टितं कुम्भं निधाय तूष्णीं संस्कृताभिरद्भिः प्रोक्ष्य 'ब्रह्म जज्ञानम्' इति कुम्भं निधाय सपवित्रेण 'आपो वा इदं सर्वम्' इत्येतेनानुवाकेनाब्लिङ्गाभिश्च कुम्भमुदकैः पूरयित्वा गन्धादिभिरलंकृत्य कूर्चमन्तर्धाय—

गजाश्वरथवल्मीकमृदमाहृत्य गोकुलात् ।
चतुष्पथाद्राजगृहात्तुलसीबिल्वमूलयोः ॥

[3]देवालयात्पर्वताद्वा गृह्णीयात् पञ्च मृत्तिकाः ।
पालाशोदुम्बराश्वत्थवटप्लक्षकयाज्ञिषु ॥

[4]जम्बूबिल्वकपित्थाम्रशिरीषेषु च पल्लवान् ।
तेषां त्वचश्च पञ्चैव गृह्णीयात् संभवेषु वै ॥

(१) बौगृशे. ५।३।१ ; हिगृशे. ३।११ अथ (अथात) ; संकौ. १४ (अथ०) (योगकरण०) चतुर्थे वा (चतुर्थेऽह्नि) प्रकुर्वी (कुर्वी).

(२) बौगृशे. ५।३।२ ; हिगृशे. ३।११ ; संकौ. १४ (देवालये गृहे वा प्रस्थाष्टभिर्धान्यैस्तदर्धैस्तण्डुलैस्तदर्धैस्तिलैश्चारत्निमात्रं चतुरस्रं कृत्वा मध्ये नलिनमुल्लिख्य कुशैर्दूर्वाभिः प्रतिच्छाद्य तस्मिंस्तन्तुवेष्टितं कुम्भं निधायाऽऽपो वा इदं सर्वमित्येतेनानुवाकेनाब्लिङ्गैः शान्तिकुम्भमुदकैः पूरयित्वा कूर्चमन्तर्धाय) एतावदेव.

(३) बौगृशे. ५।३।३ ; हिगृशे. ३।११ याज्ञिषु (यज्ञिषु).

(४) बौगृशे. ५।३।४ ; हिगृशे. ३।११.

[1]इत्युक्तरीत्या पञ्च मृत्तिकाः पञ्च पल्लवान् पञ्च त्वचश्च निक्षिप्य नवरत्नमीषत्काञ्चनं नववस्त्रेणाऽऽच्छाद्य चूतपल्लवैर्बिल्वपल्लवैर्वाऽवकीर्य नालिकेरफलेनापिधाय दर्भैर्दूर्वादिना प्रतिच्छाद्यालंकृत्य संपरिस्तीर्य पुरुषं पुण्डरीकाक्षं ध्यात्वा कुम्भं संपूज्य श्रोत्रियान् विप्रान् षडष्टौ वा वरणपूर्वकमभ्यर्च्याऽऽचार्यं चाभ्यर्चयेत् ॥

[2]त ऋत्विजः कुम्भमन्वारभ्य वैष्णवीं गायत्रीमष्टसहस्रमष्टशतं वा वदन्तो वेदादीन् 'आपो हि ष्ठा मयोभुवः' इति तिस्रः 'हिरण्यवर्णाः, पवमानः' इत्यनुवाकौ वरुणसूक्तं श्रीसूक्तं पुरुषसूक्तं पञ्चशान्तिम् 'ऋचां प्राची' इत्येतमनुवाकं च जपेयुः। 'नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह' इति ब्राह्मणम् ॥

(१) बौगृशे. ५।३।५ ; हिगृशे. ३।११ पञ्च पल्लवान (पल्लवान्) निक्षिप्य (तत्तन्मन्त्रैर्निक्षिप्य) रत्नमी (रत्नानी) वैर्वाऽव (वैर्वा मन्त्रैरव) नालिकेर (नारिकेल) स्तीर्य (वेष्टय वस्त्रेण) कुम्भं (कुम्भे वरुणं) वरण (वरुण) ; संकौ. १४ (पञ्चपल्लवान् पञ्चत्वचश्च निक्षिप्य कपित्थाश्वत्थपालाशबिल्वोदुम्बरं च नवरत्नं च निक्षिप्य नववस्त्रयुग्मेनाऽऽच्छाद्य नारिकेलफलेनापिधाय बिल्वपल्लवैश्चूतपल्लवैश्चावकीर्य पुरुषं पुण्डरीकाक्षं ध्यात्वा गन्धधूपदीपैरुदकुम्भमभ्यर्च्याथ श्रोत्रियान् बहुश्रुतान् षट्चतुरो वा ब्राह्मणान् वरणपूर्वकमभ्यर्च्याऽऽचार्यं च ).

(२) बौगृशे. ५।३।६ ; हिगृशे. ३।११ तिस्रः ... त्यनुवाकौ (तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतमनुवाकं) ; संकौ. १४–१५ (तत्कुम्भमन्वारभ्य वैष्णवीं गायत्रीं सहस्राष्टकं शताष्टकं वा तदन्ते गायत्रीं च वेदादीनापो हि ष्ठा मयोभुव इति तिस्रो हिरण्यवर्णाः शुचयः पावका इत्येतमनुवाकं पवमानः सुवर्जन इत्येतमनुवाकं पुरुषसूक्तमित्येतमनुवाकमृचां प्राचीमित्येतमनुवाकम् ).

¹प्रणवेनोत्थाप्य 'आभिर्गीर्भिः' इति जपेयुः ॥

²अथालंकृतामङ्कण उरुविष्टर आसीनां 'देवस्य त्वा' इति त्रिभिः प्रोक्ष्य 'ऋतं च सत्यं च' इति त्रिभिर्मन्त्रैर्ऋत्विजः स्नापयेयुः ॥

³ततो नारीं पञ्चगव्यं प्राशयेत् ॥

⁴गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् ।
आ प्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम् ॥
इति पञ्चगव्यम् ॥

⁵अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रमुपलिप्य लौकिकमग्निं श्रोत्रियागाराद्दाहृत्य स्वगृह्योक्तविधानेनाऽऽग्निमुखात् कृत्वा पालाशसमिद्भिरष्टोत्तरशतं विष्णुसूक्तेन जुहुयात् ॥

(१) बौगृशे. ५।३।७ ; हिगृशे. ३।११.

(२) बौगृशे. ५।३।८ ; हिगृशे. ३।११ कृताम (कृतेऽ) ; संको. १५ (अथालंकृतां पत्नीमुरुविष्टरे तृण आसीनामापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचमाशीर्वादपुरःसरं स्नापयेयुः ).

(३) बौगृशे. ५।३।९ ; हिगृशे. ३।११ ; संको. १५ शयेत् ( शयित्वा 'यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके । प्राशनं पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ॥' इति ).

(४) बौगृशे. ५।३।१० ; हिगृशे. ३।११ गव्यम् + ( विधाय ).

(५) बौगृशे. ५।३।११ ; हिगृशे. ३।११ ( अथ शुचौ समे देशे गोमयेन चतुरश्रं हस्तमात्रं कुण्डं स्थण्डिलं कृत्वोपलिप्य लौकिकमग्निं श्रोत्रियागाराद्दाऽऽहृत्य स्वगृह्योक्तेन विधानेनाऽऽग्निमुखात् कृत्वा पालाशसमिद्भिरष्टोत्तरं विष्णुसूक्तेन जुहुयात् ) ; संको. १५ ( शुचौ समे देशे स्थण्डिलं कल्पयित्वा लौकिकाग्निं प्रतिष्ठाप्य स्वगृह्योक्तविधानेनाभिमुखं कृत्वा विष्णुसूक्तेन शताष्टकसंख्याः पलाशसमिधो हुत्वा ).

¹तथा ब्रह्मसूक्तेनाज्यं रुद्रसूक्तेनाऽऽज्यम् ॥

²एतानि सूक्तान्यष्टादशकृत्वः प्रत्येकमावर्तयेत्तदानीमष्टोत्तरशतं संपद्यते ॥

³अथर्तुनक्षत्रस्य समिदन्नाज्याहुतीः प्रत्येकमष्टाविंशतिकृत्वस्तन्मन्त्रेण जुहुयात् ॥

मन्त्रौ चतुर्दशकृत्व आवर्तयेत् ॥

अथ त्रियम्बकेन तिलहोममष्टोत्तरशतं जुहुयात् ॥

अथाऽऽज्याहुतीर्घृतसूक्तेनाष्टौ जुहुयात् ॥

⁴स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

⁵अथ ऋत्विग्भ्यो दक्षिणां ददात्याचार्याय विशेषतः ॥

⁶एवं यदि शान्तिं कुर्यात्ततो नारी दोषान्मुच्यते, सर्वारिष्टशान्तिरस्त्वित्याह भगवान् बोधायनः ॥

(१) बौगृशे. ५।३।१२ ; हिगृशे. ३।११ ; संको. १५ तथा ( एवं ).

(२) बौगृशे. ५।३।१३ ; हिगृशे. ३।११ ; संको. १५ ( तेषामष्टादशकृत्वः ) एतावदेव.

(३) बौगृशे. ५।३।१४-१७ ; हिगृशे. ३।११ त्रियम्बकेन ( त्र्यम्बकेन ) ; संको. १५ ( अथाऽऽयुष्यहोमो घृतसूक्तेनाऽऽज्येन हुत्वा ततो नक्षत्रहोमं तत्तन्मत्रेण तस्य चतुर्दशकृत्वः पूर्ववत् समिदन्नाज्यैस्त्र्यम्बकं यजामह इति तिलहोमं शताष्टकाहुतीरुपजुहुयात् ).

(४) बौगृशे. ५।३।१८ ; हिगृशे. ३।११ प्रभृतिसिद्ध ( प्रभृत्युक्त ) ; संको. १५.

(५) बौगृशे. ५।३।१९ ; हिगृशे. ३।११ ; संको. १५ ( ऋत्विग्भ्यो० ) ददात्या ( दद्यादा ).

(६) बौगृशे. ५।३।२० ; हिगृशे. ३।११ रस्त्वित्याह भगवान् बोधायनः ( रस्त्विति विज्ञायते ) ; संको. १५ ( ततः पुण्याहवाचनं कृत्वा ततो नारी दोषात् प्रमुच्यत इत्याह भगवान् बौधायनः ).

## बौधायनीयशान्तिकाण्डम्

पुण्याहवाचनम्, आचार्यर्त्विग्वरणम्, ब्राह्मणद्वारा सौरादिमन्त्रजपाश्वत्थप्रदक्षिणसूर्यनमस्कारद्वारजपरुद्राभिषेकाः, नक्षत्रदेवतापूजनम्, शतच्छिद्रादिकलशस्थापनम्, वरुणपूजनम्, होमः, दम्पत्यभिषेकः, आज्यावेक्षणम्, अयःपिण्डकार्पासकम्बलीयकदानम्, नीराजनम्, दशदानानि, पङ्गुदीनादिसंतर्पणम्, ब्राह्मणभोजनम्

'अथातः प्रसूतिप्रथमरजस्वलाशान्तिकल्पं व्याख्यास्यामः। पुण्याहे दम्पत्योश्चन्द्रताराबलान्विते पूर्वाह्णे दम्पती मङ्गलस्नानं कृत्वा ब्राह्मणानाहूय पुण्याहं वाचयित्वा* यजमानः पीठोपविष्टः प्राणानायम्य 'मम पत्न्या दुष्टे नक्षत्रे करणे वारे योगे तिथौ प्रसूत्यां प्रथमरजोदर्शने वा यो दोषः समजनि तद्दोषपरिहारद्वारा तन्नक्षत्रदेवताप्रीत्यर्थं शान्तिकर्म करिष्ये' इति संकल्प्य वेदवन्तं कुटुम्बिनं वित्तहीनमाचारवन्तं ब्राह्मणमाचार्यत्वे नियोज्यैवंलक्षणसंपन्नं ब्रह्मत्वे नियोज्यैवंगुणविशिष्टान् 'सौरगाणपत्यमृत्युंजयजातवेदसनामत्रया(? मन्त्रजपा)श्वत्थप्रदक्षिणसूर्यनमस्कारान् भवन्तः कुर्वन्तु' इति त्रिचतुरादीन्नियोज्यैवंविशिष्टचतुरो ब्राह्मणान् 'भद्रा ते अग्ने, आ नो भद्राः, सहस्रशीर्षा, नमस्ते रुद्र मन्यवे' इत्याग्नेयनैर्ऋत्यवायव्येशानकोणेषु द्वारजपे नियोज्यैवंविशिष्टांश्चतुरः पञ्च षडेकादश वा 'रुद्राभिषेकं भवन्तः कुर्वन्तु' इति नियोज्याऽऽशिषो वाचयित्वा पूजास्थानं द्विहस्तमात्रं गोमयेनानुलिप्य स्वस्तिकशङ्खयमादि रङ्गवल्लीभिः कृत्वा तत्पूर्वतो होमार्थं चतुरस्रं हस्तमात्रं कुण्डं समन्ततश्चतुस्त्रिद्व्यङ्गुलविस्तारोत्सेधमेखलात्रययुतं पश्चिमतो मध्येऽश्वत्थदलसंकाशयोनिं संपाद्य मण्डपकल्पोक्तप्रकारेणाष्टभिर्वाक्यैः स्थण्डिले नक्षत्रदेवतापूजां कुर्यात्। देवस्येशानदेशे शतच्छिद्रं शुक्लवस्त्रावृतं बृहत्कलशादा(? शं तदा)ग्नेयादिकोणेष्वोषधीषु चतुरः कलशांश्च प्रतिष्ठाप्य प्रतिमाशुद्ध्यर्थं पञ्चामृतैः 'आ प्यायस्व, दधिक्राव्णः, शुक्रमसि, मधु वाताः, स्वादुः पवस्व' इति मन्त्रैः क्रमेण क्षीरदध्याज्य(मधु)शर्कराभिः स्नापयित्वा तेषां मध्ये मध्ये 'आपो हि ष्ठा' इति वारुणस्नपनमन्त्रजपं कृत्वाऽऽवाहनादि वस्त्रान्तं पूजयेत्॥

अथ कलशाराधनम्। 'आ कलशेषु, सर्वे समुद्राः, स्योना पृथिवि, रुवति भीमः, प्र वो यज्ञेषु, स हि रत्नानि, तत्सवितुः, गन्धद्वाराम्, आ प्यायस्व, दधिक्राव्णः, शुक्रमसि, मधु वाताः, स्वादुः पवस्व, काण्डात् काण्डात्, या ओषधीः, ओषधयः संवदन्ते'§ इति मन्त्रक्रमेण स्थापनजलासेकसप्तमृत्तिकापञ्चपल्लवत्वग्रत्नगोमूत्रगोमयक्षीरदध्याज्यमधु(शर्करा)दूर्वाधान्यशतौषधिफलपुष्पगन्धाक्षतानि दत्त्वा 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने' इति वरुणमावाह्यार्चयित्वा पूर्वोक्तजपान् पुरुषसूक्तं 'कद्रुद्राय' इति च यथाक्रममनुजपांश्च कारयित्वा ततः कुण्डेऽग्निं प्रतिष्ठाप्य चरुं श्रपयित्वा आज्यभागान्तेऽन्वारब्धाभ्यां समिदाज्याभ्यामष्टाभिर्वाक्यैश्चरुव्रीहिभ्यां 'यजमानस्य मृत्युर्नश्यत्वायुर्वर्धताम्' इति व्याहृतिभिर्हावयित्वा जपा(? जया)दिब्रह्मविसर्जनान्त

* अत्र 'ब्राह्मणाशिषो गृह्णीयाताम्। अथ' इत्यादर्शपुस्तके टिप्पण्यामधिकः पाठः, स च युक्तः।

(१) विपा. ७१-७६.

§ फलपुष्पगन्धाक्षतानां मन्त्रा अत्र न सन्तीति ते उच्छिन्नाः स्युरिति भाति।

ऋत्विग्भिः सहाऽऽचार्यः स्वस्वकलशमादाय शुभप्रदेशे दम्पती उपवेश्य तयोः शिरःसमीपे बृहत्कलशमवगृह्य 'सुरास्त्वाम्' इति 'समुद्रज्येष्ठाः, शं नो वातः, पवमानः सुवर्जनः' इत्येतैरनुवाकैरभिषिच्य दम्पती अहतवासांसि धारयित्वाऽऽज्यावेक्षणपात्रं संपाद्य 'रूपं रूपम्' इत्याज्यं विलोक्य ब्राह्मणमभ्यर्च्य सदक्षिणमाज्यपात्रं संत्यज्यायःपिण्डकार्पासकम्बलीयकमादाय बीजगर्भमन्त्रमुच्चार्य मृत्युस्वरूपं ब्राह्मणमभ्यर्च्य सदक्षिणाकं दत्त्वा नीराजनमनुभूय गृहं प्रविश्याऽऽचार्यब्रह्मऋत्विग्भ्यः फलं प्रतिगृह्य तेषां दक्षिणां दत्त्वाऽऽचार्याय प्रतिमादानं कृत्वा दशदानानि कृत्वा पङ्गुदीनान्धकृपणजनान् संतर्प्य शतं पञ्चाशत् पञ्चविंशतिं वा ब्राह्मणान् भोजयेत् । एवं सर्वारिष्टशान्तिर्भवतीत्याह भगवान् बोधायनः ॥

## वसिष्ठः

शान्त्युत्तरं शुभकालरजोदर्शनपर्यन्तं मैथुनवर्जनम्, शान्तिस्नानम्, होमः, देवपितृब्राह्मणसंतर्पणम्

'प्रभूतदोषं यदि दृश्यते तत्
पुष्पं तदा शान्तिककर्म कार्यम् ।
विवर्जयेदेव तदैकशय्यां
यावद्रजोदर्शनमिष्टकाले ॥

(१) वसं. २४।३६ तदैक ( तदेक ) काले ( मग्रे ); प्रपा. १०५ दोषं ( दोषे ) पुष्पं तदा ( पुनस्ततः ) विवर्ज ( विसर्ज ) काले ( ऋक्षे ); प्रर. ६७ दोषं ( दोषे ) तत् ( चेत् ) तदा ( ततः ) तदैक ( तयैक ); संसौ. २२ तदा ( ततः ) मिष्टकाले ( मन्यघस्रे ); संम. ९ संसौवत्; शाम. ५६ संसौवत्; सिन्धु. ८०३ मिष्टकाले ( मुत्तमेऽह्नि ); विपा. ६४ तदा ( ततः ) विवर्ज ( विसर्ज ) तदैक ( तथैक ); संग. ३६१ (=) काले ( मग्रे ); संब. ४९ दोषं ( दोषो ) तदा ( ततः ) ( कार्यम्० ) पू.; कुभ. ८०८ सिन्धुवत्; संर. ६९३ तदा ( ततः ) देव तदै ( च्चैव तयै ) शेषं सिन्धुवत्.

(१) रजोदर्शनकाले प्रभूतदोषपरिहाराय शौनकोक्तशान्तिं कृत्वा प्रशस्ततिथ्यादिषु ऋतुदर्शनपर्यन्तं गमनं वर्जयेदित्याह ज्योतिर्वसिष्ठः– प्रभूतेत्यादि । $ प्रपा. १०५

(२) अत्राऽऽद्यमार्तवं दुष्टं चेत् परमार्तवं यावत्प्रतीक्ष्यम् । तच्चेच्छुभफलं तदा यथोक्तां शान्तिं विधाय निषेकादि कुर्यात् । यदि परमप्यनिष्टफलं तदा तु स्वस्तिवाचनविशिष्टं द्विगुणचतुर्गुणादिदक्षिणं विधेयमित्याहुः । संसौ. २२

(३) एकशय्यां मैथुनम् । संम. ९

(४) एकशय्यां मैथुनम्, 'भर्ता तत्रापि गमनं वर्जयेत्तददर्शनात् ।' इति शौनकोक्तेः । दर्शनं शास्त्रम् । अत्रैकस्मिन्नशुभे यथोक्ता शान्तिः कार्या । द्वित्राद्यशुभसंनिपाते तु आहुतिसंख्याद्वैगुण्यादि बोध्यम् । कुभ. ८०८

(५) एतच्च गर्भाधानं मासादिशुभाशुभफलानि विचार्य स्वल्पे दोषे पूर्वं शान्तिं कृत्वा शुभे मुहूर्ते कर्तव्यमेव, न तु शुभकालिकत्वापेक्षा । प्रभूतदोषे तु प्रथमर्तौ शान्तिमेव कृत्वाऽग्रे शुभकालिक ऋतौ प्राप्ते कार्यम् । तथा च ज्योतिर्वसिष्ठः– प्रभूतेति । ऋतौ प्रभूतदोषत्वं नामानेकदोषवत्त्वं महादोषवत्त्वं वेति द्रष्टव्यम् । महादोषास्तु वैधव्यप्रदत्वकुटिलत्वसंततिनाशकत्वादिरूपाः । ज्योतिष्कश्यपोऽपि– 'तिथिवासरधिष्ण्येषु पुष्पं दुष्टेषु दृश्यते । गमनं वर्जयेत्तत्र पुनः शस्तेषु दर्शनात् ॥' इति । अत्र प्रभूतदोषे शुभकालिकत्वापेक्षाया विधानादप्रभूतदोषे तस्मिन्नेवर्तौ शान्तिकर्मोत्तरं गर्भाधानानुष्ठानमभ्यनुज्ञातं भवति । संर. ६९३–६९४

'चेद्दुष्टेऽह्नि नवोदकुम्भसलिलैः सन्मन्त्रितैरौषधैः
स्नानं पापनुदं सपञ्चकिसलैः कार्यं समृद्धीजकैः ॥

$ प्रर., विपा. प्रपावत् ।

(१) वसं. २४।३७ किसलैः ( कलशैः ) द्वीजकैः ( द्विजलैः ); प्रपा. १०६ चेद्दुष्टे ( दृष्टे वा ); संसौ. २३ द्वीज ( द्विज ).

( १ ) मन्त्रोऽत्र सुदर्शनमन्त्रः । प्रपा. १०६

( २ ) औषधानि च स्मृतिषु– ' फलिनीफलकनकामुबलाजलामज्जकोपेतैः । स्नायादभिनवपुष्पैः पुष्पैर्नाना-विधैर्बहुभिः ॥ ' । फलिनी प्रियङ्गुः । फलं जातीफलम् । कनकं नागकेसरः । लामज्जकम् उशीरम् । संसौ. २३

'ऐशान्यतो गोमयमण्डले च
परिस्तृतेऽग्नौ जुहुयाच्च दूर्वाम् ।
युग्मां घृताक्तां च समित्प्रमाणां
गायत्रिका( ? गायत्रिया ) साष्ट-
सहस्रसंख्याम् ॥

'शतप्रमाणामथवाऽघहन्त्री( ? न्त्रीं )
शुभैर्यवैर्व्याहृतिभिस्तिलैश्च ।
ततः सुरान् भूमिसुरान् पितॄंश्च
संतर्पयेदन्नसुवर्णवस्त्रैः ॥

## नारदः

दोषाल्पत्वे गुणाधिक्ये च न शान्तेरावश्यकता, अन्यथा शान्तेः कर्तव्यता शुभकालरजोदर्शनपर्यन्तं गमन-वर्जनं च , होमः , सुवर्णादिदानानि

'तिथ्यृक्षवारा निन्द्याश्चेत् शेफःकर्म न कारयेत् ।
दोषाधिक्ये गुणाल्पत्वे तत्तथाऽपि न कारयेत् ।
दोषाल्पत्वे गुणाधिक्ये शेफःकर्म समाचरेत् ॥

'निन्द्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते ।
तत्र शान्तिः प्रकर्तव्या घृतदूर्वातिलाक्षतैः ।
प्रत्येकं शतमष्टौ च गायत्र्या जुहुयात्ततः ॥

'स्वर्णगोभूतिलान् दद्यात्सर्वदोषापनुत्तये ।
भर्ता तत्राभिगमनं वर्जयेच्छस्तदर्शनात् ॥

## लघ्वाश्वलायनः

जपहोमौ , ब्राह्मणभोजनम् , दोषसद्भावे शान्तिपूर्वकमेव गर्भाधानम्

'तद्दोषपरिहारार्थं कुर्याच्छान्तिं यथाविधि ।
तोषयेज्जपहोमाभ्यां तत्तद्ब्रह्मादिदेवताः ॥

आचार्यादीन् समभ्यर्च्य भोजयेच्छक्तितो
द्विजान् ।
तदुद्दिश्य कृतेनाऽऽशु सर्वारिष्टं प्रणश्यति ॥

शान्तिकर्म विधानेन कृत्वाऽन्यस्मिन् दिने शुभे ।
गर्भाधानं ततः कुर्यादित्याचार्योऽब्रवीद्वचः ॥

अकृत्वा शान्तिकं कर्म न कुर्याद्गर्भसाधनम् ।
सर्वेषां शाखिनामेव विधिरेष उदाहृतः ॥

---

(१) वसं. २४।३८ दूर्वाम् ( दुर्गाम् ) त्रिका सा ( त्रिसंज्ञा ) ; संसौ. २४ ऐशा ( ईशा ) याच्च (यात्स).

(२) वसं. २४।३९ वाऽघ ( वाऽद्य ) ; संसौ. २४.

(३) ज्योना. १५।३१–३२ प्रथमार्धे ( तिथ्यर्क्षवार-निन्द्याश्चेच्छेषकर्म न कारयेत् । ) तत्तथा (न तथा) षष्ठपादे ( शेषकर्म समापयेत् ) ; शाम. ५६ कर्म न कार ( कर्म निवार ) षाधिक्ये ( षाधिके ).

(४) ज्योना. १५।३२–३३ यदि ( यत्र ) कं शत-मष्टौ ( कमष्ट शतं ) ; गभा. १२६ शान्तिः प्रकर्तव्या ( शान्तिं प्रकुर्वीत ) पञ्चमपादे ( प्रत्येकमष्टशतं चैव ) ; संसौ. २५ शान्तिः प्रकर्तव्या ( शान्तिं प्रकुर्वीत ) प्रत्येकं ...गायत्र्या (अष्टोत्तरं सहस्रं च प्रत्येकं) ; संम. ९ शान्तिः प्रकर्तव्या ( शान्तिं प्रकुर्वीत ) तृतीयार्धे नास्ति ; शाम. ५६ संमवत् ; सिन्धु. ८०७ गभावत् ; ज्योनि. १०८–१०९ यदि ( यस्याः ) कं शतमष्टौ च ( कमष्टशतं ) शेषं संमवत् ; संदी. १८८ ( भागः २) पञ्चमपादे (तत्प्रत्येक-मष्टशतं ).

(१) ज्योना. १५।३४ तत्राभिग ( तस्यापि ग ) च्छस्त ( च्चास्त ) ; गभा. १२६ पू. ; संसौ. २५ पूर्वार्धे ( सुवर्णं गां भूमितिलान् दद्याद्दोषापनुत्तये । ) ; शाम. ५६ ; सिन्धु. ८०७ पू. ; ज्योनि. १०९ च्छस्त ( च्छुभ ) ; संदी. १८८ ( भागः २ ) पू.

(२) लघ्वाश्वस्मृ. ३।१६–१९.

## *ऋषिपुत्रः

कलशस्थापनविधिः , कलशोदकेन भार्यास्नपनम् , होमः , ब्राह्मणभोजनम् , दैवज्ञपूजा

[1]प्रथमार्तवदोषाणां शान्तिं कुर्यादनन्तरम् ।
तिथिनक्षत्रवारादिदेवानां पूजनं पृथक् ॥
[2]शान्तिस्थलं प्रकुर्वीत विधिना दैवनिर्मिते ।
उद्याने वा नदीतीरे तडागे वाऽथ चत्वरे ॥
[3]मण्डलं कारयेत्तत्र गोमयेन द्विहस्तकम् ।
स्थण्डिलं कारयेत्तत्र चतुराढकशालिभिः ॥
आढकं तण्डुलं चैव आढकौ तिलयावकौ ।
उपर्युपरि संस्तीर्णे तन्मध्ये नलिनं लिखेत् ॥
दर्भैराच्छाद्य तन्मध्ये कर्णिकायां न्यसेद्घटम् ।
ससूत्रं सापिधानं च सकूर्चं वस्त्रवेष्टितम् ।
पुण्योदकेन संपूर्णमोषध्यादिसमन्वितम् ॥
[4]सहदेव्येकपत्रा च विष्णुक्रान्ता सभद्रिका ।
बिल्वपत्रं सहैतानि चूर्णयित्वा न्यसेद्घटे ॥
[5]कुष्ठमांसी हरिद्रे द्वे मुराशैलेयचन्दनम् ।
वचाकचोरमुस्ताख्याः सर्वौषध्यः प्रकीर्तिताः ॥
गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ।
राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥
[6]पञ्चगव्यं च कुमुदं तथा शुक्लफलानि च ।
वज्रवैडूर्यमाणिक्यविद्रुमाणि विनिक्षिपेत् ॥

[1]एवं कुम्भं समासाद्य गन्धपुष्पादिभिः शुभैः ।
अनुष्ठानपरो विप्रः प्राङ्मुखो वाऽप्युदङ्मुखः ॥
[2]आसीनः सुप्रसन्नात्मा प्राणसंयमनान्वितः ।
सावित्रीं च जपेत्कुम्भं स्पृशन् दशशतं द्विजः ॥
[3]एवं प्रदोषकाले तु कारयेदपरेऽहनि ।
उदये समनुप्राप्ते स्नातां गन्धाद्यलंकृताम् ।
स्नापयेच्छान्तिमन्विच्छन् पूर्वाह्णे प्राङ्मुखीं स्थिताम् ॥
[4]अधिवासितकुम्भस्य तोयैश्चापि समन्त्रकम् ।
पश्चाच्छेषोदकेनैव स्नात्वा देवं प्रणम्य च ॥
[5]स्वगृह्योक्तविधानेन होमं कुर्यात्प्रयत्नतः ।
दूर्वाज्येन तिलैर्हुत्वा सावित्र्या चैव मन्त्रतः ॥
[6]अष्टोत्तरसहस्रं वा शतमष्टाधिकं तथा ।
तत्संख्यां त्रिविधं हुत्वा दूर्वाज्येन तिलैः समम् ॥
[7]ब्राह्मणान् भोजयित्वा तु दैवज्ञं पूजयेत्ततः ।
अनेन विधिना नारी सर्वदोषात्प्रमुच्यते ॥

## विष्णुधर्मोत्तरपुराणम्

दम्पत्योः स्नानम् , सूर्यदेवताकहोमः , सूक्तजपः , सूर्यपूजा, हेमकदलीदानम् , आचार्यस्य प्रार्थना पूजनं च, वंशपात्रदानम्, दम्पत्योरभिषेकः , ब्राह्मणसंतर्पणम् , रजोवकीर्णवस्त्रत्यागः, शान्तिफलम्

[8]पञ्चमे दिवसे स्नात्वा द्वाभ्यामप्यथ मङ्गलैः ।
उष्णैश्च वारिभिः श्रेष्ठैः पञ्चपल्लवसंयुतैः ।

* ' अयं क्रौष्टुक्यपरनमा गर्गपुत्रः । भट्टोत्पलेन मदनरत्नेन चास्योल्लेखः कृतः ' इति थिओडोर ऑफ्रेट संपादितसंस्कृतलिखितपुस्तकसूच्यामुक्तम् ।

(१) **संको.** १४ मदनरत्ने ऋषिपुत्रसंहितायामिति ऋषिपुत्रीयत्वेनात्र गृहीतानां सर्वेषां श्लोकानां निर्देशः । एवं संस्कारवत्सेऽपि ; **संव.** ८.

(२) **संको.** १४ ; **संव.** ८ स्थलं ( स्थले ) तडागे ( तटाके ).

(३) **संको.** १४ ; **संव.** ८ मोषध्या ( मौषधा ).

(४) **संको.** १४ ; **संव.** ८ पत्रा ( पत्री ).

(५) **संको.** १४ ; **संव.** ८.

(६) **संको.** १४ ; **संव.** ८ शुक्ल ( शुक्ति ).

(१) **संको.** १४ ; **संव.** ९. (२) **संको.** १४.

(३) **संको.** १४ ; **संव.** ९.

(४) **संको.** १४ ; **संव.** ९ मन्त्र ( पञ्च ).

(५) **संको.** १४ ; **संव.** ९.

(६) **संको.** १४ ; **संव.** ९ त्रिविधं हु ( त्रिविधीर्हु ) समम् ( समैः ).

(७) **शाम.** ५७ पूज ( भोज ) स्मृत्यन्तरम् , पू. ; **संको.** ५ सर्व शामवत् , १४ ; **संव.** ९ शामवत्.

(८) **विपा.** ५५–५७.

तिलकल्केन शुद्धेन शुभकल्केन वै पुनः ॥

द्वाभ्यां दम्पतिभ्यामित्यर्थः । विपा. ५६

आह्निकं च विधिं कृत्वा विधानं नूनमाचरेत् ।
शुभाचारसमायुक्तः श्रद्धया परया युतः ।
स्थण्डिलं तु ततः कृत्वा स्वस्ति वाच्यं द्विजोत्तमैः ॥
अग्निप्रतिष्ठापूर्वं तु हवनं तत्र कारयेत् ।
अष्टोत्तरसहस्रं च जुहुयात्तिलसर्पिषा ॥
प्रधानं पायसं प्रोक्तं सघृतं च सशर्करम् ।
आ कृष्णेनेति मन्त्रेण मूर्धानमिति वा पुनः ॥
सूर्यसूक्तं जपेद्विद्वान् विष्णुसूक्तं तथैव च ।
सूर्यपूजापूर्वकं च कुसुमैः करवीरकैः ।
सुरक्तैर्गुग्गुलुर्देयो धूपार्थे दीप एव च ॥
वह्नेरुत्तरतो विद्वान् स्थापयेत् कदलीं शुभाम् ।
हेम्नः पञ्चपलाढ्यां च पलस्यापि सुलक्षणाम् ॥
पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
सुस्तम्भां पञ्चपत्राढ्यां कदलैश्च विराजिताम् ॥
राशौ कृतप्रतिष्ठां तु तण्डुलानां नृपोत्तम ।
तण्डुलानां परीमाणमाढकानां चतुष्टयम् ॥
दद्यात्तां विप्रवर्याय सवस्त्रां च सदक्षिणाम् ।
अलंकृताय विदुषे श्रोत्रियाय कुटुम्बिने ॥
'सुपत्रे सुभगे देवि रम्भे भास्करवल्लभे ।
रक्ष मां रजसो दोषाद्दुष्टस्यास्य विगर्हितात् ॥
दानेन तव देवेशः सविता सप्तवाहनः ।
प्रीतो भवतु मे सद्यो दोषं हरतु दुष्टजम् ॥'

दानमन्त्रो यथा– सुपत्र इति । विपा. ५६

'आचार्य त्वं महाभाग रजोदोषं विनाशय ।
दानस्यास्य प्रभावेण रजोदोषाच्च पाहि माम् ॥'
आचार्यं पूजयेद्भक्त्या वस्त्रैर्गन्धैश्च तोषणैः ॥

अथ आचार्यप्रार्थनामन्त्रः– आचार्येति । विपा. ५६

गोधूमैः पूरयेद्वंशपात्रं पुष्पफलान्वितम् ।
ताम्बूलैस्ताडपत्रैश्च सौभाग्यद्रव्यसंयुतम् ॥
'अरिष्टविनिवृत्त्यर्थमात्मवंशाभिवृद्धये ।
रजोदोषापनुत्त्यर्थं सौभाग्यं देहि मे सदा ॥'

ततो वंशपात्रदानम् । तद्दानमन्त्रो यथा– अरिष्टेति । विपा. ५६,५७

ततोऽभिषेचनं कार्यं दम्पत्योश्च विशेषतः ।
वेदविद्भ्यो धनं देयं यथाशक्त्या च तर्पणम् ॥
यस्मिन्वाससि तद्दृष्टं रजो दुष्टं भयावहम् ।
तद्वासो यत्नतस्त्याज्यं ततः शान्तिकरं भवेत् ॥
पुत्रपौत्रादिसंयुक्तो धनधान्यसुतान्वितः ।
पत्न्या सह चिरं जीवेज्जीववत्सा च मोदते ॥

## अनिर्दिष्टकर्तृकवचनानि

शान्त्युत्तरशुभकालरजोदर्शनपर्यन्तं गमननिषेधः, होमात्मिका शान्तिः, दानरूपा शान्तिः, कुम्भे देवतापूजनरूपा शान्तिः इतिकर्तव्यताका, शान्तिपर्यन्तं भार्यावलोकननिषेधः

'पुष्पं दृष्टं निन्दिते मे यदि स्या-
च्छान्तिं कुर्यादङ्गनानां च पूर्वम् ।
तत्संयोगं वल्लभा वर्जयेयु-
र्यावद्भूयो दृश्यते शस्तभे तत् ॥'[1]
'दूर्वातिलाज्यैर्जुहुयात् सहस्रं
गायत्रीमन्त्रेण तदुक्तदोषे ॥'[2]

दूर्वातिलहोमयोः (होमे ?) हस्तस्य साधनत्वम्, आज्यहोमे स्रुवस्य साधनत्वम्, इति समुच्चयहोमस्यासंभवात् षट्त्रिंशदधिकशतत्रयहोमे प्रत्येकद्रव्यसंबन्धेन अष्टोत्तरसहस्रहोमः सिध्यति, सहस्रशतहोमादिषु अष्टोत्तरत्वस्य नियतत्वात् । ननु द्वन्द्वसमासात् समुच्चयपक्ष एव प्राप्नोतीति चेत् न, भिन्नवस्त्रद्रव्यं(?) प्रति साहित्यस्याप्युपपत्तेः । गप. ४७३

नक्षत्रतिथिवारेषु क्षतपुष्पं च दुष्यति ।
होमं कुर्याच्च गायत्र्या वारदोषे तिथावपि ॥

(१) गप. ४७२; ज्योनि. १०८ चतुर्थपादे (यावद्भूयः शस्तभे चैव दृष्टम्).

(२) गप. ४७३.

**कुशैराज्यैश्चाष्टशतं दूर्वाभिश्च तथैव च ।**
**तिलैराज्येन दूर्वाभिर्होमं कुर्याच्छुभे दिने ।**
**नक्षत्रदोषशान्त्यर्थं प्रत्येकं तु सहस्रकम् ॥**

केचित्तु– " नक्षत्र...सहस्रकम् ॥ ' इति । तथागतव्यवस्था( ? ) – वारदोषव्यपोहनार्थमाज्यमिश्रितानां दूर्वाणामष्टोत्तरशतहोमः । नक्षत्रदोषे आज्यमिश्रितकुशानामष्टोत्तरशतहोमः । लग्नदोषे आज्ययुक्ततिलाष्टोत्तरशतहोमः " इति § व्यवस्थामाहुः । ननु अशूद्राधिकरणे स्त्रीशूद्रयोर्वैदिकमन्त्रे स्वा( ? न्त्रेष्व )धिकाराभावस्य निर्णीतत्वाच्छूद्रस्य गायत्रीमन्त्रकरणकहोमस्य सर्वथा कर्तव्यत्वाभावेन दोषशान्तिः कथमिति चेत् , उच्यते– ' योगस्य हेम करणस्य च धान्यमिन्दुः( ? न्दोः ) शङ्खं च तण्डुलमणिस्तिथि( ? णी तिथि )वारयोश्च । तारावलाय लवणान्यथ गां च राशेर्दद्याद्द्विजाय कनकं शुचिनाडिकायाम् ॥ ' इति सामान्यशान्तिः कार्या इति केचित् । वस्तुतस्तु सर्वदोषशान्त्यर्थं यथाशक्ति हेमदानमेव प्रत्येकं कार्यम् , ' सर्वदोषोपशमनं हेमदानं प्रकीर्तितम् । ' इत्युक्तेः । यत्तु कैश्चिदुक्तम्– शूद्रेण ब्राह्मणप्रतिनिधिद्वारा गायत्रीहोमः कार्य इति, तथा सति ब्राह्मणद्वारा यागादिष्वधिकारोऽप्यनिवार्यः स्यात् इति । सर्वथा न तथाऽऽचारो दृश्यते । ¶ ब्रह्माण्डोक्तहोमस्य काम्यत्वात् सर्वैर्न क्रियते । तस्यान्यशुभदिनेऽपि विहितत्वान्न निषेकदिननियमः । गप. ४७३–४७४

**[1]योगस्य हेम करणस्य च धान्यमिन्दुः( ? न्दोः )**
**शङ्खं च तण्डुलमणिस्तिथि( ? णी**
**तिथि ) वारयोश्च ।**
**तारावलाय लवणान्यथ गां च राशे-**
**र्दद्याद्द्विजाय कनकं शुचि-**
**नाडिकायाम् ॥**

**[1]निन्द्यर्क्षतिथिवारादौ यत्र पुष्यं प्रदृश्यते ।**
**शान्तिं समाचरेत्तत्र वक्ष्यमाणां शुभाप्तये ॥**

**गोमयेनोपलिप्ते तु स्थण्डिले समलंकृते ।**
**ग्रहाणां मण्डलं तत्र तद्वद्वर्णेन कारयेत् ॥**

**मण्डलस्येशदिग्भागे व्रीहिराशिं विनिक्षिपेत् ।**
**भाराचलप्रमाणं तु वस्त्रेण परिवेष्टयेत् ॥**
**तस्योपरि न्यसेत्पद्मं दले काद्यष्टवर्गकम् ।**
**स्वराणां विन्यसेत्तत्र द्वे द्वे कोणे यथाक्रमम् ॥**

**कर्णिकायां न्यसेद्बीजं हृल्लेखामन्त्रसंयुतम् ।**
**तस्योपरि न्यसेत्कुम्भं वस्त्रेण परिवेष्टितम् ॥**

**गुडूचीबिल्वापामार्गपत्रपालाशसर्षपान् ।**
**दूर्वापल्लवसंयुक्तां सर्वौषधिशतावरीम् ।**
**सहदेवीं विष्णुक्रान्तां हरिद्राचूर्णसंयुताम् ॥**

**पञ्चपल्लवसंयुक्ते पञ्चरत्नसमन्विते ।**
**तस्मिन्कुम्भे समावेश्य इन्द्राणीं मन्त्र(? मिन्द्र )-**
**मेव च ।**

**सवस्त्रप्रतिमां चैव तस्मिन्नावाहयेत् सुधीः ॥**
**सर्वान् देवान् समभ्यर्च्य ह्युपचारैश्च शोभनैः ।**
**आपो हि ष्ठादिभिर्मन्त्रैरब्लिङ्गैर्मन्त्रयेत्ततः ॥**
**समुद्रज्येष्ठां त्र्यम्बकं च विष्णुं रुद्रं जपेत्पुनः ।**
**नमस्कारं ततः कृत्वा ह्याचार्यं सम्यगर्चयेत् ॥**
**ऋत्विग्भ्यो दक्षिणां दद्यात् तत्कुम्भेनाभि-**
**षेचयेत् ।**
**सवस्त्रप्रतिमां गां च ह्याचार्याय निवेदयेत् ॥**
**प्रच्छादनपटं दद्यात् ततः शान्तिं प्रयच्छति ।**
**यावच्छान्तिं प्रकुर्वीत तावत्तां नावलोकयेत् ॥**

---

§ अस्यां व्यवस्थायां पूर्वोक्तवचनसमन्वयश्चिन्त्यः ।

¶ अस्माद्व्याख्यानात् ' दूर्वातिलाज्यैः ' इत्यस्य ' नक्षत्रतिथिवारेषु ' इत्यस्य वा गायत्रीकरणकहोमवचनस्य ब्रह्माण्डीयत्वं ग्रन्थकारोऽभिप्रैतीति प्रतीयते, प्रकरणेऽस्मिन् ब्रह्माण्डीयस्य होमविषयकस्य वचनान्तरस्य ग्रन्थकारेणाधृतत्वात् । उक्तवाक्ययोः काम्यहोमविषयकत्वं तु चिन्त्यम् ।

(१) गप. ४७४.

(१) ज्योनि. १०८.

## शाकलकारिकाः

ऋतुशान्तिकालः, पुण्याहवाचनम्, आचार्यादिवरणम्, नक्षत्रेशादिजपः, रुद्राभिषेकसूर्यनमस्काराश्वत्थप्रदक्षिणानि, कलशस्थापनम्, देवताधिवासनपूजने, नमकादिजपः, कलशाराधनम्, होमः, दम्पत्यभिषेकः, घृतपात्रे प्रतिबिम्बावेक्षणम्, घृतपात्रदानम्, आचार्यादिपूजनम्, दक्षिणादानम्, श्रेयोग्रहणम्, ब्राह्मणभोजनम्, शान्तिफलम्

[1]अथातः संप्रवक्ष्यामि शान्तिकर्म विधानतः।
रजसः प्रसवस्यापि जीवपत्याश्च योषितः॥

रजः स्यात् प्रथमं पत्न्या दुष्टतारासु वै यदि।
तदाऽरिष्टं भवेद्भर्तुस्तद्वच्च प्रसवेऽपि च॥

तद्दोषपरिहारार्थं शान्तिकर्म पतिः स्वयम्।
तत्सर्वं विधिवत् कुर्याद्रजसः प्रसवस्य च॥

चतुर्थदिवसादूर्ध्वं रजसः पञ्चमेऽहनि।
तस्मिन्नेव(? तस्मिन् वा) दिननक्षत्रे पुनरप्यथवा शुभे॥

प्रसवस्यापि वा शान्तिं कुर्याद्वा दशमे-(? द्द्वादशमे)ऽहनि।
तदभावे पुनस्तस्मिन्नक्षत्रे चाथवा शुभे॥

पुण्याहवाचनं कुर्यादाचार्यं वरयेदथ।
ब्राह्मणं(? ब्रह्माणं) चर्त्विजो वेदविदोऽथ वृणुयाद्द्विजान्॥

विंशतिर्देश(? तिं दश) चाष्टौ च यथा विभवसारतः।
नक्षत्र(? त्रेश)जपं कर्तुं वृणुयाद्वेदपारगान्॥

आदित्यादिग्रहाणां च तथा मृत्युंजयस्य च।
दुर्गागणपतिक्षेत्रपालादीनां च शक्तितः॥

लक्षसंख्याजपं चैव तदर्धं वा तदर्धकम्।
कारयेदयुतं वाऽपि जपकर्तुरपेक्षया॥

रुद्राभिषेकमीशस्य विधिवत् कारयेदथ।
तथा सूर्यनमस्कारमश्वत्थस्य प्रदक्षिणम्॥

पौरुषं पावमानीयमस्य वामस्य चेदथ।
सौरार्थं चैव शान्त्यर्थं वरयेच्छक्तितो द्विजान्॥

न भवेद्वरणं पूर्वमालस्याद्यदि चेद्यथा।
मोहाच्चेदथवा कुर्यात्स्वस्तिवाचनपूर्वकम्॥

होमानुसारतः कुण्डं स्थण्डिलं वाऽपि कारयेत्।
प्राङ्गणे मण्डपे चैत्ययज्ञोक्तविधिना कृते॥

कुण्डस्येशानदिग्भागेऽरत्निमात्रा च वेदिका।
तदुत्तरे ग्रहाणां च चतुरस्रा तथैव हि॥

ईशानकोणतः कुर्यात् कलशे स्थापनं ततः।
ऋतुशान्तौ विधिश्चायं प्रसवे त्वग्निकोणतः॥

सच्छिद्रं कलशं स्थाप्य वेदिकायाश्च पश्चिमे।
मूलमन्त्रेण तं चैव तत ईशानकोणतः॥

घृषदित्यनया स्थाप्य ततस्तानभिमन्त्रयेत्।
कथयामोऽथ वै मन्त्रान् यथानुक्रमणेन च॥

इमं मे वरुण इत्येकस्तत्त्वा यामि ततः परम्।
त्वं नो अग्ने ततश्चैव स त्वं नो अग्न इत्यथ॥

सर्वे समुद्राः सलिलं निनयेत् कलशेषु हि।
या ओषधीरित्यनया निक्षिपेत्तेषु चौषधीः॥

कुष्टं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम्।
वचा कचारमुस्ता च स्मृताश्चौषधयो दश॥

ओषधय इत्यनया धान्यानि प्रक्षिपेदथ।
स हि रत्नानि मन्त्रेण तेषु रत्नानि निक्षिपेत्॥

वल्मीकाच्च गजस्थानान्नदीकूलद्वयाद्ध्रदात्।
संगमान्मृदमानीय निक्षिपेदुद्धृतेति च॥

जाम्बवाश्वत्थचूतानां प्लक्षोदुम्बरयोरपि।
त्वचश्च पल्लवानीह समाहृत्य प्रयत्नतः॥

क्षिपेत् पञ्च त्वचस्तेषु रुवतीत्यनया ततः।
प्र वो यज्ञेष्वित्यनया प्रक्षिपेत्पल्लवानि च॥

(१) शाका. ५३६–५८७ पृ. ६६–७३.

गायत्र्या चैव गोमूत्रं गन्धद्वारा च गोमयम् ।
आ प्यायस्वेति वै क्षीरं दधिक्राव्णो दधि क्षिपेत् ॥

आज्यं शुक्रमसीत्येवं देवस्य त्वा कुशोदकम् ।
काण्डात्काण्डाच्च दूर्वाभिर्निक्षिपेत्कलशेषु वै ॥

कर्षमात्रसुवर्णेन तदर्धेनार्धकेन वा ।
नक्षत्रप्रतिमा कार्या ग्रहाणां चापि शक्तितः ॥

अग्निपदं विहायाथ सतिमित्यादिकं जपेत् ।
पुनरग्न्यादि तत्सूक्तं प्रसिञ्चन्नुदकं जपेत् ॥

प्रतिमानां च सर्वासां जातानामग्नियोगतः ।
नवानामेव कर्तव्यमग्नेरुत्तरणं यतः ॥

प्रतिष्ठाप्याथ वै प्राणं प्रतिमायां विधानतः ।
मा प्र गाम चासुनी ते हिरण्यगर्भ इत्यथ ॥

वेदिकायां न्यसेत् पीठं तत्र चाहतमम्बरम् ।
प्रसार्य तण्डुलांस्तत्र पद्ममष्टदलं लिखेत् ॥

तदुत्तरेऽपि तद्वत् स्याद्ग्रहाणां मण्डलानि च ।
कल्पोक्तविधिना तत्र सूर्यादीनां लिखेत् क्रमात् ॥

कुशासने समाविष्टः कर्ता प्राङ्मुख एव सन् ।
ग्रहयज्ञविधानेन ततः पूजां समारभेत् ॥

एकस्मिन्नपि वा पीठे वस्त्रतण्डुलसंयुते ।
नक्षत्रदेवतादींश्च ग्रहानभ्यर्चयेदुदक् ॥

प्रधानदेवता मध्ये दक्षिणे चाधिदेवता ।
प्रत्यधिदेवता चोदक् तत्तन्मन्त्रेण पूजयेत् ॥

ग्रहान् विधिवदभ्यर्च्य गन्धपुष्पाक्षतादिभिः ।
नमकं चमकं चैव बृहत्कुम्भं स्पृशञ्जपेत् ॥

कद्रुद्रायेति वै सूक्तं जपेदीशानसंस्थितः ।
भद्रा अग्नेरित्याग्नेयाद्या( ? ग्यामा )नो भद्राश्च नैर्ऋतौ ॥

पौरुषं चाथ वायव्ये प्रसवे त्वग्निकोणतः ।
सर्वतः पूजनं कुर्यात् कलशाराधनादिकम् ॥

उपलेपादिकं कुर्यात् चक्षुरन्तं स्वशाखतः ।
जुहुयान्मूलमन्त्रेण समिदाज्यचरून् यवान् ॥

सलिलाननुमन्त्रैश्च( ? ) जुहुयाद्विधिवत्ततः ।
पूर्ववज्जुहुयादेव अधिप्रत्यधिदेवताः ॥

कृत्वा दशांशकं होमं ग्रहादीनां च वै यतः ।
महाव्याहृतिहोमं च कुर्यात् स्विष्टकृतादिकम् ॥

यजमानं सपत्नीकं स्नापयेत् कलशोदकैः ।
समुद्रज्येष्ठा इत्याद्यैराचार्यो ब्राह्मणैः सह ॥

होमशेषं समाप्याथ पूजयेद्विधिवद्द्विजम् ।
सोपस्करं तथा चाऽऽमपायसं कांस्यभाजने ॥

रूपं रूपमनेनैव सघृतं( ? ते ) कांस्यभाजने ।
पश्येत् परस्परं रूपं दद्यादामं सदक्षिणम् ॥

'कांस्यं ब्रह्ममयं प्रोक्तमाज्यं तेजो दिवौकसाम् ।
सुवर्णं हरदेवोत्थमतः शान्तिं प्रयच्छ मे ॥

अनामयसुखं तस्मादामद्रव्यं सुखावहम् ।
प्राणिनां जीवनाधारमतः शान्तिं प्रयच्छ मे ॥'

सकांस्यं दक्षिणायुक्तमामं चाऽऽज्यमवेक्षितम् ।
अनेन विधिना दद्यात् सर्वारिष्टप्रशान्तये ॥

ततो निवारयेद्विप्रमाचार्यादीन् प्रपूजयेत् ।
गन्धपुष्पाक्षतश्चैव वस्त्रालंकरणादिभिः ॥

तदर्धं ब्राह्मणे देयं गणेशाय तदर्धकम् ।
ऋत्विग्भ्यो दक्षिणां दद्याद्यथावित्तानुसारतः ॥

आचार्ये च ततो दद्यात् सवत्सां गां पयस्विनीम् ।
श्रेयः संपाद्य विप्रेभ्यो गृह्णीयादाशिषोऽपि च ॥

ब्राह्मणान् भोजयेच्छक्त्या तेभ्यो दद्यात् स दक्षिणाम् ।
तच्छेषान्नं स्वयं चैव भुञ्जीयात् सह बन्धुभिः ॥

इत्थं यः कुरुते मर्त्यः शान्तिकर्म विधानतः ।
न तस्य दुरितं किंचित् प्रज्ञायुःश्रीविवर्धनम् ॥

### शौनककारिका:

ग्रहमखः , आचार्यादिवरणम् , कलशत्रयस्थापनम् , भुवनेश्वर्यादिदेवतापूजनम् , कुम्भान्स्पृष्ट्वा जपः , होमः , संततधारा, पूर्णाहुतिः , दम्पत्यभिषेकः , विप्रार्चनम् , दक्षिणादानम् , महाशान्तिजपः , आशीर्ग्रहणम् , ब्राह्मणभोजनम् , शान्तिफलम्

[1]सार्तवानां तु नारीणां शान्तिं वक्ष्यामि शौनकः।
तिथिवारर्क्षयोगेभ्यो लग्नात्सग्रहसत्तमात् ॥
[2]ग्रहेभ्यो दुःस्थितेभ्यश्च तत्तद्दोषक्षयाय च।
अर्थपुत्रादिलाभाय दम्पत्योरभिवृद्धये ॥
[3]पञ्चमेऽह्नि चतुर्थे वा ग्रहातिथ्यपुरःसरम्।
तस्मिन्नहनि कर्तव्य ऋतुहोमो विधानतः ॥
[4]आचार्यं वरयेत् प्राज्ञं भुवनेश्वरितुष्टये।
होमार्थं च जपार्थं च वरयेदृत्विजो बहून् ॥

(१) शौका. १ पृ. ३१ सार्त ( आर्त ) लग्नात्सग्रह ( लग्नमध्यम ) ; प्रपा. १०४ शान्तिं ( शौचं ) ; प्रर. ५२ सार्त ( आर्त ) पू. ; शाम. ५६ सार्त ( आर्त ) चतुर्थपादे ( लग्नेशसनवांशकात् ) ; सिन्धु. ८०४ पू. ; विपा. ५७ सार्त ( आर्त ) लग्नात्स ( लग्नसं ) ; संकौ. ४ पू. ; संव. ९ सर्व प्ररवत्.

(२) शौका. २ पृ. ३१ तत्तद्दो ( तत्र दो ) ; प्रपा. १०४ अर्थपु ( अत्र पु ) ; शाम. ५६ तृतीयपादे ( अत्र पुत्रस्य लाभाय ) ; विपा. ५७ अर्थ ( अन्न ) ; संकौ. ४ उत्त. ; संव. ९ उत्त. अतः परं ' प्रथमार्तवदोषाणां शान्तिं कुर्यादनन्तरम् । तिथिनक्षत्रवारादिदेवानां पूजनं पृथक् ॥ ' इत्यधिकः श्लोकः , स च ऋषिपुत्रवचनेषु गतः .

(३) शौका. ३ पृ. ३१ व्य ऋतुहोमो (श्यमृतुहोमं) ; प्रपा. १०४ शौकावत् ; गभा. १२५ पू. ; शाम. ५६ द्वितीयपादे ( ग्रहयज्ञपुरःसरः ) शेषं शौकावत् ; सिन्धु. ८०४ ग्रहातिथ्य ( ग्रहयज्ञ ) ; विपा. ५७ शौकावत् ; संकौ. ४ ; संव. ९.

(४) शौका. ४ पृ. ३१ रितुष्टये ( र्येनुष्ठितम् ) ; प्रपा. १०४ रितुष्टये ( र्येनुष्ठितम् ) ; शाम. ५६ प्राज्ञं भु ( प्रातर्भु ) ; सिन्धु. ८०५ प्राज्ञं ( प्राज्ञो ) ; विपा. ५७ शौकावत् ; संकौ. ४ ; संव. ९ सिन्धुवत्.

[1]यजमानो द्विजैः सार्धं शान्तिहोमं समाचरेत्।
गृहादीशानदिग्भागे देवतापूजनाय च ॥
[2]द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत्।
कुम्भत्रयं न्यसेद्राशौ तन्तुवस्त्रादिवेष्टितम् ॥
[3]पूरयेत्तीर्थसलिलैः प्रतिकुम्भं पृथक् पृथक्।
सूक्तेनाथ नवर्चेन प्र सुव आप इत्यथ ॥
[4]ऋचा याः प्रवतस्तद्वद्वायव्या च ततः क्रमात्।
मध्यकुम्भे क्षिपेद्धान्यमौषधानि च हेम च ॥
[5]ततश्च पञ्च रत्नानि गन्धपुष्पाक्षतादिकान्।
औषधानि च वक्ष्यन्ते मुनिभिः शान्तिकारणात् ॥
[6]औदुम्बरः कुशा दूर्वा राजीवं चम्पबिल्वकाः।
विष्णुक्रान्ताऽथ तुलसी बर्हिषं शङ्खपुष्पिका ॥

(१) शौका. ५ पृ. ३२ गृहादी ( गृह्स्ये ) ; प्रपा. १०४ ; शाम. ५६ ; सिन्धु. ८०५ ; विपा. ५८ ; संकौ. ४ ; संव. ९.

(२) शौका. ६ पृ. ३२ ; प्रपा. १०४ द्राशौ (तत्र) ; गभा. १२५ ; शाम. ५६ ; सिन्धु. ८०५ ; विपा. ५८ ; संकौ. ४ दिवेष्टितम् ( दि वेष्टयेत् ) ; संव. ९ संकौवत्.

(३) शौका. ७ पृ. ३२ ; प्रपा. १०४ ; गभा. १२५ उत्त ; शाम. ५६ ; सिन्धु. ८०५ ; विपा. ५८ ; संकौ. ४ ; संव. ९.

(४) शौका. ८ पृ. ३२ ; प्रपा. १०४ ; गभा. १२५ ऋचा याः प्रवत ( आचार्यः प्रवर ) ; शाम. ५६ ; सिन्धु. ८०५ ; विपा. ५८ ऋचा याः प्रव ( ऋचापः प्रय ) क्रमात् ( पुनः ) मध्यकुम्भे (मध्येकुम्भं) ; संकौ. ४ ; संव. ९.

(५) शौका. ९ पृ. ३२ कारणात् ( कर्मणि ) ; प्रपा. १०४ ; शाम. ५६ दिकान् ( युतान् ) ; सिन्धु. ८०५ ; विपा. ५८ ; संकौ. ४ ; संव. ९–१०.

(६) शौका. १० पृ. ३२ कुशा ( शमी ) राजीवं चम्प ( जातिचम्पक ) ; प्रपा. १०४ कुशा ( कुशो ) चम्प ( पद्म ) ; गभा. १२५ औदु ( उदु ) बर्हिषं ( बर्हिषः ) ; शाम. ५६ म्बरः ( म्बरं ) ; सिन्धु. ८०५ औदु ( उदु ) कुशा ( कुशो ) वं चम्प ( ववट ) ; विपा. ५८ वं चम्प ( ववक ) म्बरः ( म्बरं ) ; संकौ

[1]शतावर्यश्वगन्धा च निर्गुण्डी सर्षपद्वयम् ।
अपामार्गः पलाशश्च पनसो जीरकस्तथा ॥
[2]प्रियंगवश्च गोधूमा व्रीहयोऽश्वत्थ एव च ।
क्षीरं च दधि सर्पिश्च पद्मपत्रं तथोत्पलम् ॥
[3]कुरण्टकत्रयं गुञ्जा वचाभद्रकमुस्तकाः ।
द्वात्रिंशदौषधानीह यथासंभवमाहरेत् ॥
[4]गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ।
राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥
[5]कुम्भस्थापनमित्यादि तत्तन्मन्त्रेण कारयेत् ।
मृत्तिकाश्चौषधादीनि मन्त्रेण प्रक्षिपेत्क्रमात् ॥

[1]कुम्भोपरि न्यसेत् पात्रं कांस्यं वा ताम्रमेव वा ।
मृन्मयं वेणुपात्रं वा स्वस्य वित्तानुसारतः ॥
[2]पात्रोपरि न्यसेद्रुक्मं प्रतिमां भुवनेश्वरीम् ।
तन्मूर्त्यं वा न्यसेत्तत्र इन्द्राणीं च पुरंदरम् ॥
[3]आचार्यः पूजयेद्देवीमङ्गाद्यावरणानि च ।
अन्यो वा पूजनं कुर्याद्गायत्र्या मन्त्रसारया ॥
[4]इन्द्राणीं पूजयेद्देवीमिन्द्राणीमासु नारिषु ।
क्रमेण पूजयेदिन्द्रमिन्द्र त्वा वृषभं वयम् ॥
[5]अनेन विधिनाऽऽचार्यः पूजयेद्देवतात्रयम् ।
आवाहनादिसकलैरुपचारैः पृथक् पृथक् ॥
[6]तन्मध्यमं स्पृशन् कुम्भं मन्त्रेण भुवनेश्वरीम् ।
जपेदाचार्य आ होमाच्छ्रीसूक्तं च जपेत्ततः ॥

---

४ औदु ( उदु ) वं चम्प ( ववट ) क्रान्ताऽथ ( क्रान्ता च ) ; संव. १० बर्हिषं ( बर्हिषः ).

(१) शौका. ११ पृ. ३२ ; प्रपा. १०४ ; गभा. १२५ जीरक ( जीवक ) ; शाम. ५६ जीरक ( जीवन ) ; सिन्धु. ८०५ गभावत् ; विपा. ५९ गभावत् ; संकौ. ४ गभावत् ; संव. १० गभावत् .

(२) शौका. १२ पृ. ३२ ; प्रपा. १०४ ; गभा. १२५ च दधि ( दधि च ) ; शाम. ५६ उत्तरार्धे ( क्षीरान्नदधिसर्पिश्च पर्णं चैव तथोत्पलान् ॥ ) ; सिन्धु. ८०५ गभावत् ; विपा. ५९ दधि सर्पिश्च ( दधिसंमिश्रं ) ; संकौ. ४ ; संव. १०.

(३) शौका. १३ पृ. ३२ कुरण्ट ( कोरण्ट ) द्वितीयपादे ( वचा भद्रकमुस्तके ) नीह ( दीन ) ; प्रपा. १०४ द्वितीयपादे ( वचा भद्रकमुस्तके ) ; गभा. १०५ ; शाम. ५६ पूर्वार्धे ( कुरण्टकश्च गुञ्जा च वचामुस्तकभद्रकाः ॥ ) यथासंभव ( गायत्र्या सर्व ) ; सिन्धु. ८०५ ; विपा. ५९ ; संकौ. ४ ; संव. १०.

(४) शौका. १४ पृ. ३२ ; प्रपा. १०४ ; शाम. ५६ ; विपा. ५९ देशाच्च ( वेशान्न ) ; संकौ. ४ रथ्या ( रथ ) संगमाद्ध्र ( संगमह्र ) ; संव. १० रथ्या ( रथ ).

(५) शौका. १५ पृ. ३२ ; प्रपा. १०४ ; गभा. १२५ मन्त्रेण प्रक्षि ( तन्मन्त्रेण क्षि ) उत्त. ; शाम. ५६ मित्यादि ( मित्याह ) काश्चौ ( का चौ ) ; सिन्धु. ८०५ सर्वे गभावत् ; विपा. ५९ त्यादि त ( त्याद्यास्त ) ; संकौ. ४ नमित्यादि त ( न इत्येतत्त ) काश्चौ ( कां चौ ) ; संव. १० संकौवत् .

---

(१) शौका. १६ पृ. ३२ पात्रं वा ( पात्रं च ) ; प्रपा. १०४ वेणु ( नव ) ; गभा. १२५-१२६ द्वितीयपादे ( कांस्यमृद्वेणुताम्रजम् ) पू. ; शाम. ५६ स्वस्य वि ( स्वस्ववि ) ; सिन्धु. ८०५ वा ताम्रमेव वा ( मृद्वेणुताम्रजम् ) पू. ; विपा. ५९ शामवत् ; संकौ. ४ प्रपावत् ; संव. १० प्रपावत् .

(२) शौका. १७ पृ. ३२ ; प्रपा. १०४ ; गभा. १२६ ( भुवनेश्वरीं न्यसेत्तत्र इन्द्राणीं च पुरंदरम् ॥ ) एतावदेव ; शाम. ५७ सेत्तत्र ( सेत्पात्रे ) ; सिन्धु. ८०५ गभावत् ; विपा. ५९ ; संकौ. ४ पात्रो ( तस्यो ) ; संव. १० द्रुक्म ( त्पात्रं ).

(३) शौका. १८ पृ. ३२ ; प्रपा. १०४ ; शाम. ५७ ; विपा. ५९ ; संकौ ४ ; संव. १० पूजये ( पूरये ).

(४) शौका. १९ पृ. ३२ ; प्रपा. १०४ ; शाम. ५७ ; विपा. ५९ ; संकौ. ४ ; संव. १०.

(५) शौका. २० पृ. ३२ ; प्रपा. १०४ ; शाम. ५७ नाऽऽचार्यः ( ना चाथ ) ; विपा. ६० ; संकौ. ४ ; संव. १०.

(६) शौका. २१ पृ. ३२ ; प्रपा. १०४ तन्मध्यमं ( तत्तन्मन्त्रं ) गभा. १२६ दाचार्य आ होमाच्छ्री ( द्गायत्रीं मध्यमे श्री ) उत्त. ; शाम. ५७ ; सिन्धु. ८०५ दाचार्य आ ( द्गायत्रिमा ) उत्त. ; विपा. ६० तन्मध्यमं स्पृ ( तन्मध्ये संस्पृ ) ; संकौ. ४ ; संव. १०.

जपेदाचार्य इति । अन्वाधानात्मकहोमतन्त्रारम्भपर्यन्तमित्यर्थः । अनेनैवाऽऽशयेन 'अन्वाधानं ततः कुर्यात्' इति श्लोके आचार्यग्रहणम् । ततश्चाग्निस्थापनादि ग्रहपूजान्तं यजमानेन कर्तुमुचितम् । संको. ५

[1]स्पृशन् वै दक्षिणं कुम्भमृत्विगेको जपेदथ ।
चत्वारि रुद्रसूक्तानि चतुर्मन्त्रोत्तराणि च ॥

[2]संस्पृशन्नुत्तरं कुम्भं श्रीरुद्रं रुद्रसंख्यया ।
शं न इन्द्राग्नीसूक्तं च तत्र चैवं स्पृशञ्जपेत् ॥

[3]कुम्भस्य पश्चिमे देशे शान्तिहोमं समाचरेत् ।
अन्वाधानं ततः कुर्याद्धोमतन्त्रं समाचरेत् ॥

[4]पूर्णपात्रनिधानान्तं कृत्वाऽऽचार्यो द्विजैः सह ।
दूर्वाभिस्तिलगोधूमैः पायसेन घृतेन च ॥

(१) शौका. २२ पू. ३२ स्पृशन् वै ( संस्पृशन् ); प्रपा. १०४; गमा. १२६; शाम. ५७; सिन्धु. ८०६; विपा. ६० जपेदथ ( जपेत्तथा ) चतुर्मन्त्रोत्त ( चतुर्मन्त्रान्त ); संको. ४; संव. १०.

(२) शौका. २५ पू. ३२-३३ आदर्शपुस्तके २३, २४ इति श्लोकाङ्कद्वयं प्रमादादन्तरितम् । पूर्वार्धे ( संस्पृशेत्तूत्तरं कुम्भं रुद्रं रुद्रेण संख्यया । ); प्रपा. १०४; गमा. १२६ इन्द्राग्नी ( इन्द्राग्नि ) तत्र चैवं स्पृ (तत्रैव संस्पृ); शाम. ५७; सिन्धु. ८०६ तत्र चैवं स्पृ ( तत्रैव संस्पृ ); विपा. ६० श्रीरुद्रं रु ( भद्रश्रीरु ) इन्द्राग्नी ( इन्द्राग्नि ) तत्र चैवं ( तत्रैव च ); संको. ४-५ सिन्धुवत्; संव. १० इन्द्राग्नी ( इन्द्राग्नि ).

(३) शौका. २६ पू. ३३ प्रथमपादे ( कुम्भपश्चिमदेशे तु ) तन्त्रं समाचरेत् ( शेषं समापयेत् ); प्रपा. १०४; गमा. १२६ पू.; शाम. ५७; सिन्धु. ८०६ पू.; विपा. ६० द्धोमतन्त्रं ( द्धोमं तत्र ); संको. ५; संव. १०.

(४) शौका. २७ पू. ३३; प्रपा. १०४; गमा. १२६ उत्त.; शाम. ५७ कृत्वाऽऽचार्यो ( कृत्वा कार्ये ); सिन्धु. ८०६ उत्त.; विपा. ६०; संको. ५; संव. १० च ( वा ).

[1]पायसं श्रपयेत्तत्र सावित्रं च हविश्च तत् ।
कृत्वाऽऽज्यभागपर्यन्तं हविरुद्वासनादिकम् ॥

श्रपयेत्तत्रेति गृह्यसिद्धान्नग्रहणं व्यावर्त्यते । 'सावित्रं च हविश्च तत्' इत्यत्र तच्छब्देन हविश्चतुष्टयत्यागकाले सवित्रे इति चतुर्थ्यन्तेन देवतोद्देशः कार्य इति ज्ञाप्यते । लभ्यते चात्र मन्त्रसंवादः । पार्वणाविति तद्धितविसंवादिनो मन्त्रात् पूर्णमासायेत्युद्देशोऽङ्गीक्रियते याज्ञिकैः । संवादे तु कैमुतिकन्यायेनैव तत्सिद्धिः । न चैवं भुवनेश्वरीदैवत्यहोमाभावापत्तिः, वाचनिकत्वेन इष्टत्वात् । वस्तुतस्तु 'षूङ् प्राणिप्रसवे' इति धातोर्व्युत्पन्नः सवितृशब्दः प्रकृतफलदातृत्वेन प्रथमप्रयाजे समिच्छब्दोऽग्नेरिव लिङ्गानादरेण भुवनेश्वरीप्रतिपादक इति न विरोधः । संको. ५

[2]तिसृभिश्चैव दूर्वाभिरेकैका चाऽऽहुतिर्भवेत् ।
आभिर्मन्त्रप्रयुक्ताभिर्गायत्र्या जुहुयात् क्रमात् ॥

[3]अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तु वा ।
अष्टाविंशतिभिश्चैव अथवा चाष्टसंख्यया ॥

[4]तिलमिश्रैश्च गोधूमैर्द्रव्येणाऽऽज्याहुतीर्हुनेत् ।
जुहुयात् पायसेनैवमाज्येन च हुनेत् क्रमात् ।
हविश्चतुष्टयेनैव प्रत्येकं समसंख्यया ॥

(१) शौका. २८ पू. ३३ सावित्रं ( सावित्रीं ) तत् ( यत् ); प्रपा. १०४; शाम. ५७; विपा. ६१ च ( हि ); संको. ५; संव. १० तत् ( यत् ).

(२) शौका. २९ पू. ३३ भिर्गायत्र्या (भिः सावित्र्या); प्रपा. १०४ का चाऽऽहुतिर्भवेत् ( कामाहुतिं चरेत् ) आभिर्मन्त्रप्र ( अभिमन्त्र्य प्र ); गमा. १२६ रेकैका चाऽऽ ( रेका वाऽप्या ) पू.; शाम. ५७ चाऽऽ ( वाऽऽ ) गायत्र्या ( गायत्रीं ); सिन्धु. ८०६ पू.; विपा. ६१; संको. ५; संव. १०.

(३) शौका. ३० पू. ३३; प्रपा. १०४ पू.; गमा. १२६ तु शत ( वा शत ) पू.; शाम. ५७ पू.; सिन्धु. ८०६ गमावत्, पू.; विपा. ६१ पू.; संको. ५; संव. १० पू.

(४) शौका. ३१ पू. ३३ तीर्हुनेत् ( तिर्भवेत् ) द्वितीयार्धे नास्ति; प्रपा. १०४-१०५; शाम. ५७ णाऽऽज्या

'गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयम् ।
ततः स्विष्टकृतं हुत्वा रज्जुप्रहरणं तथा ॥

भुवनेश्वर्यै गायत्र्या दधिमधुघृताक्ताभिस्तिसृभिर्दूर्वाभिरेकाहुतिरित्येवमष्टसहस्रमष्टशतं वा दूर्वाहुतीर्घृताक्ततिलमिश्रगोधूमाहुतीः पायसाहुतीर्घृताहुतीश्च जुहुयात् । एवमिन्द्राणीन्द्रयोः प्रागुक्तमन्त्राभ्यां क्रमेण हविश्चतुष्टयं प्रत्येकमष्टशतसंख्यं भुवनेश्वर्या अष्टसहस्रपक्षे जुहुयात् । तथा अष्टशतपक्षे तु तयोरष्टाविंशतिरिति संप्रदायः । अन्ये तु 'गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयम् । ततः स्विष्टकृतं हुत्वा' इति शौनकेनेन्द्राणीन्द्रयोर्होमानभिधानात्तयोर्होमो नास्तीत्याहुः । ‡ गभा. १२७

'अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः ।
संततामाज्यधारां तां पूर्णाहुतिमथाऽऽचरेत् ॥

'परिषेचनपर्यन्तं होमशेषं समापयेत् ।
सहौषधिस्थितैस्तत्र प्रतिकुम्भस्थितोदकैः ॥

'ऋतुमत्याः स्त्रियाः शान्त्यै दम्पतिभ्यां सुखाय च ।
अथाभिषेकमन्त्राश्च प्रोच्यन्ते शौनकादिभिः ॥

शान्तिः अभिषेकः । संको. ५

'आपो हि ष्ठेति नवभिः सूक्तेन च ततः परम् ।
इन्द्रो अङ्ग तृचेनैव पावमानैः क्रमेण तु ॥

'उभयं शृणवच्च नः स्वस्तिदा विश एकया ।
त्रैयम्बकेन मन्त्रेण जातवेदस एकया ॥

'समुद्रज्येष्ठा इत्यादिचतुर्भिश्च प्रसिद्धकैः ।
त्रायन्तामिति मन्त्रैश्च त्रिभिश्चैभिर्यथाक्रमम् ॥

'इमा आपस्तृचेनैव देवस्य त्वेति मन्त्रतः ।
मन्त्रेणाथ तमीशानं त्वमग्ने रुद्र इत्यथ ॥

---

‡ प्रर., शाम. गभावत् ।

(णाप्या) नेवमा (नैव आ) सम (शत); विपा. ६१ वमाज्येन च (व आज्येनैव); संको. ५ नेवमा (नैव आ); संब. १० संकोवत्.

(१) शौका. ३२ पू. ३३ गायत्र्यै (सावित्र्यै); प्रपा. १०५; गभा. १२६ चतुर्थपादे (समुद्रादूर्मिसूक्ततः): १२७ तृतीयपादान्तम्; प्रर. ५७ तृतीयपादान्तम्; शाम. ५७; सिन्धु. ८०६ चतुर्थपादे (समुद्रादूर्मिसूक्ततः); विपा. ६१; संको. ५ तु (च); संब. १० कृतं हुत्वा (हुतं कृत्वा) तु (च).

(२) शौका. ३३ पू. ३३ धारां तां (धारान्तं); प्रपा. १०५; गभा. १२६ उत्त.; शाम. ५७ धारां तां (धारान्तां); सिन्धु. ८०६ उत्त.; विपा. ६१ शामवत्; संको. ५; संब. १० दिभिर्हुत्वा (हुतीर्हुत्वा).

(३) शौका. ३४ पू. ३३; प्रपा. १०५; गभा. १२६ तृतीयपादे (अथाभिषेक कुर्वीत) उत्त.; शाम. ५७; सिन्धु. ८०६ सर्वे गभावत्; विपा. ६१; संको. ५; संब. १०.

(१) शौका. ३५ पू. ३३; प्रपा. १०५; शाम. ५७ स्त्रियाः शान्त्यै (स्त्रियः शान्ति); विपा. ६१; संको. ५; संब. १० स्त्रियाः शान्त्यै द (स्थिता शान्तिर्द).

(२) शौका. ३६ पू. ३३ मानैः (मानीः) तु (च); प्रपा. १०५ मानैः (मान्यैः); गभा. १२६ अङ्ग (अङ्गे); शाम. ५७ मानैः (मानीः); सिन्धु. ८०६; विपा. ६२ इन्द्रो अङ्ग (इन्द्र आशां) मानैः (मान्यैः); संको. ५ शामवत्; संब. १०-११.

(३) शौका. ३७ पू. ३३; प्रपा. १०५ त्रैय (त्रिय); गभा. १२६; शाम. ५७; सिन्धु. ८०६; विपा. ६२ त्रैयम्बकेन (त्र्यम्बकेन च); संको. ५ केन (केण); संब. ११.

(४) शौका. ४० पू. ३३ मिति (मिह) श्चैभि (श्चाभि); प्रपा. १०५; गभा. १२६ (समुद्रज्येष्ठा इत्यादि त्रायन्तां च त्रिभिः क्रमात् ॥) एतावदेव; शाम. ५७ श्चैभिर्य (श्चापि य); सिन्धु. ८०६ गभावत्; विपा. ६२-६३ श्चैभिर्य (श्चैव य); संको. ५; संब. ११ श्चैभि (श्चाभि).

(५) शौका. ४१ पू. ३३ पू., ३८ पू. ३३ णाथ (ण च) उत्त.; प्रपा. १०५; गभा. १२६; शाम. ५७; सिन्धु. ८०६; विपा. ६३ इमा आ (इदमा); संको. ५; संब. ११.

[1]तमु ष्टुहीति मन्त्रेण भुवनस्य पितरं तथा ।
या ते रुद्रेति मन्त्रेण शिवसंकल्पमन्त्रतः ॥
[2]इन्द्र त्वा वृषभं पञ्चमन्त्रैश्चैवाभिषेचयेत् ।
सा च वस्त्रान्तरं धृत्वा पुनश्चोपवसेत् सती ॥
उपवासोऽत्र समीपावस्थानम् । † प्रपा. १०५
[3]विप्रानभ्यर्च्य विधिवत् गन्धपुष्पाक्षतादिभिः ।
धेनुं पयस्विनीं दद्यादाचार्याय च भूषणैः ॥
[4]सदक्षिणमनड्वाहं प्रदद्याद्रुद्रजापिने ।
ऋत्विग्भ्यश्चाथ सर्वेभ्यो दद्याद्वै दक्षिणां ततः॥
मुख्यदक्षिणाशक्तौ निष्क्रयो दक्षिणा देया । तमाह कात्यायनः ' दश कार्षापणा धेनौ ' इति ' अष्टावनडुहि स्मृताः ' इति च । संको. ५

† शाम., विपा., संको. प्रपावत् ।

(१) शौका. ३८–३९ पू. ३३ मन्त्रतः (सूक्तकम् ); प्रपा. १०५ ; गभा. १२६ ; शाम. ५७ पितरं त (पितुस्त) ; सिन्धु. ८०६ ; विपा. ६३ द्वितीयपादे (पितरं भुवनस्य च ); संको. ५ ; संब. ११ उत्त.

(२) शौका. ३९ पू. ३३ पू. : ४१ पू. ३३ वसेत् (विशेत्) उत्त. ; प्रपा. १०५ ; गभा. १२६ पू. ; शाम. ५७ पञ्चम ( वयं म ) श्चोपवसेत् सती ( श्चैवोपवासिनी ) ; सिन्धु. ८०६ पू. ; विपा. ६४ ; संको. ५ पञ्चम ( वयं म ) ; संब. ११ संकोवत् .

(३) शौका. ४२ पू. ३३ पयस्विनीं (सदक्षिणां) च भूषणैः ( सभूषणैः ) ; प्रपा. १०५ उत्त. ; शाम. ५७ ; सिन्धु. ८०६ उत्त. ; विपा. ६४; संको. ५ प्रथमपादे ( विप्रान् विधिवदभ्यर्च्य ) ; संब. ११ संकोवत् .

(४) शौका. ४३ पू. ३४ ; प्रपा. १०५ ; गभा. १२६ पू. ; प्रर. ६२ (=) पू. ; शाम. ५७ ; सिन्धु. ८०६ पू. ; विपा. ६४ सदक्षिणम (दक्षिणामप्य) श्चाथ ( श्चापि ) ; संको. ५ श्चाथ ( श्चापि ) ; संब. ११ संकोवत् .

[1]महाशान्तिं प्रजप्याथ विप्राशीर्वचनं ततः ।
ब्राह्मणान् भोजयेत् पश्चाद्भुञ्जीत स्वजनैः सह॥
[2]एवं यः कुरुते शान्तिं शौनकोक्तप्रकारतः ।
तदनिष्टं तु सकलं सद्य एव विनश्यति ॥ $

## रेणुकारिकाः

शोणितदोषप्रयुक्तवन्ध्यत्वादिदोषपरिहारकं पुष्यस्नानम् , सफलनिष्फलशोणितयोर्लक्षणे

[3]यदि वन्ध्यादिदोषेण हता नारी भवेत्तु ताम् ।
पुष्यस्नानोक्तविधिना स्नापयेच्छुद्ध्यनन्तरम् ॥
वराहमिहिरैः सम्यक् पुष्यस्नानं समीरितम् ।
ग्रन्थगौरवभीत्या तन्नास्माभिरिह लिख्यते ॥
शशशोणितसंकाशं लाक्षारससमप्रभम् ।
विरज्यति च निर्णिक्तं तद्गर्भाय न शोणितम् ॥
वेदनारहितं शुद्धं त्रिदिनात्संनिवर्तते ।
रक्तं तद्गर्भतां यायादचिरात्पुंप्रयोगतः ॥

$ शौनककारिकासु हिरण्यकेशिगृह्यशेषसूत्रे च समानानुपूर्व्यैव ग्रहणजननशान्तिरुक्ता । सैव ग्रहणप्रथमर्तुदर्शनेऽपि कर्तव्येति प्रयोगपारिजातकारादिभिरुक्तम् । सा शान्तिकाण्डेऽस्माभिः संग्रहीष्यमाणा तत्रैव द्रष्टव्या ।

(१) शौका. ४४ पू. ३४; प्रपा. १०५ ञ्जीत (ञ्जीयात् ) ; गभा. १२६ ( महाशान्तिं प्रजप्याथ ब्राह्मणान् भोजयेत्ततः ॥ ) एतावदेव ; शाम. ५७ प्रजप्या ( प्रयच्छा ) येत् पश्चाद्भुञ्जीत ( येच्चैव भुञ्जीयात् ) ; सिन्धु. ८०६ गभावत् ; विपा. ६४; संको. ५ ; संब. ११ प्रजप्या (प्रजाप्या) र्वचनं ( र्वाचनं ).

(२) शौका. ४५ पू. ३४ ; प्रपा. १०५ प्रकारतः ( विधानतः ) ; शाम ५७ सद्य एव ( सर्वं चापि ) ; विपा. ६४ उत्त. ; संको. ५ ; संब. ११.

(३) रेका. १८–२२ पू. २–३.

# *वन्ध्यात्वं तत्परिहारोपायाश्च

**बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च**

गर्भधारणोपायः प्रजार्थिहोमः

[1]अथ प्रजार्थिहोमः ॥

[2]पूर्वपक्षे पुण्ये नक्षत्रेऽमावास्यायां विषुवेऽयने वा नदीतीरेऽश्वत्थच्छायायां वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्यृद्धिम्' इति वाचयित्वा प्राच्यां दिशि ब्रह्माणं प्रतिष्ठाप्य पार्श्वयोर्धातारं विधातारम्। दक्षिणतो धातारमुत्तरतो विधातारम् ॥

[3]ततस्तानर्चयेत्। पूर्वं 'ब्रह्माणं प्रजापतिं परमेष्ठिनं हिरण्यगर्भमावाहयामि' इत्यावाह्य सावित्र्या पाद्यं ददाति। सावित्र्या निवेदयेत्। एतैरेव नामधेयैः शुक्लान्नं ब्रह्मणे, मुद्गान्नं धातुः, पीतान्नं विधातुः ॥

* अत्र वन्ध्यात्वशब्देन पुष्पाभावः, पुष्पस्य निष्फलत्वम्, काकवन्ध्यात्वम् (एकापत्योत्पत्त्युत्तरं पुष्पस्य निष्फलत्वम्), केवलकन्याप्रसूत्वम्, स्रवद्गर्भात्वम्, मृतापत्यात्वं चेति वन्ध्यात्वस्वरूपाणि सनिमित्तानि विवक्ष्यन्ते।

(१) बौगृशे. २।४।१ ; हिगृशे. ३।१३ ; संर. ७६६.

(२) बौगृशे. २।४।२ ; हिगृशे. ३।१३ स्वस्त्यृद्धिम् (स्वस्त्ययनमृद्धिम्) ; संर. ७६६ श्वत्थच्छा (श्वत्थस्य च्छा) (गोमयेन०) विधातारम्। ··· विधातारम् (दक्षिणतो विधातारमुत्तरतः).

(३) बौगृशे. २।४।३ ; हिगृशे. ३।१३ ; संर. ७६६ ब्रह्माणं प्रजापतिं परमेष्ठिनं (ब्रह्माणमावाहयामि प्रजापतिमावाहयामि परमेष्ठिनमावाहयामि) एतैरेव (तैरेव) शुक्लान्नं (शुक्लमन्नं).

[1]ततः सावित्र्या अप आचम्य प्रणवेनाष्टशतं हुत्वा ब्रह्माणमुपतिष्ठते– 'नमो वाचे नमो वाचस्पतये नमो ब्रह्मणे बृहते करोमि' इति। एवं 'नमो धात्रे नमो विधात्रे' इति ॥

[2]अग्निमुपतिष्ठते– 'नमोऽग्नये सप्तार्चिः सप्त जिह्वाः सप्तधाऽग्निः प्रतिष्ठितः। सप्तैव विश्वा भूतानि को ह्यग्निः प्रतितिष्ठति। तत्त्वमसि विश्वमसि योनिरसि' इति ॥

[3]अथ स्त्रियमाहूय सावित्र्या पलाशपर्णैरष्टोत्तरसहस्रैः स्नापयित्वा पुरुषसूक्तेन जुहुयात्। तत्संपातेन मूर्ध्नि जुहुयात्। प्रणवेन नमस्कुर्यात् ॥

[4]अध्वर्युं वस्त्रकुण्डलाभ्यामलंकरोति ॥

[5]ततः सा गर्भिणी भवतीत्याह भगवान् बोधायनः ॥

पार्श्वयोर्ब्रह्मणः। तान् ब्रह्मधातृविधातृन्। 'धातारमावाहयामि' इत्येवं धातृविधात्रोरावाहनादि। निवेदनं नैवेद्यस्य। अष्टसहस्रैः अष्टाधिकसहस्रैः।

संर. ७६६–७६७

(१) बौगृशे. २।४।४ ; हिगृशे. ३।१३ ; संर. ७६६ आचम्य (आचमय्य) (नमो ब्रह्मणे ... विधात्रे०).

(२) बौगृशे. २।४।५ तिष्ठते (तिष्ठेत) ; हिगृशे. ३।१३ सप्त जिह्वाः (सप्तजिह्वः) ; संर. ७६६ नमोऽग्नये सप्तार्चिः सप्त जिह्वाः (नमो ब्रह्मणे सप्तवित्सप्तजिह्वश्च) विश्वा भू (विश्वभू).

(३) बौगृशे. २।४।६ ; हिगृशे. ३।१३ ; संर. ७६६ रष्टोत्तर (रष्ट).

(४) बौगृशे. २।४।७ ; हिगृशे. ३।१३ ; संर. ७६६ अध्वर्युं + (च).

(५) बौगृशे. २।४।७ ; हिगृशे. ३।१३ तीत्याह भगवान् बोधायनः (तीति विज्ञायते) ; संर. ७६६.

पुत्रप्राप्त्यर्थो नारायणबलिः

* [1]'अथातो नारायणबलिं व्याख्यास्यामः– दक्षिणोत्तरायणयोरपरपक्षस्य द्वादश्यां क्रियेत ॥

* अयं नारायणबलिर्बौधायनेनात्र स्वातन्त्र्येण अग्रिमाध्याये च और्ध्वदेहिकसंनियोगेन विहितः । अयं स्वातन्त्र्येण पुत्रप्राप्त्यर्थमनुष्ठीयमानो लोके दरीदृश्यते, निबन्धकारैरपि तथैव संगृहीतश्च । अत्रेदं प्रतिपत्तव्यम्– नारायणबलेः पुत्रप्राप्त्यर्थता पुत्रप्राप्तिकारणतया वा पुत्रप्राप्तिप्रतिबन्धकस्वकुलपुरुषीयप्रेतत्वनिवर्तकत्वेन वा संभवति । तत्र पुत्रप्राप्तिकारणता यद्यपि विशिष्य कुत्रापि नोक्ता तथापि आग्निवेश्यगृह्ये 'यस्तु सर्वान्समधिगच्छति पितृभ्यो नारायणाय बलिं ददाति' इति वाक्ये 'सर्वान्' इत्यस्य 'कामान्' इति शेषाभ्युपगमेनोपपद्यते । प्रेतत्वनिवर्तकत्वं तु बहुषु ग्रन्थेषु प्रतिपाद्यते । तच्च स्वातन्त्र्येण, और्ध्वदेहिकसहकारित्वेन, परम्परया वेति त्रिधा संभवति । तत्र स्वातन्त्र्येणेति वृद्धहारीतविष्णुपुराणवचनेषु प्रतीयते । बौधायनगृह्यशेषसूत्रे तृतीयप्रश्नैकविंशाध्याये 'अथातो नारायणबलिसंस्कारविधिं व्याख्यास्यामः' इत्युपक्रम्य पालाशविध्याद्यौर्ध्वदेहिकं विधाय ततो नारायणबलिः कर्तव्यत्वेनोपदिष्ट इत्यौर्ध्वदेहिकसहकारित्वेन प्रेतत्वनिवर्तकत्वं नारायणबलेः प्रतीयते । एवमन्यत्रापि क्वचित् । आश्वलायनगृह्यपरिशिष्टादौ तु प्रेतत्वनिवर्तकौर्ध्वदेहिके प्रेतस्य संप्रदानत्वयोग्यतासंपादकत्वं नारायणबलेरभिहितमिति तत्र और्ध्वदेहिकव्यवधानेन परम्परया प्रेतत्वनिवर्तनौपयिकत्वमवगम्यते । सहकारित्व–परम्परापक्षयोरौर्ध्वदेहिकेन सहैवानुष्ठानम् । एतेषु चतुर्षु पक्षेषु पुत्रप्राप्तिकारणतापक्षे स्वातन्त्र्येण प्रेतत्वनिवर्तकत्वमिति पक्षे च केवलनारायणबलेरनुष्ठानमुपपद्यते । संकल्पे तु यथाभिप्रायं 'पुत्रप्राप्त्यर्थम्' इति 'पुत्रप्राप्तिप्रतिबन्धकप्रेतत्वनिवृत्त्यर्थम्' इति वा विशेषोऽभिलपनीयः । अत्र केवलानुष्ठेयत्वबोधकवचनानामेव संग्राह्यत्वाद्दौर्ध्वदेहिकसहानुष्ठेयत्वबोधकानि आश्वलायनादिवचनानि यद्यपि न संग्राह्याणि तथापि कर्मैकत्वात्पदार्थक्रमबोधार्थं तान्यपि संगृहीतानि ।

(१) बौगृशे. ३।२०।१ ; हिगृशे. ३।१२ क्रियेत (क्रियते).

[2]'पूर्वेद्युर्द्वादश षड्वा ब्राह्मणानिमन्त्रयते योनिगोत्रश्रुतवृत्तसंपन्नान् ॥

[3]'अथापरेद्युर्देवगृहे नदीतीरे वाऽग्निमुपसमाधाय संपरिस्तीर्याऽऽ प्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं दैवतमावाहयति । पुरुषसूक्ते द्वे ऋचौ जपित्वा व्याहृतिभिः पुरुषमावाहयति ॥

[4]'अथैनं स्नापयति पुरुषसूक्तेन ॥

अथैनं गन्धपुष्पधूपदीपैरष्टाक्षरेणार्चयित्वाऽद्भिस्तर्पयति– 'केशवं तर्पयामि' इति द्वादशनामभिः ॥

[5]'परिधानप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति । 'विष्णोर्नु कम्' इति पुरोनुवाक्यामनूच्य 'परो मात्रया' इति याज्यया जुहोति ॥

[6]'अथाऽऽज्याहुतीरुपजुहोति– 'केशवाय स्वाहा' इत्येतैरेव नामधेयैः ॥

अथ गुडपायसघृतमिश्रमन्नं निवेदयति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विष्णवे महापुरुषाय हविर्निवेदयामि' इति । सप्तव्याहृतिभिः स्वाहाकारेण जपति । व्याहृतिभिराचमनीयम् ॥

[7]'अथ ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषूपवेश्याथैनान् वस्त्रगन्धपुष्पधूपदीपैर्माल्यैरभ्यर्च्याथाभ्यनुज्ञातस्तिलघृतमिश्रं हविः समुदायुत्य

(२) बौगृशे. ३।२०।२ ; हिगृशे. ३।१२.

(३) बौगृशे. ३।२०।३ ; हिगृशे. ३।१२ मुपसमाधाय (मुखात्कृत्वा).

(४) बौगृशे. ३।२०।४–५ ; हिगृशे. ३।१२.

(५) बौगृशे. ३।२०।६ ; हिगृशे. ३।१२ परिधान ...... पक्वाज्जुहोति (शेषमग्निमुखं कृत्वा पक्वाज्जुहुयात्).

(६) बौगृशे. ३।२०।७–८ ; हिगृशे. ३।१२.

(७) बौगृशे. ३।२०।९ ; हिगृशे. ३।१२ जुहोति (जुहुयात्) चतुर्विंश (त्रयोविंश).

हस्ते जुहोति । 'पितृभ्यः स्वधा नमो नारायणाय स्वाहा' इत्यादिचतुर्विंशतिर्मन्त्रा ऊह्याः ॥

[1]अथ 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो नारायणाय स्वाहा' इति ॥

अथ ब्राह्मणानन्नेन परितोष्याऽऽचम्य तेषां यथाशक्ति दक्षिणां ददाति ॥

प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु बलिं ददाति--'विश्वेभ्यो देवेभ्यो नमः साध्येभ्यो देवेभ्यो नमः सर्वेभ्यो देवेभ्यो नमः सर्वाभ्यो देवताभ्यो नमो विष्णवे नमो नारायणाय नमः सहस्रशीर्षाय नमो यज्ञात्मने नमो यज्ञपुरुषाय नमो विश्वात्मने नमः सर्वात्मने नमः सर्वेश्वराय नमः' इति ॥

[2]स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

[3]सर्वान् पितॄन् समधिगच्छति ब्रह्मलोके महीयत इत्याह भगवान् बोधायनः ॥

अनपत्यस्याऽऽहिताग्नेरपत्यप्राप्त्यर्थं पुनःसंस्कारादिविधिः

[4]अथ वै भवति 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति, 'प्रजातन्तुं मा व्यवच्छेत्सीः' इति । एतस्माद्ब्राह्मणादाहिताग्नेर्दशवर्षाणामूर्ध्वं यदि प्रजा नोत्पद्येत कथं तत्र कुर्यादिति ॥

(१) बौगृशे. ३।२०।१०-१२ ; हिगृशे. ३।१२.

(२) बौगृशे. ३।२०।१३ ; हिगृशे. ३।१२ कृत्प्रभृति सिद्धमा ( कृदादि ).

(३) बौगृशे. ३।२०।१४ ; हिगृशे. ३।१२ ब्रह्म... यनः ( पुत्राञ्जयतीति विज्ञायते ).

(४) बौगृशे. ४।११।१ ; हिगृशे. ३।१४ व्यवच्छे ( व्यवत्से ) नोत्पद्येत ( नोत्पद्यते ).

[1]पुनरेव कुमारीं संस्कृत्य दशमेऽहन्येकादशाहे द्वादशाहे वाऽरण्योरग्नीन् समारोप्योदवसाय मथित्वाऽग्नीन् विहृत्योद्वासन्येष्येद्वा ॥

[2]तदानीमेवारण्योरग्नीन् समारोप्यौपासने ब्रह्मौदनं श्रपयित्वोपवसथहविःप्रभृति सिद्धमग्न्याधेयं कुर्वन्ति ॥

तस्मिन् संस्थिते पवित्रेष्ट्या यजेत ॥

तस्यां संस्थितायां तन्तुमतीं निर्वपेत् ॥

तस्यां संस्थितायां त्रैधातवीयां निर्वपेत् ॥

[3]अपि वैन्द्राग्नेन पशुना यजेत । पुनराधेयं वा कुर्यात् ॥

[4]अथ यद्येको बह्वीर्जायाः प्रयुञ्जान एवमेवैतत् कुर्यात् । 'तस्मादेको बह्वीर्जाया विन्दते' इति ब्राह्मणम् ॥

## आश्वलायनगृह्यपरिशिष्टम्

अपत्यप्रतिबन्धकप्रेतोपद्रवनिवृत्त्यर्थं नारायणबलिः

[5]अथ नारायणबलिः । अर्वाक् संस्काराच्छुद्धे काले शुक्लैकादश्यां स्नातः शुचौ देशे विष्णुं

(१) बौगृशे. ४।११।२ ; हिगृशे. ३।१४ रोप्योद ( रोप्यौद ) द्वासन्यं ( द्वासयन्ते ).

(२) बौगृशे. ४।११।३-६ ; हिगृशे. ३।१४.

(३) बौगृशे. ४।११।७ ; हिगृशे. ३।१४ कुर्यात् ( कुर्वीत ).

(४) बौगृशे. ४।११।८ ; हिगृशे. ३।१४.

(५) आगृप. ३।१५ गुणवन्तं वि ( गुणवन्तमवि ) ; संकौ. ३४-३५ संस्काराच्छुद्धे काले (संवत्सराच्छुद्धकाले) प्रेतं च ( यमं च ) युग्मान् ब्रा ( युग्मब्रा ) भरणादि ( भरण ) द्वितीया ( द्वितीयाया ) ; संर. ६९६-६९७ संस्काराच्छु ( संवत्सराच्छु ) प्रेतं च ( यमं च ) गोत्र देवदत्ता ( गोत्रासौ विष्णुदैवता ) पिण्डान् गन्धा ( पिण्डानर्घ्या ) यमाय + ( च ) भुक्त ( भक्त ) संस्थान् ( संस्थं ) विष्णवे 'विष्णो ( 'विष्णो ) भरणादि ( भरण ) गोत्रायायं ( गोत्राय ) पापं कर्मार्ह (पापमर्हे) द्वितीया ( द्वितीयाया ).

वैवस्वतं प्रेतं च यथावदभ्यर्च्य तदग्रे तिलमिश्रान् मधुघृतप्लुतान् दश पिण्डान् विष्णुरूपं प्रेतं ध्यायन् 'काश्यपगोत्र देवदत्तायं ते पिण्डः' इति दक्षिणाग्रेषु दर्भेषु दक्षिणामुखः प्राचीनावीती पराचीनेन पाणिना दत्त्वा पिण्डान् गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यां क्षिपेत्। अथ रात्रावयुग्मान् ब्राह्मणानभिमन्त्र्योपोषितः श्वो मध्यंदिने विष्णुमभ्यर्च्य प्रेतमुद्दिश्य ब्राह्मणानेकोद्दिष्टविधिना भोजयित्वा तृप्तेषु ब्राह्मणसमीपे पिण्डविधिना निनयनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय 'विष्णो अयं ते पिण्डः' इत्येवं चतुरः पिण्डान् भुक्तशेषेण दक्षिणसंस्थान् दत्त्वाऽथ पञ्चमं 'काश्यपगोत्र देवदत्त' इति प्रेतं ध्यात्वा तद्रूपाय विष्णवे 'विष्णोऽयं ते' इति दद्यात्। अथाऽऽचान्तान् दक्षिणया संतोष्यैकं तेषु गुणवन्तं विशेषतो वस्त्राभरणादिगोहिरण्यैः प्रेतबुद्ध्या तोषयेत्। अथ तैः पवित्रपाणिभिः 'प्रेताय काश्यपगोत्रायायं ते तिलोदकाञ्जलिः' इति तिलोदकं दापयित्वा 'अनेन नारायणबलिकर्मणा भगवान् विष्णुरिमं देवदत्तं शुद्धमपापं कर्मार्हं करोतु' इति वाचयित्वा विसृजेत्। एष नारायणबलिकल्पः। एवमन्यामपि स्वाभिमतदेवतां यमद्वितीयामभ्यर्च्य विधिमिमं कुर्यात्। सोऽप्येनमपापं करोति। न तु पुण्यकृतोऽपि बलिमेनमकृत्वा पारलौकिकं कुर्यात्। कृतं नोपतिष्ठते। अन्तरिक्षे विनश्यति। तस्माद्यथासंभवमपि कुर्यात्॥

(१) यदि कृतेऽपि गर्भाधाने यदा गर्भोत्पत्त्यभावस्तदा प्रतिबन्धकप्रेतोपद्रवनिवृत्त्यै नारायणबलिनागबली कार्यौ। संको. ३४

(२) एवं कृतेऽपि गर्भाधाने यदा गर्भो नोत्पद्यते तदा प्रतिबन्धकीभूतप्रेतनिवृत्त्यर्थं नारायणबलिनागबली कार्यौ। * तत्र यद्यपि बौधायनसूत्रस्यैव यजुर्वेदिनामभ्यर्हितत्वेन ग्राह्यत्वं तथाऽपि नागबलिसूत्रस्येदानीमप्राप्त्यनुपलम्भाद्बाह्वृच एव नागबलिप्रयोगः प्रदर्श्यते। बौधायनोक्तनारायणबलिविधिसत्त्वेऽपि सनियोगशिष्टत्वाद्बाह्वृच एवोच्यते। बौधायनसूत्रोक्तरीत्या क्रियमाणे त्वर्धजरतीयन्याय आपद्येतेति। देवदत्तेति तत्तन्नाम्न उपलक्षणम्। प्रेतस्य नामाज्ञाने 'काश्यपगोत्र विष्णुरूप प्रेत' इत्येवं ध्यानम्। संर. ६९६–६९७

## हिरण्यकेशिगृह्यसूत्रम्

गर्भस्रावहरमुदरोन्मार्जनम्

[१]'यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि– 'पराञ्चं त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धने। स ऋतूनुपवेश्य दशमासो अवीरहा॥' इति॥

यदि गर्भो गर्भिण्याः स्रवेदत्वा ऊर्ध्वं नाभेर्यो देशस्तं स्वेन पाणिना 'पराञ्चम्' इति सकृन्मन्त्रमुक्त्वा त्रिरुन्मार्ष्टि ऊर्ध्वापवर्गं संमृज्यते। नैमित्तिकमिदं कर्म। $ मातृवृ.

## भारद्वाजगृह्यसूत्रम्

गर्भस्रावहरमुदरोन्मार्जनम्

[२]'यदि गर्भः स्रंसेदार्द्रेण पाणिना त्रिरूर्ध्वं नाभेरुन्मृजेत्– 'पराञ्चं त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धनैः। स ऋतूनुपशेष्व दशमासोऽवीरहा॥' इति॥

## आग्निवेश्यगृह्यसूत्रम्

गर्भस्रावहरमुदरोन्मार्जनम्

[३]'यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि– 'पराञ्चं त्वा नार्वाञ्चं त्वष्टा

* 'अथातोऽनन्तादि' इति बौधायनवचने (सं. का. पृ. २४५७) टिप्पणी द्रष्टव्या।

$ संर. मातृवृवत्।

(१) हिगृ. २।१।१०; संर. ८२०.

(२) भागृ. १।२२. (३) आग्निगृ. २।१।१.

बध्नातु बन्धने । स ऋतूनुपशेष्वा दशमासो अवीरहा ॥ ' इति ॥

गर्भधारणोपायः प्रजार्थिहोमः

'प्रजार्थिहोमं व्याख्यास्यामः । नदीतीरेऽश्वत्थच्छायायां वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्राच्यां दिशि ब्रह्माणं प्रतिष्ठाप्य पार्श्वयोर्धातारं विधातारं च । दक्षिणतो धातारं वामतो विधातारम् । कृष्णवर्णं धातारं श्वेतवर्णं विधातारं चतुर्मुखं चित्रवर्णम् । ततस्तानर्चयेत् । पूर्वं ' ब्रह्माणमावाहयेत्( ? यामि ) परमेष्ठिनमावाहयेत्( ? यामि ) हिरण्यगर्भमावाहयेत् ( ? यामि ) ' इत्यावाह्य प्रणवेन ' आपो हि ष्ठा मयोभुवः ' इति तिसृभिः ' हिरण्यवर्णाः शुचयः पावकाः ' इति चतसृभिः ' पवमानः सुवर्जनः ' इत्येतेनानुवाकेन मार्जयित्वा शुद्धान्नं ब्रह्मणे, मुद्गान्नं धात्रे, पीतान्नं विधात्रे ( निवेदयेत् ) ।

यजमानस्याथैनां स्त्रियमाहूय ' तत्त्वमसि ज्योतिरसि विश्वेशानं गता नामदा ' इति, अमावास्यायां पौर्णमास्यामयनद्वये च व्यतीपाते विषुवे तिष्यरोहिण्यां श्रवणायां तस्या जन्मनि ऋतुस्नातायामहतं वासः परिधाप्य हिरण्यमाचार्याय दत्त्वाऽक्लिष्टानि वासांसि परिधायाऽऽचम्य गन्धशुक्लपुष्पैरलंकृत्याथ देवयजनोल्लेखनप्रभृत्यग्निमुपसमाधाय संपरिस्तीर्य ' सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ' इति स्त्रीषु दक्षिणोपविश्य परिधानप्रभृत्याऽग्निमुखात् कृत्वा पक्वात् पुरुषसूक्तेन जुहुयात् । जुहोति याज्यां पुरोनुवाक्यामिति द्वौ द्वौ प्रत्यृचम् । अथाऽऽज्याहुतीरुपजुहोति । सावित्र्याऽष्टोत्तरसहस्रं जुहुयात् । अप उपस्पृश्य सुदर्शनेनाष्टसहस्रमग्निबीजेनाष्टसहस्रं सप्रणवं जुहोति । अष्टसहस्रं सप्रणवमष्टशतमष्टाविंशतिं वा । मध्यमं जुहोत्यष्टशतमिति कीर्तितम् । स्विष्टकृतात् प्रभृति सिद्धमा धेनुवरप्रदानात् । अथैनं संपातं मूर्ध्नि जुहोति । प्रणवेन नमस्कारान्तं यज्ञवास्तु कुर्वीत । तदस्य( ? ततः सा ) गर्भिणी भवति । एवमुत्पादितपुत्रा न लुप्यन्ते कदाचन ॥

(१) आग्निगृ. २।५।६.

पुत्रप्राप्त्यर्थं जपः अभिषेचनं च

अथ विष्णुं द्वादश्यां भगवन्तमर्चयित्वा सुदर्शनेनाष्टसहस्रं जप्त्वा त्रिः पर्यायमावश्यकः पुत्रो भवतीत्याह पुत्रो भवतीत्याह ।

शैवोकेषु कालेषु नदीषु वा शुद्धजलाशये वा मध्यमेन च पलाशपर्णेन वाऽष्टसहस्रेणाष्टशतेन वाऽष्टाविंशत्या वा ' आपो हि ष्ठा मयोभुवः ' इति तिसृभिः ' हिरण्यवर्णाः शुचयः पावकाः ' इति चतसृभिः ' पवमानः सुवर्जनः ' इत्येतेनानुवाकेनाभिषेचनं कृत्वा गायत्र्याऽष्टसहस्रेणाभिषेचनं करोति । पुरुषसूक्तेन च ' सहस्रशीर्षा पुरुषः ' इत्येतेनानुवाकेन । पुत्रो भवतीत्याह भगवानाग्निवेश्यः ॥

सर्वकामावाप्त्यर्थं नारायणबलिः

'अथातो नारायणबलिं व्याख्यास्यामः । दक्षिणोत्तरायणेऽपरपक्षस्य द्वादश्यां क्रियेत । श्रुतवृत्तसंपन्नान् द्वादश षड् वा ब्राह्मणानामन्त्रयते । देवगृहे नदीतीरे वाऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा उपोत्थायाग्रेणाग्निं ' देवमावाहयामि, ॐ भूः पुरुषमावाहयामि, ॐ भुवः पुरुषमावाहयामि, ॐ स्वः पुरुषमावाहयामि, ॐ भूर्भुवः स्वः पुरुषमावाहयामि, ॐ ' इत्यावाह्य परिधानप्रभृत्याऽग्निमुखात् कृत्वा दैवतमर्चयित्वा 'आपो हि ष्ठा मयोभुवः ' इति तिसृभिः, ' हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः, ' पवमानः सुवर्जनः ' इत्येतेनानुवाकेन मार्ज-

(१) आग्निगृ. ३।११।४.

यित्वा 'सहस्रशीर्षा पुरुषः' इत्येतेनानुवाकेनाक्षतगन्धपुष्पधूपदीपैरष्टाक्षरेण वा दद्यात् ( ? )। पश्चिमां दिशमुपवेश्य प्रधानाहुतीर्जुहोति । 'विष्णोर्नु कं वीर्याणि प्र वोचम्' इति पुरोनुवाक्यामनूच्य 'परो मात्रया' इति याज्यया जुहोति । अथाऽऽज्याहुतीरुपजुहोति-- 'केशवाय स्वाहा' इति द्वादश स्रुवाहुतीः । गुडपायसं घृतमिश्रं 'देवस्य त्वा' इति महाविष्णवे हविर्निवेदयति । 'केशवाय' इति द्वादशभिर्नमस्कारैर्ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषूदङ्मुखानुपवेश्य वासोऽङ्गुलीयं च दक्षिणां दद्यात् । त्रिवृताऽन्नेन ब्राह्मणान् परितोषयति । स्वस्ति वाचयित्वाऽनुज्ञाप्य वाचं यच्छेत् ।

आज्यं तिलं हविः समुदायुत्येडापात्रमानीय हस्तेन जुहुयात्-- 'पितृभ्यः स्वधा नमो विष्णवे स्वाहा । पितामहेभ्यः स्वधा नमो विष्णवे स्वाहा । प्रपितामहेभ्यः स्वधा नमो विष्णवे स्वाहा । मातृभ्यः स्वधा नमो विष्णवे स्वाहा । ( *पितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । प्रपितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । मातामहेभ्यः स्वधा नमो विष्णवे स्वाहा । ) मातुः पितामहेभ्यः स्वधा नमो विष्णवे स्वाहा । ( मातुः प्रपितामहेभ्यः स्वधा नमो विष्णवे स्वाहा । मातामहीभ्यः स्वधा नमो विष्णवे स्वाहा । ) मातुः पितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । ( मातुः प्रपितामहीभ्यः स्वधा नमो विष्णवे स्वाहा । ) आचार्येभ्यः स्वधा नमो विष्णवे स्वाहा । आचार्यपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । गुरुभ्यः स्वधा नमो विष्णवे स्वाहा । गुरुपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । सखिभ्यः स्वधा नमो विष्णवे स्वाहा । सखिपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । ज्ञातिभ्यः स्वधा नमो विष्णवे स्वाहा । ज्ञातिपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । अमात्येभ्यः स्वधा नमो विष्णवे स्वाहा । अमात्यपत्नीभ्यः स्वधा नमो विष्णवे स्वाहा । सर्वेभ्यः स्वधा नमो विष्णवे स्वाहा । सर्वाभ्यः स्वधा नमो विष्णवे स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो विष्णवे स्वाहा' इति । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ।

दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु बलिं ददाति-- 'विश्वेभ्यो देवेभ्यो नमः, साध्येभ्यो देवेभ्यो नमः, सर्वेभ्यो देवेभ्यो नमः, सर्वाभ्यो देवताभ्यो नमः, असाविदं ते नमो ब्राह्मणेभ्यो नमः, नमो ब्रह्मप्रियाय नमः'। यस्तु सर्वान् समधिगच्छति पितृभ्यो नारायणाय बलिं ददाति ॥

## पारस्करगृह्यसूत्रम्

गर्भधारणोपायः दक्षिणनासिकायां सिंहीरससेचनम्

[1]सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि

*अत्र ये कंसस्थिता अंशास्ते आदर्शपुस्तकेऽपि कंसस्थिता एव । तेन ज्ञायते-- तदीयादर्शपुस्तकेषु मातृ-मातामह-मातामहीपार्वणानां वैकल्यं प्रामादिकं मत्वा तत्साकल्यार्थं संपादकेन निवेशिता इति । अत्रेदं विचारणीयम्-- 'तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्यता मातरः प्रोक्ताः' इति चतुर्विंशतिमते मातृशब्दस्य पितामह्यादिसाधारणत्वस्यापि दर्शनात्, 'सप्तावरान्सप्त पूर्वान्पुनाति पितामहानात्मना कर्मभिः स्वैः ।' ( ३।१८६।१६ ) इति महाभारते पितामहशब्दस्य पूर्वजपरत्वस्यापि दर्शनाच्च 'मातृभ्यः' इति मातृपार्वणपरम्, 'मातुः पितामहेभ्यः' इति मातामहपार्वणपरम्, 'मातुः पितामहीभ्यः' इति च मातामहीपार्वणपरमिति सूत्रकारस्य यद्यभिप्रेतं स्याच्चर्हि कंसस्थिता अंशा न निवेशनीया इति ।

(१) पाग्. १।१३।१ ; ब्रक. ८० पुष्प्या (पुष्पाया) मुत्थाप्य चतुर्थेऽहनि ( मुत्खाय चतुर्थ्यां ) ( सहमाना

**स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति-- 'इयमोषधी त्रायमाणा सहमाना सरस्वती। अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभम्॥' इति॥**

(१) सेति शब्देन या सा व्यूढा सोच्यते। यद्यसौ गर्भं न धारयति तर्हि सिंह्याः श्वेतपुष्प्याः, सिंहीति रिङ्गणिकोच्यते कण्टालिकेति लोकप्रसिद्धा, तस्या उपोष्य पुष्येण नक्षत्रेण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां रात्रावुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति 'इयमोषधी त्रायमाणा' इत्यनेन मन्त्रेण। कभा.

(२) सिंही कण्टकारिका। उपवासमूलखननयोः पत्युः कर्तृत्वम्। व्रक. ८०

(३) सा व्यूढा गर्भकामा वा यदि गर्भं नाऽऽदधीत न धारयति तदोपचारः प्रोच्यते। सिंही कण्टकारिकेति यावत्। तस्याः किंभूतायाः? श्वेतपुष्प्याः सितकुसुमायाः मूलं पुष्येण नक्षत्रेण उपोष्य किमप्यभक्षयित्वा उत्थाप्य उत्पाट्य चतुर्थेऽहनि स्नाता चतुर्थस्नाता, तस्यां दक्षिणस्यां नासिकायामासिञ्चति भर्ता 'इयमोषधी' इति मन्त्रेण। † जभा.

(४) उपोष्य पुष्यनक्षत्रदिनात्पूर्वदिने स्वयमुपवासं कृत्वा पुष्येण मूलमुत्थाप्य... यत्नेन स्थापयित्वा ऋतुयुक्ता यदा भार्या भवति तदा चतुर्थेऽहनि स्नातायां... आसिञ्चति......। ततो भर्त्रा भोजनं कार्यमिति गर्गपद्धतौ। मन्त्रार्थः-- ओषति दहति दोषान्, पचे गुणानित्योषधी इयं त्रायमाणा यथोक्तप्रयुक्ता रक्षन्ती सहमाना दोषवेगान् सोढ्वाऽपि नाशयन्तीत्यर्थः। सरति कारणतयाऽनुगच्छति इति सरः समुद्रः, तद्वती तत्संबद्धा। अतः अस्या बृहत्याः महत्याः बृंहयति पुत्रादिदानेन वा तस्याः प्रभावाद्याहं पुत्रः पितुरयमित्यहं नाम जग्रभं गृह्णीयां लभेयं प्राप्नुयाम्, पुत्रस्य पितेति लोकाः कथयन्ति(? नु)। § गभा.

(५) पुष्येण युक्तश्चन्द्रो यस्मिन्दिने तस्मिन्नाप्लाव्येष्टदेवतां स्मृत्वा पुत्रकामः प्राङ्मुख उपविश्य तस्या मूलमुत्थाप्य ...। न च $पिण्डाशनसाधनावरुद्धे एतत्साधनान्वयो न विकल्पमन्तरा व्रीहियवयोरिव, तथा चोभयत्र कथं शास्त्रार्थतेति वाच्यम्, उद्देश्यतया स्वर्गवदेतत्कृत्यसाध्यत्वात् क्रियाभेदाच्च। अत एव पुत्रोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिरेव कारीरीवदेतत्क्रियासाध्या। अत एव प्रचितदुरितशङ्कया हरिवंशश्रवणादेरपि हेतुत्वमिति। न चैत्रं क्रिया(? चैकक्रिया)जन्यापूर्वस्यैव विहितप्रधानजन्यापूर्वतया फलसंपादकाशेषसामग्रीसंपादकतया फलावश्यंभावेनेतरा व्यर्थेति वाच्यम्, अप्रचितदुरितस्थलीयपुत्रलाभस्य तथात्वेऽपि प्रचुरतरदुरितस्थलीयपुत्रोत्पत्तौ स्वतन्त्रक्रियाकदम्बकस्य हेतुत्वादिति। ¶ विभा.

## कौशिकगृह्यसूत्रम्

गर्भधारणोपायः शिरोवसेचनम्

**[1] 'इदं जनासः' इत्यस्यै शिंशपाशाखासुदकान्ते शान्ता अधिशिरोऽवसिञ्चति॥**

---

† हमा., आन. जभागतम्।

......जग्रभम्०) इति (इत्यादिना); जभा. न दधीत (नाऽऽदधीत) चतुर्थेऽहनि स्ना (चतुर्थस्ना); स्मृसा. १ (सा यदि गर्भं नाऽऽदधीत सिंह्याः श्वेतपुष्पायाः पुष्येण मूलमुत्खाय चतुर्थेऽहनि स्नातायां निशा उदपेशं पिष्ट्वा दक्षिणायां नासिकायामासिञ्चतीयमोषधीं च त्रायमाणेत्यादिना); निप. २३१ (=) दधीत (दधाति) पुष्प्या (पुष्पाया) चतुर्थेऽहनि स्ना (चतुर्थीस्ना) (अस्या...जग्रभम्०); आत. ४६४ न दधीत (नाऽऽदधीत निर्दिग्धिकायाः) पुष्प्या (पुष्पाया) मुत्थाप्य (मुद्धृत्य) पेषं (केन) सिञ्चति (सिञ्चतीति) (बृहत्याः०) जग्रभम् (जनयत्यभितः); संप्र. १६३ व्रकवत्; विपा. २५०-२५१ दधीत + (तदा) चतुर्थेऽहनि (चतुर्थ्यां) इति + (मन्त्रेण).

§ शेषं जभागतम्।

$ विण्डपितृयज्ञे मध्यमपिण्डाशनं पुत्रोत्पत्तिसाधनमुक्तम्।

¶ शेषं गभागतम्।

(१) कौसू. ३४।१-११.

**( उक्तम् ) आव्रजितायै ॥**

अथ वन्ध्याप्रजननकरणमुच्यते । ततो गृहे पुरोडाशं प्रमन्दं कटुपा अलंकारान् संपात्य प्रयच्छति ।

दाकेटी.

मृतापत्यात्वहरा शान्तिः

**'निःसालाम्' इत्यवतोकायै कृष्णवसनायै त्रिषु विमितेषु प्राग्द्वारप्रत्यग्द्वारेष्वप्सु संपातानानयति ॥**

**पलाशे सीसेषूत्तरान् ॥**

**सीसान्यधिष्ठाप्याऽऽप्लावयति ॥**

**निधाय कृष्णं व्रजति ॥**

**आदीप्य ब्रह्मा ॥**

**एवं पूर्वयोः पृथक् संभार्ये ॥**

**शाखासूक्तम् ॥**

**पश्चादग्नेरभितः काण्डे इषीके निधायाऽध्यधि धायिने औदुम्बरीराधापयति ॥**

**उक्तमाव्रजितायै ॥**

अथ मृतापत्यायाः स्त्रियस्तस्याः शान्तिरुच्यते । गर्भस्रावे जातमात्रे मृते वा स्त्रियां वा पुरुषे वा बाले वा यूनि वा मृते इदं कर्म । त्रीणि मण्डपानि प्राक्काराणि कृत्वा एकस्मिन् मण्डपे अभ्यातानान्तं कृत्वा । ( पलाशे ) पालाशपत्रे । सीसेषूपरि स्त्रीमधिष्ठाप्य तेनोदपात्रेणाऽऽप्लावयति । प्राक्पश्चिमद्वारेषीकं द्वार्योरुपरि बद्ध्वा ततो 'निःसालाम्' इति सूक्तेनौदुम्बरीः समिधः मृतापत्यायै आदधाति ।

दाकेटी.

गर्भवर्धनं ज्याबन्धनादि

**(१)'ऋधङ्मन्त्रः' इत्येका 'यथेयं पृथिवी, अच्युता' इति गर्भदृंहणानि ॥**

**जम्भगृहीताय प्रथमावर्जे ज्यां त्रिरुदूग्रथ्य बध्नाति ॥**

**लोष्टानन्वृचं प्राशयति ॥**

(१) कौसू. ३५।१२–१९.

**श्यामसिकताभिः शयनं परिकिरति ॥**

वीरजननमुदराभिमन्त्रणम्

**यामिच्छेद्वीरं जनयेदिति धातर्व्याभिरुदरमभिमन्त्रयते ॥**

अथ गर्भदृंहणमुच्यते । 'अच्युता द्यौः' इति । 'धाता दधातु' इति चतसृभिर्गर्भिण्या उदरमभिमन्त्रयते । वीरकर्म समाप्तम् ।

दाकेटी.

गर्भधारणोपायः उपस्थहोमादिः

**'प्रजापतिः' इति प्रजाकामाया उपस्थे जुहोति ॥**

**लोहिताजापिशितान्याशयति ॥**

**प्रपान्तानि ॥**

अथ प्रजननकर्म । 'प्रजापतिर्जनयति' इति सूक्तेन । उदकुलिजं संपातवन्तं कृत्वा गर्भिणीं परिहृत्य मध्ये निनयति । सुरा कुलिजं...भक्तं सुरां प्रपां संपात्याभिमन्त्र्य प्रजाकामायै प्रयच्छति । समाप्तं प्रजागर्भकर्म वन्ध्यायाः ।

दाकेटी.

## †बैजवापगृह्यसूत्रम्

गर्भधारणोपायः सिंहीरससेचनं दक्षिणनासिकायाम्

**(१)सा यदि नाऽऽदधीत सिंह्याः श्वेतपुष्पाया उपोष्य पुष्येण मूलमुत्खाय चतुर्थ्यां स्नातायां निशि प्राजापत्यं स्थालीपाकं श्रपयित्वा प्रजापतये हुत्वा पश्चादग्नेर्वीरशयने प्राचीमुत्तानां संवेश्य चत्वाभ्यामोषधीमुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायां नस्तः कुर्यात्– 'इयमोषधी त्रायमाणा' इति ॥**

वीरं शयनम् अनन्तर्हिता भूमिः । संवेश्य शाययित्वा । चत्वाभ्यां दृषदुपलाभ्याम् । नस्तः नासिकारन्ध्रे ।

ब्रक. ८०

† गृह्यसूत्रत्वेनानिर्देशेऽपि पारस्करगृह्यसूत्रसादृश्याद्गृह्यसूत्रत्वेन संगृहीतम् ।

(१) ब्रक. ८० मुत्खाय ( मुत्थाप्य ) बैजवापः ; संप्र. १६६ बैजवापः .

## गौतमः

गर्भधारणोपायः क्षीरवृक्षाङ्कुरकल्कयुतपयःपानम्

[1]क्षीरवृक्षाङ्कुरं गृह्य पेषयित्वा पयः पिबेत् ।
दैवोदरकृतो दोषो विनश्यति सुतं लभेत् ॥

(१) दैवम् अदृष्टम्, उदरं गर्भः । तत्कृतः तज्जन्यः दोषः नश्यतीत्यर्थः । विपा. २४९

(२) क्षीरवृक्षाङ्कुरः वटाङ्कुरः । संर. ७६६

## वृद्धगौतमः

विषेण बालकहननं गर्भस्रावनिमित्तम्

[2]स्रवद्गर्भा भवेत्सा तु बालकं हन्ति या विषैः ॥

## वृद्धहारीतः

गर्भधारणोपायः नारायणबलिः

[3]विशिष्टं परमं धर्मं नारायणबलिं ततः ॥
प्रकुर्याद्वैष्णवैः सार्धं यथाशास्त्रमतन्द्रितः ।
निमन्त्रयेत्तु पूर्वाह्णे ब्राह्मणान् वैष्णवाञ्छुभान् ॥
चतुर्विंशतिसंख्याकान् महाभागवतोत्तमः ।
केशवादीन् समुद्दिश्य चतुर्विंशतिसंख्यकान् ॥
रात्रौ निमन्त्र्य चोद्दिश्य केशवादीनतन्द्रितः ।
प्रातरुत्थाय ते सर्वे गत्वा पुण्यां नदीं शुभाम् ॥
धात्रीफलानुलिप्ताङ्गो निमज्ज्य विमले जले ।
जपन् वै वैष्णवान् सूक्तान् स्नानं कुर्वीत तैर्द्विजैः ॥
वैकुण्ठतर्पणं कुर्यात् कुसुमैः सतिलाक्षतैः ।
गृहं गत्वाऽर्चयेद्देवं सर्वावरणसंयुतम् ॥
सुगन्धपुष्पैर्विविधैर्गन्धैर्धूपैश्च दीपकैः ।
नैवेद्यैर्भक्ष्यभोज्यैश्च फलैर्नीराजनैरपि ॥
अर्चयित्वा विधानेन मूलमन्त्रेण वैष्णवः ।
पुरतोऽग्निं प्रतिष्ठाप्य इध्माधानं समाचरेत् ॥
चरुं सशर्कराज्यं तु जुहुयाद्वह्निमण्डले ।
प्रत्यृचं जुहुयान्मन्त्रैर्वैष्णवैः केशवादिभिः ॥
हुत्वा तु वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम् ।
गवाज्येनैव जुहुयाच्चतुर्भिर्वैष्णवोत्तमः ॥
वैकुण्ठपार्षदं हुत्वा होमशेषं समापयेत् ।
अग्नेरुत्तरभागे च गोमयेनानुलिप्य च ॥
आस्तीर्य दर्भान् प्रागग्रांश्चतुर्विंशतिसंख्यया ।
उदक्प्रावणिकेनैव केशवादीन् क्रमेण तु ॥
अभ्यर्च्य गन्धपुष्पाद्यैस्तत्तन्मन्त्रैर्यथाक्रमम् ।
मध्वाज्यतिलमिश्रेण चरुणा पायसेन वा ॥
कुशेषु तेषु दद्यात्तु पिण्डांस्तीर्थे तु दैवते ।
स्वाहाकारेण मनसा केशवादीन् क्रमेण वै ॥
दत्त्वा पिण्डान् समभ्यर्च्य गन्धपुष्पाक्षतोदकैः ।
नित्येभ्यश्चैव मुक्तेभ्यो वैष्णवेभ्यस्तथैव च ॥
दद्यात् पिण्डत्रयं पश्चात्तेषां दक्षिणतः क्रमात् ।
विष्णोर्नुकेति सूक्तेन उपस्थाय समाहितः ॥
प्रदक्षिणं नमस्कारं कृत्वा भक्त्याऽथ वैष्णवः ।
पिण्डांस्तु सलिले दत्त्वा स्नात्वा संपूज्य केशवम् ॥
ब्राह्मणान् भोजयेत् पश्चात् पादप्रक्षालनादिभिः ।
केशवादीन् समभ्यर्च्य नित्यान्मुक्तांश्च वैष्णवान् ॥
संपूज्य विधिवद्भक्त्या महाभागवतोत्तमान् ।
पायसं सगुडं साज्यं शुद्धान्नं पानकैः फलैः ॥
संभोज्य विप्रानाचान्तान् प्रणिपत्य विसर्जयेत् ।
हविष्यं च सकृद्भुक्त्वा भूमौ स्वप्यात् कुशोत्तरे ॥
अयं नारायणबलिर्मुनिभिः संप्रकीर्तितः ।
स्वर्गस्थानां च सर्वेषां कर्तव्यो वैष्णवोत्तमैः ॥
अलाभेषु तु विप्रेषु वैष्णवेष्वप्य(? पि)शक्तितः ।
सर्वं कृत्वा विधानेन जपहोमार्चनादिकम् ॥
केशवादीन् समुद्दिश्य नित्यान्मुक्तांश्च वैष्णवान् ॥

---

(१) प्रपा. १६१ क्षीरवृ ( जीवद्र ) दरकृ ( ऽप्यत्र कृ ); संप्र. २०४ वृक्षा ( द्राक्षा ); विपा. २४९ संप्रवत्; संर. ७६५ दैवो ( देवो ) सुतं (शुभं) व्यासः.

(२) विपा. १३०, २३६.

(३) बृहास्मृ. ९।१२३-१५१.

एकं तु भोजयेद्विप्रं महाभागवतोत्तमम् ।
श्रुतिस्मृत्युदितं धर्मं विशिष्टाद्यः समाचरेत् ॥
वैष्णवं परमं धर्मं महाभागवतोत्तमम् ।
तस्मिन् संपूजिते विप्रे सर्वं वै पूजितं जगत् ॥
हरिश्च देवताश्चैव पितरश्च महर्षयः ।
तस्मिन् संपूजिते विप्रे तुष्यन्त्येव न संशयः ॥
अर्चनं मन्त्रपठनं ध्यानं होमश्च वन्दनम् ।
मन्त्रार्थचिन्तनं योगो वैष्णवानां च पूजनम् ॥
प्रसादतीर्थसेवा च नवेज्याकर्म उच्यते ।
पञ्चसंस्कारसंपन्नो नवेज्याकर्मकारकः ॥
आकारत्रयसंपन्नो महाभागवतोत्तमः ।
श्राद्धानामप्यलाभे तु एकं नारायणं बलिम् ॥
कुर्वीत परया भक्त्या वैकुण्ठपदमाप्नुयात् ॥

## बौधायनः

वन्ध्यात्वस्य औषध–मन्त्रप्रयोगाभ्यामवश्यपरिहार्यता

[1]तस्माद्यत्नवान् प्रजामुत्पादयेत् ॥
[2]औषधमन्त्रसंयोगेन ॥

(१) 'प्रजामुत्पादयेदौषधमन्त्रसंयोगेन' इति बौधायनोक्तेः पुंसः स्त्रिया अपि वैद्यशास्त्राद्युक्तान्यौषधानि भक्ष्याणि, मन्त्रादिप्रयोगाश्च स्मृतिपुराणाद्युक्ताः कार्याः, पुत्रप्रदव्रतदानादीन्यपि कार्याणि । गप. ४६७

(२) ओषधिसंयोगेन हि प्रजा भवति, शुक्रपानां क्रिमीणामपनयनात् । तथा मन्त्रसंयोगेनापि, रक्षः-पिशाचाद्यपनयनात् । 'तस्माद्यत्नवान् प्रजामुत्पादयेत्' इत्यस्य विस्तरः । बौवि.

(३) यदि संयोगे सत्यपि प्रजोत्पादनं न भवति तदौषधसंयोगमन्त्रसंयोगावपि कर्तव्यौ । संयोगः प्रयोगः । संर. ४०५

(१) बौध. २।१६।११ ; व्रक. ७९ (तस्माद्यत्नवान्० ) ; गप. ४६७ व्रकवत् ; संप्र. १६६ व्रकवत् ; मुक्ता. १६७ ; संर. ४०३ द्यत्न ( दात्म ).

(२) बौध. २।१६।१२ ; व्रक. ७९ संयो (यो); गप. ४६७ ; संप्र. १६६ व्रकवत् ; संर. ४०४.

पुत्रपौत्रादिप्राप्तिफलकः सर्पसंस्कारविधिः

¶ [1]अथातोऽनन्तादिनाशने सर्पसंस्कारविधिं व्याख्यास्यामः । स च दक्षिणोत्तरयोरमावास्यायां

---

¶ कर्मेदं लोके निबन्धेषु च 'नागबलिः' इति समाख्यायते नारायणबलिना सहैवानुष्ठीयते च । वस्तुतो बौधायनीये शौनकीये च प्राधान्येन दूरत एव, अङ्गत्वेनापि बलिर्नोक्तः । अत एव यद्यप्यनिर्दिष्टकर्तृकवचने बलिरुक्तः कौस्तुभकारेणापि प्रयोगे संगृहीतश्च, तथापि स ग्रहमखादाविव सर्पसंस्काराङ्गमेवेति प्रतिपद्यामहे । नाप्यस्य नारायणबलिसंनियोगशिष्टत्वम्, येनाव्यभिचारेण नारायणबलिना सहैवानुष्ठीयताम् । यस्तु नारायणबलिसंनियोगशिष्टो बलिकर्मप्रधानो नागबलिराश्वलायनगृह्यपरिशिष्टे विहितः सोऽस्मात्सर्पसंस्कारात्कर्मान्तरम् । स नागबलिः संवत्सरसाध्यः सर्पकर्तृकस्वकुलपुरुषहनननिमित्तकः सर्पहतस्यौर्ध्वदेहिके संप्रदानत्वयोग्यतायाः संपादकश्च, अयं सर्पसंस्कारस्तु चतुःपञ्चदिनसाध्यः स्वकर्तृकसर्पहनननिमित्तक आयुरारोग्यपुत्रप्राप्त्याद्यनेकफलश्चेत्युभयोर्महान् भेदः । एवमस्य सर्पसंस्कारस्य सर्पहतेन सह संबन्धाभावेऽपि शौनकीयसर्पसंस्कारं संगृह्णता कौस्तुभकारेण 'प्रतिबन्धकप्रेतोपद्रवनिवृत्त्यै नारायणबलिनागबली कार्यौ' इति, 'एवं नागबलिं कृत्वाऽजातौर्ध्वदेहिकतया निर्णीतस्य तत्कार्यं गयाश्राद्धं च । अतादृशस्य गयाश्राद्धमेव कार्यम्' इति च यदुक्तं तच्चिन्त्यम् । तथा नारायणबलेः सर्पसंस्कारसंनियोगशिष्टत्वाभावेऽपि, किं बहुना ! शौनकीये सर्पसंस्कारात्परमभ्युदयश्राद्धादीनि षट् प्रकरणानि पठित्वा तदुत्तरं नारायणबलेः पठितत्वात् तयोरव्यवहितपाठाभावेऽपि रत्नमालाकारेण नारायणबलिप्रकरणे 'तत्र यद्यपि बौधायनसूत्रस्यैव यजुर्वेदिनामभ्यर्हितत्वेन ग्राह्यत्वं तथापि नागबलिसूत्रस्येदानीमत्रानुपलम्भाद्बह्वृच एव नागबलिप्रयोगः प्रदर्श्यते । बौधायनोक्तनारायणबलिविधिसत्त्वेऽपि संनियोगशिष्टत्वात् बाह्वृच एवोच्यते । बौधायनसूत्रोक्तरीत्या क्रियमाणे त्वर्धजरतीयन्याय आपद्येतेति' इति यदुक्तं तदपि चिन्त्यमेव ।

इदं च प्रासङ्गिकमत्रावधेयम्– हिरण्यकेशिगृह्यशेषसूत्रे नारायणबलिविधानसत्त्वेऽपि बौधायनसूत्रस्यात्रोल्लेखात्, एवमन्यत्रापि सर्वत्र तत्तद्विषयकहिरण्यकेशिशेषसूत्रसत्त्वेऽपि बौधायनसूत्रस्यैवोल्लेखात् हिरण्यकेशिसूत्रिणो रत्नमालाकारस्य हिरण्यकेशिशेषसूत्रं नोपलब्धं वा, प्रायो बौधायन-

(१) विपा. २३१–२३५.

पौर्णमास्यां वा पञ्चम्यां वाऽश्लेषानक्षत्रे वा प्रक्रियते। तत्र कृतसर्पवधो विप्रः पूर्वेद्युः सचेलं स्नात्वोपोष्य परेद्युर्वपनादिकं कृत्वा शुचौ देशे गोमयेनोपलिप्य प्रस्थद्वयपरिमितेन प्रियङ्गुव्रीहिगोधूमतिलयवानामन्यतमपिष्टेन सर्पाकृतिं कृत्वा नवशूर्पे निधाय 'अनन्ताय काश्यपगोत्राय प्राणप्रतिष्ठां करिष्ये' इति संकल्प्य 'ओं तत्ते पदम्' इति पूर्वोक्तया ऋचोच्चैः प्राणप्रतिष्ठां कृत्वा 'भुजगेशाय विद्महे सर्पराजाय धीमहि। तन्नो नागः प्रचोदयात्॥' इत्यभिमन्त्र्य 'असुनीते' इति सूक्तद्वयेन व्याहृत्या च पञ्चगव्येन स्नापयित्वा 'आपो हि ष्ठा' इति नवर्चेन प्रोक्ष्य 'नमोऽस्तु सर्पेभ्यः' इति तिसृभिर्ऋग्भिर्नागं संस्पृश्य जपित्वा गायत्र्याऽभिषिच्य गन्धाक्षतादिभिरभ्यर्च्य नवसूत्रेण परिवेष्ट्य तत्रैक्यात्सर्पं भावयेत्।

अथ वेदविदो ब्राह्मणानाहूय तत्पुरतो ब्रह्मदण्डं धृत्वा संकल्पमुच्चार्य 'मम पूर्वजन्मनि इह जन्मनि वा ज्ञानेन वाऽज्ञानेन वा मनोवाक्कायकर्मभिर्नागहननजनितदोषनिबर्हणद्वारा शरीरपीडादारिद्र्यानपत्यत्वादिदोषनिवृत्तिपूर्वकमायुष्मत्सुगुणानेकपुत्रपौत्राद्यभिवृद्ध्यर्थं बौधायनकल्पोक्तप्रकारेण सर्पसंस्कारकर्माहं करिष्ये' इति संकल्प्य 'अत्र मे प्रायश्चित्तमुपदिशन्तु भवन्तः' इति ब्रूयात्। तत्रैष श्लोको भवति— 'वधं प्रख्यापयेत्पापी चरेत्कृच्छ्रांश्चतुर्दश। दद्यात्पापविशुद्ध्यर्थं लौहदण्डं द्विजातये॥' इति। साक्षाद्वधकर्तुरेतत्, 'निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसम्। अनुमत्यादिकर्तॄणां निष्कमर्धं तदर्धकम्। वित्तशाठ्यं न कुर्वीत दद्याद्वित्तानुसारतः॥' इति वचनात्। ब्राह्मणेभ्यो वित्तानुसारतो दक्षिणां दत्त्वा 'कृतप्रायश्चित्तोऽसीति भवन्तो ब्रुवन्तु' इति त्रिर्वाचयित्वा लौकिकाग्निमुपसमाधाय चाऽऽधानं कुर्यात्। 'अस्मिन्नन्वाहिते अग्नौ' इत्यादि 'चक्षुषी आज्येन' इत्यन्तमुक्त्वा 'चितावग्निं वायुं सूर्यं नागमुखे समस्तया व्याहृत्या चतुर्गृहीतेनाऽऽज्येन चितौ नागशरीरे हविःशेषेण स्विष्टकृतम्' इत्यादिना 'सद्यो यक्ष्ये। भूर्भुवः स्वः स्वाहा, प्रजापतय इदं न मम' इत्यन्तेन जुहुयात्। ततोऽग्नेराग्नेयदिग्भागे भूशुद्धिं कृत्वा संप्रोक्ष्य चितिं कृत्वा कुशैराग्नेयवायव्याग्रैश्चितिं परिस्तीर्य स्थापयेत्। ततोऽग्नेः परिसमूहनादि चक्षुष्म(? ष्य) न्तं हुत्वाऽष्टोत्तरशतमष्टाविंशतिं वा व्याहृतिभिराज्यं हुत्वा 'नमोऽस्तु सर्पेभ्यः' इति पूर्वोक्ताभिस्तिसृभिश्च हुत्वा 'सर्पोऽनन्तस्तथा शेषः कालियो नाग एव च। कपिलः शङ्खपालश्च भूधरश्च तथाऽष्टमः॥' इति चतुर्थ्यन्तैरष्टभिर्नाममन्त्रैश्च हुत्वा होमशेषं समाप्य 'आऽयं गौः' इति चितिं प्रोक्ष्य 'क्रव्यादमग्निम्' इति सर्पगायत्र्या च 'अनन्ताय काश्यपसगोत्राय अयं तेऽग्निरुपतिष्ठताम्' इति सर्पशरीरेऽग्निं दत्त्वा स्रुवेण स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा समस्ताभिर्व्याहृतिभिः सर्पास्ये हुत्वाऽऽज्यशेषं स्रुवेण सर्पदेहे निषिच्य 'दन्दशूकेभ्यः स्वाहा' इति त्यागं कृत्वोदकुम्भजलैस्त्रिः परिभ्रमन् प्रदक्षिणं कृत्वा चितिसमीपे कुम्भं स्फोटयित्वाऽपः स्पृष्ट्वा च प्रार्थयेत् 'नमोऽस्तु सर्पेभ्यः' इति पूर्वोक्ताभि-

---

शेषसूत्रसमानानुपूर्वीकस्य तस्य हिरण्यकेश्युपज्ञत्वं नाभिमतं वेति संशोधकैर्निर्णेयमिति।

योऽयमत्र बौधायनीयः सर्पसंस्कारो विधानपारिजातादत्र संगृहीतस्तस्यार्थतो बौधायनीयत्वे सूपगमेऽपि शब्दतस्तदीयत्वे संशेमहे, 'बौधायनकल्पोक्तप्रकारेण' इति संकल्पेऽभिलापात् भाषायाः क्वचिदनार्षत्वप्रतीतेश्च। किंच, कौस्तुभकारेण 'एकरात्रमाशौचम्' इति बौधायनमतमुक्तम्, अत्र तु त्रिरात्रमाशौचमुपदिष्टमिति विरोधोऽपि प्रतीयते।

स्तिसृभिः सर्पगायत्र्या च । ततः 'ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया । संस्कारं कुर्वतो भक्त्या मम दोषः प्रणश्यतु ॥' इत्युक्त्वा ततो नागशरीरं सुतरां दाहयित्वा तद्भस्म व्याहृतिभिः संप्रोक्ष्योदके प्लावयित्वाऽऽचामेत् । एतावदुपवीतिना कार्यम् ।

अथ प्राचीनावीती वेदिं निर्माय तत्र तिस्रः शलाका निक्षिप्याञ्जनाभ्यञ्जनस्नानवस्त्रयज्ञोपवीतगन्धाक्षतैस्ताः शलाका अभ्यर्च्य दक्षिणाग्रान् दर्भानास्तीर्य 'अनन्ताय काश्यपसगोत्राय एतत्तिलोदकमुपतिष्ठताम्' इति त्रीनुदकाञ्जलीन् दत्त्वा प्रियङ्गुयवादिपिष्टनिर्मितांस्त्रीन्पिण्डान्दत्त्वा पिण्डोपरि तिलोदकं दद्यादित्येके । ततो यथाशक्ति चतुर्विधप्रायश्चित्तं कुर्यात् । ततः शुद्धस्नानं कृत्वा वस्त्रं परिधाय गृहमागत्याधःशयनब्रह्मचर्यहविष्याशनादीनि कुर्वंस्त्रिरात्रमशुचिः स्यात् । ततश्चतुर्थेऽहनि सचेलं स्नात्वा पुण्याहं वाचयित्वाऽष्टौ ब्राह्मणानष्टभिः पूर्वोक्तसर्पनामभिरामन्त्र्य गन्धपुष्पधूपदीपाच्छादनैरभ्यर्च्य परमान्नैर्नानाविधैर्भक्ष्यैश्च भोजयेत् । ततो यथाशक्ति दक्षिणां दद्यात् । एवं कृते विधानेन सर्पसंस्कारकर्मणि । सर्पहिंसाकृता पीडा नश्यते नात्र संशयः ॥ कुष्ठव्याधिविनिर्मुक्तः पुत्रपौत्रादिमान् भवेत् । आयुरारोग्यमैश्वर्यं प्राप्नुयान्नात्र संशयः ॥ इति । अथ 'नागः प्रीयताम्' इत्याशिषो वाचयित्वा बन्धुभिः सह भुञ्जीत । एवं कृते नागपीडापरिहारो भविष्यतीत्याह भगवान् बौधायनः ॥

सं. का. ३०८

## वसिष्ठः

गर्भरक्षार्थं प्रतिगर्भमासं मासपग्रहशान्तिः, गर्भमासपा ग्रहाः, पुत्रार्थं कर्णिकामूलकल्कयुतपयःपानम्

[1]मासे मासे मासपादिग्रहाणां
शान्तिं कुर्याच्छान्तिवाक्यैर्जपैश्च ।
होमैर्दानैः सज्जनानां च वाक्यै-
र्गर्भं सम्यग्रक्षयेत्पुत्रकामी ॥

[2]सितावनेयामरपूज्यसूर्य-
चन्द्रार्किसूर्यो(? सौम्यो)दयपेन्दु-
सूर्याः ।
मासाधिपाः स्युः क्रमशो दशैते
निपीडितो नाशयति स्वमासि ॥

[3]मासेश्वराः सितकुजेज्यरवीन्दुसौर-
चन्द्रात्मजास्तनुपचन्द्रदिवाकराः
स्युः ॥

[4]उत्तमं कर्णिकामूलं पेषयित्वा पयः पिबेत् ।
पायसान्नं समश्नीयात् पुत्रिणी सहसा भवेत् ॥

कर्णिका गोकर्णी । संर. ७६६

## वैखानसः

पापमृतानां प्रेतत्वनिवृत्त्यर्थं सपिण्डीकरणस्थाने कर्तव्यो नारायणबलिः

[5]नारायणबलिं नारायणादेव सर्वार्थसिद्धिरिति ब्राह्मणाद्यैर्नरैर्हतस्याऽऽत्मघातिनो रज्जु-

(१) वसं. २५।५ ; संसौ. ३९ पादि (नाथ) वाक्यैर्ज (सूक्तैर्ज) पराशरः ; ज्योनि. १११ ; संग. ४२१.

(२) वसं. २५।१०.

(३) संग. ४२१.

(४) प्रपा. २६१ ; संप्र. २०३ ; विपा. २४९ पयः (ततः) ; संर. ७६६ तृतीयपादे (सा पायसान्नं नाश्नीयात्) व्यासः .

(५) वैध. ३।९–१०.

शस्त्रोदकाशनिदंष्ट्रिपशुसर्पादिभिः सर्वपापमृतस्यादाह्यानामन्येषां भिक्षोश्चैकादशादिनादूर्ध्वं महापातकिनां पश्चानां द्वादशसंवत्सरादूर्ध्वं सपिण्डीकरणस्थाने मृतकार्थमपरपक्षे द्वादश्यां श्रवणे वा करोति। पूर्वेऽहनि द्वादश ब्राह्मणानिमन्त्रयेत्। अपरेऽहनि विष्णोरालयपार्श्वे नदीतीरे गृहे वाऽन्यायतनं कृत्वाऽऽघारं जुहुयात्। अग्निं परिस्तीर्याग्नेर्वायव्यां विष्टरे दर्भेषु तद्रूपं सुवर्णं वा संस्थाप्य पुरुषं ध्यायन् 'ओं भूः पुरुषम्' इत्याद्यैः प्राङ्मुखं देवं नारायणमावाह्याऽऽसनपाद्याचमनानि दद्यात्। पुरुषसूक्तेन स्नापयित्वा 'नारायणाय विद्महे' इत्यष्टाक्षरमन्त्रेण वा वस्त्रोत्तरीयाभरणपाद्याचमनपुष्पगन्धधूपदीपाक्षताचमनैरर्चयति॥

केशवाद्यैर्द्वादशनामभिरद्भिस्तर्पयेत्। अग्निं परिषिच्य सहस्रशीर्षाद्यैर्विष्णोर्नुकाद्यैर्द्वादशनामभिश्चाऽऽज्यं चरुं जुहुयात्। गुडाज्यफलयुक्तं पायसं हविर्विष्णुगायत्र्या देवेशाय निवेद्य पाद्याचमनमुखवासं दद्यात्। अग्नेर्दक्षिणे दर्भेषूत्तराग्रेषु दक्षिणाद्यर्चयित्वा 'नारायणाय सहस्रशीर्षाय सहस्राक्षाय सहस्रपादाय परमपुरुषाय परमात्मने परंज्योतिषे परब्रह्मणेऽव्यक्ताय सर्वकारणाय यज्ञेश्वराय यज्ञात्मने विश्वेभ्यो देवेभ्यः सर्वाभ्यो देवताभ्यः साध्येभ्यः' इत्येतैर्नम इत्यन्तैः पायसं बलिं दत्त्वाऽऽज्यमेभिर्जुहोति। ब्राह्मणान् पादौ प्रक्षाल्य नवानि वस्त्रोत्तरीयाभरणानि दत्त्वा पुष्पाद्यैः पूजयित्वा द्वादशमूर्तिं ध्यायन्नुपदंशघृतगुडदधिफलयुक्तं श्वेतमन्नं भोजयित्वा यथाशक्ति सुवर्णं दक्षिणां ददाति। सहस्रशीर्षाद्यैः स्तुत्वा द्वादशनामभिः प्रणमेत्। अन्तहोमं जुहोति। अभीष्टां परां गतिं स गत्वा विष्णोर्लोके महीयते॥

## व्यासः

पुत्रार्थम् अङ्कोलकल्कगुडभक्षणं सुदर्शनमन्त्रजपश्च

[1]अङ्कोलमूलकल्कं तु चूर्णीकृत्य गुडेन युक्।
काकाण्डमितमश्नीयात् पुत्रिणी सा भविष्यति॥

[2]सुदर्शनं महामन्त्रं शुचिर्भूत्वा समाहितः।
नित्यमष्टोत्तरशतं जपन् पुत्रं लभेत्सुखम्॥

## गोभिलः

गर्भधारणार्थं नस्यम्

[3]नस्यं दधाति दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा प्राक्शिरःसंविष्टायाः॥

## शातातपः

बालकहननमनपत्यात्व-मृतवत्सात्वनिमित्तम्, तद्दोषहरं दोलायुतसौवर्णबालकस्य वस्त्रद्वययुतानडुहश्च दानम्

[4]हन्ति वै बालकं सुतं त्वसंजातं(?) च मूलजम्।
तेन सा जायते वन्ध्या मृतवत्सा च मारकी॥

[5]तत्पातकविनाशाय तथा कार्यं प्रयत्नतः।
सौवर्णं बालकं कृत्वा दद्याद्दोलासमन्वितम्॥

[6]अनड्वाहं ततो दद्याद्वस्त्रद्वयसमन्वितम्।
तत्पातकविनिर्मुक्ता पश्चाद्भवति पुत्रिणी॥

---

(१) प्रपा. १६१ कृत्य (कृत्वा) सा (च); संप्र. २०३; विपा. २४९ मूलकल्कं तु (मूलं कल्कं च) सा (च); संर. ७६५ द्वितीयपादे (चूर्णयेद्गुडसंयुतम्) सा भविष्यति (सहसा भवेत्).

(२) प्रपा. १६१; विपा. २४९.

(३) आत. ४६४ गोभिलस्मरणम्.

(४) शास्मृ. २।२६ हन्ति (हतं) त्वसं (स्वसा) सा जा (संज्ञा); संकौ. ५३ (=).

(५) शास्मृ. २।२७ तथा (यथा); संकौ. ५३ (=).

(६) शास्मृ. २।२८; संकौ. ५३ (=).

बालहननं पुरुषमृतवत्सत्वनिमित्तम्, तद्दोषहरं ब्राह्मणोद्वाहनं हरिवंशश्रवणं महारुद्रजपः दशांशहोमश्च

[1]बालघाती च पुरुषो मृतवत्सः प्रजायते ॥

[2]ब्राह्मणोद्वाहनं चैव कर्तव्यं तेन शुद्धये ।
श्रवणं हरिवंशस्य कर्तव्यं च यथाविधि ॥

[3]महारुद्रजपं चैव कारयेच्च यथाविधि ।
षडङ्गैकादशै रुद्रै रुद्रः समभिधीयते ॥
रुद्रैस्तथैकादशभिर्महारुद्रः प्रकीर्तितः ।
एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते ॥

[4]जुहुयाच्च दशांशेन पूर्वोक्ताज्याहुतीस्तथा ।
एकादश स्वर्णनिष्काः प्रदातव्याश्च दक्षिणाः ॥

[5]पलान्येकादश तथा दद्याद्वित्तानुसारतः ।
अन्येभ्योऽपि यथाशक्ति द्विजेभ्यो दक्षिणां दिशेत् ॥

[6]स्नापयेद्दम्पती पश्चान्मन्त्रैर्वरुणदैवतैः ।
आचार्याय प्रदेयानि वस्त्रालंकरणानि च ॥

ब्राह्मणोद्वाहनं चैव इत्यादिना ब्राह्मणोद्वाहनस्य पापविमुक्तिहेतुत्वमभिधानादेतत्स्वतन्त्रतया निष्कृतिः । 'तेन शुध्यति' इत्येतत् काकाक्षिगोलकवदुभयत्र संबध्यते । अतः 'श्रवणं हरिवंशस्य' इत्युत्तरवाक्यस्यापि तेन शुध्यति इत्ययं शेषः । तथा च हरिवंशश्रवणं द्वितीया निष्कृतिः । ततश्च ब्राह्मणविवाह एकं प्रायश्चित्तम्, द्वितीयं हरिवंशश्रवणम्, तृतीयं महारुद्रजप इति । एतानि त्रीण्यपि शक्त्याद्यपेक्षया समस्तानि व्यस्तानि वा योज्यानि । महारुद्रलक्षणं दशांशहोमप्रकारोऽपि अग्रे वक्ष्यते । एकादश पशूंश्चेति पशवोऽत्र गावो ग्राह्याः, 'रुद्राय गाम्' इति श्रुतेः । वरुणदेवतामन्त्राः 'कस्य नूनं कतमस्यामृतानाम्' इत्येवमादयः स्वस्वशाखोक्ता वारुणमन्त्रा ज्ञेयाः । विपा. २०२, २०५

विप्रबालकहननं मृतापत्यत्वनिमित्तम्, तद्दोषहरं हैमवृष–शर्कराधेनुदानं द्विजशतभोजनं च

[1]विप्रस्य बालकं हत्वा संहृतं रत्नकाञ्चनम् ।
तेनैव जायते मृत्युः पुत्राणां च पुनः पुनः ॥

तेन कर्म विनाशाय कार्यं तेनैव यत्नतः ।
वृषो हैमेन संयुक्तो दातव्यो वस्त्रसंयुतः ॥
दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान् ॥

विप्ररत्नापहरणमनपत्यत्वनिमित्तम्, तद्दोषहरं महारुद्रजपादिकम्

[2]विप्ररत्नापहारी यः सोऽनपत्यः प्रजायते ।
तेन कार्यं विशुद्ध्यर्थं महारुद्रजपादिकम् ॥

आदिपदात् ब्राह्मणोद्वाहनहरिवंशश्रवणे । संकौ. ५३

[3]मृतवत्सोदितः सर्वो विधिरत्र विधीयते ।
दशांशहोमः कर्तव्यः पालाशेन यथाविधि ॥

दशांशः महारुद्रस्य । संकौ. ५३

[4]अनड्वान् वस्त्रसंयुक्तः पलार्धार्धे च काञ्चनम् ।
निर्धनेन प्रकर्तव्यं द्विजस्य मुच्यते क्षणात् ॥

ब्राह्मणस्य धनं लोभाद्यो नार्पयति मूढधीः ।
निर्वंशो जायते तस्य दद्याद्दश पयस्विनीः ॥

---

(१) शास्मृ. २।३५ ; विपा. १३१, २०१.

(२) शास्मृ. २।३६ ; विपा. २०१ शुद्धये (शुध्यति).

(३) शास्मृ. २।३७–३८.

(४) शास्मृ. २।३९ ; विपा. २०१ (जुहुयाच्च दशांशेन दूर्वामाज्यपरिप्लुताम् । एकादशस्वर्णनिष्का प्रदातव्या च दक्षिणा ॥).

(५) शास्मृ. २।४० ; विपा. २०१ प्रथमपादे (एकादश पशूंश्चैव).

(६) शास्मृ. २।४१ ; विपा. २०१.

(१) शास्मृ. २।४४–४६.

(२) शास्मृ. ४।२८ रत्नापहारी यः सोऽन (रत्नस्य हारी च अन) ; संकौ. ५३.

(३) शास्मृ. ४।२९ ; संकौ. ५३ वत्सोदितः (वत्सादिकः).

(४) शास्मृ. ४।३०–३१.

पित्रादिषु द्वादशसु पूर्वजेषु कश्चिद्दुर्मृतः प्रेतभूतोऽनपत्यत्वादिकारकः, तत्प्रेतत्वनिवृत्तये प्रेतप्रतिमापूजनादिकर्मकलापः नारायणबलिरौर्ध्वदेहिकं चेति साधारणविधिः, व्याघ्रहतत्वादिषु पञ्चत्रिंशतिनिमित्तविशेषेषु परकन्याविवाहादयो विशेषविधयः

'अश्वसूकरशृङ्ग्यद्रिद्रुमादिशकटेन च ।
भृग्वग्निदारुशस्त्राश्मविषोद्वन्धनजैर्मृताः ॥
व्याघ्राहिगजभूपालचौरवैरिवृकाहताः ।
काष्ठशल्यमृता ये च शौचसंस्कारवर्जिताः ॥
विषूचिकान्नकवलदवातीसारतो मृताः ।
शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥
अस्पृश्या अपवित्राश्च पतिताः पुत्रवर्जिताः ।
पञ्चत्रिंशत्प्रकारैश्च नाऽऽप्नुवन्ति गतिं मृताः ॥
पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा ।
ततो नान्दीमुखाः प्रोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः ॥
द्वादशैते पितृगणास्तर्पिताः संततिप्रदाः ।
गतिहीनाः सुतादीनां संततिं नाशयन्ति ते ॥
दश व्याघ्रादिनिहता गर्भे निघ्नन्त्यमी क्रमात् ।
द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् ॥
विषादिनिहता घ्नन्ति दशसु द्वादशस्वपि ।
वर्षैकबालकं कुर्यादनपत्योऽनपत्यताम् ॥
अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते ।
कारयेन्निष्कमात्रं तु पुरुषं प्रेतरूपिणम् ॥
चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम् ।
पिष्टैः कृष्णतिलैः कुर्यात् पिण्डं प्रस्थप्रमाणतः ॥
मध्वाज्यशर्करायुक्तं स्वर्णदण्डेन संयुतम् ।
अकालमूलं कलशं पञ्चपल्लवसंयुतम् ॥
कृष्णवर्णसमाच्छन्नं सर्वौषधिसमन्वितम् ।
तस्योपरि न्यसेद्देवं पात्रं धान्यफलैर्युतम् ॥
सप्तधारं च कलशं तत्र तत्संमुखं न्यसेत् ।
कुम्भोपरि च विन्यस्य पूजयेत् प्रेतरूपिणम् ॥
कुर्यात् पुरुषसूक्तेन प्रत्यहं दुग्धतर्पणम् ।
षडङ्गं च जपेद्रुद्रं कलशे तत्र वेदवित् ॥
यमसूक्तेन कुर्वीत जपपूजादिकं तथा ।
गायत्र्याश्चैव कर्तव्यो जपः स्वात्मविशुद्धये ॥
ग्रहशान्तिकपूर्वं च दशांशं जुहुयात्तिलैः ।
अज्ञातनामगोत्राय प्रेताय सतिलोदकम् ।
प्रदद्यात् पितृतीर्थेन पिण्डं मन्त्रमुदीरयेत् ॥
'इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम् ।
ददामि तस्मै प्रेताय यः पीडां कुरुते मम ॥'
सजलान् कृष्णकलशांस्तिलपात्रसमन्वितान् ।
द्वादश प्रेतमुद्दिश्य दद्यादेकं च विष्णवे ॥
ततोऽभिषिञ्चेदाचार्यो दम्पती कलशोदकैः ।
शुची रक्ताम्बरधरो मन्त्रैर्वरुणदैवतैः ॥
यजमानस्ततो दद्यादाचार्याय स दक्षिणाम् ।
ततो नारायणबलिः कर्तव्यः शास्त्रनिश्चयात् ॥
एष साधारणविधिरगतीनामुदाहृतः ।
विशेषस्तु पुनर्ज्ञेयो व्याघ्रादिनिहतेष्वपि ॥
व्याघ्रेण निहते प्रेते परकन्यां विवाहयेत् ।
सर्पदंशे नागबलिर्देयः सर्वेषु काञ्चनम् ॥
चतुर्निष्कमितं हेमगजं दद्याद्गजैर्हते ।
राज्ञा विनिहते दद्यात् पुरुषं तु हिरण्मयम् ॥
चौरेण निहते धेनुं वैरिणा निहते वृषम् ।
वृकेण निहते दद्याद्यथाशक्ति च काञ्चनम् ॥
शय्यामृते प्रदातव्या शय्या तूलीसमन्विता ।
निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता ॥
शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम् ।
संस्कारहीने च मृते कुमारमुपवीतयेत् ॥
शुना हते च निक्षेपं स्थापयेन्निजशक्तितः ।
शूकरेण हते दद्यान्महिषं दक्षिणान्वितम् ॥
कृमिभिश्च मृते दद्याद्गोधूमान्नं द्विजातये ।
शृङ्गिणा च हते दद्याद्वृषभं वस्त्रसंयुतम् ॥
शकटेन मृते दद्याद्द्रव्यं सोपस्करान्वितम् ।
भृगुपाते मृते चैव प्रदद्याद्धान्यपर्वतम् ॥

(१) शास्मृ. ६।१-८, १९-५२.

अग्निना निहते कार्यमग्निदानं स्वशक्तितः ।
दारुणा निहते चैव कर्तव्या सदने सभा ॥
शस्त्रेण निहते दद्यान्महिषीं दक्षिणान्विताम् ।
अश्मना निहते दद्यात्सवत्सां गां पयस्विनीम् ॥
विषेण च मृते दद्यान्मेदिनीं हेमनिर्मिताम् ।
उद्बन्धनमृते चापि प्रदद्याद्गां पयस्विनीम् ॥
मृते जलेन वरुणं हैमं दद्याद्द्विनिष्ककम् ।
वृक्षं वृक्षहते दद्यात्सौवर्णं स्वर्णसंयुतम् ॥
अतिसारमृते लक्षं सावित्र्याः संयतो जपेत् ।
शाकिन्यादिमृते चैव जपेद्रुद्रं यथोचितम् ॥
विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान् ।
तिलधेनुः प्रदातव्या कण्ठेऽन्नकवलैर्मृते ॥
कासरोगमृते वाऽपि कृच्छ्राब्दिकव्रतं चरेत् ।
विद्युत्पातेन निहते विद्यादानं समाचरेत् ॥
अस्पर्शे च मृते कुर्यात्प्राजापत्यांश्च षोडश ।
मृते वाऽपत्यरहिते कृच्छ्राणां नवतिं चरेत् ॥
निष्कत्रयमितस्वर्णं दद्यादश्वं हयाहते ।
कपिना निहते दद्यात्कपिं कनकनिर्मितम् ॥
केशरोगमृते चापि अष्टौ कृच्छ्रान् समाचरेत् ।
एवं कृते विधानेन विदध्यादौर्ध्वदैहिकम् ॥
ततः प्रेतत्वनिर्मुक्ताः पितरस्तर्पितास्तथा ।
दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसंपदः ॥

## पराशरः

पुत्रप्राप्त्यर्थं पलाशदलस्नानम्

[1]महातीर्थे महायोगे महानद्यनुसंगमे ।
पलाशस्य दलात् स्नानं कुर्यात् पुत्रसुखार्थिनी ॥

## बृहत्पराशरः

पापमृतानां प्रेतत्वनिवृत्त्यर्थः नारायणबलिः

[2]अथान्यत् पापमृत्यूनां शुद्ध्यर्थं श्राद्धमुच्यते ।
कृतेन तेन येषां तु प्रदत्तमुपतिष्ठति ॥
दन्तिशृङ्गिगरव्यालनीराग्निबन्धनैस्तथा ।
विद्युन्निर्घातवृक्षैश्च विप्रैश्च स्वात्मना हताः ॥
व्रणसंजातकीटैश्च म्लेच्छैश्चैव हतास्तथा ।
पापमृत्यव एवैते शुभगत्यर्थमुच्यते ॥
नारायणबलिः कार्यो विधानं तस्य चोच्यते ।
ऊर्ध्वं षण्मासतः कुर्यादेक ऊर्ध्वं तु वत्सरात् ॥
तेषां पापव्यपोहार्थं कार्यो नारायणो बलिः ।
धौतवासाः शुचिः स्नात एकादश्यामुपोषितः ॥
शुक्लपक्षे तु संपूज्य विष्णुमीशं यमं तथा ।
नदीतीरं शुचिर्गत्वा प्रदद्याद्दश पिण्डकान् ॥
क्षौद्राज्यतिलसंयुक्तान् हविषा दक्षिणामुखः ।
अभ्यर्च्य पुष्पधूपाद्यैस्तन्नामगोत्रपूर्वकान् ॥
विष्णुध्यानमनाः कुर्यात्ततस्तानम्भसि क्षिपेत् ।
निमन्त्रयेत विप्रांश्च पञ्च सप्ताथ वा नव ॥
द्वादश्यां कुतपे स्नातान् धौतवस्त्रान् समागतान् ।
कृष्णाराधनकृद्भक्त्या पादप्रक्षालिताञ्छुभान् ॥
दक्षिणाप्रवणे देशे शुचिस्तानुपवेशयेत् ।
द्वौ देवे तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान् द्विजान् ॥
आसनावाहनार्घ्यं च कुर्यात् पार्वणवद्द्विजः ।
भोजयेद्भक्ष्यभोज्यैश्च क्षौद्रैक्षवाज्यपायसैः ॥
तृप्ताञ्ज्ञात्वा ततो विप्रांस्तृप्तिं पृच्छेद्यथाविधि ।
भोज्येन तिलमिश्रेण हविष्येण च तान् पुनः ॥
पञ्च पिण्डान् प्रदद्याद्धि देवं रूपमनुस्मरन् ।
विष्णुब्रह्मशिवेभ्यश्च त्रीन् पिण्डांश्च यथाक्रमम् ॥
यमाय सानुगायाथ चतुर्थं पिण्डमुत्सृजेत् ।
मृतं संचिन्त्य मनसा गोत्रनामकपूर्वकम् ॥
विष्णुं स्मृत्वा क्षिपेत् पिण्डं पञ्चमं च ततः पुनः ।
दक्षिणाभिमुखश्चैव निर्वपेत् पञ्च पिण्डकान् ॥
आचम्य ब्राह्मणः पश्चात् प्रोक्षणादिकमाचरेत् ।
हिरण्येन च वासोभिर्गोभिर्भूम्या च तान् द्विजान् ॥

---

(१) प्रपा. १६१ सुखा ( सुता ); संप्र. २०४; विपा. २५० नद्यनुसं ( नद्योस्तु सं ); संर. ७९६ नद्यनुसं ( नद्यां तु सं ) दलात् ( दलैः ).

(२) बृपसं. ७।३००–३१९.

प्रणम्य शिरसा पश्चाद्विनयेन प्रसादयेत् ।
तिलोदकं करे दत्त्वा प्रेतं संस्मृत्य चेतसि ।
गोत्रपूर्वं क्षिपेत् पाणौ विष्णुं बुद्धौ निवेश्य च ॥

बहिर्गत्वा तिलाम्भस्तु तस्मै दद्यात् समाहितः ।
मित्रभृत्यैर्निजैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ॥

एवं विष्णुमते स्थित्वा यो दद्यात् पापमृत्यवे ।
समुद्धरति तं प्रेतं पराशरवचो यथा ॥

सर्वेषां पापमृत्यूनां कार्यो नारायणो बलिः ।
तस्मादूर्ध्वं च तेभ्यो हि प्रदत्तमुपतिष्ठति ॥

अनपत्यामृतापत्याकन्याप्रसूनां पुत्रप्राप्त्यर्थं पुरुषसूक्तविधानम्

[1]अथान्यत् संप्रवक्ष्यामि विधिं पावनमुत्तमम् ।
असत्तातप्रतीतोऽयं रघुपौत्रस्य धीमतः ॥
[2]अनपत्यस्य पुत्रार्थमकरोद्वैभाण्डकः(? ण्डकिः) स्वयम् ।
सहस्रशीर्षसूक्तस्य विधानं चरुपाककृत् ॥

वैभाण्डिकीं क्रियां चरुक्रियामित्यर्थः ।

विपा. १९२

[3]यैर्यैर्नृपैः कृतं पूर्वमन्यैरपि द्विजोत्तमैः ।
उपासितानि सद्भक्त्या श्रोत्रियैः श्रुतिपारगैः ॥

आत्मविद्भिर्निराहारैः श्रौतिभिर्मन्त्रवित्तमैः ।
सिध्यन्ति सर्वमन्त्राणि विधिविद्भिर्द्विजोत्तमैः ।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः ॥

(१) बृपसं. ११।२९७; विपा. १९२ प्रती (प्रणी) पौत्रस्य धीमतः (पुत्राय पृच्छते).

(२) बृपसं. ११।२९८; विपा. १९२ (अनपत्यस्य पुत्रार्थे कुर्याद्वैभाण्डकीं क्रियाम् । सहस्रशीर्षापुरुषविधानं चरुणा कृतम् ॥).

(३) बृपसं. ११।२९९–३०१; विपा. १९२–१९३ नृपैः कृतं (कृतं नृपैः) आत्मवि (आत्मव) हारैः श्रौ (हारैर्व्र) विद्भिर्द्वि (वद्धि द्वि) अत्रत्यद्वितीयार्धादित्रयं क्रमेण तृतीयार्धचतुर्थार्धद्वितीयार्धत्वेन पठितम्.

[1]न पाठाच्च धनात् स्नानादात्मनः प्रतिपादनात् ।
प्राकनात् कर्मणः पुंसां सर्वाः सिध्यन्ति सिद्धयः ॥

शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ।
[2]द्वादश्यां पुत्रकामो यश्चरुं कुर्वीत वैष्णवम् ।
दम्पत्योरुपवासः स्यादेकादश्यां सुरालये ॥

[3]ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ।
चरुं पुरुषसूक्तेन श्रपयेत् पुत्रकाम्यया ॥

[4]प्राप्नुयाद्वैष्णवं पुत्रं चिरायुःसंततिक्षमम् ॥

[5]द्वादश्यां द्वादश चरून् विधिवन्निर्वपेद्द्विजः ।
यः करोति महायागं विष्णुलोकं स गच्छति ॥

एवम् एकादश्युपवासादिकं कृत्वेत्यर्थः ।

विपा. १९९

[6]हुत्वाऽऽज्यं विधिवत् पूर्वमृग्भिः षोडशभिस्तथा ।
समिधोऽश्वत्थवृक्षस्य हुत्वाऽऽज्यं जुहुयात् पुनः ॥

[7]उपस्थानं ततः कुर्याद्ध्यात्वा तु मधुसूदनम् ।
हविर्होमं ततः कृत्वा दद्यात् पञ्च घृताहुतीः ॥

(१) बृपसं. ११।३०१–३०२.

(२) बृपसं. ११।३०२–३०३; विपा. १९३ कामो यश्चरुं (कामाय चरुं) वासः स्यादे (वासश्च त्वे).

(३) बृपसं. ११।३०४; विपा. १९३.

(४) बृपसं. ११।३०५ युःसंत (युं संत); विपा. १९९.

(५) बृपसं. ११।३०६; विपा. १९८ पूर्वार्धे (द्वादशद्वादशीष्वेवं पयसा निर्वपेच्चरुम् ।) पू.

(६) बृपसं. ११।३०७; विपा. १९९ चतुर्थपादे (होतव्याः पूर्वमेव तु).

(७) बृपसं. ११।३०८; विपा. १९९ (उपस्थानं हुताशस्य ध्यात्वा च मधुसूदनम् । हविर्होमं ततः कुर्यात् प्रत्यृचं वाग्यतः शुचिः ॥).

उपस्थानं च पुरुषसूक्तेनैवेति ज्ञेयम् ।

विपा. १९९

[1]कामप्रदं नमस्कृत्य नारी नारायणं पतिम् ।
संप्राश्य च हविःशेषं वसेल्लब्ध्वाशनी गृहे ॥

लब्ध्वाशीति ग्रहणम् आहारान्तरनिवृत्त्यर्थम् । संविशेत् वामभागशायिनी स्यादित्यर्थः । विपा. १९९

[2]ततः कृत्वा त्विदं कर्म कर्तव्यं द्विजतर्पणम् ।
अन्यस्त्रीषु निवर्तेत यावद्गर्भं न विन्दति ॥

यया सह एतत् कर्म कृतं तां मुक्त्वा बहुभार्योऽन्यां न तावत् गच्छेत् यावदेषा कर्मसहाधिकारिणी गर्भं न प्राप्नोति, मन्त्रवतः शुक्रस्य अन्यत्र गर्भाधानाक्षमत्वात्, तस्य अन्यत्र निषेके कर्मसहाधिकारिण्यां गर्भानुदयप्रसङ्गाच्च । अनेकाभिः सह एतत्कर्मकरणे तु न दोषः ।

विपा. १९९

[3]असूता मृतपुत्रा वा या च कन्याः प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा ॥

[4]होमान्ते दक्षिणां दद्याद्गृहं वासस्तथा तिलान् ।
भूमिं हिरण्यं रत्नानि यथासंभवमेव वा ॥

[5]यः सिद्धमन्त्रः सततं द्विजेन्द्रः
संपूज्य विष्णुं विधिवत् सुतार्थी ।
इदं विधानं विदधाति सम्यक्
स पुत्रमाप्नोति हरेः प्रसादात् ॥

(१) बृपसं. ११।३०९ ; विपा. १९९ ( हविःशेषे मनः कृत्वा नारी नारायणं प्रति । हविःशेषं भक्षयित्वा लब्ध्वाशी संविशेत् क्षणम् ॥ ).

(२) बृपसं. ११।३१० त्विदं (इदं) अन्य (स्त्रः); विपा. १९९.

(३) बृपसं. ११।३११ ; विपा. १९९ सूता (पुत्रा) कन्याः ( कन्यां ) परा ( पारा ).

(४) बृपसं. ११।३१२ ; विपा. २०० द्वितीयपादे ( धेनुं वासस्तिलांस्तथा ) रत्नानि ( वस्त्राणि ).

(५) बृपसं. ११।३१३ ; विपा. २०० सुतार्थी ( सुतार्थे ).

## ऋग्विधानम्

पुत्रप्राप्त्यर्थं पुरुषसूक्तविधानम्

[1]शुक्लपक्षे शुभे वारे सुनक्षत्रे सुगोचरे ।
द्वादश्यां पुत्रकामाय चरुं कुर्वीत वैष्णवम् ॥

[2]दम्पत्योरुपवासः स्यादेकादश्यां सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥

[3]चरुं पुरुषसूक्तेन श्रपयेत् पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्रमचिरात् संततिक्षमम् ॥

[4]तथाऽपरः प्रकारोऽयमेकादश्यामभोजनम् ।
दम्पत्योश्च गुरुस्तत्र नित्यकर्म(? र्मा)विरोधिनि ॥

कालेऽजपेदिदं सूक्तमेकादश्यां निरन्तरम् ।
द्वादश्यां प्रयतो भूत्वा पयसा श्रपयेच्चरुम् ॥

[5]द्वादशद्वादशीष्वेवं श्रपयेद्विधिवच्चरुम् ।
यः करोति ह्यवश्यस्याद्(?)याति विष्णोः परं पदम् ॥

[6]हुत्वाऽऽज्यं विधिवत्सम्यगृग्भिः षोडशभिर्बुधः ।
कृताञ्जलिपुटो भूत्वा स्तवं ताभिः प्रयोजयेत् ॥

[7]केशवं मार्गशीर्षे तु पौषे नारायणं तथा ।
माधवं माघमासे तु गोविन्दं फाल्गुने पुनः ॥

(१) ऋग्वि. ३।१३४ ; प्रपा. १६१ सुन ( पुंन ) ; निप. २३३ (=) पुत्रकामाय ( शुक्लपक्षे तु ) वैष्णवम् ( वै ततः ) उत्त.

(२) ऋग्वि. ३।१३५ ; प्रपा. १६१ ; निप. २३३ (=).

(३) ऋग्वि. ३।१३६ ; प्रपा. १६१ ; निप. २३३ (=) श्रपयेत् ( जुहुयात् ).

(४) निप. २३३ (=).

(५) ऋग्वि. ३।१३७ पूर्वार्धे ( द्वादशद्वादशीः सम्यक्पयसा निर्वपेच्चरुम् । ) ; निप. २३३ (=) पू.

(६) ऋग्वि. ३।१३८ ; निप. २३३ (=) वत्सम्यगृ ( वच्चाऽऽदौ ऋ ) ताभिः प्र ( चाभिप्र ).

(७) ऋग्वि. ३।१३९–१४३.

चैत्रे चैव तथा विष्णुं वैशाखे मधुसूदनम् ।
ज्येष्ठे त्रिविक्रमं विद्यादाषाढे वामनं विदुः ॥
श्रावणे श्रीधरं विद्याद्धृषीकेशं ततः परे ।
आश्विने पद्मनाभं तु दामोदरं च कार्तिके ॥
द्वादशैतानि नामानि ऋष्यशृङ्गोऽब्रवीन्मुनिः ।
पूजयेन्मासनामभिः सर्वान् कामान् समश्नुते ॥
आयुष्मन्तं सुतं सूते परामेधासमन्वितम् ।
धनवन्तं प्रजावन्तं धार्मिकं सात्त्विकं तथा ॥
[1]समिधोऽश्वत्थवृक्षस्य हुत्वाऽऽज्यं जुहुयात् पुनः ।
उपस्थाने हुताशस्य ध्यायेच्च मधुसूदनम् ॥
[2]हविर्होमं ततः कुर्यात् प्रत्यृचं वाग्यतः शुचिः ।
सूक्तेन जुहुयादाज्यमादावन्ते च पूर्ववत् ॥

अत्र हविःशेषं च पूर्ववदिति हविःशेषेण पूर्ववत् स्विष्टकृद्धोमं कुर्यादित्यर्थः । प्रपा. १६१

[3]हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
भक्षयित्वा हविःशेषं लब्धाशीः संविशेत् क्षणम् ॥
[4]ततस्तु कृत्वेदं कर्म कर्तव्यं द्विजतर्पणम् ।
द्वितीयं स्त्री (?द्वितीयस्यां) निवर्तेत यावद्गर्भं च विन्दति ॥

[1]अपुत्रा मृतपुत्रा वा या च कन्याः प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रमृष्यशृङ्गो यथाऽब्रवीत् ॥

पुत्रप्राप्त्यर्थं विष्णोः पुरुषसूक्तेनार्चनस्य विधानम्

*[2]अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः ।
यत् कृत्वा मुनयः सर्वे ब्रह्मनिर्वाणमाप्नुयुः ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् ।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ॥
आपो ह्यायतनं तस्य तस्मात्तासु सदा हरिः ।
तस्य सर्वगतत्वाच्च स्थण्डिले भावितात्मनाम् ॥
[3]दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
[4]आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
पुरुषोऽथ जगद्बीजमृषिर्नारायणः स्मृतः ॥
[5]नारायण महाबाहो शृणुष्वैकं महाप्रभो ।
वक्ष्ये पुरुषसूक्तस्य विधानं त्वर्चनं प्रति ॥
[6]अग्निकार्यं जपविधिं स्तोत्रं चैव तदात्मकम् ।
स्नात्वा यथोक्तविधिना प्राङ्मुखः शुद्धमानसः ॥

---

(१) ऋग्वि. ३।१४४ ऽऽज्यं (ऽग्निं) स्थाने (स्थानं) ध्यायेच्च (ध्यात्वाऽर्च्य); प्रपा. १६१ हुत्वाऽऽज्यं (हुताग्नी); निप. २३३ (=) स्थाने (स्थानं) ध्यायेच्च (ध्यात्वा च).

(२) ऋग्वि. ३।१४५; प्रपा. १६१ ज्यमादावन्ते (ज्यं हविःशेषं); निप. २३३ (=) पू.

(३) ऋग्वि. ३।१४६ स्कृत्य (स्कृत्वा); प्रपा. १६१ पतिम् (प्रति) लब्धाशीः (लब्ध्वाऽऽशीः) क्षणम् (क्षपाम्); निप. २३३ (=) लब्धाशीः (लब्ध्वाशी) क्षणम् (तृणे).

(४) ऋग्वि. ३।१४७; प्रपा. १६१ (ततः कृत्वा द्विजः कर्म कर्तव्यं द्विजतर्पणम् । यां द्वितीयां निवर्तेत या च गर्भं न विन्दति ॥); निप. २३३ (=) ततस्तु कृत्वेदं (ततः कृत्वा त्विदं) पू.

* अत्र पुत्रप्राप्तिरूपफलस्याश्रवणेऽपि विधानपारिजातमनुसृत्येदं संगृहीतम् ।

(१) ऋग्वि. ३।१४८; प्रपा. १६१; निप. ३३३ (=) कन्याः (कन्यां).

(२) ऋग्वि. ३।१४९–१५२.

(३) ऋग्वि. ३।१५३; प्रपा. १६१; विपा. १९६ उत्तरार्धे (अर्चितं तेन वै सर्वं त्रैलोक्यं सचराचरम् ॥).

(४) ऋग्वि. ३।१५४.

(५) ऋग्वि. ३।१५५; विपा. १९३ त्वर्चनं (ह्यर्चनं) उत्त.

(६) ऋग्वि. ३।१५६; विपा. १९३ स्नात्वा (कुर्याद्).

[1]प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ॥

[2]पञ्चमीं वामजानुनि षष्ठीं वै दक्षिणे न्यसेत् ।
सप्तमीं वामकुक्षौ तु अष्टमीं दक्षिणे न्यसेत् ॥

[3]नवमीं नाभिदेशे तु दशमीं हृदये न्यसेत् ।
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ॥

[4]त्रयोदशीं दक्षिणे च आस्ये चैव चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ॥

[5]ब्राह्मणोऽस्येति हृदयं चन्द्रमेति शिरस्तथा ।
नाभ्या आसीदिति शिखां सप्तेति कवचं न्यसेत् ।
यज्ञेनेत्यस्त्रमुद्दिष्टमेवं पञ्चाङ्गलक्षणम् ॥

[6]एवं न्यासविधिं कृत्वा पश्चात् पूजां समारभेत् ।
यथा देहे तथा देवे न्यासं कृत्वा विधानतः ॥

[7]आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥

[8]अर्घ्यं चतुर्थ्या दातव्यं पञ्चम्याऽऽचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव तु ॥

[1]यज्ञोपवीतमष्टम्या नवम्या चानुलेपनम् ।
पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् ॥

[2]द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम् ।
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणाम् ॥

[3]दक्षिणां तु यथाशक्ति षोडश्या च प्रदापयेत् ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥

[4]ततः प्रदक्षिणां कृत्वा जपं कुर्यात् समाहितः ।
यथाशक्ति जपित्वा तु सूक्तं तस्मै निवेदयेत् ॥

[5]देवस्य दक्षिणे पार्श्वे कुण्डं स्थण्डिलमेव वा ।
कारयेत् प्रथमेनैव द्वितीयेन तु प्रोक्षणम् ॥

[6]तृतीययाऽग्निमादध्याच्चतुर्थ्या च समिन्धनम् ।
पञ्चम्या चाऽऽज्यसंस्कारं चरोश्च श्रपणं तथा ॥

[7]षष्ठेनैवाग्निमध्ये तु कल्पयेत् पद्ममासनम् ।
चिन्तयेत् तत्र देवेशं कालानलसमप्रभम् ॥

[8]विवृतास्यं वाहशीर्षं रक्तास्यं रक्तलोचनम् ॥

---

(१) ऋग्वि. ३।१५७ ; विपा. १९३ न्यसेत् (तथा).

(२) ऋग्वि. ३।१५८ ; विपा. १९३ जानुनि (जानौ तु) न्यसेत् (तथा) कुक्षौ (कट्यां).

(३) ऋग्वि. ३।१५९ ; विपा. १९३ देशे तु (मध्ये तु) न्यसेत् (तथा) कण्ठ (स्कन्ध).

(४) ऋग्वि. ३।१६० ; विपा. १९४ आस्ये चैव (आस्यदेशे).

(५) विपा. १९४.

(६) ऋग्वि. ३।१६१ ; विपा. १९४ द्वितीयपादे (पश्चाद्धोमं समाचरेत्) पू.

(७) ऋग्वि. ३।१६२ ; विपा. १९४.

(८) ऋग्वि. ३।१६३ म्या वस्त्र (म्यामस्त्र) ; विपा. १९५ नीयकम् (नं ततः) तु (च).

(१) ऋग्वि. ३।१६४ ; विपा. १९५ (यज्ञोपवीतमष्टम्या नवम्याऽऽभरणं तथा । दशम्या गन्धदानं स्यादेकादश्या च माल्यकम् ॥).

(२) ऋग्वि. ३।१६५ ; विपा. १९५–१९६ (द्वादश्या धूपदानं स्यात् त्रयोदश्या च दीपकम् । चतुर्दश्या निवेद्यं तु पञ्चदश्या नमस्क्रिया ॥).

(३) ऋग्वि. ३।१६६ ; विपा. १९६ पूर्वार्धे (उद्वासनं तु षोडश्या उपचारास्तु षोडश ।) च नैवेद्ये (निवेद्ये च) 'दक्षिणां तु यथा शक्त्या षोडशेन प्रदापयेत् ।' इत्यर्धमपि क्रमं विच्छिद्य पठितम्.

(४) ऋग्वि. ३।१६७ ; विपा. १९६ दक्षिणां (दक्षिणं) तु (च) तस्मै (चास्मै).

(५) ऋग्वि. ३।१६८ ; विपा. १९६ उत्तरार्धे (कारयेत् प्रथमर्चा तु प्रोक्षणं च द्वितीयया ॥).

(६) ऋग्वि. ३।१६९ तृतीयपादे (पञ्चम्याऽऽज्यस्य श्रपणं) ; विपा. १९६ च (तु).

(७) ऋग्वि. ३।१७० तत्र दे (देवदे) ; विपा. १९६ षष्ठनैवाग्नि (षष्ठ्या चानल).

(८) विपा. १९६.

वाहः हयः । तस्सदृशमूर्धानमित्यर्थः । विपा. १९७

[1]ततो गन्धं च पुष्पं च धूपं दीपं निवेदनम् ।
अनुज्ञाप्य ततः कुर्यात् समस्यादि यथाक्रमम् ॥

एवं देवं ध्यात्वा समस्यादिपञ्चभिर्ऋग्भिः पञ्चोपचार-पूजां कुर्यादित्याह— तत इति । विपा. १९७

[2]समिधस्तावतीः पूर्वं जुहुयादभिघारिताः ।
ततो घृतेन जुहुयाच्चरुणा च ततः पुनः ॥

[3]एवं हुत्वा ततश्चैवमनुज्ञाप्य यथाक्रमम् ।
अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत् ॥

[4]'जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज ॥

[5]नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे ।
ओं नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥

[6]देवानां दानवानां च सामान्यमसि दैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥

[7]एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥

[8]संसारसागरं घोरमनन्तं क्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥

[1]न ते रूपं न चाऽऽकारो नाऽऽयुधानि न चाऽऽस्पदम् ।
तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥

[2]नैव किंचित् परोक्षं ते न प्रत्यक्षोऽसि कस्यचित् ॥
नैव किंचिदसाध्यं ते न च साध्योऽसि कस्यचित् ।

[3]कार्याणां कारणं पूर्णं वचसां वाच्यमुत्तमम् ।
योगिनां परमां सिद्धिं विदन्ति परमं विदः ॥

[4]अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ।
त्राहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥

[5]कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे विगते चाऽपि वर्तते मे महद्भयम् ॥

[6]त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥

[7]विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम् ।
जन्मान्तरेऽपि मे देव मा भूदस्य परिक्षयः ॥

[8]दुर्गतावपि जातस्य त्वद्गतो मे मनोरथः ।
यदि नाथं च विन्देय तावताऽस्मि कृती सदा ॥

---

(१) ऋग्वि. ३।१७१ पं दीपं नि (पदीपनि); विपा. १९७ ज्ञाप्य (ज्ञाय).

(२) ऋग्वि. ३।१७२; विपा. १९७ धस्तावतीः (धः प्रत्यृचं).

(३) ऋग्वि. ३।१७३; विपा. १९७ (एवं हुत्वा ततस्तस्य समीपे स्तोत्रमुच्चरेत् ॥) एतावदेव.

(४) ऋग्वि. ३।१७४; विपा. १९७ तृतीयपादे (नमस्तेऽस्तु हृषीकेश).

(५) ऋग्वि. ३।१७५; विपा. १९७ ओं नमो + (भगवते).

(६) ऋग्वि. ३।१७६; विपा. १९७ मसि दे (मधिदे).

(७) ऋग्वि. ३।१७७; विपा. १९७.

(८) ऋग्वि. ३।१७८; विपा. १९७ नन्तं क्लेशभाज (नन्तक्लेशसाध).

(१) ऋग्वि. ३।१७९; विपा. १९७–१९८ चाऽऽकारो (वाऽऽकारो).

(२) ऋग्वि. ३।१८०; विपा. १९८ न प्रत्यक्षोऽसि (प्रत्यक्षोऽसि न) पू.

(३) ऋग्वि. ३।१८१; विपा. १९८ पूर्णं (पूर्वं) वाच्य (वाक्य) योगि (योगा) विद (वद) विदः (विदुः).

(४) ऋग्वि. ३।१८२ भयावहे (महाभये); विपा. १९८.

(५) ऋग्वि. ३।१८३; विपा. १९८ उत्तरार्धे (शयनेऽपि गतौ चापि वर्धते मे महद्भयम् ॥).

(६) ऋग्वि. ३।१८४; विपा. १९८ न्न मे (न्मम).

(७) ऋग्वि. ३।१८५; विपा. १९८ प्राप्तं य (प्रादुर्य) ज्ञानम (ज्ञानव).

(८) ऋग्वि. ३।१८६; विपा. १९८ पूर्वार्धे (दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम ।) विन्देय (विन्देयं).

'अकामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥

'पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ।
आत्मज्ञानमिदं पुण्यं योगज्ञानमिदं परम् ॥'

'इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने ।
किंकरोऽस्मीति चाऽऽत्मानं देवायैव निवेदयेत् ॥

'सहस्रशीर्षेति सूक्तं सर्वकामफलप्रदम् ।
वेदगर्भशरीरेण स वै नारायणः स्मृतः ॥

'ब्रह्मेन्द्ररुद्रपर्जन्या अत्र सूक्ते व्यवस्थिताः ।
अत्रस्थमेव द्रष्टव्यं जगत्स्थावरजङ्गमम् ॥

गर्भाग्रहणगर्भस्रावकन्यामात्रजननापत्यमरणकारण-
दोषपरिहारार्थं जपहोमरूपा उपायाः

'पुष्पं दृष्ट्वा तु या गर्भं न गृह्णीयाद्वयोन्विता ।
विष्णुर्योनिं नेजमेष योनिं स्पृष्ट्वा ततो जपेत् ।
ततोऽभिगमनं कुर्याद्गर्भं धत्ते न संशयः ॥

'यस्या गर्भः प्रमीयेत तत्राग्नौ जुहुयाद्धविः ।
ब्रह्मणाऽग्निः संविदान इत्याज्येन यथाविधि ॥

इदं तु सूक्तं षडृचम् । तथा चानुक्रमणिका— 'ब्रह्मणा षड् यस्ते(इन्द्राग्नी) रक्षोहा गर्भस्रावे प्रायश्चित्तमानुष्टुभम्' इति । विपा. २४८

'आज्यशेषेण चाभ्यज्य गर्भिणीप्रसवेऽपि च ।
पिबेच्चेदाज्यशेषं तु जीवंस्तस्याः प्रजायते ॥

'आ मनीषा जपेद्वर्गं बहुकन्या लभेद्यदि ।
सुपुत्रं लभते पश्चात् ह्ययुतं विष्णुमन्दिरे ॥

'उरोष्ट इति सूक्तेन चोपतिष्ठेच्छतक्रतुम् ।
प्रजाकामो यजेन्नित्यं चरुणैवापि यत्नतः ॥

'उपहृत्योपहारं च शिष्टं भुञ्जीत वाग्यतः ।
उच्छिष्टं च प्रदातव्यं भार्यायै पुत्रमिच्छता ॥

धेन्वाः सरूपवत्सायाः पयसा साधयेच्चरुम् ।
अनुरूपां प्रजामाशु लभते नात्र संशयः ॥

'यज्ञो देवानां सूक्तं तु ह्ययुतं विष्णुमन्दिरे ।
मृतपुत्रोऽनपत्यो वा सुपुत्रं सर्वथा लभेत् ॥

इदं सूक्तं तृचम् । कुत्स ऋषिरिन्द्रस्त्रिष्टुप् ।
विपा. २४८

'स यो वृषा जपेत् सूक्तं वन्ध्या लक्षं शिवालये ।
आयुष्यवन्तं पुत्रं च भाग्यवन्तं प्रसूयते ॥

सूक्तमिदमेकोनविंशत्यृचमिति द्रष्टव्यम् । विपा. २४९

---

(१) ऋग्वि. ३।१८७ वैष्णवत्वं (विष्णुपादौ); विपा. १९८ अकाम (अकार्य) सर्व (सप्त).

(२) ऋग्वि. ३।१८८.

(३) ऋग्वि. ३।१८९; विपा. १९८.

(४) ऋग्वि. ३।२१९–२२०; प्रपा. १६१ शीर्षेति सूक्तं (शीर्षसूक्तं च) णः स्मृतः (णं स्मृतम्).

(५) ऋग्वि. ३।२२०–२२१ मेव द्र (मेतद्द्र); प्रपा. १६१.

(६) विपा. २५०.

(७) प्रपा. १६१; विपा. २४७ ज्येन (द्येन) प्रयोगपारिजाते.

(१) प्रपा. १६१; विपा. २४८ वेऽपि (वेति) च्चेदाज्यशेषं तु जीवं (त चाऽऽज्यशेषेण जीव) प्रयोगपारिजाते.

(२) प्रपा. १६१; विपा. २४८ (=) बहुकन्या (बृहत्कन्यां).

(३) प्रपा. १६१; विपा. २४८ चोप (उप) चतुर्थपादे (चरुणा दैवतं नरः) एतदादयः सर्वे श्लोकाः प्रयोगपारिजाते.

(४) प्रपा. १६१; विपा. २४८.

(५) प्रपा. १६१; विपा. २४८ पुत्रं (पुत्रः) लभेत् (भवेत्).

(६) प्रपा. १६१; विपा. २४९ ष्यवन्तं पुत्रं (ष्मन्तं सुपुत्रं).

## देवरातः

अपत्यार्थे पालाशदलस्नापनम्

[1]पलाशदलसाहस्रात् सावित्रेण दलं प्रति ।
स्नापयेत्सपवित्रेण एकादश्यां प्रजार्थिनीम् ॥

## पितामहः

मन्त्रवशानं पुष्पाभावहेतुः, तद्दोषशान्त्यर्थं होम–दुर्गा-पूजन–दम्पतिभोजन–सौभाग्यवस्तुदानानि

[2]क्षुत्पिपासातुरं नारी भर्तारमवमत्य या ।
मिष्टान्नं स्वयमश्नाति तेनापुष्पवती भवेत् ॥
तस्याः शान्तिं प्रवक्ष्यामि सविधानं द्विजोत्तम।
पायसं जुहुयात्तत्र मधुसर्पिःसमन्वितम् ॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
दुर्गां संपूजनीयाऽत्र नवग्रहपुरःसरम् ॥
मिथुनानि च पञ्चाशद्भोजयेन्मिष्टमन्नकम् ।
दद्यात्सौभाग्यवस्तूनि तेभ्यः शक्त्यनुसारतः ॥
इक्षवस्तवराजं च हरिद्रां चैव धान्यकम् ।
विकारवच्च गोक्षीरं कुसुम्भं कुसुमं तथा ।
लवणं चाष्टमं ह्येतत्सौभाग्याष्टकमुच्यते ॥

तवराजं सौभाग्यकरं सुवर्णद्रावकं द्रव्यं कर्पूरं शर्करा वा । विकारवद्गोक्षीरम् आमिक्षा दधि वा । एवं कृते विधाने तु चेद्रजोदर्शनाभावस्तदा शक्त्यनुसारेण कर्मणावृत्तिः कार्या । विपा. ४१

## मुद्गलः

पुत्रप्राप्त्यर्थमौषधम्

[3]वटाग्रं निम्बबीजं च स्तन्येन पयसा पिबेत् ।
पुत्रं प्रसूयते नारी दैवदोषं प्रमुञ्चति ॥

(१) प्रपा. १६१ र्थिनीम् ( र्थिनी ) देवलः ; संप्र. २०४ स्नाप ( स्नप ) देवरामः ; विपा. २५० संप्रवत्, देवराजः ; संर. ७६६ संप्रवत् प्रपावच्च.

(२) विपा. ४०–४१.

(३) प्रपा. १६१ प्रमु ( विमु ) ; संप्र. २०४ ; विपा. २४९ वं च स्तन्येन ( जेन गव्येन ) चतुर्थपादे ( दैवदोषो विमुच्यते ).

## वायुपुराणम्

गर्भस्रावकरदोषपरिहारार्थं होमपूर्वकं काञ्चनयज्ञोपवीत–राजतोत्तरीयकदानम्

[1]यज्ञोपवीतं कुर्वीत काञ्चनं तु स्वशक्तितः ।
अत्यन्तवर्णयुक्तं च राजतं चोत्तरीयकम् ॥

अत्यन्तवर्णयुक्तेन काञ्चनेनेति पूर्वेणान्वयः । तथैव समीचीनं राजतमुत्तरीयं च कुर्यात् । † विपा. २३६

[2]पलार्धेन तदर्धेन तदर्धेनाथवा पुनः ।
ग्रन्थिप्रदेशे देयं तु मौक्तिकं वज्रमेव च ॥

उभयोरपि प्रमाणमाह– पलेति । पलादिलक्षणं च परिभाषायामुक्तम् । यज्ञोपवीतस्य ग्रन्थिप्रदेशे मौक्तिकं देयमुत्तरीयस्य तु वज्रमिति विवेकः । † विपा. २३६

[3]प्रक्षाल्य पञ्चगव्येन गायत्र्या ताम्रभाजने ।
द्रोणप्रमाणं तस्मिंस्तु निक्षिपेद्दधि मध्यतः ॥
[4]आज्यस्योपरि संस्थाप्यमुपवीतं सुपूजितम् ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैरपि भक्तितः ॥

(१) पञ्चगव्यस्नाने गायत्र्या मन्त्रत्वेनोपादानादवशिष्टपूजायामपि सैव मन्त्रः । एवं प्रक्षालितमुपवीतमुत्तरीयं च ताम्रभाजने निक्षिपेत् । कथमित्यत आह–द्रोणप्रमाणमित्यादि । अयमर्थः– द्रोणप्रमाणं दधि तस्मिंस्ताम्रभाजने मध्ये निक्षिप्य दध्न उपरि तत्परिमाणं यथालाभोपपन्नप्रमाणं वा आज्यं स्थापयेत् । तत्राऽऽज्ये उपवीत-

† संकौ. विपावत् ।

(१) विपा. २३६ तु ( च ) व्याख्यानात्तु 'काञ्चनं तु' इत्यत्र 'काञ्चनेन' इति पाठः प्रतीयते, युक्तं च ( युक्तेन ) एतदादीनां 'धनान्यपि०' इत्यन्तानां श्लोकानां 'मदनमहार्णवे वृद्धगौतमीये' इति निर्देशः ; संकौ. ५२.

(२) विपा. २३६ तदर्धेनाथवा ( तदर्धार्धेन वा ) ; संकौ. ५२.

(३) विपा. २३६ ; संकौ. ५२.

(४) विपा. २३७ ; संकौ. ५२ स्थाप्यमु ( स्थाप्य सु ).

मुत्तरीयं च स्थापयेत् । तदुपवीतं गन्धपुष्पादिभिः सुपूजितं कुर्यात् । साहचर्यादुत्तरीयमपि तथैव पूजनीयमित्यायातम् । विपा. २३७

(२) गायत्र्येत्यस्य प्रक्षाल्येत्यनेनान्वयः । ५२

प्रस्थमाढकं द्रोणं च खारिका चेति द्रोणपरिमाणम् ।

¶ संकौ. ५३

[१]ततो ब्राह्मणमाहूय होमं तत्र च कारयेत् ।
तिलैराज्येन मधुना मिश्रैरष्टोत्तरं शतम् ॥

[२]होममन्त्रा व्याहृतयो गायत्री वा भवेदिह ॥

[३]तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु ।
मन्त्रेणानेन विधिवत् प्राङ्मुखायोपवीतकम् ॥

[४] 'उपवीतं परमिदं ब्रह्मणा विधृतं पुरा ।
भवनौकाऽस्य दानेन गर्भं संधारयाम्यहम् ॥'

(१) भवनौकेति । भवे संसारे द्विजकर्मनिष्पादकत्वेन यतस्तारकमुपवीतमतो नौका । यद्वा भवः उत्पत्तिः, तस्यामनपत्यानामपत्योत्पत्तिदायकत्वेन नरकार्णवोत्तारकत्वान्नौरिव नौकेत्यर्थः । विपा. २३७–२३८

(२) मन्त्रः पूजायां गायत्र्येव । होमे तु व्याहृतयो गायत्री वा । स्त्र्यधिकारं चेदं कर्मेति महार्णवः । अतः पूजां भर्ता कुर्यात् । तदभावे ब्राह्मणः कुर्यात् । होमं तु ब्राह्मण एव, त्यागं भर्ता, तदभावे स्त्र्येव कुर्यात् । विधिवदिति पात्रस्य नामगोत्रोच्चारणादि, गर्भस्रावनिदानदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमिति फलसंकीर्तनम्, पात्रेण सावित्र्यादिपाठो यथाशक्तिदक्षिणादानं चेति प्राप्यते । मन्त्रे नौका दुःखतरणोपायभूता भवेत्यर्थः । संकौ. ५३

---

¶ शेषं विपावत् ।

(१) विपा. २३७ तत्र च (तत्रैव) ; संकौ. ५२.

(२) विपा. २३७ इदमर्धं कौस्तुभाद्भ्रष्टं स्यादिति व्याख्यानतो भाति.

(३) विपा. २३७ ; संकौ. ५२.

(४) विपा. २३७ ; संकौ. ५२ परमिदं (परिमितं) भवनौ (भव नौ) याम्यहम् (ये ह्यहम्).

[१]धनान्यपि ब्राह्मणेभ्यस्तस्मिन् काले प्रदापयेत् ।
अनुव्रज्य तथाऽऽचार्यं प्रणिपत्य क्षमापयेत् ।
गर्भस्रावकराद्दोषादेवं कृत्वा विमुच्यते ॥

आचार्योऽत्र दानपात्रम् । अस्मिन् कर्मणि स्त्रिया एव अधिकारः । विपा. २३८

चतुर्विधं वन्ध्यात्वम्, तत्परिहाराय पूजाहोमपूर्वकं सुवर्णसवत्सधेनुदानम्

[२]चतुर्विधा च या वन्ध्या भवेद्वत्सवियोजनात् ।
अनपत्या भवेद्वन्ध्या मृतवत्साऽपरा स्मृता ॥

[३]स्रवद्गर्भा तथैवान्या काकवन्ध्याऽपरा भवेत् ।
वक्ष्ये तस्याः प्रतीकारं तत्स्वरूपं निबोधय ॥

[४]हिरण्येन यथाशक्ति सवत्सां कारयेद्दृढाम् ।
धेनुं पलेन वत्सं च पादेन गुरुरब्रवीत् ॥

(१) हिरण्येन यथाशक्त्येति 'पलेन वा तदर्धेन तदर्धेनापि वा पुनः ।' इतिपरिभाषोक्तप्रकरेण कुर्यादित्यर्थः । संकौ. ३८

(२) धेनुं पलेन वत्सं च पादेनेति मुख्यकल्पप्रदर्शनार्थम् । § संर. ७११

[५]धेनुं रौप्यखुरां रत्नं तस्याः पुच्छे नियोजयेत् ।
घण्टां गले निबध्नीयात् सवत्सां प्राङ्मुखः सुधीः ॥

---

§ शेषं संकौवत् ।

(१) विपा. २३८ ; संकौ. ५२ व्रज्य तथाऽऽचार्य (व्रज्या तथा कार्या).

(२) विपा. १३० पू. ; संकौ. ३८ पू. ; संग. ४०४ च (तु) द्वत्सवि (त्सा च वि) पू. एतदादित्रयोदशश्लोक्याः 'वीरसिंहावलोके' इति निर्देशः ; संर. ७१०.

(३) संकौ. ३८ उत्त. ; संग. ४०४ वक्ष्ये (पक्षे) धय (धयेत्) उत्त. ; संर. ७१०.

(४) संकौ. ३८ शक्ति (शक्त्या) ; संग. ४०४ संकौवत् ; संर. ७१०.

(५) संकौ. ३८ रौप्य (रूप्य) ; संग. ४०४ निबध्नी (च बध्नी) सुधीः (शुचिः) ; संर. ७११.

[1]चन्दनागरुकर्पूरगन्धमाल्यैः सुशोभनैः ।
उपचारैः षोडशभिर्नैवेद्यं पायसं भवेत् ॥

[2]मोदकांश्च तथाऽपूपान् गुडं लवणमेव च ।
जीरकं च सुविस्तीर्णे शूर्पे वेणुमये दृढे ॥

[3]धेनोरेकं प्रदातव्यं ब्राह्मणस्त्रीषु चैव हि ।
षडष्टौ दश वा दद्यात्तदनन्तरमेव च ॥

उपचारैः षोडशभिरित्यत्र पूजयेदिति शेषः । मोदकादिभिः पूरितमेकं शूर्पं धेनोः पुरतः स्थापयित्वोक्तद्रव्यपूरितान्येव शूर्पाणि षडष्टौ दश वा समर्तृकाभ्यो ब्राह्मणीभ्यो दद्यादित्यर्थः । $ संको. ३८–३९

[4]ब्राह्मणं सर्वशास्त्रार्थकुशलं धर्मवेदिनम् ।
विद्याविनयसंपन्नं शान्तं चैव जितेन्द्रियम् ॥

[5]अलोलुपं सर्वजनप्रियं कल्मषवर्जितम् ।
आहूय भक्त्या संपूज्य वस्त्राद्यैर्गन्धपुष्पकैः ॥

[6]तेनैव कारयेत् पूजामावितो धेनुवत्सयोः ।
होमं च कारयेत्तत्र समिदाज्यचरूत्कटम् ।
सोमो धेनुमिति मन्त्रं समुच्चार्य ततः पुनः ॥

पूजायां च होमे च मन्त्रमाह– सोमो धेनुम् । होमे विनियुक्ताया अप्यस्याः संयोगपृथक्त्वन्यायेन धेनुरपि देवता । होममुत्कटं कारयेदित्यभिधानात् समिदादिभिः प्रत्येकमष्टोत्तरसहस्रं कुर्यात् । $ संको. ३९

[1]प्राङ्मुखायोपविष्टाय प्रदद्यात्तामुदङ्मुखः ।
मन्त्रेणानेन विधिवत् पुच्छं हस्ते निधाय च ॥

[2] 'धेनुर्याऽङ्गिरसां सत्रे प्रविष्टा सुरमेश्च या ।
दुहिता या तथा भानोरग्नेश्च वरुणस्य च ॥

[3]या वै गावः प्रवर्तन्ते वनेषूपवनेषु च ।
प्रीणन्तु ता मम गृहं पुत्रपौत्रप्रदाः सुखम् ॥
प्रयच्छन्तु दिवारात्रमविच्छेदं तथाऽन्वये ॥'

[4]एवं दत्त्वा तु तद्दानं प्रणिपत्य विसर्जयेत् ॥

## मार्कण्डेयपुराणम्

ऋतुहारिण्या दौःसहायाः शान्त्यर्थं तीर्थादिषु स्नापनम्

[5]अथ प्रवृत्ता( ? तथा प्रवृत्तं) सा ज्ञेया दौसहा (? दौःसहा ) ऋतुहारिणी ।
कुर्वीत तीर्थदेवौकश्चैत्यपर्वतसानुषु ॥
नदीसंगमस्थानेषु( ? स्नातेषु ) स्नापनं तत्प्रशान्तये ।
मन्त्रविद्भूततत्त्वज्ञः पर्वण्युषसि च द्विजः (? द्विज ) ।
चिकित्साज्ञश्च तच्छास्त्रसंप्रयुक्तैर्वरौषधैः ॥

---

$ संर. संकोवत् ।

(१) संको. ३८ ; संग. ४०४ कर्पूरग ( कर्पूरैर्ग ) ; संर. ७११.

(२) संको. ३८ प्रथमपादे ( मोदकं च तथाऽपूपं ) ; संग. ४०४ संकोवत्, पू. ; संर. ७११.

(३) संको. ३८ ; संर. ७११.

(४) संको. ३९ ; संग. ४०४ शास्त्रार्थकु ( शास्त्रं कु ) विनय ( विभव ) ; संर. ७११ धर्म ( सर्व ).

(५) संको. ३९ ; संग. ४०४ कल्मषवर्जितम् ( कलुषनाशनम् ) ; संर. ७११.

(६) संको. ३९ ; संग. ४०४ पूजामादि (पूजां पाद) धेनुमि ( धेनुरि ) पुनः ( पुमान् ) ; संर. ७११.

$ संर. संकोवत् ।

¶ अस्मात् पूर्वम् ' स्त्रीणां पुष्पं हरत्यन्या प्रवृत्तं सा तु कन्यका । ' इत्यर्धं पुराणे विद्यते । अत्रत्याः शुद्धयः पुराणमनुसृत्य सूचिताः ।

(१) संको. ३९ णानेन ( ण तस्य ) ; संग. ४०४ पुच्छं हस्ते नि ( पुटहस्तं वि ) ; संर. ७११ संकोवत्.

(२) संको. ३९ ; संग. ४०४–४०५ पूर्वार्धे ( धेनुर्याऽङ्गिरसः सत्रे विष्णोश्च सुरभिश्च या । ) ; संर. ७११ तथा ( मया ).

(३) संको. ३९ ; संग. ४०५ या वै ( याश्च ) गृहं ( सदा ) पौत्रप्रदाः ( पौत्रैः सदा ) तथाऽन्वये ( च संततेः ) ; संर. ७११ ता मम गृहं ( तामनुगृहं ).

(४) संको. ३९ ; संग. ४०५ ; संर. ७१२.

(५) प्रपा. १०५.

## विष्णुपुराणम्

आत्मघातिनः प्रेतत्वनिवृत्त्यर्थं नारायणबलिविधानम्

[1]एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा ॥
दश पिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ।
तिलमिश्रान् प्रदद्याद्वै संयतो दक्षिणामुखः ॥
विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ।
नामगोत्रग्रहं तत्र पुष्पैरभ्यर्चनं तथा ॥
धूपदीपप्रदानं च भक्ष्यं भोज्यं तथा परम् ।
निमन्त्रयेत विप्रान् वै पञ्च सप्त नवापि वा ॥
विद्यातपःसमृद्धान् वै कुलोत्पन्नान् समाहितान् ।
अपरेऽहनि संप्राप्ते मध्याह्ने समुपोषितः ॥
विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् ।
उदङ्मुखान् यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
मनो निवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः ।
आवाहनादि यत् प्रोक्तं देवपूर्वं तदाचरेत् ॥
तृप्तान्ज्ञात्वा ततो विप्रांस्तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥
पञ्च पिण्डान् प्रदद्याच्च देवरूपमनुस्मरन् ।
प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ॥
यमाय सानुचराय चतुर्थं पिण्डमुत्सृजेत् ।
मृतं संकीर्त्य मनसा गोत्रपूर्वमतः परम् ।
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत् क्षिपेत् ॥
विप्रानाचम्य विधिवद्दक्षिणाभिः समर्चयेत् ।
एकं वृद्धतमं विप्रं हिरण्येन समर्चयेत् ॥
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ।
ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः ॥
क्षिपेयुर्गोत्रपूर्वं तु नाम बुद्धौ निवेश्य च ।
हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः ॥
मित्रभृत्यजनैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ॥
एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने ।
समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा ॥

(१) मिता. ३।६.

## लिङ्गपुराणम्

पुत्रप्राप्त्यर्थं संवत्सरं लिङ्गद्वयपूजनम्

[1]लिङ्गद्वयं प्रतिदिनं मल्लिकाभिः प्रपूजयेत् ।
अर्पयेद्गुडनैवेद्यमेवं संवत्सरं सुधीः ।
लिङ्गस्य पूजनं कुर्यात् पुत्र उत्पद्यते शुभः ॥

## स्कन्दपुराणम्

कन्याप्रसूत्व–मृतापत्यात्वहरं होमगर्भं पिप्पलपूजनम्

[2]यस्य स्त्री स्त्रीप्रसूर्नित्यं मृतापत्याऽथवा भवेत् ।
तेनाऽऽशु पिप्पलः पूज्यो यथाविधि फलेप्सुना ॥
भृगुवारे प्रदोषे च सायंविधिमुपास्य च ।
सभार्यः पिप्पलं गत्वा प्रार्थयेत समाहितः ॥
'बोधिद्रुम महावृक्ष महापापनिषूदन ।
नारायणस्वरूपस्त्वं क्षमां कुरु जगत्पते ॥'
इति संप्रार्थ्य तं वृक्षं कृत्वा चैव प्रदक्षिणम् ।
आलवाले जलं क्षिप्त्वा ततः स्वगृहमाव्रजेत् ॥
ब्रह्मचारी स्वपेद्रात्रौ सुप्त्वा भुवि हरिं स्मरेत् ।
निधाय तुलसीदाम कण्ठे मुद्रितलोचनः ॥
ततः प्रातः समुत्थाय स्नात्वा गङ्गाजले तिलैः ।
गच्छेतां दम्पती ब्रह्मन् पिप्पलान्तिकमादरात् ॥
विष्णोर्नामसहस्रं च जपेत्तत्र समाहितः ।
कुर्यात् संमार्जनं तत्र ह्यासमन्तात्तरोरधः ॥
विकीर्य तत्र पुष्पाणि चन्दनं च विशेषतः ।
कुङ्कुमं केशरं चैव पिप्पलाङ्गे विलेपयेत् ।
आलवाले क्षिपेद्वारि क्षीरं दधि घृतं मधु ॥
ततस्तु स्थण्डिलं कृत्वा सावकाशं शुचिव्रतः ।
आरभेद्धवनं सम्यक् स्वस्तिवाचनपूर्वकम् ।
तद्विष्णोरिति मन्त्रेण पायसं जुहुयात्सुधीः ॥
अयुतं वा सहस्रं वा यथाविभवसारतः ।
मातुलुङ्गैस्ततः कुर्याद्धवनं शतसंख्यया ॥

(१) संर. ७१६.
(२) विधा. १७१–१७५.

उद्देशो विष्णुदैवत्यो द्रव्याणां हवने स्मृतः ।
धात्रीफलैस्तथा द्राक्षाफलैः खर्जूरकैस्तथा ॥
इक्षुदण्डैश्च कदलैः शतसंख्यैः पृथक् पृथक् ।
जाते तु हवने तस्मिन् सूत्रैरावेष्टयेत्तरुम् ॥
गन्धपुष्पाक्षतैः सम्यग्वृक्षाङ्गं तत्समर्चयेत् ।
दशाङ्गैर्धूपयेद्धूपैर्दीपैर्नीराजयेत्सुधीः ॥
नैवेद्यैर्विविधैर्भक्त्या ताम्बूलेन च तोषयेत् ।
ततो नीराजनं कृत्वा प्रार्थयेतां समाहितौ ॥
'बोधिद्रुम महावृक्ष महापापनिषूदन ।
पुत्रान्देहि जगन्नाथ कुरु मां जीवसंततिम् ॥'
इति प्रार्थ्य च नत्वा च आचार्यं पूजयेत्ततः ।
वस्त्रयुग्मं च धेनुं च दद्यादाचार्यतुष्टये ॥
'आचार्यस्त्वं महाविष्णुराचार्यानीयमङ्घिजा ।
दत्तं मे संततिं श्रेष्ठां प्रसन्नेनैव चेतसा ॥'
पर्यङ्कादि ततो धान्यं दत्त्वा भूरि च दक्षिणाम् ।
ततः स्वगृहमागत्य ब्राह्मणान्भोजयेत्सुधीः ॥
चतुर्विंशतिसंख्याका विष्णुमूर्तीरनुस्मरन् ।
प्रथमं केशवं विद्याद्द्वितीयं मधुसूदनम् ॥
संकर्षणं तृतीयं च दामोदरमतः परम् ।
वामनं पञ्चमं विद्यात्षष्ठं प्रद्युम्नसंज्ञकम् ॥
सप्तमं विष्णुनामानं माधवं चाष्टमं तथा ।
नवमं चानिरुद्धाख्यं दशमं पुरुषोत्तमम् ॥
एकादशमधोक्षजं द्वादशं च जनार्दनम् ।
त्रयोदशं च गोविन्दं त्रिविक्रममतः परम् ॥
श्रीधरं पञ्चदशमं हृषीकेशं च षोडशम् ।
सप्तदशं नृसिंहं च वासुदेवमतः परम् ॥
अतः परं पद्मनाभं विष्णुं विंशतिमं तथा ।
एकविंशतिमं विद्यादुपेन्द्रं जगतः प्रभुम् ॥
हरिं द्वाविंशतिमितं द्वौ तथाऽच्युतकृष्णकौ ।
भुक्तवन्तस्ततस्ते तु संतुष्टा दद्युराशिषः ॥
एवं कृते विधानेऽस्मिन् श्रेष्ठे पिप्पलपूजने ।
जायते पुत्रसंतानमक्षयं गुणवत्तमम् ॥

पुत्राद्यर्थं पूजा–प्रदक्षिणा–स्तुतिपाठ–होम–तर्पण–नमस्कार–ब्राह्मणभोजन–सपीठसुवर्णाश्वत्थदान-रूपाऽश्वत्थसेवा, कर्मसाद्गुण्यार्थं सुवर्णाश्वत्थस्य गोश्च दानम्

पिप्पलादिरुवाच–
[1]'भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
स्त्रीणां पुत्रविहीनानां नारीणां विहिता यदि ॥
केनोपायेन मे ब्रूहि सुखसिद्धिः कथं भवेत् ।
कृपया परया देव तद्व्रतं ब्रूहि नः प्रभो ॥
अथर्वोवाच–
पुरा ब्रह्मादयो देवाः सर्वे विष्णुं समाश्रिताः ।
पप्रच्छुर्देवदेवेशं राक्षसैः पीडिता वयम् ।
कथं दुःखोपशमनमस्माकं ब्रूहि तत् प्रभो ॥
श्रीविष्णुरुवाच–
अहमश्वत्थरूपेण संभवामि च भूतले ।
तस्मात्सर्वप्रयत्नेन कुरुध्वं तरुसेवनम् ॥
तेन सर्वाणि भद्राणि भविष्यन्ति न संशयः ।
विष्णुर्यदुक्तवांस्तेभ्यस्तद्वृत्तं ते वदाम्यहम् ॥
न दानैर्न तपोभिश्च नाध्वरैर्भूरिदक्षिणैः ।
अश्वत्थसेवनादन्यत् कलौ नास्ति प्रतिक्रिया ॥
तद्विधानं निमित्तानि संख्यां तृप्तिं च पूजनम् ।
हवनं तर्पणं विप्रभोजनं नियमं तथा ॥
व्रताधिकारिणस्तत्र नतिं दानं विशेषतः ।
एतत्सर्वं पिप्पलादेस्तव वक्ष्यामि सुव्रत ॥
दारुणैर्विविधोत्पातैर्दिव्यभौमान्तरिक्षजैः ।
परचक्रभये देशे विप्लवे शत्रुविग्रहे ॥
दुःस्वप्ने दुर्निमित्ते च संग्रामेऽद्भुतदर्शने ।
मारीभये राजभये तथा चौराग्निजे भये ॥
क्षयापस्मारकुष्ठादिप्रमेहे विविधज्वरे ।
उदरे मूत्रकृच्छ्रे च ग्रहग्रस्ते तथैव च ॥
अन्येष्वनुक्तरोगेषु व्रणरोगे तथैव च ।
एतेषां रोगनाशाय कुर्यादश्वत्थसेवनम् ॥

(१) विपा. १८०–१८५.

प्रातरुत्थाय नद्यादौ स्नात्वाऽऽचम्य कृतक्रियः ।
अश्वत्थदेशमाश्रित्य गोमयेनोपलेपयेत् ॥
तमश्वत्थमलंकृत्य शुद्धायां गैरिकेण च ।
पूजाद्रव्याणि संपाद्य पुण्याहं वाचयेत्ततः ॥
ऋत्विजां वरणं कृत्वा ततः पूजां समाचरेत् ।
आराधयेद्यथा विष्णुं ध्यानावाहनपूर्वकम् ।
तथैव पिप्पलतरुं नारायणमयं द्विजः ॥
श्वेतगन्धाक्षतैः पुष्पैर्धूपदीपनिवेदनैः ।
अर्चेत्पूरुषसूक्तेन तथैव ध्यानपूर्वकम् ।
तेनैवाऽऽवाहनं कुर्यात्तर्पणं च नमस्क्रियाम् ॥
श्वेतवर्णं सलक्ष्मीकं चिन्तयेत् पुरुषोत्तमम् ।
इति ध्यात्वाऽऽवाहनादि उ( ? पैरु )पचारैश्च षोडशैः ॥

पूजयेदिति शेषः । विपा. १८२

ततः प्रदक्षिणं कुर्यादश्वत्थस्य शनैः शनैः ।
यदि शीघ्रेण कुर्यात्तु तत्सर्वं निष्फलं भवेत् ॥
लक्षमेकं द्विलक्षं वा त्रिचतुःपञ्चलक्षकम् ।
कार्यस्य गौरवं ज्ञात्वा द्वादशान्तं समाचरेत् ॥
ब्रह्मचारी हविष्याशी त्वधःशायी जितेन्द्रियः ।
मौनी ध्यानपरो भूत्वा पिप्पलस्य स्तुतिं पठेत् ॥
विष्णोर्नामसहस्रं च पौरुषं वैष्णवं तथा ।
वेदत्रयस्य पुण्यानि सूक्तानि च पठेत् पुनः ॥
तस्य लक्षदशांशेन सघृतं पायसं चरुम् ।
जुहुयात् पञ्च( ? ) वह्नौ च स्वगृह्योक्तविधानतः ॥
तत्संख्यया तर्पणं च कुर्याच्छुद्धेन वारिणा ।
उक्तषोडशभिर्ऋग्भिः कुर्यात् प्रतिदिनं नतिम् ॥
हवनस्य दशांशेन मिष्टान्नं भोजयेद्द्विजान् ।
ब्राह्मणानां स्वयं कुर्याद्यथोक्तनियमं तथा ॥
असमर्थश्च तत् कर्तुं सर्वमन्येन कारयेत् ।
क्षत्रियादित्रिवर्णानां ततो न्यूनं न कारयेत् ॥
उक्तप्रमाणादधिकं फलं दशगुणं भवेत् ।
ततश्चतुर्गुणं पीठं राजतं चतुरस्रकम् ॥
द्रोणमर्धं तदर्धं वा तिलानुपरि निक्षिपेत् ।
श्वेतवस्त्रेण संछाद्य पूर्ववत् पूजयेत्तरुम् ॥

दरिद्राय सुशीलाय श्रोत्रियाय कुटुम्बिने ।
उदङ्मुखाय विप्राय स्वयं पूर्वमुखः स्थितः ।
सुवर्णवृक्षराजं च यत्नेन प्रतिपादयेत् ॥
' इह जन्मनि चान्यस्मिन् बाल्यकौमारवार्धके ।
मनोवाक्कायजं दोषं त्वं प्रणाशय पिप्पल ॥
पिप्पलो वृक्षराजेन्द्रो ह्यग्निगर्भस्त्वमेव हि ।
प्रभुर्वनस्पतीनां च पूर्वजन्मनि यत् कृतम् ।
अघौघं नाशय क्षिप्रं तव रूपप्रदानतः ॥ '
' अमुं तरुं गृहाण त्वं विष्णुरूप द्विजोत्तम ।
स्वीकृत्य दुष्कृतं घोरं क्षिप्रं नाशय मे प्रभो ॥ '

अथ दानमन्त्रः– अमुं तरुमिति । विपा. १८४

क्षत्रादीतरवर्णानामयमेव विधिः स्मृतः ।
अर्चायां नाधिकारोऽस्ति स्त्रीणां विप्रेण कारयेत् ॥
एवं कृत्वा व्रतं सम्यग्व्रतस्य परिपूर्तये ।
हेमाश्वत्थतरुं दद्याच्छुक्लां गां च पयस्विनीम् ॥
स्वर्णशृङ्गीं रौप्यखुरां वस्त्रादिभिरलंकृताम् ।
पलमेकं तदर्धं वा तदर्धार्धेन वा पुनः ॥
हेमाश्वत्थतरुं कुर्यात् स्कन्धशाखासमन्वितम् ॥
उत्तमः प्रथमः कल्पो द्वितीयो मध्यमस्तथा ।
तृतीयस्त्वधमः प्रोक्तो दरिद्राणां न चान्यथा ॥
एवं व्रतं यः कुरुते तस्य पुण्यफलं शृणु ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥
कन्यार्थी लभते कन्यां बद्धो मुच्येत बन्धनात् ।
क्षयापस्मारकुष्ठादिसर्वरोगैः प्रमुच्यते ॥
डाकिनीशाकिनीभूतप्रेतराक्षसपीडिताः ।
इमं विधिमनुष्ठाय भवन्ति सुखिनो नराः ॥
न तेषां शत्रुपीडा च न च राजभयं तथा ।
इह जन्मनि वाऽन्यस्मिन् कृतैः पापैः प्रमुच्यते ॥
यं यं कामयते कामं तं तमाप्नोत्यसंशयम् ।
इहैव भोगान् भुक्त्वाऽन्ते विष्णोः सायुज्यमाप्नुयात् ॥

पुत्रप्राप्त्यर्थं संवत्सरं लिङ्गपूजोत्तरजप्यमभिलाषाष्टकम्

**विश्वानर उवाच–**

[१] 'एकं ब्रह्मैवाद्वितीयं समस्तं
सत्यं सत्यं नेह नानाऽस्ति किंचित् ।
एको रुद्रो न द्वितीयोऽवतस्थे
तस्मादेकं त्वां प्रपद्ये महेशम् ॥

[२]एकः कर्ता त्वं हि विश्वस्य शंभो
नानारूपेष्वेकरूपोऽस्यरूपः ।
यद्वत्प्रत्यम्ब्वर्क एकोऽप्यनेक-
स्तस्मान्नान्यं त्वां विनेशं प्रपद्ये ॥

[३]रज्जौ सर्पः शुक्तिकायां च रौप्यं
नैरः पूरस्तन्मृगाख्ये मरीचौ ।
यद्वत्तद्वद्विष्वगेष प्रपञ्चो
यस्मिञ्ज्ञाते तं प्रपद्ये महेशम् ॥

[४]तोये शैत्यं दाहकत्वं च वह्नौ
तापो भानौ शीतभानौ प्रसादः ।
पुष्पे गन्धो दुग्धमध्ये च सर्पि-
र्यत्तच्छंभो त्वं ततस्त्वां प्रपद्ये ॥

शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रे-
रघ्राणस्त्वं व्यङ्घ्रिरायासि दूरात् ।
व्यक्षः पश्येस्त्वं रसज्ञोऽप्यजिह्वः
कस्त्वां सम्यग्वेत्त्यतस्त्वां प्रपद्ये ॥

[५]नो वेदस्त्वामीश साक्षाद्धि वेद
नो वा विष्णुर्नो विधाताऽखिलस्य ।
नो योगीन्द्रा नेन्द्रमुख्याश्च देवा
भक्तो वेद त्वामतस्त्वां प्रपद्ये ॥

(१) संको. ४२ ; संर. ७१८ रुद्रो ( देवो ).

(२) संको. ४२ ; संर. ७१८ विश्वस्य ( सर्वस्य ) स्यरूपः ( प्यरूपः ).

(३) संको. ४२ ; संर. ७१८ रौप्यं ( रूप्यं ).

(४) संको. ४२ ; संर. ७१८.

(५) संको. ४२ ; संर. ७१८ द्धि वेद ( द्विवेद ).

[१]नो ते गोत्रं नापि जन्मापि नाऽऽख्या
नो वा रूपं नैव शीलं न देशः ।
इत्थंभूतोऽपीश्वरस्त्वं त्रिलोक्याः
सर्वान् कामान् पूरयेस्तद् भजे त्वाम् ॥

त्वत्तः सर्वं त्वं हि सर्वं स्मरारे
त्वं गौरीशस्त्वं च नग्नोऽतिशान्तः ।
त्वं वै वृद्धस्त्वं युवा त्वं च बाल-
स्तत् किं यत्त्वं नास्यतस्त्वां नतोऽस्मि ॥'

स्तुत्वेति भूमौ निपपात विप्रः
स दण्डवद्यावदतीव हृष्टः ।
तावत्स बालोऽखिलवृद्धवृद्धः
प्रोवाच भूदेव वरं वृणीहि ॥

तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती ।
प्रत्यब्रवीत् किमज्ञातं सर्वज्ञस्य तव प्रभो ॥

[२]सर्वान्तरात्मा भगवाञ्छर्वः सर्वप्रदो भवान् ।
याच्ञां प्रतिनियुङ्क्ते मां किमीशो दैन्यकारिणीम् ॥

[३]इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह ।
शुचेः शुचिव्रतस्याथ शुचि स्मित्वाऽब्रवीच्छिशुः ॥

**बाल उवाच–**

[४]त्वया शुचे शुचिष्मत्यां योऽभिलाषः कृतो हृदि ।
अचिरेणैव कालेन स भविष्यत्यसंशयम् ॥

[५]तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते ।
ख्यातो गृहपतिर्नाम्ना शुचिः सर्वामरप्रियः ॥

(१) संको. ४२–४३ ; संर. ७१८–७१९.

(२) संको. ४३ ; संर. ७१९ ञ्छर्वः ( न्सर्वः ) याच्ञां ( याच्ञा ) युङ्क्ते ( युक्ता ) मीशो ( मीशे ).

(३) संको. ४३ ; संर. ७१९ च्छिशुः ( च्छुचिः ).

(४) संको. ४३ शयम् ( शयः ) ; संर. ७१९ शुचे ( शुचेः ).

(५) संको. ४३ ; संर. ७१९.

अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम् ।
अब्दं त्रिकालपठनात् कामदं शिवसंनिधौ ॥
एतत्स्तोत्रस्य पठनं पुत्रपौत्रधनप्रदम् ।
सर्वशान्तिकरं वाऽपि सर्वापत्प( ? त्व )रि-
नाशनम् ।
स्वर्गापवर्गसंपत्तिकारकं नात्र संशयः ॥
प्रातरुत्थाय सुस्नातो लिङ्गमभ्यर्च्य शांभवम् ।
वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान् भवेत् ॥
वैशाखे कार्तिके माघे विशेषनियमैर्युतः ।
यः पठेत् स्नानसमये लभते सकलं फलम् ॥
कार्तिकस्य तु मासस्य प्रसादादहमव्ययः ।
तव पुत्रत्वमेष्यामि यस्त्वन्यस्तत्पठिष्यति ॥
अभिलाषाष्टकमिदं न देयं यस्य कस्यचित् ।
गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत् ॥
स्त्रिया वा पुरुषेणापि नियमाल्लिङ्गसंनिधौ ।
अब्दं जप्तमिदं स्तोत्रं पुत्रदं नात्र संशयः ॥
इत्युक्त्वाऽन्तर्दधे बालः सोऽपि विप्रो गृहं गतः ॥

पार्थिवपूजां प्रत्यहं कृत्वाऽभिलाषाष्टकजपं §वा संवत्सरं कुर्यात् । तद्यथा– विश्वानर उवाच– एकं ब्रह्मैवेति ।

संको. ४२

गर्भरक्षार्थं ब्राह्मणसुवासिनीभ्यो दानानि

†[1]नाधः शयीत विप्रेभ्यो दद्याद्भक्त्यनुसारतः ।
स्वेष्टवस्तुसुगन्धानि ताम्बूलं चाष्टमङ्गलम् ।
तृतीयमासे कूष्माण्डफलं दद्यान्मनोहरम् ॥
दद्यात्सुवासिनीभ्योऽपि लभेत्ताभ्यः सदाशिषः ।
गर्भसंरक्षणार्थाय न कुर्यान्नखकृन्तनम् ॥

§ संवत्सरानुष्ठेयपार्थिवपूजापूर्वकाभिलाषाष्टकजपात्मकस्य कर्मणः पूर्वोक्तपुत्रप्राप्त्युपायैः सह विकल्पोऽत्र वाशब्दबोध्यः ।

† प्रयोगपारिजातेऽन्यत्र वचनान्तराणाम् ‘ स्कान्दे कपिलसंहितायाम् ’ इत्याकरनिर्देशादत्र कपिलसंहिताया इमानि वचनानि स्कन्दपुराणे संगृहीतानि । स्कन्दपुराणे कपिलसंहिता इदानीं नोपलभ्यते ।

(१) प्रपा. १२६ कपिलसंहितायाम्.

हरिद्रां कर्णपत्रं च गुडो जीरक एव च ।
लाजाश्च लवणं पुष्पं फलमित्यष्टमङ्गलम् ॥
सूक्ष्मवस्त्रेण संवेष्ट्य गन्धपुष्पाक्षतादिभिः ।
अभ्यर्च्यैकं विधानेन द्वौ वा द्विजवराय वा ॥
सुवासिनीभ्यो वैतेषां यथालाभं प्रदीयते ।
शक्त्या फलं फले यद्वा बहूनि सुखसिद्धये ॥
मासे तृतीये त्वभ्यर्च्य दद्याद्दाडिममुत्तमम् ।
चतुर्थे मातुलिङ्गं च नारिकेलं च पञ्चमे ॥
षष्ठे तु पनसं चूतं सप्तमे मासि चाष्टमे ।
लिकुचं नवमे मासि कदलीफलगुच्छकम् ॥
सर्वदा सर्वमासेषु प्रशस्तं कदलीफलम् ।
एवं दानेन नारीणां संततिप्रतिबन्धकाः ।
नश्यन्ति संततिं शुद्धां यास्यन्ति शुभकर्मभिः ॥

## शिवपुराणम्

पार्थिवलिङ्गार्थे मृदाहरणविधिः पार्थिवपूजायां जपापेक्षया दशांशं तर्पणं दशांशं मार्जनं च

[1]शुचिदेशसमुद्भूतां मृदमाहारयेत्ततः ।
[2]‘ श्रीअष्टमूर्तये नमः ’ –
इत्येतेन च मन्त्रेण मृदमादाय यत्नतः ।
संशोध्य मृत्तिकां तत्र स्थापयेद्विधिवत् पुमान् ॥
अथवा कृष्णपक्षस्य चतुर्दश्यां समानयेत् ।
पुनश्च मासमात्रेण ह्याहरेत्तावदेव हि ॥
[3]यथाशक्ति जपं कृत्वा तर्पणं तद्दशांशकम् ।
मार्जनं च दशांशं च कुर्याच्छिवहितेच्छया ॥

तर्पणमार्जनयोरसंभवे चतुर्गुणो द्विगुणो वा जप इति सामान्यतः ।

संर. ७१६

## शिवधर्मपुराणम्

वालुकामयस्य पार्थिवस्य वा लिङ्गस्य सहस्रपूजनादिष्टसिद्धिः

[1]वालुकानि च लिङ्गानि कारयेत् पार्थिवानि च ।
सहस्रपूजनात् सोऽपि लभते वाञ्छितं फलम् ॥

(१) संर. ७१५.
(२) संर. ७१६.
(३) संर. ७१४.

## विष्णुधर्मोत्तरपुराणम्

वन्ध्यात्वस्य कारणानि, चतुर्विधं वन्ध्यात्वम्, तत्परिहारकविष्णुश्राद्धस्य विधानम्

दाल्भ्य उवाच—

'केन कर्मविपाकेन म्रियन्ते शिशवः प्रभो ।
गर्भादि स्रवते तद्वदनपत्योऽपि जायते ॥

श्रीभगवानुवाच—

साधु पृष्टं त्वया विप्र प्राणिनां हितकाम्यया ।
तत् सर्वं कथयिष्यामि विस्तरेण महामुने ॥

कूटवादरता ये च ये च ब्राह्मणनिन्दकाः ।
ब्रह्मस्वहारिणः क्रूरा वाग्दत्तस्यापहारकाः ॥

अनाचाराः कृतघ्नाश्च अशास्त्रप्राणिघातकाः ।
परदाररता ये च सर्वधर्मबहिष्कृताः ॥

मिथ्याऽभिशंसिनो ये च चौरकर्मरताश्च ये ।
ते सर्वे पापकर्माणः पतन्ति नरके ध्रुवम् ॥

पुनः पुनः समायान्ति ह्युदरं प्रति पापिनः ।
अल्पायुषोऽपि जायन्ते ये नरा नरकागताः ॥

मुक्तास्ततः पतन्तीमं गर्भवासं पुनः पुनः ।
अन्धाः कुब्जाश्च विकृता विकृताङ्गा नराधमाः ।
व्याधिता व्याधिरूपेण दृश्यन्तेऽद्यापि भूतले ॥

दाल्भ्य उवाच—

पापिनो ये त्वया प्रोक्तास्तेषां वै निष्कृतिं स्वयम् ।
कथयस्व महाभाग प्राणिनां हितकाम्यया ॥

श्रीभगवानुवाच—

येन मुक्तिर्भवेत्तेषां पापिष्ठानां च शाश्वती ।
कथयिष्याम्यहं विप्र विधानं तव सुव्रत ॥

'वन्ध्या च काकवन्ध्या च स्त्रीप्रसूश्च मृतप्रजा ।
एषा चतुर्विधा वन्ध्या तस्याः शान्तिकमीर्यते ॥

'ये दोषा गर्भसंभूता ये दोषा बीजिनस्तथा ।
ते सर्वे नाशमायान्ति विष्णुश्राद्धप्रसादतः ॥
विष्णुश्राद्धं ततः कुर्यादङ्गानुष्ठानपूर्वकम् ।
अशून्यमासे कर्तव्यमथ वैवाहिकेषु वा ॥
आत्मशुद्धिं ततः कुर्यात् सर्वपातकनाशनीम् ।
तेषां तत्पापशान्त्यर्थं प्रायश्चित्तमिहोच्यते ॥
'कुर्यादादावेकचान्द्रं चान्द्रद्वयमथापि वा ।
कार्यं धेनुसुवर्णेन धान्यतीर्थैः स्वशक्तितः ॥

'वन्ध्या च काकवन्ध्या च०' इति प्रक्रम्य विष्णुश्राद्धोपदेशात् चतुर्विधवन्ध्यात्वनिराकरणार्थत्वं विष्णुश्राद्धस्य । तत्र 'अर्वाक् तु ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत् ।' इत्युक्तत्वात् षडब्दं तदर्धं त्र्यब्दं तदर्धं सार्धाब्दं वा कृत्वा तत्राप्यशक्तौ 'कुर्यादादौ च चान्द्रं च चान्द्रद्वयमथापि वा । प्रायश्चित्तमिदं कृत्वा विष्णुश्राद्धं समाचरेत् ॥' इत्युक्तेश्चान्द्रायणे चान्द्रायणं वा यथाशक्तिपर्षदुपस्थानादिप्रकारेण गृहीत्वा मृत्तिकास्नानादिपञ्चगव्यादिप्रकारेण च साङ्गं प्रायश्चित्तं विधाय पश्चाच्छ्राद्धमनुष्ठेयम् । तत्र '$ रुद्रस्नानविधिं वक्ष्ये' इत्युपक्रम्य 'एतद्विधानपूर्वं तु विष्णुश्राद्धं समाचरेत् ।' इत्युक्तत्वादादौ रुद्रस्नानं कार्यम् । १३१

अत्रा(१ था)पित्राद्यब्दादब्दसार्धाब्दत्र्यब्दादयः पक्षा यथाशक्ति योज्याः । व्युत्क्रमेण च योजना ।

विपा. १३४

'प्रायश्चित्तमिदं कृत्वा विष्णुश्राद्धं समाचरेत् ।
इति बौधायनः प्राह शास्त्रोक्तं धर्मतत्परः ॥
'अष्टमीं तु समासाद्य रुद्रस्नानं समाचरेत् ।
एकादशीं समासाद्य कृष्णपक्षस्य वै तिथिम् ॥

(१) विपा. १३३–१३४.

(२) विपा. १३१ (=) एषा (एवं), १३४.

$ एतानि रुद्रस्नानविधिवचनानि अनिर्दिष्टकर्तृकवचनेषु द्रष्टव्यानि ।

(१) विपा. १३४.

(२) विपा. १३१ (=) दावेकचान्द्रं (दौ च चान्द्रं च) पू., १३४.

(३) विपा. १३१ (–) पू., १३४.

(४) विपा. १३४–१३६.

उपोष्य तत्र कर्तव्यं विष्णुश्राद्धं विधानतः ।
आदौ मृदादिभिः स्नात्वा स्वगृह्योक्तविधानतः ॥

देहशुद्धिं ततः कृत्वा कालतिथ्यादि संस्मरेत् ।
'आत्मनो बहुसद्वृत्तदीर्घायुःपुत्रलब्धये ।
गर्भदोषापहृतये विष्णुश्राद्धं समारभे ॥'

ततो नद्यादिषु स्नात्वा नित्यं कर्म विधाय च ।
देवागारं समासाद्य बध्नीयात् पुष्पमण्डपम् ॥

तदधस्तादुपाविश्य निशि संकल्पपूर्वकम् ।
पश्चादाचार्यवरणं फलं दत्त्वेति मन्त्रतः ॥

फलमिति वस्त्रासनभोजनादेरुपलक्षणम्, 'वृणुयाद्भक्तिनम्रः सन्' इत्यन्यत्रोक्तत्वात् । विपा. १३५

'गर्भदोषैर्बालनाशैः पीडितोऽस्मि द्विजाधिप ।
विष्णोः संपूजनं कृत्वा पूर्णान्कुरु मनोरथान् ॥'

इत्याचार्यं प्रणम्याथ मण्डपाधस्तु मण्डले ।
मध्ये तु तण्डुलैः पूर्णं कलशं स्थापयेद्धरेः ॥

वस्त्रयुग्मेन संवेष्ट्य तस्मिन् गरुडवाहनम् ।
रुक्मनिष्केण वाऽर्धेन तदर्धेनापि शक्तितः ।
निर्मितं स्थापयेत्तत्र सव्यदक्षिणतस्ततः ॥

सप्त धान्यमितान् राशीन् प्रत्येकं द्रोणसंमितान् ।
कृत्वा पुरुषसूक्तेन विष्णुं संपूजयेत्ततः ॥

उपचारैः षोडशभिरन्यैर्नामपदैः पृथक् ।
पञ्चामृतेन संस्नाप्य पूजां कुर्याच्च जागरम् ॥

पुरुषसूक्तेनेति पौराणमन्त्राणामुपलक्षणम् । तत्र त्रैवर्णिकानां वैदिकपौराणनाममन्त्राणां समुच्चयः । शूद्राणां तु वैदिकव्यतिरिक्तौ । विपा. १३६

तिलमाषयवव्रीहिकङ्गुश्यामाकमुद्गकाः ।
सप्तधान्यमिति प्रोक्तं प्रत्येकं द्रोणसंमितम् ॥

ततः प्रभाते नद्यादौ स्नात्वाऽऽमन्त्र्य द्विजाञ्शुचीन् ।
विष्णुभक्तिसमायुक्तान् सप्त पञ्च त्रयोऽपि वा ॥

त्रयः त्रीनित्यर्थः । द्वितीयार्थे प्रथमा । विपा. १३७

'निमन्त्रयामि वो विप्रा विष्णुश्राद्धे क्षणाय भोः ।
भस्मीकुरुत तान् दोषान् बाले गर्भे च ये स्थिताः ॥'

अनेनाऽऽमन्त्र्य मन्त्रेण दण्डवत् प्रणमेच्च तान् ।
कृत्वा नित्यक्रियां तद्वद्विष्ण्वादीनर्चयेत्ततः ॥

आमं शरावं देवस्य पुरतः स्थापयेत्ततः ।
नानागोत्रान् पितॄंस्तत्र मन्त्रेणाऽऽवाहयेदिति ॥

'कूटवादरता इत्यादि चौरकर्मरताश्च ये ।
ते सर्वे तुष्टिमायान्तु तृप्तिं तेषां करोम्यहम् ॥'

इत्याहूतान् गन्धपुष्पैरक्षताभिस्ततोऽर्चयेत् ।
घृतप्लुतेन चान्नेन आमपात्रं प्रपूज(?प्रपूर)येत् ॥

तिलदर्भयुतं तोयं गृहीत्वा पूर्ववत् पठेत् ।
मन्त्रानन्त्यार्धरहितांस्ततो मन्त्रमिमं पठेत् ॥
'येऽत्र पात्रे स्थिता जीवाः पापिष्ठा दुःखभागिनः ।
अन्नं तेभ्यो मया दत्तमुपतिष्ठतु तृप्तये ॥'

इति संकल्प्य तत्तोयं करस्थं तत्र निक्षिपेत् ।
ततो होमं प्रकुर्वीत चर्वश्वत्थसमित्तिलैः ॥

इदं विष्णुरिमं मन्त्रमुच्चार्याष्टोत्तरं शतम् ।
प्रत्येकं होमकर्तृभ्यः शक्त्या देया च दक्षिणा ॥

प्रत्येकमिति चर्वादिभिः संबध्यते । विपा. १३७

पूर्णाहुतिं विधायाथ श्राद्धकर्म समाचरेत् ।
एकोद्दिष्टविधानेन विष्णुरूपमनुस्मरन् ॥

अनेकनामगोत्राणां विष्णुश्राद्धाधिकारिणाम् ।
पितॄणां विष्णुरूपाणामेकोद्दिष्टविधानतः ॥

विष्णुश्राद्धं करिष्येऽहमिति संकल्पमाचरेत् ।
उच्चार्य नामगोत्रादि एवं पाद्यादिषु क्रमात् ॥

तद्वद्भिभक्तिसहितं सर्वस्मिञ्छ्राद्धकर्मणि ।
आसनं भाजनं छत्रं तथोपानत्कमण्डलुम् ॥

दद्याच्च श्राद्धभोक्तृभ्यो दक्षिणाच्छादनादिकम् ।
परितोषकरं दत्त्वा भोक्तृसंख्यांश्च निर्वपेत् ॥

पिण्डानुद्दिश्य तान्नामशर्मगोत्रान्¶ पितॄन्भुवि ।
शर्कराघृतसंमिश्रांस्तिलपायससंमितान् ॥
[1]संपूर्णं वाचयित्वा तान् ब्राह्मणांश्च विसर्जयेत् ।
अन्नशेषं तु तत्सर्वं विप्रेभ्यः प्रतिपादयेत् ॥
मार्जयेच्छ्राद्धभूमिं च आचार्यं पूजयेत्ततः ।
पाद्यार्घ्यगन्धपुष्पाद्यैरुपचारैः स्वशक्तितः ॥
वस्त्रालंकारसहितैस्तस्य हस्ते जलं क्षिपेत् ।
शिवाः सन्त्वाप इत्युक्त्वा कुर्याद्गोपूजनं ततः ॥
स्वर्णशृङ्गीं रौप्यखुरीं ताम्रपृष्ठीं सवत्सकाम् ।
रत्नपुच्छां कांस्यदोहां‡ सवस्त्रां कल्पयेत्ततः ॥
अस्मा अमुकगोत्राय प्रवराय च शर्मणे ।
विप्राय गामिमां विष्णुदैवत्यां शक्त्युपस्कृताम् ॥
विष्णुश्राद्धाङ्गभूतां ते त्वहं त्वमुकगोत्रकः ।
तथा प्रवरशर्मात्मा चिरायुःपुत्रलब्धये ॥
सदक्षिणां संप्रदद इति मन्त्रं ततः पठेत् ।
गावो मे ह्यग्रतः सन्तु स्यामहं तत्प्रसादभाक् ॥
इति गां दक्षिणायुक्तां दत्त्वाऽमुं देवमर्चितम् ।
सप्तधान्यं सकलशं गृहाण त्वं द्विजोत्तम ॥
इति देवं निवेद्यास्मै दक्षिणां परितुष्टये ।
दक्षिणां ते संप्रददे न ममेति ततः पठेत् ॥
'भक्तिहीनं क्रियाहीनं मन्त्रहीनं सुरेश्वर ।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतो मम ॥'
इत्युक्त्वा दण्डवद्भूमावाचार्यं प्रणमेत्ततः ।
गृहीत्वाऽऽमं शरावं तमन्नपूर्णं नदीं व्रजेत् ॥
जलमध्ये जपेन्मन्त्रान् कृष्टवादरता इति ।
'विष्णुश्राद्धप्रसादेन सर्वे ते तारिता मया ।
उत्तमान् यान्तु ते लोकान् पापं न्यस्यामले जले ॥'
जपित्वेति शरावं तं सलिले स्थापयेत्ततः ।
शरावनाशपर्यन्तं जले स्थित्वा सचेलकम् ।
स्नात्वा धौताम्बरं धृत्वा चाऽऽगच्छेद्भवनं निजम् ॥
एवं यः कुरुते लोके विष्णुश्राद्धं हि मानवः ।
तस्य पुत्राः प्रजायन्ते सुशीलाश्च चिरायुषः ।
सुभगा धनसंपन्ना धर्मिष्ठाः सत्यवादिनः ॥

पुत्रप्रदमोषधिस्नानम्

[2]'तरुष्ककक्कोलकजातिपूगैः
फलैः समस्तैश्च$ सुतप्रदं स्यात् ॥

## भविष्यपुराणम्

पार्थिवलिङ्गपूजायामष्टमूर्तिपूजनम्

'[3]शर्वाय क्षितिमूर्तये नमः । भवाय जलमूर्तये नमः । रुद्रायाग्निमूर्तये नमः । उग्राय वायुमूर्तये नमः । भीमायाऽऽकाशमूर्तये नमः । पशुपतये यजमानमूर्तये नमः । महादेवाय सोममूर्तये नमः । ईशानाय सूर्यमूर्तये नमः ॥'
[3]पूज्या अष्टौ हरस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ॥

(१) अत्र 'न प्राचीमग्रतः शंभोः' इति रुद्रयामले निषेधान्नान्तरालं प्राची, किंतु प्रसिद्धैव । शूक. ३८

(२) विसर्जनात्पूर्वं वामावर्तेनाष्टमूर्तिपूजोक्ता भविष्ये—पूज्या इति । एताः वेद्याम्, लिङ्गे शिवं यजेदित्यर्थः । † संर. ७१६

पुत्रप्राप्त्यर्थं घटिकाभिषेकविधानम्

ईश्वर उवाच—
[4]'शृणु षण्मुख तत्त्वेन स्नानं घटिकया परम् ।

---

¶ नाम देवदत्तादि, शर्मेत्युपपदम्, गोत्रं च समभिव्याहृतानि सन्ति एषामित्यर्थआद्यजन्तत्वेन यथाकथंचिदुपपादनीयम् ।

‡ दोहशब्देनाऽऽपीनं विवक्षितं स्यात्, 'देहाम्' इति वा पाठः ।

$ संदर्भतोऽत्र स्नानमिति शेषः ।

† शेषं शूकवत् ।

(१) विपा. १८०.

(२) शूक. ३८.

(३) शूक. ३८ ( मूर्तयोऽष्टौ भवस्यैताः पूज्याः पूर्वादितः क्रमात् । आग्नेय्यान्तं प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ॥ ) ; संर. ७१६.

(४) विपा. १२५–१२६.

धारयिष्यन्ति ये वत्स घटिकां देवनिर्मिताम् ॥
तेषामर्थश्च कामश्च सौभाग्यं वृद्धिमेष्यति ।
पूर्वोक्तं मण्डलं कृत्वा गौरीं तत्रैव पूजयेत् ॥
स्वस्य वित्तानुसारेण वित्तशाठ्यं न कारयेत् ।
ईशान्यां दिशि संस्थाप्य घटिकां ¶मधुपूरिताम् ॥
पुष्पमाल्यैरलंकृत्य रक्तसूत्रेण वेष्टयेत् ।
हिरण्यं निक्षिपेत्तत्र न शून्यां कारयेद्बुधः ॥
वस्त्रेण तु समावृत्य गन्धांस्तत्रैव निक्षिपेत् ।
कुङ्कुमागुरुकर्पूरचन्दनेन विलेपयेत् ॥
उशीरं चन्दनं मुस्ता वालकं सर्वमौषधम् ।
तथा चाऽऽमलकं दूर्वाः क्षिपेद्गोरोचनां बुधः ॥
शतमष्टोत्तरं जप्त्वा गौर्या वै मूलविद्यया ।
ततोऽभिमन्त्र्य घटिकां गौरीमन्त्रेण तां पुनः ॥
शताष्टाधिकजप्तेन अभिमन्त्र्योदकं गुह ।
ततोऽभिषेकं कुर्याद्वै योषितो वा नरस्य च ॥
घटिकोदकसिक्ता वै या नारी मण्डले गुह ।
सुभगा वा भवेन्नित्यं नरश्चैव सदा गुह ।
अपुत्रा लभते पुत्रमजीवा जीविनी भवेत् ॥
अनेनैव विधानेन गुर्विणी यदि कारयेत् ।
पुत्रं प्रसूयते सा तु महावीर्यपराक्रमम् ।
राजा विजयमाप्नोति धारयित्वा सुसंगरे ॥
या तु रूपवती कन्या वरं च लभते यदा ।
तदा घटाभिषेकेण सौभाग्यमतुलं लभेत् ॥
येन येन हि भावेन घटिकां कारयेद्बुधः ।
तस्य तस्य हि भावेन तत्फलं लभते पुनः ॥
यत्तेनोक्तमथो किंचित् संक्षेपेण षडानन ।
तत् सर्वं मूलमाश्रित्य अनेनैव तु कारयेत् ॥

मूलमाश्रित्येति पूर्वोक्तमूलमन्त्रेणेत्यर्थः ।

विपा. १२६

¶ 'घटिकोदकसिक्ता' इत्युत्तरत्रोक्तेर्मधुशब्दोऽत्र जलवाचकः ।

न घटिकायाः परं किंचित् सौभाग्ये कारणं मतम् ।
न घटिकायाः परं स्कन्द धर्मकामार्थमोक्षदम् ॥
घटिकां धारयेद्यस्तु स कामान्निखिलांल्लभेत् ।
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ॥

## भविष्योत्तरपुराणम्

### मृतवत्सात्वादिहरं रुद्रस्नानविधानम्

[1]रुद्रस्नानं विधानेन कथयस्व जनार्दन ।
सर्वदोषोपशमनं सर्वशान्तिकरं नृणाम् ॥

श्रीकृष्ण उवाच—
देवसेनापतिं स्कन्दं रुद्रपुत्रं षडाननम् ।
अगस्त्यो मुनिशार्दूलः सुखासीनमुवाच ह ॥
सर्वज्ञोऽसि कुमार त्वं प्रसादाच्छंकरस्य वै ।
रुद्रस्नानं विधानेन ब्रूहि कस्य कथं भवेत् ॥

स्कन्द उवाच—
मृतवत्सा तु या नारी दुर्भगा ऋतुवर्जिता ।
या सूते कन्यकां वन्ध्या स्नानमासां विधीयते ॥
अष्टम्यां वा चतुर्दश्यामुपवासपरायणा ।
ऋतौ शुद्धे चतुर्थेऽह्नि प्राप्ते सूर्यदिनेऽथवा ॥
नद्योस्तु संगमे कुर्यान्महानद्योर्विशेषतः ।
शिवालयेऽथवा गोष्ठे विविक्ते वा गृहाङ्गने ॥
आहिताग्निं द्विजं शान्तं धर्मज्ञं सत्यशालिनम् ।
स्नानार्थं प्रार्थयेदेनं निपुणं रौद्रकर्मणि ॥
ततस्तु मण्डपं कुर्याच्चतुरस्रमुदक्प्लवम् ।
बहुचन्दनमाल्यं च गोमयेनानुलेपितम् ॥
तन्मध्ये श्वेतरजसा संपूर्णं पद्ममालिखेत् ।
मध्ये तस्य महादेवं स्थापयेत् कर्णिकोपरि ॥
दद्यादलेषु नन्द्यादींश्चतुर्षु विधिपूर्वकम् ।
इन्द्रादिलोकपालांश्च दलेष्वन्येषु विन्यसेत् ।
देवीं विनायकं चैव स्थापयेत्तत्र पार्थिव ॥
दत्त्वाऽर्घ्यं गन्धं पुष्पं च धूपं दीपं गुडौदनम् ।
भक्ष्यान्नानाविधान् दद्यात् फलानि विविधानि च ॥

(१) विपा. ९८–१०२.

चतुष्कोणेषु भृङ्गारमश्वत्थदलभूषितम् ।
एकैकं विन्यसेद्ब्रह्मन् सर्वौषधिसमन्वितम् ॥

भृङ्गारं कलशम् । विपा. ९९

मण्डपस्य चतुर्दिक्षु दद्याद्भूतबलिं ततः ।
आग्नेय्यां दिशि कर्तव्यं मण्डपस्य समीपतः ।
अग्निकार्यं शुभे कुण्डे पत्रपुष्पैरलंकृते ॥
लवणं सर्पिषा युक्तं घृतेन मधुना सह ।
मा नस्तोकेन जुहुयात् कृतहोमे नवग्रहे ।
द्वितीयस्याग्निकार्यस्य कर्ता च ब्राह्मणो भवेत् ॥
रुद्रजाप्यकृदाचार्यं सितचन्दनचर्चितम् ।
सितवस्त्रपरीधानं सितमाल्यविभूषितम् ।
शोभयेत् कङ्कणैः कण्ठ्यैः कर्णवेष्टाङ्गुलीयकैः ॥
मण्डपस्य समीपस्थो जपेद्रुद्रान् विमत्सरः ।
यावदेकादशगुणाः पुनरेव जपेत्तु तान् ॥
देवमण्डलवत् कार्यं द्वितीयं मण्डलं शुभम् ।
तस्य मध्ये तु सा नारी श्वेतपुष्पैरलंकृता ।
श्वेतवस्त्रपरीधाना श्वेतगन्धानुलेपना ॥
सुखासनोपविष्टां तामाचार्यो रुद्रजापकः ।
अभिषिञ्चेत्ततश्चैनामर्कपत्रपुटाम्बुना ॥
अच्छिद्राण्यप्यनूनानि स्नानार्थं विनियोजयेत् ॥
चतुःषष्टिऋचेनैव रुद्रेणैकादशेन तु ।
शतानि सप्त वर्णानां चतुर्भिरधिकानि तु ॥

वर्णानाम् ऋचामित्यर्थः । तासां चतुःषष्टिसंख्याना-मेकादशकृत्वः पठितानामियं संख्या । विपा. १०१

अच्छिद्रेणेति मन्त्रेण स्नानार्थं विनिवेशयेत् ।
अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ।
वेश्याङ्गनाद्राजसूयाद्गोष्ठादानीय वै मृदम् ॥

'अच्छिद्रेण पवित्रेण' इत्यर्कपत्रग्रहणमन्त्रः ।
विपा. १०४

सर्वौषधी रोचनां च नदीतीर्थोदकानि च ।
एतत् प्रक्षिप्य कलशे शिवसंज्ञे सुपूजिते ॥
आपादतलकेशान्तं कुक्षिदेशे विशेषतः ।
सर्वाङ्गं लेपयेद्भक्त्या सुशीला काचिदङ्गना ।
रुद्राभिजप्तेन ततः स्नापयेत् कलशेन ताम् ॥
तोयपूर्णाष्टकलशैरश्वत्थदलपूरितैः ।
सर्वतोदिक्स्थितैः पश्चात् स्नापयेत् कलशाक्षतैः ॥
एवं स्नात्वा स्नापकाय दद्याद्गां काञ्चनं तथा ।
होतुरेवात्र निर्दिष्टा दक्षिणा गौः पयस्विनी ॥
ब्राह्मणानामथान्येषां स्वशक्त्या मुनिपुङ्गव ।
गोवस्त्रकाञ्चनादीनि दत्त्वा दत्त्वा क्षमापयेत् ॥
कृतेनानेन विप्रेन्द्र रुद्रस्नानेन भामिनी ।
सुभगा कान्तिसंयुक्ता बहुपुत्रा च जायते ॥
सर्वेष्वपि हि मासेषु ब्राह्मणानुमतौ शुभम् ।
तस्मादवश्यं कर्तव्यं पुत्रान् स्त्री सुखमृच्छति ॥

या स्नानमाचरति रुद्रमिति प्रसिद्धं
श्रद्धान्विता द्विजवरानुमतौ नताङ्गी ।
दोषान्निहत्य सकलान् स्वशरीरभाजो
भर्तुः प्रिया भवति भारत जीववत्सा ॥

वन्ध्यात्वनिमित्तानि, वन्ध्यात्वकरग्रहगणना, वन्ध्यात्वहरं ग्रहबलिपूर्वकाभिषेकविधानम्

कार्तिकेय उवाच—

[1]पूर्वमेव त्वया ख्यातं सन्ति वन्ध्या न हि स्त्रियः ।
दोषैस्तु विविधाकारैर्ग्रहधातुविकारजैः ।
वन्ध्या संजायते तासां स्नानमावद यत्नतः ॥

ईश्वर उवाच—

ग्रहदोषान् प्रवक्ष्यामि शृणु पुत्र यथार्थतः ।
द्वाविंशतिर्ग्रहाः प्रोक्ता नारीपीडाकरास्तु ते ॥
ग्रहाः कौमारिकाश्चान्ये द्वात्रिंशत्तेऽपि कीर्तिताः ।
चतुःषष्टिश्च संख्याता ग्रहाणां क्रूरकर्मणाम् ॥
चतुःषष्टिसहस्राणि चैकैकस्य प्रविस्तराः ।
तेषां मध्ये तु प्रोच्यन्ते चतुःषष्टिश्च नायकाः ॥
दोषैर्द्वादशभिर्वत्स ग्रहा गृह्णन्ति योषितम् ।
एकपात्रेण पानेन परशय्यासनेन च ॥
परपुंसः प्रसङ्गेन परवस्त्रविभूषणैः ।
लालोच्छिष्टकमाल्येन चैकभाजनभोजनैः ॥

(१) विपा. १२१–१२५.

केशोदकेन संसेकादनार्यस्य च गृहनात् ।
एतैर्दोषैश्च ते सर्वे ग्रहाः पीडाकराः स्मृताः ॥
प्रथमं गृह्णते योषां गर्भं च तदनन्तरम् ।
पश्चात् क्षीरं ततो बालमेवमाहुर्न संशयः ॥
ग्रहनामानि वक्ष्यामि शबरी रेवती शिवा ।
मुखा नन्दी च लम्बा च पूतना जम्भपूतना ॥
गोमुखी च विडाला च तथा चैवामला बला ।
काकोली च हसन्ती च अहंकारी जया तथा ॥
मुक्तकेशी त्रिदण्डी च अजामुखी च रोचना ।
मुकुटा पिङ्गला नाम विटनासा तथा परा ॥
स्कन्दग्रहास्तथा चान्ये सर्वेषां नायकाः स्मृताः ।
रजनी कुम्भकर्णा च तापसी राक्षसी परा ॥
मोदनी रोदनी चात्र धमनी नकुला तथा ।
चतुःषष्टिः समाख्याता मातरो बालमातरः ॥
आर्जको जम्भको वीरो भीमास्यः स्कन्दपञ्चमः ।
बालानां पीडनाः सर्वे भ्रमन्ते बलिकाङ्क्षिणः ।
बलिं दद्याद्विधानेन ततो मुञ्चन्ति नान्यथा ॥
चतुरस्रं कृतं क्षेत्रं समसूत्रं समन्ततः ।
सप्त भागान् समान् सर्वान् कृत्वा ह्येवं विचक्षणैः ।
अन्तरान्तरकोष्ठेषु नव पद्मानि कारयेत् ॥
बाह्ये चाभ्यन्तरे द्वे तु चक्रमध्ये प्रयोजयेत् ।
सबाह्याभ्यन्तरे वत्स चक्रमालिख्य यत्नतः ॥
अष्टपत्रयुतं शुभ्रं केसरैः सह कर्णिकैः ।
तेषु मातृगणाः सर्वे चतुःषष्टिर्यथाक्रमम् ॥
पूर्वादि पूजयेत् सर्वांस्तथाऽष्टान्तकमष्टधा ।
शिवं तु कर्णिकामध्ये पद्मेषु नवसु स्थितम् ॥
कमले मध्यमे वत्स अङ्गैस्तु सहितं शिवम् ।
पूजयेत् पूर्वविधिना कल्पयित्वा तथाऽऽसनम् ॥
अस्य कर्माणि वक्ष्यामि येन मुञ्चन्ति योषितः ।
ज्ञात्वा तासां विकारांश्च सर्वाभरणभूषितः ॥
स्थापयेच्च विधानज्ञ उपवासपरायणः ।
व्यतीपातादिनिर्मुक्ते स्नानं कुर्याच्छुभे दिने ॥
त्रिषूत्तरेषु रेवत्यां प्राजापत्ये पुनर्वसौ ।
अश्विन्यामथ पुष्ये च रोहिण्यामथवा गुह ॥
देवालये मातृगेहे पितृगेहे चतुष्पथे ।
जीर्णे कूपे तडागे वा नदीनां संगमेषु वा ॥
एकवृक्षे श्मशाने वा देवतानां च संनिधौ ।
अष्टम्यां राजपत्नीं तु मध्याह्ने स्नापयेत्ततः ॥
पुत्रकामातुरां तीर्थे राजपत्नीं तु संगमे ।
आचार्यस्तु सुसंपूतः शुक्लवस्त्रः शुचिः सदा ॥
अष्टहस्तप्रमाणेन चतुर्हस्तमथापि वा ।
चतुरस्रं चतुर्द्वारं तोरणं ध्वजशोभितम् ॥
चन्द्रातपकृताटोपं पुष्पमाल्योपशोभितम् ।
त्रिरजोभिः समालिख्य मण्डलं सार्वकामिकम् ॥
स्नानैः पानैश्च नैवेद्यैर्विविधं कारयेद्बलिम् ।
श्वेतं रक्तं तथा कृष्णं वर्णानां च क्रमेण तु ।
ईशो ब्रह्मा तथा विष्णू रजसामधिपाः स्मृताः ॥
मण्डलस्योत्तरे भागे कुर्यात् स्नपनमण्डलम् ।
चतुर्हस्तप्रमाणेन वर्णकैरुपशोभितम् ॥
अकालानष्टकलशांश्चतुरस्रप्रमाणतः ।
चूतपल्लवसंयुक्तान् यथेष्टपरिवेष्टितान् ।
हिरण्याक्षतदूर्वाभिरोषधीभिश्च संयुतान् ॥
नद्याश्चोभयकूलात्तु वल्मीकाद्वृक्षमूलतः ।
गृहीत्वा मृदमेतेभ्यः स्थापयेत् प्रथमे घटे ॥
द्वितीये गोमयं स्थाप्य तृतीये गन्धवारि च ।
चतुर्थे हेमरजते पञ्चमे सर्वमौषधम् ॥
षष्ठे तीर्थान् प्रविन्यस्य सप्तमे सप्त सागरान् ।
कलशे चाष्टमे न्यस्य शंकरं मातृभिः सह ।
अनेन विधिना मन्त्री त्वभिषेकं समाचरेत् ॥
मृतवत्सा जीवपुत्रा वन्ध्या चापि प्रसूतिका ।
अबीजा बीजतां याति स्त्री वाऽथ पुरुषोऽपि वा ।
अभिचारकृतं दोषं मन्त्रोऽयं नाशयेदिति ॥
अनेनैव विधानेन मुख्येन सर्वबन्धुना ।
दुर्भगा सुभगा स्याच्च कन्या प्राप्नोति सद्वरम् ॥
देवीभिश्चोपसृष्टानां बालानां ग्रहपीडने ।
क्रियामेतां सदा कुर्यात् साधकस्तु यशस्करीम् ॥

सभार्ये दक्षिणा देया नगरे वाऽथ खेटके ।
हस्त्यश्वरथयानानि मुकुटं कुण्डलानि च ॥
धनधान्यहिरण्यानि येन वा तुष्यते गुरुः ।
तेन तुष्टेन तुष्यन्ति देवता मातरो ग्रहाः ॥
अथाभिषेकको देयो यजमाने सभार्यके ।
यो हि जीवति तस्यापि मृतं चाऽऽपतति ध्रुवम् ॥

ॐ फट् स्वाहा ॥
सर्षपैरक्षतैर्वाऽपि तं देहे ताडयेच्छिशुम् ।
मौनं चेत् स्थीयते बालो रोदते जीवते ध्रुवम् ॥

## देवीपुराणम्

पार्थिवलिङ्गपूजायां सप्तसु कर्मसु सप्तानां नाममन्त्राणां विनियोगः

[1]मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च ।
स्नपनं पूजनं चैव विसर्जनमतः परम् ॥
[2]हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेव इति क्रमात् ॥

नामक्रमेणानन्तरोक्तानि कर्माणि कार्याणीत्यर्थः । यद्यप्यत्र नामान्येव विनियुक्तानि तथाऽपि 'ध्यात्वा प्रणवपूर्वं तु ततस्तस्मात् समाहितः । नमस्कारेण पुष्पादि विन्यसेच्च पृथक्पृथक् ॥' इति सामान्यवाक्या-न्नमोन्तता ज्ञेया । संर. ७१५–७१६

## नन्दिपुराणम्

पार्थिवपूजायाः सर्वेष्टसाधकत्वम् , पार्थिवपूजायां पञ्चाक्षरस्य षडक्षरस्य वा मन्त्रस्य विनियोगः

[3]आयुष्मान् बलवान् श्रीमान् पुत्रवान् धनवान् सुखी ।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत् ।
तस्मात्तु पार्थिवं श्रेयं लिङ्गं सर्वार्थसाधकम् ॥

(१) शूक. ३८ घट्टप्र ( घट्टे प्र ) स्नपनं (स्थापनं) स्कान्दे ; संर. ७१५.
(२) शूक. ३८ क्रमात् ( क्रमः ) स्कान्दे ; संर. ७१५.
(३) संर. ७१४.

[1]गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ।
ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ।
सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः ॥
वस्त्रादीत्यादिपदेनेतरोपचारग्रहणम् । संर. ७१६

स्त्रीपुरुषयोरनपत्यत्वादिनिमित्तानि, तद्दोषशान्त्यर्थं प्रायश्चित्तपूर्वकं महारुद्र–कलशरुद्र–विष्णुश्राद्ध–हरिवंशश्रवण – संतानगोपालविद्यानुष्ठानाना-मनुष्ठेयत्वम् , फलसिद्धौ पौराणिकान्युदा-हरणानि

शतानन्द उवाच–
[2]गणेशान ममाऽऽख्याहि यथा देवेन शम्भुना ॥
नन्दिकेश्वर उवाच–
कैलासशिखरे रम्ये सुखासीनं जगद्गुरुम् ।
देवी पप्रच्छ देवेशं फलं कर्मविपाकजम् ॥
पार्वत्युवाच–
पुरुषस्यानपत्यत्वं वद मे वदतां वर ।
चतुर्विधाः स्त्रियो ¶दोषा अप्रसूता मृतप्रजा ॥
स्त्रीप्रसूः काकवन्ध्या च गर्भस्रावती तथा ।
पतिसौभाग्यहीना च दुर्भगा ऋतुवर्जिता ॥
केन दोषेण भगवंस्तन्मे कथय सुव्रत ।
निष्कृतिं च ममाऽऽख्याहि कृपया परमेश्वर ॥
ईश्वर उवाच–
विप्ररत्नापहरणाद्विप्रैः सह विरोधनात् ।
देवर्षिपितृपूजासु विमुखानामभक्तितः ॥
गुरुमातृपितृश्राद्धवञ्चकानां च नित्यशः ।
अर्थिभ्यो नार्थदातॄणां तथा तीर्थविरोधिनाम् ॥
अदत्ते नोऽतिथिभ्योऽन्नं भ्रातॄणां पाप-चेतसाम्( ? ) ।
स्वभार्यानिन्दकानां च लोकानां च विरोधिनाम् ।
दुष्प्रतिग्रहदोषाणां जायते त्वनपत्यता ॥

¶ अर्शआद्यचा दोषवत्य इत्यर्थः । अष्टानां विधाना-मत्रोक्तत्वाच्चतुर्विधत्वं चिन्त्यम् ।
(१) संर. ७१६.
(२) संग. ३८८–३९१.

स्त्रियोऽपि बहुधैव स्युः पूर्वकर्मप्रदर्शिताः ॥
वन्ध्या भवति या बाल्ये उद्वेजयति मातरम् ।
गर्भघ्नी या भवेत् स्त्रीणां वन्ध्या भवति साऽथवा ॥
अन्यासामनपत्यत्वमिच्छन्ती वन्ध्यतां व्रजेत् ।
मृतप्रजा भवेन्नारी फलं दत्त्वा हरेत्तु या ॥
फलस्तेयं च कुरुते साऽपि स्यान्मृतवत्सका ।
पुरुषद्वेषिणी नारी स्त्रीप्रसूर्वै भवेद्ध्रुवम् ॥
व्रतदानक्रियाहीना काकवन्ध्यात्वमाप्नुयात् ।
काकवन्ध्या भवेत् सा हि गर्भपातं करोति या ॥
देवानां च पितॄणां च दानकर्मणि मैथुने ।
केशान् संगोपयेद्दक्षा चानपत्याऽथवा भवेत् ॥
स्त्रीगर्भा च भवेयुस्ता बालान् हिंसन्ति शापतः ।
स्त्रीणां दुःसिद्धिदा या च भर्तृसौख्यं न सा लभेत् ॥
देवद्विजगुरूञ्ज्येष्ठान् पितॄंश्चामर्षिता भवेत् ।
या सा दौर्भाग्यमाप्नोति जनमध्येऽप्रिया भवेत् ॥
चौर्यात् पुष्पाणि चिनुयात् सा भवेदृतुवर्जिता ।
वैधव्यं पुत्रशोकं च दारिद्र्यं चैव दासताम् ॥
अतस्तत्कर्मशान्त्यर्थं यतितव्यं प्रयत्नतः ।
पूर्वजन्मकृतस्यास्य दुरितस्यापि निष्कृतिः ॥
जायते सततं धर्मः शृणुष्वैकमनाः प्रिये ।
ज्ञात्वा पापानि मतिमान् गुरूणि च लघूनि च ॥
प्रायश्चित्तं यथावित्तं प्राक्कार्यं तेन शुद्धये ।
षडब्दं चतुरब्दं वा त्र्यब्दं द्व्यब्दाब्दमेव च ॥
गोहिरण्यादिदानं वा कृत्वा कर्म समारभेत् ।
पश्चात्तद्दोषशान्त्यर्थं महारुद्रः प्रकीर्तितः ॥
तथा कलशरुद्रश्च विष्णुश्राद्धं सुरेश्वरि ।
हरिवंशस्य श्रवणं विधिवत् परिकीर्तितम् ॥
तथा संतानगोपालविद्यानुष्ठानमेव च ।
अनपत्यत्वनाशार्थं कुर्यात् स्त्री पुरुषोऽपि वा ॥
ब्राह्मणेन तु कर्तव्यं सर्वपापापनुत्तये ।
क्षत्रियोऽपि हि कुर्वाणः संग्रामे विजयी भवेत् ॥
आतुरस्यानुकर्तव्यः सर्वरोगापनुत्तये ।
ग्रहव्रणादिरोगैश्च पीडितस्यापि शर्मदः ॥
कृतो दशरथेनेह तेन पुत्रः सुबुद्धिमान् ।
रामचन्द्रो महाबाहुर्बभूव पुरुषोत्तमः ॥
वीरसेनोऽपि कृतवान् पुण्यश्लोको नलस्तथा ।
इन्द्रराजोऽपि कृतवान् स्वर्गराज्याधिपोऽभवत् ॥
रामचन्द्रोऽपि कृतवान् द्वौ पुत्रौ च गुणान्वितौ ।
पाण्डुराजोऽपि कृतवान् पञ्च पुत्रान् गुणान्वितान् ॥
युधिष्ठिरोऽपि कृतवान् सत्यवादी सदाऽभवत् ।
ब्रह्माऽपि कृतवानेष नारदः समजायत ॥
अतः सर्वैः प्रकर्तव्यं सर्वकामफलप्रदम् ।
अल्पायासव्ययस्यास्य फलमेतावदुच्यते ॥
वक्तुं नैव हि शक्नोति महारुद्रादिकं फलम् ।
यावज्जीवं जपेद्रुद्रं पौरुषं सूक्तमेव च ॥
प्रविशेच्च महादेवगृहं गृहपतिर्यथा ।
तस्मात्सर्वप्रयत्नेन रुद्रमाराधयेत्सदा ।
इति ते कथितं विप्र प्रायश्चित्तविपाकजम् ॥

## बृहल्लिङ्गवासिष्ठपुराणम्

पुत्रादिप्राप्त्यर्थं पार्थिवलिङ्गपूजाव्रतविधानम्, वर्णभेदेन मृद्भेदः, मृद्ग्रहणविधिः, लिङ्गपरिमाणम्, लिङ्गपीठकरणम्, लिङ्गे महादेवपूजनम्, द्विजशूद्रभेदेन नाममन्त्रव्यवस्था, आवाहनादिविसर्जनान्तपौराणमन्त्राः, कर्मभेदेन नाममन्त्रव्यवस्था, कामभेदेन लिङ्गसंख्याभेदः, कामभेदेन लिङ्गप्रकृतिद्रव्यभेदः, पार्थिवलिङ्गव्रतानुष्ठानेन पुत्रादिफलप्राप्तौ पूर्वोदाहरणानि, उद्यापनविधिः

[1]सरस्वत्यास्तटे रम्ये शौनकाद्यास्तपोधनाः ।
सूतं परमया भक्त्या पप्रच्छुः परमादरात् ॥

(१) विपा. २०५–२१५.

ऋषय ऊचुः--

सूत शंकरधर्मज्ञ मृन्मयं कीदृशं शिवम् ।
लिङ्गं पूज्यं महाभक्त्या विधानं तत्र कीदृशम् ॥

किं फलं चास्य तत् सर्वं कथयाऽऽशु प्रसन्नधीः ।
$यतो भस्मत्रिपुण्ड्राङ्का नित्यं रुद्राक्षधारिणः ॥

सूत उवाच--

शृणुध्वमृषयः सर्वे लिङ्गव्रतमनुत्तमम् ।
¶नारदाय पुरा सम्यक्कथितं सनकादिभिः ॥

तेभ्यः सत्यवतीसूनुः सर्वज्ञः करुणानिधिः ।
कथयामास मह्यं च व्रतं करुणया गुरुः ॥

कदाचिन्नारदश्चारुकन्दरं मन्दरं ययौ ।
तत्राऽऽसीनं महादेवं पार्वतीपतिमीश्वरम् ॥

प्रदक्षिणक्रियां कृत्वा नमस्कृत्य पुनः पुनः ।
पप्रच्छ परया भक्त्या नारदो देवदर्शनः ॥

केन देव विधानेन भक्तिर्मुक्तिश्च वै नृणाम् ।
तत्सर्वं कथयाऽऽशु त्वमनुग्राह्योऽस्म्यहं यदि ॥

सर्वपापक्षयकरं सर्वारिष्टविनाशनम् ।
सर्वसंपत्प्रदं चैव कलौ सर्वत्र सिद्धिदम् ॥

ईश्वर उवाच--

शृणु नारद वक्ष्यामि लिङ्गपूजाविधानकम् ।
यस्य श्रवणमात्रेण कृतकृत्यो भवेन्नरः ॥

मृदश्चतुर्विधा विद्धि सिताः कृष्णाश्च लोहिताः ।
पीतास्तथा द्विजाद्यैस्ता ग्राह्या भक्त्या यथाक्रमम् ॥

गत्वा स्थलं नमस्कुर्यान्मन्त्रमेतं समुच्चरेत् ।
'सर्वाधार धरारूप त्वद्रूपां मृत्तिकामिमाम् ।
ग्रहीष्यामि प्रसन्नोऽहं लिङ्गार्थं त्वदनुज्ञया ॥'

$ 'वयं स्मः' इति शेषेण श्लोकार्धमिदं संगमनीयम् ।

¶ अग्रे नारदेश्वरसंवादरूपेण व्रतस्यास्य प्रकाशनादत्र 'सनकादिभिर्नारदाय कथितम्' इत्युक्तिश्चिन्तनीया ।

यावत् स्यादात्मनः शक्तिर्मृदं तावत् समुत्क्षिपेत् ।
नो चेत्तदर्धं तस्यार्धमेवं पलद्वयान्वितम् ।
तस्मान्न्यूनं न कर्तव्यमधिकं वा कदाचन ॥

बहुमानं मृदं यावदुत्तमं मध्यमं तथा ।
अल्पमल्पतरं तच्च कनिष्ठं स्यात्ततः परम् ।
अस्मादल्पपरीमाणं न लिङ्गं कुत्रचिद्भवेत् ॥

आनीयारण्यमध्याच्च नदीतीरे सरस्यपि ।
जलाशये वा चान्यस्मिन्नन्तिके स्थापयेन्मृदम् ॥

मृत्परिमाणं च षडशीतिरत्तिकाः । इदं च परिमाणं प्रधानलिङ्गस्य, न वेदिकाया इति ज्ञेयम् । विपा. २०७

शुद्धेन वारिणा युक्तामापो देवेति* मन्त्रतः ।
नाममन्त्रेण शैवेन प्रणवेन युतेन च ॥
तृणकण्टककायादिकर्करोपलसैकतम् ।
करकादि विलम्बेन विरुद्धफलदायकम् ।
त्यजेद्यत्नेन महता नोद्विजेद्धि कदाचन ॥

स्नातस्त्रिपुण्ड्रवलिभिर्दीप्तभालः शिवं स्मरेत् ।
रुद्राक्षमालासहितो भक्त्या परमया युतः ।
शुद्धभावसमायुक्तः कृतसंकल्पनिश्चयः ॥

रुद्रसूक्तं जपन् कुर्याद्धरायेति नमो नमः ।
पीठसंघटनं कुर्वन् पीठं कुर्याद्यथाविधि ॥

शलाकं वर्तुलं स्वस्य मानमीदृशमीरितम् ।
तत्सूत्रमानं पीठं स्यात् परिणाहसविस्तरम् ॥

पीठार्धबिम्बतो बिम्बमपरं दीर्घसूत्रकम् ।
समानबिम्बं तत्सूत्रं मन्त्रं तत्सूत्रमानकम् ॥

तदर्धं हि प्रणालं स्यादेवं सूत्रविनिर्मितम् ।
लिङ्गमेवंविधं कृत्वा सुन्दरं परमं शुभम् ॥

सर्वलक्षणसंयुक्तमभीष्टफलदायकम् ।
पञ्चवक्त्रं त्रिनयनं चतुर्बाहुं महेश्वरम् ॥

* नेदृङ्मन्त्रो लभ्यते, 'आ वो देवास ईमहे' (तैसं. १।२।१।२), शुसं. (४।५) इति तूपलभ्यते ।

नागयज्ञोपवीतं च व्याघ्रचर्मोत्तरीयकम् ।
हिमखण्डनिभं दीप्तं नीलकण्ठं शिवान्वितम् ॥

'नमो महेश्वराऽऽगच्छ देवदेव जगत्पते ।
प्रसादं कुरु मे देव सर्वपापप्रणाशन ॥'

आवाहयेन्महादेवमायो( ? वो) देवेति मन्त्रतः ।
पञ्चाक्षरेण वा धीमानापो हि ष्ठेति पौरुषैः ॥

मन्त्रैः स्थाप्य महादेवमासनस्थं हि मन्त्रतः ।
अर्चयेत्करवीराद्यैर्गन्धाद्यैरुपचारकैः ।
धूपदीपादिनैवेद्यैस्ताम्बूलफलसंयुतैः ॥

पञ्चाक्षरेण मन्त्रेण तथा मृत्युंजयेन च ।
नाममन्त्रेण वा देवं पूजयेत् परमेश्वरम् ॥

हरो महेश्वरः शंभुः शूलपाणिः पिनाकभृत् ।
रुद्रः पशुपतिश्चैव महादेवविसर्जनम् ॥

नमःपूर्वैश्चतुर्थ्यन्तैर्मन्त्रैश्चैतैर्द्विजन्मनाम् ( ? ) ।
अन्येषामेकजन्तूनां नमोन्ताश्च प्रकीर्तिताः ॥

स्त्रीणां संकरजातीनां व्रतमेतदनुत्तमम् ।
पार्थिवं पूजयेल्लिङ्गं सर्वकामप्रदं मुने ॥

पाषाणे दारुजे देशे दर्भान्तरितसंस्थले ।
पुष्पप्रकरसंयुक्ते पाणौ वा वेदिकाभुवि ।
पूजयेत् पार्थिवं लिङ्गं सद्यः प्रत्युपकारकम् ॥

'ॐ आयाहि भगवञ्छंभो सर्वज्ञ गिरिजापते ।
प्रसन्नो भव देवेश नमस्तुभ्यं च शंकर ॥'

इत्यावाहनम् ॥

'विश्वेश्वर महाराज राजराजप्रियेश्वर ।
आसनं दिव्यमीशान दास्येऽहं परमेश्वर ॥'

इत्यासनम् ॥

'महादेव महेशान महानन्दपरायण ।
पाद्यं गृहाण देवेश पार्वत्या सहितेश्वर ॥'

इति पाद्यम् ॥

'त्र्यम्बक त्वं महादेव वियदादिविधायक ।
अर्घ्यं गृहाण देवेश साम्ब सर्वार्थसाधक ॥'

इत्यर्घ्यम् ॥

'त्रिपुरान्तक दीनार्तिनाश श्रीकण्ठमूर्तिधृक् ।
गृहाणाऽऽचमनं चारु पवित्रोदककल्पितम् ॥'

इत्याचमनम् ॥

'त्रिकाग्निकालकालादिसंहारकरणोद्यत ।
स्नानं तीर्थाहृतैस्तोयैर्गृहाण परमेश्वर ॥'

इति स्नानीयम् ॥

'कालाग्निरुद्र सर्वज्ञ वरदाभयदायक ।
वस्त्रं गृहाण देवेश दिव्यगन्धोपशोभितम् ॥'

इति वस्त्रम् ॥

पुनराचमनं दत्वा दद्याद्यज्ञोपवीतकम् ।
'*नीलकण्ठोपवीतं च मया दत्तं गृहाण भोः ॥'

इति यज्ञोपवीतम् ॥

'सर्वेश्वर जगद्वन्द्य दिव्यासनसमास्थित ।
गन्धं गृहाण देवेश दिव्यगन्धसमर्पितम् ॥'

इति गन्धम् ॥

'सदाशिव शिवानन्द कारणेश गणेश्वर ।
पुष्पाणि बिल्वपत्राणि विचित्राणि गृहाण भोः ॥'

इति पुष्पम् ॥

'महादेव मृडानीश जगदीश निरञ्जन ।
धूपं गृहाण देवेश साज्यं गुग्गुलधूपितम् ॥'

इति धूपम् ॥

'हिरण्यबाहो सेनानामीशानाऽऽशापते शिव ।
दीपं गृहाण देवेश कपिलाज्यत्रिवर्तिकम् ॥'

इति दीपम् ॥

'अन्नानामपि सर्वेषां पते दीनार्तिनाशन ।
षड्रसैश्च समायुक्तं गृहाणान्नं निवेदितम् ॥'

इति नैवेद्यम् ॥

'राजाधिराज सर्वेश निराकार निरास्पद ।
फलं गृहाण सद्दिव्यं नारिकेलादिकं परम् ॥'

इति फलानि ॥

---

* अस्य मन्त्रस्य पूर्वार्धमुच्छिन्नमिति भाति ।

'शाश्वत प्रमथाधीश मदनान्तक धूर्जटे ।
गृहाण पूगताम्बूलदलचूर्णं सखादिरम् ॥'
इति ताम्बूलम् ॥
'हिरण्यगर्भ लोकेश हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥'
इति दक्षिणाम् ॥
'हर विश्वाखिलाधार निराधार निराश्रय ।
पुष्पाञ्जलिमिमं शंभो गृहाण वरदो भव ॥'
इति पुष्पाञ्जलिम् ॥
'यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
गृहाणेश( ? कृतानीश ) मया दत्ता नाशयन्तु प्रदक्षिणाः ॥'
इति प्रदक्षिणम् ॥
'मृडानीनाथ मे सर्वानपराधाननेकशः ।
क्षमस्वेति प्रणामं ते गृहाणाष्टाङ्गसंयुतम् ॥'
इति नमस्कारम् ॥
'ईशान सर्वविद्यानामोङ्कार भुवनेश्वर ।
मन्दिरं गच्छ देवेश पुनरायाहि शंकर ॥'
इति विसर्जनम् ॥
तडागादाहृतं लिङ्गं जले सम्यङ्निवेशयेत् ।
अदृष्टविषये वाऽपि स्थापयेद्भक्तिमान् सुधीः॥
श्रौतस्मार्तसदाचारैर्ब्राह्मणैर्वेदमन्त्रतः ।
पञ्चाक्षरेण संपूजा कर्तव्या नियतात्मभिः ॥
मृदानयनसास्वीककरणं$ लिङ्गयोजनम् ।
प्रतिष्ठाह्वानस्नपनं पूजनं च विसर्जनम् ॥
भवः सर्वो महारुद्रस्तथा पशुपतिश्च यः ।
उग्ररूपक्षो महाभीमस्तथेशानोऽष्टभिः क्रमात् ॥
*हरो महेश्वरः शंभुः शूलपाणिः पिनाकधृक् ।
शिवः पशुपतिश्चैव महादेवविसर्जनम् ॥
इति शिवपूजा ॥

ऋषे सर्वप्रयत्नेन पार्थिवं लिङ्गमुत्तमम् ।
कर्तव्यं हि नृभिर्नित्यं काममुद्दिश्य यत्नतः ॥
तल्लिङ्गं पार्थिवं श्लक्ष्णं भुक्तिमुक्तिप्रदायकम् ।
न करोति यदि ज्ञात्वा न कार्यं तस्य सिध्यति ॥
दैशिकात् सकलं ज्ञात्वा कुर्याल्लिङ्गं फलप्रदम् ।
विद्यार्थी लिङ्गसाहस्रं धनार्थी च तदर्धकम् ॥
पुत्रार्थी सार्धसाहस्रं कन्यार्थी तु शतत्रयम् ।
वन्ध्या लिङ्गायुतं कुर्यात् त्वरया गर्भिणी भवेत् ॥
राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम् ।
मोक्षार्थी कोटिगुणितं भूकामश्च सहस्रकम् ॥
रूपार्थी तु त्रिसाहस्रं तीर्थार्थी द्विसहस्रकम् ।
सुहृत्कर्म( ? कामी ) सहस्रं स्याच्छा( ? तु शा)-न्त्यार्थी शतमष्टकम् ॥
मारणार्थी सप्तशतं मोहनार्थी शताष्टकम् ।
उच्चाटनपरश्चैव सहस्रं तु यथोक्ततः ॥
स्तम्भने तु सहस्रेण जारणे तु तदर्धकम् ।
निगडान्मुक्तिकामस्य सहस्रं सार्धमीरितम् ॥
महाराजभये पञ्चशतं चौरादिसंकटे ।
शतद्वयं च डाकिन्या भये पञ्चशतं परम् ॥
दरिद्रः पञ्चसाहस्रमयुतं सर्वकामदम् ।
एकं पापहरं प्रोक्तं द्विलिङ्गं चार्थसिद्धिदम् ॥
त्रिलिङ्गं सर्वकामाणां कारणं परमाद्भुतम् ।
उत्तरोत्तरमेवं स्यात् पूर्वोक्तगणनाविधिः ॥
कृत्वा यथोक्तविधिना पापं नश्यति तत्क्षणात् ।
लिङ्गानामयुतं कृत्वा महाराजभयं हरेत् ॥
सहस्रमेकं लिङ्गानां चौरादीनां भयं हरेत् ।
सहस्राणि तथा पञ्च पुत्रकामेण कारयेत् ।
कृत्वा नित्यं विधानेन सगुणं पुत्रमाप्नुयात् ॥
लक्षमेकं तु लिङ्गानां यः करोति नरो भुवि ।
शिव एव भवेन्नित्यं नात्र कार्या विचारणा ॥
लिङ्गानामयुतं चैव कन्यकासंततिं मुने ।
एकलिङ्गार्चनान्नित्यमतुलां श्रियमाप्नुयात् ।
अर्चात्पार्थिवलिङ्गानां कोटियज्ञफलं लभेत् ॥

---

$ स्वीति दीर्घ आर्षः ।

* पूर्वश्लोके नाममन्त्राष्टकस्योक्तत्वात् विकल्पबोधकाभावाच्च नाममन्त्रान्तरविधानमिदं चिन्त्यम् । श्लोकोऽयं किंचित्पाठभेदेनास्मिन्नेव प्रघट्टके पूर्वं गतः ।

वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम् ।
नर्मदागिरिजं श्रेष्ठमथान्यदपि लिङ्गवत् ॥

लिङ्गवत् लिङ्गाकारम् । विपा. २१५

[1]मृद्भस्मगोशकृत्पिण्डताम्रकांस्यमयं तथा ।
कृत्वा लिङ्गं सकृत् पूज्य वसेत् कल्पायुतं दिवि ॥

[2]ब्रह्मा स्वकाममुद्दिश्य विधानं तच्चकार वै ।
रुद्रं पुत्रं समासाद्य निर्ममे सचराचरम् ॥

पुत्रकामो वशिष्ठोऽपि ह्यकरोल्लिङ्गपूजनम् ।
शक्तिं पुत्रं समासाद्य निर्व्यथो ज्ञानवानभूत् ॥

तथा पराशरो योगी लिङ्गव्रतमनुत्तमम् ।
चकार ज्ञानलाभार्थं सर्वज्ञः शिववल्लभः ॥

व्यासोऽपि परया भक्त्या लिङ्गव्रतमिदं परम् ।
चकार सकलं शास्त्रं व्रतस्यास्य प्रभावतः ॥

शतर्चनादयः सर्वे बालाद्याः सकला गणाः ।
गोविन्दप्रमुखा देवाः श्रीश्च शच्यादयः पराः ॥

अरुन्धत्यादयश्चैव गोतमाद्यास्तपोधनाः ।
दधीचिप्रमुखाः सर्वे चक्रुः प्राप्तमनोरथाः ।
तस्मान्नारद यत्नेन कथयाऽऽशु ऋषीन् प्रति ॥

नारद उवाच–

कथमुद्यापनं चास्य कुर्यात् पुण्यं महाफलम् ।
कथयस्व महादेव लोकानामुपकारक ॥

ईश्वर उवाच–

दैशिकं तु समासाद्य पूज्यं प्राप्तमनोरथः ।
तत्प्रमाणं तु सौवर्णं यथाशक्त्याऽथवा पुमान् ॥

रौप्यं ताम्रं तथाऽपि स्यादष्टम्यां च यथोक्ततः ।
चतुर्दश्यां तथाऽऽर्द्रायां सोमे वाऽथ प्रपूजयेत् ॥

उपोष्य प्रथमे चाह्नि संपूज्य परमेश्वरम् ।
चतुर्दश्या ह्यमा युक्ता अष्टम्या नवमी तथा ।
पारणं तत्र कुर्वीत रौद्रयुक्तः पुनर्वसुः ॥

पञ्चैकादश च द्वाभ्यामधिका विंशतिः परा ।
चत्वारिंशच्चतुर्भिश्च ब्राह्मणान् वरयेद्व्रती ॥

गीतवादित्रनिर्घोषैर्जागरैर्विविधैरपि ।
स्तोत्रैश्च वैदिकैः सूक्तैः संस्तूयात् परमेश्वरम् ॥

आचार्यं प्रथमं पूज्य ब्राह्मणं च ततः परम् ।
गणेशमृत्विजादींश्च पूजयेच्च विधानतः ।
वस्त्रैश्च दक्षिणाभिश्च पूजयेच्छिवतत्परान् ॥

मृत्युंजयेन मन्त्रेण अग्निं हुत्वा स्वशक्तितः ।
लिङ्गं तत्पूजया युक्तं गीतवाद्यसमन्वितम् ।
महाह्रदे प्रनिक्षिप्य नमस्कुर्यात् पुनः पुनः ॥

सोद्यापनं व्रतं कृत्वा प्राप्नुयात् परमं फलम् ।
ततः शैवपदं प्राप्य तत्रैव रमते ध्रुवम् ॥

पार्थिवलिङ्गपूजाविधानान्तरस्य कालः

$मार्गशीर्षे कार्तिके च माघे वैशाखसंज्ञके ।
श्रावणे बहुले पक्षे गृह्णीयाद्व्रतमुत्तमम् ॥

नारी वा पुरुषो वाऽपि कृत्वा व्रतमिदं शुभम् ।
ईप्सितांल्लभते कामान् शिवस्य वचनं यथा ॥

रागादिरहितः शान्तो हविष्यान्नस्य सेवकः ।
नक्षत्रादिशुभे काले व्रतमेतत्समाचरेत् ॥

अथ प्रकारान्तरेणापि अस्य प्रयोगो यथा तत्रैव–मार्गशीर्ष इति । विपा. २१७

---

(१) शूक. ३८ त्पिण्ड ( त्पिष्ट ) तथा ( तु वा ) भविष्ये ; विपा. २१५ ; संर. ७१४ भविष्यपुराणे.

(२) विपा. २१५–२१७.

$ प्रकृतपार्थिवलिङ्गपूजाविधानादन्यस्य पार्थिवलिङ्गपूजाविधानस्यायं कालः, विधानान्तरमपीदं बृहल्लिङ्गवासिष्ठपुराणीयमेवेति च व्याख्यानतः स्पष्टम् । विधानान्तरमिदं स्वोपज्ञप्रयोगरूपेण ग्रन्थकृता संगृहीतम्, मूलवचनानि न संगृहीतानि । तत्र ध्यानम्, प्राणप्रतिष्ठा, लिङ्गपूजनम्, अष्टमूर्तिपूजनम्, मन्त्रनमस्कारः, स्तुतिश्चेति प्रयोगक्रमः । तत्र नमस्कारमन्त्राणां ग्रन्थकृता प्रयोगरूपेण पूर्वोक्तबौधायनीयरुद्रस्नानविधानान्तर्गतानामेवात्र ग्रहणात् स्तुतिमन्त्रेष्वपि प्रकृतपुराणीयत्वनिर्णयमलभमानैरस्माभिः ‘ ओं नम ओंकाररूपाय ’ इत्यादयः स्तुतिमन्त्रा अनिर्दिष्टकर्तृकवचनेषु संगृहीताः ।

## पुराणम्

नागबलौ सर्पप्रार्थना

[1] 'कर्कोटक नमस्तेऽस्तु शङ्खपाल नमोऽस्तु ते।
नागराज महादेव दिव्यरूपाय ते नमः ॥
[2]अफणाः फणिनो ये च सविषा निर्विषाश्च ये।
सर्वे वटेशयाः सर्पाः पुण्यमूर्ते नमोऽस्तु ते ॥

अफणाः सर्पा ये च फणिनो ये च सविषा निर्विषाश्च वटेशयाश्च ये सर्वे सर्पाः नागराज, तव रूपाणि, ते तुभ्यं नम इत्यर्थः। संर. ७०८

[3]त्वयेयं जगती स्वामिन् स्वफणामण्डलोपरि।
धृतैकदेशे ह्यणुवत्तस्मै तुभ्यं नमो नमः ॥
[4]त्वया भगवते श्रीमद्वासुदेवाय निर्मितम्।
स्वभोगेनैव पर्यङ्कमायतं भोगिनां वर ॥
[5]त्राहि त्राहि महाभोगिन् सर्पोपद्रवदुःखतः।
संततिं देहि मे पुण्यां निर्दुष्टां दीर्घदेहिनीम्।
प्रपन्नं पाहि मां भक्त्या कृपालो दीनवत्सल ॥
[6]ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया।
जन्मान्तरे तथैतस्मिन्मत्पूर्वैरथवा विभो।
तत्पापं नाशय क्षिप्रमपराधं क्षमस्व मे ॥ '

## सूर्यारुणसंवादः

पुष्पाभावनिमित्तानि पूर्वभवीयकर्माणि पुष्पप्राप्त्यर्थं प्रायश्चित्तं च

अरुण उवाच--

[7]वैश्यकुले समुत्पन्नो वायुपित्तसमन्वितः।
शिल्पकार्यकरः श्रीमान् व्यापारे विषयान्वितः ॥
तस्य भार्या शुभाचारा व्रतानामनुकाङ्क्षिणी।
भर्तृभक्तिपरा नित्यं सौभाग्यमदगर्विता।
अपुष्पवती च सा स्वामिन् कस्येदं कर्मणः फलम् ॥

सूर्य उवाच--

भर्त्रा कर्म कृतं नैव स्त्रीकृतं नात्र संशयः।
क्षत्रवंशे समुत्पन्ना कृपणा चारुहासिनी।
तया तत्र कृतं कर्म ब्रह्मस्वहरणं विभो ॥
अपरं च कृतं कर्म ब्राह्मणस्य निवेशने।
सपुष्पा सफला वल्ली उत्खाता ईर्ष्यया तथा।
पुष्पे नष्टे फलं नष्टं तस्मात्पुष्पं विशिष्यते ॥
भर्ता च वञ्चितः पूर्वं कामाधिकतया तथा।
इह जन्म तृतीयं तु वैश्यवंशसमुद्भवम्।
पुष्पं नष्टं तु तस्याश्च पूर्वकर्मप्रभावतः ॥
ईषत्कृष्णं विवर्णं च कदाचित्तु प्रवर्तते।
मासद्वये त्रये वाऽपि न तेन फलभाग्भवेत् ॥
पुरा कृतानि कर्माणि सुकृतं दुःकृतानि च।
इह जन्मनि भुज्येत( ? भुञ्जीत ) प्राणी नित्यं विशङ्कितः ॥

अरुण उवाच--

वृथाऽधान्यं गृहं स्वामिन्नपुत्रं जन्म निःफलम्।
प्रायश्चित्तं कथं देव येन पुष्पं प्रवर्तते ॥

सूर्य उवाच--

एकान्तरोपवासं च षण्मासं कश्यपात्मज।
रक्तरोहितकं प्राप्य शर्करापयमिश्रितम् ॥
एकवासोविधिं पश्चाद्विप्राणां शतभोजनम्।
दद्याद्वै शुभयोगे च वैधृतीव्यतिपातयोः ॥
पुष्पैस्तु लक्षसंख्याकैः शिवं संपूजयेत्ततः।
स्वर्णधेनुश्च दातव्या सवत्सा सुरभिस्तथा ॥
सताम्रं कलशं चैव घृतेन परिपूरितम्।
चन्द्रसूर्योपरागे तु विप्राय प्रतिपादयेत् ॥
वंशपात्री प्रकर्तव्या त्रयोदशविसंख्यया।
कूष्माण्डीफलसंयुक्ता विप्रेभ्यः प्रतिपादयेत् ॥

---

(१) संकौ. ३७ ; संर. ७०७ दिव्यरूपाय ( तव रूपाणि ).
(२) संकौ. ३७ ; संर. ७०७ वटेशयाः सर्पाः ( सर्पा वटेशयाः ).
(३) संकौ. ३७ ; संर. ७०७ नमः ( ऽस्तु ते ).
(४) संकौ. ३७ ; संर. ७०७ निर्मितम् ( निर्विषम् ) यतं ( यस्तं ).
(५) संकौ. ३७ ; संर. ७०८ सर्पो ( सर्वो ).
(६) संकौ. ३७ ; संर. ७०८ तथै ( ऽथ वै ).
(७) संग. ४०२-४०४.

गर्भस्रावहरं प्रायश्चित्तम्

श्रीअरुण उवाच–

[1]प्रायश्चित्तं कथं स्वामिन् सत्यं वद ममाग्रतः ॥

सूर्यारुणसंवादे स्वधर्मे प्रकृत्य– 'श्रीअरुण उवाच– प्रायश्चित्तं०' इति । संको. ५३

श्रीसूर्य उवाच–

एकवासोविधिं चैव कुर्याच्च विधिवत्ततः ।
चन्द्रसूर्योपरागे तु स्वर्णधेनुं प्रदापयेत् ॥
ब्राह्मणान् भोजयेत् पश्चात् प्राजापत्यचतुष्टयम् ।
सारस्वतजपं लक्षं दशांशाहोमसंयुतम् ॥
श्रवणं हरिवंशस्य एकचित्तेन मानद ।
शतपत्रैः शिवं पूज्य षण्मासाद्रविवासरे ॥
कलशं ताम्रमयं चैव घृतेन परिपूरितम् ।
दातव्यं ब्राह्मणे चैव सर्वकार्यार्थसिद्धये ॥
एवं कृते वैनतेय गर्भो निश्चलतां व्रजेत् ॥

पूर्वजन्मनि पत्या गर्भवद्रवीहननात् उत्तरजन्मनि पत्न्या गर्भपातरतिः तन्निवृत्त्यर्थं प्रायश्चित्तं च

अरुण उवाच–

[2]वैश्यभावे समुत्पन्नः कश्चित् पुरुषसत्तमः ।
संयुक्तो वातपित्ताभ्यां शिल्पकार्यकरः सदा ॥
कृषिकर्म प्रकुर्वाणो धनधान्यसमन्वितः ।
क्रयविक्रयकर्ता च कदाचिच्छ्लेश्मपीडितः ॥
तस्य भार्या महासाध्वी पतिभक्तिपरायणा ।
दानव्रतदयायुक्ता सुरूपा चारुहासिनी ।
गर्भपातरता नित्यं कस्येदं कर्मणः फलम् ॥

सूर्य उवाच–

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् ।
पूर्वं क्षत्रोत्तमो जातः कामक्रोधसमन्वितः ।
कृषिकर्म प्रकुर्वाणो व्यभिचाररतः सदा ॥
कदाचिद्दैवयोगेन सगर्भा गौः समागता ।
सस्यं वै खादयामास दृष्टा तेन दुरात्मना ॥
अतिवेगाद्धावमानः काष्ठमुद्यम्य यत्नतः ।
स चैनां ताडयामास प्रहारैरतिदारुणैः ॥
अतिघाताद्वैनतेय गर्भः शिथिलतां गतः ।
दिनद्वये त्रये वाऽपि मृतो गर्भस्तु निःसृतः ॥
अतिकष्टान्मृता वत्स घातिता दुष्टबुद्धिना ।
अचिरेण मृतः सोऽपि तस्करेण विनाशितः ॥
पतितो नरके घोरे वर्षाणां च शतत्रयम् ।
पश्चान्मानुषमापन्नः किंचिद्धर्मप्रभावतः ॥
इदं तु पञ्चमं जन्म गर्भपातसमन्वितम् ।
तेन कर्मविपाकेन वंशवृद्धिर्न जायते ॥

अरुण उवाच–

प्रायश्चित्तं कथं स्वामिन् येन गर्भः स्थिरो भवेत् ।
ममोपरि कृपां कृत्वा सत्यं कथय सुव्रत ॥

सूर्य उवाच–

एकवस्त्रविधानेन दम्पतिस्नानमुत्तमम् ।
श्रवणं हरिवंशस्य एकचित्तेन मानद ॥
सगर्भा गौः प्रदातव्या स्वर्णमाषेण संयुता ।
अष्टोत्तरशतं विप्रान् मिष्टान्नेन तु तर्पयेत् ॥
मन्त्रैस्तु लक्षसंख्याकैः शिवं पूज्य प्रयत्नतः ।
सारस्वतस्य मन्त्रस्य जपं कुर्यात् प्रयत्नतः ॥
सुवर्णदक्षिणायुक्तं प्रायश्चित्तं प्रकारयेत् ।
इति विधौ कृते वत्स संतानं जायते ध्रुवम् ॥

अनपत्यत्वे निक्षेपहरणं निमित्तम् , तद्दोषहरं प्रायश्चित्तम्

[1]निक्षेपाहरणाच्चैव ह्यनपत्यः प्रजायते ॥

अरुण उवाच–

[2]वृथा धनं गृहं धान्यमपुत्रं जन्म निष्फलम् ।
ममोपरि दयां कृत्वा प्रायश्चित्तं वदस्व मे ॥

श्रीसूर्य उवाच–

[3]तीर्थयात्रा प्रकर्तव्या रेवातापीसमुद्भवा ।
एकेनापि हि वस्त्रेण दम्पतिस्नानमुत्तमम् ॥

---

(१) संको. ५३.
(२) संग. ४०१–४०२.

(१) संको. ३९ ; संर. ७१२ (=) व ह्यनपत्य (वानपत्यस्तु).
(२) संको. ३९ ; संर. ७१२ (=).
(३) संको. ३९ ; संर. ७१२ (=) हि (तु).

[1]श्रवणं हरिवंशस्य ब्राह्मणोद्वाहनं खग ।
अष्टोत्तरशतं विप्रान् मिष्टान्नेन तु तर्पयेत् ॥
[2]ईशान इति मन्त्रेण जपं कुर्यात् सहस्रकम् ।
दशांशहोमसंयुक्तं कुर्याच्च विधिवत्ततः ॥
[3]पद्मैस्तु लक्षसंख्याकैः शिवं संपूज्य यत्नतः ।
स्वर्णधेनुः प्रदातव्या सवत्सा सुरभिस्तथा ॥

कलौ पार्थिवलिङ्गपूजनस्य महापुण्यजनकत्वात्तद्रूपस्य शिवस्य पद्मपूजनमतीव प्रशस्तम् । संर. ७१२

[4]घृतकुम्भं वैनतेय ब्राह्मणाय निवेदयेत् ।
एवं कृते वैनतेय ह्यपत्यं जायते कलौ ॥

अरुण उवाच—

[5]वैश्यकुले समुत्पन्नो वाताधिकशरीरभाक् ।
वित्तपो धर्मयुक्तश्च शिल्पिकार्यरतः सदा ॥
व्यापारविषये वीरः क्रयविक्रयकारकः ।
गौरवर्णः शुभाचारो किंचित्क्रोधसमन्वितः ॥
तस्य भार्या महासाध्वी दानव्रतपरायणा ।
सुनेत्राऽपि च सुश्रोणी भर्तृभक्तिपरायणा ॥
अनपत्या कथं देव कस्येदं कर्मणः फलम् ॥

सूर्य उवाच—

ब्राह्मे वै पूर्ववंश्ये तु संजातो ब्राह्मणब्रुवः ।
बहुक्लेशकरो नित्यं बहुदुःखस्य भाजनम् ॥
प्रतिग्रहप्रकर्ता च वृत्तितो बहुयाचकः ।
गृहे तु तस्य निर्मुक्तं द्रविणं बहु केनचित् ॥
विप्रेण केन दैवाच्च विद्याभ्यासरतेन वै ।
नार्पितं तेन विप्रेण तस्य विप्रवराय वै ॥
ब्रह्मस्वं भक्षितं तेन सदा संताननाशनम् ।
निक्षेपहरणाच्चैव अनपत्यः प्रजायते ॥

(१) संकौ. ३९ शतं ( शतान् ) ; संर. ७१२ (=).
(२) संकौ. ३९ ; संर. ७१२ (=) न इति ( वास्येति ) संयुक्तं ( सहितं ).
(३) संकौ. ३९ ; संर. ७१२ (=).
(४) संकौ. ३९ ; संर. ७१२ (=) ह्यप ( अप ).
(५) संग. ३९१–३९२.

द्वितीयं च कृतं कर्म कूष्माण्डीफलनाशनम् ।
ब्राह्मणस्य गृहाद्वत्स हृतं तस्करबुद्धिना ॥
तेन कर्मविपाकेन अपत्यं नैव जायते ॥

अरुण उवाच—

प्रायश्चित्तं कथं स्वामिन्येनापत्यं प्रजायते ।
ममोपरि कृपां कृत्वा सत्यं कथय सुव्रत ॥

सूर्य उवाच—

एकवासोविधिर्वत्स कर्तव्यं द्विजभोजनम् ।
तीर्थयात्रा च कर्तव्या रेवातापीसमुद्भवा ॥
तुलसीदललक्षैश्च विष्णुं संपूजयेत्ततः ।
स्वर्णधेनुं काश्यपेय विप्राय प्रतिपादयेत् ॥
कलशं ताम्रमयं चैव घृतेन परिपूरितम् ।
चन्द्रसूर्योपरागे च दातव्यं च द्विजन्मने ॥
वैधृतौ च व्यतीपाते फलदानं तु कारयेत् ।
श्रवणं हरिवंशस्य एकचित्तेन मानद ॥
विष्णुसूक्तस्य मन्त्रस्य लक्षसंख्यां तु कारयेत् ।
दशांशहोमभोज्यं च कर्तव्यं विधिना ततः ॥
कौष्माण्डीं रोपयेद्वल्लीं विप्रस्य विनिवेशने ।
सप्तफलाव्रतं कुर्याद्विधिना च विशारद ॥
एवंविधे कृते वत्स संतानं जायते ध्रुवम् ॥

काकवन्ध्यात्वनिमित्तं प्राग्भवीयः पापविशेषः तन्निरासार्थं प्रायश्चित्तं च

अरुण उवाच—

[1]कश्चिद्वैश्यकुलोत्पन्नः पित्तवायुसमन्वितः ।
शिल्पकार्यप्रकर्ता च वित्तपो धनवत्सलः ॥
गौरवर्णः शुभाचारः कृषिकर्म करोति च ।
भार्या प्रीतिपरा नित्यं व्रतानामनुकाङ्क्षिणी ॥
गौरवर्णा शुभाचारा सुश्रोणी सा पतिव्रता ।
काकवन्ध्या कथं देव सत्यं ब्रूहि दिवाकर ॥

सूर्य उवाच—

भर्त्रा कर्म कृतं नैव स्त्रीकृतं नात्र संशयः ।
पूर्वजन्मनि शूद्रा स्त्री सपत्नीसहिता द्विज ॥

(१) संग. ३९८–४००.

एकपुत्रा सपत्नी च तस्यास्तत्रैव जन्मनि ।
अनया ईर्ष्यया चैव कृतं कपटकं महत् ॥
कपटेनापि तस्यास्तु अपत्यं नाभवत् पुरा ।
उपायैर्बहुधा चैव न त्वपत्यं व्यजायत ॥
द्वितीयं च कृतं पापं तथा तत्रैव जन्मनि ।
मार्जार्यपत्यद्वि ( ? त्ये द्वे )त्रीणि तथा विप्रोषितानि च ॥
मृतानि कष्टभावेन तेन कर्मविपाकतः ।
नरके पतिता घोरे वर्षाणां च शतत्रयम् ॥
पश्चान्मानुषमापन्ना व्रतदानप्रभावतः ।
इदं चतुर्थकं जन्म वैश्यवंशसमुद्भवम् ।
पुराकृतानि कर्माणि भुज्यन्त इह मानवैः ॥

अरुण उवाच–

एकापत्याऽनपत्या च दृश्यते किल कश्यप ।
प्रायश्चित्तं कथं देव येनापत्यं प्रजायते ॥

सूर्य उवाच–

नित्यं फलं प्रदातव्यं यावत् संवत्सरं सदा ।
व्रतं सौभाग्यसुन्दर्याः शास्त्रोक्तविधिना खग ॥
एकवासोविधिः पश्चाद्दम्पती अथ संगमे ।
कर्तव्यं विधिवत् सर्वं सर्वकामार्थसिद्धये ॥
सूर्यभार्याव्रतं चैव षण्मासावधि मानद ।
गर्गरीं पूजयेद्भक्त्या नारिकेलसमन्विताम् ॥
रविवारे विशेषेण यागीकरणमुत्तमम् ।
नक्तं तु कारयेद्भक्त्या ततः सिद्धिर्भविष्यति ॥
ब्राह्मणान् भोजयेत् पश्चादष्टोत्तरशतं खग ।
सवत्सा गौः प्रदातव्या स्वर्णमाषेण संयुता ॥
कूष्माण्डं दक्षिणायुक्तं विप्राय प्रतिपादयेत् ।
एवंविधे कृते वत्स संतानं जायते भुवि ॥

केवलकन्याजनननिमित्तं प्राग्भवीयौर्ध्वदेहिकाभावः
तत्र प्रायश्चित्तं च

अरुण उवाच–

[1]वैश्ये कुले समुत्पन्नो वायुपित्तसमन्वितः ।
वित्तपो धर्मयुक्तश्च गौरवर्णः प्रतापवान् ॥

(१) संग. ४००–४०१.

बहुशिल्पकरो नित्यं कदाचित् कृषिकारकः ।
तस्य भार्या सुशीला च भर्तृभक्तिपरायणा ॥

व्रतदानदयायुक्ता रूपलावण्यसंयुता ।
बहुपुत्र्यो विजाताश्च पुत्रो नैव विजायते ।
केन कर्मविपाकेन सत्यं कथय भास्कर ॥

सूर्य उवाच–

पूर्वं शूद्रो वित्तपश्च राजमान्यः प्रतापवान् ।
व्यापारविषये वीरो राजकर्म चकार ह ॥

तस्य गोत्रे च संबन्धी नित्यं धनपरायणः ।
विष्णुभक्तो दयालुश्च देवब्राह्मणपूजकः ॥

सुताद्वयं तथा विद्धि ह्यपुत्रो मित्रवत्सलः ।
अकस्मान्मरणं प्राप्तः प्रिया तु पृष्ठतोऽन्वयात् ॥

तस्य भार्या ततः सर्वैः दुःखैश्च परिपीडिताः ।
अचिराच्च मृतः सोऽपि मार्गे म्लेच्छैश्च घातितः ॥

अग्निदाहं विना वत्स प्रेतयोनित्वमागतः ।
वर्षायुतं काश्यपेय नरके पतितः पुनः ॥

पश्चान्मानुषमापन्नो व्रतदानप्रभावतः ।
इदं तु पञ्चमं जन्म ह्यनपत्यं खगेश्वर ॥

पुनः पुनः समा जाता बहुदुःखस्य कारकाः ।
तेन कर्मविपाकेन पुत्र्यो जाता अपुत्रकः ॥

अरुण उवाच–

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते ॥

सूर्य उवाच–

एकवस्त्रविधानं च दम्पती तीर्थसंगमे ।
अष्टोत्तरशतं विप्रान् मिष्टान्नेन तु तर्पयेत् ॥

स्वर्णधेनुः प्रदातव्या घृतकुम्भं ततः परम् ।
श्रवणं हरिवंशस्य एकचित्तेन मानद ॥

सप्तफलीव्रतं कुर्याद्वंशपात्रीत्रयं तथा ।
एवंविधे कृते वत्स तस्य पुत्रः प्रजायते ॥

मृतापत्यत्वनिमित्तं द्विविधं पापं तत्र द्विविधं प्रायश्चित्तं च

अरुण उवाच—

[1]कश्चित् क्षत्रोत्तमो जातो बहुवित्तसमन्वितः।
संयुक्तो वातपित्ताभ्यां श्यामवर्णः प्रतापवान्॥
राजवृत्तिं तु भुञ्जानो सुकर्मनिरतः सदा।
देवब्राह्मणभक्तश्च व्रतदानपरायणः॥
मृतवत्सः कथं जात एक एवावशिष्यते।
केन कर्मविपाकेन सत्यं कथय भास्कर॥

सूर्य उवाच—

स्त्रीणां नैव तु तत्कर्म भर्तुरेव प्रकीर्तितम्।
पूर्वजन्मनि शूद्रोऽसौ द्विजशुश्रूषणे रतः॥
कृतं तेन तु यत्कर्म तन्मे निगदतः शृणु।
पूर्वजन्मनि शूद्रस्तु राज्ञो व्यापारकारकः॥
बहुद्रव्येण संयुक्तो दुर्मदो विषयान्वितः।
मृगयानिरतः पापो मृगशूकरघातकः॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात्।
मृगशूकरशावाश्च त्रयोदश विहिंसिताः॥
गले गृहीत्वा तेनैव मातरो दुःखमागताः।
अचिरेणैव कालेन मृग्योऽपि निधनं गताः॥
पश्चात् सोऽपि च शूद्रस्तु गोसङ्घे निहते सति।
किरातैर्वृत इष्टार्थे प्राणांस्तत्याज तस्करैः॥
तेन पुण्यप्रभावेण स शूद्रः स्वर्गमागतः।
अगस्तिहायनानां वै सहस्राणि खगेश्वर॥
समाः सहस्राणि च सप्त वै जले दशैकमग्नौ तपने च षोडश।
महाहवे षष्टिरशीति गोगृहे अनाशने भारत चाक्षया गतिः॥
पश्चान्मानुषमापन्नस्त्रिदिवात् पतितः खग।
तेन कर्मविपाकेन मृतापत्यः प्रजायते॥
इदं तु पञ्चमं जन्म क्षत्रवंशसमुद्भवम्॥

अरुण उवाच—

प्रायश्चित्तं कथं स्वामिन् येनापत्यं प्रजायते॥

सूर्य उवाच—

श्रवणं हरिवंशस्य एकचित्तेन मानद।
स्वर्णैकेन समायुक्तां धेनुं दद्याद्विधानतः॥
वंशपात्रत्रयं चैव कूश्माण्डीफलसंयुतम्।
विप्राय वेदविदुषे श्रद्धया प्रतिपादयेत्॥
एवंविधे कृते वत्स संततिर्निश्चला भवेत्।
चिह्नं तु तस्य ज्ञातव्यमेको भ्राताऽश्वपातितः।
मस्तके वेदनां प्राप्य प्राणांस्तत्याज विह्वलः॥

अरुण उवाच—

वैश्यवंशे समुत्पन्नः कश्चित्पुरुषसत्तमः।
संयुक्तो वातपित्ताभ्यां धर्मिष्ठो धर्मतत्परः॥
किंचिद्वित्तसमायुक्तो राजसेवारतस्तथा।
देवब्राह्मणभक्तश्च गुरुपूजारतोऽभवत्॥
तस्य भार्या तु सुश्रोणी व्रतानामनुकाङ्क्षिणी।
मृतवत्सा कथं जाता एक एवावशिष्यते॥
जीवन्ति पुत्रिकास्तस्या द्वित्रिर्वा सततं तथा।
केन कर्मविपाकेन सत्यं ब्रूहि द्विजेश्वर॥

सूर्य उवाच—

वैनतेय महाभाग शृणु तस्य विचेष्टितम्।
येन तस्य समुत्पन्नाः पुत्रास्तु निधनं गताः॥
पूर्वजन्मनिषादानां पतिरासीन्महाभुजः।
विन्ध्याचलनिवासी च लघुदेशपतिः प्रभुः॥
चौर्यकर्मरतो नित्यं चौरैस्तु परिसेवितः॥
एकदा तु महाबाहो दुर्भिक्षं पतितं किल।
तेन संतापिता लोका देशान्तरगताः खग॥
ततस्तद्देशमार्गेण ब्राह्मणाश्चलितास्तथा।
चत्वारो भ्रातरो वत्स तेषां ज्येष्ठः सदारकः॥
आगतास्तस्य भिल्लस्य ग्राममध्येऽन्नकाङ्क्षिणः।
उषितास्तद्दिने तत्र रजन्यां निद्रितास्तु ते।
ततः केनापि चौरेण निद्रायां शोधिता हि ते॥
तेषां ग्रन्थिस्थितं हेम तोलकत्रयसंमितम्।
तल्लब्धं तेन चौरेण तद् गृहीत्वा सवल्कम्॥

(१) संग. ३९२-३९८.

निद्रायां शनकैर्याता( ? त्वा ) राज्ञे नीत्वा समर्पितम् ।
ततः प्रभाते संजात उदिते तु दिवाकरे ॥
जागृतास्ते तु चत्वारो भ्रातरो विनतात्मज ।
न दृष्टं हेमवस्त्रं तज्जायायाऽपि तदा ततः ॥
अलब्ध्वा हेमवस्त्रं ते मूर्च्छनामागतास्ततः ।
क्षणेन लब्धसंज्ञास्ते समूचुश्च परस्परम् ॥
क्व गतं स्वर्णवसनं स्थापितं मध्य आत्मनाम् ।
अस्माकं जीवनं ह्येतत्कथं जीवामहे गते ॥
एतदाधारकाः सर्वे जीवनं दृष्टमाग्रतः ।
अतः परं गताधारा मृत्युं यास्यामहे ध्रुवम् ॥
एवं विलप्य बहुधा दरिद्रा ब्राह्मणास्तदा ।
राजानं तु समासाद्य विज्ञप्तिं चक्रुरुद्यताः ॥
राजन् रात्रौ प्रसुप्तेषु ह्यस्माकं वसुधाधिप ।
नीतं केनापि स्वर्णं नो तद्विशोध्य प्रदाप्यताम् ॥
राजा तेषां तु विज्ञप्तिं श्रुत्वा मा( ? मौ )नं समाश्रितः ।
ते ब्राह्मणा निराधारा लङ्घनं कर्तुमास्थिताः ॥
सोऽपि भिल्लाधिपपतिः सभार्यः प्रययौ गृहम् ।
द्वित्राण्यहानि ते तत्र लङ्घिता राजवेश्मनि ॥
अक्षमालां धनं( ? अक्षमा लङ्घनं ) कर्तुं विह्वला जातसंभ्रमाः ।
तेषां ज्येष्ठस्तु यो भ्राता विषं भुक्त्वा तु संस्थितः ॥
तस्य भार्या तु वै साध्वी भर्तारं पृष्ठतोऽन्वगात् ।
ततस्ते भ्रातरः सर्वे कालेन निधनं गताः ।
निर्द्रव्या दुःखिता स्तेयं( ? तास्तेन ) तत्र तेभ्योऽर्पितं धनम् ॥
ततस्तु दैवयोगाच्च भाविनोऽर्थस्य वै बलात् ।
वने व्याघ्रेण काचिद्गौर्गृहीता क्रन्दितं गवा ॥
स तु भिल्लाधिपः श्रुत्वा गवार्थं वनमाययौ ।
भिल्लैः कतिपयैरेव वृतो व्याघ्रं ददर्श सः ॥

शरो मुक्तस्ततो राज्ञा व्याघ्रं प्रति न तं गतः ।
ततो व्याघ्रस्तु गां मुक्त्वा राजानं प्राहरद्बली ॥
तेन व्याघ्रप्रहारेण राजाऽसौ निधनं गतः ।
व्याघ्रोऽपि राजबाणेन क्षतो मृत्युं गतः किल ॥
एवं च गोस्तु रक्षार्थं प्राणत्यागात्स पार्थिवः ।
हित्वा कलेवरं यातः स्वर्लोकं विनतात्मज ॥
तस्यापि पत्नी राजानं भर्तारं पृष्ठतोऽन्वगात् ॥
सतीपुण्यप्रभावेण उभौ तौ देवतां गतौ ।
राजाऽसौ ब्राह्मणः सोऽपि स्वर्गलोके समूच( ? ष )तुः ।
तिस्रः कोटयोऽर्धकोटीश्च यावद्रोमाणि मानसे ॥
सतीपुण्यप्रभावेण तावद्वर्षाणि मानद ।
देवलोके सुखं भुङ्क्ते पापिष्ठोऽपि न संशयः ॥
पुण्यक्षये त्वसौ राजा तया पत्न्या भुवं गतः ।
कश्चित् क्षत्रोत्तमो राजा कतिचिद्ग्रामपालकः ॥
तेऽपि विप्रसुताश्चैकभ्रातरः स्वर्णकारणात् ।
मरणात्तन्निमित्तेन दुःखदास्तस्य ते पितुः ।
साऽपि राज्ञी हि तस्याऽऽसीत् सा वधूस्तत्सुतस्य वै ॥
आत्मघातोत्थपापेन किञ्चिद्व्याधिप्रपीडितः ।
स पुत्रो यौवनं प्राप्य तत्रापि निधनं गतः ॥
साऽपि पुत्रवधूस्तत्र भर्तारं पृष्ठतोऽन्वयात् ।
ब्रह्मस्वहरणाद्राजा महाशोकेन पीडितः ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥
कर्तृकर्मक्षयो नास्ति कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
सोऽपि राजा ततो दुःखी कालेन निधनं गतः ।
तस्य भार्या महासाध्वी राजानं पृष्टतोऽन्वगात् ॥
एवं तौ च पितापुत्रौ सतीपुण्यप्रभावतः ।
भुक्त्वा स्वर्गगतान् भोगान् पुण्यशेषाद्दिवश्च्युतौ ॥

पश्चान्मानुषमापन्नौ पितृपुत्रौ बभूवतुः ।
सत्यौ चापि तयोर्भार्ये संजाते विनतात्मज ॥
वैश्ययोनिं समासाद्य भोगवन्तो दिवश्च्युताः।
त्रयोऽपि पूर्वपुत्रास्ते संजाता इह जन्मनि ।
ऋणसंबन्धयोगेन मायादुःखादिकारकाः ॥
तस्मिन् वयसि संजाते जाता नाऽऽताः क्षयं गताः ।
पुत्रस्यापि वधूः सा हि तं पतिं पृष्ठतो ययौ ॥
सतीनां ह्यत्र संबन्धो देवानामपि दुस्त्यजः ।
महता व्याधिना पुत्रः पीडितो विषभक्षणात् ॥
एवं ते पुत्रतां गत्वा पित्रोर्दुःखप्रदायिनः ।
पुनः पुनस्तु विप्रास्ते भ्रातृतां पुत्रतां गताः ॥
एवं पापप्रभावेन संततिः क्षीणतां व्रजेत् ।
सतीपुण्यप्रभावेन धेन्वर्थे प्राणमुञ्चनात् ।
स्वर्गी भूत्वा पुनः सोऽयं भोगवान् भुवि जायते ॥
मृते भर्तरि या नारी प्रजां त्यजति दुस्त्यजाम् ।
सा च स्वर्गमवाप्नोति भर्तारमनुमोदते ॥

अरुण उवाच—

प्रायश्चित्तं कथं स्वामिन् तस्य पापस्य शान्तये ।
सत्यं कथय देवेश कृपां कृत्वा ममोपरि ॥

सूर्य उवाच—

अहं ते कथयिष्यामि तस्य पापस्य निष्कृतिम् ।
यां कृत्वा मुच्यते पापात्तन्मे निगदतः शृणु ॥
विप्राणां हारितं यच्च स्वर्णं तत्तोलकत्रयम् ।
भिन्नेन तेन पूर्वं वै त्रिगुणं देयमत्र तु ॥
यावज्जन्मानि जातानि तावद्गुणमुदाहृतम् ।
तज्जन्मसंख्यया राज्ञा द्विगुणं समुदाहृतम् ॥
गोदानेन समायुक्तं दातव्यं विदुषेऽरुण ।
शक्त्यभावे तदर्धं वा वित्तशाठ्यं न कारयेत् ॥
दरिद्रस्तदपि स्वर्णं यावत्तेषां हृतं भवेत् ।
दद्यात्पापविनाशाय ह्यात्मनो हितमावहन् ॥
वस्त्रमेकं च दातव्यं स्वर्णं बद्ध्वा तदञ्चले ।
सप्तफलीव्रतं कार्यं यथोक्तविधिमाचरेत् ॥
भर्त्रा च तत्कृतं कर्म स्त्रिया भागो न विद्यते ।
देवान् पितॄंश्च संतर्प्य स्नानं कृत्वा विधानतः ।
मम पूजा च कर्तव्या विधिवद्विनतात्मज ॥
ब्राह्मणान् भोजयेत्पश्चाच्चतुःपञ्चशतांस्तथा ।
विदुषे दक्षिणां दद्यादात्मनो हितमिच्छते ॥
अन्येभ्यो दक्षिणां दद्याद्वस्त्राद्याभरणात्मिकाम् ।
तोषयेत्प्राणिनश्चान्यान् भोजनाद्यैः खगोत्तम ।
ग्रहांश्चापि च संपूज्य तोषयेद्दक्षिणादिभिः ॥
प्रायश्चित्ते कृते वत्स नैव पापफलं लभेत् ।
तस्मात्तद्दोषशान्त्यर्थमात्मनो हितमिच्छता ।
कुलीनेन सदा कार्यं प्रायश्चित्तं यथाविधि ॥
एवंविधे कृते वत्स संततिर्निश्चला भवेत् ॥
ते हि विप्रा गृहीतार्था नैव संबन्धमाप्नुयुः ।
अन्येऽपि पुत्रपौत्राद्याः पापाभावात् स्थिराः सदा ॥
पुत्रत्रयसुखं चास्य सततं जायते ध्रुवम् ।
चतुष्टयं तु पुत्राणां भविष्यति न संशयः ॥

## अनिर्दिष्टकर्तृकवचनानि

नानाविधानि गर्भधारणौषधानि

[1]पिप्पल्यः शृङ्गवेरं च मरीचं केसरं तथा ।
समं घृतेन पातव्यं वन्ध्याऽपि लभते सुतम् ॥
[2]वटवृक्षोद्भवाञ् शृङ्गान् गोघृतेन समांशकान् ।
ऋतुकाले पिबेद्या तु नियतं पुत्रिणी भवेत् ॥
क्वाथेन हयगन्धायाः साधितं सघृतं पयः ।
ऋतुस्नाताऽबला पीत्वा गर्भं धत्ते न संशयः ॥
गोघृतेन सह नागकेशरं
श्लक्ष्णचूर्णितमृतौ नितम्बिनी ।
गव्यदुग्धनिरता पिबेद्धि या
सा तदाऽतिशयमेव वीरसूः ॥

(१) निप. २३१ ; आत. ४६४ ( पिप्पल्या शृङ्गवेरं च मरीचं नागकेशरम् । आज्येन सह भुञ्जीत अपि वन्ध्या प्रसूयते ॥ ) आयुर्वेदीये.

(२) निप. २३१–२३२.

कुरुण्टकोऽश्वगन्धा वा कर्कोटा शिखिचूलिका।
एकैका कुरुते गर्भं पीता क्षीरेण योषितः ॥
ऋतौ कसेरुकं शुण्ठीं सर्पिर्दिनचतुष्टयम् ।
क्षीरपीतं स्त्रिया गर्भं ग्राहयेन्नरसंगमे ॥
लक्ष्मणा शिखिचूली वा दुग्धपीता दिनत्रयम् ।
ऋतौ जाते स्त्रियं गर्भं ग्राहयेन्नरसंगमे ॥
बीजानि मातुलुङ्गस्य दुग्धस्विन्नानि सर्पिषा ।
सगर्भां तानि कुर्वन्ति पानाद्वन्ध्यामपि स्त्रियम् ॥
उपोषितेन पुष्ये तु जयामूले समुद्धृते ।
एकवर्णगवीक्षीरपीते स्त्री लभते सुतम् ।
पूतंजीवकमूले वा पयःपीते सुतं लभेत् ॥
लिङ्गाङ्कं लक्ष्मणामूलं घृतेन स्याहतौ सुतम् ।
दक्षनासापुटे नारी लभते पतिसंगमे ॥
[1]नागकेशरसंयुक्तं जीरकं गोघृतेन च ।
त्रिदिनं या पिबेन्नारी सा गर्भं लभते ध्रुवम् ॥

गर्भिणीरोगपरिहारद्वारा साक्षाच्च गर्भरक्षाकराणि औषधानि

[2]कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च ।
घृतं दुग्धशि( ? सि )तायुक्तं गर्भिण्याः शूलनुत् परम् ॥
चन्दनं शारिवालोध्रमृद्वीकाशर्करान्वितम् ।
क्वाथं कृत्वा प्रदातव्यं गर्भिण्या ज्वरशान्तये ॥
ह्रीवेरालुकरञ्जचन्दनवलाधन्याकवत्सादनी-
मुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद्गर्भिणी ।
नानावर्णरुजातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामयेषूत्तमः ॥
गर्भे शुष्केऽतिवातेन बालानामपि शुष्यताम् ।
सितामधुककाश्मर्यैः शृतमुत्थापने पयः ॥
समभागसितायुक्तं शालितण्डुलचूर्णकम् ।
उदुम्बरशिफाक्वाथः पीतो गर्भः सुरक्षितः ॥

पतन्तं स्तम्भयेद्गर्भं कुलालकरमृत्तिका ।
मधुच्छागीपयःपीता तथा श्वेतापराजिता ॥
[1]वरी विश्वा च गन्धा च मधुकं भृङ्गराट्समम् ।
अजादुग्धेन पानं तु नार्या गर्भस्य वृद्धिकृत् ॥

वरी शतावरी । विश्वा शुण्ठी । गन्धा अश्वगन्धा, भाषया 'आस्कन्द' इत्युच्यते । मधुकं ज्येष्ठमधु । भृङ्गराट् भाषया 'माका' इति । संर. ८१९

पीत्वा तण्डुलतोयेन तण्डुलीयजटा ऋतौ ।
पतद्गर्भा च या नारी स्थिरगर्भा प्रजायते ॥
शर्कराऽथ च ( ? यव ) तिलैः समांशकै-
र्माक्षिकेण सह भक्षितैः स्त्रियाः ।
नास्ति गर्भपतनोद्भवं भयं
पापभीतु( ? ति )रिव तीर्थसेवनम् ( ? नात् ) ॥

तण्डुलीयजटा तण्डुलजामूलम् । माक्षिवरं मधु । संर. ८२०

सर्पसंस्कारे बलिदानम्, आचार्याय नागस्तुतिपूर्वकं स्वर्णमयनागदानं सवृषभगोदानं च, नागप्रार्थना, ब्राह्मणब्राह्मणीपूजनम्, संस्कारफलम्

[1]इति सर्पस्य संस्कारं कृत्वा नागबलिं ततः ।
दत्वा स्वर्णमयं नागमपराधात्प्रमुच्यते ॥
[2]ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा ॥
विष्णुलोके च ये सर्पा वासुकिप्रमुखाश्च ये ।
नमोऽस्तु ... ... ॥
रुद्रलोके च ये सर्पास्तक्षकप्रमुखास्तथा ।
नमोऽस्तु ... ... ॥
खाण्डवस्य तथा दाहे स्वर्गं ये च समाश्रिताः ।
नमोऽस्तु ... ... ॥

(१) संर. ७६६. (२) निप. २३९.

(१) संर. ८१९–८२०.
(२) संको. ३८ ; संर ७०९.

[1]सर्पसत्रे च ये सर्पा आस्तिकेनाभिरक्षिताः ।
नमोऽस्तु ... ...॥
[2]मलयाद्रौ च ये सर्पाः कर्कोटकमुखाश्च ये ।
नमोऽस्तु... ... ॥
[3]धर्मलोके च ये सर्पा वैतरण्यां समाश्रिताः ।
नमोऽस्तु... ... ॥
[4]समुद्रे चैव ये सर्पाः पाताले चैव संस्थिताः ।
नमोऽस्तु... ... ॥
[5]ये सर्पाः पर्वतीयेषु दरीसंधिषु संस्थिताः ।
नमोऽस्तु... ... ॥
[6]ग्रामे वा यदि वाऽरण्ये ये सर्पाः प्रचरन्ति हि ।
नमोऽस्तु... ... ॥
[7]पृथिव्यां चैव ये सर्पा ये सर्पा बिलसंस्थिताः ।
नमोऽस्तु... ... ॥
[8]रसातले च ये सर्पा अनन्ताद्या महाबलाः ।
नमोऽस्तु... ... ॥'
[9]एवं स्तुत्वा तु नागेन्द्रमाचार्याय निवेदयेत् ॥
[10]आचार्याय ततो दद्यात्कृष्णां गां वृषभेण हि ।
वस्त्रालंकरणैः पूज्य ब्राह्मणं ब्राह्मणीं तथा ।
पूजयेद्विधिवद्भक्त्या ब्राह्मणांश्चैव तोषयेत् ॥

(१) संकौ. ३८ ; संर. ७०९ आस्तिकेनाभिर ( आस्तीकेन च र ).
(२) संकौ. ३८ ; संर. ७०९ याद्रौ च ( ये चैव ) टक ( टप्र ).
(३) संकौ. ३८ ; संर. ७०९ श्रिताः ( ह्रिताः ).
(४) संर. ७०९–७१०.
(५) संकौ. ३८ ; संर. ७१० तीयेषु ( ताग्रेषु ).
(६) संकौ. ३८ ; संर. ७१०.
(७) संकौ. ३८ ; संर. ७१० बिल ( बलि ).
(८) संकौ. ३८ तले ( लये ) ; संर. ७१० बलाः ( विषाः ).
(९) संकौ. ३८ ; संर. ७१०.
(१०) संकौ. ३८.

कृत्वा सर्पस्य संस्कारमनेन विधिना नरः ।
विरोगो जायते क्षिप्रं संततिं लभते शुभाम् ।
सर्पोपद्रवनिर्मुक्तो भवेत्सर्पप्रसादतः ॥
ततः पूर्वकृतं कर्म याति नाशं महामते ।
क्षीणपापो विशुद्धात्मा विष्णुलोके महीयते ॥

पुत्रादिप्राप्त्यर्थं ध्यानस्तुतिप्रदक्षिणादिरूपनानाविधाश्वत्थसेवाविधानम्

[1]अथ ध्यानं प्रवक्ष्यामि सर्वाभीष्टफलप्रदम् ।
पुत्रकामस्य देवस्य अश्वत्थस्य सुशोभनम् ॥
समुद्रपीतगगनं वरदाभयपाणिकम् ।
ध्यायेत्सौम्याननं विष्णुं सर्वकामार्थसिद्धये ।
अष्टबाहुसमायुक्तं सलक्ष्मीकं च सुव्रतम् ॥
' योगीश्वराय योगाय तस्मै श्रीविष्णवे नमः ।
अकारमूलरूपाय उकारस्कन्धशालिने ।
मकारफलपुष्पाय वृक्षराजाय ते नमः ॥'

'ओम् अस्य श्रीअश्वत्थस्तोत्रमहामन्त्रस्य परब्रह्म ऋषिरनुष्टुप् छन्दोऽश्वत्थनारायणो देवता ह्रां बीजं ह्रीं शक्तिः ह्रूं कीलकं यमा-(? अ)श्वत्थनारायणप्रसादसिद्ध्यर्थे जपे विनियोगः ॥'

ब्रह्मोवाच–

आग्नेयाभिमुखं देवं मुखतः कामरूपिणम् ।
इष्टकाम्यार्थसिद्ध्यर्थं पुत्रपौत्रविवर्धनम् ॥
श्वेतवर्णं सलक्ष्मीकं भुजाष्टकविभूषितम् ।
शङ्खचक्रधरं देवं पीतवाससमच्युतम् ॥
अभयं वरदं शान्तं खड्गखेटकधारिणम् ।
धनुर्बाणसमायुक्तं चिन्तयेत् पुरुषोत्तमम् ॥
एवं ध्यात्वा हरिं नित्यं परब्रह्मस्वरूपिणम् ।
सर्वकामप्रदाश्वत्थं ततः कृत्वा प्रदक्षिणम् ॥
' देवाचार्य नमस्तेऽस्तु नमस्ते शान्तिद प्रभो ।
क्रूरग्रहैः पीडितानामश्वत्थाय नमोऽस्तु नः (? ते) ॥

(१) विपा. १८५–१९२.

नीलाञ्जनगिरिं प्राप्य रविपुत्रो महाबलः ।
कृते पुरुषरूपोऽसि वृक्षराजाय ते नमः ॥ '

श्रीनारद उवाच--

अनायासेन यन्मर्त्यः सर्वान् कामानवाप्नुयात् ।
सर्वदेवात्मकत्वं च तन्मे ब्रूहि पितामह ॥

श्रीब्रह्मोवाच--

शृणु नारद सर्वज्ञ शुद्धं सर्वात्मकं तरुम् ।
प्रदक्षिणेन पूतं तं नराणां सर्वकामदम् ॥
अश्वत्थदक्षिणे रुद्रः पश्चिमे विष्णुरास्थितः ।
ब्रह्मा चोत्तरतस्तस्य पूर्वे चेन्द्रादिदेवताः ॥
स्कन्दोऽस्य स्कन्धे पत्रेषु विप्रा गावस्तथर्षयः ।
मूलाङ्कुरफलेष्वस्य वेदा यज्ञाः समाश्रिताः ॥
नदीनदाः सागराद्याः पूर्वादिक्रमसंस्थिताः ।
लोकधर्मं समाश्रित्य अश्वत्थं सेवयेद्बुधः ॥
पुराणस्मृतितन्त्रेभ्यः सारमुद्धृत्य संस्थितम् ।
प्रतिष्ठितमप्रतिष्ठं चाश्वत्थं सेवयेद्बुधः ॥
'त्वं क्षीरे( ? री ) फलितश्चैव शीतलश्च वनस्पते ।
त्वामाराध्य नरो विन्द्यादैहिकामुष्मिकं फलम् ॥
चलद्दलाय वृक्षाय सर्वदाऽचलविष्णवे ।
बोधिरूपाय देवाय अश्वत्थाय नमो नमः ॥

अश्वत्थ यस्मादसि वृक्षराजो
नारायणस्तिष्ठति सर्वकालम् ।
अतः शुचिस्त्वं सततं तरूणां
धन्योऽसि दुःस्वप्नविनाशकोऽसि ॥

क्षीरोदस्त्वां च येनायं येन श्रीस्त्वां निषेवते ।
सत्येन तेन वृक्षेन्द्र मामपि श्रीर्निषेवताम् ॥
एकादशोऽसि रुद्राणां वसूनामष्टमस्तथा ।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥
अग्निगर्भ शमीगर्भ वेदगर्भ प्रजापते ।
हिरण्यगर्भ श्रीगर्भ वेद( ? देव )गर्भ नमोऽस्तु ते ॥
आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥
आरात्तेऽस्त्वग्निर्नियतमस्त्वारात् परशुश्च ते ।
निवाते त्वाऽभिवर्षन्तु स्वस्ति तेऽस्तु वनस्पते ॥
अक्षिस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तनम् ।
शत्रूणां च समुत्थानमश्वत्थ शमयस्व मे ॥
अश्वत्थाय वरेण्याय सर्वैश्वर्यप्रदायिने ।
नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥
मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः ॥
यं दृष्ट्वा मुच्यते रोगात् स्पृष्ट्वा पापैः प्रमुच्यते ।
यमाश्लिष्य च दीर्घायुस्तमश्वत्थं नमाम्यहम् ॥
अश्वत्थ त्वं महाभागः सुभगः सुप्रदर्शनः ।
मिष्टान्नं भोजनं देहि शत्रूणां च पराजयम् ॥
आयुः प्रजा धनं धान्यं सौभाग्यं सर्वदा शुभम् ।
देहि देव महावृक्ष त्वामहं चाभिवादये ॥
ऋङ्मन्त्रं यजुषो मन्त्रं साम गायसि गानवत् ।
अश्वत्थ वेदमूलस्त्वमृषिभिः प्रोच्यसे सदा ॥'
ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीडितः ।
आवृत्य द्वादशं लक्षं शुद्धः पापातिगो भवेत् ॥
ब्रह्मचारी हविष्याशी ह्यधःशायी जितेन्द्रियः ।
पापोपहतमर्त्यस्तु व्रतमेतत् समाचरेत् ॥
एकहस्तं द्विहस्तं वा कुर्याद्गोमयलेपनम् ।
श्वेतगन्धाक्षतैः पुष्पैर्धूपदीपनिवेदनैः ॥
पदात् पदान्तरं गत्वा कुर्याच्चलनवर्जितः ।
वाचा स्तोत्रं हृदा ध्यानं चतुरङ्गं प्रदक्षिणम् ॥
आसन्नप्रसवा नारी नीरपूर्णं घटं यथा ।
उद्वहन्ती शनैर्याति तथा कुर्यात् प्रदक्षिणम् ॥
ततः प्रदक्षिणं कुर्यादश्वत्थस्य शनैः शनैः ।
यदि शीघ्रेण तत् कुर्यात्तत् सर्वं निष्फलं भवेत् ॥
अश्वत्थः स्थापितो येन कुलं स्थानं तथैव च ।
धनायुःसंततेर्वृद्धिर्नरकात्तारयेत् पितॄन् ॥
अश्वत्थमूलमाश्रित्य शाकेनान्नेन वोदकैः ।
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥

अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात् ।
अक्षयं फलमाप्नोति ब्रह्मणो वचनं यथा ॥
एवमाश्वासितोऽश्वत्थः सदाऽऽश्वासयते च माम् ।
यज्ञार्थे छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात् ॥
अश्वत्थः पूजितो येन पूजिताः सर्वदेवताः ।
अश्वत्थश्छेदितो येन च्छेदिताः पितृदेवताः ॥
अमायां तु गुरोर्वारे ह्यश्वत्थस्थापितोदकम् ।
तत्र स्नात्वा जपन्नित्यं ब्रह्महत्यां व्यपोहति ॥
अश्वत्थस्य जले पत्रच्छाया भवति कुत्रचित् ।
तत् प्रयागसमं तीर्थं तत्र संनिहितो हरिः ॥
पापोपहतमर्त्यानां व्रतान्येतानि कारयेत् ।
सकामो लभते कामं निष्कामो मोक्षमाप्नुयात् ॥
यः पठेच्छृणुयाद्वाऽपि ह्यश्वत्थस्य स्तवं शुभम् ।
पदे पदेऽश्वमेधानां फलमाप्नोति मानवः ॥
कुर्वाणो भक्तिभावेन ह्यश्वत्थस्य प्रदक्षिणम् ।
सर्वान् कामानवाप्नोति विष्णुसायुज्यमाप्नुयात् ॥

भानुभौमभृगुक्रान्तिरिक्तापातेषु पर्वसु ।
दुर्दिने वैधृतौ रात्रावपराह्णे च संध्ययोः ॥
मन्दादिनत्रये चैव कुर्यान्नाश्वत्थसेवनम् ।
अश्वत्थं मन्दवारेण स्पृष्ट्वा त्र्यम्बकं जपेत् ॥
कालमृत्युर्न यात्येव किमुत ह्यपमृत्यवः ।
ऋणकाद्यपहारे च रोगदारिद्र्यनाशनम् ॥
अश्वत्थं सिन्धुराजं च नित्यं सेवेत न स्पृशेत् ।
मन्दवारे स्पृशेत् पूर्वं सिन्धुराजं च पर्वणि ॥
कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः ।
सौरः(? रिः) शनैश्चरो मन्दः पिप्पलादिषु संस्थितः ॥

एतानि शनिनामानि जपेदश्वत्थसंनिधौ ।
शनैश्चरकृता पीडा न कदाचिद्भविष्यति ॥
अश्वत्थरूपिणं विष्णुं सर्वकामफलप्रदम् ।
शाखारूपधरं देवं तमश्वत्थं नमाम्यहम् ॥

कालनीलाञ्जनप्रख्यं नीलजीमूतसंनिभम् ।
छायामार्तण्डसूनुं च प्रणवेन(? मेत) विशेषतः ॥
दृष्ट्वा तु हरते पापं स्पृष्ट्वा लक्ष्मीश्च वर्धते ॥
एकं गणाधिपे दद्याद्द्वे सूर्ये त्रीणि शंकरे ।
चत्वारि केशवे दद्यात् सप्ताश्वत्थ(? त्थे)-प्रदक्षिणम् ॥

नमोऽर्कपुत्राय शनैश्चराय
नीलाभ्रवर्णाजिनमेखलाय ।
स्पृष्टो हराघं प्रणतोऽस्मि नित्यं
फलप्रदो मे भव सूर्यपुत्र ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत् किलासथ यत् सनवथ पूरुषम् ॥
यदहं वाजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
यदोषधयः संगच्छन्ते राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः ॥

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्व-
त्त्यनश्नन्नन्यो अभिचाकशीति ॥

शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः ।
शं वातो वात्वरपा अपस्रिधः ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥

वनस्पते शतवल्शो विरोह
सहस्रवल्शा वि वयं रुहेम ।
यं त्वामयं स्वधितिस्तेजमानः
प्रणिनाय महते सौभगाय ॥

अश्वत्थसेवा तिलपात्रदानं
गोस्पर्शनं ब्राह्मणभोजनं च ।
एतानि सद्यः प्रहरन्ति पापं
गङ्गानदीभारतकीर्तनं च ॥

पार्थिवलिङ्गपूजायामन्तिमस्तुतिमन्त्राः

'(१) 'ॐ नम ओङ्काररूपाय नमोऽक्षयवपुर्धृते ।
नमो नादात्मने तुभ्यं नमो बिन्दुकलात्मने ।
अलिङ्गलिङ्गरूपाय रूपातीताय ते नमः ॥
त्वं माता सर्वलोकानां त्वमेव जगतः पिता ।
त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियः प्रियरूपधृक् ।
त्वं गुरुस्त्वं गतिः साक्षी त्वं पिता त्वं पितामहः ॥
नमस्ते भगवन्रुद्र भास्करामिततेजसे ।
नमो भवाय देवाय उमया सहिताय च ॥
शर्वाय क्षितिरूपाय सदा सुरभिणे नमः ।
ईशान वायवे तुभ्यं संस्पर्शाय च ते नमः ॥
पशूनां पतये चैव पावकामिततेजसे ।
भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥
महादेवाय सोमाय अमृताय नमोऽस्तु ते ।
उग्राय यजमानाय नमस्ते कर्मयोगिने ॥
पार्थिवस्य च लिङ्गस्य यन्मया पूजनं कृतम् ।
तेन श्रीभगवान्रुद्रो वाञ्छितार्थं प्रयच्छतु ॥'
इति स्तुत्वा तु तल्लिङ्गं प्रणिपत्य विसर्जयेत् ॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
शिवः पशुपतिश्चैव क्षमस्वेति विसर्जनम् ॥

विष्णुश्राद्धस्य बाल–दम्पतिदोषनाशकत्वम्

'(२) बालस्यापि च दम्पत्योरज्ञाते पापकर्मणि ।
ये दोषा गर्भसंभूता ये दोषा बीजिनस्तथा ॥
सर्पदंशादिजा ये च कर्मभिः संचिताश्च ये ।
ते सर्वे नाशमायान्ति विष्णुश्राद्धप्रसादतः ॥
अनादिकर्मसंभूतं कर्म ज्ञानेन दह्यते ।
तद्वत् प्राणिकृतं पापं विष्णुश्राद्धेन दह्यते ॥

अथ विष्णुश्राद्धम् । तच्च कर्मक्षयाय । कर्मविपाकाद्धि मृतापत्यत्वमनपत्यत्वं वा जायते, तदर्थमिदमनुष्ठेयम् । तद्यथा– कर्मणां विशेषेण पचनं पाकः कर्मविपाकः । स त्रिविधो जन्मायुर्भोगैः । जन्म कृम्यादि, 'पतितं याजयित्वा तु कृमियोनौ प्रजायते ।' इत्यादिस्मरणात् । आयुः पञ्चवर्षादिकम्, 'तत्र जीवति वर्षाणि दश पञ्च च वा द्विज ।' इति स्मरणात् । भोगो यमयातनादिः, 'यमलोके तु ते घोरां लभन्ते यमयातनाम् ।' इति स्मृतेः । ततश्च येन कर्मणा अनृतभाषणादिना बालनिधनादि जायते तन्निरासाय इदं श्राद्धम् । ननु अल्पायुष्ट्वादि चेत् कर्मणः फलं कथं तर्हि विष्णुश्राद्धादिना तन्निरासः ? प्रारब्धकर्मणां भोगादेव क्षयात् । सत्यम्, तथाऽपि बलीयसा विष्णुश्राद्धादिना गयाश्राद्धेन नानायोनिप्रविष्ट-प्राण्युद्धारवत् जन्माल्पायुष्ट्वयातना नश्यति( ? न्ति ) । ननु गयाश्राद्धेनापि नानायोनिप्रविष्टानां कथमुद्धारः ? तदुद्धारे वा कथं स्मृत्यविरोधः ? उच्यते । तीर्थपुत्र-सामर्थ्येन नानायोनिप्रविष्टा अपि स्वर्गब्रह्मलोकयोः क्षुत्पिपासादिरहितास्तिष्ठन्तस्त एव वंशच्छेदभयात् पुनः संसारं प्राप्य पुराणां योनिं प्रविशन्ति । स्मृतिरपि प्रति-बन्धकाभावे सत्येव कर्मणां यातनार्थतां बोधयति । अत एवोक्तम्– 'उद्धृता ये गयाश्राद्धे ब्रह्मलोकेषु ते शुभे । भुञ्जते क्षुत्पिपासा वा न तेषां जायते क्वचित् ॥ न चापि पतनं तस्मात् स्थानाद्भवति भूमिप । वंशच्छेदात् पुनः सर्वेऽवतरन्ति महीतले ॥ आगत्यास्मात्ततो लोकान्निपत्य जगतीतले । पापाः पापां समायान्ति योनिं श्रेष्ठां शुभान्विताः ॥'। ननु किमिदं विष्णुश्राद्धम् ? विष्णुरूपिपित्रु-द्देशेन क्रियमाणं श्राद्धं विष्णुश्राद्धमिति चेत् न, 'पितृ-स्वरूपी जनार्दनवासुदेवः प्रीयताम्' इति विष्णुभावनया पित्राद्युद्देश्यकक्षयाहश्राद्धस्यापि विष्णुश्राद्धत्वप्रसङ्गात् । कथं च विष्णूद्देशेन अनुष्ठीयमानकर्मविशेषात् कूटवादादि-रतानां कर्मक्षयः ? किंच, किमर्थमिदमनुष्ठेयम् ? बीजि-दोषपरिहारार्थं वा प्राणिदोषपरिहारार्थं वा ? नाऽऽद्यः, कूटवादादिरतोद्धारार्थत्वात् । नान्त्यः, कर्तर्येव कर्मभिः फलस्य जननात् । उच्यते । मृतप्राणिदोषनिराकरणद्वारा दीर्घायुःपुत्रादिप्राप्त्यर्थं तथा विष्णुभावनया मृतोद्देशेन क्रियमाणश्राद्धस्य विष्णुश्राद्धत्वात् पूतत्वादिगुणविशिष्ट-पुत्रेण पुत्र( ? त्रि )त्वस्य जातेष्ट्येव स्ववंशजानां कृम्या-दियोनिनिराकरणेन तेषां स्वापत्यत्वे सति तैरपत्यवत्त्वस्य

(१) विपा. २१९.
(२) विपा. १२९–१३०.

कर्तुमिष्ट( १ कर्तृनिष्ठ )फलत्वात् । ततश्च दम्पत्योर्दोषपरिहारार्थं रुद्राभिषेकप्रायश्चित्तानुष्ठानात् प्राणिनां च दोषपरिहारार्थं प्रायश्चित्तश्राद्धयोरनुष्ठानाद्वीचिप्राणिनोः कर्मक्षयात् तस्यैव प्राणिनो दीर्घायुष्ट्वादिविशिष्टस्वपुत्रत्वसिद्ध्यर्थं विष्णुश्राद्धानुष्ठानमिति सिद्धम् । उक्तं च— ‘ बालस्यापि ... श्राद्धेन दह्यते ।। ’ इति । गर्भसंभूताः गर्भेषु संभूताः, तद्गता इत्यर्थः । विपा. १२७–१२९

विष्णुश्राद्धात्प्राक्कर्तव्यं प्रजानाशकप्रेतोद्धारविधानम्

येन कर्मविपाकेन म्रियन्ते बालकानि च ।
तत्कर्मपरिहारार्थमुच्यते वंशवृद्धये ॥
बालकस्यापि दम्पत्योरज्ञाते पापकर्मणि ।
कुर्यात् प्रतिकृतिं तत्र कुशरूपां यथाविधि ॥
‘ यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम् ।
ममाऽऽज्ञया कुशमयीं प्रकृतिं स विशत्विमाम् ।।
जन्मजन्मान्तरकृतानपराधान् कृतैनसः ।
पातकोपमहापापं वायुरूप क्षमस्व मे ॥
नमोऽस्तु विष्णुरूपाय त्राहि मां शरणागतम् ।
निष्कृतिं ते करिष्यामि नवाब्दाद्ब्रह्महव्रतात् ॥
तस्य काश्यपगोत्रस्य वायुरूपस्य देहिनः ।
प्रेतस्य चोद्धारविधिं सद्यः संजनयाम्यथ ॥
यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम् ।
तस्य प्रेतस्य प्रीत्यर्थं पिण्डोऽयमुपतिष्ठतु ॥ ’
लभते चोत्तमगतिं पिण्डोदकविधौ कृते ।
नवानि नवमिश्राणि प्रेतश्राद्धानि यानि तु ।
तत्सिद्धये प्रकर्तव्यं द्वात्रिंशद्द्विजतर्पणम् ॥
‘ यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम् ।
विष्णुरूपः स लभतां तृप्तिं ब्राह्मणतर्पणात् ॥ ’
विष्णुश्राद्धं ततः कुर्यात् संतत्यै सुतलब्धये ॥

विष्णुश्राद्धाङ्गरुद्रस्नानविधानम्

[1]‘रुद्रस्नानविधिं वक्ष्ये दम्पत्योश्च सुतार्थिनोः ।
कृष्णाष्टम्यामुपोष्यैव नवम्यां सुसमाहितौ ॥
नानावर्णैर्धान्यपिष्टैः पद्ममष्टदलं लिखेत् ।
विन्यस्य कलशानष्टौ दिक्ष्वष्टासु च सोदकान् ॥
पुनरेकं पूर्वभागे कलशं विन्यसेत्ततः ।
पद्मस्योपरि संविष्टौ दम्पती प्राङ्मुखौ शुची ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ।
नद्या उभयकूलात्तु मृदमाहृत्य यत्नतः ॥
अपरित्यक्तवस्त्रौ तु लिप्तगात्रौ तथा मृदा ।
अच्छिद्राण्यर्कपत्राणि निधाय शतसप्तकम् ॥
रुद्रस्नानं पुरा कृत्वा रुद्ररूपाण्यथो जपेत् ।
दिक्ष्वष्टस्वष्टरूपाणि नवमे त्रीणि वै तथा ॥
रूपाण्येकादशैवं तु जप्त्वा तु विधिपूर्वकम् ।
अष्टानां कलशानां तदुदकं शान्तिदं क्षिपेत् ॥
तद्धारिणाऽर्कपत्रेण दम्पत्योश्चाभिषेचने ।
अर्कपत्रशतानां च सप्तानां त्याग इष्यते ॥
प्रत्येकं रुद्रमन्त्रेण स्नायातां दम्पती ततः ।
त्यक्त्वा पूर्वाणि वस्त्राणि ततोऽन्यांशुकधारिणौ ॥
न ग्राह्याणि तु पूर्वाणि त्वाचार्यं पूजयेत्ततः ।
पूजितां रुद्रमूर्तिं च निष्कमानमितां शुभाम् ॥
सवाहनां सालंकारामाचार्याय निवेदयेत् ।
एतद्विधानपूर्वं तु विष्णुश्राद्धं समाचरेत् ॥
तस्य पुत्राः प्रजायन्ते सुशीलाश्च चिरायुषः ।
सुभगा धर्मशास्त्रज्ञा धर्मिष्ठाः सत्यवादिनः ।
नदीसंगम एवायं कर्तव्यस्तूदितो विधिः ॥

तत्र ‘ रुद्रस्नानविधिं वक्ष्ये ’ इत्युपक्रम्य ‘ एतद्विधानपूर्वं तु विष्णुश्राद्धं समाचरेत् । ’ इत्युक्तत्वादादौ रुद्रस्नानं कार्यम् । तन्मूलभूतवाक्यानि यथा— ‘ रुद्रस्नानविधिं ... स्तूदितो विधिः ॥ ’ ।

विपा. १३१

पुत्रप्राप्तिकरी सौभरिमन्त्रोपासना

[1] ‘अरं इन्द्रगवान् ...... ब्रह्मणे वेधसे तथा ।
अष्टौ मे पुत्रा जायन्तामक्षीणरेतसोऽर्द्धिनः ॥ ’

(१) विपा. १३१–१३२.

(१) निप. २३४–२३५.

ब्रह्माऽस्य देवता प्रोक्ता ऋषिः स्यात् सौभरिः स्वयम् ।
छन्दोऽनुष्टुप् ततो बीजमरः शक्तिर्वसुप्रिया ॥
अरुणकमलसंस्थो रक्तवर्णो विरिञ्चि-
र्विविधरुचिरभूषालंकृतो विश्वयोनिः ।
अभयवरकमण्डल्वक्षसूत्रैः सुबाहु-
र्वितरतु विविधाङ्गो विश्वभोगान्सुपुत्रान् ॥
समर्चयेच्चामरयुग्ममध्ये
नानोपचारैः कमलादिपुष्पैः ।
विदिक्षु धर्मादिचतुष्टयं यजे-
द्दिशासु धर्मादिचतुष्टयं च ॥
ऊर्ध्वं प्रलम्बश्च तथोर्ध्वकेशो
विमोहनो गन्धपतिः पुरस्तात् ।
कामः कलिङ्गः कपिरित्यथाष्टौ
यजेद्बहिः षोडशपत्रपद्मे ॥
लोकेश्वरानिन्द्रमुखांस्तथाऽऽयुधान्
मध्ये च देवं प्रयजेच्च मन्त्री ।
... ... ... ... ...
... ... ... ... ... ॥
अनुदिनमिति मन्त्रं संयतो यो जपेत्तं
प्रतिनियतविहाराहारशय्यानिवासः ।
अनुभवति सदैवं व्याधिदारिद्र्यहीना-
नपरिमितधनाढ्यान् पुत्रपौत्रान् पवित्रान् ॥
अनुदिनमुदये यो भक्तिनम्रस्त्रिसंध्यं
शतमितमथवाऽर्धं तस्य मन्त्रं जपेच्च ।
सलिलमपि पिबेद्यो मन्त्रपूतं प्रभाते
स तु सुनिशितबुद्धीन् प्राप्नुयादष्ट पुत्रान् ॥
स्नात्वा शिरसि मन्त्रं वा प्रजपेदेकविंशतिम् ।
प्रोक्षयेन्मूर्धनि जलं पिबेद्वा मन्त्रपावितम् ॥
मूर्धगैश्च तथा मुक्तैरद्भिर्मन्त्रोदकं मनोः ।
वर्णसंख्यायुतं जप्त्वा पर्युक्षेच्चैव मूर्धनि ॥
उपास्य संध्यां मन्त्रेण गृहीत्वाऽञ्जलिना जलम् ।
मन्त्रावृत्त्यैकविंशत्या पुनस्तदुदकं पिबेत् ॥
पाययेद्वाऽथवा मर्त्यानन्यानपि यथाविधि ।
आयुर्वृद्धिं यशः कीर्तिं लभते द्वार्धवत्सरात् ।
सर्वलक्षणसंयुक्तानष्टौ पुत्रान् स विन्दति ॥

पुत्रप्रदसंतानगोपालमन्त्रविधानम्

[1]अथ पुत्रप्रदं वच्मि कृष्णमन्त्रमनुष्टुभम् ।
देवकीसुतवर्णान्ते गोविन्दपदमुच्चरेत् ॥
वासुदेवपदं प्रोच्य संबुद्ध्यन्तं जगत्पतिम् ।
देहि मे तनयं प्रोच्य कृष्ण त्वामहमीरयेत् ॥
शरणं गत इत्यन्तो मन्त्रो द्वात्रिंशदक्षरः ।
नारदो मुनिरस्योक्तोऽनुष्टुप्छन्दः समीरितम् ।
देवः सुतप्रदः कृष्णः पादैः सर्वेण चाङ्गकम् ॥
विजयेन युतो रथस्थितः
प्रसमानीय समुद्रमध्यतः ।
अददत्तनयान् द्विजन्मने
स्मरणीयो वसुदेवनन्दनः ॥
लक्षं जपोऽयुतं होमस्तिलैर्मधुरसप्लुतैः ।
अर्चा पूर्वोदिता चैवं मन्त्रः पुत्रप्रदो नृणाम् ॥

## स्मृत्यर्थसारः

नारायणबलिविधानम्

[2]* अथ नारायणबलिरुच्यते— कस्यांचिच्छुक्लैकादश्यां विष्णुं वैवस्वतं यमं च यथावदभ्यर्च्य तत्समीपे मधुघृतप्लुतांस्तिलमिश्रान् दश पिण्डान् विष्णुरूपेण प्रेतमनुस्मरन् प्रेतनामगोत्रे उच्चार्य दक्षिणाग्रेषु दर्भेषु दक्षिणामुखो दत्त्वा गन्धाद्यैरभ्यर्च्य पिण्डप्रवहणान्तं कृत्वा नद्यां क्षिपेत् । न पत्न्यादिभ्यो दद्यात् । ततस्तस्यामेव रात्र्यामयुग्मान् ब्राह्मणानामन्त्र्योपोषितः श्वोभूते मध्याह्ने विष्णुमभ्यर्च्यैकोद्दिष्टेन विधिना

---

* मिताक्षरायाम् ( ३।६ ) अयं ग्रन्थो विद्यते ।

(१) संर. ७३१.

(२) स्मृसार. ८५–८६.

ब्राह्मणपादप्रक्षालनादि तृप्तिप्रश्नान्तं कृत्वा पिण्डपितृयज्ञवदुल्लेखनाद्यवनेजनान्तं कृत्वा विष्णवे ब्रह्मणे शिवाय यमाय च सपरिवाराय चतुष्पिण्डान् दत्त्वा नामगोत्रसहितं प्रेतं संस्मृत्य विष्णोर्नाम संकीर्त्य पञ्चमं पिण्डं दद्यात्। ततो विप्रानाचान्तान् दक्षिणादिभिस्तोषयित्वा तन्मध्ये चैकं गुणवत्तमं प्रेतबुद्ध्याऽनुस्मरन् गोभूहिरण्यादिभिरतिशयेन तोषयित्वा पवित्रपाणिभिर्विप्रैः प्रेताय तिलसहितमुदकं दापयित्वा स्वजनैः सहितो भुञ्जीत ॥

## तत्त्वसागरसंहितायाम्

पुत्रप्रदं गणाध्यक्षस्नपनविधानम्

नारद उवाच–

'अथवाऽन्यत्प्रवक्ष्यामि गर्भोत्पत्तौ च कारणम्।
सिद्धिक्षेत्रे महाद्रौ वा नदीनां संगमेषु वा ॥

ब्राह्मणान् भोजयेच्छिष्टान् सपत्नीकान् बहूनपि।
अयने विषुवे चैव चन्द्रसूर्यग्रहेऽथवा ॥

पूर्वेद्युरुपवासः स्याद्भोजयित्वा तथा द्विजान्।
प्रभाते स्नापयेत् पत्नीं विधिनाऽनेन साधकः ॥

आलिख्य मण्डलं तत्र गणाध्यक्षं समर्चयेत्।
बटुश्च वामनश्चैव महाकायो महोदरः।
भद्रो मणिरवो नाम इत्येते तत्र धारकाः ॥
तिरन्ती व्याहृतिः कामा वाञ्छा विघ्ना वरप्रदा।
रक्षाभा कीर्तिकेत्यष्टौ गणनाथस्य शक्तयः ॥
शृङ्गं च पञ्चकं चैव परशुं लड्डुकं तथा।
दधतं पूजयेद्भक्त्या तुष्टिवक्त्रं विनायकम् ॥
गायत्रीमस्य वक्ष्यामि यया पूज्यो विनायकः ॥
'ॐ विनायकाय विद्महे वक्रतुण्डाय धीमहि।
तन्नो दन्ती प्रचोदयात् ॥'
मण्डलं सर्वतोभद्रं वाहनं चाऽऽखुरुच्यते।
कलसानष्ट संस्थाप्य मध्ये कुम्भं ततः शुभम् ॥

सूत्रेणाऽऽवेष्टयेत् सर्वान् यवान्तरतिलान्तरम्।
गणेशेशानदिग्भागे कलशस्थापनं भवेत् ॥
मध्यकुम्भे न्यसेत्तावन्नववल्लाम्रवौषधीः।
पूरयेत्तीर्थतोयेन विघ्नबीजेन देशिकः ॥

'ॐ गं गणपतये नमः' इति विघ्नेशबीजम्। विपा. १७६

तस्मिन् कुम्भे न्यसेत्सप्त मृत्तिका यमभागतः।
आग्नेये गन्धपुष्पाणि याम्ये कृष्णतिलाः स्मृताः।
नैर्ऋत्ये छागदुग्धं च वारुणे पञ्चगव्यकम् ॥
पञ्चामृतं तु वायव्ये सौम्ये चैवाक्षयं मधु।
ऐशान्ये यावकं सक्तुमेवमेतैस्तु पूरयेत् ॥

अथ अष्टकलशेषु क्षेप्याणि द्रव्याण्याह–आग्नेय इति। विपा. १७६

ब्रह्माण्याद्यष्टकुम्भेषु वीरभद्रान्तमेव हि।
स्वमन्त्रैरेव विन्यस्य पूजयेन्मातृचक्रकम् ॥
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा।
वाराहीन्द्री च चामुण्डा वीरभद्रस्तथाऽष्टमः ॥
मध्ये गणेशमभ्यर्च्य सर्वानुपचरेत्तथा।
यद्देवमेदिता या यास्तत्तद्वर्णायुधाङ्किताः ॥
पालाशानि तु पत्राणि निश्छिद्राणि समानि वै।
अष्टोत्तरसहस्राणि समादायाधिवासयेत् ॥
चतुर्भिर्ब्राह्मणैः शान्तैर्ऋग्यजुःसामाथर्वभिः।
प्रतिप्रणवसंयुक्तगायत्र्या स्नपयेच्छुभैः ॥
नालमादाय संप्रोक्ष्य पत्रात्पत्रं परित्यजेत्।
पूर्णेषु सर्वपत्रेषु ब्राह्मणेभ्यश्च दक्षिणाः ॥
ऋत्विजां प्रीतिसिद्ध्यर्थं दद्याच्छक्त्या स धामवान्।

सपत्नीं स्नपयेदित्थमन्तर्वत्नीं तु केवलाम् ॥
अथ तीर्थात् समुत्तीर्य परिधायान्यवाससी।
सपत्नीकः स्नापयेत्तु मातृचक्रस्थितैः क्रमात् ॥
ब्राह्मण्याद्यैर्वरस्त्रीभिर्मध्यकुम्भे तु दैशिकः।
स्तुतिमङ्गलनिर्घोषैर्वीणावेणुरवावृतम् ॥
स्नापयेन्मूलमन्त्रेण गणेशस्य प्रसन्नवान्।
विनायकं पुनः पूज्य मण्डलस्थं विसर्जयेत् ॥

(१) विपा. १७५–१७८.

ततः प्रभृति देवेन्द्रं गणनाथं प्रपूजयेत् ।
आचार्यं पूजयेत् पश्चाद्वस्त्रैरन्यैश्च वाञ्छितैः ॥
एवं यो विधिना यागं कारयेत् प्रयतोऽशठः ।
पुत्रान् वित्तं तथाऽऽरोग्यमायुः पूर्णमथाऽऽप्नुयात् ।
दौर्भाग्यं व्याधिमाधिं च गर्भनाशं न पश्यति ॥

## महार्णवे

पुत्रमरणनिमित्तप्राग्भवीयबालघातदोषपरिहारार्थानि ब्राह्मणोद्वाहन-हरिवंशश्रवण-महारुद्रजपरूपाणि प्रायश्चित्तानि

'बालघाती च पुरुषो मृतवत्सः प्रजायते ।
ब्राह्मणोद्वाहनं चैव कर्तव्यं तेन शुध्यति ॥
श्रवणं हरिवंशस्य कर्तव्यं च यथाविधि ।
महारुद्रजपं चैव कारयेच्च यथाविधि ॥
जुहुयाच्च दशांशेन दूर्वामाज्यपरिप्लुताम् ।
एकादश स्वर्णनिष्काः प्रदातव्याश्च दक्षिणा ॥
एकादश पशूंश्चैव दद्याद्वित्तानुसारतः ।
अन्येभ्योऽपि यथाशक्ति द्विजेभ्यो दक्षिणां दिशेत् ॥
स्नापयेद्दम्पती पश्चान्मन्त्रैर्वरुणदैवतैः ।
आचार्याय प्रदेयानि वस्त्रालंकरणानि च ॥

अथ तादृशग्रहसूचितमृतपुत्रत्वहरं महार्णवे– 'बालघाती ...' इति । ब्राह्मणोद्वाहनं हरिवंशश्रवणं रुद्रजपश्चेति त्रीण्यपि निरपेक्षाणि शक्त्याद्यपेक्षया व्यस्तानि समस्तानि योज्यानि । पशुः गौः । वारुणमन्त्राः 'कस्य नूनम्' इत्यादयः 'पवमानः सुवर्जनः' इत्यादयश्च ग्राह्या इति महार्णवः ।

अथ हरिवंशश्रवणविधिस्तदुक्त एवोच्यते– दम्पत्योरनुकूले सुदिने विनायकशान्तिं विनायकपूजां वा स्वशक्त्यनुसारेण विधाय स्वस्तिवाचनं कुर्यात् । ततः 'दीर्घायुःपुत्रकामनया हरिवंशश्रवणं करिष्यावहे' 'करिष्ये' इति वा संकल्प्य । उभयोर्दम्पत्योः कर्तृत्वे प्रथमः संकल्पः, एकस्य कर्तृत्वे द्वितीयः । ततो विभवानुसारेण श्रुताध्ययनसंपन्नं ब्राह्मणं वस्त्रमुद्रिकाकुण्डलताम्बूलादिभिः संपूज्य 'एभिश्चन्दनताम्बूलादिभिः हरिवंशश्रवणे श्रावयितारं त्वामहं वृणे' इति वरणं कुर्यात् । ततः प्रतिदिनं 'त्रायन्ताम्' इत्यादिवैदिकमन्त्रैः 'सुरास्त्वा' इत्यादिपौराणमन्त्रैश्च सुस्नातावलंकृतौ दम्पती तदे(? दे)कचित्तौ शृणुयाताम् । वाचयिता च प्रतिदिनं 'नारायणं नमस्कृत्य' इत्यादि पठित्वा 'नारायणाय नमो नराय नरोत्तमाय नमो देव्यै सरस्वत्यै नमो व्यासाय नमो गुरुभ्यो नमः' इत्युक्त्वा वाचयेत् । श्रोता प्रतिदिनमाचार्यं पुस्तकं च पूजयेत् । अन्ते स्वलंकृतां गां पयस्विनीं सवत्सां स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठीं कांस्यदोहनवस्त्रयुतां गोदानविधिना वाचकाय दत्त्वा वाचकसंतोषावहपरिमाणं हेम दक्षिणां दत्त्वा 'न्यूनं संपूर्णमस्तु' इति वाचयेत् । गोदानविधिः कार्तिककृत्येऽभिहितः । विनायकशान्तिरुपनयनप्रकरणेऽभिहिता ।

संकौ. २१०

सदास्रवद्रक्तात्वनिमित्तं तन्निष्कृतिश्च

'मासोपवासिनी नारी रेतः प्रस्रावयेद्यदि ।
पतिसंपर्कदोषेण जायते साऽन्यजन्मनि ॥
स्रवद्रक्ता सदा योनौ तन्निष्कृतिरिहोच्यते ।
मासोपवासं कुर्वीत तथा मासं पयोव्रतम् ॥

## कालकौमुद्याम्

पार्थिवलिङ्गपूजायां लिङ्गप्रमाणम्

'अक्षादल्पप्रमाणं तु न लिङ्गं कुत्रचिन्नरः ।
कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत् ॥

अक्षः अशीतिरक्तिकाः, 'ते षोडशाक्षः' इत्यमरात् । अङ्गुष्ठशब्देन अङ्गुष्ठबृहत्पर्वग्रन्थिरुच्यते, 'अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते । तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदा ॥' इति छन्दोगपरिशिष्टात् । अङ्गुष्ठमानम् अङ्गुलिमानं चेत्यर्थः ।

संर. ७१४–७१५

(१) संकौ. २१०.

(१) विपा. २३८.

(२) संर. ७१४.

## शिशुरक्षारत्ने

प्रथमादिद्वादशान्तेषु गर्भमासेषु प्रतिमाससमनुष्ठेयं बलिकर्म औषधं च

**'[1]* प्रजापतिं समुद्दिश्य मास्याद्ये बलिमाचरेत् ।
श्वेतवस्त्रं पायसं च गव्यं क्षीरं तथा घृतम् ॥**

**श्वेतपुष्पं चन्दनं च सरत्नं चाङ्गुलीयकम् ।
कुम्भे निधाय देयो वै बलिर्धूपैस्तु धूपितः ॥**

**दीपैर्नीराजितश्चापि ताम्बूलेन समन्वितः ।
हिरण्यसहितं भक्त्या गवां दोहे निधापयेत् ॥**

अथ गर्भरक्षाविधानं विधानमालायां शिशुरक्षारत्ने— 'प्रजापतिं समुद्दिश्य ... वेदना सा च शाम्यति ॥'। गवां दोहे प्रदोषकाले गोष्ठे देशे वा । विपा. २५१

**'एह्येहि भगवन् ब्रह्मन् प्रजाकर्तः प्रजापते ।
बलिं परिगृहाणेमं सापत्यां रक्ष गर्भिणीम् ॥'**

इति मन्त्रेण बलिं दद्यात् । विपा. २५१

**प्रथमे मासि यदि गर्भिण्या गर्भवेदना स्यात्तदा दर्भमूलमुशीरं तगरं च समभागमुदकेन पिष्ट्वा क्षीरेण सह पाययेत् ॥**

---

* विधानपारिजाते प्रथमादिद्वादशान्तेषु गर्भमासेषु प्रतिमाससमनुष्ठेयं बलिकर्म औषधं च विदधत्यस्मिन्प्रघट्टके 'कर्मविपाकसमुच्चये, क्रियाकालोत्तरे, अपेक्षितार्थद्योतिन्याम्' इत्याकरग्रन्थनामानि निर्दिश्य कानिचिद्वचनानि संगृहीतानि । पारिजाते प्रघट्टकस्यास्य 'अथ गर्भरक्षाविधानं विधानमालायां शिशुरक्षारत्ने' इत्युपक्रमात्, 'इति शिशुरक्षारत्नोक्तं द्वादशसु मासेषु गर्भरक्षणविधानम्' इत्युपसंहाराच्च ज्ञायते— शिशुरक्षारत्नाख्ये कस्मिंश्चिन्निबन्धग्रन्थे कर्मविपाकसमुच्चयाद्याकरेभ्यो वचनानि संगृह्य संग्रथितमिदं प्रघट्टकं विधानमालाकारेणानूदितं विधानमालातः पारिजातेनानूदितं चेति । तत्र यदि तत्तानि वचनानि तत्तद्ग्रन्थीयत्वेन विभज्य संगृह्णीरन् तर्हि मासक्रमबाधः प्रघट्टकविच्छेदश्च स्यात् । तं परिहर्तुं शिशुरक्षारत्नीयत्वेन समस्तं प्रघट्टकमत्र संगृहीतम् ।

(१) विपा. २५१–२६३.

अथ औषधानि । तत्र आद्ये मासि गर्भवेदनाहरमौषधं नारायणीयटीकायामपेक्षितार्थद्योतिन्याम्— प्रथमे मासीति । विपा. २५१

**यदि स्यात्प्रथमे मासि गर्भिण्या गर्भवेदना ।
नीलोत्पलं सनालं च शृङ्गाटककशेरुकम् ॥
शीततोयेन पिष्ट्वा तु क्षीरेणाऽऽलोड्य तत् पिबेत् ॥**

**एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥**

तथा च क्रियाकालोत्तरे— यदि स्यादिति । विपा. २५२

**समुद्दिश्याश्विनौ देवौ देयो मन्त्रेण मन्त्रितः ।
दध्यन्नं पायसं लाजाः पिण्याकं कुसुमानि च ॥
गन्धश्च धूपो दीपश्च वस्त्रेण वेष्टितो घटः ।
हेम्ना युतोऽश्वशालायाः समीपे निक्षिपेद्बलिम् ॥**

अथ द्वितीये मासि बलिः— समुद्दिश्येति । विपा. २५२

**सुगन्धवस्त्रपुष्पाणि कृष्णा च गिरिकर्णिका ।
नीलोत्पलानि चाभावे ह्युत्पलानां समाहरेत् ।
गोदोहस्थानमालक्ष्य निक्षिपेद्बलिमुत्तमम् ॥**

क्रियाकालोत्तरे तु— सुगन्धवस्त्रेति । विपा. २५२

**'भगवन्तौ प्रभावन्तौ प्रगृह्णीतां बलिं त्विमम् ।
सरूपौ देवभिषजौ रक्षतां गर्भिणीमिमाम् ॥'**

तन्मन्त्रस्तु— भगवन्ताविति । विपा. २५२

**शालूकमुत्पलं नीलं कशेरुं शृङ्गवेलकम् ।
समांशमुदके पिष्ट्वा क्षीरेणाऽऽलोड्य तत् पिबेत् ।**

**एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥**

अथ औषधं द्योतिन्यामेव— शालूकमिति । विपा. २५२

**गर्भिणीगर्भरक्षार्थं बलिर्मासे तृतीयके ।
रुद्रानेकादशोद्दिश्य देयो मन्त्रेण मन्त्रितः ॥
घृतमन्नं च लाजाश्च स्रजश्च श्वेतचन्दनम् ।
श्वेतवस्त्राणि पुष्पाणि श्वेतधूपप्रदीपकम् ॥**

श्वेतानि चम्पकान्याशु विप्र( ? विघ्न )शान्ति-
कराणि तु ।
एतत्सर्वं समाहृत्य कलशे संनिधापयेत् ॥
ऐशान्यां दिशि रात्रौ च निक्षिपेत्प्रयतः शुचिः ।
नदीतीरे गवां गोष्ठे राजद्वारे चतुष्पथे ॥
'महादेवः शिवो रुद्रः शंकरो नीललोहितः ।
ईशानो विजयो भीमो देवदेवो भवोद्भवः ॥
कपाली शम्भुरीशानो रुद्रैकादशमूर्तयः ।
रुद्रा एकादश प्रोक्ताः प्रगृह्णन्तु बलिं त्विमम् ॥
युष्माकं तेजसा वृद्धा नित्यं रक्षन्तु गर्भिणीम् ॥'

अथ तृतीये बलिः– गर्भिणीति । तन्मन्त्रो यथा– महादेव इति । विपा. २५३

पद्मं च चन्दनं तोये तगरं समभागिनम् ।
पूर्ववद्वारिणा पिष्टं क्षीरेणाऽऽलोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

अथ तृतीये मासि औषधम्– पद्ममिति । विपा. २५३

बलिर्मासे तृतीये यः स च प्रोक्तश्चतुर्थके ।
देयः प्रयत्नतो विद्वन्नात्र कार्या विचारणा ॥
क्षीरं च कदलीमूलमुत्पलं वालकं तथा ।
आलोड्य समभागेन पिबेद्रोगोपशान्तये ॥

अथ चतुर्थे बलिः– बलिरिति । अथौषधम्– क्षीरमिति । विपा. २५४

चतुर्थे मासि गर्भिण्या भाले जायेत वेदना ।
उशीरं कदलीमूलं पद्मनालं सशर्करम् ॥
शीततोयेन पिष्ट्वा च पिबेत्क्षीरेण संयुतम् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

कालोत्तरे तु– चतुर्थ इति । विपा. २५४

गर्भिणीगर्भरक्षार्थं पञ्चमे मासि वै बलिः ।
विनायकं समुद्दिश्य देयः संयतचेतसा ॥
विनायकं गोमयेन कुर्यात् पिष्टेन वा पुनः ।
चतुरस्रे स्थण्डिले च स्थापयेत्तं गणाधिपम् ॥
अभ्यर्च्य गन्धपुष्पैश्च बलिं तत्पुरतः क्षिपेत् ।
सरितः पुलिने वाऽथ पर्वताग्रेऽथवा तले ॥
छायामाश्रित्य वृक्षस्य कस्यचिच्छैलकं विना ।
तत्र तं सुप्रतिष्ठाप्य गणराजं कृताकृतिम् ॥
अन्नं पक्वं तथाऽपक्वं मांसं पक्वमपक्वकम् ।
पायसं च मधु द्राक्षा गुडक्षीरफलानि च ॥
कदलीफलपिण्डाल( ? लु )मधूकानि च मूलकम् ।
लड्डुका नारिकेलं च कन्दमूलानि सर्पिषा-
( ? सर्षपान् ) ॥
सर्वधान्यानि लाजाश्च वरान्नं तिलपिष्टकम् ।
इक्षुश्च तद्रसश्चैव माध्वी पैष्टी तथा सुरा ॥
गौडी चैव विशेषेण धूपदीपैस्तथाविधैः ।
मद्याभ्यक्तैः समस्तैश्च पूजयेत्तं गणाधिपम् ॥

अथ पञ्चमे बलिः कर्मविपाकसमुच्चये– गर्भिणीगर्भेति । विपा. २५४

पक्वापक्वे तु मांसे च मत्स्या अपि विशेषतः ।
पाटलीसहकाराणां मूलं मधुसमुद्भवम् ॥
अन्येषां पादपानां च बिल्वादीनां च मूलकम् ।
एतत्सर्वं समाहृत्य वंशपात्रे मनोरमे ॥

क्रियाकालोत्तरे तु– पक्वापक्वे इति । अत्र आदिशब्देन दशमूलानि ग्राह्याणि । मनोरमे अभ्रकादिरचनामण्डिते । स्थापयेदिति शेषः । विपा. २५५

'एकदन्ताम्बिकापुत्र त्रिनेत्र गणनायक ।
रक्ताम्बरधर श्रीमन् रक्तमाल्यानुलेपन ।
स्कन्दप्रिय महाबाहो पाशहस्त नमोऽस्तु ते ॥
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ।
क्षिप्र( ? बलि )प्रदायकं मर्त्यमायुषाऽभिविवर्धय ।
अलक्ष्मीनामकं पापं मम सद्यो विनाशय ॥'
एवं मन्त्रं समुच्चार्य प्रदद्याद्गर्भिणी बलिम् ।
नमस्कुर्यात्प्रयत्नेन संप्रार्थ्य च पृथक् पृथक् ॥

तन्मन्त्रो यथा– एकदन्तेति । विपा. २५५

'वक्रतुण्ड महावीर्य महाभाग महाबल ।
शिरसा त्वामहं वन्दे सापत्यां रक्ष मां सदा ॥'

नमस्कारमन्त्रस्तु— वक्रतुण्डेति । विपा. २५६

इत्यनेन बलिं दत्त्वा पठेद्रक्षामनुं पुनः ।
'अयं बलिर्मया देव त्वदर्थे प्रतिपादितः ।
रक्षेमं शिशुमानन्दरूपं शैलसुतासुत ॥'
पञ्चमे मासि गर्भिण्या गर्भे चेद्वेदना भवेत् ।
तन्निवारकमेवाऽऽशु भेषजं कथ्यते मया ॥
नीलोत्पलं मृणालं च कोलीक्षीरं तथैव च ।
केसरं पद्मकं चैव तोयेनाऽऽलोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

अथौषधम्— पञ्चम इति । येषां कोलीक्षीरं न सेव्यं तेषामजाक्षीरं ग्राह्यम् । विपा. २५६

वसूनष्टौ समुद्दिश्य बलिर्देयोऽभिमन्त्रितः ।
घृतान्नं च हरिद्राक्तं खण्डं लाजाश्च पायसम् ॥
पीतवर्णानि पुष्पाणि तथा नीलोत्पलानि च ।
सकाञ्चनः पूर्णकुम्भः सर्वं नद्यास्तटे क्षिपेत् ॥
'प्रभासः पावकः सोमः प्रत्यूषो मारुतोऽनलः ।
धरोऽधर इति ह्येते वसवोऽष्टौ प्रकीर्तिताः ।
प्रगृह्णन्तु बलिं चेमं सर्वे रक्षन्तु गर्भिणीम् ॥'

अथ षष्ठे मासि बलिः— वसूनिति । पूर्णः जलेनेति शेषः । तत्र मन्त्रो यथा— प्रभास इति । विपा. २५७

षष्ठे मृद्वीकोत्पलकेसरं पिबेत् ॥

अथौषधम्— षष्ठ इति । विपा. २५७

अथास्या मासि षष्ठे तु गर्भे भवति वेदना ।
पिप्पलीबीजमूले च सोत्पले च सकेसरे ॥
शीततोयेन पिष्ट्वा तु क्षीरेणाऽऽलोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

अन्यच्च— अथास्या इति । विपा. २५७

पूर्ववद्बलिरुद्दिष्टो देवताऽत्र च षण्मुखः ॥
'स्कन्द षण्मुख देवेश शिवप्रीतिविवर्धन ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥'
कपित्थमूलं शालूकं शर्करायुक्तमञ्जसा ।
शीततोयेन पिष्ट्वा तु क्षीरेणाऽऽलोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

अथ सप्तमे मासि बलिः— पूर्ववदिति । मन्त्रस्तु— स्कन्देति । बलिक्षेपणस्थानं नदीतटमेव । अथौषधम्— कपित्थेति । अञ्जसेति शर्करासमभागमित्यर्थः ।

विपा. २५७–२५८

दुर्गामुद्दिश्य दातव्यो बलिरेवं न सीदति ।
पायसं चैव लाजाश्च तृणधान्यं तथा घृतम् ॥
अपूपाः कृशराश्चैव माहिषं दधि मूलकम् ।
माषाणि यावका मुद्गाः श्यामाकाः कुसुमानि च ॥
नीलोत्पलानि च तथा पूर्णकुम्भः सकाञ्चनः ।
एतत् क्षिपेन्नदीतीरे मन्त्रेणानेन संयुतम् ॥
गिरौ वा सरितस्तीरे देवखाते तडागके ।
राजमार्गे द्रुमाधस्ताद्बलिमेनं विनिक्षिपेत् ॥
'कात्यायनि महादेवि पूज्येऽनिन्द्ये निशाप्रिये ।
दुर्गे देवि महाकालि सिंहशार्दूलवाहिनि ॥
धनुःखड्गधरे देवि दुष्टदैत्यविनाशनि ।
नदीशैलप्रिये देवि कुमारि सुभगे शुभे ॥
अष्टहस्ते चतुर्वक्त्रे पिङ्गले शुकनासिके ।'
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥
अष्टमे मासि विज्ञेयं धान्यकं केशरं तथा ।
शालूकमुत्पलं चैव तथा च गजपिप्पली ।
निष्क्वाथ्य सितया सर्वं देयं रोगोपशान्तये ॥

अथ अष्टमे मासि बलिः— दुर्गामिति । तन्मन्त्रस्तु— कात्यायनीति । अथौषधम्— अष्टम इति ।

विपा. २५८–२५९

अथास्यास्त्वष्टमे मासि गर्भे भवति वेदना ।
पद्मकं गजकृष्णा च धान्यमुत्पलकं तथा ॥
शीततोयेन पिष्ट्वा तु क्षीरेणाऽऽलोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

कालोत्तरे तु— अथास्या इति । विपा. २५९

गर्भिण्या गर्भरक्षार्थं मासेऽथ नवमे बलिः ।
देयः स्यान्मातृकोद्देशे ततः स्याद्रोगमोक्षणम् ॥

दध्योदनं च लाजाश्च मुद्गान्नं च पुनर्दधि ।
कृशरं च तथा श्वेतपङ्कजानि च चन्दनम् ॥
शतपत्राणि पुष्पाणि तथाऽन्यानि शुभानि च ।
धूपो वस्त्रं हिरण्यं च पूर्णकुम्भस्तथैव च ॥
'प्रगृह्णीत बलिं चेमं मया दत्तं च मातरः ।
यूयं रक्षत संतुष्टाः सापत्यां गर्भिणीमिमाम् ॥'
नवमे मासि कङ्केलिं पलाशस्य तु बीजकम् ।
एरण्डमूलसंयुक्तं पिष्ट्वा तोयेन संयुतम् ॥
कृत्वा तु मोदकं धात्रीफलमानं विशेषतः ।
जीर्णाग्नेे भक्षितं चैव हरेद्गर्भव्यथां ध्रुवम् ॥

अथ नवमे मासि बलिः– गर्भिण्या इति । तन्मन्त्रो यथा– प्रगृह्णीतेति । अथौषधम्– नवम इति । बलिप्रक्षेपश्च चतुष्पथे कर्तव्यः । विपा. २५९–२६०

अथास्या नवमे मासि गर्भे भवति वेदना ।
पालाशबीजकङ्केलिमूलं स्यात्पौष्करं तथा ॥
सोशीरं सोदकं कृत्वा जीर्णाग्नेे सघृतं पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

कालोत्तरे तु– अथास्या इति । विपा. २६०

गर्भिणीगर्भरक्षार्थं मासे च दशमे बलिः ।
उद्दिश्य नैर्ऋतं देवं बलिर्देयस्तु मन्त्रितः ॥
पक्वान्नं कृशरं लाजाः पक्वापक्वफलं तथा ।
कृष्णगन्धं कृष्णवस्त्रं कृष्णानि कुसुमानि च ॥
इक्षूणां निक्षिपेत्तत्र रसं राक्षसमन्त्रतः ।
धूपो दीपश्च नैवेद्यं बलये संप्रदीयते ॥
नीलोत्पलानि कुम्भान्तः सजलानि विनिक्षिपेत् ।
दक्षिणाशां प्रति तथा नीत्वा तत्र विनिक्षिपेत् ॥
'ओं हूं ह्रां ह्रीं(? ह्रां ह्रीं हूं) स्वाहा ॥
बलिं गृहाण रक्षस्व मया दत्तं समाहृतम् ।
बलिं त्वमवलोकस्व सापत्यां रक्ष गर्भिणीम् ॥
निर्विघ्नं कुरु नैर्ऋत्य गर्भिणीगर्भपीडनात् ।
प्रेतासन महाबाहो कुमुदेश वरप्रिय ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥'

अथ दशमे मासि बलिः– गर्भिणीति । मन्त्रस्तु कुक्कुटाचार्यमते– ओं हूमिति । अत्र कलौ ब्राह्मणैर्मद्यं न निक्षेपणीयम्, किंतु इक्षुरसो देयः ।
विपा. २६०–२६१

दशमे काश्मीरोत्पन्नं मधूकं तत्संमित-
तण्डुलेन पिष्ट्वा क्षीरेणाऽऽलोड्य तत्पिबेत् ॥

अथ औषधम्– दशम इति । विपा. २६१

अथास्या दशमे मासि गर्भे भवति वेदना ।
शर्करोत्पलकं चैव मधूकं मुद्गमेव च ॥
शीततोयेन पिष्ट्वा तु क्षीरेणाऽऽलोड्य
तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

कालोत्तरे तु– अथास्या इति । विपा. २६१

गर्भिणीगर्भरक्षार्थं मासि चैकादशे बलिः ।
वासुदेवं समुद्दिश्य देयो नात्र विचारणा ॥
पायसापूपपिष्टं च गुडलाजाश्च सक्तवः ।
श्यामो ध्वजस्तथा धूपः श्यामं वै पुष्पचन्दनम् ॥
कुम्भे निधाय श्यामे तु बोधिवृक्षतले शुभे ।
वृन्दावने नदीतीरे निक्षिपेद्बलिमुत्तमम् ॥
'पाञ्चजन्यप्रभायुक्त कौस्तुभोद्योतिताङ्गक ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥'

अथ एकादशे बलिः । यद्यपि 'दशमे मासि जायते' इति श्रुतिवचनात् दशमे मासि प्रसवेन एकादशद्वादशमासयोर्गर्भरक्षणानुपपत्तिः, तथाऽपि दैवान्मानुषाद्वा प्रतिबन्धाद्दशमे मासि अप्रसवस्तदा एकादशे द्वादशे वा प्रसवः, तयोः परमावधित्वात् । तदभिप्रायेणेदम् । पिष्टं पिष्टान्नम् । तन्मन्त्रस्तु– पाञ्चजन्येति ।
विपा. २६२

पद्मोत्पलं मधूकं च तालकेनापि संयुतम् ।
शीततोयेन पिष्ट्वा तु क्षीरेणाऽऽलोड्य
तत्पिबेत् ।
एवं न पतते गर्भः स च रोगः प्रशाम्यति ॥

औषधं तु दशमे मास्युक्तमेव । क्रियाकालोत्तरे तु– पद्मोत्पलमिति । विपा. २६२

अथास्या द्वादशे मासि पूर्ववद्बलिमाचरेत् ॥

पद्मं शृङ्गाटकं चैव उत्पलं च सनालकम् ।
शीततोयेन पिष्ट्वा तु क्षीरेणाऽऽलोड्य तत्पिबेत् ।

एवं न पतते गर्भो वेदना सा च शाम्यति ॥

अथ द्वादशे मासि बलिः— अथास्या इति । औषधं तु— पद्ममिति । विपा. २६३

## शौनककारिकाः

दुर्मृतादीनां पापक्षयादिफलसिद्धयर्थं कर्तव्यस्य नारायणबलेर्विधानम्

'शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम् ।
चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युतादपि ॥

दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुसर्प( ? शस्त्र )-विषाद्यमभिः ।
देशान्तरमृतानां च मृतानां चान्यसाधनैः ॥

जीवश्राद्धमृतानां च नैष्ठिकानां तथैव च ।
यतीनां चैव §योगीनामन्येषां मोक्षकाङ्क्षिणाम् ॥

पुण्यपापक्षयार्थाय द्वादशेऽहनि कारयेत् ।
संवत्सरान्ते वा कुर्याच्चाण्डालाद्यैर्हतस्य च ॥

द्वादश्यां श्रवणे वाऽपि पञ्चम्यां पर्वणोरपि ।
गृहस्थान् वा यतीन् वाऽपि वैष्णवान् द्वादशोत्तमान् ॥

त्रयोदशतमं श्रेष्ठं युवानं संयतेन्द्रियम् ।
देवालयेऽथ नद्यां वा गोष्ठे वाऽऽराम एव वा ॥

स्नातानाहूय गैः कर्तुं( ? ) पादान् प्रक्षाल्य वारिणा ।
गन्धपुष्पादिकं सर्वं क्रमाद्द्वादशनामभिः ॥

§ यतिशब्दवदिकारान्तो योगिशब्दः ' सर्वधातुभ्य इन् ' इत्युणादिसूत्रेण ( ४।५६७ ) सिद्धः ।

(१) शौका. १–२६ पृ. १४०–१४१.

वस्त्रं यज्ञोपवीतं च कुण्डले चाङ्गुलीयके ।
उत्तरीयं तथोष्णीषं छत्रोपानद्विभूषणम् ॥

एतैरर्च्य द्विजान् पश्चाच्छ्रीभूमिसहितं हरिम् ।
अथ कृष्णे वावाह्य विष्टरे हृदयात्प्रभुम्( ? ) ॥

*भानुमण्डल ...... भक्त्या सर्वं समाहितः ।
पाद्यादिधूपपर्यन्तं कृत्वा ऋग्भिश्च पौरुषैः ॥

सकृच्चाग्निमुखं पूर्वमाज्यभागान्तसंयुतम् ।
विशेषं च तथा वक्ष्ये केशवाद्यैश्च नामभिः ॥

अतो देवेति षड्भिश्च पौरुषैः षोडशैस्तथा ।
द्वादशाष्टाक्षराभ्यां च समिदाज्यचरूनपि ।
हुत्वाऽग्नौ प्रत्यृचं दद्याद्ब्राह्मणेभ्योऽर्घ्यमुत्तमम् ॥

पितः केशवेदं तेऽर्घ्यं पितृभ्यो द्वादश क्रमात् ।
भोजनार्थं तथा कुर्यादर्घ्यं मन्त्रैश्च संयुतम् ॥

खण्डशार्करसंयुक्तं सर्वलक्षणसंयुतम् ।
अन्नेन ब्राह्मणान् भोज्य विष्णुभक्तिं समाप्य च ॥

ब्राह्मणैरभ्यनुज्ञातं पिण्डकर्म समाचरेत् ।
नामद्वादशमुक्तेभ्यः पितृभ्यो द्वादश क्रमात् ॥

आश्वलायनसूत्रोक्तविधिना पिण्डमारभेत् ।
शेषं पार्वणवत् कृत्वा अभ्युदयानुसारतः ॥

अतो देवेति षड्भिश्च पिण्डोपस्थानमाचरेत् ।
पादप्रक्षालितं तोयं पितरस्ते पिबन्ति च ॥

क्षालयेत्तत्र गर्तेषु विप्रवाक्योद्यतास्ततः ।
पुरुषसूक्तेन देवेशं स्तुत्वा कर्म समाप्य च ॥

त्रयोदशतमं तं तु सर्वालंकारसंयुतम् ।
कृत्वा प्रणवमन्त्रेण विसृष्टं तु सुपूज्य च ॥

* आदर्शपुस्तके ' भानुमण्डल०, अतो देवेति०, द्वादशाष्टा०, पाद्यादिधूप०, सकृच्चाग्नि०, विशेषं च तथा०, अतो देवेति० ( पुनरुक्तिः ), हुत्वाऽग्नौ० ' इत्ययं श्लोकार्धक्रमो वर्तते । तं संगतिविरहात्प्रामादिकं मत्वाऽस्माभिर्वाक्यार्थसंगत्यनुरोधेन विपरिणमय्य पुनरुक्तिं वर्जयित्वा च स गृहीतः ।

आचार्यं पूजयित्वा तु सुवर्णतिलतण्डुलैः ।
दक्षिणां च यथाशक्ति यः कुर्यादाप्नुयात् फलम् ॥
तस्मात् सर्वप्रयत्नेन गुरुपूजां समाहितः ।
प्रायश्चित्तं (च) पापानामन्येषां मोक्षसाधनम् ॥
तस्मात् सर्वप्रयत्नेन नारायणबलिं क्रमात् ।
त्विमं कुर्युर्द्विजातयश्चान्ये मन्त्रे( ? द्विजाश्चान्येऽमन्त्रं ) शूद्रानुलोमजाः ॥
सहस्रभोजनस्यान्ते कुर्यादेव बलिं क्रमात् ।
तत्तद्रूपस्तु कर्तव्यो स्वंवा ...... वर्जयेत् ॥
सपिण्डाः पितृसंज्ञास्तु द्वादशैवं प्रकीर्तिताः ।
आद्यन्तयोस्तु कर्तव्यः पुण्याहश्रेयमिच्छता ।
नारायणबलिं चेमं हरेः प्रीतिकरं शुभम् ॥
... ... ... ... ... ... ... ... ... ॥

अनपत्यत्व–मृतापत्यत्वपरिहारार्थं सर्पवधकर्त्राऽनुष्ठेयं सर्पसंस्कारविधानम्

[1]अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमम् ।
सिनीवाल्यां पौर्णमास्यां पञ्चम्यां कारयेत्ततः ।
अश्लेषानक्षत्रयुक्तायामन्यस्यां वाऽपि कारयेत् ॥
[2]कृतसर्पवधो विप्रः पूर्वजन्मनि वेह वा ।
अनेकदुःखजालानि प्राप्नोति सततं नरः ॥
[3]संततिप्रतिबन्धश्च जाता सा च विनश्यति ।
तस्य शान्तिं प्रवक्ष्यामि येन संपद्यते सुखम् ॥
[4]स्नात्वाऽऽगत्य ततो ब्रह्मदण्डं दद्याद्द्विजातये ॥

(१) शौका. १ पृ. १२८ तृतीयार्धं नास्ति ; विपा. २२० ; संकौ. ३५ पञ्चम्यां कारये ( कारयेद्विधिव ) तृतीयार्धं नास्ति ; संर. ६९८ सर्प ( सर्वं ) तृतीयार्धे ( पञ्चम्यामथवा कुर्यादाश्लेषासु दिनेऽथ वा ॥ ) शेषं संकौवत् .

(२) शौका. २ पृ. १२८ कृतसर्पवधो ( कृते सर्पे वधे ) वेह वा ( वा यदि ) पू. ; विपा. २२० ; संकौ. ३५ वेह वा ( वा यदि ) पू. ; संर. ६९८ संकौवत् , पू.

(३) विपा. २२०.

(४) शौका. २ पृ. १२८ दद्याद् ( दत्त्वा ) ; विपा. २२० ब्रह्मदण्डं ( ब्रह्मन् दण्डं ) ; संकौ. ३५ ; संर. ६९८.

[1]वधं प्रख्यापयेत्पापी चरेत् कृच्छ्रांश्चतुर्दश ।
वधेऽत्र जन्मनि कृते लोहदण्डं द्विजातये ॥
वधेहजन्मनिकृते इत्यत्र इह जन्मनि वधः कृतो येन इति विग्रहः । आहिताग्न्यादित्वात् परनिपातः अलुक् च । यद्वा इहशब्दस्य इकारलोपश्छान्दस इति द्रष्टव्यम् ।
विपा. २२०

[2]दद्यात् पापविशुद्ध्यर्थं श्रोत्रियाय कुटुम्बिने ।
विप्राय दण्डमूल्यं वा ह्यभावे सति दापयेत् ॥
[3]साक्षाद्वधे कर्मकर्तुरेतदेव प्रदापयेत् ।
निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसम् ॥
[4]अनुमत्यादिकर्तॄणां निष्कमर्धं तदर्धकम् ।
वित्तशाठ्यं न कुर्वीत दद्याद्वित्तानुसारतः ॥
[5]अनुज्ञां च गुरोर्लब्ध्वा संस्कुर्यात्तदनन्तरम् ।
प्रियङ्गुव्रीहिगोधूमतिलपिष्टेन वा यवैः ॥
एकतः एतदन्यतमेनैकेन पिष्टेन वेत्यर्थः ।
संर. ६९९

[6]कृत्वा सर्पाकृतिं तेन नवशूर्पे निधाय च ।
अनेन वक्ष्यमाणेन मन्त्रेण प्रार्थयेदहिम् ॥

(१) शौका. ३ पृ. १२८ वधेऽत्र ( वधेह ) ; विपा. २२० तृतीयपादे (वधेहजन्मनिकृते), वधेऽत्र (वधे ह) इत्यपि पाठः ; संकौ. ३५ येत्पापी ( येच्चापि ) ; संर. ६९८ वधेऽत्र ( वधेऽस्मिन् ) शेषं संकौवत् .

(२) शौका. ४ पृ. १२८ मूल्यं ( मौल्यं ) ; विपा. २२० ; संकौ. ३५ ; संर. ६९८.

(३) शौका. ५ पृ. १२८ रेतदेव ( रेवं दण्डं ) ; विपा. २२० ; संकौ. ३५ साक्षाद्वधे ( सार्पवधात् ) ; संर. ६९८ द्वधे ( द्वधात् ).

(४) शौका. ६ पृ. १२८ ; विपा. २२० ; संकौ. ३५ ; संर. ६९८–६९९.

(५) शौका. ७ पृ. १२८ यवैः ( ऽथवा ) ; विपा. २२१ ; संकौ. ३५ यवैः ( पुनः ) ; संर. ६९९ वा यवैः ( वैकतः ).

(६) शौका. ८–९ पृ. १२८ ( कृत्वा सर्पाकृतिं तेन सर्पभोगसमन्वितम् । ... नवशूर्पे निधाय च । अनेन वक्ष्यमाणेन मन्त्रेण प्रार्थयेदहिम् ॥ ) ; विपा. २२१ च ( ताम् ) ; संकौ. ३५ ; संर. ६९९.

[१] 'एहि पूर्वमृत सर्प अस्मिन् पिष्टे समाविश ।
संस्कारार्थमहं भक्त्या प्रार्थयामि समाहितः ॥'

[२]वस्त्रोपवीतगन्धाद्यैरक्षतैः कुसुमादिभिः ¶ ।
कर्ता पुष्पाञ्जलिं दत्वा प्रणिपत्य हरेद्बहिः ॥

[३]प्रक्षालिताङ्घ्रिपाणिस्तु ह्याचम्योपविशेद्भुवि ॥

[४]कुर्यात् संस्कारसंकल्पं प्राणायामपुरःसरम् ।
यज्ञोपवीतिना कार्यं सर्पसंस्कारकर्म तु ॥

[५]लौकिकाग्निं प्रतिष्ठाप्य समिदाधानमाचरेत् ।
ततोऽग्नेरग्निदिग्भागे भूमिं संप्रोक्ष्य वारिभिः ॥

[६]चितिं कृत्वाऽथ संस्तीर्य कुशैराग्नेयकाग्रकैः ।
पर्यूह्याग्निं परिस्तीर्य परिषिच्य समर्चयेत् ॥

[७]कृत्वेध्माधानपर्यन्तं षट्पात्रासादनादिकम् ।
आघारौ चक्षुषी हुत्वा सर्पिषा च यथाविधि ॥

---

¶ आदर्शभिन्नपुस्तके ' अर्चयेत् कुसुमाक्षतैः ' इति द्वितीयपादे पाठः , स एव श्रेयान् ।

(१) शौका. ९-१० पृ. १२८ मृत ( मृतः ) ; विपा. २२१ शौकावत् ; संकौ. ३५ ; संर. ६९९ पूर्वमृत ( पूर्वं मृतः ).

(२) शौका. १०-११ पृ. १२८ त्य हरे ( त्याऽऽहरे ) ; विपा. २२१ दिभिः ( दिकैः ) ; संकौ. ३५-३६ ; संर. ६९९.

(३) शौका. ११ पृ. १२८ ; विपा. २२१ ह्याच ( आच ) ; संकौ. ३६ विपावत् ; संर. ६९९.

(४) शौका. १२ पृ. १२९ कर्म तु ( कर्मसु ) ; विपा. २२१ कार्यं ( भाव्यं ) शेषं शौकावत् ; संकौ. ३६ ; संर. ६९९.

(५) शौका. १३ पृ. १२९ ; विपा. २२१ ततोऽग्नेरग्नि ( अग्नेराग्नेय ) ; संकौ. ३६ ; संर. ६९९.

(६) शौका. १४ पृ. १२९ ; विपा. २२१ ; संकौ. ३६ ; संर. ६९९.

(७) शौका. १५ पृ. १२९ षट्पात्रा ( तत्पात्रा ) घारौ च ( घारच ) ; विपा. २२१ घारौ च ( घारच ) ; संकौ. ३६ विपावत् ; संर. ६९९ घा च ( घाऽथ ).

[१]सर्पं गृहीत्वा यत्नेन चितिमारोपयेत् सुधीः ।
अपः स्पृष्ट्वा स्पृशेच्छ्रोत्रं गत्वा चाग्निसमीपतः ॥

[२]स्रुवेण जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः ।
सर्पास्ये जुहुयादाज्यं व्याहृत्या च समस्तया ॥

त्रिभिरित्यार्षम्, तिसृभिरित्येव युक्तम्, व्याहृतिविशेषणत्वात् । विपा. २२२

[३]आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत् ।
स्रुवं तत्र निधायाथ यज्ञपात्राणि बर्हिषम् ॥
चितिं प्रदक्षिणं कृत्वा प्रणिपत्य क्षमापयेत् ।
चमसस्थैर्जलैः सर्पं व्याहृत्याऽभ्युक्ष्य पाणिना ॥
अग्ने रक्षाण इत्यनया सर्पायाग्निं प्रदापयेत् ।
उपतिष्ठेद्दह्यमानं नमोऽस्तु सर्पमन्त्रतः ॥

[४] 'ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया ।
पूर्वजन्मनि वा सर्प तत् सर्वं च क्षमस्व मे ॥

[५]प्रजां देहि पशून् देहि चाऽऽरोग्यं सर्वदाऽस्तु मे ।
जन्मजन्मनि नैवेयं बुद्धिरस्तु सदा मम ॥'

---

(१) शौका. १६ पृ. १२९ येत् सुधीः ( येच्छनैः ) ; विपा. २२१ चाग्निस ( चाग्निं स ) ; संकौ. ३६ ; संर. ६९९ च्छ्रोत्रं ( च्छ्रोत्रे ).

(२) शौका. १७ पृ. १२९ ; विपा. २२१-२२२ ; संकौ. ३६ ; संर. ६९९ च ( तु ).

(३) शौका. १८-२० पृ. १२९ चितिं ( त्रिभिः ) स्थैर्जलैः ( स्थजलैः ) ; विपा. २२२ चितिं ( त्रिभिः ) क्षमा ( समा ) इत्यनया (इत्यृचा) मन्त्रतः (इत्यतः) ; संकौ. ३६ बर्हिषं ( बर्हिषि ) णं कृत्वा ( णीकृत्य ) ; संर. ६९९ स्रुवं तत्र ... प्रदापयेत् ( समस्ताभिर्व्याहृतिभिः पाणिना चमसोदकैः । तमभ्युक्ष्याग्ने रक्षेति चितावग्निं समर्पयेत् । स्रुवं तत्र निधायाथ यज्ञपात्राणि बर्हिषा । चितिं प्रदक्षिणं कृत्वा प्रणिपत्य क्षमापयेत् । ).

(४) शौका. २१ पृ. १२९ ; विपा. २२२-२२३ च क्षम ( क्षमय ) ; संकौ. ३६ च क्षमस्व मे ( क्षन्तुमर्हसि ) ; संर. ६९९ च ( त्वं ).

(५) विपा. २२३.

¹इति संप्रार्थ्य नागेन्द्रं स्नात्वाऽऽगत्य ततः पुनः।
क्षीराज्येन ततश्चाग्निं प्रोक्ष्य व्याहृतिभिस्त्रिभिः॥

²हुते सर्पे जलेनाग्निमभिषिञ्चेत्ततः परम्।
नास्थिसंचयनं कुर्यात् स्नात्वाऽऽचम्य गृहं व्रजेत्॥

'नास्थिसंचयनं कुर्यात्' इत्यस्थिसंचयनमात्रनिषेधादन्यप्रेतक्रियाऽप्यत्र भवतीति केचित्। 'यावद्वचनं वाचनिकम्' इति न्यायान्न भवतीति संप्रदायविदः। विपा. २२३

³ब्रह्मचर्यादिकं कार्यं त्रिरात्राच्छुद्धिरिष्यते।
चतुर्थेऽहनि संप्राप्ते सचैलं स्नानमाचरेत्॥

(१) बौधायनमते तु एकरात्राशौचम्। अत्र कर्तुरेवाऽऽशौचम्, 'आशौचं पिण्डदः कुर्यान्न तु तद्बन्धुगोत्रजाः।' इति वचनात्। संकौ. ३७

(२) चतुर्थेऽहनीत्युपलक्षणम्। एकाहाशौचपक्षे द्वितीये भवेदित्यर्थः। $ संर. ७०८

⁴घृतपायसभक्ष्यैश्च द्विजानष्टौ तु भोजयेत्।
कर्ता नामपदैर्विप्रानर्चयेद्वक्ष्यमाणकैः॥

$ शेषं संकौवत्।

(१) शौका. २२ पृ. १२९; विपा. २२३; संकौ. ३६; संर. ७०० ततः (पुनः).

(२) शौका. २३ पृ. १२९ जलेना (जलैश्चा); विपा. २२३ हुते (हते) षिञ्चेत्ततः (षिच्य ततः); संकौ. ३६; संर. ७००.

(३) शौका. २४ पृ. १२९ (कार्यं०); विपा. २२३ चैलं (चेलं); संकौ. ३६ रात्राच्छुद्धिरि (रात्राशौचमि); संर. ७००.

(४) शौका. २५ पृ. १२९ तु (च); विपा. २२३ द्विजा (विप्रा); संकौ. ३६ मक्ष्यै (मक्षै); संर. ७००.

¹सर्पोऽनन्तस्तथा शेषः कपिलो नाग एव च।
कालिकः शङ्खपालश्च भूधरश्च प्रकीर्तितः॥

²पादप्रक्षालनं कुर्यादेभिर्नामपदैः पृथक्।
गन्धपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद्द्विजान्॥

³एवं कृते विधाने वै सर्पसंस्कारकर्मणि।
सर्पहिंसाकृतात् पापान्मुच्यते नात्र संशयः॥

⁴कुष्ठव्याध्यादिभिर्मुक्तः(? मुक्तौ) सर्वथा भेषजं त्विदम्।
आयुरारोग्यमैश्वर्यं प्राप्य कामानवाप्नुयात्॥

⁵अपुत्रो लभते पुत्रानधनो धनमाप्नुयात्।
रोग्यारोग्यमवाप्नोति शौनकस्य वचो यथा॥

अपुत्रत्व–मृतपुत्रत्वहरं पुत्रकामेष्टिविधानम्

⁶यस्य जाताः प्रमीयेरन् पुत्रा वै न भवन्ति वा।
ऋतुकाले दिने षष्ठे दम्पती समलंकृतौ॥

⁷कृत्वाऽऽभ्युदयिकं श्राद्धं स्वस्तिवाचनपूर्वकम्।
पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत्॥

(१) शौका. २६ पृ. १२९ कीर्तितः (कीर्तिताः); विपा. २२३ कालिकः (कालीयः); संकौ. ३६; संर. ७००.

(२) शौका. २७ पृ. १२९; विपा. २२३; संकौ. ३६; संर. ७००.

(३) शौका. २८ पृ. १२९ हिंसाकृतात् (हिंसोद्भवात्); विपा. २२३–२२४ ने वै (नेऽस्मिन्); संकौ. ३६; संर. ७०० वै सर्प (वै सर्व).

(४) शौका. २९ पृ. १३०; विपा. २२४ प्रथमपादे (कुष्ठादिव्याधियुक्तानां); संकौ. ३६; संर. ७००.

(५) विपा. २२४.

(६) शौका. १ पृ. ७९; प्रपा. १६० वै न (नैव) वा (च); संप्र. २०४ वै न (नैव); विपा. ६५ यस्य (यस्या) दिने षष्ठे (दिनेष्वेव) शेषं संप्रवत्.

(७) शौका. २ पृ. ७९; प्रपा. १६०; संप्र. २०४; विपा. ६५ कं श्राद्धं (कश्राद्धं).

[1]श्वेतायाः श्वेतवत्साया गोः क्षीरेण चरुं पचेत् ।
कृत्वाऽऽज्यभागपर्यन्तमाज्यस्योत्पवनादिकम् ॥

[2]जुहुयात् पायसं तत्र ऋग्भिः पञ्चदशाऽऽहुतीः ।
प्रजावत्सूक्तपञ्चर्ग्भिर्जीवपुत्रस्य पञ्चभिः ॥

[3]नेजमेषेति तिसृभिः सोमो धेनुमृचैकया ।
इहैवस्तमृचा चैव ततः स्विष्टकृदादिकम् ॥

[4]अपश्यं त्वेति मन्त्राभ्यां होमशेषं च दम्पती ।
प्राशयेत्तत आचाम्य दम्पती नाभिमालमेत् ॥

[5]पिशङ्गभृष्टिमित्यृचा तावुभावभिमन्त्र्य च ।
प्रायश्चित्तादि सकलं होमशेषं समापयेत् ॥

[6]सवत्सां दक्षिणार्थाय गां दद्यात्तु पयस्विनीम् ।
पुत्रार्थमाचरेद्दानं विप्रेभ्यो हेमवत् स्वयम् ॥

[7]रात्र्यास्तु पश्चिमे यामे शयीतां( ? यातां) दर्भसंस्तरे ।
मनसा चतुर्होतारमनुद्रुत्योमिति ब्रुवन् ॥

[1]उपगम्य ततः पत्नीं व्यवेयाच्च यथाविधि ।
एवमुत्पादिताः पुत्रा न लुप्यन्ते कदाचन ॥

प्रजावज्जीवपुत्राख्यसूक्तमन्त्राः 'आ ते गर्भो योनिम्' इत्यादि– 'दैवकृतं ब्राह्मणं कल्पमानम्' इत्यन्ता दश मन्त्राः ... । शेषाः प्रसिद्धाः । चतुर्होतृमन्त्रास्तु– 'पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता । वाचस्पते वाचो वीर्येण । संभृततमेनाऽऽयक्ष्यसे । यजमानाय वार्यम् । आ सुवस्करस्मै । वाचस्पतिः सोमं पिबति । जजनदिन्द्रमिन्द्रियाय स्वाहा' इति । † प्रपा. १६०–१६१

## कुमारिलकारिकाः

पुत्रकामेष्ट्यधिकारी, निर्वापहवनमन्त्रौ

[2]अनाहिताग्निरेवेमान् कुर्यात् काम्यांश्चरूनथ ।
परिषेचनपर्यन्तमन्वाधानादि पूर्ववत् ॥

[3]अग्नये पुत्रिणे त्वेति पुत्रकामस्तु निर्वपेत् ।
अग्नये पुत्रिणे स्वाहेत्येतेन जुहुयाच्चरुम् ॥

## रेणुकारिकाः

गर्भधारणाभावे बृहतीमूलरसस्य समन्त्रकासेचनं दक्षिणनासिकायाम्, वातादिहृतपुष्पत्वे औषधचिकित्सा, ग्रहादिहृतपुष्पत्वे पुष्यस्नानम्, कन्याप्रसूत्वे पिण्डभक्षणम्

[4]यदि गर्भं न धत्ते सा कुर्यात्तत्रौषधं पतिः ॥
उपोष्य पुष्यनक्षत्रे बृहत्या मूलमुद्धरेत् ।
श्वेतपुष्प्याश्चतुर्थेऽह्नि रात्रौ पिष्ट्वोदकेन तु ॥

---

(१) शौका. ३ पृ. ७९–८० ; प्रपा. १६० ; संप्र. २०५ ; विपा. ६५.

(२) शौका. ४ पृ. ८० ; प्रपा. १६० ; संप्र. २०५ ; विपा. ६५ तृतीयपादे ( प्रजीवेत्सूक्तपञ्चभि ).

(३) शौका. ५ पृ. ८० ; प्रपा. १६० ; संप्र. २०५ ; विपा. ६५–६६ चैव ( चैका ).

(४) शौका. ६ पृ. ८० प्राशयेत्तत आचाम्य (प्राश्नीयातां त आचम्य ) ; प्रपा. १६० आचाम्य (आचम्य) ; संप्र. २०५ ; विपा. ६६ आचाम्य दम्पती ना ( आचम्य दम्पत्योर्ना ).

(५) शौका. ७ पृ. ८० ; प्रपा. १६० ; संप्र. २०५ ; विपा. ६६ दि सकलं हो ( दिसकलहो ).

(६) शौका. ८ पृ. ८० द्यात्तु प ( द्यात्सुप ) ; प्रपा. १६० ; संप्र. २०५ हेमवत् ( हेम च ) ; विपा. ६६ र्थाय ( र्थे च ) द्यात्तु ( द्याच्च ) हेम ( होम ).

(७) शौका. ९ पृ. ८० द्रुत्योमिति ( द्रुत्येति च ) ; प्रपा. १६० ; संप्र. २०५ ; विपा. ६६ पश्चिमे (प्रथमे).

† संप्र. प्रपावत् ।

(१) शौका. १० पृ. ८० व्यवे ( व्यपे ) ; प्रपा. १६० ताः पुत्रा न लुप्यन्ते ( तः पुत्रो न लुप्येत ); संप्र. २०५ ; विपा. ६७ लुप्य ( तुल्य ).

(२) कुका. ३।१।१ ; प्रपा. १६० रेवेमान् ( रेवेमं ) म्यांश्चरूनथ ( म्यचरुं तथा ) ; संप्र. २०४ रूनथ ( रूंस्तथा ).

(३) कुका. ३।१।२ ; प्रपा. १६० ; संप्र. २०४.

(४) रेका. ६०–६७ पृ. ५–६.

दक्षिणस्यां तु नासायामासिञ्चेदियमोषधी ।
आयमाणेति मन्त्रेण प्रविशत्युदरे यथा ॥
ऋषिः प्रजापतिश्छन्दो बृहत्या( ? ती ) देवतौ-
षधी ।
आसेके विनियोगोऽस्य मुनिभिः समुदाहृतम् ॥
यदि वातादिभिः पुष्पं चतुर्भिर्योषितां हृतम् ।
सम्यक् तत्रौषधं ज्ञेयं क्रियाकालगुणोत्तरम्-
( ? रे ) ॥

पितृदेवग्रहाद्यैर्वा हृतं पुष्पं कथंचन ।
पुण्यस्नानोक्तविधिना स्नापयेत्तत्प्रशान्तये ॥

यदि कन्याप्रसूः स्त्री स्यादाहिताग्नेः स्वकालतः ।
इष्ट्वैव पिण्डयज्ञेन सुताप्त्यामृतुकालतः ॥
अनवघ्रातपिण्डानां मध्यमं पिण्डमादरात् ।
मन्त्रेणाऽऽधत्त पितरः साऽश्नीयात्प्राङ्मुखी
सती ॥

# *गर्भिणीधर्माः

† भोजननियमाः, यात्रावर्जनम्, आयासकरक्रियावर्जनम्, व्यसनवर्जनम्, दिवास्वापवर्जनम्, जागरणवर्जनम्, आरोहणावरोहणवर्जनम्, शोकभयादिविकारवर्जनम्, वेगधारणवर्जनम्, विरेचनवर्जनम्, जलावगाहतरणवर्जनम्, तीव्रौषधवर्जनम्, क्षारवर्जनम्, मैथुनवर्जनम्, पक्कान्नभिक्षादानवर्जनम्, शौचम्, प्रशस्तमन्त्रलेखनम्, प्रसाधनम्, वृक्षच्छायावर्जनम्, स्थानासनविशेषेष्ववस्थितिवर्जनम्, उत्तरीयधारणनियमः, निशीथरोदनवर्जनम्, शयननियमाः, सर्वौषधीयुक्तकोष्णजलस्नानम्, रक्षाकरणम्, रक्तविमोक्षवर्जनम्, कुक्कुटासनवर्जनम्, मुक्तकेशतावर्जनम्, अभ्यञ्जनवर्जनम्, नखकृन्तनवर्जनम्, नखाङ्गारभस्मकरणकभूमिलेखनवर्जनम्, कलहवर्जनम्, गात्रभङ्गवर्जनम्, अमङ्गलभाषणवर्जनम्, अतिहास्यवर्जनम्, श्वशुरयोः पूजा, प्रसन्नमुखता, पञ्चममासादूर्ध्वं दैवपित्र्यपाकानधिकारः, पतिप्रियपरता, गर्भिणीधर्मफलानि

## बौधायनगृह्यपरिभाषासूत्रम्

[1]पुंसवनप्रभृत्याज्याभिघारितं पत्न्यश्नात्या प्रसवात् ॥

## बृहस्पतिः

[2]चतुर्थे मासि षष्ठे वाऽप्यष्टमे गर्भिणी यदा ।
यात्रा नित्यं विवर्ज्या स्यादाषाढे तु विशेषतः ॥

चतुर्थात् षष्ठादष्टमादारभ्येत्यर्थः । इदं च समर्थासमर्थस्त्रीपरम् । अत्यसमर्थायास्तु चतुर्थमासादारभ्यैव यात्रा वर्ज्येत्यर्थः । आषाढे तु सर्वमासेषु ।

¶ संम. १२

## कश्यपः

[1]गर्भधारणमारभ्य व्यायामव्यसनानि च ।
तक्षणं च दिवा स्वप्नं रात्रौ जागरणं तथा ॥

गजाश्वारोहणं शोकं वेगधारणमेव च ।
विरेचनं नैव कुर्यात् क्षाराद्यन्नं च वर्जयेत् ॥

[2]भूम्यां चैवोच्चनीचायामारोहश्चावरोहणम् ।
नदीप्रतरणं चैव शकटारोहणं तथा ॥

[3]उग्रौषधं तथा क्षारं मैथुनं भारवाहनम् ।
कृते पुंसवने चैव गर्भिणी परिवर्जयेत् ॥

गर्भग्रहणं च श्रमादिलिङ्गैर्वेदितव्यम् । 'गृहीतगर्भायाः सद्यः श्रमो ग्लानिश्च जायते, पिपासाऽऽयासः सक्थिस्पन्दनं शुक्रशोणितयोरनुसंबन्धो योन्याः स्फुरणं च' इत्यादि ।

संर. ८१६

---

* अत्र संगृहीतानां गर्भिणीधर्माणां गर्भरक्षोपायत्वाविशेषेऽपि ये भोजनगमनासनादिविषयका लौकिकपथ्याचाररूपा धर्मास्त एवास्मिन्प्रकरणे संगृहीताः, ये तु देवतार्चनहोमदानाद्यलौकिकाचाररूपा औषधसेवनरूपाश्च गर्भरक्षणाद्युपायभूता गर्भिणीधर्मास्ते 'वन्ध्यात्वं तत्परिहारोपायाश्च' इत्यस्मिन् प्रकरणे संगृहीता इति विवेकोऽनुसंधेयः ।

†अल्पीयस्यस्मिन्प्रकरणे विषयपौनरुक्त्यबाहुल्यात् समग्रप्रकरणगता विषया अत्र पुनरुक्तिपरिहारेण संगृहीताः । एवमग्रिमेष्वपि केषुचित्प्रकरणेषु ।

¶ क्रम. संमगतम् ।

(१) बौगृप. १।१०।१४.

(२) प्रपा. १२७ दाषाढे (त्याषाणे); गभा. १५२; संम. १२; सिन्धु. ८४१; विपा. २४२.

(१) मुक्ता. १५९.

(२) धप्र. ३७ (=) रोहश्चा (रोहणा); बम. ८ उत्त., स्मृत्यन्तरम्; बाल. १।१० पृ. १५ उत्त.; संर. ८१६ स्मृत्यन्तरम्.

(३) धप्र. ३७ (=); बम. ८ चैव ग (चैतद्र) स्मृत्यन्तरम्; बाल. १।१० पृ. १५ चमवत्; संर. ८१६ स्मृत्यन्तरम्.

## सुश्रुतः

*'ततः प्रभृति व्यायामव्यवायातितर्पणदिवास्वप्नरात्रिजागरणशोकभययानारोहणवेगधारणकुक्कुटासनशोणितमोक्षणानि परिहरेत् ॥

ततः प्रभृति गर्भग्रहणप्रभृतीत्यर्थः । तद्ग्रहणं चात्र श्रमादिभिर्लिङ्गैरवगन्तव्यम् । तान्यपि तेनैवोक्तानि– 'सद्यो गृहीतगर्भायाः श्रमो ग्लानिः पिपासा वक्षःस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणं च योन्याः' ।

$स्मृच. १८

## स्मृत्यन्तरम्

'दानं पक्वान्नभिक्षायाः परिवेषणमेव च ।
पचनं च न कर्तव्यं गर्भिण्या सर्वथैव तु ॥

## मार्कण्डेयपुराणम्

'गर्भे स्त्रीणां तथाऽन्यस्तु कललाशी सुदारुणः ।
तस्य रक्षा सदा कार्या नित्यं शौचनिषेवणात् ॥
'प्रशस्तमन्त्रलिखनाच्छस्तमाल्यानुधारणात् ।
विशुद्धगेहवसनादनायासाच्च वै द्विज ॥

'परिवर्तसुतौ तौ तु विरूपविकृतौ द्विज ।
तौ तु वृक्षाद्रिपरिखाप्राकाराम्भोधिसंश्रयौ ॥
'गर्भिण्याः परिवर्तं तौ कुरुतः पादपादिषु ।
अतो न वृक्षं नैवाद्रिं न प्राकारं पयोनिधिम् ।
परिखां वा समाक्रामेदबला गर्भधारिणी ॥

कललं गर्भपिण्डः । निमार्ष्टिनामिकायां भार्यायां दुःसहनामकात् ग्रहविशेषादष्टौ पुत्रा अष्टौ कन्यकाश्च जाताः । तन्मध्ये गर्भहनामकः स्त्रीणां गर्भे तिष्ठति, तस्य गर्भस्य तस्मात् ग्रहात् रक्षा कार्येत्यर्थः । तथा तत्संततावेव परिवर्तनामकस्य ग्रहस्य विरूपविकृतौ द्वौ सुतौ प्राकारादिषु तिष्ठतः, तावपि गर्भस्य वैरूप्यं विकृतिं वा कुरुतः, तस्माद्गर्भिणी प्राकारादीन्नाधितिष्ठेदित्यर्थः ।

संप्र. १८१–१८२

'गर्भहन्तुः सुतो विघ्नो मेहनी चापि कन्यका ।
प्रविश्य गर्भं हन्त्येको भुक्त्वा मेहयते परा ॥
'जायन्ते मेहनादस्याः सर्पमण्डूककच्छपाः ।
सरीसृपाणि चान्यानि पुरीषमथवा पुनः ॥
'वृक्षच्छायाश्रितां रात्रौ स्थितां वाऽपि चतुष्पथे ।
श्मशानकष्टभूमिष्ठामुत्तरीयविवर्जिताम् ।
तु(? रु)दमानां निशीथे च प्रविशेतामिमौ स्त्रियम् ॥

---

*मिताव्याख्यानं गर्भिणीपतिधर्मप्रकरणे याज्ञवल्क्यवचने द्रष्टव्यम् ।

$ मुक्ता. स्मृचवत् ।

(१) मिता. ३।७९ ; स्मृच. १८ ( तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयं कुक्कुटासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणं च न सेवेत ) ; प्रपा. १२९ वायातितर्प ( वसायनिर्हर ) स्वप्न ( स्वाप) श्रूयते इत्युक्तम्; मुक्ता. १५९ वाया ( वसाया ) भययाना ( भया ). (२) संर. ८१७.

(३) प्रपा. १२६ पूर्वार्धे ( गर्भः स्त्रीणां तथा न्यस्तः कलिलः स्यात्सुदारुणः । ) ; संप्र. १८१ ; विपा. २४१ तस्य र ( गर्भर ) उत्त., पाद्मे कश्यपः ; संकौ. ३४ रक्षा ( रक्षां ) कार्या नि ( कुर्यान्नि ) उत्त. ; संर. ८१६ विपावत् , उत्त.

(४) प्रपा. १२६ शस्त ( सिद्ध ) ; संप्र. १८१ पू.; विपा. २४१–२४२ धारणात् ( लेपनात् ) चतुर्थपादे ( दानैरश्वादिपूजनैः ) पाद्मे कश्यपः ; संर. ८१६ धारणात् ( क्लेपनात् ) पू.

(१) प्रपा. १२६ सुतौ ( यते ) वृक्षाद्रि (वृक्षादि) ; संप्र. १८१.

(२) प्रपा. १२६ गर्भिण्याः ( गर्भिण्यां ) वर्तं ( वृत्तिं ) दिषु ( द्रिषु ) न प्राकारं ( प्राकारं च ) ; संप्र. १८१ ; संकौ. ३४ न प्राकारं (प्राकारं न) प्रथमार्धे नास्ति ; संर. ८१६ तृतीयपादे ( वृक्षमद्रिं च नाऽऽक्रामेत् ) वा समा ( च न चाऽऽ ) प्रथमार्धे नास्ति.

(३) प्रपा. १२६ मेह ( मोहि ) भुक्त्वा ( भुक्तं ); संप्र. १८२.

(४) प्रपा. १२६ ; संप्र. १८२ पुनः ( पुरः ).

(५) प्रपा. १२७–१२७ तां रात्रौ स्थितां वा ( ता रात्रावथवा ) पञ्चमपादे ( निद्राहीनां निशीथोत्थां ) ; संप्र. १८२ प्रविशे ( प्राविशे ).

## मत्स्यपुराणम्

[1]संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ।
न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥

[2]न शयाना सदा तिष्ठेद्वृक्षच्छायां विवर्जयेत् ।
सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥

ईषदुष्णं कोष्णम् । संर. ८१६

[3]कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ।
दानशीला तृतीयायां पार्वत्या भक्तिमाचरेत् ॥

[1]गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥

[2]शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनम् ।
व्यवसायं दिवास्वापं रात्रौ जागरणं त्यजेत् ॥

[3]अतिक्षारं तु नाश्नीयादत्यम्लमतिभोजनम् ।
अत्युष्णमतिशीतं च गुर्वाहारं परित्यजेत् ॥

[4]इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ।
यस्तु तस्या भवेत् पुत्रः स्थिरायुर्वृद्धिसंयुतः ॥

---

(१) **स्मृच.** १८ ; **प्रपा.** १२६ वरवर्णिनि ( हि प्रयत्नतः ) पाद्मे ; **संसौ.** ४७ ; **संप्र.** १८०-१८१ मूलेषु ( मूले च ) ; **मुक्ता.** १५९ संध्यायां नै ( संध्ययोर्नै ) वरवर्णिनि ( तु प्रयत्नतः ) स्थात ( स्नात ) स्मृतिरत्ने; **संम.** १२ नैव ( हि न ) ; **विपा.** २४१ सर्वं प्रपावत् ; **संको.** ३३ संप्रवत्, पाद्मे ; **बाल.** १।१० पृ. १५ स्थात ( स्नात ) संवर्तः ; **संग.** ४२८ संप्रवत् ; **संर.** ८१६ उत्तरार्धे ( स्थातव्यं न च गन्तव्यं वृक्षमूले च सर्वदा ॥ ) भविष्ये.

(२) **स्मृच.** १८ शयाना ( शयालुः ) वृक्ष (मन्द); **प्रपा.** १२६ वृक्ष ( खट्वा ) पाद्मे ; **संसौ.** ४७ विवर्ज ( च वर्ज ) ; **संप्र.** १८१ ; **मुक्ता.** १५९ शयाना ( शयालुः ) वृक्ष ( खट्वा ) स्मृतिरत्ने ; **संम.** १२ मुक्तावत् ; **विपा.** २४१ उत्त., पाद्मे ; **संको.** ३३ सर्वं विपावत् ; **बाल.** १।१० पृ. १६ उत्तरार्धे ( सर्वौषधीभिः काष्ठेन वारिस्नानं समाचरेत् ॥ ) उत्त., संवर्तः ; **संग.** ४२९ ; **कृम.** ८४० मुक्तावत्, पू., कश्यपः ; **संर.** ८१६ शयाना ( दुर्मुखी ) वृक्ष ( खट्वा ) भविष्ये.

(३) **स्मृच.** १८ प्रथमपादे ( सुरक्षा कृतभूषा च ) भक्ति ( व्रत ) ; **प्रपा.** १२६ पार्वत्या ( पार्वत्यां ) पाद्मे; **संसौ.** ४७ भक्ति ( नक्त ) ; **संप्र.** १८१ संसौवत्; **मुक्ता.** १५९ तृतीयायां ( तृतीयाया ) भक्ति ( नक्त ) स्मृतिरत्ने ; **संम.** १२ उत्त. ; **विपा.** २४१ सर्वं प्रपावत् ; **संको.** ३४ मुक्तावत्, पाद्मे ; **बाल.** १।१० पृ. १६ सुभूषा ( ऽनसूया ) तत्परा । + ( तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता । ) शेषं प्रपावत् संसौवच्च, संवर्तः ; **संग.** ४२९ संसौवत् ; **संर.** ८१६ संसौवत्, भविष्ये.

(१) **प्रपा.** १२६ शैलहर्म्यादि ( वाहं हर्म्याधि ) पाद्मे ; **गभा.** १५२ प्रयोगपारिजाते ; **संसौ.** ४७ हर्म्यादि ( वृक्षाधि ) यामं ( यामे ) ; **संप्र.** १८१ ; **संम.** १२ ; **सिन्धु.** ८४० हर्म्यादि ( हर्म्याधि ) प्रयोगपारिजाते कश्यपः ; **विपा.** २४१ पाद्मे ; **संको.** ३४ पाद्मे ; **बाल.** १।१० पृ. १५ पारिजाते कश्यपः ; **संग.** ४२९ ; **संर.** ८१६ भविष्ये.

(२) **प्रपा.** १२६ मोक्षं ( मोकं ) पाद्मे ; **गभा.** १५२ प्रयोगपारिजाते ; **संसौ.** ४८ शोकं ( शाकं ) शेषं प्रपावत्, पू. ; **संप्र.** १८१ ; **संम.** १२ ; **सिन्धु.** ८४१ प्रयोगपारिजाते कश्यपः ; **विपा.** २४१ रक्तविमोक्षं ( च रक्तमोक्षं ) व्यवसायं ( खट्वाच्छायां ) पाद्मे ; **संको.** ३४ व्यवसायं ( व्यवायं च ) शेषं सर्वं प्रपावत् ; **बाल.** १।१० पृ. १५ पारिजाते कश्यपः ; **संग.** ४२९ ; **संर.** ८१६ प्रपावत् संकोवच्च, भविष्ये.

(३) **प्रपा.** १२६ पाद्मे ; **संसौ.** ४७ भोजनम् ( चोषणम् ) ; **संप्र.** १८१ ; **संम.** १२ भोजनम् ( भूरि च ) ; **विपा.** २४१ तृतीयपादे ( लघ्वाहारं चातितरां ) पाद्मे ; **संको.** ३४ पाद्मे ; **संर.** ८१६ क्षारं ( रुक्षं ) भविष्ये.

(४) **स्मृच.** १८ इतिवृत्ता ( इति कृत्वा ) स्थिरायुर्वृद्धि ( शीलायुर्धृति ) ; **प्रपा.** १२६ इतिवृत्ता (पतिव्रता) वृद्धिसंयुतः ( वृद्धसंमतः ) पूर्वोत्तरार्धयोर्मध्ये 'अतिक्षारं' इत्ययं श्लोको विद्यते, पाद्मे ; **संप्र.** १८१ तस्या (तस्यां); **मुक्ता.** १५९ वृत्ता ( व्रता ) स्मृतिरत्ने ; **संम.** १२ उत्त. ; **विपा.** २४१ इतिवृत्ता ( पतिव्रता ) पू., पाद्मे : २४२ (=) वृद्धिसंयुतः ( वृद्धसंमतः ) उत्त. ; **संको.** ३४ यस्तु तस्या ( यश्च तस्यां ) पाद्मे ; **बाल.** १।१० पृ. १६

¹अन्यथा गर्भपतनमवाप्नोति न संशयः ।
तस्मात् त्वमनया वृत्या गर्भेऽस्मिन् यत्नमाचर ॥

## स्कन्दपुराणम्

²हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
³केशसंस्कारकबरीकरकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती वर्जयेद्गर्भिणी न हि ॥

कूर्पासकं तालवृन्तादि । संर. ६७५

$⁴मातास्थ गर्भगुप्त्यर्थं सात्त्विकाहारसंयुता ।
सदाचारा धर्मशीला सव्रतैर्देवतार्चनैः ॥

नातिप्रातस्तु भुञ्जीत नातिमध्यंदिने तथा ।
संध्याकाले तु नाश्नीयान्नाकच्छा वर्तयेत्सदा ॥
नोच्छिष्टा नैव मलिना न प्रावृतमुखा सती ।
नाऽऽरोहेत् पर्वतं चाश्वं श्मशानं नेक्षयेत्सती ॥
नोत्तरेत्तु नदीं नावा न वृक्षानारुहेत्कदा ।
न मुक्तकेशी नाभ्यक्ता भवेद्गर्भवती सती ॥
नोच्छिष्टा न च संध्यासु तथैव विषमस्थले ।
नाधः शयीत विप्रेभ्यो दद्याद्भक्त्यनुसारतः ॥

## विष्णुधर्मोत्तरपुराणम्

¹कटुतीक्ष्णकषायाणि अत्युष्णलवणानि च ।
आयासं च व्यवायं च गर्भिणी वर्जयेत् सदा ॥

## पद्मपुराणम्

¹नावस्करेषूपविशेन्मुसलोलूखलादिषु ।
जलं च नावगाहेत शून्यागारं च वर्जयेत् ॥

( १ ) अवस्करः उत्करः । संप्र. १८०

( २ ) अवस्करेषु मार्जन्यादिषु । नोपस्करेष्विति पाठे उपस्करशब्देन शूर्पादि ज्ञेयम् । संर. ८१५

²वल्मीकं नाधितिष्ठेत न चोद्विग्नमना भवेत् ।
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥

---

$प्रयोगपारिजातेऽन्यत्र वचनान्तराणाम् 'स्कान्दे कपिलसंहितायाम्' इत्याकारनिर्देशादत्र कपिलसंहिताया इमानि वचनानि स्कन्दपुराणे संगृहीतानि। स्कन्दपुराणे कपिलसंहिता इदानीं नोपलभ्यते ।

इति ( शान्त ) तु ( च ) स्थिरा ( शीला ) संवर्तः ; संग. ४२९ संकौवत् ; संर. ८१६ संकौवत् , भविष्ये.

(१) स्मृच. १८ पू. ; प्रपा. १२६ नमवा ( नं सा चाऽऽ ) पू., पाद्मे ; संसौ. ४८ अन्यथा ( अवश्यं ) पू. ; संप्र. १८१ पू. ; मुक्ता. १५९ पू., स्मृतिरत्ने ; संम. १२ प्रपावत्, पू. ; विपा. २४२ ( = ) प्रपावत्, पू. ; संकौ. ३४ पू., पाद्मे ; बाल. १।१० पृ. १६ संवर्तः ; संग. ४२९ पू. ; संर. ८१६ पू., भविष्ये.

(२) मपा. १९४ माङ्ग (मङ्ग) ; मर. ११४ ( कूर्पा० ) शेषं मपावत् ; गभा. १५२ मदनरत्ने ; सिन्धु. ८४१ ; शूक. २४२ ; विपा. २४२ हरिद्रां ( हरिद्रा ) तृतीयपादे ( केशसंस्कारताम्बूलं ) पाद्मे ; संर. ६७५ याज्ञवल्क्यः.

(३) मपा. १९४ चतुर्थपादे ( दूरयेन्न क्वचित्सती ) ; मर. ११४ मपावत् ; गभा. १५२ कर ( कण्ठ ) वर्जयेद्गर्भिणी ( दूरयेद्गर्भिणी ) मदनरत्ने ; सिन्धु. ८४१ कबरीक ( कबरीं क ) ; शूक. २४२ मपावत् ; विपा. २४२ उत्त., पाद्मे ; संर. ६७५ कबरीक ( कबरीं क ) चतुर्थपादे ( दूषयेन्न क्वचित्सती ) याज्ञवल्क्यः.

(४) प्रपा. १२६ कपिलसंहितायाम्.

---

(१) सिन्धु. ८३९.

(२) स्मृच. १८ नाव ( नोप ) ; प्रपा. १२५–१२६ ; संसौ. ४६ मत्स्यपुराणे ; संप्र. १८० ; मुक्ता. १५९ स्मृतिचन्द्रिकायाम् ; संम. १२ ; विपा. २४० मुसले ( मुषले ) ; संकौ. ३३ नावस्क ( नावस्का ) ; बाल. १।१० पृ. १५ च नाव ( न चाव ) संवर्तः ; संग. ४२८ ; संर. ८१५ च वर्जे ( विवर्जे ).

(३) स्मृच. १८ ; प्रपा. १२६ ; संसौ. ४६ उत्तरार्धे ( न नखैर्विलिखेद्भूमिं नाङ्गारेण च भस्मना ॥ ) मत्स्यपुराणे ; संप्र. १८० ; मुक्ता. १५९ वल्मीकं ( वल्मीके ) स्मृतिचन्द्रिकायाम् ; संम. १२ उत्त. ; विपा. २४० ; संकौ. ३३ ; बाल. १।१० पृ. १५ कं नाधिति ( कायां न ति) संवर्तः ; संग. ४२८ न भस्मना ( च भस्मना ) ; संर. ८१५.

¹न शयालुः सदा तिष्ठेद् व्यायामं च विवर्जयेत्।
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥

²वर्जयेत् कलहं गेहे गात्रभङ्गं तथैव च।
न मुक्तकेशा तिष्ठेत नाशुचिः स्यात् कदाचन॥

³न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित्।
न वस्त्रहीना नोद्विग्ना न चाऽऽर्द्रचरणा
सती ॥

⁴नामङ्गल्यं वदेद्वाक्यं न च हास्याधिका भवेत्।
कुर्याच्छ्वशुरयोर्नित्यं पूजां माङ्गल्यतत्परा।
तिष्ठेत् प्रसन्नवदना भर्तुः प्रियहिते रता ॥

## अनिर्दिष्टकर्तृकवचनम्

¹गुर्विणी पञ्चमादूर्ध्वं दैवे पित्र्ये च कर्मणि।
पित्र्य(? त्र्य)र्थे पञ्चयज्ञार्थे पाकं कर्तुं न
साऽर्हति ॥

## वराहः

²सामिषमशनं यत्नात् प्रमदा परिवर्जयेदतः
प्रभृति ॥

## रेणुकारिका:

³व्यायामं व्यवसायातिभोजने रात्रिजागरम्।
दिवा सुप्तं भयं शोकमश्वाद्यारोहणं तथा॥

वेगधारमसृग्मोक्षं कुक्कुटासनमेव च।
वर्जयेत् सुश्रुतोक्तानि गर्भाधानादिमानि तु॥

⁴प्रथमादिषु मासेषु भवेद्गर्भस्य वेदना।
तत्रौषधादि विज्ञेयं क्रियाकालगुणोत्तरान्॥
गर्भावस्थाऽवगन्तव्या शंकरोक्तागमादिषु।
अधुना तत्प्रसङ्गेन गर्भिण्या धर्म उच्यते॥

⁵अङ्गारभस्मास्थिकपालचुल्ली-
शूर्पादिकेषूपविशेन्न नारी।
सोलूखलाद्ये दृषदादिके वा
यन्त्रे तुषालिङ्गरकोपरिष्टात्॥

---

(१) स्मृच. १८; प्रपा. १२६ उत्त.; संसौ. ४६ न शयालुः ( नाप्यप्सु च) समावि ( सदा वि) मत्स्यपुराणे; संप्र. १८०; मुक्ता. १५९ स्मृतिचन्द्रिकायाम्; संम. १२ समावि ( च संवि ); विपा. २४१ उत्त.; संकौ. ३३; बाल. १।१० पृ. १५ सदा ति ( समाति ) संवर्तः; संग. ४२८; संर. ८१५.

(२) स्मृच. १८ गेहे ( लोके ) केशा ( केशी ) कदा ( कथं ); प्रपा. १२६ गेहे गा ( लोकैर्गा ) केशा ( केशी ); संसौ. ४६ प्रपावत्, मत्स्यपुराणे; संप्र. १८०; मुक्ता. १५९ गेहे ( लोके ) केशा तिष्ठेत ( केशी तिष्ठेत्तु ) स्मृतिचन्द्रिकायाम्; संम. १२ गेहे गा (लोकैर्गा) पू.; विपा. २४१ प्रपावत्; संकौ. ३३; बाल. १।१० पृ. १५ गेहे ( लोके ) केशा ( केशी ) संवर्तः; संग. ४२८; संर. ८१५.

(३) स्मृच. १८ धःशिराः ( धःशिरा ); प्रपा. १२६ चतुर्थपादे ( न चाऽऽर्द्राम्बरधारिणी ); संसौ. ४६-४७ न वस्त्रहीना ( वस्त्रहीना न ) मत्स्यपुराणे; संप्र. १८० सती ( तथा ); मुक्ता. १५९ स्मृचवत्, स्मृतिचन्द्रिकायाम्; संम. १२ धःशिराः ( धःशिरः ) चाऽऽर्द्रचरणा ( चाऽऽर्द्राचरणा ); विपा. २४१; संकौ. ३३ संप्रवत्; बाल. १।१० पृ. १५ चैवाधः ( चापर ) संवर्तः; संग. ४२८ त्तरशिरा (त्तरदिशि) सती (तथा); कुम. ८४० चाऽऽर्द्रच ( चाऽऽर्द्राव ) कश्यपः; संर. ८१५ नोद्विग्ना ( नोच्छिष्टा ) सती ( तथा ).

(४) स्मृच. १८; प्रपा. १२६; संसौ. ४७ मत्स्यपुराणे; संप्र. १८०; मुक्ता. १५९ धिका भवेत् ( दि किंचन ) नित्यं ( नित्यां ) माङ्गल्य ( मङ्गल ) स्मृतिचन्द्रिकायाम्; विपा. २४१ मङ्गल्यं ( मङ्गलं ) माङ्गल्य ( मङ्गल ); संकौ. ३३; बाल. १।१० पृ. १५ ( नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत्। कुर्यात्तु गुरुशुश्रूषां नित्यं मङ्गलतत्परा ॥ ) तृतीयार्धं नास्ति, संवर्तः; संग. ४२८ तृतीयार्धं नास्ति; संर. ८१६ भर्तुः प्रियहि ( सदा भर्तुर्हि ).

(१) बाल. १।१० पृ. १५.

(२) गभा. १५२; सिन्धु. ८३८.

(३) रेका. ६८-६९ पृ. ६.

(४) रेका. २८-२९ पृ. ९.

(५) रेका. ३० पृ. ९ चुल्लीशू ( चूल्यां शू ); गभा. १५२ लिङ्गरकोपरिष्टात् ( द्ये न तथोपविष्टा );

'नो मार्जनीगोमयपिण्डकादौ
कुर्यान्न वारिण्यवगाहनं सा ।
अङ्गारभूत्या न नखैर्लिखेत् क्ष्मां
कलिं वपुर्भङ्गमथो न कुर्यात् ॥

'नो मुक्तकेशी विवशाऽथवा स्या-
द्भुङ्क्ते न संध्यावसरे न शेते ।
स्वप्यान्न याम्याचरणाऽऽर्द्रपादा
नाधःशिरोद्विग्नमनाऽशुचिः स्यात् ॥

सिन्धु. ८३८ गभावत्, गृह्यकारिका ; विपा. २४२ (=) पू.

(१) रेका. ३१ पू. ९ भूत्या (भूम्यां) ; गभा. १५२ द्वितीयपादे (मूत्रं पुरीषं शयनं च कुर्यात्) पू. ; सिन्धु. ८३८ गृह्यकारिका ; विपा. २४२ (=).

(२) रेका. ३२ पू. ९ वशाऽथवा (वशा सदा) ; गभा. १५२ पू. ; सिन्धु. ८३९ पू., गृह्यकारिका ; विपा. २४२ (=) पू. ; कृम. ८४० निर्देशमात्रम्.

भुङ्क्ते इति । संध्यावसरे न भुङ्क्ते संध्यावसरे न शेते इत्यन्वयः, अथवा न शेते इति शयालुत्वस्यापि निषेधः, सामान्यतः शयननिषेधासंभवात् । कश्यपः– 'न शयालुः सदा तिष्ठेत्' इति । कृम. ८४०

'नामङ्गलं वाक्यमुदीरयेत् सा
शून्यालयं वृक्षतलं न यायात् ।
तिष्ठेन्न वल्मीकमथोनहास्या(त् ?)
रक्षान्विता भर्तृहिते रता स्यात् ॥

'तिष्ठेत् सुभूषादिगुणैश्च युक्ता
पुत्रं प्रसूयाद्गुणशीलयुक्तम् ।
पद्मे दितिं कश्यप आह धर्मं
मात्स्येऽपि ज्ञातं सुरगर्भिणीनाम् ॥

(१) रेका. ३३ पू. ९ ; गभा. १५२ पू. ; सिन्धु. ८३९ पू., गृह्यकारिका.

(२) रेका. ३४ पू. ९.

# *गर्भिणीपतिधर्माः

क्षौर–नखच्छेद–विदेशगमन–तीर्थयात्रा–श्राद्ध–पिण्डदान–प्रेतकर्म–प्रेतवाहन–प्रेतानुगमन–श्राद्धभोजन–गृहनिर्माण–गृहप्रवेश–समुद्रगमन–समुद्रदर्शन–समुद्रस्नान–चौलादिसंस्कारा–ऽग्न्याधान–यागादि–मैथुन–प्रतिग्रह–देवतास्थापन–स्तम्भस्थापन–युद्ध–पर्वतारोहण–नावारोहण–वृक्षच्छेदवर्जनम् , क्षौरवर्जनापवादः , श्राद्धवर्जनापवादः , प्रेतकर्मवर्जनापवादः , सर्वनिषेधापवादः , निषेधेषु मासमर्यादा, पत्न्यै दौहृदप्रदानम् , प्रसूतिदशमदिने वपनम् , पञ्चममासप्रभृति दैवपित्र्यपाकानधिकारः

## हारीतः

**'क्षौरं च तीर्थयात्रां च श्राद्धभोजनमेव च ।**
**मासात्तु सप्तमादूर्ध्वं वर्जयेद्गर्भिणीपतिः ॥**

क्षौरं क्षुरसाध्यं कर्म, तदेव वपनं मुण्डनं चोच्यते । तच्चात्र कर्तनस्याप्युपलक्षणम् , 'नोदन्वतोऽम्भसि स्नायान्न च श्मश्रुवादि कर्तयेत् । अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम् ॥' इति क्रतुस्मरणात् । यत्तु 'वपनस्य निषेधेऽपि कर्तनं च विधीयते ।' इति स्मृत्यन्तरवचनम् , तत् गर्भिणीपतिव्यतिरिक्तानां जीवत्पितृकादीनां यो वपननिषेधः तत्र कर्तनविधानपरम् , 'पञ्चाशद्वायनात् पूर्वं क्षौरं नैमित्तिकं विना । न कुर्यात्तत्तदूर्ध्वं तु स्वेच्छया वपनं चरेत् ॥' इत्युपक्रम्यास्य विधानात् । तीर्थयात्रेति देशान्तरगमनमात्रोपलक्षणम् , 'सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् । विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः ॥' (‡ इति स्मृत्यन्तरात् । ) 'अन्तर्वत्न्यां तु जायायां तीर्थे क्षौरं न कारयेत् । प्रेतदाहादिकं चैव सीमन्तोन्नयनादनु ॥' (‡ इति स्मृत्यन्तरात् १ )। अत्र च 'मासात्तु सप्तमादूर्ध्वम्' इत्यनेनाष्टममासमारभ्यैव निषेधपरिपालनं गम्यते । तत्रानुकल्पोऽयम् 'सीमन्तोन्नयनादनु' इति । यद्वा, चतुर्थमासिकसीमन्तोन्नयनादनन्तरं निषेधपरिपालनं मुख्यः कल्पः , तत्रानुकल्पोऽयम् 'मासात्तु सप्तमादूर्ध्वम्' इति ।

¶ संप्र. १८३–१८४

## वसिष्ठः

**'गृहनिर्माणमुदधिस्नानं चौलं सुतस्य च ।**
**तीर्थयात्रां न स्व( ? नख)श्मश्रु न कुर्याद्गर्भिणीपतिः ॥**

## वृद्धमनुः

**'दहनं वहनं चापि प्रेतस्यान्यस्य गर्भवान् ।**
**न कुर्यादुभयं तत्र कुर्यादेव पितुः सदा ।**
**ज्येष्ठस्य चानपत्यस्य मातुलस्यासुतस्य च ॥**

पितुरिति मातुरप्युपलक्षणम् । गोमि. १४।२८

---

* केवलसंस्कारविषयकानि कानिचिद्वचनानि चूडाकर्मोपनयनप्रकरणयोर्द्रष्टव्यानि ।

‡ कंसस्थितोऽयं ग्रन्थः प्रथमकंसस्थाने आवश्यकः , द्वितीयकंसस्थाने तस्याऽऽदर्शपुस्तके मुद्रणं प्रामादिकम् , 'सिन्धुस्नानं०' इति वचनस्यैव पूर्वप्रतिज्ञातेऽर्थे हेतुत्वात् , 'अन्तर्वत्न्यां०' इति वचनस्य तदहेतुत्वादुत्तरग्रन्थेनैव संबन्धाच्च ।

(१) संप्र. १८३ ; संग. ४२९.

¶ संग. संप्रगतम् ।

(१) वसं. २८।५ ; संसौ. ४८ च ( तु ) यात्रां न ( यात्रां ) द्गर्भि ( द्गुर्वि ).

(२) गोमि. १४।२८ चान (वाऽन) स्यासुतस्य च (स्य सुतस्य वा) ; मुका. ५४५ चापि (वाऽपि) मनुः.

## याज्ञवल्क्यः

**[1]दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।**
**वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियाः ॥**

( १ ) भिषक्छास्त्रानुसारेणैव च– दौहृदस्येति । दौहृदः भोजनादिविशेषाभिलाषः । स्पष्टमन्यत् । प्रमाणान्तरानुसारिणोऽप्यत्राभिधानमक्रियायां दोषवत्त्वज्ञापनार्थम् । विश्व.

( २ ) किंच, गर्भस्यैकं हृदयं गर्भिण्याश्चापरमित्येवं द्विहृदया, तस्याः स्त्रिया यदभिलषितं तत् दौहृदम् , तस्याप्रदानेन गर्भो विरूपतां मरणरूपं वा दोषं प्राप्नोति । तस्मात्तद्दोषपरिहारार्थं गर्भपुष्ट्यर्थं च गर्भिण्याः स्त्रियाः यत् प्रियमभिलषितं तत् संपादनीयम् । तथा च सुश्रुते– ' द्विहृदयां नारीं दौहृदिनीमाचक्षते तदभिलषितं दद्यात् वीर्यवन्तं चिरायुषं पुत्रं जनयति ' इति । तथा च व्यायामादिकमपि गर्भग्रहणप्रभृति तया परिहरणीयम् , ' ततः प्रभृति व्यायामव्यवायातितर्पणदिवास्वप्नरात्रिजागरणशोकभययानारोहणवेगधारणकुक्कुटासनशोणितमोक्षणानि परिहरेत् ' इति तत्रैवाभिधानात् । गर्भग्रहणं च श्रमादिभिर्लिङ्गैरवगन्तव्यम् । ' सद्योगृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिसीदनं शुक्रशोणितयोरवबन्धः स्फुरणं च योनेः ' इत्यादि तत्रैवोक्तम् । ¶ मिता.

( ३ ) चतुर्थे मासि गर्भरक्षार्थं यत्कार्यं तदाह– दोहदेति । गर्भवत्याऽपेक्षितं वस्तु दोहदः, तस्याप्रदानेन गर्भस्य दोषो व्याध्यादिः विरूपता अङ्गविकलता मरणं वा स्यात् । एतस्माद्धेतोः स्त्रियाः प्रियं कार्यम् । दोहदो देय इत्यर्थः । अप.

( ४ ) तृतीयमासमारभ्य गर्भिणीमधिकृत्य तत्पतिकर्तव्यं प्रसङ्गादाह–दोहदस्येति । गर्भिण्या(ण्यै) तद्वाञ्छितस्यार्थस्य मिष्टभोजनभ्रमाभावादेरप्रदानेन गर्भो दोषं वैरूप्यात्मकं मरणादिकं वाऽवाप्नोति । तस्मात् गर्भिण्याः स्त्रियाः प्रियं वाञ्छितं संपादनीयमित्यर्थः । अपिकारेण वीर्यहीनत्वसंग्रहः । दौहृदस्येति पाठे गर्भहृदयेनाऽऽत्महृदयेन च द्विहृदयाया गर्भिण्या अभीष्टस्येत्यर्थः , निपातनादौकारादिति । तथा च श्रुतिः– ' द्विहृदयां नारीं दौहृदिनीमाचक्षते तदभिलषितं दद्याद्वीर्यवन्तं चिरायुषं पुत्रं जनयति ' इति । वीमि.

( ५ ) पत्येति शेषः । ‡ संप्र. १८२

( ६ ) दौहृदस्येति । गर्भस्यैकं हृत् गर्भिण्याश्चैकमिति द्विहृदा, तस्या इदं दौहृदम् । § औच् आगमः , दौवारिकवत् । कुम. ८४१

---

¶ प्रपा. मितानुवादः । गभा. , सिन्धु. , बाल. , संर. मितागतम् ।

(१) यास्मृ. ३।७९ ; विश्व. ; मिता. ; अप. ३।७८ दौहृद ( दोहद ) ; स्मृच. १८ ; प्रपा. १२७ मरणं वा ( निधनं चा ) प्रियं स्त्रियाः (स्त्रियाः प्रियम् ) शेषं अपवत् : १२९ वाऽपि ( चापि ) प्रियं स्त्रियाः ( स्त्रियाः प्रियम् ) शेषं अपवत् ; गभा. १५२ स्त्रियाः ( स्त्रियः ) ; वीमि. ; संप्र. १८२ मरणं ( निधनं ) प्रियं स्त्रियाः ( स्त्रियाः प्रियम् ) शेषं अपवत् ; मुक्ता. १५९ दौहृद ( द्वौहृद ) ; संम. १२ अपवत् ; सिन्धु. ८४१ ; विपा. २४३ अपवत् संप्रवच्च ; बाल. १।१० पृ. १५ दौहृद ( दौर्हृद ) ; संग. ४२९ मरणं ( निधनं ) प्रियं स्त्रियाः ( स्त्रियः प्रियम् ) ; कुम. ८४१ निर्देशमात्रम् ; संर. ८१७ अपवत् .

‡ संग. संप्रवत् ।

§ ग्रन्थोऽयं न रमणीयः । तथाहि- ' औच् ' इति न प्रत्याहारः , मध्यमवर्णाभावेनान्वर्थकत्वाभावाद्वैयर्थ्याच्च प्रत्याहारत्वासंभवात् । संधिकृतागमस्वरूपसंदेहवारणार्थं चकारोच्चारणमित्यपि न साधु, तदुद्देशेन चकारोच्चारणस्य शास्त्रे कुत्राप्यदर्शनात् । यद्वा, ' दौवारिकवत् ' इति दृष्टान्तात् ' ऐच् ' इति वक्तव्ये ' औच् ' इति वचनं प्रामादिकं स्यात् । तथाऽपि ऐजागमो न ' न य्वाभ्याम्० ' इति सूत्रेण भवति, द्विशब्दस्थवकारस्य पदान्तत्वाभावात् । नापि ' द्वारादीनां च ' इत्यनेन, द्वारादिगणे द्विहृदाशब्दस्यापाठात् । अपि च, ऐजागममात्रे कृतेऽपि ' दौविहार्दम् ' इति स्यात् , न ' दौहृदम् ' इति । तस्मादैजागमस्य समस्तकार्योलक्षकत्वं स्वीकृत्य पृषोदरादित्वात्साधुत्वे तात्पर्यं बोध्यम् । वीरमित्रोदयायामपि ' निपातनादौकारात् ' इति यदुक्तं तत्रौकारपदं समस्तकार्योपलक्षकमिति, निपातनपदं च गणगतपरिनिष्ठितोच्चारणपरम् , न सौत्रपरिनिष्ठितोच्चारणपरमिति च

## बृहस्पतिः

[1]'अन्तर्वत्न्यां तु जायायां क्षौरं कुर्वन् विनश्य च-
(? श्यति)॥

## दक्षः

[2]'मासषट्के व्यतीते तु न कुर्यान्मौञ्जिबन्धनम्।
अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत्॥

[3]मुण्डनं पिण्डदानं च प्रेतकर्म तथैव च।
न जीवत्पितृकः कुर्याद्गर्भिणीपतिरेव च॥

पिण्डदानशब्देन श्राद्धमुपलक्ष्यते इति केचित्।
$ संर. ८१८

[4]'क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवम्।
पित्रोः प्रेतविधानं च गर्भिणीपतिराचरेत्॥

प्रयागादितीर्थप्राप्तौ मातृमरणादिनिमित्ते च जीवत्पितृकस्य गर्भिणीपतेश्च मुण्डनमावश्यकम्, 'प्रयागे वपनं कुर्यात्' इति वचनात् 'क्षौरं नैमित्तिकं०' इति स्मृत्यन्तरात् 'क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवम्। पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके॥' इति संग्रहवचनाच्च। 'अन्तर्वत्न्यां च जायायां तीर्थे क्षौरं न कारयेत्।' इति वचनात्तु तीर्थे गर्भिणीपतेः क्षौरनिषेधोऽवगम्यते। अतोऽत्र विकल्पो वा पूर्ववचनस्य प्रयागपरत्वं वा। संदी. ६२ (भागः २)

[1]'गर्भिण्यामात्मनः पत्न्यां वपनं परिवर्जयेत्।
कारयेद्यदि वा मोहात् स चैव भ्रूणहा भवेत्।
इत्युक्तं पञ्चमादूर्ध्वमघोमा( से ) शुभप्रदम्॥
अष्टमासात्परं चैव न कुर्याच्छ्राद्धभोजनम्।
श्मश्रुकर्म तथा चैव केचिदाहुर्मनीषिणः॥

## सत्यव्रतः

[2]¶ऋतुत्रये व्यतीते तु न कुर्यान्मौञ्जिबन्धनम्।
अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत्॥
पित्रोः क्षयाहं दर्शं च गयाश्राद्धं महालयम्।
ग्रहणान्वष्टकाश्राद्धे कुर्याद्गर्भवतीपतिः॥

## आश्वलायनः

[3]'वपनं मैथुनं तीर्थे वर्जयेद्गर्भिणीपतिः।
श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यच्च वेदवित्॥

---

मन्तव्यम्। न च पृषोदरादेराकृतिगणत्वेऽपि तत्र दौहृदशब्दस्य साक्षात्पाठाभावेन निपातनत्वोक्तिरनुपपन्नेति वाच्यम्, आकृतिगणेषु साक्षादपठितानामपि साक्षात्पठितनिर्विशेषत्वात्। क्वचित् याज्ञवल्क्यवचने मिताक्षरायां च दौहृदशब्दः पठितो दृश्यते। स त्वपपाठः, तादृशशब्दप्रयोगस्यान्यत्र कुत्राप्यनुपलम्भात्, मिताक्षरायां 'दौहृदिनीमाचक्षते' इति प्रमाणीकृतसुश्रुतवाक्यपाठस्य सर्वेषु पुस्तकेषु समानत्वाच्च।

$ शेषं व्याख्यानमाश्वलायनवचने द्रष्टव्यम्।

(१) संसौ. ८७.

(२) धप्र. ३७ मासषट्के (ऋतुद्वये) च (तु); संर. ८१७ मासषट्के (ऋतुद्वये) : ८१८.

(३) सिन्धु. ८३९–८४० तथैव च (च सर्वशः) गर्भि (गुर्वि) कौण्डिन्यः; संर. ८१८; संदी. ६१ (भागः २) तथैव च (च सर्वतः).

(४) संसौ. ९१ नैमि (निमि) पू., धर्मशास्त्रे; संप्र. १८४ स्मृत्यन्तरे; ज्योनि. ११९ चतुर्थपादे (दोषस्तत्र न विद्यते) स्मृत्यन्तरे; संकौ. ३४ स्मृत्यन्तरे; संग. ४३० वीरमित्रोदये; संर. ८१८ राचरेत् (रेव च); संदी. ६२ (भागः २) स्मृत्यन्तरे.

¶ अनयोर्व्याख्यानमाश्वलायनवचने द्रष्टव्यम्।

(१) धप्र. ३७.

(२) संर. ८१८–८१९.

(३) आश्वस्मृ. १०।८१ चान्यच्च (वाऽन्यस्य); प्रपा. १२७; गभा. १५२ चान्यच्च (चान्यत्र); संप्र. १८२ चान्यच्च (चान्यत्तु); संम. ११ गर्भि (गुर्वि); सिन्धु. ८४१ गभावत्; विपा. २४३ (=) सादूर्ध्वं चान्यच्च वे (सात्पूर्वं चैवाप्यवे) : ३७० (भागः २); संकौ. ३४ न्मासाद् (दूर्ध्वं) चतुर्थपादो नास्ति; बाल. १।१० पृ. १६ संप्रवत् संमवच्च; संग. ४२९ संप्रवत्; संव. ८८ गभावत्, नारदः; संर. ८१८ चान्यच्च वेदवित् (नैव समाचरेत्) : ८१९ पाठः पूर्वस्थलीयवत्, उत्त.

(१) श्राद्धं श्राद्धभोजनमित्यर्थः । अन्यत्तु शवानुगमनादि । ¶ प्रपा. १२७

(२) वपनं क्षौरम् । मैथुनं गर्भिण्याम् । तीर्थे तीर्थयात्राम् । ‡ संप्र. १८३

(३) श्राद्धं श्राद्धभोजनमिति केचित् । अत्र प्रमाणं मृग्यम् । अन्यत् कालविधानव्याख्योक्तम् $ । सप्तमान्मासादिति सर्वत्र ज्ञेयम् । संम. ११

(४) अत्र केचित्– सप्तममासोत्तरं यो वपनादिनिषेधः स दोषातिशयार्थः । तेन तत्पूर्वमपि शक्तौ सत्यां वपनादिनिषेधपरिपालनमस्त्येवेत्याहुः । 'ऊर्ध्वं नैव समाचरेत्' इति वचनात् † सप्तममासात्पूर्वं कदाचिद्वपनादिकरणमस्तीति गम्यते । दक्षः– 'मासषट्के व्यतीते तु न कुर्यान्मौञ्जिबन्धनम् । अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत् ॥' इति । संस्कारदर्पणे सत्यव्रतः– 'ऋतुत्रये व्यतीते तु न कुर्यान्मौञ्जिबन्धनम् । अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत् ॥' इति । सङ्कटवशेन शक्ताशक्तपरतया वा व्यवस्था यथायथं बोध्या । तीर्थे तीर्थयात्रा । श्राद्धं श्राद्धभोजनमिति केचित् । पित्रोः क्षयाहश्राद्धादिकं तु सप्तममासादूर्ध्वमपि भवति, 'पित्रोः क्षयाहं दर्शं च गयाश्राद्धं महालयम् । ग्रहणान्वष्टकाश्राद्धे कुर्याद्गर्भवतीपतिः ॥' इति सत्यव्रतोक्तेः । एतच्च नित्यानां युगादिश्राद्धानामुपलक्षणम् । पिण्डयज्ञोऽपि भवत्येव, नित्यत्वात् । 'मुण्डनं पिण्डदानं च' इत्युदाहृतदक्षवाक्ये पिण्डदानशब्देन श्राद्धमुपलक्ष्यते इति मते श्राद्धस्यैव निषेधप्राप्तौ 'पित्रोः क्षयाहम्' इति सत्यव्रतवाक्येन नित्यश्राद्धानां प्रतिप्रसवः क्रियते । पिण्डदानशब्देन पिण्डदानमेव निषिध्यते इति मते पित्रोः क्षयाहादिश्राद्धेष्वपि पिण्डदाननिषेधः ।

---

¶ गभा., विपा., बाल. प्रपागतम् ।

‡ शेषं प्रपावत् । संकौ., संग. संप्रगतम् ।

$ कालविधानव्याख्यीयमिदं वचनम् 'पुराणम्' इत्यस्मिन् शीर्षके अस्माभिः संगृहीतम्, तदत्रानुसंधेयम् ।

† एवकारलब्धोऽयमर्थः । कदाचिदस्ति अशक्त्यादिनिमित्तकमस्ति, औत्सर्गिकं नास्तीत्यर्थः ।

(¶ न च– 'पिण्डनिर्वपणं कार्यं तस्यामपि नृसत्तम ।' इत्यान्वष्टक्यविषय एव गर्भिणीपतित्वप्रयुक्तो यः पिण्डदाननिषेधः प्राप्तः स नास्ति, इति निबन्धकार-

---

¶ कंसचिह्नान्तर्गतोऽयं ग्रन्थोऽस्मदादर्शपुस्तकसंपादकानामुपलब्धेषु चतुर्ष्वादर्शेष्वन्यतमे एवास्तीति तदीयपादटिप्पणीतोऽवगम्यते । तत्र 'इति केचित्' इत्यन्तो ग्रन्थोऽतिफल्गुत्वात्केनचित्प्रक्षिप्तः, 'वस्तुतस्तु' इत्यादिग्रन्थस्तु कंसपूर्वग्रन्थेनैव संगतत्वात् गोपीनाथभट्टोपज्ञमिति भाति । तदेवम्– 'एतन्मते' इत्यत्र प्रागुक्तं कंसबहिर्भूतम् 'पिण्डदानशब्देन पिण्डदानमेव निषिध्यते' इति मतमेव विवक्षणीयम्, कंसान्तर्गतग्रन्थे प्रकृतविषयकयत्किंचिन्मतस्यानुक्तत्वात् । अत एवानन्तरपूर्वं 'केचित्' इति पदं न विप्रतिपन्नपरम्, अपि तु पूर्वोक्ताक्षेपसमाधानोत्प्रेक्षितृविशेषपरमित्यभ्युपेयम् । अथवा 'वस्तुतस्तु' इत्यादिः 'यथाचारं व्यवस्था' इत्यन्तो ग्रन्थोऽपि विद्वन्मनोहरत्वाभावात्प्रक्षिप्तः स्यादिति संभावयामः । तत्र 'इति केचित्' इत्यन्तग्रन्थस्यातिफल्गुत्वमेवम्– 'कथं पिण्डदानप्राप्तिः ?' इत्याक्षेपस्य 'सांवत्सरिकादौ आचर्यमाणस्य पिण्डदानस्य कथं प्रामाणिकत्वम्' इत्यर्थश्चेत् स न साधुः, अत्र प्रसाधितस्य पिण्डदानस्य प्रकृतमतान्तरे पूर्वं सिद्धान्तितेन पिण्डदाननिषेधेन विरोधात् । किंच, आक्षेपविषयस्य पिण्डदानाचारस्यैवाग्रे पिण्डदानप्राप्तौ हेतूकरणमपि नोपपद्यते । अथ पूर्वं पिण्डदाननिषेधस्य सिद्धान्तिततत्वात् निषेधस्य च प्राप्तिपूर्वकत्वनियमात् 'निषेधोपजीव्या पिण्डदानप्राप्तिः कथम्' इत्याक्षेपतात्पर्यं चेत् तदतीवासाधु । तथाहि– प्रतिप्रसवो निषेधपूर्वकः निषेधश्च प्राप्तिपूर्वक इति वस्तुधर्ममनुसृत्य दक्षकृतगर्भिणीपतित्वप्रयुक्तपिण्डदाननिषेधमुपजीव्य आन्वष्टक्यविषये 'पिण्डनिर्वपणं०' इति प्रतिप्रसवः प्रवृत्त इति प्रथमतोऽङ्गीकृत्य तदनुपदमेव सांवत्सरिकादीनाम् 'पिण्डनिर्वपणं०' इतिवचनविषयत्वाभावात् तत्र कथं पिण्डदानप्राप्तिरित्याक्षेपेण 'पिण्डनिर्वपणं०' इतिवचनकृतप्राप्तिमुपजीव्य दक्षकृतनिषेधप्रवृत्तिमापादयता महान् स्वग्रन्थविरोधः संपादितः, स समाधानग्रन्थेन कृतमुद्र इव दृढीकृतः । किंचैवं गार्भिणीपतिकर्तृकपिण्डदाननिषेधे शास्त्रार्थपर्यवसानात् 'सांवत्सरिकादिषु... बहुशो दृष्टत्वाच्च' इति हेतुरपि विरुद्धः । 'वस्तुतस्तु' इत्यादिग्रन्थस्य विद्वन्मनोहरत्वाभाव एवम्– अत्र बहु वक्तव्यमस्ति, विस्तरभिया तु किंचिदेवोच्यते । 'श्राद्धकरणस्यैतस्मादेव वचनात्प्राप्तत्वात्' इत्यत्र वचनशब्दविवक्षितेनाऽऽश्वलायन-

लेखनादान्वष्टक्यव्यतिरिक्तसांवत्सरिकादिस्थले कथं पिण्डदानप्राप्तिरिति वाच्यम्, अपिशब्देन सांवत्सरिकादीनामपि संगृहीतत्वेन तत्रापि तत्प्राप्तिसंभवात् । न चापिशब्दस्य पिण्डनिर्वपणशब्देऽन्वयात् कथमेतदिति वाच्यम्, संनिहितपदान्वयसंभवे व्यवहितान्वयकल्पनस्यानुचितत्वात्, सांवत्सरिकादिषु गर्भिणीपतिकर्तृकपिण्डदानाचारस्य बहुशो दृष्टत्वाच्च, इति केचित् । वस्तुतस्तु– एतन्मतेऽपि क्षयाहादिश्राद्धेष्वपि पिण्डनिषेधो नैवास्ति ।) 'श्राद्धं च सप्तमान्मासादूर्ध्वं नैव समाचरेत् ।' इत्याश्वलायनवचनस्थश्राद्धशब्दः श्राद्धभोजनपर इति मते श्राद्धकरणस्यैतस्मादेव वचनात् प्राप्तत्वात् 'पित्रोः क्षयाहम्' इति वचनं सपिण्डकत्वविधानार्थं द्रष्टव्यम् । यथाचारं व्यवस्था । संर. ८१८–८१९

## क्रतुः

[1]नोदन्वतोऽम्भसि स्नायाच्च च श्मश्रुवापि कर्तयेत् ।
अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम् ॥

## शौनकः

[1]केशान्मासत्रयादूर्ध्वं धारयेद्गर्भिणीपतिः ।
जायायां तु प्रसूतायां दशमेऽहनि वापयेत् ॥

## गालवः

[2]दहनं वपनं चैव चौलं वै गिरिरोहणम् ।
नाव आरोहणं चैव वर्जयेद्गर्भिणीपतिः ॥

[3]प्रव्यक्तगर्भापतिरब्धियानं
मृतस्य वाहं क्षुरकर्म सङ्गम् ।
तस्यां तु यत्नेन गयादितीर्थे
यागादिकं वास्तुविधिं न कुर्यात् ॥

आदिशब्देन व्रतोद्यापनादीति शुद्धिदर्पणे ।

संर. ८१८

---

स्य वा यथाकथंचिद्क्षस्य वा पिण्डदानशब्दस्य श्राद्धानुपलक्षकत्वमते गर्भिणीपतिविषयकविशेषवचनेन प्राप्तिर्नोपपद्यते । न तेन श्राद्धकरणस्य प्राप्तिः क्रियते, अपि तु केवलं श्राद्धं न निषिध्यते । श्राद्धप्राप्तिस्तु गर्भिणीपतितदितरसाधारणश्राद्धविधायकसामान्यवचनेनैव । अत एव समानविषयकवचनेन श्राद्धप्राप्त्यभावात् 'पित्रोः क्षयाहं०' इत्यस्य श्राद्धप्रापकत्वेन नानुवादत्वापत्तिः, येन तस्य सपिण्डकत्वपरत्वमभ्युपेयम् । नापि सामान्यवचनेन श्राद्धप्राप्तावप्युक्तविशेषवचनस्यानुवादत्वापत्तिः, परिसंख्यात्वेनेतरव्यावृत्तिपरत्वस्यैव स्वीकर्तुमुचितत्वात् । वस्तुतस्तु समानविषयकभिन्नकर्तृकस्मृतिवचनेषु अन्यतमस्य विधायकत्वं तदितरेषामनुवादत्वमिति कल्पनैव न संभवति, तत्तत्स्मृतित्वावच्छेदेनावान्तरशास्त्रभेदात्, स्मृतीनां स्मृतिमूलकत्वापत्तेः, विनिगमनाविरहात्कस्यचिदपि विधायकत्वासिद्धेश्च । अत एव सामान्यवचनेन श्राद्धप्राप्तिरपि यत्स्मृतिशास्त्रीयं विशेषवचनं तत्स्मृतिशास्त्रीयेनैव । तच्च सामान्यवचनं प्रत्यक्षं वा स्यादनुमितं वेत्यन्यदेतत् ।

(१) **संसौ.** ९१ पूर्वार्धे ( उदन्वतोऽम्भसि स्नानं नखकेशनिकृन्तनम् । ) कुर्वन्न ( कुर्याद ) ज्योतिर्निबन्धे ; **संप्र.** १८३ ; **मुक्ता.** ४६७ ( नोदन्वदम्भसि स्नायान्नखश्मश्रुनिकृन्तनम् । अन्तर्वत्न्याः पतिः कुर्वन् व्रजते नरकं ध्रुवम् ॥ ) चन्द्रिकायाम् ; **सिन्धु.** ८४० ( उदन्वतोऽम्भसि स्नानं नखकेशादिकर्तनम् । अन्तर्वत्न्याः पतिः कुर्यान्न प्रजा जायते ध्रुवम् ॥ ) मिताक्षरायाम् ; **ज्योनि.** ११९ (=) (उदन्वतोऽम्भसि स्नानं नखकेशनिकृन्तनम् । नान्तर्वत्न्याः पतिः कुर्यादप्रजो भवति ध्रुवम् ॥ ) ; **संकौ.** ३४ ; **संग.** ६२१ (उदन्वतोऽम्भसि स्नानं न स्वकेशनिकृन्तनम् । विदेशगमनं चैव न कुर्याद् गुर्विणीपतिः ॥ ) ज्योतिर्निबन्धे ; **संर.** ८१७ प्रजा ( प्रजो ) ; **संबी.** ६२ ( भागः २ ).

(१) **संकौ.** ३४.

(२) **गभा.** १५२ रत्नसंग्रहे ; **संसौ.** ४८ नाव आ ( नावामा ) वर्जये ( न कुर्या ) ; **संम.** ११ गर्भि ( गुर्वि ) ; **सिन्धु.** ८४२ ; **संकौ.** ३४ संग्रहे ; **बाल.** १।१० पृ. १६ संमवत् ; **संर.** ८१७ द्वितीयपादे ( पर्वतारोहणं तथा ) संग्रहे.

(३) **गभा.** १५२ कर्म स (कर्मस) पृ., रत्नसंग्रहे ; **संम.** १२ गभावत् ; **सिन्धु.** ८४२ (=) गभावत् ; **विपा.** २४४ (=) तस्यां तु ( तस्या नु ) ; **बाल.** १।१० पृ. १६ विपावत्, ज्योतिःशास्त्रे ; **संर.** ८१८ तस्यां तु ( तथैव ).

## स्मृत्यन्तरम्

[1]सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् ।
विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः ॥

प्रेतवाहनमित्यनेन प्रेतविधानमप्युपलक्ष्यते ।

संर. ८१८

§[2]अन्तर्वत्न्यां तु जायायां तीर्थे क्षौरं न कारयेत् ।
प्रेतदाहादिकं चैव सीमन्तोन्नयनादनु ॥

क्षौरं क्षुरसाध्यं कर्म, तदेव वपनं मुण्डनं चोच्यते ।

संग. ४३०

[3]षष्ठाब्दे षोडशाब्दे च विवाहाब्दे तथैव च ।
अन्तर्वत्न्यां च जायायां क्षौरकर्म विवर्जयेत् ॥

[4]तृतीयमासादारभ्य न कुर्याद्गर्भिणीपतिः ।
क्षौरं शवानुगमनं दूरयात्रां प्रतिग्रहम् ।
श्राद्धं च सागरस्नानं प्रेतनिर्हरणं तथा ॥

[5]गृहारम्भप्रवेशौ च देवतास्थापनं तथा ।
केशश्मश्रुनखादींस्तु धारयेद्गर्भिणीपतिः ॥

---

§ संप्रव्याख्यानं हारीतवचने संदीव्याख्यानं च 'क्षौरं नैमित्तिकम्' इति दक्षवचने द्रष्टव्यम् ।

(१) संसौ. ९१ वाह ( दाह ) धर्मशास्त्रे ; संप्र. १८३ ; विपा. २४३ (=) ; ज्योनि. ११९ ; संको. ३४ ; बाल. १।१० पृ. १६ पूर्वार्धे ( प्रेतवाहोदधिस्नानं वपनं पिण्डपातनम् । ) गर्भि ( गुर्वि ) संग्रहे ; संग. ४२९ वीरमित्रोदये ; संव. ८८ (=) ; संर. ८१८.

(२) संसौ. ९१ धर्मशास्त्रे ; संप्र. १८४ ; ज्योनि. १२० दाहा ( वाहा ) ; संग. ४३० (=) ; संदी. ६२ ( भागः २ ) (=) तु ( च ) पू.

(३) गौमि. ९।८ ; संसौ. ९१ ( षष्ठेऽब्दे षोडशेऽब्दे वा विवाहाब्दे तथैव च । अन्तर्वत्न्यां तु जायायां नेष्यते केशवापनम् ।। ) ज्योतिर्निबन्धे ; ज्योनि. ११८ (=) (षष्ठेऽब्दे षोडशे वर्षे विवाहाब्दे तथैव च । अन्तर्वत्न्यां तु जायायां नेष्यते केशवापनम् ।।) ; बाल. १।१३१ पृ. ३९२.

(४) मुक्ता. ४६६ ; आन. २१४.

(५) मुक्ता. ४६६ ; आन. २१४ दींस्तु ( दींश्च ).

[1]गर्भिण्यामपि भार्यायां विवाहेऽप्यथवा व्रते ।
सपिताऽपि वपेत् केशान् गौतम्यां सिंहगे गुरौ ॥

विवाह इत्यत्र निवृत्तेऽपीति शेषः । एवं व्रत इत्यत्रापि । गौतम्यामिति गौतम्यसंनिहितदेशनिवृत्त्यर्थम् । सिंहगे गुराविति तीर्थयात्रान्तरोपलक्षणम्, 'विवाहे व्रतबन्धे च गर्भिणीपतिरेव च । मुण्डनं सर्वतीर्थेषु कुर्यादेवाविचारयन् ॥' इति स्मृतिदर्पणधृतसंग्रहवचनसंवादात् ।

संर. ८१८

## पुराणम्

[2]केशान् मासत्रयादूर्ध्वं गर्भवान् वापयेद्यदि ।
गर्भध्वंसेन तत् तुल्यं ब्रह्महत्यासमं भवेत् ॥

[3]क्षौरं शवानुगमनं नखकृन्तनं च
युद्धं च वास्तुकरणं त्वतिदूरयानम् ।
उद्वाहमम्बुधिजलस्नपनोपयोग-
मायुःक्षयं भवति गर्भिणिकापतीनाम् ॥

---

(१) संर. ८१८. (२) मुक्ता. ४६६.

(३) प्रपा. १२७ कृन्त ( कर्त ) कालविधानव्याख्यायाम् ; गभा. १५२ शवानु ( तथाऽनु ) युद्धं च वा ( युद्धादिवा ) पू., मुहूर्तदीपिकायाम् ; संप्र. १८३ स्नपनो ( स्पृशनो) क्षयं (क्षयो) कालविधाने ; मुक्ता. ४६६ युद्धं ( श्राद्धं ) त्वति ( ह्यति ) मम्बुधि (वारिधि) ; संम. ११ युद्धं (श्राद्धं) लस्नपनोपयोग (ले गमनं तथैव ) तृतीयपादे 'उद्वाहमौपनयनं जलधेश्च गाह' इत्यपि पाठान्तरम्, कालविधानव्याख्यायाम् ; सिन्धु. ८४१–८४२ युद्धं च ( युद्धादि ) उत्तरार्धे ( उद्वाहमौपनयनं जलधेश्च गाहमायुःक्षयार्थमिति गर्भिणिकापतीनाम् ।। ) कालविधाने मुहूर्तदीपिकायां च ; विपा. २४३ लस्नपनोपयोग ( लस्य रुषोपयोग) क्षयं ( क्षयो ) मुहूर्तदीपिकायाम् ; संको. ३४ सर्वं संप्रवत् ; बाल. १।१० पृ. ३२ तृतीयपादे ( औद्वाहमौपनयनं पयसोऽवगाह ) उत्त., धर्मप्रकाशे ; संर. ८१७ मम्बु...क्षयं ( मौपनयनं जलधेर्वगाह आयुष्क्षयो ) कालविधाने.

(१) 'क्षौरं तथाऽनु ...... त्वतिदूरयानम्' इति । नो भवेदिति शेषः । गभा. १५२

(२) उद्वाहः स्वस्य, न कन्यापुत्रयोः, क्षौरादीनां स्वक्रियाणामेव साहचर्यात् । उपयोगः पानम् । संप्र. १८४

(३) आयुःक्षयं तत्साधनम् । संम. १२

(४) क्षौरं वपनम्, तच्चात्र कर्तनस्याप्युपलक्षणम्, 'नोदन्वतोऽम्भसि स्नायान्न च श्मश्रूवादि कर्तयेत् । अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम् ॥' इति क्रतुस्मरणात् । यत्तु 'वपनस्य निषेधेऽपि कर्तनं च विधीयते ।' इति स्मृत्यन्तरवचनम्, तत् गर्भिणीपति-व्यतिरिक्तानां जीवत्पितृकादीनां यो वपननिषेधः तत्र कर्तनविधानपरम् । संकौ. ३४

(५) तत्रोद्वाहं स्वस्य च अन्यस्य चापत्यादेः । उपनयनं त्वपत्यादेरेव । तत्रापि चौल इव नायं नियमो यदुपनेयस्य मातुरेव गर्भे निषेधः इति, किंतु उपनेतु-र्भार्यामात्रस्य गर्भे इति । बाल. १।१२ पृ. ३२

(६) वगाह इत्यत्र अवेत्युपसर्गावयवाकारस्य भागुरि-मतेन लोपः । † संर. ८१७

## अनिर्दिष्टकर्तृकवचनानि

'वाहनं दहनं चैव वपनं सिन्धुदर्शनम् ।
पर्वतारोहणं चैव न कुर्याद्गर्भिणीपतिः ॥

'मासात्तु पञ्चमादूर्ध्वं निन्दिता बहुदोषकृत् ।
पञ्चमासात् परा त्याज्या कुर्वन्ति(? र्वती) मृत्युमेव हि ॥

'पित्रर्थं पञ्चयज्ञार्थं पाकं कर्तुं न साऽर्हति ॥

'केशान्मासत्रयादूर्ध्वं धारयेद्गर्भवान् द्विजः ।
यज्वनोः पर्वणोः क्षौरं धारणं त्वाहिताहते ॥

† शेषं संकौवत् ।

(१) धप्र. ३७.

(२) धप्र. ३७; बाल. १।१० पृ. १५ उत्तरार्धे (गुर्विणी पञ्चमादूर्ध्वं दैवे पित्र्ये च कर्मणि ॥).

(३) बाल. १।१० पृ. १५.

(४) बाल. १।१० पृ. १६.

विवाहमौञ्जीचूडासु वर्षमर्धं तदर्धकम् ।
अन्तर्वत्न्यां च जायायां नेष्यते केशवापनम् ॥

*'पिण्डनिर्वपणं कार्यं तस्यामपि नृसत्तम ॥

## संग्रहः

'गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोचितम् ।
सूते चिरायुषं पुत्रमन्यथा दोषमर्हति ॥

'विवाहे व्रतबन्धे च गर्भिणीपतिरेव च ।
मुण्डनं सर्वतीर्थेषु कुर्यादेवाविचारयन् ॥

## कालविधानव्याख्यायाम्

'क्षौरं च सागरस्नानं न कुर्याद्गर्भिणीपतिः ।
कृतवान् यदि चेत्तस्याः प्रजा भवति न ध्रुवम् ॥

## स्मृतिचिन्तामणौ

'पुंसो भार्या गर्भिणी यस्य चासौ
सूनोश्चौलं क्षौरकर्माऽऽत्मनश्च ।
गेहारम्भं स्तम्भसंस्थापनं च
वार्धिस्नानं नैव कुर्याच्च यात्राम् ॥

वार्धिः समुद्रः । संर. ८१७

## मुहूर्तचिन्तामणिः

'शववाहतीर्थगमसिन्धुमज्जनं
क्षुरमाचरेन्न खलु गर्भिणीपतिः ॥

* संख्याख्यानम् आश्वलायनवचने (सं. का. पृ. २५२५) द्रष्टव्यम् ।

(१) संर. ८१९.

(२) प्रपा. १२७ तं द्रव्यं (तद्रव्यं); संप्र. १८२; विपा. २४३ याज्ञवल्क्यः; संग. ४२९; संर. ८१७ (=).

(३) संर. ८१८.

(४) प्रपा. १२७.

(५) धप्र. ३७ (=) नैव कुर्यान्च यात्राम् (दूरयात्रां न कुर्यात्); संर. ८१७ चासौ (चेत् स्यात्) रम्भं (रम्भः).

(६) मुचि. ५।३५; संव. ८८.

गर्भिणी गर्भवती, तस्याः पतिः भर्ता, शववाहं मृतकवहनम्, तीर्थगमं तीर्थयात्राम्, उपलक्षणत्वाद्विदेशगमनमपि, सिन्धुमज्जनं समुद्रस्नानम्, क्षुरं क्षुरकर्म, एतानि कर्माणि न आचरेत् न कुर्यात्। अयं च क्षौरादिनिषेधो गुर्विणीपतेः सप्तममासादूर्ध्वम्, न प्राक्।
¶ पीटी.

¶ संव. पीटीगतम्।

## रेणुकारिकाः

[1]गर्भिण्या यत् प्रियं मासादूर्ध्वमन्नादिकं भवेत्।
तस्यै देयं प्रयत्नेन वीर्यवन्तं चिरायुषम्॥

पुत्रं जनयतीत्युक्तं सुश्रुतेनान्यथा मृतिः।
याज्ञवल्कीयवचसा वैरूप्यं तस्य वा भवेत्॥

(१) रेका. ७०-७१ पृ. ६.

——०——

# पुंसवनम्

## वेदाः

पुंसवनस्तुतिः

[1]शमीमश्वत्थ आरूढस्तत्र पुंसुवनं कृतम् ।
तद्वै पुत्रस्य वेदनं तत्स्त्रीष्वा भरामसि ॥

शमीम् एतत्संज्ञं वृक्षम् (अश्वत्थः) अश्वत्थाख्यो वृक्षः आरूढः अधिरूढः । अग्निदाहशमनहेतुर्वृक्षः शमी । ‘प्रजापतिरग्निमसृजत । सोऽबिभेत्प्र मा धक्ष्यतीति । तं शम्याऽशमयत् । तच्छम्यै शमित्वम् ।’ (तैब्रा. १।१।३।११) इति । स च अग्निः अश्वो भूत्वा यस्मिन् वृक्षे पुरा संवत्सरमवात्सीत् स वृक्षः अश्वत्थः । ‘सुपि स्थः’ (पा.३।२।४) इति अश्वशब्दोपपदात् तिष्ठतेः कप्रत्ययः । पृषोदरादिः । श्रूयते हि– ‘अग्निर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा । सोऽश्वत्थे संवत्सरमतिष्ठत् । तदश्वत्थस्याश्वत्थत्वम् ।’ (तैब्रा. १।१।३।९) इति । तदयमर्थः– शमी स्त्री, अश्वत्थः पुमान् । स च अग्निलक्षणं पुत्रमुत्पादयितुं तामधिरूढः तस्या उपरि उत्पन्न इत्यर्थः । ईदृशादश्वत्थादग्निमन्थनार्थमरण्योराहरणम् । तथा च श्रुतम्– ‘शमीगर्भादग्निं मन्थति । एषा वा अग्नेर्यज्ञिया तनूः । तामेवास्मै जनयति ।’ (तैब्रा. १।१।९।१) इति । तत्र तादृशे अश्वत्थे पुंसवनं पुमान् सूयते येन कर्मणा तत् पुंसवनम्, तत् कृतम् अनुष्ठितम् । तद्वै तत्खलु पुत्रस्य वेदनं लम्भकम् । तत् पुत्रजननिमित्तं कर्म स्त्रीषु आभरामसि आहरामः संपादयामः । असा.

(१) असं. ६।११।१; कौसू. ३५।८ प्रतीकमात्रम् .

[1]पुंसि वै रेतो भवति तत्स्त्रियामनु षिच्यते ।
तद्वै पुत्रस्य वेदनं तत्प्रजापतिरब्रवीत् ॥

पुंसि वै पुरुषे खलु प्रथमं बीजभूतं रेत आश्रितं भवति । तत् गर्भाधानकर्मणा स्त्रियामनु सिच्यते गर्भाशये प्रक्षिप्यते । तत्खलु निषिक्तं रेतः पुत्रस्य वेदनम् उत्पत्स्यमानस्य पुत्रस्य लम्भकम् । ‘पुरुषे ह वा अयमादितो गर्भो भवति’ (ऐआ. २।५।१) इत्यादिकमैतरेयकमत्र द्रष्टव्यम् । तदेतत् पुंसवनं कर्म प्रजापतिः प्रजानां स्रष्टा अब्रवीत् पुत्रजननोपायत्वेन लोके प्रकाशितवानित्यर्थः । असा.

[2]प्रजापतिरनुमतिः सिनीवाल्यचीक्लृपत् ।
स्त्रैषूयमन्यत्र दधत्पुमांसमु दधदिह ॥

प्रजापतिः संवत्सरात्मकः अनुमतिः पौर्णमासीदेवता सिनीवाली अमावास्यादेवता च निषिक्तं गर्भाशयस्थं रेतः अचीक्लृपत् हस्तपादाद्यवयवकल्पनया समर्थमकार्षीत् । ‘कृपू सामर्थ्ये’ इत्यस्माल्लुङि चङि रूपम् । किं कुर्वन् ? स्त्रैसूयं स्त्रीप्रसवसंबन्धि निमित्तमन्यत्र अस्मत्तो व्यतिरिक्ते स्थाने दधत् स्थापयन्, इह अस्मासु पुमांसमु पुमपत्यमेव दधत् कुर्वन् । संवत्सरकालावसाने समर्थमकार्षीदित्यर्थः । असा.

(१) असं. ६।११।२; कौगृ. १।१९।८ रेतो भवति (पुरुषे रेतस्) षिच्यते (षिञ्चतु) तृतीयचरणे (तथा तदब्रवीद्धाता).

(२) असं. ६।११।३; कौसू. १९।१४,३५।१७ प्रतीकमात्रम् .

पुंसवनस्य गर्भमासात्मकः कालः, प्रथमगर्भे एव कर्तव्यं प्रतिगर्भं वा कर्तव्यमिति विचारः, पुंसवनस्य नित्यत्वम्, पुंसवनोत्तरं वर्ज्यानि

## बौधायनगृह्यसूत्रम्

**[1]विज्ञाते गर्भे तिष्ये पुंसवनम् ॥**

## बौधायनगृह्यपरिभाषासूत्रम्

**[2]पुंसवनं विष्णव आहुतीश्च नित्याः ॥**

## आश्वलायनगृह्यसूत्रम्

**[3]‡उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च ॥**
**[4]यदि नाधीयात् तृतीये गर्भमासे ॥**

(१) पुमान् येन संपद्यते लब्धो गर्भः तत् पुंसवनं नाम। तदप्युपनिषद्येव व्याख्यातम्। १।१३।१

तस्या उत्सन्नत्वात् यदि तां नाधीयात् तत एवं कुर्यादित्याह– यदीति। ताम् उपनिषदं यदि नाधीयात्ततस्तस्या अपाठे किं कर्तव्यम्? उत्तरं कर्म। किं पुनस्तदित्युच्यते– तृतीये गर्भमासे प्रसूतेन प्राशयेत्। त्रयाणां पूरणः तृतीयः। तस्मिन् तृतीये गर्भमासे अप्येतत्कर्म भवति यद्वक्ष्यामः 'तिष्येणोपोषितायाः' इति। १।१३।२

तृतीये गर्भमासे इति द्वे कर्मणी विधीयेते पुंसवनमनवलोभनं च। देभा. १।१३।७

(२) पुमान् लब्धो जायते येन तत् पुंसवनम्। १।१३।१

गर्भसहितो मासो गर्भमासः। * १।१३।२

इदं कर्म प्रतिगर्भमावर्तते, गर्भसंस्कारत्वात्। प्रथमगर्भे तृतीयमासि यदि गर्भो न विज्ञातस्तदा चतुर्थे कुर्यात्। 'विज्ञाते गर्भे तिष्ये पुंसवनम्' 'तत्तृतीये मास्यन्यत्र गृष्टेः' इति च स्मरणात्। गृष्टिः प्रथमगर्भः। पञ्चमे मास्यङ्गनिष्पत्तिर्भवति। स्वयमेव चास्य कर्ता, 'माऽहं पौत्रम्' इति लिङ्गात्। तदभावे देवरः। गानावृ. १।१३।७

(३) यदि नाधीयात्। व्यत्ययेन परस्मैपदम्, स्मरणार्थो वा धातुः। पुंसवनमनवलोभनं चोच्यते। तत् तृतीये गर्भमासे कर्तव्यम्। ¶ अना.

## आश्वलायनगृह्यपरिशिष्टम्

**[1]उक्तं तृतीये मासि पुंसवनम् ॥**

## कौषीतकिगृह्यसूत्रम्

**[2]तृतीये मासि पुंसवनम् ॥**

एवं गर्भिणीभूतायां वधूकायां तृतीये मासि पुंसवनं भवति तद्वक्ष्यामः। कौगृसं.

## आपस्तम्बगृह्यसूत्रम्

**[3]पुंसुवनं व्यक्ते गर्भे तिष्येण ॥**

---

‡ गर्भाधानविधिप्रकरणेऽपि (सं. का. पृ. २३४३) व्याख्यानानि द्रष्टव्यानि।

(१) बौगृ. १।९।१.

(२) बौगृप. १।१०।१३.

(३) आगृ. १।१३।१. शेषस्थलादिनिर्देशो गर्भाधानविधिप्रकरणे (सं. का. पृ. २३४३) द्रष्टव्यः.

(४) आगृ. १।१३।२; अप. १।११–१३ पृ. २५ गर्भमासे (गर्भे मासे); प्रपा. ९७ (यदि नाधीयात्) एतावदेव, मूलमुच्छिन्नम्, व्याख्यानमस्ति: ११४ (गर्भे मासे) एतावदेव; धप्र. ३६; विपा. ९४ (यदि नाधीयात्०); संको. ५५ विपावत्.

* प्रपा. गार्ग्यनारायणवृत्तेरनुवादः।

¶ शेषं देभागतम्।

(१) व्रक. ८२; संको. ५८ (मासि०).

(२) कौगृ. १।२०।१; अप. १।११–१३ पृ. २६ पुंसवनम् (सीमन्तम्); व्रक. ८२.

(३) आपगृ. १४।९; मुक्का. ७८ पुंसु (पुंस); आन. १४६ (तिष्येण०); बाल. १।११–१२ पृ. १४ मुक्कावत्.

(१) पुमान् येन सूयते तत् पुंसुवनं नाम कर्म। उवङादेशश्छान्दसः। मन्त्रदर्शनात् 'पुंसुवनमसि' इति। आश्वलायनस्तु गुणमेव प्रायुङ्क्त। तत् व्यक्ते गर्भे कर्तव्यम्। गर्भव्यक्तिश्च तृतीये चतुर्थे वा मासि। यदाऽपि चतुर्थे तदा सीमन्तात् पूर्वमेव पुंसवनम्, निमित्तस्य पूर्वत्वात्। पश्चादुपदेशस्य तु प्रयोजनं वक्ष्यामः। † अनाकुला.

(२) व्यक्ते गर्भे अस्ति गर्भ इति निश्चिते। यदि पुंसवनं चतुर्थे स्यात् तदा पूर्वं सीमन्तं कृत्वैव। कुत एतत्? पुंसवने पश्चात्क्रियमाणेऽपि चोदितकालानतिक्रमात्, पश्चान्मन्त्राम्नानसूत्रोपदेशयोरेवंक्रमार्थत्वाच्च।

केचित् तृतीयवच्चतुर्थेऽपि सीमन्तवत्प्रथमगर्भ एव, न तु प्रतिगर्भम्, पिष्टपेषणन्यायादेव। एतच्च 'पुमांसं जनयति' इत्यत्र विवेचयिष्यते। ¶ ताद.

[1]पुमांसं जनयति ॥

(१) एवमनेन कर्मणा संस्कृता स्त्री पुमांसं जनयति। केचिदर्थवादमिदं मन्यन्ते, फलविधौ कामसंयोगेन क्रियाया अनित्यत्वप्रसङ्गात्। यद्यर्थवादः प्रतिगर्भमावृत्तिप्रसङ्गः। एवं तर्हि 'प्रथमे गर्भे' इत्यनुवर्तते। एवमर्थमेव चास्य पश्चादुपदेशः। व्यक्तं चैतत् छन्दोगानाम्— 'प्रथमे गर्भे तृतीये मासि पुंसवनम्' (खागृ. २।२) इति। अन्ये फलविधिं मन्यन्ते। तत्र च 'एष वा अनृणो यः पुत्री' (तैसं. ६।३।१) इति वचनात् पुत्रस्य सकृदुत्पादनं नित्यमिति यावदेकः पुत्र उत्पद्येत तावद्गर्भेषु भवति। ऊर्ध्वं तु पुत्रेच्छायां सत्यां भवति, दुहितुरीप्सायां न भवति। प्रथमग्रहणं च नानुवर्तते, पुनर्गर्भग्रहणात्। पुंसवनस्य तु पश्चादुपदेशो यथा(? यदा) चतुर्थे मासि तत् क्रियते तस्य पश्चात् प्रयोगार्थं इति। † अनाकुला.

(२) कर्मणाऽनेन संस्कृता अन्तर्वत्नी पुमांसं जनयतीत्यर्थवादः, नित्यत्वात् पुंसवनस्य। अथवा फलम्, सूत्रकारेणोपदिष्टत्वात्, यथा 'सहस्रं तेन कामदुघोऽवरुन्धे' इति। फलपक्षेऽपि 'एष वा अनृणो यः पुत्री' इत्यादिवचनैः सकृदपि पुत्रोत्पादनस्य अवश्यकर्तव्यत्वात्, तदङ्गं पुंसवनं प्रथमे गर्भे कर्तव्यमेव। तत ऊर्ध्वं तु यत्र यत्र गर्भे पुत्रेप्सा तत्र तत्र कर्तव्यम्, नान्यत्र। यस्त्वतिक्रान्तचोदनः स्त्रीरेव जनयेयमिति कामयते तस्य सकृदपि न भवति। अन्ये तु 'पुमांसं जनयति' इत्येतद्वचनं गर्भे गर्भेऽस्य कर्तव्यतापरमिति। ताद.

## हिरण्यकेशिगृह्यसूत्रम्

[1]अथातः पुंसवनम् ॥

(१) अथ प्राचीनं काम्यस्यापि संस्कारत्वान्नित्यत्वार्थम्। मातृद.

(२) सीमन्तोत्तरं पुंसवनकथनं तु कालानित्यत्वसूचनार्थं प्रतिगर्भमावृत्तिसिद्ध्यर्थं च। संर. ८११

तृतीये मासि ॥

तृतीयमासे गर्भस्य। मातृद.

## भारद्वाजगृह्यसूत्रम्

[2]अथ पुंसवनं तृतीये मासि चतुर्थादौ वा ॥

## काठकगृह्यसूत्रम्

[3]अथ पुंसवनम् ॥

अथेत्यानन्तर्ये सीमन्तोन्नयनानन्तरं पुंसवनसंज्ञकं गर्भसंस्कारकर्म कर्तव्यमिति। † देव.

भूयिष्ठगतेषु गर्भमासेषु ॥

(१) 'दशमे मासि सूतवे' इति श्रुतेः दर्शनाच्च दश गर्भमासाः। तत्र पञ्च अर्धभागः, षट् भूयांसः, सप्त भूयिष्ठाः। भूयिष्ठः सप्तमः गतो येषु तेषु गर्भमासेषु सत्सु। अष्टमे मासि शिष्टाचारात्। ‡ देव.

---

† मुक्ता., आन. अनाकुलागतम्।

¶ शेषं अनाकुलागतम्।

(१) आपगृ. १४।१२; मुक्ता. ७८; आन. १४६.

† आदित्य. देवगतम्।

(१) हिगृ. २।१।४–५; संर. ८११.

(२) भागृ. १।२२. (३) कागृ. ३२।१–२.

( २ ) पुंसवनमन्यशाखासु तृतीये गर्भमासे पुरा गर्भस्पन्दनादुक्तम् । लौगाक्षिस्तु भूयिष्ठगतेष्वाह । ' यदा पुंसा नक्षत्रेण चन्द्रमा युज्येत तदा पुंसवनम् ' इति गृह्यान्तरम् । सप्तमेऽष्टमे वा पुंसवनमिति सदाचारः ।

ब्राह्म.

## वाराहगृह्यसूत्रम्

[1]अथास्यास्तृतीये गर्भमासे ॥

## आग्निवेश्यगृह्यसूत्रम्

[2]अथातः पुंसवनम् । तृतीयमासि ॥

## पारस्करगृह्यसूत्रम्

[3]अथ पुंसवनम् ॥

[4]पुरा स्पन्दत इति मासे द्वितीये तृतीये वा ॥

( १ ) पुंसवनमिति गर्भसंस्कारकर्मणो नामधेयम्, तच्च पुरा गर्भस्पन्दनाद्भवति मासे द्वितीये तृतीये वा ।

कभा.

( २ ) अथेति गर्भे धृते । पुंसवनमिति गर्भसंस्कारकर्मणो नामधेयम् । तच्च स्पन्दते पुरा स्पन्दिष्यते । ' यावत्पुरानिपातयोर्लट् ' (पा. सू. ३।३।४) इति भविष्यदर्थे वर्तमानप्रयोगः । पुरा गर्भस्पन्दनात् भवतीति हेतोः शुद्धे द्वितीये वा तृतीये मासे गर्भाधानात् ।

$ जभा.

( ३ ) प्रथमे मासे वा ( पूर्णे ? ) भवति द्वितीये वा तृतीये वेति भर्तृयज्ञः । तथा हेमाद्रौ यमः– ' प्रथमे मासि द्वितीये वा तृतीये वा...... ' इति । गर्भसंस्कारत्वात् प्रतिगर्भमावर्तनीयमेतत् । तथा कारिकायाम्– ' गर्भसंस्कार एवायमिति कर्कस्य संमतिः । अतस्तद्गर्भसंस्काराद्गर्भे गर्भे प्रयुज्यते ॥ ' इति । बह्वृचकारिकायामप्येवम् । कालातिक्रमे स्पन्दितेऽपि कार्यमेव । तदुक्तं कारिकायाम्– ' एतदेव पुरा गर्भचलनादकृतं यदि । सीमन्तात्प्राग्विधातव्यं स्पन्दितेऽपि बृहस्पतिः ॥ ' इति ।

§ गभा.

(४) एवं गर्भे जाते इदानीं तत्संस्कारकं कर्माऽऽह– अथ पुंसवनम् । उच्यते इति शेषः । केचित्तु गर्भिण्या एव संस्कारकं पुंसवनमित्याहुः । चलनप्राक्त्वस्यानियतत्वादिदानीं नियतं समयमाह– मास इति । गर्भोत्पत्त्यवधिकं मासनिष्ठद्वितीयत्वादि । चलनं तु सप्तमे । तथा च यास्कः– ' सप्तमे चलनसमर्थो भवति ' । अत एव तत्प्राक्त्वमननुगतम् ।

¶ विभा.

## गोभिलगृह्यसूत्रम्

[1]तृतीयस्य गर्भमासस्याऽऽदिसदेशे पुंसवनस्य कालः ॥

( १ ) गर्भे सति तृतीयमासस्य आदिमदेशे दशमदिनाभ्यन्तरे ज्योतिःशास्त्रोक्तकाले पुंसवनं कार्यम् ।

संत. ९०९

( २ ) गर्भो यस्मिन् मासि जायते सोऽयं गर्भमासः, तस्य यस्तृतीयो मासः । संबन्धलक्षणा षष्ठी । तृतीयो यो गर्भमासः । गर्भादारभ्य यस्तृतीय इति वा व्याख्येयम् । तस्य आदिसदेशे आदिसमीपप्रदेशे प्रथमे तृतीयभागे इत्यर्थः । एतस्मिन् काले यत् पुण्यमहः तत् पुंसवनस्य कालः । तथा च पारस्करोऽपि– ' मासि द्वितीये तृतीये वाऽऽपूर्यमाणपक्षे पुण्याहे । यदहः पुंसा नक्षत्रेण चन्द्रमा युज्यते ' इति । अत्र द्वितीये इति वाजसनेयिमात्रपरमिति मुरारिमिश्राः । आपूर्यमाणपक्षे

---

$ हभा. जभावत् ।

(१) वागृ. १९. (२) आग्निगृ. २।१।१.

(३) पागृ. १।१४।१; विश्व. १।११; वीक. ३।७६–७८ ( अथ० ); विपा. ९५.

(४) पागृ. १।१४।२; विश्व. १।११ ( पुरा स्पन्दनात् ) एतावदेव; स्मृच. १७ ( पुरा स्पन्दत इति० ); पमा. ४३८ मासे ( मासि ) द्वितीये + ( वा ) शेषं स्मृचवत्; मपा. ३५० ( मासे द्वितीये वा ) एतावदेव; वीक. ३।७६–७८ ( परात् स्पन्दात् ) एतावदेव; संप्र. १६७ स्मृचवत्; मुक्ता. ७८ मासे ( मासि ) शेषं स्मृचवत्; संम. १२ स्मृचवत्; विपा. ९५ स्पन्द ( स्यन्द ).

§ शेषं जभावत् ।

¶ शेषं जभागतम् ।

(१) गोगृ. २।६।१; संत. ९०९ सदेशे ( मदेशे ).

शुक्लपक्षे । पुण्याह इति पुण्ये शोभने विष्टयादिरहिते दिने इत्यर्थः । पुंसा नक्षत्रेण पुंनामधेयेन हस्तपुष्यादिना । पुंसवनस्य । पुमान् सूयते येन कर्मणा तदिदं पुंसवनं गर्भसंस्कारकर्मणो नामधेयम् । अनेन हि कर्मणाऽव्यक्तलिङ्गं गर्भे पुमांसं करोति, 'पुंसवनात् पुंसीकरोति' इति श्रवणात् । अत्र कालातिपाते प्रायश्चित्तमुक्तमधस्तादनुपदम् । मृदुला.

## खादिरगृह्यसूत्रम्

**[1]प्रथमगर्भे तृतीये मासि पुंसवनम् ॥**

सर्वगर्भार्थोऽयं संस्कारः आधारसंस्कारद्वारेण सकृदेव क्रियते । भार्यान्तरे तु कर्तव्यमेव प्रथमगर्भे । दर्शादूर्ध्वमा दर्शादेको मासः । यत्र क च दिनेऽप्याहिते गर्भे स एको मासो गणयितव्यः । संज्ञा व्यवहारार्था । कृत्स्नाग्नावेव । मासीति मासे इत्यर्थः । अत्र केचित् अतिक्रान्तेऽपि मुख्यकाले प्रसवात् प्राक् कालातिक्रमप्रायश्चित्तं कृत्वा कर्तव्यमेवेत्याहुः, उपनयने दर्शनात्, तेन च स्मृतिषु तुल्यवद्गणनात्, कासुचित् स्मृतिषु कालानिर्देशेन विधानादापत्कल्पतयाऽभ्यनुज्ञानं सर्वदा संस्काराणामस्त्येवेत्याहुः । जननादूर्ध्वं तु द्वाराभावात् प्रायश्चित्तेनैव जातं संस्कुर्यादेकदेशेऽग्नौ । गर्भान्तरार्थं तु द्वितीये गर्भे कुर्यादेव । अपरे तु कालात्यये अधिकाराभावात् प्रायश्चित्तमेवाऽऽहुः । पूर्व एव तु पक्षः श्रेयान् । 'अथापि लोपसंशये लोपादलोपो न्याय( ? य्य )तरः' इति निदानकारोऽप्याह । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

**[2]पुंसवनं तृतीये मास्यन्यत्र गृष्टेः ॥**

पुंसवनमिति । गृष्टेः प्रथमगर्भाया नार्याः पुंसवनम् अन्यत्र चतुर्थे मासि स्यात् । श्रीव्या.

## कौशिकगृह्यसूत्रम्

**[3]पुंसवनानि ॥**

पुंसवनान्युच्यन्ते । दाकेटी.

(१) खागृ. २।२।१७. (२) जैगृ. १।५.
(३) कौसू. ३५।१–२.

**रजउद्वासायाः पुंनक्षत्रे ॥**

## वैखानसगृह्यसूत्रम्

**[1]अथ गर्भाधानादिचतुर्थे मासि पुंसवनं भवति ॥**

## बैजवापगृह्यसूत्रम्

**[2]अथ पुंसवनानवलोभने करोति मासि द्वितीये तृतीये वा पुरा स्पन्दत इति ॥**

( १ ) गर्भाधानपुंसवनयोरपि स्त्रीसंस्कारद्वारेण पुरुषसंस्कारकत्वम् । स्त्रीसंस्कारश्च प्रथमगर्भ एव जात इति न प्रतिगर्भमावृत्तिः, आरम्भणीयान्यायात् । एवं च सीमन्तेऽपि प्रथमगर्भस्मृतिर्न्यायमूला । 'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।' इति देवलवचनमपि न्यायमूलमेवेति । स्मृसा. २

( २ ) अनेन उभयोः समानकालत्वं दर्शितम् । संप्र. १७१

## वसिष्ठः

**[3]कुर्यात् पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा मासि ... ॥**

( १ ) प्रसिद्धविषये सुस्थापिते गर्भे तृतीये मासि पुंसवनं कुर्यात् । अथवेति मासालाभे विधिरुच्यते । अथवा तृतीयमासालाभे । चतुर्थे षष्ठेऽष्टमे वा कुर्यादिति ( वि ? )शेषः । 'कुर्यात् पुंसवनम्' इत्यस्य प्रयोजनं गर्भशुद्धिः । तथाऽऽह मनुः– 'गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः । व्रतैरध्ययनेनैव द्विजोऽयमुपयुज्यते ॥'

(१) वैगृ. ३।११.

(२) अक. ८२ अथ ( तत्र ) ( तृतीये० ) ; स्मृच. १७ ( मासि द्वितीये तृतीये वा पुरा स्पन्दते ) ; चका. ७३३ ; स्मृसा. १ (=) ( तथा मासि द्वितीये तृतीये वा ) ; पमा. ४३८ ( मासि द्वितीये वा पुरा स्पन्दते ) ; संप्र. १६७ स्मृचवत् : १६९, १७१ ( मासि द्वितीये तृतीये वा पुरा स्पन्दत इति० ) ; मुका. ७८ स्मृचवत् ; संम. १३ द्वितीये + ( वा ) ( पुरा स्पन्दत इति० ) ; पुम. ४३२ ( तृतीये० ) स्पन्दत इति ( स्पन्दतेश्च ).

(३) वसं. २५।१. शेषस्थलादिनिर्देशाः 'पुंसवनमुहूर्तः' इत्यस्मिन् प्रकरणे द्रष्टव्याः .

( मस्मृ. २।२७ ) इति । किंच, कुर्यात्पुंसवनमिति वर्णविशेषराहित्येनोक्तत्वाच्छूद्राणामपि पुंसवनस्य कर्तव्यता गम्यते । प्रपा. ११३

( २ ) तृतीये मासि गर्भो यदि प्रसिद्धविषयो न स्यात् तदा चतुर्थे पुंसवनं कुर्यादित्यर्थः । विपा. ९५

( ३ ) प्रसिद्धविषये व्यक्ते । $ संकौ. ५४

*¹चतुर्थे सावने मासि षष्ठे वाऽप्यथवाऽष्टमे ॥

सावन इत्यस्य षष्ठाष्टमयोरपि संबन्धः । 'मासि प्रोक्ताः क्रिया याः स्युस्ताः सर्वाः सौरमानतः ।' इत्यस्यापवादः । संर. ८११

## विष्णुः

²स्पन्दनात् पुरा पुंसवनम् ॥

## शङ्खः

³पुरा तु स्पन्दनात्कार्यं पुंसवनं विचक्षणैः ॥

## याज्ञवल्क्यः

⁴पुंसः सवनं स्पन्दनात्पुरा ॥

( १ ) पुंसवनाख्यो द्वितीयः संस्कारः । स च प्राग्गर्भस्पन्दनात् । तथा च पारस्करः– 'अथ पुंसवनं पुरा स्पन्दनात्' इति । † विश्व.

( २ ) 'चतुर्थे स्पन्दते ततः' इति वचनात् स्पन्दनात् पूर्वमासत्रयं पुंसवनकालः । अत्र चतुर्थमासस्य सौरत्वे चान्द्रत्वे वा निषेककाम( १ मास )स्यापि तथात्वे तदाद्यन्तदिननिषेके सति अधिकन्यूनकालयोर्गर्भस्पन्दनमनियतमापद्येत, सावने तु नियतम्, तेनात्र सावनगणना युक्ता योषिद्व्यवहारसिद्धा च । संत. ९०८

( ३ ) पुमान् सूयतेऽनेनेति पुंसवनं पुंसः सवनमित्यनेनोक्तम् । स्पन्दनात् गर्भचलनात् पूर्वं तृतीये मासीत्यर्थः, 'चतुर्थे स्पन्दते ततः' इति वचनात् । वीमि.

( ४ ) तच्च गर्भस्य चलनात्प्रागेव कार्यम्, 'पुंसः सवनं स्पन्दनात् पुरा' इति योगिस्मरणात्, 'पुरा तु स्पन्दनात्कार्यं सवनं तु विचक्षणैः ।' इति शङ्खस्मरणाच्च । बृहस्पतिस्तु स्पन्दितेऽप्याह– 'सवनं स्पन्दिते शिशौ' इति । स्पन्दिते इति आदिकर्मणि निष्ठया स्पन्दितुमारब्धे इत्यन्ये । स्पन्दनं च तृतीये मासि भवति, 'तृतीये स्पन्दते ततः' इति योगिस्मरणात् । 'स्पन्दनात्पुरा' इति वदता द्वितीये मासि पुंसवनं कर्तव्यमित्युक्तं भवति । संप्र. १६७

( ५ ) गर्भचलनकालः शारीरके 'तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोति' इति । ¶ संम. १२

## नारदः

¹प्रसिद्धविषये गर्भे तृतीये वाऽथ मासि च ।
कुर्यात्पुंसवनं कर्म सीमन्तं च यथा तथा ॥
²चतुर्थे मासि षष्ठे वाऽप्यष्टमे वा ... ॥

## बृहस्पतिः

³सवनं स्पन्दिते शिशौ ॥

---

$ संर. संकौवत् ।

* वचनमिदं रत्नमालाकारभिन्नैः सर्वैः सीमन्तोन्नयनपरमभ्युपगतमिति सीमन्तोन्नयनप्रकरणेऽपि व्याख्यानं द्रष्टव्यम् ।

† मिता., स्मृसा., पुम. विश्ववत् ।

(१) संर. ८११. शेषस्थलादिनिर्देशाः सीमन्तोन्नयनविधिप्रकरणे द्रष्टव्याः. (२) विस्मृ. २७।२.

(३) शंस्मृ. २।१; संप्र. १६७ पुंसवनं ( सवनं तु ); संग. ४१३ संप्रवत्.

(४) यास्मृ. १।११. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे ( पृ. ४७ ) द्रष्टव्याः.

¶ संर. संमवत् ।

(१) ज्योना. १७।१ विषये ( विषमे ); ज्योनि. १०९.

(२) ज्योना. १८।१, शेषस्थलादिनिर्देशाः पुंसवनमुहूर्तप्रकरणे द्रष्टव्याः.

(३) स्मृच. १७; चका. ७३३ ( पुंसवनं स्पन्दति शिशौ ); मपा. ३५१; संसौ. ४०; संप्र. १६७; मुक्ता. ७८; पुम. ४३२ ( पुंसवनं स्पन्दति शिशौ ).

( १ ) बृहस्पतिस्तु गर्भस्पन्दने पुंसवनमाह– 'गर्भाधानमृतौ कुर्यात् सवनं स्पन्दिते शिशौ।' इति ।

स्मृच. १७

( २ ) याज्ञवल्क्यः– 'गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा । ' इति । बृहस्पतिरपि– 'सवनं स्पन्दिते शिशौ' इति । गर्भानभिव्यक्तौ यदा चतुर्थादिमासे पुंसवनं भवति तत्पुंसवनं स्पन्दनादूर्ध्वमपि भवति । तेन योगिवाक्ये स्पन्दनमभिव्यक्तताया उपलक्षकं ज्ञेयम् । 'स्पदि किंचिच्चलने' इति स्पन्दनशब्देन चलनमभिधीयते। 'पुमान् सूयतेऽनेन कर्मणा तत्पुंसवनम् ' इति श्रुत्याऽस्य कर्मणः पुंस्त्वहेतुता । संसौ. ४०

[1]गर्भस्य स्थापने कालस्तृतीये मासि चोदितः ।
गृष्टेरन्यत्र गृष्टेस्तु षष्ठे मास्यथवाऽष्टमे ॥

गृष्टिः सकृत्प्रसूता । तथोक्तम्– 'गृष्टिः सकृत्प्रसूता स्यात् ' इति । प्रपा. ११३

[2]तृतीये मासि कर्तव्यं गृष्टेरन्यत्र शोभनम् ।
गृष्टेश्चतुर्थे मासे तु षष्ठे मास्यथवाऽष्टमे ॥

( १ ) द्वितीयादिगर्भे तु चतुर्थे षष्ठाष्टमयोर्वा, 'तृतीये ...ऽष्टमे ॥' इति बृहस्पतिस्मरणात् । गृष्टिः एकवारं प्रसूता, 'सकृत्प्रसूता गृष्टिः स्यात् ' इति त्रिकाण्डीस्मरणात् । † संप्र. १६८

( २ ) सकृत्प्रसूता गृष्टिः । एतेन प्रतिगर्भमपि भवतीति ज्ञायते । सिन्धु. ८३२

[ गृष्टेरिति । सामुद्रादिशास्त्रेणैव प्राग् गृष्टित्वनिर्णयः। एतेन गृष्टितदन्ययोर्व्यवस्थोक्त्या । गृष्टेरेकवारं तदन्यस्या वारं वारमित्यर्थसूचनात् पुमान् सूयतेऽनेनेति व्युत्पत्त्या कर्मणः पुंप्रसवसाधनत्वलाभादिति शेषः । एतेन नावलुप्यते गर्भोऽनेनेति व्युत्पत्त्या अनवलोभनकर्मणो गर्भाविनाशकत्वलाभात् प्रतिगर्भमावृत्तिर्लभ्यते । 'सकृत्तु संस्कृता नारी सर्वगर्भेषु संस्कृता । ' इति देवलवाक्यं तु सीमन्तविषयमिति तदाशयः । विज्ञानेश्वरादिभिरनयोः सकृत्करणस्य सिद्धान्तितत्वादेते सकृदेव कुर्वन्ति । तदग्रे चिन्तयामः । कृभ. ]

[3]सीमन्तस्य समुद्दिष्टः कालो नक्षत्रपूर्वकः ।
प्रतिगर्भं पृथक्कार्यं सर्वं पुंसवने शुभम् ॥
[4]वर्धिष्णूनां चतुर्थानामपि कर्तव्यतां गतम् ।
अमन्त्रकं तु कर्तव्यं पुंकर्म च शुभार्थिनाम् ॥

इदं च पुंसवनं शूद्राणामप्यमन्त्रकं भवति । तदाह बृहस्पतिः– वर्धिष्णूनामिति । वर्धिष्णूनां वृद्धिशीलानाम् । गर्भाणामिति शेषः । ये शुभमर्थयन्ते तादृशानां चतुर्थानां शूद्राणां पुंकर्म पुंसवनम् अमन्त्रकं कर्तव्यमित्यर्थः । संप्र. १६८

## भृगुः

[5]सीमन्तोन्नयनात् पूर्वं पुंसवं कर्म कारयेत् ।
स्वकालातिक्रमे चापि ततः सीमन्तमुन्नयेत् ॥

यत्रैते गर्भाधानादयः संस्कारा दैवादतिक्रान्तकाला भवन्ति तदा ते क्रमेणैवानुष्ठेया इति । यदाह भृगुः– सीमन्तेति । जातूकर्ण्यः– 'सीमन्तोन्नयनं कार्यं न कृतः पुंसवो यदि । पुंसवं प्राग्विनिर्वर्त्य ततः सीमन्तमुन्नयेत् ॥ ' इति । एतत्सीमन्तपुंसवनग्रहणमुपलक्षणं संस्कारमात्रस्य । संसौ. ४५

## व्यासः

[6]तृतीये मासि पुंसवः ॥

## देवलः

[7]सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।

---

† संर. संप्रगतम् ।

(१) प्रपा. ११३.

(२) संप्र. १६८ ; सिन्धु. ८३२ ; संकौ. ५४ ; संर. ८११.

(१) प्रपा. ११३.

(२) प्रपा. ११३ ; संप्र. १६८ च ( तु ).

(३) संसौ. ४५. (४) व्यास्मृ. १।१७.

(५) मिता. १।११ ; अप. १।११ पृ. २५ ; व्रक. ८४ ; स्मृच. १७ ; हमा. १४८ ; स्मृसा. २ ; पमा. ४३९ सकृच्च संस्कृता ( सकृत्संस्कृता या ) ; मपा. ३५२ गर्भेषु ( गर्भेऽपि ) ; गभा. १४९ ; संत. ९०९ ; संसौ.

**यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत् ॥**

एते च पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात् सकृदेव कार्ये, न प्रतिगर्भम् । यथाऽऽह देवलः– 'सकृच्च...... ॥' इति । ‡ मिता. १।११

[ आद्यसंस्कारकाले गर्भाभावेन तत्रासंदेहेन गर्भकालिकसंस्कारत्वादनयोर्गर्भक्षेत्रसंस्कारतासंदेहनिरासायाऽऽह– एते चेति । ' अथ सीमन्तोन्नयनं पुंसवनवत्प्रथमगर्भे ' इति पारस्करेणोभयोः क्षेत्रसंस्कारताभिधानादिति भावः । सकृत्करणे मानमाह– यथाऽऽहेति । इदं च गर्भाधानादित्रितयपरमेव, अन्यस्यासंभवात् । ननु सीमन्तोन्नयनांशे युक्तमिदं यद्यपि, अत एव हेमाद्रौ हारीतोऽपि– 'सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥ ' इति, तत्रैव विष्णुरपि– 'स्त्री यद्यकृतसीमन्ता प्रसूयेत कथंचन । गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति ॥ ' इति, ' गर्भार्थमेवाऽऽधानवत् स्त्रीसंस्कारत्वात्सकृदेव कृतः सीमन्तः सर्वानेव गर्भान् संस्करोति ' इति सुदर्शनाचार्योऽपि, तथाऽपि पुंसवनांशे न युक्तम्, ' आवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः । ' इति बह्वृचकारिकायामुक्तत्वात्, ' पुमांसं जनयति ' इति फलस्य सूत्रकारेणैवोपदिष्टत्वाच्च, इति चेन्न, ' एष वा अनृणो यः पुत्री ' इत्यादिवचनैः सकृदपि पुत्रोत्पादनस्यावश्यकर्तव्यत्वात् तदङ्गं पुंसवनं प्रथमे गर्भे कर्तव्यमेव, तदनन्तरमुक्तसूत्राद्यत्र यत्र पुत्रेच्छा तत्र कार्यम्, नान्यत्र, यस्य तु कन्येच्छैव तस्य सकृदपि नेति तात्पर्यात् । न चैवमपि ' सीमन्तोन्नयनं कर्म तत् स्त्रीसंस्कार इष्यते । केचिद्गर्भस्य संस्काराद्गर्भे गर्भे प्रयुञ्जते ॥ ' इति विष्णुविरोध इति वाच्यम्, केचिदित्युक्त्यैव तस्यासिद्धान्तत्वसूचनात्, कृतेऽभ्युदय इत्येवंपरत्वाच्च । तथा च आश्वलायनस्मृतौ– ' प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते । ' इति । बाल. ]

## यमः

'**गृहीतगर्भायां प्रथमे मासि द्वितीये तृतीये वा ॥**

## बृहत्पराशरः

'**आधानतो द्वितीये तु मासे पुंसवनं भवेत् ॥**

## सत्यव्रतः

'**मृतो देशान्तरगतो भर्ता स्त्री यद्यसंस्कृता ।**
**देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत् ॥**

अस्मिन् कर्मणि पत्युरभावे देवरादिरपि कर्ता । तथा च सत्यव्रतः– मृत इति । संर. ८१३

## आश्वलायनः

'**गर्भाधाने पुंसवने सीमन्ते नामकर्मणि ।**
**संग्राह्यो मानुषो मासो रुद्राशौचविधावपि ॥**

'**सावनेन तु मासेन तृतीये वा चतुर्थके ।**
**मासि तिष्येण मतिमान् कुर्यात् पुंसवनक्रियाम् ॥**

'**प्राशनान्नस्यकरणाद्गर्भस्थः संस्कृतो भवेत् ।**
**स्मरत्यनेन जन्मानि प्रागतीतानि चाऽऽत्मनः ॥**

---

‡ व्याख्यानान्तराणि सीमन्तोन्नयनविधिप्रकरणे द्रष्टव्यानि ।

४१ ; वीमि. १।१३ ; मुक्ता. ७८ ; संम. १३ ; सिन्धु. ८३७; कुम. ८३२ कृच्च ( कृत्तु ) मिताभिन्नसर्वग्रन्थेषु पूर्वार्धमात्रम्.

(१) चका. ७३२ ; गभा. १४५ ( गृहीतगर्भायां० ) द्वितीये + ( वा ) ; सिन्धु. ८३३ ( गृहीतगर्भायां० ) ( तृतीये० ) ; पुम. ४३२. (२) बृपसं. ६।१४८.

(३) सिन्धु. ८३३ ; विपा. ९८ स्त्री यद्यसंस्कृता ( स्त्रीसंस्कृतेषु च ) ; संर. ८१३ ( मृतो देशान्तरगतो भर्ता स्त्रीसंस्कृतेः पुरा । देवरो वाऽथवा वंश्यो गुरुर्वाऽपि समाचरेत् ॥ ). (४) आश्वस्मृ. ३।५६-५७.

(५) आश्वस्मृ. ११।५४ ; प्रपा. ११५ प्रथमपादे ( श्रवणेन तु मासेऽपि ).

(६) आश्वस्मृ. ११।५९ संस्कृतो ( संस्मृतो ) स्मरत्यनेन ( तावत्स्मरति ) ; प्रपा. ११६ नान्नस्यक ( नस्यास्य

¹द्विजोऽहमिति स ज्ञात्वा तोषमायाति कर्मभुक्।
अन्यथा सप्तमान्मासात् प्रागात्मानं न वेत्ति सः॥

²चण्डालीजठरस्थोऽपि सप्तभिः स सप्तमे ।
स्मरत्यनेकजन्मानि कर्माणि प्राक्तनानि च ॥

³असंपूर्णोऽप्यसावङ्गैर्ब्राह्मणीजठरे स्थितः ।
पुंसवे मन्त्रमाहात्म्याद्वेत्ति प्राग्जन्मसंततीः ॥

⁴तस्मात् पुंसवसंस्कारः प्रतिगर्भं प्रवर्तते ।
वक्ष्यमाणविधानेन सूतिकारादिभिर्यथा ॥

⁵पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥

(१) श्रेष्ठेनेति तादृश एव प्रतिनिधिरित्येवमर्थम् ।
* संकौ. ५९

(२) गर्भाधानं देवरादिना न कार्यम्, कलिवर्ज्यत्वात् । अतः पुंसवनादिपदम् । कृभ. ८३२–८३३

* संर. संकौवत् ।

क) चाऽऽत्मनः (मानवः); संप्र. १७१ नात्मस्य (नस्पर्श) पू., शौनकस्मरणम्; संग. ४१४ संप्रवत्, पू., वीरमित्रोदयः.

(१) आश्वस्मृ. ११।६०; प्रपा. ११६.

(२) आश्वस्मृ. ११।६१ चण्डाली (चण्डाला) स्मरत्यनेकज (मासि जानाति ज); प्रपा. ११६.

(३) आश्वस्मृ. ११।६२ संततीः (न स्मृतिम्); प्रपा. ११६ माहात्म्या (सामर्थ्या); संप्र. १७१ आश्वस्मृवत् प्रपावच्च, उत्त., शौनकस्मरणम्.

(४) आश्वस्मृ. ११।६३; प्रपा. ११६ पू.; संप्र. १७१ पू., शौनकस्मरणम्.

(५) आश्वस्मृ. ११।९४ पत्यौ मृते (मृते पत्यौ) पुंसवना (स्युः पुंसवा); प्रपा. १३३; संप्र. १६५; संकौ. ५९; संग. ३८२, ४१६; कृभ. ८३२ श्रेष्ठेन (ज्येष्ठेन) दयः (दिकाः) प्रयोगपारिजाते : ८४७ श्रेष्ठेन (ज्येष्ठेन); संर. ८१३ पूर्वार्धे (पत्यौ मृते वा संन्यस्ते पतिते वा विदेशके ।), ८३२.

¹दीक्षान्ते दीक्षितो भर्ता जातकृत्यादिकं चरेत् ।
पुंसवादीनि कर्माणि त्रीणि श्रेष्ठेन कारयेत् ॥

(१) दीक्षितेन तु दीक्षाकाले स्वयमपि जातकर्म न कार्यम्, नापि तत्प्रतिनिधिनाऽन्येन, किं त्ववभृथान्ते विसृष्टदीक्षः स्वयमेव कुर्यादित्यर्थः । श्रेष्ठः कनिष्ठहस्तेन पुंसवनादीनि न कारयेदित्युक्त्या जातकर्म तु कारयेदिति सूच्यते । † संकौ. ५९

(२) अत्र त्रीणीत्याश्वलायनानामनुकूलम्, तेषामेवानवलोभनरूपतृतीयसंस्कारसत्त्वात् । न चाऽऽश्वलायनातिरिक्तविषयेऽपि 'त्रीणि श्रेष्ठो न कारयेत्' इत्येतस्य वचनस्य प्रवृत्तिरस्त्विति वाच्यम्, 'श्रेष्ठः कनिष्ठहस्तेन जातकर्मादि कारयेत् ।' इति वसिष्ठवचनविरोधापत्तेः ।
* संर. ८३२–८३३

## लघ्वाश्वलायनः

¹कुर्यात् पुंसवनं मासि तृतीयेऽनवलोभनम् ।
सीमन्तोन्नयनं चैव चतुर्थे मासि तद्भवेत् ॥
नो चेत् षष्ठेऽष्टमे वाऽपि कर्तव्यं तद्द्वयं च हि ।
तावदेव भवेत् केचिद्यावत्स्याद्गर्भधारणम् ॥
प्राशनं यत्पुंसवनं होमश्चानवलोभनम् ।
प्रतिगर्भमिदं कुर्यादाचार्येणेह भाषितम् ॥
प्रधानं पुंसवनं न स्यादङ्गं चानवलोभनम् ।
सीमन्तं च तथैव स्यात्केचिदुन्नयनं तथा ॥

† कृभ. संकौवत् ।

* शेषं संकौवत् ।

(१) आश्वस्मृ. ११।९५ दिकं च (दि संच); प्रपा. १३३; संकौ. ५९ श्रेष्ठेन (श्रेष्ठो न); कृभ. ८४७ कृत्यादि (कर्मादि) श्रेष्ठे (ज्येष्ठे); संर. ८३२ वादीनि क (वनादिक) शेषं संकौवत्.

(२) लघ्वाश्वस्मृ. ४।१–२, १७, १९.

## जातूकर्ण्यः

[1]द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।
व्यक्ते गर्भे भवेत् कार्यं सीमन्तेन सहाथवा ॥

( १ ) उक्तकालातिक्रमे सीमन्तेन सह कर्तव्यत्वमाह जातूकर्ण्यः— 'सीमन्तेन सहाथवा' इति ।

संप्र. १६८

( २ ) व्यक्ते अन्येनानुक्तेऽपि ज्ञातुं शक्ये । अत्र सति संभवे शुक्रास्तमलमासादि वर्ज्यम् । असंभवे तत्रापि कार्यम् , आवश्यकत्वात् ।

संम. १२

( ३ ) द्वितीये वा तृतीये वा इति मासस्य प्राधान्येन विहितत्वाद्गुरुशुक्रमौढ्यादावपि तत्रैव कार्यम् ।

विपा. ९५

( ४ ) द्वितीये वेति । गर्भाभिव्यक्तौ, अन्यथा तृतीये इत्यर्थः । वस्तुतस्तु गर्भधारणमासादिति शेषेण तृतीये गर्भानभिव्यक्तौ तु चतुर्थे इत्यर्थः । तथा च गर्भमासप्रभृति तृतीये चतुर्थे षष्ठेऽष्टमे वा मासि अरिक्तादितिथौ पुष्यादिपुंनक्षत्रे सोमबुधगुरुशुक्रवारेषु विष्ट्यादिरहिते दैवज्ञोक्ते काले पुंसवनानलोभने कार्ये, गुरुशुक्रास्तबाल्यवार्धक्यमलमासादिरहितकाललाभे गुरुशुक्रास्तादावपि न कार्ये, तदलाभे तु गुरुशुक्रास्तादावपि, नियतकालत्वात् , सीमन्तदिने वा कार्ये, इति प्रघट्टकार्थः ।

कृभ. ८३१

( ५ ) व्यक्ते गर्भे अस्ति गर्भ इति निश्चिते । गर्भाभिव्यक्तिकालो बृहस्पतिनोक्तः— 'गर्भो व्यक्तस्तृतीये स्याच्चतुर्थे मासि वा भवेत् ।' इति । अत्र मासः सावनो ग्राह्यः । तदुक्तं वसिष्ठेन — 'चतुर्थे सावने मासि षष्ठे वाऽप्यथवाऽष्टमे ।' इति ।

संर. ८११

‡[1]सीमन्तोन्नयनं कुर्वन् कुर्यात् पुंसवनं यदि ।
पुंसवं प्राग्विनिर्वर्त्य ततः सीमन्तमुन्नयेत् ॥

## स्कन्दपुराणम् ( काशीखण्डे )

[2]स्पन्दनात्प्राक् पुंसवनं ...... ॥

## वराहः

[3]तृतीये मासि कर्तव्यं गृष्टेरन्यत्र शोभनम् ।
गृष्टेश्चतुर्थमासे तु षष्ठे मास्यथवाऽष्टमे ॥

## स्मृत्यर्थसारः

[4]गर्भचलनात् पुरा तृतीये चतुर्थे मासे वा पुंसवनं कार्यम् ॥

## नृसिंहः

[5]तृतीये मासि कर्तव्यं प्रथमे गर्भसंभवे ।
अङ्कुरस्य तु सद्भावाद्बहूनां संमतं त्विदम् ॥
प्रतिगर्भे तु तत्कुर्यादिति जैमिनिभाषितम् ।
प्रथमं पुंसवः कार्यः सार्धं सीमन्तकर्मणा ॥

## भुजबलः

[6]ततः प्रभृति नदीतीरं देवखातोदकं त्यजेत् ।
संध्याटनं तरोर्मूलं तथा देवगृहं त्यजेत् ॥

## माधवीये

[7]कुर्यात्पुंसवनं ... मासे तृतीये बुधः ॥

## राजमार्तण्डे

[8]प्राप्ते तृतीयमासे स्फुरदिन्दुकलाकलापपक्षे च ।
पुंसवनं पुत्रेच्छुर्गर्भे गर्भे प्रकुर्वीत ॥

( १ ) यच्च 'प्राप्ते तृतीयमासे...... ॥' इति राजमार्तण्डे प्रतिगर्भे पुंसवनमभिहितं तत् पुत्रकामस्यैव,

(१) संप्र. १६७ ( तृतीये वा० ) : १६८ चतुर्थपादमात्रम् ; मुक्ता. ७८ गर्भे भवेत् ( गर्भेऽथवा ) ; संम. १२ मुक्तावत् ; सिन्धु. ८३१ ; विपा. ९५ ; संकौ. ५४ चतुर्थपादमात्रम् ; संर. ८११ उत्त. , गर्गः .

‡ अस्य व्याख्यानं भृगुवचने ( सं. का. पृ. २५३६ ) द्रष्टव्यम् ।

(१) प्रपा. १२२ कुर्वन् कुर्यात्पुंसवनं ( कुर्यान्न कुर्यात्पुंसवं ) ; संसौ. ४५ कुर्वन् कुर्यात्पुंसवनं ( कार्ये न कृतः पुंसवो ) ; विपा. ९८.

(२) सस्मृ. ५१. (३) प्रपा. ११३.

(४) स्मृसार. ३. (५) प्रपा. ११३.

(६) संत. ९१३. (७) प्रपा. ११३-११४.

(८) आकौ. ४९७ ; संसौ. ४१ व्यवहारचण्डेश्वरे.

पुत्रेप्सुरित्युपादानात्, गर्भसंस्कारस्य प्रथमेनैव जातत्वात्। श्राकौ. ४९७

(२) व्यवहारचण्डेश्वरे– 'प्राप्ते...... ॥' इति। पुंसवनमित्युपलक्षणम्, सर्वेऽपि गर्भाधानादिसंस्कारा गर्भसंस्कारकत्वात् प्रतिगर्भमावर्तन्ते। अपरे तु गर्भाधानादयः संस्काराः सकृदेव कार्या इति वर्णयन्ति। यदाह देवलः– 'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता।' इति। हारीतोऽपि– 'सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः। यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्॥' इति। यथागृह्यं यथादेशं चात्र व्यवस्था। संसौ. ४१

## विधिरत्ने

(१)'एतत्पुंसवनं परत्र विधिना मासे तृतीये ततः॥

## कालादर्शे

(२)'तृतीये वा चतुर्थे वा मासि पुंसवनं भवेत्।
गर्भव्यक्तौ स्मृतं तच्च लोकसिद्धा स्त्रिया हि सा॥

तत् पुंसवनं गर्भव्यक्तौ स्मृतम्, सा गर्भव्यक्तिः स्त्रियाः तृतीयचतुर्थमासभवत्वेन लोकसिद्धेत्यर्थः। मुक्ता. ७८

## मुहूर्तचिन्तामणिः

‡(३)'पूर्वोदितैः पुंसवनं विधेयं मासे तृतीये तु... ॥

## धर्मोद्योते

(४)'तृतीये पुंसवः(? वं) कृत्वा षष्ठे वा सप्तमेऽपि वा।
सीमन्तोन्नयनं कार्यं न कुर्यात् पुंसवं यदि।
पुंसवं प्राग्विनिर्वर्त्य ततः सीमन्तमुन्नयेत्॥

‡ अस्य व्याख्यानं पुंसवनमुहूर्तप्रकरणे द्रष्टव्यम्।

(१) प्रपा. ११३.

(२) मुक्ता. ७८.

(३) मुचि. ५।१०; संब. ५१, ५५.

(४) मुक्ता. ७८.

## मुहूर्तगणपतौ

(१)'द्वितीये वा तृतीये वा मासि पुंसवनं स्मृतम्॥

## शाकलकारिकाः

(२)'अथ पुंसवनं कार्यमुक्तकाले यथाविधि।
सूत्रकारमतेनैव तथा चानवलोभनम्॥
सीमन्ते चैव कुर्वीत सहैवोन्नयनेन च।
उक्तकाले द्वयं चापि सूत्रकारवचो यथा॥
यावत् प्रसूतिकालः स्याद्गर्भसंस्कार इष्यते।
एकस्मिन्नथवा काले कुर्यात्कर्मचतुष्टयम्॥

## शौनककारिकाः

(३)'पुमान् प्रसूयते येन तत् पुंसवनमीरितम्॥
(४)'अन्ये द्वे कर्मणी प्राहुस्तयोः कल्पोऽत्र कथ्यते॥

अनेन पुंसवनशब्दस्य कर्मनामधेयत्वमप्याविष्कृतम्। संप्र. १६७

(५)'अथ पुंसवनं कुर्यात्तृतीये मासि पुंस्त्वदम्॥
(६)'व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत्।
गर्भोऽव्यक्तस्तृतीये चेच्चतुर्थे मासि वा भवेत्॥

गर्भव्यक्ततायाश्च लक्षणमुक्तं ज्योतिर्निबन्धे– 'स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः॥ छर्दयेत् पथ्यमुक्तानि गन्धादुद्विजते शुभात्। प्रसेकवदनं चैव गर्भिण्या लिङ्गमुच्यते॥'। तथा च श्रुतौ– 'सद्यो गृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणं च योन्याः' इति। इदं तु प्रथमगर्भे, द्वितीयादिगर्भेषु कालातिक्रमे स्पन्दितेऽपि कार्यमेव।

(१) संब. ५१.

(२) शाका. २७०–२७२ पृ. ३०.

(३) शौका. ४ पृ. ३४; प्रपा. ९७; संप्र. १६७; संग. ४१३.

(४) शौका. ५ पृ. ३४; प्रपा. ९७.

(५) संप्र. १६८; संग. ४१३.

(६) शौका. १ पृ. ३४; प्रपा. ११५; संसौ. ४०; संप्र. १६८; संको. ५४; संग. ४१३ उत्त.

तदुक्तं कारिकायाम्– 'एतदेव पुरा गर्भचलनादकृतं यदि । सीमन्तात्प्राग्विधातव्यं स्पन्दितेऽपि बृहस्पतिः ॥'। संग. ४१४

[1]प्रतिगर्भमिदं कर्म कार्यं पुत्रीयताऽखिलम् ॥

एते च पुंसवनानवलोभने गर्भसंस्कारत्वात्प्रतिगर्भमावर्तनीये, 'प्रतिगर्भमिदं कर्म......॥' इति शौनकस्मरणात् । यत्तु मिताक्षरायाम् 'एते च पुंसवनसीमन्तोन्नयने क्षेत्रसंस्काररूपत्वात् सकृदेव कार्ये' इत्यनेन पुंसवनस्य सकृत्करणमुक्तं तत् चिन्त्यम्, समाख्यया गर्भसंस्कारत्वावगमादुक्तशौनकवाक्याच्च प्रतिगर्भमावर्तनीयत्वात् । यदपि 'अथ सीमन्तोन्नयनं पुंसवनवत्प्रथमगर्भे' इति पारस्करवचनमत्र प्रमाणतया प्रतीयते तदपि सीमन्तोन्नयनस्य प्रथमगर्भकर्तव्यत्वं प्रतिपादयति, न पुनः पुंसवनस्य, उक्तवचनविरोधापत्तेः । वचना(? पुंसवना)तिदेशस्तु धर्मान्तरोपसंग्रहार्थः । अपरार्कस्वरसोऽप्येवम् । § संप्र. १७१–१७२

## कुमारिलकारिकाः

[2]तृतीये गर्भसंस्कारो मासि पुंसवनं भवेत् ।
आद्यो गर्भो न विज्ञातस्तृतीये मासि वै यदि ॥
[3]चतुर्थे मासि कर्तव्य आद्यगर्भे स्मृतो विधिः ॥

---

§ संग. संप्रगतम् ।

(१) शौका. २५ पृ. ३६ ; प्रपा. ११६ ; संप्र. १७१ ; संग. ४१४ वीरमित्रोदयः .

(२) कुका. १।५।१ ; प्रपा. ११४ ; धप्र. ३६ रो मासि ( रं मासे ) ; ज्योनि. ११० आद्यो ग ( आद्यग ).

(३) कुका. १।५।२ ; प्रपा. ११४ ; धप्र. ३६ व्य आद्यगर्भे स्मृ ( व्यमाद्यगर्भस्मृ ) ; ज्योनि. ११० व्य आद्य ( व्यमाद्य ).

[1]... अस्याः पतिर्वा देवरोऽपि वा ।
कर्ता स्याद्देवरस्तद्वत्तस्याः पत्युरसंभवे ।
आवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः ॥

## रेणुकारिकाः

[2]अथ पुंसवनं वक्ष्ये प्राग्गर्भचलनाद्भवेत् ।
तच्च मासे द्वितीये वा तृतीये वा शुभेऽहनि ॥
[3]गर्भसंस्कार एवायमिति कर्कस्य संमतिः ।
अतस्तद्गर्भसंस्काराद्गर्भे गर्भे प्रयुज्यते ॥
[4]एतदेव पुरा गर्भचलनादकृतं यदि ।
सीमन्तात् प्राग्विधातव्यं स्पन्दितेऽपि बृहस्पतिः ॥

द्वितीयादिगर्भेषु कालातिक्रमे स्पन्दितेऽपि कार्यमेव । तदुक्तं कारिकायाम्– एतदेवेति । इदं स्वकाले असंभवे अनादिष्टहोमपूर्वकं सीमन्तोन्नयनेन सह वा कार्यम् । संग. ४१४

---

(१) कुका. १।६।४–५ ; प्रपा. ११४ ; सिन्धु. ८३२ ( अस्याः ... ऽपि वा० ) स्तद्वत्तस्याः ( स्तस्या यस्याः ) भवे ( भवः ) ; बाल. १।११–१२ पृ. १४ ( अस्याः ... संभवे० ).

(२) रेका. १ पृ. ६ ; संप्र. १७२ पू. ; संग. ४१४ (=) पू.

(३) रेका. २–३ पृ. ६ ; गभा. १४५ द्गर्भे गर्भे ( द्गर्भे गर्भे ) ; संप्र. १७२ द्गर्भे गर्भे ( त्प्रतिगर्भे ) ; संग. ४१४ गभावत् , गदाधरभाष्ये.

(४) रेका. १२–१३ पृ. ७ ; गभा. १४५ ; संग. ४१४.

# पुंसवनमुहूर्तः

## बौधायनगृह्यसूत्रम्

पुंसवने नक्षत्रम्

[1]**तिष्ये पुंसवनम् ॥**

## आश्वलायनगृह्यसूत्रम्

पुंसवने नक्षत्रम्

[2]**तिष्येणोपोषितायाः...दधि प्रसृतेन प्राशयेत् ॥**

( १ ) अत्र संशयः— किं तिष्येणोपवासश्चोद्यते ? आहोस्वित् उपोषितायास्तिष्येण कर्म भवतीति ? तत्र तिष्येऽविशेषेण कर्म भवतीत्येषा प्रतिज्ञा । कथं पुनरेतत् ज्ञायते ? गुणार्थश्चागुणार्थस्य, उपवासस्य नक्षत्रस्य च गुणभूतत्वात् । गुणार्थस्य(? श्च ) न गुणभूते सिध्यतीति न्यायः । तस्मात् कर्म तिष्येण भवति, उपवासस्तु पूर्वेण । देभा.

( २ ) तिष्येणेति ' नक्षत्रे च लुपि ' ( पा. सू. २।३।४५ ) इत्यधिकरणे तृतीया । तिष्येणेति प्राशनकर्मणा संबध्यते, तस्य प्रधानत्वात् । नोपवासेन, गुणत्वात् । तेन पुनर्वसुना उपोषितायाः पत्न्यास्तिष्येणेदं कर्म करोति । $ गानावृ.

( ३ ) ज्योतिःशास्त्रे कल्पान्तरेषु च तिष्य एव पुंसवनं विहितम् । तत्राऽऽपस्तम्बः— ' पुंस( ? सुं )वनं व्यक्ते गर्भे तिष्येण ' इति । किंच, ' नक्षत्रमुपवासश्च प्राशनस्य गुणौ मतौ । गुणानां च परार्थत्वादसंबन्धः समत्वतः ॥ ' । ¶ अना.

---

$ प्रपा. गानावृत्तेरनुवादः ।

† पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३१–२५३२) आपगृ. तद्व्याख्यानं च द्रष्टव्यम् ।

¶ शेषं गानावृगतम् ।

(१) बौगृ. १।९।१.

(२) आगृ. १।१३।२ ; अप. १।११–१३ पृ. २५ ; ब्रक. ८१ ; प्रपा. ११४ ; विपा. ९४ पूर्वसूत्रांशात्परं ( तिष्येण ) एतावदेव ; संको. ५५ (तिष्येणोपोषितायाः) एतावदेव.

## कौषीतकिगृह्यसूत्रम्

पुंसवने नक्षत्रम्

[1]**पुष्येण श्रवणेन वा ॥**

एतच्च पुष्येण श्रवणेन वा कर्तव्यम् । कौगसं.

## आपस्तम्बगृह्यसूत्रम्

पुंसवने नक्षत्रम्

[2]**पुंसुवनं व्यक्ते गर्भे तिष्येण ॥**

( १ ) तिष्येण । तच्च तिष्ये कर्तव्यम् । ' नक्षत्रे च लुपि ' इत्यधिकरणे तृतीया । अनाकुला.

( २ ) तिष्येण तिष्यनक्षत्रे पुंसवनं कर्तव्यमिति व्यवहितेन संबन्धः , ' प्रकरणात्प्रधानस्य ' इति न्यायात् । शुङ्गाहरणे त्वनियमः । ताद.

## हिरण्यकेशिगृह्यसूत्रम्

पुंसवने पक्षः नक्षत्रं च

[3]**तृतीये मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रे ॥**

## भारद्वाजगृह्यसूत्रम्

पुंसवने नक्षत्राणि

[4]**तिष्येण वा हस्तेन वाऽनुराधैर्वोत्तरैर्वा प्रोष्ठपदैः ॥**

## वाराहगृह्यसूत्रम्

पुंसवनं पुंनक्षत्रे चन्द्रदर्शनाभावोपलक्षितेऽहनि वा

[5]**पुंसा नक्षत्रेण यदहश्चन्द्रमा न दृश्यते तदहर्वा ॥**

---

(१) कौगृ. १।२०।२ ; अप. १।११–१३ पृ. २६ ( तिष्ये वा श्रवणेन ) ; ब्रक. ८२.

(२) आपगृ. १४।९ ; मुक्ता. ७८ पुंसु ( पुंस ) ; आन. १४६ ( तिष्येण० ) ; बाल. १।११–१२ पृ. १४ पुंसु ( पुंस ).

(३) हिगृ. २०।१।५ ; संर. ८११.

(४) भागृ. १।२२.

(५) वागृ. १९.

## आग्निवेश्यगृह्यसूत्रम्

पुंसवने पक्षः नक्षत्रं च

[1]आपूर्यमाणपक्षे पुण्ये नक्षत्रे ॥

## पारस्करगृह्यसूत्रम्

पुंसवने पुंनक्षत्रम्

[2]यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत तदहः ॥

यदहः यस्मिन्नहनि पुंसा नक्षत्रेण पुनर्वसुपुष्यादिना चन्द्रमसो योगो भवति तदहः । ¶ कभा.

## कौशिकगृह्यसूत्रम्

पुंसवने पुंनक्षत्रम्

[3]रजउद्वासायाः पुंनक्षत्रे ॥

नक्षत्रकल्पे उक्तानि पुंनक्षत्राणि । दाकेटी.

## वैखानसगृह्यसूत्रम्

पुंसवने शुक्लपक्षः अहःशुद्धिः पूर्वाह्णश्च

[4]शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे ॥

## बैजवापगृह्यसूत्रम्

पुंसवने शुक्लपक्षः अहःशुद्धिः पुंनक्षत्रं च

[5]आपूर्यमाणपक्षे पुण्याहे यदहः पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ॥

---

¶ जभा., हभा, गभा., विभा. कभावत् ।

(१) आग्निगृ. २।१।१.

(२) पागृ. १।१४।३ ; स्मृच. १७ युज्येत तदहः ( युक्तः स्यात् ) ; पमा. ४३८ स्मृचवत् ; मपा. ३५० पुंसा ( पुंसां ) युज्येत तदहः ( स्यात् ) ; संप्र. १६७ युज्येत तदहः ( स्यात् तत्र पुंसवनम् ) ; मुक्ता. ७८ पुंसा न ( पुंन ) शेषं स्मृचवत् ; संम. १२ स्मृचवत् ; विपा. ९५ ( तदहः० ).

(३) कौसू. ३५।२. (४) वैगृ. ३।११.

(५) ब्रक. ८२ युक्तः स्यात् ( युज्येत् ) ; चका. ७३३ आपूर्य ( पूर्य ) पुण्याहे यदहः ( यथा ) ; स्मृसा. १ (=) युक्तः स्यात् ( युज्यते ) ; संप्र. १६९, १७१ स्मृसावत् ; पुम. ४३२ यदहः ( यदा ).

अनेन उभयोः समानकालत्वं दर्शितम् । ततश्च पुंसवनोक्त एव तिथ्यादिनिर्णयोऽत्रापि § ज्ञेयः ।

संप्र. १७१

## वसिष्ठः

पुंसवने चन्द्रबलं नक्षत्रं राशिः तिथिः ग्रहयोगाः वाराश्च

[1]कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा
मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे ।
हित्वा कर्कटकं नृयुग्ममबलामन्येऽप्यरिक्ते तिथौ
शुद्धे नैधनधाम्नि शुक्रशशभृद्विन्मन्त्रिणां वासरे ॥

( १ ) स्फीततनौ तुषारकिरण इत्यनेन बलवति चन्द्रे कर्तव्यमित्यभिसंहितम् । तत्र लल्लः— ' प्रतिपत्पूर्वदशाहं मध्यबलः शीतगुः सिते पक्षे । संपूर्णबलः पूर्णः कृष्णे पक्षे च पञ्चमी यावत् ॥ ' इति । हित्वा कर्कटकं नृयुग्ममबलामन्येष्विति । नृयुग्मं मिथुनम् । अबला कन्या । एतांस्त्रीन् राशीन् वर्जयित्वा अन्येषु नवराशिषु पुंसवनं कार्यम् । अरिक्ते तिथाविति । चतुर्थीनवमीचतुर्दश्यो रिक्ताः, तद्व्यतिरिक्ते तिथावित्यर्थः । शुद्धे नैधनधाम्नीति । नैधने अष्टमस्थाने शुद्धे सर्वग्रहरहिते सतीत्यर्थः । शुक्रशशभृद्विन्मन्त्रिणां वासरे इति । शुक्रसोमबुधबृहस्पतीनां वारेष्वंशेषु च पुंसवनं कार्यम् । † प्रपा. ११३

( २ ) तुषारकिरणः चन्द्रः । स्फीततनुः पूर्णबलः । तत्समयं लल्लः— ' प्रतित्पूर्वदशाहं मध्यबलः शीतगुः सिते पक्षे । संपूर्णबलः पूर्णः कृष्णे पक्षे तु पञ्चमीं यावत् ॥' इति । प्रतिपत् पूर्वा यस्मिन् । तेन शुक्लैकादशीप्रभृति

---

§ अनवलोभनेऽपीत्यर्थः, ' अथ पुंसवनानवलोभने करोति ' इत्युपक्रमात् ।

† विपा. प्रपागतम् । संर. प्रपागतं संकौगतं च ।

(१) वसं. २५।१ ; प्रपा. ११२–११३ मासि ( मासे ) मन्येऽप्य ( मन्येष्व ) श्रीधरीये ; संसौ.

कृष्णपञ्चमीपर्यन्तः कालः प्रशस्त इति ज्ञायते । वैष्णवः श्रवणः । पुष्यासंभवे चैषः , ' तृतीये गर्भमासे तिष्येणोपोषितायाः ' इति गृह्यात् , तिष्येणेति प्राशनेन संबध्यत इति व्याख्यानात् । * संकौ. ५४

[१]'पुंनाम श्रवणं तिष्यः स्वाती हस्तः पुनर्वसुः ।
मूलं प्रोष्ठपदं चानुराधा मृगशिरोऽश्विनी ॥
[२]'चन्द्रे लग्नेऽतिसंपत्त्याच्छुभवीक्षितसंयुते ।
सीमन्तस्यापि संपत्त्यादिष्टः पुंसवनस्य यः ॥
[३]'अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युस्ते शुभावहाः ।
एवं सम्यक्परीक्ष्यैव कुर्यात्पुंसवनक्रियाम् ॥
[४]'मृत्युश्च सौरेस्तनुहानिरिन्दो-
मृतप्रजा पुंसवने बुधस्य ।
काकी च वन्ध्या भवतीह शुक्रे
स्त्रीपुत्रलाभो रविभौमजीवैः ॥

## नारदः

पुंसवने मासेश्वरबलं चन्द्रताराबलं च, दिवाकर्तव्यता

[५]'चतुर्थे मासि षष्ठे वाऽप्यष्टमे वा तदीश्वरे ।
बलोपपन्ने दम्पत्योश्चन्द्रताराबलान्विते ॥

इदं च चन्द्रताराबले कार्यम् , पुंसवनं प्रकृत्य 'बलोप ... न्विते ॥ ' इति नारदवचनात् । संम. १२-१३

[१]'नराणां सवनं पुंसः सीमन्तः कर्णवेधनम् ।
नामकर्मक्रिया चौलं विद्यारम्भोपनायने ।
दिवा कार्याणि चान्यानि कर्तव्यानि दिवैव हि ॥

## बृहस्पतिः

पुंसवनादिमासप्रयुक्तकर्माणि गुरुशुक्रास्ताधिकमासेष्वपि कार्याणि, शुभा द्रेष्काण-लग्न-होरा-राशयः, सीमन्तोन्नयनमुहूर्तातिदेशः

[२]'मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः ।
न दोषकृत्तदा मासलक्षणो बलवानिति ॥
[३]'वृद्धिर्दास्यं पुंसवादि प्रेतकर्मानुमासिकम् ।
नित्यं मास्यधिकेऽन्यत्तु सर्वं दैवादि चोत्तरे ॥

इदं च गुरुशुक्रास्ताधिमासादिष्वपि कार्यम् , द्वितीयत्वादिना मासनियमात् । तथा च बृहस्पतिः— ' मास ... चोत्तरे ॥ ' इति । मासलक्षणः कालः इति शेषः । $ संप्र. १६९

[४]'गुरुशुक्रबुधेन्दूनां द्रेक्काणदिवसांशकाः ।
तेषामुदयहोराश्च पुंसवेऽतिशुभावहाः ।
कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः ॥

---

* शेषं प्रपागतम् ।

३९-४० मन्येऽप्य ( मन्येष्व ) ; विपा. ९५ ऽप्यरिक्ते ( षु युग्मे ) श्रीधरीये ; संकौ. ५४ संसौवत् , मदनरत्ने कालविधाने ; आन. १४६ (कुर्यात् ... मासि) एतावदेव, ज्योतिषे ; संव. ५१ कौस्तुभे मदनरत्ने कालविधाने प्रयोगरत्ने च ; संर. ८११ ऽप्यरिक्ते तिथौ ( ष्वरिक्तातिथौ ) मदनरत्ने कालविधाने.

(१) वसं. २५।२ नाम ( नाम्नि ) ; संसौ. ४० पूर्वार्धे ( पुंनाम श्रवणं तिष्यं स्वाती हस्तपुनर्वसू । ).

(२) वसं. २५।३ ; संसौ. ४० द्वितीयपादे ( भृगुसंयुतवीक्षिते ).

(३) प्रपा. ११३ ; ज्योनि. ११० स्था ग्रहाः ( स्थानगाः ) म्यक्प ( म्यङ् नि ) क्रियाम् (क्रियाः) ; संग. ४१५ म्यक्प ( म्यङ् नि ). (४) सिन्धु. ८३३.

(५) ज्योमा. १८।१ बलोपपन्ने द ( बलसंपन्नद ) ; संसौ. ४३ प्रथमचतुर्थपादमात्रम् ; संम. १२-१३ उत्त. ; ज्योनि. ११० ; कृम. ८३३ (=) उत्त. ; पुम. ४३२ उत्त. ; संर. ८११ तदीश्वरे (शुभे दिने) पू. : ८१२ उत्त.

$ ज्योनि. संप्रगतम् । संग., संर. संप्रवत् ।

(१) प्रपा. २०० ; संप्र. ३११ सीमन्तः (सीमन्तं).

(२) प्रपा. ११३ मासप्र ( मासि प्र ) ; संप्र. ३६ प्रयुक्त ( प्रत्युक्त ) प्रयोगपारिजाते ; संसौ. ४५ उत्तरार्धे ( न दोषकृन्मलो मासो गुर्वादित्यादिकं तथा । ) ; संप्र. १६९ ; विपा. ९५ ; ज्योनि. १०९ सलक्षणो ब ( सो लक्षणैर्ब ) ; संकौ. ५५ ( तदा ... निति० ) ; संग. ४१४ ; संव. ५१ संसौवत् ; संर. ८१२.

(३) संप्र. १६९ सर्वं दै ( सर्वदै ) ; विपा. ९६ तृतीयपादे ( नित्यमास्यधिके तत्तु ) विश्वादर्शे ; संकौ. ५५ वादि ( वाद्यं ) ( ऽन्यत्तु ... चोत्तरे० ) ; संग. ४१५ मास्यधि ( मासाधि ) शेषं संप्रवत् .

(४) प्रपा. ११३ ; संप्र. १६९ द्रेक्काणदि ( द्रेष्काणा दि ) होराश्च ( होरा च ) ; संम. १३ तृतीयार्धमात्रम् ; ज्योनि. ११० द्रेक्काण ( द्रेष्काण ) होराश्च ( होरा च ) वहाः ( वहा ) ; संकौ. ५५ द्रेक्काणदि ( द्रेक्काणा दि )

गुरुशुक्रबुधेन्दूनां वासरा ग्राह्याः । एतेषामेव द्रेष्काणरूपा दिवसांशका ग्राह्याः । द्रेष्काणश्च राशेस्तृतीयोंऽशः । एतदुक्तं भवति— मेषलग्ने तृतीयद्रेष्काणाधीशो गुरुः । तेन गुरुद्रेष्काणे कार्यम् । एवमन्यत्राप्यूह्यम् । उदयाः लग्नानि । तानि च गुर्वादीनामेव ग्राह्याणि । एवं होरा दिनपञ्चदशो भागः । कुलीरः कर्कटः । शेषाः नव राशयः । § संप्र. १७०

[1]**अनुक्ते चापि राशौ तु शुभं स्याच्छुभवीक्षिते ।**
**कन्यायां न प्रशंसन्ति शुभदृष्टे युतेऽपि वा ॥**

अत्र प्रतिप्रसवमाह स एव— अनुक्त इति । अनुक्ते निषिद्धेऽपि राशौ शुभग्रहवीक्षिते शुभं भवति । कन्याराशौ तु न तथेत्यर्थः । संप्र. १७०

[2]**सीमन्तस्य समुद्दिष्टः कालो नक्षत्रपूर्वकः ।**
**प्रतिगर्भं पृथक् कार्यं सर्वं पुंसवने शुभम् ॥**

## यमः

पुंसवने अधिकमासावर्जनं पुंनक्षत्रं च

‡**गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके ।**
**सपिण्डीकरणे नित्ये जातनामादिकर्मसु ।**
**सीमन्ते पुंसवे चैव नाधिमासं विवर्जयेत् ॥**

[3]**यदहः पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यादिति ॥**

## गर्गः

पुंसवने वाराः पुंनक्षत्रं च, पुंनक्षत्रगणना च

[4]**सौम्ये मृतप्रजा मन्दे मृत्युर्वन्ध्या च भार्गवे ।**
**सोमे दुग्धविहीना स्याच्छेषाः सर्वार्थसिद्धिदाः ॥**
[3]**कुर्यात्पुंसवनाख्यं तु पुंनामर्क्षे शुभे दिने ।**
**पुंनाम श्रवणं तिष्यः स्वाती हस्तपुनर्वसू ।**
**मूलं प्रौष्ठपदं चानुराधा मृगशिरोऽश्विनी ॥**

## आश्वलायनः

पुंसवने नक्षत्राणि ग्रहयोगाश्च

[4]**पुंनक्षत्रेण कार्यं स्याद्गर्भाधानं विपश्चिता ।**
**तथा पुंसवसीमन्तबलयश्च विधानतः ॥**
[5]**वर्जयेत् सर्वकर्माणि विपत्प्रत्यरनैधनैः ।**
**चन्द्राष्टमे च यत्नेन वधशत्रुव्ययैस्तथा ॥**
[6]**सावनेन तु मासेन तृतीये वा चतुर्थके ।**
**मासि तिष्येण मतिमान् कुर्यात् पुंसवनक्रियाम् ॥**

---

§ संकौ., संर. संप्रगतम् ।

‡ अस्य व्याख्यानानि 'भार्यागमनकालः' इत्यस्मिन् प्रकरणे ( सं. का. पृ. २४१०–२४११ ) द्रष्टव्यानि । होराश्च ( होरा च ) तृतीयार्धे नास्ति; संग. ४१५ द्रेक्काणादि ( द्रेःकाणा दि ) होराश्च ( होरा च ) ; कृम. ८३३ (=) तृतीयार्धमात्रम्; संर. ८१२ संप्रवत्, तृतीयार्धे नास्ति.

(१) प्रपा. ११३ ; संप्र. १७० वा ( च ) ; ज्योनि. ११० क्ते चापि ( क्तमपि ) ; संकौ. ५५ वा ( च ) उत्त. ; संग. ४१५ अनुक्ते चापि ( अन्यस्मिंश्चैव ) पू. ; संर. ८१२ दृष्टे युतेऽपि वा ( दृष्टियुतेऽपि च ) उत्त.

(२) प्रपा. १११.

(३) स्मृच. ३७३ ( जात ... चैव० ). शेषस्थलादिनिर्देशाः 'भार्यागमनकालः' इत्यस्मिन् प्रकरणे ( सं. का. पृ. २४१०-२४११) द्रष्टव्याः .

(१) चका. ७३२ ; गभा. १४५ यदहः पुंसा न ( यदा पुंन ) ; सिन्धु. ८३३ गभावत् ; पुम. ४३२.

(२) संसौ. ४१.

(३) संप्र. १७० ; सिन्धु. ८३३ ( पुंनामा श्रवणस्तिष्यो हस्तश्चैव पुनर्वसुः । अभिजित् प्रौष्ठपाच्चैव अनूराधास्तथाऽश्वयुक् ॥ ) एतावदेव ; संकौ. ५५ प्रौष्ठ ( प्रोष्ठ ) ; संग. ४१५ हस्तपुनर्वसू ( हस्तः पुनर्वसुः ) ; संच. ५१ प्रौष्ठपदं ( प्रोष्ठपदा ) ; संर. १६६ ( पुंनाम श्रवणस्तिष्यो हस्तश्चैव पुनर्वसू । अभिजित् प्रोष्ठपाच्चैव अनूराधा तथाऽश्वयुक् ॥ ) एतावदेव : ८१२ द्वितीयतृतीयार्धे पूर्ववत् .

(४) आश्वस्मृ. ११।५२ ; प्रपा. ११५.

(५) आश्वस्मृ. ११।५३ . शेषस्थलादिनिर्देशाः 'भार्यागमनकालः' इत्यस्मिन् प्रकरणे ( सं. का. पृ. २४११ ) द्रष्टव्याः .

(६) आश्वस्मृ. ११।५४ ; प्रपा. ११५ प्रथमपादे ( श्रवणेन तु मासेऽपि ).

[1]अनभीष्टो यदि भवेत्तिष्यस्तु श्रवणेऽपि वा ।
सावित्र्यादित्याश्वयुग्भिर्वैश्वदेवेन वा द्विजः ॥
[2]एतैर्ऋक्षैश्च सीमन्तो बलिश्चापि विधीयते ।
प्राजापत्यमरुत्पौष्णधिष्ण्ये वाऽपि त्वसंभवे ॥

## लघ्वाश्वलायनः

पुंसवने नक्षत्राणि

[3]पुष्यादित्याश्विनीहस्तविधिमूलोत्तरा मृगः ।
हरिपूषानुराधाश्च शस्तं( ? स्ताः ) पुंसवनादि-कम् ( ? के ) ॥

## जातूकर्ण्यः

पुंसवने मलमासावर्जनम्

[4]वृद्धिर्दास्यं पुंसवाद्यं प्रेतकर्मानुमासिके ।
मलमासेऽपि कुर्वीत......... ॥

## स्मृत्यन्तरम्

पुंसवने तिथयः

[5]रिक्ताश्च पर्व नवमीं त्यक्त्वा पुंसवने शुभाः ॥

(१) रिक्ताः चतुर्थीनवमीचतुर्दश्यः । नवम्याः पुनरुपादानं दोषाधिक्यख्यापनाय ।
* संप्र. १६९

(२) नवमीं त्यक्त्वेति अन्यरिक्ताया अनुकल्पत्वार्थं नवम्यामधिकदोषत्वार्थं वा । कृभ. ८३३

---

* संग. संप्रवत् ।

(१) आश्वस्मृ. ११।५५ द्वितीयपादे ( तिष्यश्रवण वाचयेत् ) ; प्रपा. ११५ उत्तरार्धे ( सावित्रादिग्रहैः सम्यग्बलयुक्ते मुहू... ॥ ).

(२) आश्वस्मृ. ११।५६ धिष्ण्ये वाऽपि त्व ( बुध्निर्वा ऋतु ); प्रपा. ११५.

(३) लघ्वाश्वस्मृ. ४।३.

(४) संर. ८१३.

(५) प्रपा. ११३ रिक्ताश्च ( रिक्तां च ) नृसिंहः ; संप्र. १६९ नृसिंहः ; सिन्धु. ८३३ रिक्ताश्च पर्व ( रिक्तां पर्व च ) नृसिंहः ; ज्योनि. ११० सर्वं प्रपावत् ; संकौ. ५५ ; संग. ४१५ नृसिंहः ; संर. ८१२.

## आनिर्दिष्टकर्तृकवचने

पुंसवने तिथिनक्षत्रयोगकरणानि ग्रहयोगाः चन्द्रबलं च

[1]कुर्यात्पुंसवनं सुयोगकरणे नन्दे सभद्रे तिथौ
भाद्राषाढनृमेश्वरेषु नृदिने वेधं विनेन्दौ शुभे ।
अक्षीणे च त्रिकोणकण्टकगते सौम्ये शुभे वृद्धिगे
श्रीशुद्धया घटयुग्मसूर्यगुरुमेषूद्यत्सु मासत्रये ॥

[2]विवाहगर्भसंस्कारे दंपत्योः शशिनो बलम् ।
धवाभावेऽङ्गनावीर्यं भर्तुरेवान्यकर्मसु ॥

## वराहः

पुंनक्षत्रगणना

[3]हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरस्तथा पुष्यः ।
पुंसंज्ञितेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ॥

(१) पुंनक्षत्राणि च रत्नकोशे अभिहितानि—हस्त इति । धिष्ण्यानि नक्षत्राणि । * स्मृच. १७

(२) पुंनक्षत्राणि च रत्नकोशे दर्शितानि— हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरः पुष्यमिति । अनुराधाऽपि पुंनक्षत्रम् , 'अनूराधान् हविषा वर्धयन्तः' इति श्रुतेः । ज्योतिःशास्त्रेऽप्येवम् । § गभा. १४५

---

* मपा. स्मृचवत् । चका., मुक्ता., संम., संग. स्मृचगतम् ।

§ सिन्धु. गभावत् ।

(१) निप. २३८.

(२) संग. ४१६.

(३) स्मृच. १७ कार्येष्व ( कार्येषु ह्ये ) रत्नकोशे ; चका. ७३३ शिर ( शिरा ) रत्नकोशे ; मपा. ३५१ सर्वं स्मृचवत् ; प्रपा. ११३ सुर्मृग ( सु मृग ) संज्ञिते ( संज्ञके ) तानि ( तान्येव हि ) : १२० श्रवणः ( श्रवणं ) ; गभा. १४५ शिरस्तथा पुष्यः ( शिरः पुष्यम् ) पू., रत्नकोशे ; मुक्ता. ७८ ( हस्तो मूलश्रवण-पुनर्वसुमृगशिरस्तथा तिष्यः पुमांसः ॥ ) एतावदेव, रत्नकोशे ; संम. १२ (=) सुर्मृगशिर ( सुमृगशिरा )

(३) कारिकायाम् – " पुंनक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसुः । अभिजित् प्रोष्ठपाश्चैव अनूराधाऽश्वियुक् श्रुतिः ॥ " । वसिष्ठः – ' सार्पाच्चतुष्कं वसुवारिरुद्रत्वाष्ट्रत्रयं विश्वयमान्त्यशक्राः । स्त्रीलिङ्गताराः श्रवणेन्दुमूलतारा न पुंसः पुरुषाः परे स्युः ॥ ' ।

ज्योनि. ११०

## नृसिंहः

पुंसवने सीमन्तोन्नयनकालातिदेशः, नक्षत्राणि

[1]सीमन्तोन्नयनस्योक्तमासवारर्क्षराशिषु ।
पुंसवं कारयेद्विद्वान् सहैवैकदिनेऽथवा ॥

[2]अपि पुंसवनं कार्यं दम्पत्योरनुकूलभे ।
जन्मादि वर्जयेदाद्यायंशकं विपदादिषु ॥

## माधवीये

पुंसवने नक्षत्राणि ग्रहयोगा राशयश्च

[3]कुर्यात्पुंसवनं रमारमणभे पुष्येऽपि वा सद्ग्रहे
लग्नस्थे निधने ग्रहेण रहिते मासे तृतीये बुधः ।
शस्तौ दृष्ट्युदयौ सितामृतरुचोरत्र क्रमात्कीर्तिता
वीणाकर्कटकन्यका भ शुभदा पुंराशयोऽन्ये शुभाः ॥

वीणा मिथुनराशिः । प्रपा. ११४

संज्ञिते (संज्ञके) ष्वेतानि (ष्वेनानि); सिन्धु. ८३३ संज्ञिते (संज्ञके); ज्योनि. १०९ मूलं (मूलः) शेषं सिन्धुवत्; संग. ४१५ संज्ञितेषु (संज्ञेषु) ज्योतिर्निबन्धे; पुम. ४३२ शिरस्तथा पु (शिरः पु) रत्नकोशे.

(१) प्रपा. ११३; धप्र. ३६ क्तमासवारर्क्ष (क्तं तिथिवासर) प्रयोगपारिजाते; संब. ५१ मासवारर्क्ष (तिथिवारभ) सहैवै (सह वै).

(२) प्रपा. ११३.

(३) प्रपा. ११३–११४.



## श्रीपतिः

पुंसवने नक्षत्राणि

[1]श्रवणः सकरः पुनर्वसुर्निर्ऋतेर्भं च पुष्यको मृगः ।
रविभूसुतजीववासराः कथिताः पुंसवनादिकर्मसु ॥

## राजमार्तण्डे

पुंसवने शुक्लः पक्षः

*[2]प्राप्ते तृतीयमासे स्फुरदिन्दुकलाकलापपक्षे च ।
पुंसवनं पुत्रेच्छुर्गर्भे गर्भे प्रकुर्वीत ॥

## विधिरत्ने

पुंसवने नक्षत्र–लग्न–ग्रहयोगाः

[3]तिष्ये वैष्णवभे विशुद्धनिधने शुक्रेन्दुदृष्टे युते
लग्ने तद्दिवसे यमेन्दुभवनस्त्रीभ्योऽन्यलग्नं शुभम् ।
पूर्वाह्णे सुरपूजिते व्ययगते दृष्टे चतुर्थे विधावेतत्पुंसवनं परत्र विधिना मासे तृतीये ततः ॥

## ऋक्षोच्चयः

पुंसवने नक्षत्र–राशि–ग्रहयोगाः

[4]हस्तार्द्रातिष्यमूलानि सौम्यो विष्णुः पुनर्वसुः ।
प्रोष्ठपदाद्वयं प्रोक्तमाषाढाद्वयमेव च ॥
श्रेष्ठानि कथितान्येव धिष्ण्यान्येकादशैव तु ।
स्वातौ तथा मघायां च रेवत्यां फाल्गुनीद्वये ॥

$ अस्य व्याख्यानं पुंसवनविधिप्रकरणे (सं. का. पृ. २५३९–२५४०) द्रष्टव्यम् ।

(१) संसौ. ४१.

(२) आकौ. ४९७; संसौ. ४१ व्यवहारचण्डेश्वरे.

(३) प्रपा. ११३.

(४) संसौ. ४२, ४४.

अश्विन्यां चैव नक्षत्रे यदा पुंसवनं भवेत् ।
नरः संपद्यते दैवाद्यदा स्याद्गुरुतल्पगः ॥
लुब्धो ह्रस्वतनुः क्रूरो नारी चेत् कुलटा भवेत् ।
शेषाणि दश धिष्ण्यानि निन्दितानि विशेषतः ॥
मीनवृश्चिककुम्भेषु चापगोसिंहकन्यकाः ।
युक्ताः पुंसवनाद्येषु सुखपुत्रादिवाञ्छया ॥
केन्द्रत्रिकोणभवनेषु शुभस्थितेषु
पापेषु षट्त्रिदशलाभगृहस्थितेषु ।
जीवेन्दुभानुभृगुभूमिजमन्दिरेषु
लग्नेषु लग्नपरिशुद्धशुभांशकेषु ॥

## प्रयोगपारिजाते

पुंसवनादिषु चान्द्रमासदोषाभावः

[१]अन्नप्राशनतः सर्वा गर्भाधानादिकाः क्रियाः ।
उक्तकाले भवन्त्येता दोषो नाऽऽषाढपुष्ययोः ॥

## मुहूर्तचिन्तामणिः

पुंसवने स्त्रियाश्चन्द्रबलम् , सीमन्तोन्नयनकालातिदेशः

$[२]स्त्रीणां विधोर्बलमुशन्ति विवाहगर्भ-
संस्कारयोरितरकर्मसु भर्तुरेव ॥
[३]पूर्वोदितैः पुंसवनं विधेयं
मासे तृतीये तु... ॥

पूर्वोदितैरिति । पूर्वं सीमन्तोन्नयने उदितैः प्रोक्तैः तिथिवारनक्षत्रलग्नैरुपलक्षिते तृतीये मासि पुंसवनं विधेयमिति तदर्थं पुंसवनाख्यं कर्म विधेयम् । विशेषमाह वसिष्ठः— 'कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे । हित्वा कर्कटकं नृयुग्ममबलामन्येष्वरिक्तातिथौ शुद्धे नैधनधाम्नि शुक्रशशभृद्दिन्मन्त्रिणां वासरे ॥' इति । नैधनधाम्नि अष्टमस्थाने सर्वग्रहरहिते । यदाह वसिष्ठः— 'अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युस्ते शुभावहाः । एवं सम्यक्परीक्ष्यैव कुर्यात् पुंसवनक्रियाम् ॥' इति । वारास्त्वत्र सौम्यग्रहाणामुक्ताः । बृहस्पतिरप्यत्र विशेषमाह— 'गुरुशुक्रबुधेन्दूनां द्रेष्काणदिवसांशकाः । तेषामुदयहोराश्च पुंसवेऽतिशुभावहाः ॥' इति । अन्यैस्तु श्रीपत्यादिभिः पुंवारा एव प्रशस्ता अभिहिताः । तत्फलान्याह गर्गः— 'सौम्ये मृतप्रजा मन्दे मृत्युर्वन्ध्या च भार्गवे । सोमे दुग्धविहीना स्याच्छेषाः सर्वार्थसिद्धिदाः ॥' इति । अत्र वचनद्वयप्रामाण्याद्विकल्पः । केचित्तु यदा तृतीये मासि पुंसवनं चिकीर्षितं तदा सौम्यवारा एव ग्राह्याः , यदा चतुर्थे मासि गर्भस्य व्यक्तत्वात् पुंसवनं चिकीर्षितं तदा पुंवारा एव ग्राह्या इत्याहुः ।

नक्षत्राणि ह्यत्र पुंनामानि ग्राह्याणि । तानि 'श्रवणः सकरः' इति श्रीपतिनोक्तानि । वसिष्ठेन तु पुंनामान्यभिहितानि यथा— 'पुंनाम श्रवणं तिष्यः स्वाती हस्तः पुनर्वसुः । मूलं प्रोष्ठपदं चानुराधा मृगशिरोऽश्विनी ॥'। विशेषमाह ऋक्षोच्चयः— 'हस्तार्द्रातिष्यमूलानि सौम्यो विष्णुः पुनर्वसुः । प्रोष्ठपदाद्वयं प्रोक्तमाषाढद्वयमेव च ॥ श्रेष्ठानि कथितान्येव धिष्ण्यान्येकादशैव तु । स्वातौ तथा मघायां च रेवत्यां फाल्गुनीद्वये ॥ अश्विन्यां चैव नक्षत्रे यदा पुंसवनं भवेत् । नरः संपद्यते दैवाद्यदा स्याद् गुरुतल्पगः ॥ लुब्धो ह्रस्वतनुः क्रूरो नारी चेत्कुलटा भवेत् । शेषाणि दश धिष्ण्यानि निन्दितानि विशेषतः ॥'। तदेतयोर्विरुद्धयोर्वाक्ययोर्देशाचारतो व्यवस्था । तत्र वसिष्ठवाक्येन दाक्षिणात्या व्यवहरन्ति । प्राच्यास्तु ऋक्षोच्चयवाक्येन । ‡ पीटी.

## मुहूर्तगणपतौ

पुंसवने नक्षत्र–वार–ग्रहयोगाः , मासेश–चन्द्र–लग्नबलानि

[१]पुनर्वसुद्वये मूले श्रवणे मृगहस्तयोः ।
गुरौ भौ( ? गुरुभौ )मार्कवारेषु प्रोक्तं पुंसवनादिकम् ।
रेवत्यां त्र्युत्तरेऽप्येके शुक्रे चन्द्रे बुधे अगुः ॥

---

$ अस्य व्याख्यानं 'भार्यागमनकालः' इत्यस्मिन् प्रकरणे ( सं. का. पृ. २४१९ ) द्रष्टव्यम् ।

(१) धप्र. ३६. (२) मुचि. ५।९ ; संब. ५१. (३) मुचि. ५।१० ; संब. ५१, ५५.

‡ संब. पीटीगतम् ।

(१) संब. ५१.

मासेशे सबले चन्द्रे लग्ने पुंभांशके शुभे ।
सौम्यके( ? सौम्ये के )न्द्रत्रिकोणस्थे पापे
लाभत्रिषट्कगे ॥

अथ मासेश्वराः— ' मासाधिपो भृगुर्भौमो गुरुः सूर्येन्दुसूर्यजाः । बुधो लग्नपतिश्चन्द्रः सूर्यश्च ते यथाक्रमम् ॥ '।
संव. ५१

## शौनककारिका:

पुंसवने तिथिवारनक्षत्राणि

[1]तत्र कुर्यात्तिष्यनक्षत्रे श्रवणे वाऽथवा स्त्रियाः ।
जन्मर्क्षानुगुणे ज्योतिःशास्त्रज्ञैर्विहिते शुभे ॥
[2]नक्षत्रे विदधीतेदं तिथिवारगुणान्विते ॥

(१) शौका. २ पृ. ३४ ; प्रपा. ११५.

(२) शौका. ३ पृ. ३४ तेदं ( यीत ) ; प्रपा. ११५.

## कुमारिलकारिका:

पुंसवने नक्षत्रम्

[1]अथापरेद्युस्तिष्यर्क्षे पत्नीं कृत्वा समीपतः ॥

## रेणुकारिका:

पुंसवने पक्षनक्षत्रवारग्रहयोगलग्नानि

[2]आपूर्यमाणपक्षे स्यादिति शौनकसूत्रतः ।
हस्तश्रवणपुष्येषु मृगे मूले पुनर्वसौ ॥
[3]रविभौमेज्यवारेषु त्रिकोणस्थे शुभग्रहे ।
पुंलग्ने कण्टकस्थे च गुरौ क्रूरैर्विवर्जिते ॥

(१) कुका. १।५।३ ; प्रपा. ११४.

(२) रेका. २-३ पृ. ६.

(३) रेका. ४ पृ. ६ ; संग. ४१६ शुभग्रहे ( शुभे ग्रहे ).

# पुंसवनप्रयोगः

## बौधायनगृह्यसूत्रम्

ब्राह्मणभोजनम् , पुण्याहवाचनम् , होमः , आस्ये आज्यशेषप्रच्योतनम्

**'ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥**

**अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति– 'प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सहसाम इन्द्र । विश्वैर्देवै रातिभिः संरराणः पुंसां बहूनां मातरः स्याम स्वाहा ॥' इति ॥**

**अथाऽऽज्याहुतीरुपजुहोति– 'गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्' इति तिसृभिरनुच्छन्दसम् ॥**

**स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥**

**अथास्या आज्यशेषमास्ये प्रच्योतयति– 'अस्मे देवासो वपुषे चिकित्सत' इति चतसृभिरनुच्छन्दसम् ॥**

## आश्वलायनगृह्यसूत्रम्

उपवासः , माषयवयुक्तदधिप्राशनम् , स्थालीपाकः , हृदयदेशस्पर्शः

**¶'तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ माषौ यवं च दधि प्रसृतेन प्राशयेत् ॥**

(१) सरूपवत्साया गोरिति । †समानं रूपं यस्याः वत्सेन सा समानरूपवत्सा । तस्याः समानरूपवत्सायाः । कस्याः? गोः । गोग्रहणमपार्थकम् । कस्मात् ? सरूपवत्साया दधनीत्युच्यमाने गोरेव संप्रत्ययो भवति । तस्मादविशेषोपदेशात् अन्याऽपि या समानरूपवत्सा तस्या अपि ग्रहणं स्यात् । का पुनः सा ? अजा । तेन अजाग्रहणं मा भूदित्यतो गोग्रहणं क्रियते । तथाऽपि न कर्तव्यम् । कस्मात् ? विद्यमानायां गवि कथमिव अजायाः प्रवृत्तिर्भविष्यतीति । ब्रवीति– स्यात् प्रवृत्तिः । कथम् ? यदा गोरसमानरूपवत्सा अजा च समानरूपवत्सा तस्या अग्रहणं स्यात् । तदा अजायाः प्रवृत्तिः स्यात् । तेन समानरूपवत्साया अभावे असमानरूपवत्साया अपि स्यात् इत्यतो गोग्रहणं क्रियते । द्वौ द्वौ माषाविति वीप्सा कस्मात् ? बह्वर्थत्वात् वीप्सायाः प्रतिप्रसृतौ कथं द्वौ द्वौ माषौ स्यातामिति । नेत्युच्यते । वक्ष्यति एवं त्रीन् प्रसृतानिति । तस्माद्वीप्सा न कर्तव्या । नेत्युच्यते । कर्तव्या वीप्सा । यदि न क्रियते माषयोर्यवस्य च प्रसृतिविधानं न स्यात् । कस्मात् ? सप्तम्युपदेशाद्दध्नः । यदि वीप्सा न क्रियते तदा दधन्येव प्रक्षेपः स्यात् माषयोर्यवस्य च । वीप्सा कथम् ? प्रतिप्रसृतिसंयोगार्थम् । एवं द्वौ द्वौ माषौ यवं च दधिप्रसृतेन प्राशयति । तत्र दधिग्रहणं न कर्तव्यम् । कस्मात् ? ¶ उच्यते । पूर्वं दधिग्रहणं सप्तम्या निर्दिष्टम् । तेन दध्नः नः प्राशनमेव न स्यात् । तेनावश्यं द्वितीयमुक्तं दधिग्रहणं कर्तव्यम् । पुरस्तादेव द्वितीयासंप्रयोगस्तु सिद्धार्थः । माषयोर्यवस्य च दधनि प्रक्षेपो न स्यात् इष्यते च । तस्मात् सप्तमी-

---

¶ कृभव्याख्यानं सीमन्तोन्नयनविधिप्रकरणे हारीतवचने द्रष्टव्यम् ।

† वत्सेन सरूपा सरूपवत्सेति तृतीयातत्पुरुषे राजदन्तादित्वकल्पनया वत्सशब्दस्य परनिपात इत्यर्थः । वस्तुतस्तु बहुव्रीह्याश्रयणमेवाक्लिष्टम् ।

¶ अत्र ' पूर्वं दधिग्रहणात् ' इत्यर्थको ग्रन्थ उच्छिन्न इति भाति ।

(१) बौगृ. १।९।२–६.

(२) आगृ. १।१३।२ ; अप. १।११–१३ पृ. २५ सरूप ( स्वरूप ) ; ब्रक. ८१ द्वौ द्वौ + ( तु ) ; प्रपा. ११४ ब्रकवत् ; विपा. ९४ ( तिष्येण ) एतावदेव ; संकौ. ५५ ( तिष्येणोपोषितायाः ) एतावदेव ; कृभ. ८३६ (=) ( पत्नीं प्राशयेत् ) एतावदेव.

निर्दिष्टमपि दधिग्रहणमवश्यं कर्तव्यम्। $तस्मिन्न क्रियते यद्युपरिष्टात्क्रियते प्राशनं न स्यात्। तस्मादुभयत्राऽऽरभ्यते। देभा.

(२) इदं तु पुंसवनम्। तत्र प्राजापत्यस्य स्थालीपाकस्याऽऽज्यभागान्तं कृत्वा वक्ष्यमाणं कर्म कुर्यात्। समानं रूपं यस्य स सरूपः। सरूपो वत्सो यस्याः सा तथोक्ता। गोग्रहणं सरूपवत्साया अभावे असरूपवत्सा गौर्ग्राह्या नासरूपवत्सां त्यजेदित्येवमर्थम्। वीप्सावचनं कथम्? प्रतिप्रसृतं द्वौ द्वौ माषौ स्यातामिति। यदि वीप्सा न क्रियेत स्थालीस्थदधन्येव माषयोर्यवस्य च प्रक्षेपः स्यात्, तस्य सप्तमीनिर्दिष्टत्वात्। तस्मादावृत्त्यर्थे वीप्सावचनम्। पुनर्दधिग्रहणं दध्नः प्राशनार्थम्। अन्यथा पूर्वस्य सप्तमीनिर्दिष्टत्वात् दध्नः प्राशनं न स्यात्। प्रसृते दधि प्रक्षिप्य तस्मिन् दधनि माषयवानां प्रक्षेपणार्थं पूर्वं दधिग्रहणम्। अण्डरूपेण माषौ दद्यात् शिश्नरूपेण यवम्, तथा दृष्टत्वात्। गानावृ.

(३) समानं रूपं यस्य स सरूपः, सरूपो वत्सो यस्याः सा सरूपवत्सा, एवंभूताया गोर्दधनि। सप्तमीनिर्देशात् प्रक्षिप्येति गम्यते। द्वौ द्वौ माषौ यवं च प्रक्षिप्य तद् दधि पूर्वेद्युरुपोषिताया भार्यायाः प्रसृतेन प्राशयेत् तामेव।

उपवासश्च रात्रावभोजनम्, 'औपवस्तमेव कालान्तरे भोजनम्' इत्यापस्तम्बधर्मे प्रदर्शनात्। प्रसृतः अर्घाञ्जलिः। ‡अना.

**[1]किं पिबसि किं पिबसीति पृष्ट्वा पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयात् ॥**

(१) यत्र यावत् प्रश्नः तत्र प्रतिप्रश्नेन भवितव्यम्। तत्र द्विः पृष्टायाः द्विः प्रतिप्रश्नो दातव्यः। एवं सति त्रिर्ग्रहणमपार्थकम्। तत्रैवं ब्रुवते– यथादिष्टस्य प्रतिप्रश्नस्य त्रिरावृत्तिर्भवति। इत्येवं सति षट्कृत्वः प्राप्नोति। न चैवं शक्यम्। कथं तर्हि भवति? किं पिबसीति त्रिः प्रश्नः, प्रतिप्रश्नेनापि त्रिर्भवितव्यम्। एवं च वीप्सा निरर्थकोभयथाऽपि। नेत्युच्यते। प्रतिप्रश्ने तावत् त्रिर्ग्रहणं कृतं त्रित्वज्ञापनार्थम्। तेन किं सिद्धं भवति? तेन प्रश्नप्रतिप्रश्नयोरेव त्रिरुभयत्रेति सिद्धं भवति। देभा.

(२) किं पिबसीति प्रश्नः। पुंसवनमिति प्रतिप्रश्नः। तत्र प्रतिप्रश्ने त्रिर्ग्रहणमाचार्येण कृतम्। अतस्तस्यैव त्रित्वप्राप्तौ उभयोस्तुल्यत्वज्ञापनार्थमुभयत्र वीप्सावचनम्। तेन प्रश्नोऽपि त्रिर्वाच्य इति सिद्धम्।

गानावृ.

(३) प्रतिज्ञानं प्रतिवचनम्। प्राश्नतीं भार्यां भर्ता पृच्छति– 'किं पिबसि?' इति। सा प्रत्याह– 'पुंसवनम्' इति। अत्रापि वीप्सावचनं वक्ष्यमाणप्रसृतापेक्षम्। त्रिरित्यनुवादः। 'एवं त्रीन् प्रसृतान्' इत्येव सिद्धे एवं तावदुपदेशः। अपर आह– प्रतिप्राशनमावृत्तम्, एवं प्रश्नः प्रतिवचनं चेति। अस्मिन् पक्षेऽपि त्रिरित्यनुवादः।

अना.

**[1]एवं त्रीन् प्रसृतान् ॥**

(१) अनेन विधिना त्रयः प्रसृताः प्राशितव्याः। एकस्मिन् प्रसृते प्राप्ते त्रयः प्रसृता विधीयन्ते। देभा.

(२) एकस्मिन् प्रसृते प्राप्ते त्रयः प्रसृतास्तुल्यधर्माणो विधीयन्ते। §गानावृ.

(३) उक्तेन सह त्रयः प्रसृताः। §अना.

**[2]प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत– 'यत्ते सुसीमे हृदये हित-**

---

$ तस्मिन् पूर्वप्रदेशे यदि सप्तम्यन्तदधिशब्दग्रहणं न क्रियते, तदेवोपरिष्टात् क्रियते इति यथाकथंचिद्योजनीयम्।

‡ शेषं गानावृगतम्। प्रपा. सर्वेषु सूत्रेषु गार्ग्यनारायणवृत्तेरनुवादः।

(१) आगृ. १।१३।३; अप. १।११–१३ पृ. २५ (पुंसवनं०); ब्रक. ८१; प्रपा. ११४.

§ शेषं देभावत्।

(१) आगृ. १।१३।४; अप. १।११–१३ पृ. २५; ब्रक. ८१; प्रपा. ११४.

(२) आगृ. १।१३।७; अप. १।११–१३ पृ. २६ हं मां तद्विद्वांसं माऽहं (हमन्तर्विद्वांसमाह); ब्रक.

**मन्तः प्रजापतौ। मन्येऽहं मां तद्विद्वांसं माऽहं पौत्रमघं नियाम्॥' इति॥**

(१) 'यत्ते सुसीमे' इत्यनेन मन्त्रेण। तत्राऽऽदित एव तावत् प्राजापत्यस्य स्थालीपाकस्य निर्वपणं करोति। तत्राऽऽज्यभागान्तं कृत्वा पुंसवनं कर्म करोति, ततस्तत्कर्म(? तो नस्तःकर्म) च। पश्चात् स्थालीपाकस्य जुहोति। कस्मात्? उभयोः कर्मणोः साधारणः स्थालीपाकः। हुत्वा च हृदयदेशमस्या आलभेत स्पृशेदित्यर्थः, 'यत्ते सुसीमे' इत्यनेन मन्त्रेण। स्वयंकर्तृत्वमस्मिन् कर्मणि भवति। कुतः? मन्त्रलिङ्गदर्शनात्। 'माऽहं पौत्रमघं नियाम्' इति तत्र उच्यते। ‡देभा.

(२) प्राजापत्यस्य स्थालीपाकस्यैकदेशं हुत्वा हृदयदेशं हृदयसमीपमस्या आलभेत स्पृशेत् 'यत्ते' इति मन्त्रेण। ततः स्विष्टकृदादि समापयेत्। गानावृ.

## आश्वलायनगृह्यपरिशिष्टम्

स्थालीपाकः, आज्येनाङ्गाभिमर्शः

[१]'**ब्रह्मणाऽग्निः संविदानः' इति षट् प्राजापत्यस्थालीपाकस्य हुत्वा 'अक्षीभ्यां ते नासिकाभ्याम्' इति प्रत्यृचमाज्यलेपेनाङ्गान्यभिमृशेत्॥**

## कौषीतकिगृह्यसूत्रम्

सोमादीनां नस्तःकरणम्

[२]**सोमांशुं पेषयित्वा कुशकण्टकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्य वाऽग्निष्ठाम्॥**

**संस्थिते वा यज्ञे जुह्वः संस्रावम्॥**

**'अग्निना रयिम्' 'तन्नस्तुरीपम्' 'समिद्धाग्निर्वनवत्' 'पिशङ्गरूपः' इति चतसृभिरन्तेस्वाहाकाराभिर्नस्तो दक्षिणतो निषिञ्चेत्॥**

अत्र स्तरणाघाराज्यभागाः पाक्षिकाः। उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा महाव्याहृतिचतुष्टयमाज्यस्य हुत्वा ततः सोमस्य सूक्ष्मलता, अथवा दर्भसूची, न्यग्रोधस्य वा ऊर्ध्वमुच्छ्रिता शाखा तस्या यः सर्वेषां वृद्धोऽङ्कुरस्तेन वा, अथवा चरुहोमो यावन्न क्रियते तावदेव यूपस्या गृह्यान्ते या आहवनीयस्याभिमुखा तां वा, अथवा समाप्ते यज्ञे जुह्वाः संस्रावं वा, एतेषां सोमादीनामन्यतमस्य नस्ययोग्यं कृत्वा ततः 'अग्निना रयिमश्नवत्, तन्नस्तुरीपमध पोषयित्नु, समिद्धाग्निर्वनवत् स्तीर्णबर्हिः, पिशङ्गरूपः सुभरो वयोधाः' इत्येतैश्चतुर्भिर्मन्त्रैः स्वाहाकारान्तैर्दक्षिणे नासापुटे प्रतिमन्त्रं चतुरो निषेकान् कृत्वा ततो महाव्याहृतिचतुष्टयं ततः पाक्षिकः स्विष्टकृत् ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति। कौगसं.

## आपस्तम्बगृह्यसूत्रम्

होमः नस्तःकरणं च

[१]**न्यग्रोधस्य या प्राच्युदीची वा शाखा ततः सवृषणां शुङ्गामाहृत्य सीमन्तवदग्नेरुपसमाधानादि॥**

(१) न्यग्रोधस्य वृक्षस्य या प्राची शाखोदीची वा तस्याः शुङ्गाम् अग्राङ्कुरं सवृषणाम्, फलं वृषणमिति व्यपदिश्यते सादृश्यादेव, तद्वतीं शुङ्गामाहृत्य सीमन्तवदग्नेरुपसमाधानादि परिषेचनान्तं कर्म प्रतिपद्यते। अग्नेरुपसमाधानादिवचनात् ततः पूर्वं ब्राह्मणभोजनमाशीर्वचनं च न भवति। अन्ते तु भवति, 'शुचीन् मन्त्रवतः सर्वकृत्येषु भोजयेत्' (आध. २।१५।११) इति। तथा यत् परिषेचनादूर्ध्वं संशासनादि तदपि न भवति, 'अपरेणाग्निं प्राचीम्' इति पुनरिहोपदेशात्। तत्र प्रयोगः– पूर्वेद्युर्नान्दीश्राद्धम्। अपरेद्युरग्नेरुपसमाधानादि सकृत्पात्रप्रयोगः। शुङ्गया सह परिधय एव, न शम्याः। आज्यभागान्तेऽन्वारब्धायां 'धाता ददातु नो रयिम्' इति चतस्रः 'यस्त्वा हृदा कीरिणा' इति चतस्रः।

---

‡ अना. देभागतम्।

८१–८२; प्रपा. ११४ सुसीमे (सुशीमे); कुभ. ८३६ (=) (हृदयदेशमस्या आलभेत) एतावदेव.

(१) संकौ. ५८. (२) कौगृ. १।२०।३–५.

(१) आपगृ. १४।१०–११.

जयादि प्रतिपद्यते । परिषेचनान्ते ततो वक्ष्यमाणं कर्म । अनाकुला.

(२) सवृषणां वृषणाकृतिकेन फलद्वयेन संयुक्तां शुङ्गाम् अग्राङ्कुरम् । व्यक्तमन्यत् । अत्र च 'सीमन्तवदग्नेरुपसमाधानादि' इत्यतिदेशात् ब्राह्मणभोजनमाशीर्वचनं च तन्त्रात् पुरस्तान्निवर्तते । कर्मान्ते तु भवत एव, 'शुचीन् मन्त्रवतः सर्वकृत्येषु भोजयेत्' (आप. २।१५।११) इति सामान्यवचनात् 'लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा' (आप. १।१३।९) इति वचनाच्च । पात्रप्रयोगे च शुङ्गादीनां कर्मोपयुक्तानां सकृदेव सादनम् । तथाऽत्र परिधय एव, न तु शम्याः, 'शम्याः परिध्यर्थे' इति चौलगोदानग्रहणात् । तथैव 'सीमन्तवदग्नेरुपसमाधानादि' इत्यादिना परिषेचनान्तकल्पातिदेशस्य विवक्षितत्वादिहापि त एवाष्टौ प्रधानहोमाः । ताद.

**अनवस्नातया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयित्वा परिप्लाव्यापरेणाग्निं प्राचीमुत्तानां निपात्योत्तरेण यजुषाऽङ्गुष्ठेन दक्षिणे नासिकाच्छिद्रेऽपिनयति ॥**

(१) अथ समाप्ते तन्त्रशेषे कर्तव्यमाह— अनवस्नातयेति । यस्याः प्रादुर्भूतं रजः सा अवस्नाता । तद्विपरीता अनवस्नाता । एवंभूता कन्या कर्त्री पेषणस्य । प्रयोजकः पतिः । उपलः दृषत्पुत्रः । दृषदर्थेऽपि दृषत्पुत्र एव । तत्र शुङ्गां पेषयित्वा वस्त्रेण परिप्लाव्य अपरेणाग्निं प्राचीं प्राङ्मुखीम् उत्तानाम् ऊर्ध्वमुखीं निपात्य शाययित्वा उत्तरेण यजुषा 'पुंसुवनमसि' इत्यनेन तं रसमङ्गुष्ठेन तस्या नासिकाच्छिद्रे दक्षिणे अपिनयति अपिगमयति प्राङ्मुख एव । अनाकुला.

(२) अपिनयति गर्भं प्रापयति । स रसं न निष्ठीवेदित्यर्थः । $ ताद.

$ शेषम् अनाकुलागतम् ।

## हिरण्यकेशिगृह्यसूत्रम्

होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, माषयवदधिप्राशनम्, उदराभिमर्शनम्, नस्तःकरणम्

**[1]अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम्' इति चतस्रो धात्रीर्जुहोति, 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयाऽसि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात् । ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामपरेणाग्निं मण्डलागारे प्राचीमुपवेश्य 'वृषाऽसि' इति तस्या दक्षिणे पाणौ यवमादधाति ॥**

अपरेणाग्निमित्येतदन्तमुक्तार्थम् । परिमण्डलशाला मण्डलागारम् । पूर्ववदादावस्मिन्नेव काले प्राचीमुपवेश्य तस्या दक्षिणे पाणौ 'वृषाऽसि' इत्यनेन यवमादधाति । मातृद.

**'आण्डौ स्थः' इत्यभितो यवं सर्षपौ धान्यमाषौ वा ॥**

'आण्डौ स्थः' इत्यनेन सकृदुक्तेन तं यवम् अभितः दक्षिणतश्चोत्तरतश्च सर्षपौ धान्यमाषौ वाऽऽदधाति । धान्यग्रहणं परिमाणमाषनिवृत्त्यर्थम् । मातृद.

**'श्वावृत्तत्' इति दधिद्रप्सं तदेनां प्राशयति ॥**

'श्वावृत् तत्' इति §गावं दधिद्रप्समादधाति । तत्समुदितमेनां प्राशयति तूष्णीम् । मातृद.

**आचान्ताया उदरमभिमृशति– 'अभिष्ट्वाऽहं दशभिरभिमृशामि दशमास्याय सूतवै' इति ॥**

आचान्तायास्तस्या उदरमभिमृशति 'अभिष्ट्वा' इत्यनेनोभाभ्यां हस्ताभ्याम् । मन्त्रलिङ्गात् प्राशनानन्तरं मा भूदित्याचान्ताया इति वचनम् । मातृद.

§ संबन्धार्थे अण् । विकारार्थे तु गव्यमिति भाव्यम् ।

(१) हिगृ. २०।१।५–९.

**न्यग्रोधशुङ्गं वा घृतेन कोशकारीं वा प्रैयंगवेण संयावेन यूपशकलं वोत्तरपूर्वस्याग्निष्ठाश्रेरग्निं वा निर्मन्थ्यमूरुमूलोपधानायै दक्षिणे नासिकाछिद्रे प्रणयेत् ॥**

न्यग्रोधत्वक् न्यग्रोधशाखाग्रं तद्वा पिष्ट्वा प्रपीड्य च रसं गृहीत्वा घृतेन मिश्रयित्वा, कोशकारीं कौशेयार्थस्य कोशस्य कर्ता कृमिः, तं पिष्ट्वा प्रैयंगवेण प्रियंगुविकारेण संयावेन ओदनावस्थावितेन द्रव्येण मिश्रयित्वा, यूपशकलं वोत्तरपूर्वस्याग्निष्ठाश्रेरग्रे गृहीतं चूर्णीकृतम्। वचनात्संस्पर्शः प्राग्वा समासेर्ग्रहणम्। अग्निं निर्मन्थ्यं मथितं निर्वाप्य तूष्णीं कृतमग्निमेव वा यथा न दहेत्तथा तस्य धूममौष्ण्यं वा उन्मारं देहनि(?)न्यग्रोधं वाऽवम्रियते समाप्यते। उदुम्बरम् ऊरुमूलमित्यर्थः। तदुपधानं यस्याः शिरसः सा ऊरुमूलोपधाना तस्या दक्षिणे नासिकाछिद्रे प्रणयेत् प्राशयेत् तूष्णीम्। मातृदृ.

## भारद्वाजगृह्यसूत्रम्

होमः नस्तःकरणं च

**[1]न्यग्रोधावरोधमाहृत्यानवस्नातया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयित्वाऽन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानाग्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति– 'यस्त्वा हृदा कीरिणा' इति चतस्रः। अपरेणाग्निं प्राचीनमुत्तानां निपात्याथास्या दक्षिणे नासिकाछिद्रेऽङ्गुष्ठेनानुनयति– 'पुंसवनमस्यमुष्याः' इति। सा हेत्याह। पुमांसमेव जनयति ॥**

## काठकगृह्यसूत्रम्

स्थालीपाकत्रयम्

**[2]त्रीन् स्थालीपाकाञ्श्रपयेदाग्नेयमैन्द्रं वैष्णवं च ॥**

(१) त्रीन् स्थालीपाकान् श्रपयेत् आग्नेयमैन्द्रं वैष्णवं च। देव.

(२) 'अग्नये जुष्टम्, इन्द्राय जुष्टम्, विष्णवे जुष्टम्' इति स्थालीपाकानामत्र निर्वापः। ब्राह्म.

**तेषां यथादेवतं जुहोति– 'अग्निस्तुविश्रवस्तमम्, इन्द्र क्षत्रम्, प्र तद्विष्णुः'। 'पुमान्' इत्यभिजुहोति– 'पुमानग्निः पुमानिन्द्रः पुमान् विष्णुरजायत। पुमांसं जनयेत् पुत्रं दशमे मासि सूतवे। येन जातेन विभुना जीवेम शरदः शतं पश्येम शरदः शतम्॥' इति, 'तं नो मंहस्व शतिनं सहस्रिणं गोसनिमश्वसनिं वीरं स्वाहा' ॥**

(१) तेषां मध्यादन्यतममन्यतमं गृहीत्वा यथादैवतं जुहोति– 'यत्रैकः स्थालीपाकस्तत्र देवताभेदेऽपि एकं कर्म, द्रव्यदेवतासंयोगस्यैक्यात्। इह तूभयभेदात् संयोगभेदेन कर्मबहुत्वम्। 'अग्निस्तुवि' इत्यादिना अग्निं जुहोति, 'इन्द्र क्षत्रम्' इत्यादिना इन्द्रम्, 'प्र तद्विष्णुः' इत्यादिना विष्णुम्, 'पुमान्' इत्यादिनैकैकस्माद्भागमुद्धृत्य स्विष्टकृतं जुहोति।

'अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम्। अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥'। अग्निर्दाशुषे हविर्दत्तवते यजमानाय पुत्रं ददाति। कीदृशम्? तुविश्रवस्तमम्। तुविशब्दो भूरिनामसु पठितः, श्रवःशब्दोऽन्नवचनो यशोवचनो वा। बहुन्नतमं बहुयशस्कतमं वा। तुविब्रह्माणम्। ब्रह्मशब्दो वेदवचनोऽत्र। बहुवेदविदमित्यर्थः। तथा उत्कृष्टं सर्वातिशायिनम्। अतूर्तं त्वरारहितम् अतरलं स्फीतमिति यावत्। श्रावयतां पतिम् ऋत्विजां पतिं यज्वानमित्यर्थः।

'इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम्। अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥'। हे इन्द्र, त्वं क्षत्रमभि क्षतत्राणं प्रति अजायथाः जातः। ओज इति अस्य विशेषणम्। क्षात्रमोजो बलं च लक्ष्णीकृत्य त्वं जात इत्यर्थः। वामं वननीयं संविभागार्हम्। हे वृषभ वर्षक। केषाम्? चर्षणीनां मनुष्याणाम्। देवा अपीह मनुष्याः। अमित्रयन्तम् अमित्रमिवाऽऽचरन्तं

(१) भागृ. १।२२. (२) कागृ. ३२।२–३.

जनम् असुरलोकं त्वम् अपानुदः अपसारितवानसि । कीदृशं जनम् ? उरुं विस्तीर्णम् । अशानुद्य च तं देवेभ्यः देवार्थं देवानां वा । सुप् व्यत्ययेन । लोकं कृतवानसि ।

'प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥' । व्याख्यास्यते । [ विष्णुः प्रजापतिः तत् सर्वं कर्म जगद्वा प्रस्तवते प्रस्तौति । विकरणस्यात्राल्लुक्, 'बहुलं छन्दसि' ( पा. सू. २।४।७३ ) इति बाहुलकत्वात् । आरभते इत्यर्थः । वीर्येण सामर्थ्येन । नशब्द इवार्थे । मृग इव भीमः । प्रसह्य करोति सिंहादिवदित्यर्थः । कौ चरति क्व वा न चरतीति कुचरः । गिरिषु तिष्ठतीति गिरिष्ठाः, व्यापकत्वादेव । यस्य उरुषु महत्सु विक्रमणेषु ( विश्वा ) विश्वानि सर्वाणि भुवनानि अधिक्षियन्ति उपरि निवसन्ति । तं यजामहे इति शेषः । विश्वेति 'शेश्छन्दसि बहुलम्' ( पा. सू. ६।१।७० ) इति शेर्लुक् । देव. ४७।२० ]

'पुमानग्निः ... वीरं स्वाहा ॥' । आभ्यामृग्यजुषाभ्यां स्विष्टकृत् क्रियते । अग्न्यादयः पुमांसं पौरुषातिशययुक्तं पुत्रं जनयेयुर्यतस्त एव त्रिलोक्यां पुमांसः पौरुषातिशययुक्ता अजायन्त जाताः । दशमे मासि सूतवे सोतुम् । तुमर्थे तवेङ्प्रत्ययः । येन जातेन सता विभुना प्रभुणा वयं शरदः शतं जीवेम पश्येम च तं पुत्रं नः अस्माकं मंहस्व वर्धयस्व । शतिनं सहस्रिणं शतसहस्रादिधनयुक्तम् । गोसनिं गवां संविभक्तारम् । एवमश्वसनिम् । वीरं पुत्रं विक्रान्तं वा विक्रमयुक्तम् । देव.

( २ ) आज्यभागान्तं हुत्वा । 'अग्निस्तु०' इति स्थालीपाकस्य जुहोति, 'पुमानग्निः' इति स्रुवेणाऽऽज्यस्याभिहोमः । 'इन्द्र०' इति स्थालीपाकस्य, 'पुमानिन्द्रः' इत्यभिहोमः । 'प्र तद्विष्णुः०' इति स्थालीपाकस्य, 'पुमान्विष्णुः' इत्यभिहोमः । 'पुमांसं जनयेत्पुत्रम्' इत्यनुषङ्गः । तत ऋतुतिथियागादि तुल्यम् । समवदाय स्विष्टकृतम् । ब्राह्म.

( ३ ) देवताभेदादेव भेदे प्राप्ते त्रिगुणमन्यत्र † ... भवतीति विज्ञापयति । तथा च दर्शितं स्थालीपाकस्य जुहोति । यत्र पुनर्द्रव्यभेदस्तत्र हविर्द्रव्यभेदोऽपि श्रावण्यादौ ( ? ) । तेषां यथादैवतं जुहोति । यथा दैवतं प्राप्तं सदुच्यते उपहोमार्थम् । 'अग्निस्तुविश्रवस्तमम्' इति मन्त्रविधानम् । पुमानित्यभिजुहोति यथादैवतं विभज्य 'पुमानग्निरजायत पुमांसं जनयेत्पुत्रम्, पुमानिन्द्रो अजायत पुमांसं जनयेत् पुत्रम्, पुमान् विष्णुरजायत (पुमांसं जनयेत्पुत्रम्)' इति ऋग्यजुर्भ्यामेकैकामाहुतिम् । अभिहोमो हविषामुपरि, न तु व्यवधानेन । त्रिः समवदाय स्विष्टकृतं जुहुयात् । आदित्य.

## वाराहगृह्यसूत्रम्

उपवासः, नस्तःकरणम्, दक्षिणकुक्षिस्पर्शनम्

**'उपोष्याऽऽप्लाव्याहतं वास आच्छाद्य न्यग्रोधावरोहशुङ्गानुदपेषं दक्षिणस्यां नासिकायामासिञ्चेत्– 'हिरण्यगर्भः, अद्भ्यः संभूतः' इत्येताभ्याम् । अथास्या दक्षिणं कुक्षिमभिमृशेत्– 'पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः । पुमानग्निश्च वायुश्च पुमान् गर्भस्तथोदरे ॥ पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमांसं गर्भं जायस्व त्वं पुमानुपजायताम् ॥' इत्येताभ्याम् ॥**

## आग्निवेश्यगृह्यसूत्रम्

होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, यवसर्षपाभ्यां यवमाषाभ्यां वा सह दध्नः प्राशनम्, उदराभिमर्शनम्, नस्तःकरणम्

**'अग्निमुपसमाधाय परिस्तीर्य व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम्' इति चतस्रो धात्रीर्जुहोति, 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयाऽसि,**

† अत्र अष्टादशाक्षरपरिमितं स्थानमनक्षरमित्यादर्शपुस्तकटिप्पणी ।

(१) वागृ. १९. (२) आग्निगृ. २।१।१.

प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च। अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति। यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषां पत्नीमपरेणाग्निं मण्डलाकारे प्राचीमुपवेश्य 'वृषाऽसि' इति दक्षिणे पाणौ यवमादधाति। 'आण्डौ स्थः' इत्यभितो यव(? वं) सर्षपौ धान्यमाषौ वा। 'श्वापृतद्' इति दधिद्रप्सं तदेनां प्राशयति। आचान्ताया उदरमभिमृशति– 'आभिष्ट्वाऽहं दशभिरभिमृशामि दशमास्याय सूतवे' इति। न्यग्रोधशुङ्गं वा घृतेन कोशकारीं वा प्रैयंगवेण संयावेन यूपशकलं वोत्तरपूर्वस्याभिष्टेरग्निं वा निर्मथ्य 'मूर्मपधानाय' इति तस्या दक्षिणे नासिकाच्छिद्रे प्रणयेत्॥

## पारस्करगृह्यसूत्रम्

उपवासः, नस्तःकरणम्, काम्यमुपस्थाभिमन्त्रणम्

[1]'उपवास्याऽऽप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनं 'हिरण्यगर्भः, अद्भ्यः संभृतः' इत्येताभ्याम्॥

कुशकण्टकं सोमांशुं चैके॥

कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान् स्यादिति विकृत्यैनमभिमन्त्रयते– 'सुपर्णोऽसि' इति प्राग्विष्णुक्रमेभ्यः॥

(१) तां स्त्रियमुपवास्य स्नापयित्वा चाहते वाससी परिधाप्य न्यग्रोधावरोहान् न्यग्रोधावलम्बिकान् शुङ्गान् तदङ्कुरान् रात्रावुदपेषं पिष्ट्वा पूर्ववद्दक्षिणस्यां नासिकायामासिञ्चति– 'हिरण्यगर्भः, अद्भ्यः संभृतः' इत्येताभ्यामृग्भ्याम्। कूर्मपित्तशब्देनोदकशरावमुच्यते। तदस्याः स्त्रिया उपस्थे कृत्वा स यदि कामयेत वीर्यवान् गर्भः स्यादिति तदा विकृत्यैनमभिमन्त्रयते– 'सुपर्णोऽसि' इति प्राग्विष्णुक्रमेभ्यः। कभा.

(२) तां स्त्रियमुपवास्य अनाशयित्वा आप्लाव्य स्नापयित्वा अहते वाससी परिधाप्य च न्यग्रोधः वटः तस्यावरोहान् अव अधः रोहन्तीति तथा तान्। शुङ्गान् ऊर्ध्वाङ्कुरान् संनिधानादटस्यैव। तत्राऽऽद्यायाः हिरण्यगर्भः प्रजापतिः उभयोस्त्रिष्टुप्, अन्त्यायाः पुरुषो नारायण आदित्यः, सेके विनियोगः। कुशकण्टकं कुशमूलं सोमांशुं सोमलताखण्डं च पिष्यमाणेषु प्रक्षिपन्त्येके एके नेति विकल्पः। काम्यमाह– 'कूर्मपित्तम्' इति। कूर्मपित्तशब्देनोदकयुक्तशरावमुच्यते। तदस्या उपस्थे भगे कृत्वा निधाय भर्ता विकृत्या विशिष्टया कृत्या कृतिच्छन्दस्कया सुपर्णोऽसीत्यादिस्वःपतेत्यन्तया एनं गर्भमभिमन्त्रयते। तं स्पृष्ट्वा मन्त्रं जपतीत्यर्थः। विशिष्टत्वं चतुरवसानत्वम्। तत्र प्रजापतिः कृतिर्गरुत्मान् मन्त्रणे। विष्णुक्रमेभ्यः विष्णुक्रममन्त्रेभ्यः प्राक् पूर्वं यावद्विकृतेः परिमाणमित्यर्थः। $ जभा.

(३) अहते नवे सदशे सकृत्प्रक्षालिते वाससी अन्तरीयोत्तरीये द्वे परिधाप्य परिधानं कारयित्वा। शुङ्गान् तदग्रपल्लवान् मुकुलाकारान्। पूर्ववत् गर्भधारणार्थोक्तवत्। उपस्थे उत्सङ्गे। † हभा.

(४) 'हिरण्यगर्भः, अद्भ्यः संभृतः' इत्येताभ्यामासिच्यमाने समुच्चिताभ्यामासेचनं प्राप्नोति, तन्मा भूदिति यत्नः क्रियते– एताभ्यां पृथग्भूताभ्यां प्रत्यृचमासेचनमिति भर्तृयज्ञः। † गभा.

(५) तदहरुपवास्याऽऽप्लाव्याहते वाससी परिधाप्य उपवासस्याहोरात्रसाध्यत्वात् तदुत्तरत्वस्य स्नाने प्रतीयमानत्वात् पूर्वेद्युरुपोषणं ततः पुरुषोडुपरक्तचन्द्राधिकरणाद्धि वैश्वदेवपूर्वकं मातृश्राद्धं कृत्वा उपोषितां भार्यामाप्लाव्याहते वाससी परिधाप्येत्यर्थः। कूर्मपृष्ठनिर्मितं पात्रं कूर्मपित्तम्। उदकपूर्णशरावमित्यन्ये। $ विभा.

(१) पागृ. १।१४।३–५.

$ शेषं कभावत्।

† शेषं जभागतम्।

## गोभिलगृह्यसूत्रम्

होमः, अंस-नाभिदेशस्पर्शनम्, न्यग्रोधशुङ्गायाः परिक्रयः उत्थाप्यनिधानं च, नस्तःकरणम्

**'प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ॥**

(१) आप्लुता स्नाता पश्चात् पश्चिमदिशि प्राङ्मुखी उपविशति पत्युर्दक्षिणतः, 'दक्षिणतः पाणिग्राहकस्योपविशति' इत्यन्यत्र दर्शनात्। पश्चादित्यभिधानात् अग्निस्थापनं लभ्यते। तत्सार्थकत्वाय 'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। मन्त्रस्य देवतायाः (च) प्रजापतिरिति स्थितिः ॥' इति छन्दोगपरिशिष्टोक्तद्रव्यादि लभ्यते। जुहोतिषु हवनेषु। मन्त्रस्यानादेशे प्रजापतिः प्राजापत्यो मन्त्रः। स मन्त्रः व्याहृत्यात्मकः। ततश्च विरूपाक्षजपान्तां कुशण्डिकां समाप्य समित्प्रक्षेपादि महाव्याहृतिभिर्होमं कृत्वा प्रजापतिदेवताकसमस्तमहाव्याहृतिहोमं कुर्यात्। ततः प्रकृतं कर्म। संत. ९१०

(२) प्रातरुदयसंनिधौ उत्तराग्रेषु कुशेषूपविश्य। सशिरस्काप्लुता शिरःस्नाता वधूः। † मृदुला.

**'पश्चात्पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत्– 'पुमांसौ मित्रावरुणौ' इत्येतयर्चा ॥**

(१) उपविष्टाया वध्वाः पश्चिमदेशं गत्वाऽनुपविष्टः पतिर्दक्षिणहस्तेन तूष्णीं तस्या दक्षिणस्कन्धमवमृश्य वस्त्राद्यव्यवहितं नाभिं 'पुमांसौ' इति मन्त्रेण स्पृशेत्। संत. ९१०

(२) पश्चात् पृष्ठदेशे अवस्थाय प्राङ्मुख ऊर्ध्वजानुः स्थित्वा। दक्षिणमंसं भुजशिरः। 'स्कन्धो भुजशिरोऽसोऽस्त्री' इत्यमरः। तूष्णीमन्ववमृश्य पृष्ठतोऽन्ववलम्ब्य स्पृष्ट्वा अनन्तर्हितम् अव्यवहितम् वस्त्राद्यनाच्छादितम् (नाभिम्) अभिमृशेत् स्पृशेत् 'पुमांसौ' इत्येतयर्चा। सा यथा– 'पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ। पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥' इति। अस्या अर्थः– अत्र साकाङ्क्षत्वाद्वाक्यस्य यथा तथेति अस्तु इति चाध्याहार्यम्। तथा च– यथा पुमांसौ मित्रावरुणौ आदित्यप्रचेतसौ, यथा च अश्विनौ देवभिषजौ पुमांसौ, यथा च अग्निः वायुश्च पुमान्, तथा तव उदरे कुक्षौ अयं गर्भः पुमान् अस्तु इति। मृदुला.

**'अथ यथार्थम् ॥**

अनन्तरं वामदेव्यगानान्तं समापयेत्। यदि त्वशक्तेर्देशाचारात्कुलाचाराद्वा एकस्मिन् दिने द्वितीयपुंसवनमपि क्रियते तदा 'गणेष्वेकं परिसमूहनमिध्मो बर्हिः पर्युक्षणमाज्यभागः सर्वेभ्यः समवदाय सकृदेव सौविष्टिकृतं जुहोति' इति गोभिलसूत्रान्तरात् उभयकर्मान्ते वामदेव्यगानाद्युदीच्यं कर्म कर्तव्यम्। अत एव सरलायां दिनद्वये, भट्टभाष्यभवदेवयोरेकदिने उभयकरणं लिखितम्। ¶ संत. ९१०

**अथापरम् ॥**

(१) अथ प्रथमपुंसवनसमाप्तिकालानन्तरं तदानीम् अपरम् अन्यत् पुंसवनं कार्यम्। संत. ९१०

(२) अथैतस्मात्पुंसवनकर्मणोऽनन्तरं अपरम् अन्यत् द्वितीयं पुंसवनं शुङ्गाकर्मसंज्ञकम्। कर्तव्यमिति वाक्यशेषः। पाठादेवाऽऽनन्तर्यलाभादथशब्दः पूर्वप्रकृतार्थो वा वर्णनीयः। पूर्ववदिदमपि पुंसवनं पूर्वप्रकृत एव काले करणीयमित्यर्थः। तत्रैकदिने दिनद्वये वेति विशेषोऽत्र न गम्यते। अतः प्रथमदिने चेत् द्वयं क्रियते तर्हि नान्दीश्राद्धमपि तन्त्रेणैव कर्तव्यम्। तथा च कर्मप्रदीपः– 'गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥' इति। मृदुला.

---

† शेषं संतगतम्।

(१) गोगृ. २।६।२; संत. ९१० (प्रातः सशिरस्काऽऽप्लुता पश्चादग्नेरुदगग्रेषु के(? कु)शेषु प्राच्युपविशति).

(२) गोगृ. २।६।३; संत. ९१० मंस (मंश) स्यानन्तर्हितं (षानाहितं) मृशेत् (स्पृशेत्).

¶ मृदुला. संतगता।

(१) गोगृ. २।६।४–५; संत. ९१०.

**[1]'प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतः-फलामस्रामामकृमिपरिसृप्तां त्रिःसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत् ॥**

**[2]'यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि ॥ यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि ॥ यद्यसि वसुभ्यो वसुभ्यस्त्वा परिक्रीणामि ॥ यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि ॥ यद्यस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि ॥ यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि ॥ यद्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्यस्त्वा देवेभ्यः परिक्रीणामि ॥'**

(१) वटतरोः पूर्वस्यां दिशि शुङ्गा मुकुलितपल्लवा, 'लताग्रः पल्लवो गूढः शुङ्गेति परिकीर्त्यते । पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाऽश्रुतः ॥' इत्युक्तेः । अश्रुतः वेदहीनः । तां फलयुगलयुतामम्लानां कृमिभिरव्याप्तां त्रिरावृत्तैः सप्तभिर्यवैर्माषैर्वा त्रिरावृत्तैः कृत्वा गृह्णीयात् । क्रयश्च वृक्षस्वामिनः, न वृक्षात् । तेन वृक्षस्वामिने यवा माषा वा देयाः 'यद्यसि' इत्यादिसप्तभिर्मन्त्रैः । प्रतिमन्त्रं गुडकत्रयं दद्यात् । संत. ९११

(२) तस्येतिकर्तव्यतामाह– प्रागिति । प्रागुदीच्याम् ऐशान्यां दिशि अवस्थितायाः । क्रयश्च वृक्षस्वामिनः, न वृक्षात् । यवान् माषान् वा मूले निक्षिप्य परिक्रयणमित्येके प्राहुः । अथ क्रयणमन्त्राः– यद्यसीति । अत्र 'यद्यसि' इत्यादिक्रयलिङ्गैः सप्तभिर्मन्त्रैर्यवैर्माषैर्वा परिक्रयणम् । प्रतिमन्त्रं त्रींस्त्रीन् यवान् माषान् वा वृक्षमूले प्रक्षिप्येति पद्धतिकृतो वीरेश्वरादयः । मन्त्रार्थस्तु– हे शुङ्गे, त्वं यदि सौमी सोमप्रिया सोमदेवत्या वा असि भवसि तदा सोमाय राज्ञे सोमराजप्रीत्यर्थमेव त्वा त्वां परिक्रीणामि । एवमग्रेऽपि । अत्र सर्वत्र तादर्थ्ये चतुर्थी । उपकार्योपकारकभावसंबन्धश्च तादर्थ्यम्, 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति सिद्धान्तात् ।

मृदुला.

---

(१) गोगृ. २।६।६ ; संत. ९१०–९११ स्रामा ... मर्षिर्वा ( म्लानामकृत्रिमपरिमृष्टां त्रिःसप्तभिर्यवैर्माषैर्वा ).

(२) गोगृ. २।६।७ ; संत. ९११ राज्ञे ( वह्ने ) वरु ( वारु ) देवेभ्यो विश्वेभ्यस्त्वा देवेभ्यः ( देवेभ्यस्त्वा ).

---

**[1]'ओषधयः सुमनसो भूत्वाऽस्यां वीर्यं समाधत्तेयं कर्म करिष्यति' $इत्युत्थाप्य तृणैः परिधायाऽऽहृत्य वैहायसीं निदध्यात् ॥**

(१) ओषधय इति मन्त्रेणोत्थाप्य च तृणैर्वेष्टयित्वा आनीयाऽऽकाशस्थां निदध्यात् । संत. ९११

(२) ततश्च 'ओषधयः' इत्यनेन मन्त्रेणेतिकारान्तेनोत्थाप्य उत्तोल्य तृणैः कुशैः, तथैव समाचारात् । पद्धतिरप्येवमेव । परिधाय परिधाप्य । अन्तर्भावितण्यर्थोऽयम् । वेष्टयित्वा आहृत्य आनीय वैहायसीम् आकाशस्थां कृत्वा गृहोपरि अधो वा निदध्यात् धारयेत् । मन्त्रार्थस्तु– हे ओषधयः ओषधिदेवताः । 'ओषधिः फलपाकान्ता स्यात्' इत्यमरादिकारान्तोऽपि । ङीषि ओषधीत्यपि, रात्रिः रात्रीतिवत् । यूयं सुमनसः प्रसन्ना भूत्वा अस्यां वध्वां वीर्यं सामर्थ्यं समाधत्त सम्यग्वीर्याधानं कुरुत । कुतः? यतः इयं वधूः कर्म गर्भप्रसवनाख्यं त्वत्सेवां च करिष्यति इति हेतोरिति सत्यव्रतः ।

मृदुला.

**[2]'दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धुः कुमारी वाऽप्रत्याहरन्ती पिनष्टि ॥**

(१) दृशदं शिलां पेषणार्थत्वेन सपुत्राम् । कुमारी अनूढा । व्रतवती पतिव्रता । अप्रत्याहरन्ती तिर्यक्पुत्रकेण

---

$ इतिकारोऽयं मन्त्रावयव इति मृदुलाकारोऽभिप्रैति । तथा सति मन्त्रनिष्ठोत्थापनकरणत्वबोधको द्वितीयेतिकार आवश्यकः । स तु कुत्रापि पुस्तके न दृश्यते । 'इति हेतोः' इति सत्यव्रतोक्तमितिकारस्य हेत्वर्थकत्वं च मृदुलाकारोऽनुवदति । हेत्वर्थकत्वं मन्त्रावयवत्वं विना नोपपद्यते । किंतु अयमनुवादः प्रामादिकः । 'इति इमं मन्त्रं पठन्' इति सत्यव्रतव्याख्यानम् । तत्र इतिकारस्य मन्त्रनिष्ठकरणत्वार्थकत्वं तत एव मन्त्रबहिर्भूतत्वं च स्पष्टम् । ब्लूमफील्डमहोदयेनापीतिकारो मन्त्रे न समावेशितः ।

(१) गोगृ. २।६।८ ; संत. ९११.

(२) गोगृ. २।६।९ ; संत. ९११ दृषदं ( दृशदं ).

पेषणमकुर्वती, किंतूच्छ्रितपुत्रकेण पुनः पुनः पेषणं कुर्वती। संत. ९११

(२) तां खल्वाहृतां शुङ्गाम् – दृषदमिति। व्याहृतिहोमान्ते। दृषत् शिला पेषणी, तां प्रक्षाल्य शोधयित्वा। ब्रह्मचारी प्रथमाश्रमी। व्रतवती पतिव्रता। गर्भिण्येवेत्येके। ब्रह्मबन्धुः अनधीतविद्यः। तथा च छन्दोगपरिशिष्टम् – 'पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाऽश्रुतः।' इति। अप्रत्याहरन्ती प्रत्याहरणं पिष्टस्य पश्चादानयनम्, तदकुर्वती पिनष्टि चूर्णीकरोति। 'पिष्लृ संचूर्णने'। लट्, मध्ये श्नम्। शुङ्गामित्यनुषञ्जनीयम्। मृदुला.

**[1]प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राक्शिराः संविशति ॥**

(१) संविशति शेते। शेषं सुगमम्। संत. ९११

(२) प्राक्शिराः पूर्वशिरस्का। संविशति स्वपिति। 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि।' इत्यमरः। शेषमुक्तार्थम्। मृदुला.

**[2]पश्चात् पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य दक्षिणे नासिकास्रोतस्यवनयेत्– 'पुमानग्निः पुमानिन्द्रः' इत्येतयर्चा ॥**

(१) पश्चात् वध्वाः पश्चिमदिशि। उपकनिष्ठया अनामिकया। तेनाङ्गुष्ठानामिकाभ्यां पिष्टां शुङ्गां वस्त्रबद्धां गृहीत्वा निष्पीड्य दक्षिणनासारन्ध्रे क्षिपेत् 'पुमानग्निः' इति मन्त्रेण। संत. ९११

(२) अभिसंगृह्य गृहीत्वा पिष्टां शुङ्गाम्। नासिकास्रोतसि नासापुटरन्ध्रे वध्वा एव। अवनयेत् क्षिपेत् 'पुमानग्निः' इति मन्त्रेण। शेषमुक्तार्थम्। मन्त्रो यथा– 'पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः। पुमांसं पुत्रं विन्दस्व तं पुमाननुजायताम् ॥' इति। मन्त्रार्थः सुबोध एव। पुमांसमित्यनेन सुपुरुषलक्षणोपेतम्, तमित्यनेन च बहुपुत्रसंपत्तिं चोक्तवान् मन्त्रदृगिति। मृदुला.

[1]अथ यथार्थम् ॥

अनन्तरं दक्षिणाद्युदीच्यं कर्म कुर्यात्। संत. ९१२

## खादिरगृह्यसूत्रम्

होमः, अंस–नाभिदेशस्पर्शनम्, न्यग्रोधशुङ्गायाः परिक्रयः उत्थाप्यस्थापनं च, नस्तःकरणम्

**[2]स्नातामहतेनाऽऽच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठेत् ॥**

अहतेन अधरेणोत्तरीयेण च। ब्रह्मोपवेशनान्तं कृत्वा वधूं दक्षिणतो दर्भेषूपवेश्य प्रपदान्तं कृत्वाऽन्वारब्धायां व्याहृतिभिस्तिसृभिराज्यं हुत्वा पुनश्च हुत्वा वध्वाः पश्चाद्दर्भेषु तिष्ठेत्। पतिरिति भर्तुरभावे पालनाधिकृतनियमार्थम्। भर्तुरन्यः कुर्वन् प्रणीते लौकिके वा कुर्यात्। रुद्रभा.

**दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत्– 'पुमांसौ' इति ॥**

अन्विति वधूमनुगतः प्रह्वीभूत इत्यर्थः। वध्वा अंसमन्ववमृश्य वस्त्रादिनाऽनन्तर्हितमभिमृशन्नेव पाणिना नाभिं प्राप्य सकलमेवोदरं मन्त्रेणाभिमृशेत्। रुद्रभा.

अथापरम्। **न्यग्रोधशुङ्गामुभयतःफलामस्रामामक्रिमिपरिसृप्तां त्रिः सप्तैर्यवैः परिक्रीयोत्थापयेन्माषैर्वा सर्वत्र 'ओषधयः सुमनसो भूत्वाऽस्यां वीर्यं समाधत्तेयं कर्म करिष्यति' इति ॥**

अथेत्यानन्तर्यार्थेन प्रयोगैक्यमाह। अतो नान्तरा ब्राह्मणभोजनम्। अपरमिति कर्मान्तरत्वमाह। अतो वामदेव्यगानान्तं कृत्वा ब्रह्मणे दक्षिणां दत्वा वक्ष्यमाणं कर्म कुर्यात्। कर्मद्वयात्मकमिदमेकं पुंसवनाख्यं कर्म।

(१) गोगृ. २।६।१०; संत. ९११ दर्भेषु (कुशेषु) (पश्चादग्नेरुदगग्रेषु दर्भेषु०).

(२) गोगृ. २।६।११; संत. ९११ ष्ठिकया चा (ष्ठयाऽ) णे नासिकास्रोतस्यवन (णनासिकाग्रेण तस्या न).

(१) गोगृ. २।६।१२; संत. ९१२.

(२) खागृ. २।२।१८–२३.

अम्लामाम् अशुष्काम् । न्यग्रोधाधिदेवताभ्यः परिक्रीणामीत्यनया बुद्ध्या सप्तभिर्यवैर्मूल्यतया संकल्पितैः शुङ्गां परितस्त्रिः प्रकीर्य शुङ्गामूर्ध्वाग्रां मन्त्रेण विकर्षेत् यथा छिद्येत । यवाभावे माषैः । रुद्रभा.

**आहृत्य वैहायसीं कुर्यात् ॥**

गृहमाहृत्योपर्यनाच्छादिते देशे शुङ्गां निदध्यात् । रुद्रभा.

**कुमारी ब्रह्मचारी व्रतवती वा ब्राह्मणी पेषयेदप्रत्याहरन्ती ॥**

कुमारी च ब्राह्मणी । ब्रह्मचारी च ब्राह्मणः । वाग्यता ब्राह्मणी वा दृषत्पुत्रं प्रतीचीं दिशं प्रत्यप्रत्याकर्षन्ती पेषयेत् । रुद्रभा.

**स्नातां संवेश्य दक्षिणे नासिकास्रोतस्यासिञ्चेत् 'पुमानग्निः' इति ॥**

पुनः स्नातामग्नेः पश्चात् प्राक्शिरसं दर्भेषु संवेश्य शाययित्वा तस्याः दक्षिणे नासिकारन्ध्रे शुङ्गारसमासिञ्चेत् । सा च तं रसमुदरस्थं कुर्यात् । अथ ब्राह्मणभोजनम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

होमः, सयवमाषदधिप्राशनम्, कण्ठे न्यग्रोधशुङ्गधारणम्

**[1]'घृते चरुं श्रपयित्वा पृषदाज्यं वा स्थालीपाकवत् संस्कृत्य पुरुषसूक्तेन जुहुयात् । माषौ च यवं च पुंलिङ्गं कृत्वा दधिद्रप्सेनैनां प्राशयेत्— 'प्रजापतिः पुरुषः परमेष्ठी स मे पुत्रं ददात्वायुष्मन्तं यशस्विनं सह पत्या जीवसूर्भूयासम्' इति । न्यग्रोधशुङ्गं फलाभ्यामुपहितं शुक्लरक्ताभ्यां सूत्राभ्यां ग्रथित्वा कण्ठे धारयेत् । ध्रुवकुमारायेत्याचक्षते । वासो दक्षिणा ॥**

पृषदाज्यं दधियुक्तमाज्यम् । स्थालीपाकवत् संस्कृत्य हविरिवोत्पूयेत्यर्थः । ...अस्माकं पुरुषसूक्तं सप्तर्चम्... । माषौ च वृषणवत् यवं च शिश्नवत् संनिवेश्य रेतोबिन्दुवदग्रगेन दधिबिन्दुना सहानेन मन्त्रेण प्राशयेत् । फलाभ्यामुपहितं मूलतः संसक्तं न्यग्रोधशुङ्गं वटसमिदग्रम् । तथा च वृषणोपहितशिश्नसदृशमिति यावत् । एवं कृतमिदं कर्म निश्चयेन कुमारोत्पत्तये स्यादिति पूर्वाचार्या आचक्षते । श्रीव्या.

## कौशिकगृह्यसूत्रम्

बाणविवर्हणम्, शरमणिबन्धनम्, नस्तःकरणम्, मधुमन्थनिक्षिप्ताग्निप्राशनम्, कृष्णोर्णावेष्टिताग्निबन्धनम्

**[1]'येन वेहत्' इति बाणं मूर्ध्नि विवृहति बध्नाति ॥**

**फालचमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्च्छयित्वाऽध्यण्डे बृहतीपलाशविदार्यौ वा प्रतिनीय पैद्वमिव ॥**

बाणं विवृहति । शरमणिं संपात्याभिमन्त्र्य बध्नाति । अध्यण्डे बृहतिपालाशविदार्यौ वा एकत्र पिष्ट्वाऽभिमन्त्र्य दक्षिणेनाङ्गुष्ठेन दक्षिणस्यां नासिकायां नस्तं ददाति । पुत्रार्थं कर्म पुंसवनमित्युच्यते । दाकेटी.

**'शमीमश्वत्थः' इति मन्त्रोक्तेऽग्निं मथित्वा पुंस्याः सर्पिषि पैद्वमिव ॥**

**मधुमन्थे पाययति ॥**

**कृष्णोर्णाभिः परिवेष्ट्य बध्नाति ॥**

पुनः पुंसवनमुच्यते मधुमन्थेऽग्निं निक्षिप्याभिमन्त्र्य पाययति स्त्रीम् । शमीगर्भाश्वत्थस्याग्निं कृष्णोर्णया वेष्टयित्वा संपात्याभिमन्त्र्य बध्नाति आज्यतन्त्रे । दाकेटी.

## वैखानसगृह्यसूत्रम्

होमः, पत्न्यै सर्षपमिश्रयवदानम्, उदराभिमर्शनम्, त्रिवृत्प्राशनम्, नाभेरूर्ध्वं दर्भेणोन्मार्जनम्, पुण्याहवाचनम्, ब्राह्मणभोजनम्

**[2]'अग्निमुपसमाधाय पूर्ववत् स्विष्टकारान्तं हुत्वा दक्षिणतोऽग्नेरपरस्यामासीनायाः 'वृषोऽसि'**

---

(१) जैगृ. १।५.

(१) कौसू. ३५।३–४, ८–१०.

(२) वैगृ. ३।११.

इति सर्षपमिश्रितान् यवान् 'आण्डौ स्थः' इति दद्यात् । अलाभे माषधान्यौ प्रतिनिधी स्याताम् । 'ॐभूर्भुवः सुवः, राकामहम्, यास्ते राके, सोम एव, विश्वा उत त्वया' इत्युदरमभिमृशेत् । पूर्ववत् ¶ त्रिवृत्प्राशनादीनीति विज्ञायते ॥

## कात्यायनः

गोभिलगृह्यसूत्रगतानां शुङ्गा–व्रतवती–ब्रह्मबन्धु-शब्दानामर्थाः

(१)लताग्रपल्लवो गूढः शुङ्गेति परिकीर्त्यते ।
पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाऽश्रुतः ॥

अश्रुतः वेदविहीनः । संत. ९११

## आश्वलायनः

स्मार्ताग्नौ होमः, गर्भाधानाकरणे गोदानपूर्वकत्वं पुंसवनस्य, मण्डलागारे कर्तव्यता, पत्न्युपवासः, सयवमाषदधिप्राशनम्, नस्तःकरणम्

(२)गर्भपुंसवसीमन्तबलिचौलानि निष्कृतीः ।
काम्यांश्च कुर्यात्स्मार्ताग्नावुत्सर्गोपाकृती च वा ॥

‡(३)गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति ।
अकृत्वा गां द्विजे दत्वा कुर्यात्पुंसवनं पतिः ॥

¶ 'पयो दधि घृतं समं गृहीतं त्रिवृदित्यामनन्ति' ( वैगृ. ३।१० ) इति पूर्वमुक्तम् । आदिपदेन "आचान्ताया नाभेरूर्ध्वम् 'आभिष्ट्वाऽहम्' 'पराञ्च(? ञ्चम्)' इति दर्भेण त्रिरुन्माज्यं पुण्याहं कुर्यात् । ब्राह्मणानन्नेन तर्पयति" ( वैगृ. ३।१० ) इति पूर्वमुक्तं ग्राह्यम् ।

‡ अस्य श्लोकस्य व्याख्यानं गर्भाधानविधिप्रकरणे ( सं. का. पृ. २३४५ ) द्रष्टव्यम् ।

(१) कास्मृ. ३।८१ गूढः ( बुध्नः ) थाऽश्रुतः ( था श्रुतः ) ; संत. ९११ (=) लताग्रप (लताग्रः प).

(२) आश्वस्मृ. ५।३६.

(३) आश्वस्मृ. ११।५१. शेषस्थलादिनिर्देशाः गर्भाधानविधिप्रकरणे ( सं. का. पृ. २३४४–२३४५ ) द्रष्टव्याः .

(१)अर्चिते मण्डलागारे कार्या पुंसवनक्रिया ।
अन्तरागमनं पत्न्याः शस्तं पूर्वेऽह्न्युपोषणम् ॥
(२)माषौ यवं च पुंल्लिङ्गं कृत्वा स्मृत्वाऽभिमन्त्र्य च ।
प्राश्नीयात् सा पतिश्चापि तस्या नस्यं च संचरेत् ॥

## लघ्वाश्वलायनः

वृद्धिश्राद्धम्, सयवमाषदधिप्राशनम्, नस्तःकरणम्, होमः, हृदयस्पर्शनम्

(३)कृत्वाऽऽभ्युदयिकं श्राद्धं चतुर्थ्यन्तं च पूर्ववत् ।
दधि माषौ यवं तस्या निधाय प्रसृतौ च तान् ॥
त्रिः पिबेत् किं पिबसीति पतिः पुंसवनं हि सा ।
प्रोक्ष्यापः पुनरेव स्यात्त्रिवारं पुनराचमेत् ॥
सिञ्चेद्दूर्वारसं तस्या दक्षिणे नासिकापुटे ।
आ ते गर्भ इति द्वाभ्यां सूक्ताभ्यां तावदुच्यते ॥
प्रजापतये स्वाहेति जुहुयादाहुतिं चरोः ।
गुर्विण्या हृदयं स्पृष्ट्वा यत्ते मन्त्रमुदीरयेत् ॥

## भुजबलः

होमः, शान्तिः, ऊर्णासूत्रग्रथितजीवजात्यादिमालाधारणम्

(४)सुफलं च करे कृत्वा स्थिरे तत्राऽऽसने तथा ।
गृह्योदितेन होमं च शान्तिं चैव च कारयेत् ॥
ऊर्णासूत्रेण संग्रथ्य जीवं जातीं च विद्रुमम् ।
गुवाकं रजतं हेम दद्यात्स्तनतटान्तरे ॥

## शौनककारिकाः

पत्न्युपवासः, मण्डलागारे कर्मकरणम्, पुण्याहवाचनवृद्धिश्राद्धकौतुकबन्धाः, होमः, सयवमाषदधिप्राशनम्, हृदयस्पर्शनम्

(५)गर्भस्य वैद्यशास्त्रोक्तपोषणानुपरोधतः ॥

(१) आश्वस्मृ. ११।५७ अर्चिते ( आदित्यो ) कार्या ( कार्याः ) क्रिया ( क्रियाः ) शस्तं ( शास्त्रं ) ; प्रपा. ११५.

(२) आश्वस्मृ. ११।५८ यवं ( यवौ ) ; प्रपा. ११५.

(३) लघ्वाश्वस्मृ. ४।४–७. (४) संत. ९१२.

(५) शौका. ३ पृ. ३४ ; प्रपा. ११५.

[1]पूर्वस्मिन् दिवसे पत्नी हविष्यैकाशना भवेत् ।
वृद्धिश्राद्धं पतिः कुर्याद्ब्रह्मचारी भवेत्तदा ॥

[2]समानवर्णवत्साया गोक्षीरप्रभवं दधि ।
त्रीन् यवान् माषषट्कं च संपाद्यैतानि निक्षिपेत् ॥

[3]कंचिद्गृहैकदेशं च रमणीयावकाशकम् ।
वृक्षाकारं तु सच्छायासंपन्नं परिकल्पयेत् ॥

[4]वधूमपि कृतस्नानां धृतधौताम्बरद्वयाम् ।
भूषितां गन्धमाल्याद्यैः कृतपुण्याहवाचनाम् ॥

[5]कृतकौतुकबन्धां तां कारयित्वाऽथ शोभने ।
मुहूर्ते ज्वलितं कृत्वा वह्निमौपासनं ततः ॥

[6]तत्रान्वाधानमारभ्य प्रणीतासादनावधि ।
पुरस्तात्तन्त्रमाचार्यः प्राजापत्यचरुं ततः ॥

[7]निरुप्य श्रपयित्वाऽऽज्यसंस्कारविधिपूर्वकम् ।
अनुयाजविधानान्तं तन्त्रं कृत्वा ततो वधूम् ॥

[8]आचान्ततोयां नीत्वाऽग्निमात्मानमथ चान्तरा ।
आत्मनो दक्षिणे पार्श्वे प्राङ्मुखीमुपवेशयेत् ॥

[9]ततः करेण संस्पृष्टो वध्वेध्माधानपूर्वकम् ।
पुरस्तात्तन्त्रशेषं तु समाप्य च यथाविधि ॥

[1]ततः प्रक्षालितं पाणिं भार्यायाः प्रसृतीकृतम् ।
दध्ना प्रसृतिमात्रेण पूरयित्वाऽथ तस्य तु ॥

[2]दध्नश्चोपरि निक्षिप्य पुंल्लिङ्गानुकृतिं यवम् ।
अण्डानुकारिणौ माषौ क्षिप्त्वाऽथ यवपार्श्वयोः ॥

[3]ततः किं पिबसीति त्रिर्वदन् पृच्छेद्वधूं वरः ।
त्रिः पुंसवनमित्युक्त्वा वधूः सयवमाषकम् ॥

[4]पीत्वा तद्दधि निःशेषमाचामेदुदकं ततः ।
अनेनैव प्रकारेण पुनर्द्विर्दधि पाययेत् ॥

[5]ततः प्राशनतस्तोयमाचामेदवधानतः ।
एवं पुंसवनं प्रोक्तम्* ... ... ॥

[6]उदरस्थे रसे तस्मिन्नाचान्तोदकया तया ॥

[7]स्पृष्टोऽवदाय जुहुयात् प्राजापत्यचरुं ततः ।
प्रजापतय इत्येतत् स्वाहान्तं समुदीरयेत् ॥

[8]ततः पाणितलेनास्या हृदयं संस्पृशेत् पतिः ।
यत्ते सुशीमे हृदये हितमित्यादिमन्त्रतः ॥

[9]ततः स्विष्टकृदाद्यूर्ध्वतन्त्रं परिसमापयेत् ॥

---

(१) शौका. ४ पृ. ३४ ; प्रपा. ११५ हविष्यै ( हविःपा ) पतिः ( पितुः ) ; धप्र. ३६ प्रयोगपारिजाते.

(२) शौका. ५ पृ. ३५ ; प्रपा. ११५ वर्ण ( रूप ) गोक्षी ( गोः क्षी ).

(३) शौका. ६ पृ. ३५ कंचि ( किंचि ) सच्छा ( तच्छा ) ; प्रपा. ११५.

(४) शौका. ७ पृ. ३५ ; प्रपा. ११५.

(५) शौका. ८ पृ. ३५ ऽथ ( तु ) ; प्रपा. ११५.

(६) शौका. ९ पृ. ३५ ; प्रपा. ११५ त्यचरुं ( त्यं चरुं ).

(७) शौका. १० पृ. ३५ ; प्रपा. ११५.

(८) शौका. ११ पृ. ३५ ; प्रपा. ११५ मथ (मपि).

(९) शौका. १२ पृ. ३५ ; प्रपा. ११५ स्पृष्टो ( सृष्टो ).

* अतः परं होमात्प्रागनवलोभनीयं नस्तःकरणम् ।

(१) शौका. १३ पृ. ३५ ; प्रपा. ११५.

(२) शौका. १४ पृ. ३५ कृतिं ( कृतं ) ; प्रपा. ११५ ऽथ ( च ).

(३) शौका. १५ पृ. ३५ ; प्रपा. ११५.

(४) शौका. १६ पृ. ३५ दुदकं ततः ( दविधानतः ) पू. ; प्रपा. ११५ तद्दधि ( च दधि ).

(५) शौका. १७ पृ. ३५ उत्त. ; प्रपा. ११५.

(६) शौका. २२ पृ. ३५ ; प्रपा. ११६.

(७) शौका. २३ पृ. ३५-३६ स्पृष्टो ( सृष्टो ) ; प्रपा. ११६ पत्यचरुं ( पत्यं चरुं ).

(८) शौका. २४ पृ. ३६ ; प्रपा. ११६ ; संकौ. ५७ पृ.

(९) शौका. २५ पृ. ३६ दाद्यूर्ध्वतन्त्रं ( तादूर्ध्वं तन्त्रं ) ; प्रपा. ११६.

## कुमारिलकारिकाः

वृद्धिश्राद्धम्, पत्न्या एकभक्तम्, होमः, सयवमाषदधिप्राशनम्, मण्डलागारे कर्तव्यमिति मतान्तरम्, हृदयस्पर्शनम्

[1]स्यादाभ्युदयिकं श्राद्धं गर्भिण्या एकभोजनम् ॥
[2]अथापरेद्युस्तिष्यर्क्षे पत्नीं कृत्वा समीपतः ।
आत्मनो दक्षिणे पार्श्वे प्रत्यगानडुहाजिने ॥
गर्भिण्युपविशेत् स्नाता जयन्तवचनं यथा ।
पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत् ॥
[3]निर्वापप्रोक्षणे स्यातां प्रजापतय इत्यथ ।
कृत्वाऽऽज्यभागपर्यन्तमवघातादि पूर्ववत् ॥
[4]समानरूपवत्साया गोर्दधि प्रसृतौ क्षिपेत् ।
तादृश्या गोरभावश्चेदन्यस्या गोर्दधि क्षिपेत् ॥

पूर्वेद्युः संभृतं यद्दधि तदेव प्रसृतिपरिमितं पत्न्याः प्रसृतौ क्षिपेदित्यर्थः । प्रसृतिर्नाम परस्परसंसृष्टाकुञ्चिताङ्गुलिपाणिः, 'पाणिर्निकुब्जः प्रसृतिः' इत्यभिधानात् । प्रपा. ११४

माषद्वयं यवं च त्रिः पृच्छेत् किं पिबसीति ताम् ।
त्रिः पुंसवनमित्युक्त्वा प्राशयैवं प्रसृतित्रयम् ॥
अण्डरूपेण माषौ स्तः शिश्नरूपेण वै यवः ॥
*[5]अन्ये त्वाहुरिदं कर्म कृत्स्नं स्यात् परिमण्डले ॥
[6]एकदेशं चरोर्हुत्वा प्रजापतय इत्यथ ।
यत्ते सुशीम इत्यस्या हृद्देशं पाणिना स्पृशेत् ॥
भवेत् स्विष्टकृदादि......... ॥

* अतः पूर्वमनवलोभनरूपं नस्तःकरणं परिमण्डलगेहे कर्तव्यमित्युक्तम् ।

(१) कुका. १।५।२ ; प्रपा. ११४ श्राद्धं (पूर्वे) ; धप्र. ३६. (२) कुका. १।५।३-४ ; प्रपा. ११४.
(३) कुका. १।५।५ ; प्रपा. ११४ स्यातां (तूष्णीं).
(४) कुका. १।५।६-८ ; प्रपा. ११४.
(५) कुका. १।६।२ ; प्रपा. ११४ कृत्स्नं (सर्वे).
(६) कुका. १।६।३-४ ; प्रपा. ११४ हृद्देशं (हृद्देशे).

## कपर्दिकारिकाः

संभारासादने विशेषः, शम्यास्थाने परिधयः, ब्राह्मणभोजनम्, आशीर्वाचनम्

[1]फलद्वयेन संयुतं वटाङ्कुरं दृषत्सुतौ ।
सुपावनाय वत्सकं क्षिपेत् सहैव पुंसवे ॥
नेष्टाः पुंसवने शम्या गृह्णीयात् परिधीनिह ।
ब्राह्मणान् भोजयेदन्ते वाचयेदाशिषस्तथा ॥

## रेणुकारिकाः

वृद्धिश्राद्धम्, उपवासः, नस्तःकरणम्, काम्यमनुमन्त्रणम्, मन्त्राणामृषिदैवतच्छन्दोविनियोगाः

[2]कारयित्वोपवासं तां तदहः श्राद्धपूर्वकम् ।
आप्लाव्य परिधाप्यैनां वाससी अहते सिते ॥
वटावरोहाङ्कुरकान् रात्रौ पिष्ट्वोदकेन तान् ।
कुशकण्टकसोमांशून् पिष्यमाणेषु वा क्षिपेत् ॥
दक्षिणस्यां च नासायामासिञ्चेद्वस्त्रपावितम् ।
हिरण्यगर्भ अद्भ्यः संभृत आभ्यां स्वयं पतिः ॥
वीर्यवन्तं यदीच्छेत् स पत्न्या अङ्के निधाय तु ।
उदपूर्णं शरावं तद् गर्भं स्वाम्यनुमन्त्रयेत् ।
सुपर्णोऽसीति गच्छ स्वः पतेत्यन्तेन मन्त्रतः ॥
हिरण्यगर्भ इत्यस्य ऋषिरुक्तः प्रजापतिः ।
त्रिष्टुप्छन्दो देवता को नियोगः पुरुषाहितौ ॥
अद्भ्यः संभृत इत्यस्या ऋषिर्नारायणोत्तरः ।
पुरुषो देवता त्रिष्टुप् विनियोग उपस्थितौ ॥
सुपर्णोऽसि कृतिश्छन्द ऋषिरस्याः प्रजापतिः ।
गरुत्मान् देवता विष्णुः क्रमेषु विनियुज्यते ॥

(१) कका. ६।४-५. (२) रेका. ५-१२ पृ. ६-७

# *अनवलोभनम्

## अनवलोभनविधिः

अनवलोभनस्य गर्भमासात्मकः कालः, अनवलोभने कनिष्ठस्यानधिकारः, अनवलोभनस्य प्रतिगर्भमावृत्तिः, अनवलोभनपदार्थः

### आश्वलायनगृह्यसूत्रम्

[1]**उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च ॥**

(१) येनासौ गर्भः पुं( सं १ )स्कृतः सन् नावलुम्पते नावस्रवते इत्यर्थः, तदनवलोभनं नाम। तदप्युपनिषद्येव व्याख्यातम् $। देभा.

(२) पुमांस्तु सन् येन नावलुप्यते तत् अनवलोभनम्। वर्णविकारो द्रष्टव्यः पृषोदरादित्वात् $। गानाग्र.

---

* अनवलोभनाख्यः पृथक्संस्कारो यद्यपि बहुभिराचार्यैर्नोक्तः, तदीयं नस्तःकरणाद्यपि पुंसवने एवान्तर्भावितम्, तथाऽपि आश्वलायनगृह्यसूत्रादीनां स पृथक्संस्कारोऽभिमत इति पृथगिदं प्रकरणं प्रकल्पितम्। पृथक्त्वेऽपि कैश्चित्पुंसवनेन सहैव व्यतिषङ्गेन होमादिसाधारणाङ्गतन्त्रेण चानुष्ठेयत्वोक्तेः क्रमबोधार्थं साधारणाङ्गबोधार्थं च पुंसवनप्रकरणानुसंधानमत्राऽऽवश्यकम्। लघ्वाश्वलायनेन पुंसवनीयहोमस्यानवलोभनकर्मत्वमनवलोभनस्य पुंसवनाङ्गत्वं च यदुक्तं तत् सूत्रभाष्यादिविरोधात् उपक्रमे स्वकृतपृथङ्निर्देशेन विरोधाच्च चिन्त्यम्। पद्याश्वलायनेन (सं. का. पृ. ५८) आश्वलायनसूत्रानुसारिप्रयोगग्रन्थैश्च संस्कारगणनायामनवलोभनस्य यदगणनं तत् पुंसवनेन सहैवानुष्ठाननियमात् तेनैव सिद्धगणनत्वमभिप्रेत्येति मन्तव्यम्, सूत्रस्य प्रयोगग्रन्थानां निबन्धानां च पृथक्संस्कारत्वे एव तात्पर्यावगमात्, स्मृत्यर्थसारे (सं. का. पृ. ६१) संस्कारेषु गणनात्, तथैव शिष्टव्यवहाराच्च। अत एव कौषीतकिगृह्यसूत्रपुस्तके मुद्रितः " गर्भरक्षणकर्मापि रक्षणार्थे न तु संस्कृतिः। इति कारिका " इति नारायणभाष्यैकदेशः शाङ्खायनशाखिविषय इत्यभ्युपेयम्। अनवलोभनापरपर्यायस्य गर्भरक्षणस्य पृथक्कर्मत्वेऽपि न संस्कारत्वमिति तदर्थः। यदि तु कारिकायाः शब्दतोऽनुवादस्तदाऽक्षराधिक्यान्नकारतुकारान्यतरस्य प्रामादिकत्वम्। तत्र नकारस्य प्रामादिकत्वे तदपि पृथक्संस्कारत्वे एव प्रमाणम्।

$ शेषं व्याख्यानं गर्भाधानविधिप्रकरणे ( सं. का. पृ. २३४३) द्रष्टव्यम्।

(१) आगृ. १।१३।१. शेषस्थलादिनिर्देशः गर्भाधानविधिप्रकरणे ( सं. का. पृ. २३४३ ) द्रष्टव्यः.

### आश्वलायनगृह्यपरिशिष्टम्

[1]**चतुर्थेऽनवलोभनम् ॥**

अनवलोभनस्याप्ययमेव$ कालः। दीपिकायां तु 'चतुर्थेऽनवलोभनम्' इत्युक्तम्। सिन्धु. ८३३

[ अयमेवेति। अस्य पुंसवनसहकार्यत्वात्। कृभ. ]

### कौषीतकिगृह्यसूत्रम्

[2]**चतुर्थे मासि गर्भरक्षणम् ॥**

(१) गर्भरक्षणं वक्ष्यामः। गर्भसंभवादारभ्य चतुर्थे मासि भवति। कौगर्भ.

(२) अथानवलोभनम्। येन कर्मणा जातो गर्भो नावलुप्यते तदनवलोभनम्, छान्दसो वर्णव्यत्ययः, 'माऽहं पौत्रमघं नियाम्' इति मन्त्रलिङ्गात्। अस्यार्थः— अहं पौत्रं पुत्रनिमित्तमघं व्यसनं मा नियां मा यासिषम्। एतस्यैव गर्भरक्षणकर्मत्वमुक्तं शाट्यायनगृह्ये— 'चतुर्थे मासि गर्भरक्षणम्' इति। संप्र. १७०–१७१

---

$ पुंसवनीय एवेत्यर्थः।

(१) ब्रक. ८२ (चतुर्थे गर्भरक्षणम्); बका. ७३३; सिन्धु. ८३३ दीपिकायाम्; संको. ५८; पुम. ४३२.

(२) कौगृ. १।२१।१; ब्रक. ८२ ( मासि० ); संप्र. १७१ शाट्यायनगृह्ये; संर. ८२०.

## काठकगृह्यसूत्रम्

*[1]अत्रैवानवलोभनम् ॥

¶ अस्मिन्नेव मासि अनवलोभनं गर्भरक्षार्थमन्यगृह्योक्तं कर्तव्यम् 'यास्ते राके' इति, 'भुवो यज्ञस्य' इत्याग्नेय्या, 'ये के च ज्मा' इति वैश्वदेव्या वा । ब्राह्म.

## बैजवापगृह्यसूत्रम्

§[2]अथ पुंसवनानवलोभने करोति मासि द्वितीये तृतीये वा पुरा स्पन्दत इति ॥

## शङ्खः

‡[3]गर्भस्य स्फुटताज्ञानेऽभिषेकः परिकीर्तितः ॥

## आश्वलायनः

[4]†पुंसवादीनि कर्माणि त्रीणि श्रेष्ठेन कारयेत् ॥

## लघ्वाश्वलायनः

[1]कुर्यात्पुंसवनं मासि तृतीयेऽनवलोभनम् ।
सीमन्तोन्नयनं चैव चतुर्थे मासि तद्भवेत् ॥
नो चेत् षष्ठेऽष्टमे वाऽपि कर्तव्यं तद्द्वयं च हि ।
तावदेव भवेत् केचिद्यावत्स्याद्गर्भधारणम् ॥
प्राशनं यत्पुंसवनं होमश्चानवलोभनम् ।
प्रतिगर्भमिदं कुर्यादाचार्येणेह भाषितम् ॥
प्रधानं पुंसवनं न स्यादङ्गं चानवलोभनम् ।
सीमन्तं च तथैव स्यात्केचिदुन्नयनं तथा ॥

## सोमः

[2]चतुर्थे गर्भल( ? र )क्षणम् ॥

## स्मृत्यर्थसारः

[3]अनवलोभनं चतुर्थे ॥

## शाकलकारिका:

‡[4]अथ पुंसवनं कार्यमुक्तकाले यथाविधि ।
सूत्रकारमतेनैव तथा चानवलोभनम् ॥

## शौनककारिका:

[5]न लुप्येत स्ववेदेन तत्कर्मानवलोभनम् ॥

---

* ब्राह्मणबलादित्यदर्शनाभिमतोऽयं पाठः । तत्राऽऽदित्यदर्शनस्य व्याख्यानं पाठसाम्येऽपि विषयभेदात् 'विवाहपूर्वं कर्तव्यानि देवपत्नीयागवादननृत्यादीनि' इत्येतस्मिन् प्रकरणे ( सं. का. पृ. १९०५ ) संगृहीतादर्शपुस्तकमुद्रितपाठे द्रष्टव्यम् ।

¶ तृतीये गर्भमासे इत्यर्थः ।

§ व्याख्यानं पुंसवनविधिप्रकरणे (सं. का. पृ. २५३४) द्रष्टव्यम् ।

‡ अस्यानवलोभनपरत्वं चकाग्रन्थे स्पष्टम् । स्मृतिपाठे गर्भाधानपरत्वमिति तेन पाठेन गर्भाधानविधिप्रकरणे (सं. का. पृ. २३४३ ) संगृहीतम् ।

† अस्य व्याख्यासंग्रहः पुंसवनविधिप्रकरणे (सं. का. पृ. २५३८ ) द्रष्टव्यः ।

(१) कागृ. ३११६.

(२) ब्रक. ८२ अथ ( तत्र ) ( तृतीये० ). शेषः स्थलादिनिर्देशः पुंसवनविधिप्रकरणे (सं. का. पृ. २५३४) द्रष्टव्यः .

(३) शंस्मृ. २।१ ऽभिषेकः (निषेकः) ; चका. ७३३.

(४) आश्वस्मृ. ११।९५. शेषः स्थलादिनिर्देशः पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३८ ) 'दीक्षान्ते' इति वचने द्रष्टव्यः .

‡ अस्मात्परं श्लोकद्वयं पुंसवनविधिप्रकरणे (सं. का. पृ. २५४०) संगृहीतमनुसंधेयम् ।

(१) लघ्वाश्वस्मृ. ४।१–२, १७, १९.

(२) चका. ७३३.

(३) स्मृसार. ३.

(४) शाका. २७० पृ. ३०.

(५) शौका. ४ पृ. ३४ ; प्रपा. ९७.

# *अनवलोभनप्रयोगः

मण्डलागारच्छायायां गर्भिण्याः नस्तःकरणम्,
स्थालीपाकः, आज्यलेपेनाङ्गविमार्जनम्

## आश्वलायनगृह्यसूत्रम्

† [१]**अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति ॥**

(१) उक्तं यत् कर्म तत् पुंसवनं नाम वेदितव्यम्। तेन अथशब्दः प्रयुज्यते कर्मान्तरप्रज्ञापनार्थम्। किं पुनरिदं कर्म विधीयते? अनवलोभनम्। कुत एतत्? ¶ मन्त्रलिङ्गदर्शनात् 'माऽहं पौत्रमघं नियाम्' (आगृ. १।१३।७) इति। मण्डलागारच्छायायामिति। मण्डल अगारः कर्तव्यः। तस्य छायायां नस्तःकर्म कर्तव्यम्। दक्षिणस्यां नासिकायामिति। नासिकाबिलद्वित्वाद्विशेषणं क्रियते दक्षिणस्यामिति। दक्षिणग्रहणं न कर्तव्यम्। कस्मात्? परिभाषासिद्धत्वात्। तत्र न क्रियते। अनङ्गत्वात् नासिकायाः। अङ्गवचने सा परिभाषा। इहेन्द्रियकर्मत्वान्न प्राप्नोति। तस्माद्दक्षिणस्यामित्यारभ्यते। अजीतामोषधीमिति। अजीतामित्योषधिनामधेयमेवेदम्, न गुणविधिरिति। एवं सति ओषधीग्रहणमपार्थकम्। ओषधीग्रहणान्मन्यामहे—गुणविधिरयमिति। तेन अजीर्णा ओषधी विधीयते। का पुनः सा? दूर्वा। तामोषधीम्। नस्तः करोति येनोपायेन शक्यते कर्तुम्। अनुपदेशान्मन्त्रो न भवति।

देभा.

(२) 'अथास्यै' इत्यस्याः अनवलोभनकर्म। अस्यै इति षष्ठ्यर्थे चतुर्थी छान्दसत्वात्। मण्डलागारच्छाया मण्डलाकृतिगृहच्छाया। अजीता श्वेतदूर्वा। ब्रक. ८२

(३) कर्मान्तरत्वात् कालान्तरप्राप्तावानन्तर्यार्थोऽथशब्दः। इदं त्वनवलोभनम्। कुतः? 'माऽहं पौत्रमघं नियाम्' इति मन्त्रलिङ्गात्। पुत्रसंबन्धि अशोभनं माऽहं नियामित्यर्थः। अस्यै अस्याः मण्डलागारं कृत्वा तस्य छायायामुपवेश्यास्या दक्षिणस्यां नासिकायां दूर्वा नस्तः करोति। नस्तःकरणं नासिकायां रससेचनम्।

† गानावृ.

[१]**प्रजावज्जीवपुत्राभ्यां हैके। ‡ 'आ ते गर्भो योनिमैतु पुमान् बाण इवेषुधिम्। आ वीरो**

---

* अनवलोभनस्य पृथङ्मुहूर्तानुक्तेः पुंसवनमुहूर्त एवास्यापीति बोध्यम्।

† कृभव्याख्यानं सीमन्तोन्नयने हारीतवचने द्रष्टव्यम्।

¶ एतेन 'यत्ते सुसीमे' इति मन्त्रकरणकं हृदयालम्भनमनवलोभनाङ्गमिति प्रतीयते। तत्तु पुंसवनानवलोभनोभयसाधारणस्थालीपाकविधायकसूत्रैकदेशेन विहितमिति कृत्वा पुंसवनप्रयोगे (सं. का. पृ. २५५१) संगृहीतम्।

(१) आगृ. १।१३।५; अप. १।११–१३ पृ. २५–२६ जीतामोषधीं (जितामोषधिं); ब्रक. ८१; प्रपा. ११४; संप्र. १७१; संम. १३ (दक्षिणस्यां नासिकायाम्०); कृभ. ८३६ (=) (अथास्यै मण्डलागारच्छायायां०) मजीता (मजिता) करोति (कृत्वा).

† शेषं देभागतम्। अना. देभागतं गानावृगतं च।

‡ इमौ द्वौ मन्त्रौ द्वयोः खिलसूक्तयोरादिमौ। बहुष्वाश्वलायनगृह्यसूत्रपुस्तकेष्वत्रैतौ मन्त्रौ मुद्रितौ। वैदिकानां सांप्रदायिकपाठोऽपि तथैव। तथाऽपि लघ्वाश्वलायनस्मृतौ शौनककुमारिलकारिकयोः वृत्त्यादिग्रन्थेषु प्रयोगपारिजातादिप्रयोगग्रन्थेषु च सूक्तद्वयविनियोगस्योक्तत्वात् तथैव याज्ञिकाचारात् अपरार्क–प्रयोगपारिजात-संस्कारप्रकाशेषु अनाविलापुस्तके च मन्त्रद्वयहीनपाठस्यैवोपलभ्यमानत्वाच्च मन्त्रद्वयमिदं केनचिदत्र प्रक्षिप्तमिति निश्चिनुमः। न हि सूक्तविनियोगे मन्त्रपाठ उपपद्यते, 'सूक्तं सूक्तादौ हीने पादे' इति परिभाषया सूक्तादिहीनपादस्यैव पठनीयत्वात्, अत्र तु प्रजावज्जीवपुत्रसंज्ञाभ्यां सूक्तग्रहणे सिद्धे तस्याप्यनावश्यकत्वात्। एवं स्थिते 'आभ्यां मन्त्राभ्याम्' इति देवस्वामिभाष्यं ब्रह्मचारि-

(१) आगृ. १।१३।६; अप. १।११–१३ पृ. २६ (आ ते... इति०); ब्रक. ८१ देवतानां (देवानां); प्रपा. ११४ अपवत्; संप्र. १७१ अपवत्.

**जायतां पुत्रस्ते दशमास्यः । अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् ॥' इति ॥**

(१) एके आचार्याः प्रजावज्जीवपुत्राभ्यां नस्तःकर्मेच्छन्ति । तेन नासिकायामोषध्यासेचनं आभ्यां मन्त्राभ्यां भवतीत्यर्थः । अन्ये पुनस्तूष्णीमिति । तत् प्रागुक्तम् । देभा.

(२) 'अपश्यं त्वा मनसा दीध्यानः(१ नाम्)' (ऋसं. १०।१८३।२) इत्यादि प्रजावान् मन्त्रः । 'अग्निरैतु प्रथमः' (ऋसं. [खिल] २।११।१) इत्यादि जीवपुत्रा मन्त्राः । अप. १।१३

(३) 'आ ते गर्भः' (ऋसं. [खिल] २।१०।१) इत्यादि प्रजावान् मन्त्रः । 'अग्निरैतु प्रथमः' इत्यादि जीवपुत्रमन्त्रः । ब्रक. ८२

(४) प्रजावता दृष्टो मन्त्रः प्रजावान् , जीवपुत्रेण दृष्टो मन्त्रो जीवपुत्रः , यथा सूर्येति । 'आ ते गर्भः' इति सूक्तं प्रजावान्, 'अग्निरैतु प्रथमः' इति सूक्तं जीवपुत्रः । आभ्यां सूक्ताभ्यामेके नस्तःकरणमिच्छन्ति। अन्ये तूष्णीम् । हशब्दोऽभिमतत्वज्ञापनार्थः । गानावृ.

(५) सूक्तद्वयमुक्त्वा तदन्ते निषेकः । अनयोरपि सूक्तयोर्लिङ्गानि भवन्ति अनवलोभनमेतदिति । ¶ अना.

(६) अत्र च दूर्वारसावसेचनं हृदयस्पर्शनं चेति द्वयमनवलोभनम् , शेषं सर्वं पुंसवनमिति गृह्यप्रसिद्धिः । ¶ संप्र. १७१

---

कल्पतरौ उभयत्र मन्त्रशब्दैकवचनं च चिन्त्यम् । न चात एव प्रमाणादपरो मन्त्रद्वयविनियोगसंप्रदायः कल्प्य इति वाच्यम् , अतिप्रबलविरुद्धप्रमाणप्रतिबद्धत्वेनास्य प्रामाण्यानुदयात् । अपरार्के 'अपश्यं त्वा मनसा दीध्यानाम्' इति ऋक्संहितान्तर्गतप्रजावत्सूक्ते द्वितीय एक एव मन्त्रः प्रजावानुक्तः , तदपि चिन्त्यम् । यद्यपि ऋक्संहितायां प्रजावत्सूक्तमस्ति (ऋसं. १०।१८३), तथाऽपि खैलिकजीवपुत्रसूक्तसाहचर्यात् शौनकादिभिः खैलिकस्यैव शृङ्गग्राहिकया निर्देशाच्च खैलिकमेव प्रजावत्सूक्तमत्र ग्राह्यम्।

¶ शेषं गानावृगतम् ।

## आश्वलायनगृह्यपरिशिष्टम्

**'प्रथमे गर्भेऽनवलोभनं व्याख्यास्यामः । चरुद्वयं कुर्वीतेति प्राजापत्यं पौरुषं च । 'हिरण्यगर्भः समवर्तताग्रे' इति षट् प्राजापत्ये, 'सहस्रशीर्षा' इति द्वितीये । गुर्विण्याः कुक्षिमभिमन्त्रयेत 'आयुष्यम्' इति सूक्तेन । ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत ॥**

द्वितीये चरौ सूक्तस्य विनियोगः, 'सूक्तं सूक्तादौ हीने पादे' इति परिभाषाया गृह्य इव तत्परिशिष्टे प्रवृत्तेः । अयं प्रकारश्च न भाष्यवृत्तिकारादिभिरादृतः । उक्तं हि भाष्ये प्राजापत्यं प्रकृत्य– 'उभयोः कर्मणोरयं साधारणः स्थालीपाकः' इति । जयन्तकारिकादौ च नाम्नैव होम उक्तः । अतः शिष्टैरप्यनादृत इति च न तत्प्रयोगो लिख्यते । संको. ५८

## कौषीतकिगृह्यसूत्रम्

**'[1]ब्रह्मणाऽग्निः संविदानः' इति षट् स्थालीपाकस्य हुत्वा ॥**

**'[2]अक्षीभ्यां ते नासिकाभ्याम्' इति प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्य ॥**

(१) अत्र स्तरणाघाराज्यभागा निर्विकल्पाः । 'रक्षोहाग्नये जुष्टं गृह्णामि' इति मनसा ग्रहणम् । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततः 'ब्रह्मणाऽग्निः संविदानः' इति प्रत्यृचं षड्भिर्मन्त्रैः स्वाहाकारान्तैः षडाहुतीः स्थालीपाकस्यावदानधर्मेण हुत्वा ततः स्विष्टकृतं हुत्वा महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापयेत् । तत आज्यस्थाल्यां यदाज्यं परिशिष्टं तद्धस्तेन गृहीत्वा 'अक्षीभ्यां ते नासिकाभ्याम्' इति षडर्चेन प्रत्यृचं यथालिङ्गमङ्गान्यत्र विमार्ष्टि । कौगसं.

---

(१) संको. ५८.

(२) कौगृ. १।२१।२ ; संर. ८२०.

(३) कौगृ. १।२१।३ ; संर. ८२० (नासिकाभ्याम्० ) नुविमृज्य ( वमृजेत् ).

(२) 'ब्रह्मणाऽग्निः संविदानः' इति राक्षोघ्नम्। रक्षोहाऽग्निर्देवता । शाखान्तरोक्तत्वाल्लौकिकाग्नाविदं कार्यम्। सं. ८२०

## लघ्वाश्वलायनः

[1]सिञ्चेद्दूर्वारसं तस्या दक्षिणे नासिकापुटे।
आ ते गर्भ इति द्वाभ्यां सूक्ताभ्यां तावदुच्यते॥

## शौनककारिकाः

......... [2]अथ त्वनवलोभनम्।
तत्कुर्यान्मण्डलागारच्छाये पूर्वकृते तथा।
दूर्वापुञ्जं दृषत्पुत्रे दृषत्पुत्रेण कन्यया॥

[3]पेषयित्वा तु तत्तत्र पिण्डीकृत्य च पाणिना।
आदाय तत्पुनः शुभ्रवस्त्रच्छन्नं प्रगृह्य च॥

(१) लघ्वाश्वस्मृ. ४।६.

(२) शौका. १७-१८ पृ. ३५ गार (कार); प्रपा. ११५.

(३) शौका. १९ पृ. ३५ पाणिना (वारिणा); प्रपा. ११५-११६.

[1]आ ते गर्भो योनिमैतु अथ सूक्तं खिलोद्भवम्।
अथाग्निरैतु प्रथम इत्याद्यं च यथाक्रमम्॥

[2]खिलसूक्तद्वयमिदं जपित्वा त्ववधानतः।
प्रत्यग्देशे स्त्रियास्तिष्ठन् दक्षिणे नासिकाबिले॥

तथा दूर्वारसं सिञ्चेद्यथोदरगतो भवेत्।
उदरस्थे रसे तस्मिन्नाचान्तोदकया तथा॥

[3]स्पृष्टोऽवदाय जुहुयात् प्राजापत्यचरुं ततः॥

## कुमारिलकारिकाः

[4]परिमण्डलगेहस्य च्छायायामुपवेश्य ताम्।
सिञ्चेद्दूर्वारसं त्वस्या दक्षिणे नासिकाबिले।
प्रजावज्जीवपुत्राभ्यां सूक्ताभ्यां वा तदिष्यते॥

(१) शौका. २० पृ. ३५; प्रपा. ११६ मैतु अथ (मिति चाऽऽद्यं).

(२) शौका. २१-२२ पृ. ३५; प्रपा. ११६.

(३) शौका. २३ पृ. ३५ स्पृष्टो (सृष्टो); प्रपा. ११६ पत्यचरुं (पत्यं चरुं).

(४) कुका. १।६।१-२; प्रपा. ११४.

# सीमन्तोन्नयनम्

## सीमन्तोन्नयनविधिः

सीमन्तोन्नयने गर्भमासविधिः , प्रथमगर्भे एव कर्तव्यमिति प्रतिगर्भं कर्तव्यमिति च गर्भिणीसंस्कारः गर्भसंस्कारः उभयसंस्कार इति च मूले टीकासु च मतानि, मासः सावनः सौरो वा गणनीय इति मतद्वयम्, सीमन्तसंस्काराङ्गभोजनग्रहणे प्रायश्चित्तम् , अकृतसीमन्तायाः प्रसवोत्तरं सीमन्तकरणविधिः , गर्भभक्षकराक्षसीनिरासः सीमन्तसंस्कारफलम् , पत्यभावे कर्त्रन्तरविधिः , अकृतपुंसवनायाः पुंसवनपूर्वकं सीमन्तकरणम्

### बौधायनगृह्यसूत्रम्

[1]**प्रथमगर्भायाश्चतुर्थे मासि सीमन्तोन्नयनम् ॥**

### आश्वलायनगृह्यसूत्रम्

[2]**चतुर्थे गर्भमासे सीमन्तोन्नयनम् ॥**

(१) अथोत्तरे कर्मणि चतुर्थे गर्भमासे इति । सीमन्तो यस्मिन् कर्मण्युन्नीयते तदिदं सीमन्तोन्नयनं नाम चतुर्थे गर्भमासे भवति । सीमन्तोन्नयनमिति विशेषग्रहणम् । तत्र 'प्रथमे गर्भे' इत्येवं केचित् पठन्ति । कस्मात् ? इतरथा प्रतिगर्भमिदं प्राप्नोति । तन्न भविष्यति । सकृदेवेदं कर्म चोद्यते । ब्रवीति– एवं सति पुंसवनादीनामपि सकृदेव क्रिया प्राप्नोति । न चेष्यते । तेन यथा तेषां कर्मणां प्रतिगर्भमभ्यावृत्तिः भवति एवमस्यापि । तस्मात् प्रथमगर्भे इति पठितव्यम् । तथापि न पठितव्यम् । कस्मात् ? पूर्वस्य कर्मणः प्रतिगर्भमभ्यावृत्तिर्युक्ता । ( संस्कारः प्रधानमावर्तयितुं नोत्सहते । ? ) कस्मात् ? गर्भसंस्कारत्वात् । अस्य तु न भविष्यति, अगर्भसंस्कारत्वात् । तस्मान्न पठितव्यम् । नेत्युच्यते । इहापि गर्भे संस्कारो भवति । कुतः ? मन्त्रलिङ्गात्–'एवं त्वं गर्भमाधेहि दशमे मासि सूतवे ।' इति । तेनास्यापि कर्मणः प्रतिगर्भमभ्यावृत्तिः प्राप्नोति । परिसंख्यातत्वाच्च संस्काराणां के( ? कैः )चित् । अष्टाचत्वारिंशत् संस्कारा विहिताः । तेन क्रिया प्राप्नोति । तस्मात् पठितव्यम् । ( न पठितव्यम् । ) कस्मात् ? गर्भसंस्कारस्य गुणभूतत्वात् । सीमन्तोन्नयनमात्रमप्र( ? मत्र प्र )धानम् । तेन गुणभूतो गर्भसंस्कारः प्रधानमावर्तयितुं नोत्सहते । कथं पुनरेतद्गम्यते ? यथा सीमन्तोन्नयनमिति तत्समाख्यानात् । यथा वैश्वदेव्यां विश्वे देवाः प्रधानाः अन्यास्वपि देवतासु विद्यमानासु । कस्मात् ? तदुपदेशात् । 'प्रधानहवींषि चैके' इति तस्य ग्रहणं भविष्यति । एवमिहापि तत्समाख्यानात् सीमन्तोन्नयनस्य प्राधान्यम् । प्राधान्यान्नाभ्यावर्तते । ननु च हीनसंस्कारा भविष्यन्ति । (¶आधानसंस्कारा भवन्ति, आधानसंस्कारत्वात् । तस्मात् प्रथमगर्भे इति पठितव्यम् । तस्मात्तद्वाक्यं न पठितव्यम् । ) पुंसवनस्य च गर्भसंस्कारत्वात् प्रतिगर्भमभ्यावृत्तिः सिद्धा भवति । षष्ठाष्टमयोर्वा केचित् पठन्ति । तदिष्यते । † देभा.

(२) सीमन्तो यस्मिन् कर्मणि उन्नीयते तत् सीमन्तोन्नयनं चतुर्थे मासि कार्यम् । इदं कर्म न प्रतिगर्भमावर्तते, स्त्रीसंस्कारत्वात् । नन्वयं गर्भसंस्कारः , 'एवं तं गर्भमाधेहि' इति मन्त्रलिङ्गात् । सत्यम् । तथापि नाऽऽवर्तते, आधारसंस्कारस्य प्राधान्यात् । कुतः

---

(१) बौगृ. १।१०।१.

(२) आगृ. १।१४।१ ; ब्रक. ८३ ; चका. ७३४ यनम् + ( षष्ठाष्टमयोर्वा ) शौनकः ; प्रपा. ११८ यनम् + ( षष्ठेऽष्टमे वा ) ; संप्र. १७३ ; चम. ७ प्रपावत् ; शंको. ५५ ; पुम. ४३२ चकावत् .

¶ कंसस्थितो ग्रन्थोऽशुद्धः ।

† अना. देभागतं गानावृगतं च ।

प्राधान्यमिति चेत् , सीमन्तोन्नयनमिति समाख्याबलात् । आधारस्य च संस्कृतत्वात् सकृत्संस्कृता यं यं गर्भं प्रसूते स सर्वः संस्कृतो भवेत् । तेनाऽऽवृत्तिर्न भवतीति सिद्धम् । ¶ गानावृ.

## आश्वलायनगृह्यपरिशिष्टम्

**[1]सीमन्तोन्नयनं प्रथमे गर्भे । ' सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कारः ' इति श्रुतिः ॥**

गर्भपात्रयोरयं गार्भपात्रः । गर्भ( स्य ? )स्योदरगतस्य तदाधारस्य च पात्रस्य क्रिया इत्यर्थः । §ब्रक. ८४.

## कौषीतकिगृह्यसूत्रम्

**[2]सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम् ॥**

सीमन्तोन्नयनं कर्म वक्ष्यामः। गर्भाधानमासात् सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनं भवति । कौगृसं.

## आपस्तम्बगृह्यसूत्रम्

**[3]सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि ॥**

( १ ) मन्त्राम्नानक्रमेण विवाहादयः संस्कारा व्याख्याताः । अनन्तरं तत्क्रमेणैव सीमन्तादयो व्याख्यायन्ते— सीमन्तोन्नयनमिति । सीमन्तो नाम केशमध्ये रेखाविशेषः । स उन्नीयते यस्मिन् कर्मणि तत् सीमन्तोन्नयनं नाम कर्म गर्भसंस्कारः । तच्चतुर्थे मासि कर्तव्यम् । प्रथमनियमादाधारसंस्कारोऽयम् । आधारे च संस्कृते तत्राऽऽहिताः सर्व एव गर्भाः संस्कृता भवन्ति ।

अनाकुला.

( २ ) चतुर्थे मासि चतुर्थे मासे । ¶अल्लोपश्छान्दसः , ' छन्दोवत्सूत्राणि भवन्ति ' इति स्मृतेः । $ ताद.

## हिरण्यकेशिगृह्यसूत्रम्

**[1]अथातः सीमन्तोन्नयनम् ॥**

अथशब्दोऽधिकारार्थः । सीमन्तोन्नयनमधिक्रियते । अतःशब्दो हेतौ । यतोऽनेन कर्मणा संस्कृतायामुत्पन्ना प्रजा ब्राह्मण्यं लभते, न जातिमात्रेण, तत इदमधिक्रियते । अधिकारवचनं हेतुवचनं वा विशेषापादकसंस्कारेषु कार्यमिति । † मातृवृ.

**प्रथमगर्भायाश्चतुर्थे मासि ॥**

प्रथमो गर्भो यस्याः सा प्रथमगर्भा । तस्याश्चतुर्थे गर्भमासे । मासीति पदादीनां केषांचिदादेशानां भाषायां प्रयोगो दृष्ट इत्युक्तम् । प्रथमगर्भे इति वाच्ये प्रथमगर्भाया इति वचनं स्त्रीप्राधान्यख्यापनार्थम् । तस्मादयं सर्वगर्भार्थ आधारसंस्कारः । ततः प्राक्चतुर्थान्मासाद्विहते गर्भे विस्तरणे वा( ? णेना- ) क्रियायां वा( ऽ )प्रथमे गर्भे चतुर्थे मासि कर्तव्यम् । अथ किमर्थे क्रमविपर्यासेन प्राक् पुंसवनात् सीमन्तोन्नयनमुच्यते ? तत्रैक आहुः— सकृत्कृतस्य सीमन्तोन्नयनस्य विवाहादर्वाक् पुंसवनादीनां प्रतिगर्भमावृत्तावतुल्यत्वादिति । अपरे प्रथमगर्भे पुंसवनस्य भावार्थ-

---

¶ प्रपा. गार्ग्यनारायणवृत्तेरनुवादः ।

§ संत. , उत. , श्रात. ब्रह्मचारिकल्पतरोरनुवादः ।

(१) ब्रक. ८३ ; हृमा. १४८ ( सीमन्तोन्नयनं० ) गार्भपा ( गर्भमा ) ( श्रुतिः० ) ; गभा. १५० हृमावत् ; संत. ८७१ ; उत. १३२ ; श्रात. ३२२ ; संग. ४१९ हृमावत् .

(२) कौगृ. १।२२।१ ; ब्रक. ८३ मगर्भे (मे गर्भे) ; स्मृच. १७ ब्रकवत् ; चका. ७३४ ब्रकवत् ; पमा. ४३८ ब्रकवत् ; गभा. १५० ; समु. ७ ब्रकवत् ; मुक्ता. ७८ ब्रकवत् ; संम. १३ ब्रकवत् ; संग. ४१९ ; संर. ८२०.

(३) आपगृ. १४।१ ; स्मृच. १७ ; चका. ७३४ ; पमा. ४३८ ( सीमन्तोन्नयनं० ) ; प्रपा. ११८ ; गभा. १५० ; संप्र. १७३ ; मुक्ता. ७८ ; संम. १३ ; विपा. ९७ ; आन. १४७ ; बाल. १।११–१२ पृ. १४ ; संग. ४१९ ( सीमन्तोन्नयनं प्रथमगर्भे चतुर्थमासि ).

¶ ' पद्दन्नोमास् ० ' ( पा. सू . ६।१।६३ ) इति सूत्रेणाल्लोपसमानयोगक्षेमो ' मास् ' इत्यादेश इत्यर्थः । तस्य छन्दोविषयत्वेऽपि ' मासश्छन्दसि ' इति वार्तिके छन्दोग्रहणात् क्वचित् लौकिकविषयेऽपि पदाद्यादेशा भवन्तीति वैयाकरणाः ।

$ शेषम् अनाकुलावत् ।

† संर. मातृवृगतम् ।

(१) हिगृ. २०।१।१–२ ; संर. ८२०.

मिति। तथा केचिच्छन्दोगा गृह्येषु व्याचक्षते। अन्ये पुंसवनस्य कालानित्यत्वख्यापनार्थम्। तथा ह्येकेषाम् 'व्यक्ते गर्भे' इति वचनम्, अपरेषां किल 'षष्ठे' इति। मातृद.

## मानवगृह्यसूत्रम्

**[1]तृतीये गर्भमासेऽरणी आहृत्य षष्ठेऽष्टमे वा...... सीमन्तं करोति ॥**

तृतीये, उक्तम् 'बृहदिति जातं प्रतिष्ठितम्' (मागृ. १।१४।१९) इति, तत आरभ्य तृतीये गर्भमासे अरणी (आहृत्य) सीमन्तं करोति। अरणी द्वादशाङ्गुले काठके परिशिष्टे उक्ते§। तृतीये गर्भमासे यदरण्याहरणं तदाहरणमात्रं दृष्टादृष्टार्थं तावत्। पुत्रे जाते सति तत्कर्मोच्यते। तच्च जातमात्र एव। तथा च स्मृत्यन्तरम्– 'कुमारं जातं पुराऽन्यैरालम्भात् दधिमधुनी हिरण्यादिकात्सहिरण्येन(? सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन) प्राशयेत्' इति। अन्यैः (आलम्भः) ग्रहणमित्यर्थः। युक्तं चैतत् जातमात्र एव जातकर्म यद्दधिप्राशनं विहितम्, ततः स्तनदानम्। एवं च यदि जातकर्मणः कालान्तरं प्रतीक्ष्यते तदा (न?) तस्य प्राणातिपातः स्यात्। एवमाहरणं न तदाऽरण्योः शीघ्रं भवतीति पूर्वमस्मात्कस्मिंश्चिन्मास आहरित(? हर्त)व्ये इति दृष्टार्थमाहरणम्। तृतीये तु यदुक्तं तददृष्टार्थम्। तस्मादाहरणमात्रमेव संस्कारकम्, तयोरुपयोक्ष्यमाणत्वात् 'तक्षा यूपं छिनत्ति' इतिवत्। ततस्तस्मिन्नेव मासे सीमन्तविधानम्। अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

**[2]अथास्याः प्रथमगर्भिण्याश्चतुर्थे मासि सीमन्तं कुर्वन्ति ॥**

§ अतः परः कियांश्चित् ग्रन्थोऽतीवाशुद्ध इति न संगृहीतः।

(१) मागृ. १।१५।१.

(२) भागृ. १।२१.

## काठकगृह्यसूत्रम्

**[1]तृतीये गर्भमासे सीमन्तं कारयते ॥**

(१) गर्भग्रहणादारभ्य यस्तृतीयो मासस्तत्र सीमन्तोन्नयनसंज्ञया यौगिक्या प्रसिद्धं यत्संस्कारकर्म तत् कारयते। न तु विद्वानपि स्वयं कुर्यादिति णिचः प्रयोगात् दर्शितम्। एतच्च पात्रस्यैव केचित्संस्कारमिच्छन्ति आधारसंस्कारादेव गर्भस्योपकारो भविष्यति गोलकसंस्कारेणेव चक्षुष इति वदन्तः। तथा च स्मृतिः– 'सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः। यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥' इति। अन्ये तु गर्भस्यैव संस्कारं मन्यन्ते, तत्रैव 'तृतीये गर्भमासे' इत्यस्योपपत्तेः। पात्रमात्रसंस्कारत्वे हि किं गर्भमासव्यपेक्षया? यदाकदाचित् सीमन्तो विधीयेत (? येत) 'कार्यः सीमन्तः' इति। स्मृतेरपि– 'गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः। बैजिकं गार्भिकं चैनो द्विजानां प्रतिहन्यते ॥' (मस्मृ. २।२७) इति। अपरे तूभयसंस्कारमाहुः। तत्र क्षेत्रसंस्कार एवानुमततमप्रायो वेदार्थविदाम्, सकृदनुष्ठानस्य प्रसिद्धत्वाद्बाहुल्येन। देव.

(२) तृतीये गर्भमासे सीमन्तकर्मेदं स्वयं कर्तव्यम्। ब्राह्म.

(३) अन्यत्राभ्युत्क्रमो दृश्यते। पूर्वं पुंसवनं पश्चात् सीमन्तोन्नयनं नम्यमात्रम्(?)। इह त्वन्यदेव देवतायागलक्षणम्। § आदित्य.

## वाराहगृह्यसूत्रम्

**[2]अथास्याः पञ्चमे षष्ठे सप्तमे वा गर्भमासे... सीमन्तं करोति ॥**

§ शेषं देववत्।

(१) कागृ. ३१।१; स्मृच. १७ मासे + (तु) यते (येत्); चका. ७३४ यते (येत्); पमा. ४३८ न्तं कारयते (न्तोन्नयनं कार्यम्); मपा. ३५१ सीमन्तं (सीमन्तोन्नयनं) शेषं स्मृचवत्; संप्र. १७३ चकावत्; चम. ७ पमावत्; मुक्ता. ७८ मपावत् चकावत् च.

(२) वागृ. १९.

## आग्निवेश्यगृह्यसूत्रम्

¹अथातः सीमन्तोन्नयनम् । प्रथमगर्भायाश्चतुर्थे मासि ॥

## पारस्करगृह्यसूत्रम्

²अथ सीमन्तोन्नयनम् ॥

†पुंसवनवत् ॥

प्रथमगर्भे मासे षष्ठेऽष्टमे वा ॥

(१) अथ सीमन्तोन्नयनम् । व्याख्यास्यत इति सूत्रशेषः । सीमन्तोन्नयनमिति संस्कारः । स च गर्भस्य, तदभावेऽभाव इति । अतश्च प्रतिगर्भं क्रिया । प्रथमगर्भे मासे षष्ठेऽष्टमे वा । द्वितीयादिषु गर्भेष्वनियमः । अपरे तु वर्णयन्ति— सीमन्तोन्नयनं प्रथमगर्भ एवेति । अस्मिन् व्याख्याने द्वितीयादीनां गर्भाणां तत्संस्कारलोपः प्राप्नोति, तस्मान्नैतदिष्यते । $ कभा.

(२) अत्र प्रथमगर्भे इतिवचनात् स्त्रीसंस्कारकर्मत्वाच्च न प्रतिगर्भं सीमन्तोन्नयनम्, यतः 'सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥' इति स्मरणात् न प्रतिगर्भं सीमन्तोन्नयनम् । पुंसवनं तु दृष्टार्थत्वाद्भाष्यकारमते प्रतिगर्भं भवति (१ भाष्यकारमते प्रतिगर्भं भवति । पुंसवनं तु दृष्टार्थत्वात्प्रतिगर्भं भवति) । ¶ हभा.

(३) अथ सीमन्तोन्नयनम् (१ व्याख्यास्यत इति सूत्रशेषः । (अथ १) सीमन्तोन्नयनमिति वक्ष्यमाणसंस्कारकर्मणो नामधेयम् । गर्भसद्भावे क्रियमाणत्वात् तदभावे चाभावात् गर्भसंस्कारोऽयमिति कर्कोपाध्यायाः । अतश्च तेषां मते प्रतिगर्भं क्रिया । तथा च हेमाद्रौ कारिकायां च विष्णुवचनम्— 'सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते । केचित्तु गर्भसंस्काराद्गर्भे गर्भे प्रयुज्यते ॥' इति । स्त्रीसंस्कार एवायमित्यन्ये । तथा च देवलः— 'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।' इति । हारीतोऽपि —'सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥' इति । प्रथमगर्भे आद्यगर्भे भवति । आपस्तम्बः— 'सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि' इति । शाङ्खायनगृह्ये— 'सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम्' इति । आश्वलायनगृह्यपरिशिष्टे— 'प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गर्भमात्र- (१ गार्भपात्र) संस्कारः' इति । कर्कोपाध्यायैस्तु प्रथमगर्भे मासे षष्ठेऽष्टमे वेति सूत्रं योजयित्वा द्वितीयादिष्वनियम इत्युक्तम् । ननु प्रथमगर्भ एव सीमन्तोन्नयनसंस्कारे क्रियमाणे द्वितीयादिगर्भाणां तत्संस्कारलोपः स्यादिति चेत्, मैवम् । 'यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ।' इति हारीतवचनादाद्यगर्भे संस्कारे कृते सर्वगर्भाणां संस्कार इति न संस्कारलोपः । मासे षष्ठेऽष्टमे वा सीमन्तोन्नयनं गर्भधारणात् षष्ठे मासि अष्टमे वा भवति । गभा.

(४) प्रथम...ऽष्टमे वा । गर्भान्तरे सीमन्तोन्नयननिवृत्त्यर्थं प्रथमपदम् । आद्ये गर्भे नियमः, गर्भान्तरेष्वनियम इति कर्कोपाध्यायाः । गर्भिण्याः संस्कार्यत्वान्न प्रतिगर्भं सीमन्तोन्नयनम् । गर्भस्यैव संस्कार्यत्वात् प्रतिगर्भमित्यप्यन्ये । विभा.

## गोभिलगृह्यसूत्रम्

¹अथ सीमन्तकरणं प्रथमगर्भे ॥

---

† अस्य व्याख्यानं मुहूर्तप्रकरणे द्रष्टव्यम् ।

$ जभा. कभावत् ।

¶ शेषं कभागतम् ।

(१) आग्निगृ. २।१।२.

(२) पागृ. १।१५।१–३ ; विध. १।११ (अथ०) मगर्भे (मे गर्भे) स्मृतिः ; अप. १।११ पृ. २५ (अथ पुंसवनवत् सीमन्तोन्नयनं प्रथमगर्भे) एतावदेव ; व्रक. ८३ मगर्भे (मे गर्भे) ; मपा. ३५१ (पुंसवनसीमन्तोन्नयनं प्रथमगर्भे) एतावदेव ; स्मिप. २३८ (=) (अथ ... गर्भे०) ; संप्र. १७२ (मासे षष्ठेऽष्टमे वा०) ; विपा. ९६ (मासे०) शेषं व्रकवत् .

(१) गोगृ. २।७।१ ; व्रका. ७३५ मगर्भे (मे गर्भे) ; मपा. ३५१ (प्रथमे गर्भे) एतावदेव ; संत. ९१२ चकावत् .

( १ ) अथ पुंसवनानन्तरम् । सीमन्तः केशरचना-विशेषः । संत. ९१२

( २ ) अथ पुंसवनसंस्कारानन्तरं सीमन्तकरणम् 'सीमन्तः केशवेशे स्यात्' इत्यभिधानात् सीमन्तस्य केशरचनाविशेषस्य वक्ष्यमाणविधिना करणम् । वर्तिष्यते इति सूत्रशेषः । तस्य कालमाह– प्रथमगर्भ इति । इदं हि क्षेत्रसंस्कारद्वाराऽपत्यसंस्कारकम्, तेन सकृदेव कार्यम् । तथा च हारीतः– 'सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥' इति । गृह्यासंग्रहेऽपि– 'यथा सीमन्तिनी नारी पूर्वगर्भेण संस्कृता । एवमाज्यस्य संस्कारः संस्कारविधिचोदितः ॥' इति । एवमाश्वलायनगृह्यपरिशिष्टेऽपि– 'सीमन्तोन्नयनं प्रथमे गर्भे । सीमन्तोन्नयनसंस्कारो गर्भपात्रसंस्कार इति श्रुतिः' इति । अत्र गर्भश्च पात्रं चेति द्वन्द्वसमासेन तयोरुभयोरपि संस्कार इत्यर्थः । गर्भं उदरस्थमपत्यम् । पात्रं स्त्री । श्रौतं चास्य गर्भपात्रसंस्कारत्वमुपन्यस्यन्नृषिरनयोः ( ? विर्गर्भाधानपुंसवनयोः ) पात्रसंस्कारत्वं नास्तीत्युपदिशति । दैवाच्च सीमन्तकरणादर्वागेव गर्भनाशे पुनर्गर्भोत्पत्तौ तत् करणीयम् । अन्यथा खल्वस्य संस्कारस्याभावेनासंस्कृतं पात्रमपत्यं च स्यात्, 'संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः' इति न्यायात् । न चैतदुचितम्, शास्त्रान्तरबलाच्च । तथा च स्मरणम् – 'पूर्वं च स्राविता यश्च गर्भो यश्चाप्यसंस्कृतः । द्वितीये गर्भसंस्कारस्तेन शुद्धिर्विधीयते ॥' इति । तदिदं सीमन्तकरणविषयं वचनम् । न खल्वत्र प्रतिगर्भमावृत्तिर्निषिध्यते संस्कारस्य, किं तर्हि ? प्रथमगर्भविहितस्य संस्कारस्य दैवादकरणे गर्भान्तरे करणमुपदिश्यते । सीमन्तकरणं च प्रथमगर्भे विहितम्, न गर्भाधानपुंसवने । तथा च स्मृत्यन्तरम्– 'या नार्यकृतसीमन्ता प्रसूयते कदाचन । अङ्के निधाय तं बालं पुनः संस्कारमर्हति ॥' इति । 'असंस्कृतगर्भप्रसवे द्वितीयगर्भे संस्कारस्तु प्रकृत( ? प्रथम )बालविनाशविषयो बोद्धव्यः' इति चन्द्रकान्तः । मुरारिमिश्रास्तु नैतन्मन्यन्ते इति कर्मशेषे वक्ष्यते । मृदुला.

'चतुर्थे मासि षष्ठेऽष्टमे वा ॥

( १ ) वाशब्दैक्याच्च चतुर्थादिमासानां तुल्यवद्विकल्पः, किंतु पूर्वपूर्वकालः प्रशस्तः, समर्थस्य क्षेपायोगादिति न्यायात् । ततो नवमासादौ प्रायश्चित्तं कृत्वैव कर्तव्यम् । प्रथमगर्भ इत्युपादानात् यदि कथंचिदकृत एतस्मिन् संस्कारे गर्भनाशे पुनर्गर्भोत्पत्तौ अयं कालनियमो न, किंतु 'गर्भस्पन्दने सीमन्तोन्नयनं यावन्न बालप्रसवः' इति शङ्खलिखितोक्तकालो ग्राह्यः । संत. ९१२–९१३

( २ ) तत्र कालमाह– चतुर्थ इति । ऋजुरक्षरार्थः । अत्र वाशब्द एक एवेति न तुल्यवद्विकल्पार्थः । एवं चोक्तकल्पेषु यत्रोदगयनादिविहितसमयलाभस्तत्रेदं कार्यम्* । तथा चाङ्गिराः– 'यत्रोदगयनादिः स्यात् कालस्तत्र' इति । बैजवापगृह्येऽपि– 'मासि चतुर्थे पञ्चमे वा षष्ठाष्टमयोर्वाऽऽपूर्यमाणपक्षे यदहः पुंसा नक्षत्रेण चन्द्रमा युज्यते सप्तमे मासि वा प्रथमगर्भे सीमन्तोन्नयनम्' इति । क्वापि तदलाभे न तदपेक्षाऽपि, आवश्यकत्वात् । शङ्खलिखितौ– 'गर्भस्पदने सीमन्तोन्नयनं यावद्वा न प्रसवः' इति । मृदुला.

## खादिरगृह्यसूत्रम्

'अथास्याश्चतुर्थे मासि षष्ठे वा सीमन्तोन्नयनम् ॥

अथेति अकृतेऽपि तृतीये मासि पुंसवने अस्मिन् काले पुंसवनं कृत्वा सीमन्तकरणार्थम् । अस्या इति प्रथमगर्भनियमार्थम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

'सीमन्तोन्नयनं चतुर्थे मासि षष्ठेऽष्टमे वा ॥

---

* तत्रास्य करणं प्रशस्तमित्यर्थः । यथाश्रुते इतरकल्पव्यवच्छेदप्रतीतेर्व्यवस्थितविकल्पत्वानुपपत्तिः 'क्वापि तदलाभे' इत्याद्युत्तरग्रन्थविरोधश्च ।

(१) गोगृ. २।७।२ ; चका. ७३५ ; मपा. ३५१ (षष्ठेऽष्टमे वा० ) ; संत. ९१२.

(२) खागृ. २।२।२४.

(३) जैगृ. १।७.

## वैखानसगृह्यसूत्रम्

[1]अथ गर्भाधानाद्यष्टमे मासि सीमन्तोन्नयनं कुर्यात् ॥

## बैजवापगृह्यसूत्रम्

[2]अथ सीमन्तोन्नयनं मासि चतुर्थे पञ्चमे षष्ठेऽष्टमे वाऽपि ॥

[3]सप्तमे मासि वा प्रथमे गर्भे सीमन्तोन्नयनम् ॥

## हारीतः

[4]सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥

---

(१) वैगृ. ३।१२.

(२) ब्रक. ८३ षष्ठेऽष्टमे वाऽपि ( षष्ठे वा ) ; स्मृच. १७ ( अथ० ) शेषं ब्रकवत् ; चका. ७३४ ब्रकवत् ; स्मृसा. २ ( मासि चतुर्थे पञ्चमे षष्ठाष्टमयोर्वा ) ; पमा. ४३८ ( मासि० ) ( ऽष्टमे० ) ; मपा. ३५१ पञ्चमे षष्ठेऽष्टमे वाऽपि ( षष्ठे पञ्चमे वा ) बौधायनः ; प्रपा. ११९ ( अथ० ) ( मासि० ) ; संप्र. १७३ ( अथ० ) शेषं पमावत् ; चम. ७ ( मासि० ) शेषं ब्रकवत् ; मुक्ता. ७८ ब्रकवत् ; सिन्धु. ८३४ ( मासि० ) षष्ठेऽष्टमे वाऽपि ( षष्ठे च ) ; संकौ. ५५ संप्रवत् ; संव. ५१ संप्रवत् ; संर. ८२० मासि चतुर्थे ( चतुर्थे मासि ) शेषं ब्रकवत् .

(३) स्मृसा. २.

(४) अप. १।११-१३ पृ. २५ तु कृत (त्संस्कृत) ; ब्रक. ८४ अपवत् ; स्मृच. १७ अपवत् ; चका. ७३५ तु कृत ( त्सत्कृत ) सर्वः ( गर्भः ) ; हमा. १४८ अपवत् : १४९ अपवत् , स्मरणम् ; स्मृसा. २ सकृत्तु ( सकृच्च ) ; पमा. ४३९ अपवत् , पू. ; मपा. ३५२ सर्वः ( गर्भः ) शेषं अपवत् ; प्रपा. ११ त्तु कृत ( त्सुकृत ) ; निप. २३९ (=) स्मृसावत् ; वीक. १।१३ प्रसूयन्ते स सर्वः ( समादत्ते स गर्भः ) ; गभा. १४९ अपवत् : १५० उत्त. ; श्राकौ. ४९७ (=) सर्वः संस्कृतो भवेत् ( गर्भः शुद्धिमर्हति ) शेषं स्मृसावत् ; श्रात. ३२२ द्विज ( कुल ) सर्वः ( गर्भः ) ; संत. ८७१ कृतसंस्काराः ( संस्कृता नारी ) शेषं स्मृसावत् श्रातवत् च ; उत. १३२-१३३ सर्वः ( गर्भः ) ; प्रर. ६९ द्विजस्त्रियः ( द्विजातयः ) ; संसौ. ४१ अपवत् ; वीमि. १।१३ स्मृसावत् ; संप्र. १७७ ; चम. ७ ; मुक्ता. ७८ अपवत् ; संम. १३ अपवत् ; सिन्धु. ८३७ स्मृसावत् ; विपा. ९७ ; ज्योनि. १११ द्विजस्त्रियः ( द्विजैः स्त्रियः ) शेषं अपवत् ; आन. १४७ अपवत् ; बाल. १।११-१२ पृ. १४ ; संग. ४१९ यन्ते ( यन्ति ) शेषं अपवत् ; संब. ५५ द्वितीयपादे ( सीमन्ते च द्विजातयः ) ; पुम. ४३३ अपवत् ; संर. ८२२ स्मृसावत् .

( १ ) एतच्च सीमन्तोन्नयनं क्षेत्रसंस्कारत्वात् सकृदेव कार्यम् , न प्रतिगर्भम् । तथा च हारीतः— सकृदिति । देवलोऽपि— ' सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । ' इति । केचित् सीमन्तोन्नयनं गर्भसंस्कार इति प्रतिगर्भमावर्तयन्ति । तथा च विष्णुः— ' सीमन्तोन्नयनं कर्म तत् स्त्रीसंस्कार इष्यते । केचिद्गर्भस्य संस्कारो गर्भे गर्भे प्रयुञ्जते ॥ ' इति । एतेषां च पक्षाणां तत्तद्गृह्यानुसारेण व्यवस्था वेदितव्या । † स्मृच. १७

( २ ) गर्भाधानपुंसवनयोरपि स्त्रीसंस्कारद्वारेण पुरुषसंस्कारकत्वम् । स्त्रीसंस्कारश्च प्रथमगर्भ एव जात इति न प्रतिगर्भमावृत्तिः , आरम्भणीयान्यायात् । एवं च सीमन्तेऽपि प्रथमगर्भस्मृतिर्न्यायमूला । ' सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । ' इति देवलवचनमपि न्यायमूलमेवेति । स्मृसा. २

( ३ ) अत्र सकृत्संस्कृतपात्रजातानां सर्वेषां संस्काराभिधानेन प्रत्येककृतजातकर्मादिकसंस्काराणां सुतरां संस्कृतत्वम् , ' सकृत्कृते कृतः शास्त्रार्थः' इति न्यायात् । ¶ श्रात. ३२२

( ४ ) सीमन्तेन तदन्तकर्मणा, न्यायतौल्यात् । द्विजेति चोपलक्षणम् । अत एव ' सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । ' इति देवलेन संस्कृतेति नारीति च सामान्येनैवोक्तम् । जातकर्मादि तु साक्षादेवापत्य-

---

† चका., पमा., मपा., संप्र., मुक्ता., आन. स्मृचवत् ।

¶ उत. श्रातवत् ।

संस्कारकमिति प्रत्यपत्यमावर्तनीयमिति विवेकः।

वीमि. ११।१३

(५) इदं च प्रतिगर्भे नाऽऽवर्तते। तथा च हारीतः— सकृदिति। विष्णुना यन्मतान्तरमप्युक्तम्— 'सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते। केचिद्गर्भस्य संस्काराद्गर्भे गर्भे प्रयुञ्जते॥' इति, तत्कृतेऽभ्युदय इत्येवंपरम्। तथा चाऽऽश्वलायनस्मृतौ— 'प्रतिगर्भे बलिः कार्यः सीमन्तश्च प्रशस्यते।' इति।

चम. ७

(६) इदं च सकृदेव कार्यम्, 'प्रथमे गर्भे' इति सांख्यायनापस्तम्बोक्तेः, स्त्रीसंस्कारत्वाच्च, 'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता।' इति वचनप्रवृत्तेः। यत्तु स्मृतिचन्द्रिकायां विष्णुः— 'सीमन्तोन्नयनं कर्म तत् स्त्रीसंस्कार इष्यते। केचित्तु गर्भसंस्काराद्गर्भे गर्भे प्रयुञ्जते॥' इति तत्र केचिच्छब्दादनादरः स्पष्टः। हारीतस्तु स्पष्टमेवाऽऽह— सकृदिति।

‡ संम. १३

(७) एतच्च सकृदेव कार्यमिति विज्ञानेश्वरः, 'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता।' इति देवलोक्तेः। सकृत् प्रतिगर्भे वा कार्यमिति हेमाद्रिः, 'सकृच्च कृतसंस्काराः ...॥' इति हारीतोक्तेः, 'सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते। केचिद्गर्भस्य संस्कारात्प्रतिगर्भे प्रयुञ्जते'॥ इति हेमाद्रौ विष्णुवचनाच्च।

सिन्धु. ८३६–८३७

[ सकृदिति। अयमत्र सिद्धान्तः— सीमन्तोन्नयनस्य 'सीमन्त उन्नीयतेऽस्मिन्' इति व्युत्पत्त्या स्त्रीसंस्कारत्वमेव। न चैवं पुंसवनस्य दधिप्राशनस्य अनवलोभनस्य हृदयालम्भस्य च स्त्रीसंस्कारत्वं स्यात्, 'पत्नीं प्राशयेत्' 'दक्षिणस्यां नासिकायामजितामोषधीं नस्तः कृत्वा हृदयदेशमस्या आलभेत' इति तस्या एव कर्मत्वावगमादिति वाच्यम्, वेदवित्संप्रदानकगोकर्मकदानस्य स्वर्गार्थत्वात् (? त्ववत्) पत्नीकर्मकप्राशनादेर्गर्भसंस्कारकत्वसंभवात्, प्राशनस्य गर्भगतपुंस्त्वोत्पत्त्यर्थकरत्वात्, अस्यानवलोभनस्य च तदुत्पन्नपुंस्त्वलोपकारणदुरितनाशार्थत्वात्, 'माऽहं पौत्रमघं नियाम्' मन्त्रलिङ्गात्। प्रतिगर्भकरणं तु सीमन्तोन्नयनस्य गर्भसंस्कारत्वं यस्यां शाखायामुक्तं तत्परमिति।

कुम. ]

(८) इदं सीमन्तोन्नयनं स्त्रीसंस्कारत्वात् प्रथमगर्भे एव कार्यम्। तथा च हारीतः— सकृदिति। यत्तु विष्णुः— 'सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते। केचिद्गर्भस्य संस्कारात् प्रतिगर्भे प्रयुञ्जते॥' इति, तत् कस्यांचिच्छाखायां कस्मिंश्चिद्देशे वा आचारस्तद्विषयम्।

पुम. ४३३

[1]नाऽऽवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः॥

## बौधायनः

[2]स चेत् प्रथमगर्भः स्याच्चतुर्थे मास्युपागते।
पञ्चमे वाऽथ षष्ठे वा कुर्यान्नान्दीमुखादिकम्॥

## वसिष्ठः

[3]कृतसवनसतीनामाद्यगर्भे प्रसक्ते
विहितमथ चतुर्थे मासि षष्ठाष्टमे वा॥

[4]चतुर्थे सप्तमे मासि षष्ठे वाऽप्यथवाऽष्टमे॥

अस्य गृह्यविरोधे सत्युच्यते श्रीधरीयस्मृतिभास्करयोः— 'यस्मिन् काले विरोधोऽस्ति ज्यौतिषोक्तागमोक्तयोः। ज्यौतिषोक्तं विहायैव श्रुतिचोदितमाचरेत्॥ प्रयोगशास्त्रविहितः कालो यत्र न लभ्यते। विधत्ते ज्यौतिषं तेन विहितं तु विरोधि न॥' इति।

प्रपा. ११९

[5]चतुर्थे सावने मासि षष्ठे वाऽप्यथवाऽष्टमे॥

---

‡ बाल. चमवत् संभवच्च।

(१) विपा. ९७.

(२) प्रपा. ११९ बोधायनीये; संप्र. १७३.

(३) बसं. २५।४.

(४) प्रपा. ११९ ज्योतिर्वसिष्ठः; संप्र. १७३ ज्योतिर्वसिष्ठः; संग. ४१९.

(५) प्रपा. ११९; सिन्धु. ८३४; ज्योनि. ११०; संको. ५५; संग. ४२०; संर. ८११: ८२१ चतुर्थे (सीमन्तः).

बृहस्पतिः– 'सौरेणैव चतुर्थे स्यान्मासे षष्ठेऽष्टमेऽपि वा।' इति। वसिष्ठः– 'चतुर्थे सावने मासि षष्ठे वाऽप्यथवाऽष्टमे।' इति। अत्र सौरसावनयोर्विकल्पः। संकौ. ५५

## विष्णुः

**'षष्ठेऽष्टमे सीमन्तोन्नयनम् ॥**

षष्ठेऽष्टमे वा मासि। यथाकुलधर्मं विकल्पः। वै. ७८

**'सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते।**
**केचिद्गर्भस्य संस्कारात् प्रतिगर्भं प्रयुञ्जते ॥**

इदं च कर्म सकृदेव कार्यम्, 'स्त्रीसंस्कारत्वान्न प्रतिगर्भमावर्तते' इति वृत्तिकाराद्युक्तेः। यत्तु विष्णुः– 'सीमन्तो ...... प्रयुञ्जते ॥' इति, तत् कात्यायनविषयम्, 'सीमन्तोन्नयनं कार्यं षष्ठे मास्यथवाऽष्टमे। गर्भसंस्कार एवायं कर्कोपाध्यायसंमतात् ॥' इति तदीयरेणुकाकारिकोक्तेः। § संकौ. ५६

## लघुविष्णुः

**'सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते।**
**गर्भस्यैव तु संस्कारो गर्भे गर्भे प्रयोजयेत् ॥**

## शङ्खः

**'षष्ठेऽष्टमे वा सीमन्तः ॥**

§ अस्यान्यानि व्याख्यानानि हारीतवचने द्रष्टव्यानि।

(१) विस्मृ. २७।३; चका. ७३४ ष्टमे + (मासि); पुम. ४३२ ष्टमे + (वा मासि).

(२) स्मृच. १७ न (तत्) रात् प्रतिग (रो गर्भे ग); चका. ७३५ रात् प्रतिग (राद् गर्भे ग); पमा. ४३९ चकावत्; मपा. ३५२ चकावत्; गमा. १४९ उत्तरार्धे (केचित्तु गर्भसंस्काराद्गर्भे गर्भे प्रयुज्यते॥); संप्र. १७७; चम. ७ रात् प्रतिगर्भं (राद्गर्भे गर्भे); मुक्ता. ७९ न (तत्) शेषं चमवत्; संम. १३ न (तत्) उत्तरार्धे (केचित्तु गर्भसंस्काराद्गर्भे गर्भे प्रयुञ्जते॥); सिन्धु. ८३७; संकौ. ५६; आन. १४७ मुक्तावत्; बाल. १।११–१२ पृ. १४ मुक्तावत्; पुम. ४३३.

(३) लघुविस्मृ. १।१०.

(४) शस्मृ. २।२; चका. ७३४ शङ्खयाज्ञवल्क्यौ.

**'गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा न प्रसवः ॥**

(१) अत्र नानाकल्पानां गृह्यानुसारेण कुलाचाराद्व्यवस्था। तदभावे षष्ठाष्टममासादरः, नानास्मृत्यनुरोधात्। स्मृसा. २

(२) एतदुक्तकालस्य केनचिन्निमित्तेन प्रतिबन्धे सति द्रष्टव्यम्। तदाह काश्यपः– 'षष्ठे वा सप्तमे मासि सीमन्तोन्नयनं भवेत्। अष्टमे नवमे मासि यावद्वा प्रसवो भवेत् ॥' इति। मुक्ता. ७८

## याज्ञवल्क्यः

**'षष्ठेऽष्टमे वा सीमन्तो मासि... ॥**

वेतिपदमिच्छाविकल्पपरम्। ‡ दीक.

## नारदः

**'चतुर्थे मासि षष्ठे वाऽप्यष्टमे वा... ॥**

## बृहस्पतिः

**'सीमा षष्ठेऽष्टमे मासि... ॥**

**'सौरेणैव चतुर्थे स्यान्मासे षष्ठेऽष्टमेऽपि वा।**
**मासि प्रोक्ताः क्रिया याः स्युस्ताः सर्वाः सौरमानतः ॥**

‡ व्याख्यानान्तराणि संस्कारोपोद्घातप्रकरणे (सं. का. पृ. ४७) द्रष्टव्यानि।

(१) ब्रक. ८३; स्मृच. १७; चका. ७३५; स्मृसा. २; पमा. ४३८ स्पन्दने (स्पन्दनमारभ्य); संत. ९१३ यावद्वा न प्र (यावन्न बालप्र); चम. ७ (गर्भ... यनं०); मुक्ता. ७८ (न०); सिन्धु. ८३४; आन. १४६ (न०); बाल. १।११–१२ पृ. १५ चमवत्; पुम. ४३२ स्पन्द (स्यन्द) (न०); संर. ८२१.

(२) यास्मृ. १।११. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे (सं. का. पृ. ४७) द्रष्टव्याः.

(३) ज्योना. १८।१. शेषस्थलादिनिर्देशाः पुंसवनमुहूर्तप्रकरणे (सं. का. पृ. २५४४) द्रष्टव्याः.

(४) चका. ७३४.

(५) प्रपा. ११९ णैव (ण वै) मासे (मासि) मासि प्रो (मासप्रो); संसौ. ४६ मासे (मासि) याः स्युस्ताः सर्वाः (शस्ताः सर्वाः स्युः); संप्र. १७४ षष्ठेऽष्ट (षष्ठाष्ट); संकौ. ५५ पू.; संर. ८२१ पू.

सौरादिमासलक्षणमुक्तं श्रीधरीये— 'दर्शावधिं मास-मुशन्ति चान्द्रं सौरं तथा भास्करराशिभोगात्। त्रिंशद्दिनं सावनमाहुरार्या नाक्षत्रमिन्दोर्भगणभ्रमेण ॥' इति।

प्रपा. ११९

## भृगुः

$'सीमन्तोन्नयनात् पूर्वं पुंसवं कर्म कारयेत्।
स्वकालातिक्रमे चापि ततः सीमन्तमुन्नयेत् ॥

## व्यासः

'सीमन्तश्चाष्टमे मासि ... ॥

## देवलः

*'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता।
यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत् ॥

## बृहत्पराशरः

'सीमन्तोन्नयनं षष्ठे कार्यं मासेऽष्टमेऽपि वा ॥

## अत्रिः

'आधानादष्टमे मासि सीमन्तोन्नयनं भवेत्।
नवमे मासि वा कुर्याद्यावद्गर्भविमोचनम् ॥
'ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥

$ व्याख्यानं पुंसवनविधिप्रकरणे (सं. का. पृ. २५३६) द्रष्टव्यम्।

* अस्य व्याख्यानानि पुंसवनविधिप्रकरणे (सं. का. पृ. २५३७) अस्मिन्नेव वचने, अस्मिन्नेव प्रकरणे हारीत-वचने च द्रष्टव्यानि।

(१) संसौ. ४५. (२) व्यास्मृ. १।१८.

(३) मिता. १।११. शेषस्थलादिनिर्देशाः पुंसवन-विधिप्रकरणे (सं. का. पृ. २५३६) द्रष्टव्याः.

(४) बृपसं. ६।१४८.

(५) धप्र. ३६ स्मृतिः; संसौ. ४२ मासि (मासे); संप्र. १७४; संको. ५५; संव. ५१; कुम. ८३४; संर. ८२१.

(६) अत्रिसं. ३०३.

## कार्ष्णाजिनिः

'गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा।
सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा ॥
'यदि सीमन्ततः पूर्वं प्रसूता चेत्तु भामिनी।
तदानीं पेटके गर्भं स्थाप्य संस्कारमाचरेत् ॥

(१) पेटके पेटिकायाम्। गर्भं बालकम्।

‡ संप्र. १७७

(२) तथा च सीमन्तोन्नयनं कृत्वा द्वादशेऽह्नि जातकर्म कार्यम्, आशौचे सीमन्तस्य दुष्करत्वात्। यदि चाकृत एव सीमन्ते जातकर्म कृतं तदा व्यत्ययदोष-परिहारार्थं व्याहृतिहोमरूपं प्रायश्चित्तं कुर्यात्, 'आरम्याऽऽधानमा चौलात् कालेऽतीते तु कर्मणाम्। व्याहृत्याऽऽज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥' इति वाक्यप्रवृत्तेर्निष्प्रत्यूहत्वात्। ततः सीमन्तोन्नयनमेव कार्यम्, न तु प्रायश्चित्तमात्रेण निर्वाहः। तस्य वैपरीत्य-दोषपरिहारे उपक्षीणत्वात्। व्याहृतिहोमश्च गृह्याग्ने-रभावे लौकिकाग्नौ कार्यः। न च सीमन्तोन्नयनं कुतः कार्यम्? पादकृच्छ्राद्याचरणेन निर्वाहादिति वाच्यम्, तत्र स्त्रीसंस्कारानिर्वाहेण द्वितीयादिगर्भे गार्भिकदोषानु-वृत्तिप्रसङ्गात्, प्रतिगर्भं पादकृच्छ्रादिप्रायश्चित्तापेक्षापत्ते-श्च। एतदेवाभिप्रेत्य 'हुत्वा कर्म यथाक्रमम्' इति संगच्छते। 'कार्यमित्येक आचार्या नेत्यन्ये तु विप-श्चितः।' इति तु व्यत्ययाभावस्थलपरम्। एवं च 'अकृत्वा

‡ संग. संप्रवत्।

(१) प्रपा. ११९; संप्र. १७४; सिन्धु. ८३४; विपा. ९७; ज्योनि. ११० यावन्न (यावता); बाल. १।११–१२ पृ. १४ लम्भ (स्पन्द) स्तदा (स्तथा); संग. ४१९.

(२) प्रपा. १२२; संप्र. १७७; मुक्ता. ७९ ता चेत्तु भामिनी (येत कथंचन); संको. ५५ चेत्तु (स्यात्तु); आन. १४७ यदि (यस्य) शेषं मुक्तावत्; संग. ४१९–४२०; कुम. ८३८ चेत्तु (स्याच्च) गर्भं (बालं); संर. ८२३ चेत्तु (स्यात्तु) तृतीयपादे (पेटिकायां तदा जातं).

गां द्विजे दत्त्वा कुर्यात् पुंसवनं पतिः ।' इति वाक्यस्य क्रमपरत्वाद्यत्र गोदानमप्यकृत्वा पुंसवनं कृतं तत्र व्यत्यय-प्रायश्चित्तं कृत्वा गर्भाधानं गोदानं वा कार्यम् । आरभ्याऽऽधानमित्यारभ्यपदोपादानस्वारस्यात् । एवं पुंसवनादेरप्यूह्यम् । कुभ. ८३८

## सत्यव्रतः

[१]स्त्री यदाऽकृतसीमन्ता प्रसूयेत कथंचन ।
गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति ॥

( १ ) पुनःसंस्कारम् अतिक्रान्तसंस्कारमित्यर्थः । संप्र. १७७

( २ ) पुनः पादपूरणार्थम् । यः संस्कारोऽतिक्रान्तः स कर्तव्य इत्यर्थः । ‡ संम. १४

## आश्वलायनः

[२]गर्भाधाने पुंसवने सीमन्ते नामकर्मणि ।
संप्राप्तो मानुषो मासो रुद्राशौचविधावपि ॥

[३]पत्न्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः ।
आयान्ति काश्चिद्राक्षस्यो रुधिराशनतत्पराः ॥

[१]तासां निरसनार्थाय श्रियमावाहयेत् पतिः ।
सीमन्तकरणां लक्ष्मीं तां म आवह मन्त्रतः ॥

[२]श्रियाऽऽश्रितशरीरत्वात् तां त्यजन्तीह मोहिताः ।
अलक्ष्म्यो दुर्भगाः क्रूरा राक्षस्यः पिशिताशनाः ॥

[३]गृष्टयः संप्रगृह्यन्ते पीड्यन्ते च विशेषतः ।
कासांचित्तादृशी वृत्तिर्ब्रह्मणा विहिता पुरा ॥

[४]तस्मात् प्रथमगर्भस्य सीमन्ताख्यो विधीयते ॥

[५]प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते ॥

*[६]पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥
दीक्षान्ते दीक्षितो भर्ता जातकृत्यादिकं चरेत् ।
पुंसवादीनि कर्माणि त्रीणि श्रेष्ठेन कारयेत् ॥

## लघ्वाश्वलायनः

[७]कुर्यात् पुंसवनं मासि तृतीयेऽनवलोभनम् ।
सीमन्तोन्नयनं चैव चतुर्थे मासि तद्भवेत् ॥

---

‡ कुभ. संमगतम् ।

(१) स्मृच. १७ ; चका. ७३५ ; पमा. ४३९ यदाऽकृ ( यद्यकृ ) ; मपा. ३५२ प्रसूयेत (प्रसूते तु) ; प्रपा. १२२ पमावत् ; गभा. १५० सूयेत ( सवेत्तु ) ; प्रर. ६९ गृहीतपुत्रा ( पुत्रं गृहीत्वा ) शेषं पमावत् ; संसौ. ४३ गृहीतपुत्रा ( पुत्रं गृहीत्वा ) ; संप्र. १७७ कथं ( कदा ) शेषं पमावत् ; चम. ८ प्ररवत् ; मुका. ७९ ; संम. १३ संप्रवत् ; सिन्धु. ८३७ पमावत्, विष्णुः ; विपा. ९८ प्ररवत् ; संकौ. ५५ संप्रवत् ; बाल १।११-१२ पृ. १४ पमावत्, विष्णुः : पृ. १५ प्ररवत् ; संग. ४२० गृहीतपुत्रा ( पुत्रं गृहीत्वा ) शेषं गभावत् ; संव. ५५ प्ररवत् ; पुम. ४३३.

(२) आश्वस्मृ. ३।५६-५७.

(३) आश्वस्मृ. ११।६४ काश्चिद्रा ( काशरा ) ; प्रपा. ११८ ; संप्र. १७२-१७३.

* अनयोः श्लोकयोर्व्याख्यानानि पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३८) द्रष्टव्यानि ।

(१) आश्वस्मृ. ११।६५ उत्तरार्धे ( सीमन्तकरणा-लक्ष्मीः समावहति मन्त्रतः ॥ ) ; प्रपा. ११८ ; संप्र. १७३ उत्तरार्धे ( सीमन्तकरणी लक्ष्मीस्तामावहति मन्त्रतः ॥ ) ; संग. ४१८ श्रिय ( स्त्रिय ) शेषं संप्रवत् .

(२) आश्वस्मृ. ११।६६ मोहिताः ( मोहतः ) लक्ष्म्यो ( लक्ष्या ) ; प्रपा. ११८ ; संप्र. १७३ ; संग. ४१८ श्रियाऽऽश्रि ( स्त्रियः श्रि ).

(३) आश्वस्मृ. ११।६७ गृष्ट ( दृष्ट ) ; प्रपा. ११८ ; संप्र. १७३ ; संग. ४१८.

(४) आश्वस्मृ. ११।६८ ; प्रपा. ११८ ; संप्र. १७३.

(५) आश्वस्मृ. ११।६९ गर्भे ( गर्भे ) कार्यः ( कार्या ) ; प्रपा. १२४ ; प्रर. ७२ ; संप्र. १७८ ; चम. ७ ; बाल. १।११-१२ पृ. १४ ; संग. ४२७.

(६) आश्वस्मृ. ११।९४-९५. शेषस्थलादिनिर्देशाः पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३८ ) द्रष्टव्याः .

(७) लघ्वाश्वस्मृ. ४।१-२, १८-१९.

नो चेत् षष्ठेऽष्टमे वाऽपि कर्तव्यं तद्द्वयं च हि ।
तावदेव भवेत् केचिद्यावत् स्याद्गर्भधारणम् ॥
आज्यहोमश्च शलली कुशल्यप्सु(?- ग्लप्स-) निमज्जनम् ।
सीमन्तोन्नयनं तच्च प्रतिगर्भे न हि स्मृतम् ॥
प्रधानं पुंसवनं न स्यादङ्गं चानवलोभनम् ।
सीमन्तं च तथैव स्यात् केचिदुन्नयनं तथा ॥

## जातूकर्ण्यः

§¹सीमन्तोन्नयनं कुर्वन् कुर्यात् पुंसवनं यदि ।
पुंसवं प्राग्विनिर्वर्त्य ततः सीमन्तमुन्नयेत् ॥

## कश्यपः

²षष्ठे वा सप्तमे मासि सीमन्तोन्नयनं भवेत् ।
अष्टमे नवमे मासि यावद्वा प्रसवो भवेत् ॥

## ऋग्विधाने

³अराइवे जपेन्मन्त्रं शतवारं न संशयः ।
सीमन्ते च यश्च भुङ्क्ते मुच्यते किल्बिषा- त्तदा ॥

## धौम्यः

⁴ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥

(१) निवृत्ते सीमन्ते तद्दिने तद्गृहे भोक्तुः प्रायश्चित्तमुच्यते पाराशरप्रायश्चित्तकाण्डे– 'ब्रह्मौदने ...... ॥' इति । अत्र ब्रह्मौदनाख्यं कर्माऽऽधानाद्यङ्ग- भूतं ज्ञेयम्, सोमसाहचर्यात् । प्रपा. १२२

(२) अत्र भोजने प्रायश्चित्तमुक्तं पाराशरमाधवीये धौम्येन– 'ब्रह्मौदने ... ॥'। इदं च कर्माङ्गब्राह्मण- भोजनविषयम्, न त्विष्टकुटुम्बादिभोजनविषयमिति मुरारिमिश्राः । गभा. १५१

(३) जातश्राद्धं पुत्रे जाते वृद्धिश्राद्धम् ।
§ संम. १३

(४) अत्राऽऽधानाङ्गब्रह्मौदनाङ्गभोजनमिव सीम- न्ताङ्गभोजनमेव निमित्तत्वेन विवक्षितम् । अतः 'तद्दिने तद्गृहे भोक्तुः प्रायश्चित्तम्' इति पारिजातोक्तिः परास्ता । संको. ५८

(५) ब्रह्मौदने आधानोपनयनयोः प्रसिद्धे ।
कृभ. ८३९

(६) अत्र ब्रह्मौदनाङ्गभोजनमिव सीमन्ताङ्गभोजनमेव निमित्तत्वेन विवक्षितम् । अतस्तद्दिने तद्गृहे भोक्तुः प्रायश्चित्तमिति पारिजातोक्तिरपास्ता । सोमसाहचर्या- द्ब्रह्मौदनमग्न्याधानाङ्गभूतं ग्राह्यमिति केचित् । वस्तुतस्तु सोमसीमन्तोन्नयनादिषु यथा केवलभोजनार्थं प्रवृत्तं प्रति प्रायश्चित्तविधानं तत्सदृशकेवलब्रह्मौदनभोजनार्थं प्रवृत्तं प्रत्येवेदमपि प्रायश्चित्तमित्येव वक्तव्यम्, अन्यथा वैरूप्यापत्तेः । एतादृशं ब्रह्मौदनमाश्वलायनोक्तोपनयन- संबद्धमेव । अग्न्याधानाद्यङ्गभूतब्रह्मौदनं न तथा, तत्र भोजनातिरिक्तस्य प्रभूतकर्मणः सत्त्वेन केवलतदर्थप्रवृत्ते- रभावात् । न च सांतपनात्मकसंस्कारभोजनप्रायश्चित्तेनैव तत्सिद्धावेतत्प्रायश्चित्तविधानं व्यर्थमिति वाच्यम् । अत्रा- ऽऽपदि प्राणायामोपवासयोः सामान्यतः प्राप्तयोर्बाधनार्थ- त्वेन सार्थक्यसंभवात् । एवं च ब्रह्मौदनग्रहणेनाऽऽ- श्वलायनाद्युक्तस्यौपनायनिकब्रह्मौदनस्यैव ग्रहणं युक्तम् । इदं च ज्ञानतः । अज्ञानाद्भोजने तु ऋग्विधानोक्तम् –

---

§ अस्य व्याख्यानं पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३६ ) भृगुवचने द्रष्टव्यम् ।

(१) प्रपा. १२२. अस्य शेषस्थलादिनिर्देशाः पुंस- वनविधिप्रकरणे ( सं. का. पृ. २५३९ ) द्रष्टव्याः .

(२) मुक्ता. ७८ ; आन. १४६ मासि ( वाऽपि ).

(३) प्रपा. १२२ ; सिन्धु. ८३७–८३८ ; संको. ५८ ; संर. ८२३ इवे ज ( इवेज्ज ) न संशयः ( शिवाल्ये ) त्तदा ( त्ततः ).

(४) प्रपा. १२२ पाराशरप्रायश्चित्तकाण्डे ; गभा. १५१ श्राद्धे नव ( कर्मनव ) ; संम. १३ ; सिन्धु. ८३७ गभा- वत् ; विपा. ९८ पराशरः ; संको. ५८ नवश्राद्धे भुक्त्वा ( तथा भुक्त्वा भोक्ता ) ; संर. ८२३ : ८३१ उत्त.

§ शेषं प्रपागतम् ।

'अरा इवेत्यपेन्मन्त्रं शतवारं शिवालये। सीमन्ते च यदा मुक्ते मुच्यते किल्बिषात्ततः ॥' इति। संर. ८२३

## सोमः

[1]'षष्ठे सीमन्तोन्नयनम् ॥

## स्कन्दपुराणम्

[2]'... सीमन्तोन्नयनं ततः।
मासि षष्ठेऽष्टमे मासि...... ॥

## अनिर्दिष्टकर्तृकवचनम्

[3]'सीमन्तोन्नयनं कुर्यान्मासे षष्ठेऽष्टमेऽपि वा ॥

## स्मृत्यर्थसारः

[4]'षष्ठेऽष्टमे वा सीमन्तोन्नयनम् ॥

## राजमार्तण्डः

[5]'मासे षष्ठेऽष्टमे वा... कार्यं सीमन्तकर्म ॥

## बृहद्राजमार्तण्डे

[6]'षष्ठे मासेऽष्टमे... स्याच्च सीमन्तकर्म ॥
या नार्यकृतसीमन्ता प्रसूते च कथंचन।
अङ्के निधाय तं बालं पुनः संस्कारमर्हति ॥

## अर्णवे

[7]'सौरमासि चतुर्थे तु शुभकर्माणि साधयेत्।
ग्रहाणां नायकः सूर्यस्तस्मात् सौरो विशिष्यते ॥

## कालविधाने

[8]'चतुर्थषष्ठाष्टममासभाजि
सौरेण गर्भे प्रथमे विधेयम्।
सीमन्तकर्म द्विजभामिनीनाम्...... ॥

(१) चका. ७३४. (२) सस्मृ. ५१ काशीखण्डे.
(३) चका. ७३५. (४) स्मृसार. ३.
(५) चका. ७३५ ज्योतिःशास्त्रे ; संसौ. ४४.
(६) संत. ९१३.
(७) प्रपा. ११९ ; संप्र. १७४ सौरमासि ( सौरे मासि ) सौरो ( सौरे ).
(८) प्रपा. ११९ ; संप्र. १७४ ; सिन्धु. ८३४ ; विपा. ९७ ; ज्योनि. ११० प्रथमे ( प्रथमं ) ; आन. १४६ पू., ज्योतिषे ; संग. ४२० सभाजि (सि माजि).

प्रथमे इति न प्रतिगर्भमित्यर्थः। आन. १४६

## कालादर्शे

[1]'सीमन्तोन्नयनं तुर्ये मासि षष्ठेऽष्टमेऽपि वा ॥

## मुहूर्तचिन्तामणिः

[2]'सीमन्तोऽष्टमषष्ठमासि... ॥

...... सीमन्तः लक्षणया सीमन्तोन्नयनाख्यः संस्कारः कार्यः। सीमन्त उन्नीयते यस्मिन् कर्मणि तत् सीमन्तोन्नयनमिति शब्दव्युत्पत्तिः। सीमन्तः केशभागः। ... स च सीमन्तो गर्भधारणसमयात् अष्टमषष्ठमासि अष्टममासि षष्ठमासि वा कार्यः। अयं चेच्छया विकल्पः, 'षष्ठेऽष्टमे वा मासि' इति याज्ञवल्क्यीयोक्तेः। पीटी.

## स्मृतिभास्करे

[3]'मृतो देशान्तरगतो भर्ता चेत् संस्कृतेः पुरा।
देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत् ॥

## कालदीपभाष्ये

[4]'सीमन्तकाले संप्राप्ते त्वकृते पुंसवे यदि।
स्वकाले बलवत्यत्र सीमन्तेऽस्यापि संभवः ॥

## अभिधानग्रन्थे

[5]'सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धतिः ॥

## दीपिकायाम्

[6]'चतुर्थाद्यष्टपर्यन्तं( ? न्ते ) मासि पुंनामभे सकृत्।
सीमन्तोन्नयनं स्त्रीणां गर्भस्य प्रतिगर्भकम् ॥

## धर्मोद्योते

[7]'तृतीये पुंसवः( ? वं ) कृत्वा षष्ठे वा सप्तमेऽपि वा।
सीमन्तोन्नयनं कार्यं न कुर्यात्पुंसवं यदि।
पुंसवं प्राग्विनिर्वर्त्य ततः सीमन्तमुन्नयेत् ॥

(१) मुक्ता. ७८ तुर्ये ( तुरीये ) ( ऽपि० ) ; आन. १४६. (२) मुचि. ५।८ ; संब. ५०.
(३) प्रपा. १२२. (४) प्रपा. १२२.
(५) गभा. १५० ; संग. ४२३.
(६) ज्योनि. १११. (७) मुक्ता. ७८.

## मुहूर्तगणपतौ

[1]मासे षष्ठेऽष्टमे वाऽऽद्यगर्भे सीमन्तकं विदुः ॥

## शाकलकारिकाः

[2]अथ पुंसवनं कार्यमुक्तकाले यथाविधि ।
सूत्रकारमतेनैव तथा चानवलोभनम् ॥
सीमन्ते चैव कुर्वीत सहैवोन्नयनेन च ।
उक्तकाले द्वयं चापि सूत्रकारवचो यथा ॥
यावत् प्रसूतिकालः स्याद्गर्भसंस्कार इष्यते ।
एकस्मिन्नथवा काले कुर्यात् कर्मचतुष्टयम् ॥

## शौनककारिकाः

[3]चतुर्थे गर्भमासे स्यात् सीमन्तोन्नयनक्रिया ।
षष्ठेऽष्टमे वा कुर्वीत सूत्रान्तरविधानतः ।
अभावे पूर्वपूर्वस्य विदधीतोत्तरोत्तरे ॥

## कुमारिलकारिकाः

[4]चतुर्थे गर्भमासे तु सीमन्तोन्नयनं भवेत् ।
पूर्वस्यासंभवे षष्ठे मासे यद्वाऽष्टमे भवेत् ॥
[5]नाऽऽवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः ॥

(१) संव. ५१.

(२) शाका. २७०-२७२ पृ. ३०.

(३) शौका. १-२ पृ. ३६ षष्ठेऽष्ट ( षष्ठाष्ट ); प्रपा. ११८-११९ ; संसौ. ४२ क्रिया (क्रियाः) तृतीयार्धे नास्ति ; संप्र. १७४ ; विपा. ९६ तृतीयार्धे नास्ति, आश्वलायनकारिका.

(४) कुका. १।७।१ ; प्रपा. ११८, धप्र. ३६ ; विपा. ९६ उत्त.

(५) कुका. १।७।१४ ; प्रपा. १२१ ; प्रर. ६९ ; संव. ५५.

## रेणुकारिकाः

[1]सीमन्तोन्नयनं कार्यं षष्ठे मास्यथवाऽष्टमे ।
गर्भसंस्कार एवायं कर्कोपाध्यायसंमतिः ॥
[2]द्वितीयादिष्वनियम इति तस्य मतादपि ।
स्त्रियाः संस्कार एवायमिति हारितदेवलौ ॥
[3]सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥
[4]विष्णुना गर्भसंस्कार एवेति प्रतिपादितम् ।
सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते ॥
कैश्चित्तु गर्भसंस्काराद्गर्भे गर्भे प्रयुज्यते ।
स्त्रीसंस्कारः समाख्याता(?ना)दिति नारायणोऽब्रवीत् ॥
[5]युक्तरूपो विकल्पोऽयं भाष्यकारादिसंमतः ॥
[6]सीमन्तोन्नयनं मुख्यकाले न स्यात् कथंचन ॥
कार्यमा प्रसवादेतदिति शङ्खोऽब्रवीत् स्फुटम् ।
प्रसवाद्वा पुरा न स्याद्यदा गर्भवती पुनः ॥
कुर्यात् स्वकाल एवैतदिति सत्यव्रतोऽब्रवीत् ।
अङ्के गृहीतपुत्रायाः सीमन्तादपि तन्मतात् ॥
अभिप्रायद्वयं तस्य वाक्यादेव प्रतीयते ॥

(१) रेका. १ पृ. ७ ; संप्र. १७७ मतिः ( मतात् ) ; संकौ. ५६ संप्रवत्.

(२) रेका. २ पृ. ७ स्त्रियाः ( स्त्रियः ) ; संग. ४१९ उत्त.

(३) रेका. ३ पृ. ७.

(४) रेका. ४ पृ. ७ कैश्चित्तु (केचित्) ; गमा. १४९ प्रथमचतुर्थार्धे न स्तः.

(५) रेका. ५ पृ. ७.

(६) रेका. २५-२८ पृ. ८-९.

# सीमन्तोन्नयनमुहूर्तः

## आश्वलायनगृह्यसूत्रम्

सीमन्तोन्नयने पक्ष–नक्षत्रविधानम्

**[1]आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ॥**

( १ ) आपूर्यमाणपक्षे इत्युक्तो विग्रहः । शुक्लपक्षे इत्यर्थः । ननु च आपूर्यमाणपक्षे एवेदं कर्म भविष्यति । ($ तत्र विशेषान्तरमारभ्यते । तेन कृष्णपक्षे नक्षत्राख्या भवति । उच्यते । न वक्तव्यम् ) कथम् । प्रकर्षेण युक्ते चन्द्रमसि कथमिदं कर्म स्यात् । अथवा चन्द्रमस एव योगो नान्येन ग्रहेणेति । देभा.

( २ ) शुक्लपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्तदेदं कर्म कार्यम् । पुंसा नक्षत्रेण पुंनामधेयेन नक्षत्रेणेत्यर्थः । तिष्यो हस्तः श्रवण इत्यादिना । चन्द्रमा युक्तः स्यादिति वचनं प्रकर्षेण युक्ते चन्द्रमसि यथा स्यात् । एतदुक्तं भवति– षष्टिघटिकासु मध्ये मध्यमत्रिंशद्घटिकासु कुर्यादिति । † गानावृ.

## कौषीतकिगृह्यसूत्रम्

सीमन्ते उपकरणानां नक्षत्रस्य च पुंस्त्वविधानम्

**[2]पुंवदुपकरणानि स्युर्नक्षत्रं च ॥**

( १ ) पुंवदिति पुंसवनम् ( ? वनवत् ) । उपकरणानि इतिकर्तव्यता । ब्रक. ८३

( २ ) सर्वोपकरणानि पुंलिङ्गानि भवन्ति पुंलिङ्गे च नक्षत्रे कर्तव्यम् । कौगृसं.

## हिरण्यकेशिगृह्यसूत्रम्

सीमन्ते पक्षः नक्षत्रं च

**[1]आपूर्यमाणपक्षे पुण्ये नक्षत्रे ॥**

पूर्वपक्षे पुण्ये नक्षत्रे स्त्रीसंस्कारत्वात् क्रिया अनुकूले । मातृवृ.

## भारद्वाजगृह्यसूत्रम्

सीमन्ते पक्षः नक्षत्रं च

**[2]आपूर्यमाणपक्षे पुण्ये नक्षत्रे ॥**

## काठकगृह्यसूत्रम्

सीमन्ते पक्षः पुण्याहः पर्व च

**[3]शुद्धपक्षस्य पुण्याहे पर्वणि वा ॥**

शुक्लपक्षस्य पर्वणि मुख्ये दिने । देव.

## आग्निवेश्यगृह्यसूत्रम्

सीमन्ते पक्षः नक्षत्रं च

**[4]आपूर्यमाणपक्षे पुण्ये नक्षत्रे ॥**

## पारस्करगृह्यसूत्रम्

सीमन्ते पुंसवनमुहूर्तातिदेशः

**[5]अथ सीमन्तोन्नयनम् ॥**

**पुंसवनवत् ॥**

( १ ) पुंसवनवदिति ' यदहः पुंसा नक्षत्रेण चन्द्रमसो योगस्तदहरुपवास्याऽऽप्लाव्याहते वाससी परिधाप्य' ( पागृ. १।१३।३ ) इति च भवति, न सर्वं लभ्यते । † कभा.

---

$ कंसस्थितो ग्रन्थोऽशुद्धः कश्चिदंश उच्छिन्नश्चेति कल्प्यते ।

† अना. गानावृगतम् ।

(१) आगृ. १।१४।२ ; ब्रक. ८३ ; स्मृच. १७ शौनकः ; चका. ७३४ शौनकः ; मपा. ३५१ माणपक्षे ( माणे पक्षे ) पुंसा ( पुंसां ) शौनकः ; प्रपा. ११९ ; संप्र. १३ ; विपा. ९६ ( नक्षत्रेण चन्द्रमा युक्तः स्यात्० ) ; पुम. ४३२.

(२) कौगृ. १।२२।६ ; ब्रक. ८३ स्युर्न ( न ) च ( वा ).

† जभा. कभावत् ।

(१) हिगृ. २०।१।२ ; संर. ८२०.

(२) भागृ. १।२१.

(३) कागृ. ३१।२ ; चका. ७३४.

(४) आग्निगृ. २।१।२.

(५) पागृ. १।१५।१–२. शेषः स्थलादिनिर्देशः सीमन्तोन्नयनविधिप्रकरणे ( सं. का. पृ. २५७२ ) द्रष्टव्यः.

(२) तच्च पुंसवनवत् पुंनक्षत्रे भवति ।

हभा.

(३) 'पुंसवनवदिति यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत तदहरित्यर्थः' इति भर्तृयज्ञः। ‡ गभा.

(४) पुंसवनवदित्यनेन पुंनक्षत्राद्यतिदेशः ।

विभा.

## जैमिनिगृह्यसूत्रम्

सीमन्ते पक्षः नक्षत्रं च

[१]पूर्वपक्षे पुण्ये नक्षत्रे हस्तोत्तराभिर्वा कुर्यात् ॥

## वैखानसगृह्यसूत्रम्

सीमन्तोन्नयने पुंसवनमुहूर्तातिदेशः

[२]पक्षो दिनं च व्याख्यातम् ¶ ॥

## बैजवापगृह्यसूत्रम्

सीमन्ते पक्षः नक्षत्रं च

[३]आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ॥

## वसिष्ठः

सीमन्तोन्नयने तिथि–वार–नक्षत्र–लग्न–लग्न-नवांश–ग्रहस्थितयः

[४]नोद्वाहयात्रोपनयप्रतिष्ठा-
सीमन्तचौलाखिलवास्तुकर्म ।
गृहप्रवेशाखिलमङ्गलाद्यं
कार्यं हि मासादितिथौ कदाचित् ॥

[५]उडुनि शशिनि वीर्ये मासपे वीर्ययुक्ते
बहुगुणयुतघस्रेऽप्येव सीमन्तकर्म ॥

ऋक्षेषु साधारणदारुणोग्र-
वर्ज्येषु सूर्येज्यमहीसुतानाम् ।
वारेष्वरिक्ताक्षयपञ्चपर्व-
दिनेषु पुंलग्ननवांशकेषु ॥

न नैधने नैधनशुद्धलग्ने
शुभग्रहैर्युक्तनिरीक्षिते वा ।
इष्टैः सदा पञ्चभिरर्कचन्द्र-
सुरेज्यपूर्वैरथवा चतुर्भिः ॥

केन्द्रत्रिकोणत्रिधनायसौम्यै-
र्दुश्चिक्यलाभारिगतैश्च पापैः ।
षडष्टलग्नान्त्यविवर्जितेन्दौ
सीमन्तकार्यं शुभदं सदैव ॥

व्ययेऽष्टमे वा सुतमे विलग्ने
चैकोऽपि पापोऽथ नभश्चराणाम् ।
सीमन्तिनीनाशकरस्त्ववश्यं
करोति गर्भस्य च वा विनाशम् ॥

[१]चौलान्नभुक्तौ व्रतबन्धने च
राजाभिषेके खलु जन्मधिष्ण्यम् ।
शुभं त्वनिष्टं सततं विवाह-
सीमन्तयात्रादिषु मङ्गलेषु ॥

## नारदः

सीमन्ते गर्भमासेशबलम्, चन्द्रताराबलम्, तिथि–वार-नक्षत्र–लग्न–लग्ननवांशक–ग्रहस्थितयः, वर्णभेदेन दिवा वा निशि वा कर्तव्यता

[२]चतुर्थे मासि षष्ठे वाऽप्यष्टमे वा तदीश्वरे ।
बलोपपन्ने दम्पत्योश्चन्द्रताराबलान्विते ॥

---

‡ शेषं कभानुवादः ।

¶ पुंसवनसंस्कारे इत्यर्थः ।

(१) जैगृ. १।७.

(२) वैगृ. ३।१२.

(३) अप. १।११–१३ पृ. २५ ; ब्रक. ८३ ; स्मृसा. २ यदा ( यदहः ) युक्तः स्यात् ( युज्यते ).

(४) वसं. १२।५.

(५) वसं. २५।४, ६–९.

(१) वसं. २७।५ ; गभा. १८० चौला ( बाला ) वाहसी ( वाहे सी ) ; संसौ. ६७ चौला ( बाला ) ; संप्र. २७१ संसौवत् ; सिन्धु. ९१४ गभावत् ; विपा. ४४७ गभावत् ; ज्योनि. ११६ राजाभि ( राज्ञोऽभि ) ; संव. ५१ संसौवत् .

(२) ज्योना. १८।१. शेषस्थलादिनिर्देशाः पुंसवन-मुहूर्तप्रकरणे ( सं. का. पृ. २५४४ ) द्रष्टव्याः .

¹अरिक्तापर्वदिवसे कुजजीवार्कवासरे ।
तीक्ष्णमिश्रोग्रवर्ज्येषु पुंलग्ने पुंनवांशके ॥
²शुद्धेऽष्टमे जन्मलग्नात्तयोर्लग्ने न नैधने ।
शुभग्रहयुते दृष्टे पापखेटायुतेक्षिते ॥
³पञ्चेष्टिके(?ष्टकैः) चतुर्भिर्वा दृष्टेऽर्केन्द्वीज्यपूर्वकैः ।
स्त्रीणां तु प्रथमे गर्भे सीमन्तोन्नयनं शुभम् ॥
⁴शुभग्रहेषु धीधर्मकेन्द्रेष्वरिभवत्रिषु ।
पापेषु सत्सु चन्द्रेऽन्त्यनिधनाद्यारिवर्जिते ॥
⁵क्रूरग्रहाणामेकोऽपि लग्नादन्त्यात्मजाष्टगः ।
सीमन्तिनीं वा तद्गर्भं बली हन्ति न संशयः ॥
⁶शुक्ले पक्षे च पूर्वाह्णे सीमन्ताख्यो विधिः स्मृतः ॥
⁷हस्ते मूले हरेर्भे चाऽऽदित्ये मृगशिरस्यपि ।
पुष्ये प्रजापतौ चैवाजैकपादद्वयसंयुते ।
पुंनामानि तथैतानि पुंकर्मात्र प्रयोजयेत् ॥
⁸विप्रक्षत्रिययोः कुर्याद्दिवा सीमन्तकर्म तत् ।
वैश्यशूद्रकयोरेतद्दिवा निश्यपि केचन ॥

(१) ज्योना. १८।२ वर्ज्येषु ... शके ( वर्जेषु पुंसंशभांशके शशी ) ; संसौ. ४३ अरिक्ता ( अरिक्त ) पू. ; सिन्धु. ८३५ पू. ; ज्योनि. ११० ; संग. ४२० कुजजी ( कुर्याज्जी ) शेषं संसौवत्, पू. ; पुम. ४३२ वर्ज्ये ... नवां ( वर्जेषु भेषु पुंसंशमां ) शेषं संसौवत् .

(२) ज्योना. १८।३ ; ज्योनि. ११० खेटा ( खेट ).

(३) ज्योना. १८।४ पञ्चेष्टि ( मासेऽष्ट ) ; ज्योनि. ११० दृष्टे ( इष्टे ) पूर्व ( पूज ) ; पुम. ४३२ उत्त.

(४) ज्योना. १८।५ भवत्रि ( भवे त्रि ) ; ज्योनि. ११० द्यारि ( द्यरि ).

(५) ज्योना. १८।६ नीं वा तद्गर्भं ब (नीनां द्वद्गर्भंब) ; ज्योनि. ११०.

(६) संसौ. ४३.

(७) प्रपा. ११९–१२०.

(८) प्रपा. १२० तत् ( तु ) तृतीयपादे ( वैश्यस्य चैव शूद्रस्य ) ; संप्र. १७५ शूद्रक ( सच्छूद्र ) ; सिन्धु. ८३६ ; संग. ४२१ संप्रवत् ; संर. ८२२.

† अत्रापि गुरुशुक्रास्तमलमासाद्यनिषेधोऽमार्कक्रान्त्यादिनिषेधः कर्त्रन्तरविधिश्च द्रष्टव्यः । संर. ८२३

¹नराणां सवनं पुंसः सीमन्तः कर्णवेधनम् ।
नामकर्मक्रिया चौलं विद्यारम्भोपनायने ।
दिवा कार्याणि चान्यानि कर्तव्यानि दिवैव हि ॥

### बृहस्पतिः

सीमन्ते गुरुशुक्रास्त–मलमासदोषाभावः , पक्ष–तिथि–नक्षत्र–लग्न–लग्ननवांश–वारवर्ग–ग्रहस्थितयः

¶²एषु मासेषु सर्वेषु प्राप्ते वै जीवशुक्रयोः ।
मूढभावे न दोषोऽस्ति मलमासे तथैव च ॥

कालप्रतीक्षयोग्येषु चूडाकरणादिषु तु मलमासादिदोषो वारणीय एव । संसौ. ४६

³पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
पूर्वाह्ण एव तत्रापि नापराह्णे कथंचन ॥

( १ ) अन्ते अवसाने भवम् अन्त्यम् , अन्त्यं च तत् त्रिकं चेति । त्रयोदश्यादित्रयमित्यर्थः । § संप्र. १७५

( २ ) कृष्णपक्षे त्रयोदश्यादित्रयमतिदुष्टमित्यर्थः । संको. ५५

( ३ ) अत्र शुक्लपक्ष एव मुख्यः , 'आपूर्यमाणपक्षे' इति गृह्योक्तत्वात् । असंभवेऽन्त्यांशं विना कृष्णपक्षो ग्राह्यः । तथा च बृहस्पतिः– 'शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।' इति । संर. ८२१

† व्याख्यानमिदं व्यवहितमपि प्रकृतश्लोकासंबद्धमपि च मुहूर्तविषयकत्वात् तद्विषयकसंरगतान्तिमश्लोकेऽत्र संगृहीतम् ।

¶ विधिप्रकरणगत( सं. का. पृ. २५७६ )बृहस्पतिवचनोक्तेष्वित्यर्थः ।

§ संग. संप्रवत् ।

(१) प्रपा. २०० ; संप्र. ३११ सीमन्तः (सीमन्तं).

(२) संसौ. ४६.

(३) प्रपा. १२० कृष्णश्चा ( कृष्णे चा ) पू.; संसौ. ४३ पूर्वप ( पूर्वः प ) ; संप्र. १७४ प्रपावत्, पू. ; सिन्धु. ८३६ पू. ; संको. ५५ पू. ; संग. ४२० प्रपावत् , पू. ; संब. ५१–५२ पू. ; संर. ८२१ पूर्व ( शुक्ल ) पू.

**[1]पक्षच्छिद्रां च रिक्तां च विना पञ्चदशीं शुभाः।**
**चतुर्दशी चतुर्थी च कदाचित् तु शुभप्रदे ॥**

( १ ) षष्ठ्यष्टमीद्वादश्यः पक्षच्छिद्राः । चतुर्थी-नवमीचतुर्दश्यो रिक्ताः । पञ्चदशी अमावास्या, पौर्णमास्याः क्वचिद् ग्रहणात् । यथा कालनिर्णये— ' शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम् । पौर्णमासीं प्रशंसन्ति केचित् सीमन्तकर्मणि ॥ ' इति । चतुर्दशी शुक्ला, ' कृष्णे चान्त्यत्रिकं विना ' इति स्मरणात् ।
¶ संप्र. १७५

( २ ) कदाचिदिति चतुर्थ्या वर्ज्यत्वं पाक्षिकमिति ज्ञायते, ' शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम् । पौर्णमासीं प्रशंसन्ति केचित् सीमन्तकर्मणि ॥ ' इति शास्त्रान्तरात् ।
* संकौ. ५५

**[2]द्वितीया पञ्चमी षष्ठी सप्तमी द्वादशी हरिः ।**
**त्रयोदशी तृतीया च शस्ता सीमन्तकर्मणि ॥**
**[3]रोहिण्यैन्दवमादित्यपुष्यहस्तोत्तरात्रयम् ।**
**पौष्णं वैष्णवभं चैव सीमन्ते दश संस्मृताः ॥**

ऐन्दवं मृगशिरः । आदित्यं पुनर्वसुः । पौष्णं रेवती । वैष्णवभं श्रवणः ।
$ संप्र. १७६

**[1]सौम्यानां वारवर्गाः स्युः सीमन्तादिषु शोभनाः ॥**
**[2]सिंहाली वर्जयेल्लग्ने ग्रहैरष्टमवर्जितैः ॥**

( १ ) ग्रहशब्देनात्र चन्द्रः क्रूरग्रहाश्च गृह्यन्ते । अत एव भारद्वाजः— ' व्रतबन्धे च सीमन्ते जन्मन्यपि शुभग्रहाः । अष्टमचन्द्ररहितास्तदाऽऽयुर्वृद्धिरीरिता ॥ ' इति ।
पुम. ४३३

( २ ) अलिः वृश्चिकः ।
$ कुम. ८३६

**[3]सीमन्तोन्नयनं कार्यं शुभांशे शुभलग्नके ।**
**कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः ॥**

### भृगुः

सीमन्ते सिंहस्थगुरुदोषाभावः

**[4]सीमन्तजातकादीनि प्राशनान्तानि च क्रमात् ।**
**कर्तव्यानि न दोषोऽस्ति पञ्चाननगते गुरौ ॥**

### व्यासः

सीमन्ते उत्तम–मध्यम–वर्ज्यवाराः

**[5]पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि ।**
**मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ ॥**

( १ ) पुंग्रहा रविभौमगुरवः । स्त्रीग्रहौ सोमभृगू । नपुंसकौ शनिबुधौ ।
§ संप्र. १७५

(२) बृहज्जातके ' बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषाः । ' इति ।
कुम. ८३५

**[6]पुंग्रहाः सूर्यभौमार्याः स्त्रीग्रहौ शशिभार्गवौ ।**
**नपुंसकौ सौम्यसौरी शिरोमात्रं विधुंतुदः ॥**

---

¶ संग. संप्रगतम् ।

* शेषं संप्रगतम् ।

$ संकौ. संप्रगतम् ।

(१) प्रपा. १२० द्रां च रिक्तां ( द्रा च रिक्ता ) शीं शुभाः ( शी शुभा ) ; संप्र. १७५ तु ( स्युः ) प्रदे ( प्रदाः ) ; सिन्धु. ८३६ कदाचित् तु ( शुक्लपक्षे ) उत्त. ; संकौ. ५५ उत्तरार्धे ( चतुर्थी च कदाचित्स्युस्तिथयश्च शुभप्रदाः ॥ ) ; संग. ४२० संप्रवत् ; संब. ५२ संकौवत् , शास्त्रान्तरे.

(२) संसौ. ४३.

(३) प्रपा. ११९ ष्णं वैष्णवभं ( ष्णभं वैष्णवं ) स्मृताः ( मताः ) ; संप्र. १७६ ; संकौ. ५५ दित्यपु ( दित्यं पु ) दश संस्मृताः ( दशमं स्मृतम् ) ; संग. ४२१ ; संब. ५० दित्यपु ( दित्यं पु ) चतुर्थपादे ( सीमन्तादिषु संमतम् ) ; पुम. ४३२ ( रोहिण्यामैन्दवादित्यपुष्यहस्तोत्तरात्रिषु । पौष्णवैष्णवयोश्चैव शुभं सीमन्तकर्म च ॥ ) ; संर. ८२२ दश संस्मृताः ( दशकं स्मृतम् ).

$ शेषं पुमवत् ।

§ संकौ. , संग. , संर. संप्रवत् ।

(१) प्रपा. १२० द्वितीयपादे ( सीमन्ते च शुभप्रदाः ) ; संब. ५०–५१.

(२) पुम. ४३२–४३३ ; कुम. ८३६.

(३) संर. ८२२. (४) ज्योनि. ९२.

(५) संसौ. ४३ ; संप्र. १७५ ; संकौ. ५५ ; संग. ४२० ; पुम. ४३२ ; कुम. ८३५ ; संर. ८२२ बृहस्पतिः.

(६) पुम. ४३२.

## भारद्वाजः

सीमन्ते शुभा ग्रहस्थितिः

[1]व्रतबन्धे च सीमन्ते जन्मन्यपि शुभा ग्रहाः ।
अष्टमे चन्द्ररहितास्तदाऽऽयुर्वृद्धिरीरिता ॥
[2]सीमन्तजन्मचौलोपनीतियात्राप्रवेशने ।
अभिषेके विवाहे च शस्तं भावफलं विदुः ॥
असत्फलप्रदे राशावपि लग्ने शुभेक्षिते ।
शुभयुक्तेऽपि वा तेषां वदेच्छुभफलानि वै ॥

## गर्गः

सीमन्ते शुभलग्न–नवांशाः

[3]सीमन्तोन्नयनं कार्यं शुभांशे शुभलग्नके ।
कुलीरमृगकन्याश्च वर्ज्याः शेषाश्च शोभनाः ॥
कुलीरः कर्कः । मृगः सिंहः । संर. ८२२

## आश्वलायनः

सीमन्ते नक्षत्राणि

[4]पुंनक्षत्रेण कार्यं स्याद्गर्भाधानं विपश्चिता ।
तथा पुंसवसीमन्तबलयश्च विधानतः ॥
[5]वर्जयेत् सर्वकर्माणि विपत्प्रत्यरनैधनैः ।
चन्द्राष्टमे च यत्नेन वधशत्रुव्ययैस्तथा ॥
[6]सावनेन तु मासेन तृतीये वा चतुर्थके ।
मासि तिष्येण मतिमान् कुर्यात्पुंसवनक्रियाम् ॥
अनभीष्टो यदि भवेत्तिष्यस्तु श्रवणेऽपि वा ।
सावित्रादित्याश्वयुग्भिर्वैश्वदेवेन वा द्विजः ॥

(१) पुम. ४३३ शुभा ग्र ( शुभग्र ) अष्टमे च ( अष्टमच ) ; कुम. ८३६.

(२) संसौ. १३७ ; संप्र. ३८१.

(३) संम. १३ ; संव. ५० लग्नके ( लग्नगे ) ; संर. ८२२ कालविधाने.

(४) आश्वस्मृ. ११।५२ ; प्रपा. ११५.

(५) आश्वस्मृ. ११।५३. शेषस्थलादिनिर्देशाः भार्यागमनकालप्रकरणे ( सं. का. पृ. २४११ ) द्रष्टव्याः .

(६) आश्वस्मृ. ११।५४–५६. शेषस्थलादिनिर्देशाः पुंसवनमुहूर्तप्रकरणे ( सं. का. पृ. २५४५–२५४६ ) द्रष्टव्याः .

एतैर्ऋक्षैश्च सीमन्तो बलिश्चापि विधीयते ।
प्राजापत्यमरुत्पौष्णधिष्ण्ये वाऽपि त्वसंभवे ॥
[1]ऋक्षस्य मध्यमारूढे तदुक्तस्य निशाकरे ।
मध्यपञ्चदशस्थे तु सीमन्तः सुप्रशस्यते ॥

## लघ्वाश्वलायनः

सीमन्ते नक्षत्राणि

[2]पुष्यादित्याश्विनीहस्तविधिमूलोत्तरा मृगः ।
हरिपूषानुराधाश्च शस्तं( ? शस्ताः ) पुंसवनादिकम् ( ? के ) ॥

## कश्यपः

सीमन्ते ग्रहस्थितिः

[3]चन्द्रोऽपि शुभदो ज्ञेयस्त्यक्त्वा षष्ठाष्टमव्ययान् ।
सीमन्तलग्नादेकोऽपि क्रूरः पञ्चाष्टरिष्फगः ॥
हन्ति सीमन्तिनीं सोऽपि तद्गर्भं वा न संशयः ।
न नैधने तयोर्लग्ने नैधने शुद्धिसंयुते ॥
तयोः स्त्रीपुंसयोः । संव. ५०

## आनिर्दिष्टकर्तृकवचनानि

सीमन्ते ग्रहस्थितिः , मलमास–गुरुशुक्रास्तदोषाभावः , तिथि–नक्षत्र–लग्न–नवांशाः

[4]सीमन्तजातकादानि प्राशनान्तानि यानि वै ।
न दोषो मलमासस्य मौढ्यस्य गुरुशुक्रयोः ॥
[5]मासेशे प्रबले शुभेक्षितविधौ मासे च षष्ठेऽष्टमे
मैत्रे पुंसवनोदितर्क्षसहिते रिक्ताविहीने तिथौ ।
सीमन्तोन्नयनं मृगाजरहिते लग्ने नवांशोदये
योज्यं पुंसवनोचितं यदपरं तत्सर्वमत्रापि च ॥

(१) आश्वस्मृ. ११।८५ तदुक्तस्य नि ( तदुक्षस्यानि ) ; प्रपा. ११९ मध्यप ( मध्यात्प ).

(२) लघ्वाश्वस्मृ. ४।३. (३) संव. ५०.

(४) संसौ. ४६. (५) निप. २३८.

[1]सीमन्तोन्नयनं कुर्यान्मासे षष्ठेऽष्टमेऽपि वा ।
पुंनामर्क्षगते चन्द्रे बलिभिस्त्ववलोकिते ॥

## नृसिंहः

सीमन्ते वर्ज्यतिथयः, शुभाशुभग्रहयोगाः

[2]वर्ज्या रिक्ताऽष्टमी षष्ठी सीमन्तोन्नयने सदा ।
रात्रिश्चन्द्रोऽष्टमो नाशस्त्रिजन्मविपदारयः ॥

[3]केन्द्रत्रिकोणपुत्रस्थाः शुभाः सर्वे शुभावहाः ।
त्रिषडायगताः पापाः शुभाः सीमन्तकर्मणि ॥

[4]लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।
यद्यष्टमगतस्योक्तं दोषमाशु व्यपोहति ॥

## राजमार्तण्डः

सीमन्ते गर्भमासेशबलम्, नक्षत्रम्, ग्रहस्थितिः

[5]मासे षष्ठेऽष्टमे वा बलिनि तदधिपे शीतगौ चेष्टदृष्टे
पुंनामर्क्षोपयाते नरभवननरांशोदये कामिनीनाम् ।
कार्यं सीमन्तकर्म त्रिदशपतिगुरौ केन्द्रगे कोणगे वा
क्रूरैः केन्द्रत्रिकोणैः स्व(? णस्व)निधनरहितैर्गर्भपुष्टिः प्रदिष्टा ॥

(१) चका. ७३५.

(२) प्रपा. १२० तृतीयपादे ( रात्रिचन्द्राष्टवैनाश ) रयः ( दयः ) ; संप्र. १७५.

(३) प्रपा. १२० ; संप्र. १७६ ; संग. ४२१ शुभाः सर्वे ( ग्रहाः सर्वे ).

(४) प्रपा. १२० शुभ ( शुक्र ) ; संप्र. १७६ ष्टमगत ( प्यष्टमभ ) ; ज्योनि. १११ ष्टमगत ( दष्टमभ ) ; संग. ४२१ संप्रवत् ; संव. ५० (=) ष्टमगत (प्यष्टमग).

(५) चका. ७३५ नरांशो ( नवांशो ) चतुर्थपादे ( क्रूरैः केन्द्रत्रिकोणव्ययनिधनबहिर्गर्भपुष्टिं करोति ) ज्योतिःशास्त्रे ; संसौ. ४४.



## बृहद्राजमार्तण्डे

सीमन्ते तिथि-वार-नक्षत्र-चन्द्रबल-ताराबल--लग्न-नवांश-ग्रहस्थितयः

[1]षष्ठे मासेऽष्टमेऽह्नीज्यकुजदिनकृतां नन्दे सभद्रे तिथौ
मैत्रे मूले मृगाङ्के करपितृपवने पौष्णविष्णुत्रियुग्मे ।
पुष्याश्वादित्यरौद्रे युवतिहरिझषे वृश्चिके वाऽपि लग्ने
चन्द्रे तारानुकूले शुभमपि नियतं स्याच्च सीमन्तकर्म ॥
मृगाजरहिते लग्ने नवांशे पुंग्रहस्य च ।
केचिद्वदन्ति सीमन्तं तथा रिक्तेतरे तिथौ ॥

## ऋक्षोच्चये

सीमन्ते तिथि-लग्न-नवांश-ग्रहस्थितयः

[2]नन्दा भद्रा भवेत् पुंसि स्त्रीषु पूर्णा जया स्मृता ।
रिक्ता नपुंसका प्रोक्ता तस्मात्तां परिवर्जयेत् ॥
मीनवृश्चिककुम्भेषु चापगोसिंहकन्यका(? काः) ।
युक्ता(? क्ताः) पुंसवनाद्येषु सुखपुत्रादिवाञ्छया ॥
केन्द्रत्रिकोणभवनेषु शुभस्थितेषु
पापेषु षट्त्रिदशलाभगृहस्थितेषु ।
जीवेन्दुभानुभृगुभूमिजमन्दिरेषु
लग्नेषु लग्नपरिशुद्धशुभांशकेषु ॥

## कालनिर्णये

सीमन्ते निषिद्धतिथ्यपवादः

[3]शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम् ।
पौर्णमासीं प्रशंसन्ति केचित् सीमन्तकर्मणि ॥

(१) संत. ९१३. (२) संसौ. ४४.

(३) प्रपा. १२० पौर्ण ( पूर्ण ) ; संप्र. १७५ ; सिन्धु. ८३६ ; संकौ. ५५ (=) ; संग. ४२० द्वितीयपादे ( चतुर्थी च चतुर्दशी ) ; संर. ८२२.

(१) चतुर्दशी शुक्ला ग्राह्या । † प्रपा. १२०

(२) शुक्लपक्षे चतुर्थीचतुर्दश्योः पक्षच्छिद्रात्वेन वा निषिद्धयोः पौर्णमास्याश्च केषांचिन्मतेन ग्राह्यत्वमुक्तं कालनिर्णये– 'शुभसंस्थे ...' इति । पौर्णमासीसाहचर्यात् चतुर्थीचतुर्दश्यौ शुक्लपक्षसंबन्धिन्यावेव ग्राह्ये । संर. ८२२

## कालविधाने

सीमन्ते तिथि–वार–नक्षत्र–लग्न–नवांशाः

**'सीमन्ते तिष्यहस्तादितिहरिशशभृत्पौष्ण-विध्युत्तराख्याः**
**पक्षच्छिद्रां च रिक्तां पितृतिथिमप-हायापराः स्युः प्रशस्ताः ।**
**सिंहाली वर्जयित्वा शुभफलबहुला राशयोऽप्यंशकाश्च**
**श्रेष्ठाः स्युः श्वेतरोचिर्भृगुबुधधिषणानां विशुद्धेऽष्टमेऽह्नि ॥**

(१) अदितिः पुनर्वसुः । हरिः श्रवणः । शशभृत् मृगशिरः । पौष्णः रेवती । विधिः रोहिणी । उत्तरास्तिस्रः प्रसिद्धाः । षष्ठ्यष्टमीद्वादश्यः पक्षच्छिद्राः । चतुर्थीनवमीचतुर्दश्यो रिक्ताः । पितृतिथिः अमावास्या । एतास्तिथीर्वर्जयित्वा अन्यास्तिथयः सीमन्ते ग्राह्याः । सिंहवृश्चिकौ वर्जयित्वा शुभग्रहैः फलैश्च बहुला वीक्षिता युक्ता वा अन्ये दश राशयः अंशकाश्च सीमन्ते शुभदाः । चन्द्रभृगुबुधगुरूणां वाराः सीमन्तेऽतिशुभप्रदाः स्युः । अष्टमोऽत्र लग्नादष्टमः । तस्य सर्वग्रहराहित्यं विशुद्धिः । लग्नादष्टमे राशौ सर्वे ग्रहा निषिद्धा इति ।

$ प्रपा. ११९–१२०

(२) पितृतिथिम् अमावास्यां पितृमरणतिथिं च । ¶ कृभ. ८३५–८३६

(३) पक्षच्छिद्रास्तद्वर्ज्या नाडिकाश्च वसिष्ठ आह– 'चतुर्दशी चतुर्थी च अष्टमी नवमी तथा । षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वया इमाः ॥ क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः । भूताष्टमनुतत्त्वाङ्कदश शेषास्तु शोभनाः ॥' इति । भूतानि पञ्च । मनवश्चतुर्दश । तत्त्वानि पञ्चविंशतिः । अङ्काः नव । कश्यपस्तु षष्ठ्यष्टमीद्वादशीनामेव पक्षच्छिद्रात्वमुक्त्वा सर्वसाधारण्येन दशैव घटिका वर्जनीया इत्याह– 'अष्टमी द्वादशी षष्ठी पक्षच्छिद्रास्तु तासु च । मङ्गले सर्वदा त्याज्या न्यू (? नू)नं हि दश नाडिकाः ॥' इति । उभयत्रापि घटिकास्तिथेराद्या एव, प्रथमातिक्रमे कारणाभावात् । अनन्तरोदाहृतकालविधानवाक्यस्य वसिष्ठोक्तपक्षच्छिद्राख्यतिथिपरत्वे पक्षच्छिद्रात्वेनैव चतुर्थ्यादीनां निषेधे सिद्धे रिक्तात्वेन पुनर्निषेधो दोषातिशयार्थः । कश्यपोक्तपक्षच्छिद्राख्यतिथिपरत्वे तु चतुर्थ्यादीनां पक्षच्छिद्रात्वाभावाद्रिक्तात्वेन निषेध आवश्यक एवेति द्रष्टव्यम् । पितृतिथिः अमावास्या । अपराः अन्याः उक्तापेक्षया । संर. ८२१

## मुहूर्तचिन्तामणिः

सीमन्ते तिथि–वार–नक्षत्र–लग्न–नवांश–ग्रहस्थितयः, गर्भमासेशबलम्

**'जीवार्कारदिने मृगेज्यनिर्ऋतिश्रोत्रादिति-ब्रध्नभे**
**रिक्तामार्करसाष्टवर्ज्यतिथिभिर्मा-साधिपे पीवरे ।**

---

† संप्र. प्रपावत् ।

(१) प्रपा. ११९ ; संप्र. १७६ ( सिंहाली वर्जयित्वा शुभफलबहुला राशयोऽप्यंशकानि श्रेष्ठानि ) ( विशुद्धेऽष्टमेऽपि ) एतावदेव ; सिन्धु. ८३५ च्छिद्रां ( च्छिद्रं ) पू. ; संको. ५५–५६ ( सिंहाली वर्जयित्वा शुभबहुलफला राशयोऽप्यंशकानि श्रेष्ठानि ) एतावदेव ; संर. ८२१ द्रां च रिक्तां ( द्राश्च रिक्ताः ) द्वितीयपादमात्रम्.

$ संप्र., संको. प्रपागतम् ।

¶ शेषं प्रपागतम् ।

(१) मुचि. ५।८ ; संव. ५०.

सीमन्तोऽष्टमषष्ठमासि शुभदैः केन्द्र-
त्रिकोणे खलै-
र्लाभारित्रिषु वा ध्रुवान्त्यसदहे लग्ने
च पुंभांशके ॥

प्रसिद्धे गर्भे सीमन्तोन्नयनाख्यसंस्कारमुहूर्तं शार्दूलविक्रीडितेनाऽऽह– जीवार्केति। जीवः बृहस्पतिः। अर्कः सूर्यः। आरः मङ्गलः। एषां वारे। तथा ब्रध्नः सूर्यः, 'भास्कराहस्करब्रध्न' इत्यभिधानात्। तस्य भं हस्तः। अन्यत् स्पष्टं नामत एव। एवं मृगपुष्यमूलश्रवणपुनर्वसुहस्तनक्षत्रैः सीमन्तः लक्षणया सीमन्तोन्नयनाख्यः संस्कारः कार्यः।... रिक्तेति। रिक्ताः प्रसिद्धाः, अमा अमावस्या, अर्कः द्वादशी, रसाः षष्ठी, अष्टमी एताभिस्तिथिभिर्वर्ज्याः न्यूनाः अवशिष्टा यास्तिथयस्ताभिरुपलक्षिते दिने। किंच, मासाधिपे 'मासेश्वराः' इत्यग्रिमश्लोकेन ज्ञाते गर्भमासस्वामिनि पीवरे पुष्टे उदिते सतीत्यर्थः।... तच्च शुद्धपक्षे पूर्वाह्णे एव, नापराह्णे।... लग्नमुच्यते– केन्द्रेति। केन्द्रत्रिकोणस्थानेषु (१।४।७।१०।९।५) शुभदैः सौम्यग्रहैस्तथा लाभारित्रिषु (११।६।३) खलैः पापग्रहैरुपलक्षिते लग्ने तत्रापि च पुनः पुंभांशके पुरुषराशिलग्ने पुरुषनवांशके च कार्यः।... मतान्तरेण नक्षत्राणि वारांश्चाऽऽह–ध्रुवेति। ध्रुवाणि रोहिण्युत्तरात्रयम्, अन्त्यं रेवती। तथा सदहे सतां शुभग्रहाणां चन्द्रबुधगुरुशुक्राणामह्नि वासरे। ध्रुवान्त्यनक्षत्रेषु प्रागुक्तनक्षत्रेषु वा कार्यम्, एवं शुभग्रहवारे वा कार्यमित्यर्थः।

ननु तृतीयमासविहितत्वादादौ पुंसवनमुहूर्तो विचारणीयः, ततश्चतुर्थषष्ठाष्टममासविहितः सीमन्तमुहूर्तो विचार्यः, वैपरीत्योक्तौ किं बीजमिति चेत्, उच्यते– सीमन्ते विहितस्य तिथिनक्षत्रवारलग्नादिसमुदायस्य पुंसवनेऽप्युपयोगात् सर्वदेशप्रसिद्धसीमन्तानुष्ठानाचारदर्शनाच्चाऽऽदौ सीमन्तस्योक्तिः। पुंसवनं स्वतन्त्रकर्तव्यत्वेनोक्तमपि शिष्टाः सीमन्तेन सहैव कुर्वन्ति। यदाह जातूकर्ण्यः– 'सीमन्तेन सहाथवा' इति। नृसिंहोऽपि– 'सीमन्तोन्नयनस्योक्ततिथिवासरराशिषु। पुंसवं कारयेद्विद्वान् सहैवैकदिनेऽथवा॥' इति। अत एवानवलोभनाख्यं कर्मास्मिन्नेव दिने क्रियत इति शिष्टाचारोऽप्यत्रार्थे प्रमाणम्। ¶ पीटी.

'मासेश्वराः सितकुजेज्यरवीन्दुसौर-
चन्द्रात्मजास्तनुपचन्द्रदिवाकराः
स्युः।
स्त्रीणां विधोर्बलमुशन्ति विवाहगर्भ-
संस्कारयोरितरकर्मसु भर्तुरेव॥

गर्भप्रथममासादारम्य दशमप्रसूतिमासपर्यन्तं सितादयो मासेश्वरा ज्ञेयाः। यथा प्रथममासेश्वरः शुक्रः। द्वितीये मङ्गलः। तृतीये गुरुः। चतुर्थे रविः। पञ्चमे चन्द्रः। षष्ठे शनिः। सप्तमे बुधः। अष्टमे आधानलग्नाधिपतिः। नवमे चन्द्रः। दशमे सूर्यः। ‡ पीटी.

## मुहूर्तगणपतौ

सीमन्ते वार–नक्षत्र–मासेशबल–लग्न–नवांश–ग्रहस्थितयः

'पुनर्वसुद्वये मूले श्रवणे मृगहस्तयोः।
गुरौ भौ(? गुरुभौ)मार्कवारेषु प्रोक्तं पुंसव-
नादिकम्॥
रेवत्यां त्र्युत्तरेऽप्येके शुक्रे चन्द्रे बुधे जगुः।
§मासेशे सबले चन्द्रे लग्ने पुंभांशके शुभे।
सौम्यके(? सौम्ये के)न्द्रत्रिकोणस्थे पापे लाभ-
त्रिषट्कगे॥

## शौनककारिकाः

सीमन्ते पक्ष-नक्षत्र–मुहूर्ताः

'शुक्लपक्षे च पुंलिङ्गनक्षत्रस्थे निशाकरे।
तिष्यः पुनर्वसुर्हस्तोऽनुराधा श्रवणोऽश्वयुक्॥

¶ संव. पीटीगतम्।

‡ संव. पीटीगतम्। उत्तरार्धव्याख्यानं 'भार्यागमनकालः' इत्यस्मिन् प्रकरणे (सं. का. पृ. २४१९) द्रष्टव्यम्।

§ व्याख्यानं पुंसवनमुहूर्तप्रकरणे (सं. का. पृ. २५४९) द्रष्टव्यम्।

(१) मुचि. ५।९; संव. ५१. (२) संव. ५१.

(३) शौका. २–३ पृ. ३६ शुक्ल... नक्ष (शुक्ले च पक्षे पुंलिङ्गे नक्ष) णोऽश्वयुक् (णाश्वियुक्); प्रपा. ११९

[1]एवमादिषु दम्पत्योर्जन्मर्क्षानुगुणे शुभे ।
नक्षत्रे विदधीतैतन्मुहूर्ते च सुशोभने ॥

मुहूर्ते विवाहप्रकरणे वक्ष्यमाणलक्षणे इत्यर्थः । अत्राऽऽदिशब्देन प्रोष्ठपदादयो गृह्यन्ते । प्रपा. ११९

## कुमारिलकारिकाः

सीमन्ते नक्षत्राणि

[1]पुंनक्षत्रे सिते पक्षे त्वन्वाधानादि पूर्ववत् ।
पुंनक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसुः ॥

[2]अभिजित् प्रोष्ठपाच्चैव अनूराधा तथाऽश्वयुक् ।
ऋक्षस्य मध्यमे पादद्वये कर्मेदमिष्यते ॥

उक्तनक्षत्रं चतुर्धा विभज्याऽऽद्यान्त्यभागौ त्याज्यौ, मध्यमौ भागौ ग्राह्यावित्यर्थः । कुभ. ८३५

## रेणुकारिकाः

सीमन्ते पुंसवनमुहूर्तातिदेशः

[2]पुंसवनोक्ते मुहूर्ते कर्तव्यं श्राद्धपूर्वकम् ॥

---

ऽनु ... श्र (ह्यनूराधा श्रविष्ठ) ; विपा. ९७ निशा (दिवा) राधा (राधः) ; संग. ४२० च (तु) पू.

(१) शौका. ३–४ पृ. ३६ र्क्षानु (ऋक्ष) ; प्रपा. ११९.

(२) कुका. १।७।२ ; प्रपा. ११९ ; ज्योनि. ११० ; संग. ४१५ उत्त., रत्नके ; संब. ५० उत्त.

(१) कुका. १।७।३ ; प्रपा. ११९ श्वयुक् (श्विनी) कर्मेदमि (कर्म तदि) ; ज्योनि. ११० द्वितीयपादे (ह्यनुराधाऽश्वयुक् तथा) इति (अनूराधाऽश्वियुक् श्रुतिः) इति च पाठः ; संकौ. ५५ उत्त. ; संग. ४१५ (अभिजित् प्रोष्ठपाच्चैव अनुराधाऽश्वियुक् तथा ।) पू., रत्नके ; संब. ५० तथाऽश्वयुक् (ऽश्वियुक् तथा) कर्मेदमि (सीमन्त इ) ; कुभ. ८३५ उत्त.

(२) रेका. ५ पृ. ७.

# सीमन्तोन्नयनप्रयोगः

## बौधायनगृह्यसूत्रम्

आदौ ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमः, सीमन्तकरणम्, यवप्रसूनबन्धनम्, गाथागानम्

**'ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वा ॥**

**अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति ॥**

**'धाता ददातु नः' इति पुरोनुवाक्यामनूच्य 'धाता प्रजाया उत राय ईशे' इति याज्यया जुहोति ॥**

**अथाऽऽज्याहुतीरुपजुहोति– 'धाता ददातु नो रयिं प्राचीम्' इत्याऽन्तादनुवाकस्य ॥**

**स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥**

**अथास्याश्लेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैरुदुम्बरप्रसूनैर्यवप्रसूनैरिति केशान् विभजन् सीमन्तमुन्नयति 'राकामहम्, यास्ते राके' इति द्वाभ्याम् ॥**

**अथास्यै यवप्रसूनान्याबध्नाति– 'यवोऽसि यवयास्मद्द्वेषो यवयारातीः' इति ॥**

**अथैनौ वीणागाथिनाविति प्रतिगृह्णीते ॥**

**अथैनौ संशास्ति– 'गायतम्' इति ॥**

**तावेतां गाथां गायतः– 'सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः। विवृत्तचक्रा आसीनास्तीरेणासौ तव ॥' इति ॥**

**यस्यै नद्यास्तीरे संश्रिता वसन्ति तस्यै नाम गृह्णाति ॥**

---

(१) बौगृ. १।१०।२–१२.

## आश्वलायनगृह्यसूत्रम्

होमः, सीमन्तकरणम्, गाथागानम्, वृद्धजीवपत्युपदिष्टाचरणम्, आचार्यदक्षिणा वृषभः

**'अथाग्निमुपसमाधाय पश्चादस्याऽऽनडुहं चर्माऽऽस्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायां 'धाता ददातु दाशुषे' इति द्वाभ्याम् 'राकामहम्' इति द्वाभ्याम् 'नेजमेष' इति तिसृभिः 'प्रजापते न त्वदेतान्यन्यः' इति च ॥**

(१) अथशब्दः कस्मात् क्रियते ? अथशब्दं कुर्वन्नेतत् ज्ञापयति–अन्यस्मिन्नपि काले भवतीति। एवमर्थं दर्शयति। कः पुनरसौ कालः ? षष्ठाष्टमयोर्वेति। अन्येषां वक्तव्यमेतदारब्धम्। तस्मादथशब्दः कर्तव्यः। अथाग्निमुपसमाधायेत्येवमादि समन्वारम्भणान्तं गृहप्रवेशनीयेन व्याख्यातम्। 'धाता ददातु' इति द्वाभ्यामृग्भ्यां प्रत्यृचं जुहोति। 'राकामहम्' इति द्वाभ्याम् 'नेजमेष' इति सूक्तम् 'प्रजापते न त्वदेतान्यन्यः' इति च प्रत्यृचं जुहोति। देभा.

(२) जुहुयादिति शेषः। अथशब्दोऽन्यस्मिन्नपि काले भवतीदं कर्मेति ज्ञापनार्थः। कस्मिन् ? षष्ठाष्टमयोर्मासयोः। शास्त्रान्तरे चायं कालो विहितः। अग्निमुपसमाधायेत्यादि गृहप्रवेशनीये व्याख्यातम्। आज्यभागान्तं कृत्वा 'धाता ददातु दाशुषे' इत्यादिभिरष्टावाज्याहुतीर्जुहुयात्। † गानावृ.

**'अथास्यै युग्मेन शलाटुग्लप्सेन त्र्येण्या च शलल्या त्रिभिश्च कुशपिञ्जूलैरूर्ध्वं सीमन्तं व्यूहति– 'भूर्भुवः स्वरोम्' इति त्रिः ॥**

---

† अना. गानावृगतम्। प्रपा. गानावृत्त्यनुवादः सर्वत्र।

(१) आगृ. १।१४।३ ; अना. १।१२।३ ; प्रपा. १२०.

(२) आगृ. १।१४।४ ; अना. १।१२।४ त्र्येण्या (त्रिरन्यया) ; प्रपा. १२१.

( १ ) युग्मेन समेनेत्यर्थः । केन युग्मेन ? शलाटुग्लप्सेन । शलाटुरिति अपक्वानां फलानामाख्या । ग्लप्स इति स्तबकः । संघात इत्यर्थः । त्र्येण्या च शलल्या । त्रीण्येतानि यस्याः सेयं (त्र्येणी, तया) त्र्येण्या । (त्रिषु) शुक्लयेत्यर्थः । त्रिभिश्च कुशपिञ्जूलैः कुशतरुणैरित्यर्थः । एवमेतैर्द्रव्यैरूर्ध्वं सीमन्तं व्यूहति 'भूर्भुवः स्वरोम्' इति त्रिः । त्रिरपि मन्त्रो भवति । व्यूहति नाना करोति । देभा.

( २ ) अस्यै अस्याः । युग्मेन समेन । केन ? शलाटुग्लप्सेन तरुणफलसंघातेन । शलाटुरित्यपक्वानां फलानां समाख्या । ग्लप्स इति स्तबक उच्यते । औदुम्बरस्तबकेन, शास्त्रान्तरे दृष्टत्वात् । तदभावेऽन्येन । त्रीण्येतानि यस्याः सेयं त्र्येणी शलली । एतः शुक्ल इत्यर्थः । 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप् तकारस्य नत्वं च । ततो 'रषाभ्यां नो णः' इति णत्वम् । कुशपिञ्जूलैः कुशतरुणैः । एतैरेकीकृतैर्ललाटकेशयोः संधिमारभ्य ऊर्ध्वं सीमन्तं व्यूहति मन्त्रेण । आ मूर्धप्रदेशात्केशान् पृथक्करोतीत्यर्थः । एवं त्रिर्व्यूहति । मन्त्रावृत्तिरुक्ता । गानावृ.

( ३ ) अथशब्दः प्रकारभेदं द्योतयति– उपविश्य हुत्वा अथोत्थाय व्यूहति इति । चतुर्थ्यां तादर्थ्यमुच्यते । किं सिद्धं भवति ? आधारभूतायाः स्त्रियाः संस्कारः सीमन्तव्यूहनमिति सिद्धं भवति । युग्मेन समेन अखण्डयतैवार्धयितुं शक्येन । अपक्वानि फलानि शलाटूनि, तेषां ग्लप्सेन स्तबकेन । यत्र स्तबके फलानि युग्मानि तेन । त्रिरावृत्तोऽन्यो वर्णो यस्याः तया त्रिरन्यया शलल्या । आरण्यस्य वराहविशेषस्य, यस्य सूच्याकाराणि रोमाणि, तस्य सूची शलली । सा कृष्णा भवति । तत्र कस्याश्चित् त्रिषु स्थानेषु श्वेतो वर्णः, अन्यस्या अन्यथा । ततो विशेष्यते त्रिरन्ययेति । ¶ अना.

**'चतुर्वा ॥**

---

¶ शेषं गानावृगतम् ।

(१) आगृ. १।१४।५ ; अना. १।१२।४ ; प्रपा. १२१.

( १ ) चतुर्वा व्यूहति । † देभा.

( २ ) चतुर्वा व्यूहति मन्त्रेण । गानावृ.

**'वीणागाथिनौ संशास्ति– 'सोमं राजानं संगायेताम्' इति ॥**

( १ ) वीणागाथिनौ संशास्ति । किमिति ? सोमं राजानं संगायेतामिति । वीणा च गाथा च वीणागाथे । वीणागाथे ययोस्तावेतौ वीणागाथिनौ । संशास्ति अनेन प्रैषेण– 'सोमं राजानं संगायताम्' इति । † देभा.

( २ ) वीणा च गाथा च वीणागाथे ते ययोः स्तः तौ तथोक्तौ । तौ संशास्ति संप्रेष्यति– सोमं राजानं संगायेतामिति । गानावृ.

**' 'सोमो नो राजाऽवतु मानुषीः प्रजा निविष्टचक्राऽसौ' इति यां नदीमुपवसिता भवन्ति ॥**

( १ ) एतां गाथां तौ गायतः । निविष्टचक्राऽसाविति । असावित्यस्य पद(स्य)स्थाने अनया आमन्त्रितया विभक्त्या नद्या नामाऽऽदिशेत् यस्याः समीपे वसन्ति । देभा.

( २ ) असावित्यस्य स्थाने यस्या नद्याः समीपे वसन्ति तस्या नाम आमन्त्रणविभक्त्या ब्रूयाताम् 'निविष्टचक्रा गङ्गे' इति । गानावृ.

( ३ ) कस्या नद्याः ? यां नदीमिति । यां नदीमुपजीवन्तीत्युक्तं भवति । ¶ अना.

**'ब्राह्मण्यश्च वृद्धा जीवपत्न्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः ॥**

---

† अना. देभावत् ।

¶ शेषं गानावृगतम् ।

(१) आगृ. १।१४।६ ; अना. १।१२।५–६ येताम् ( यतम् ) ; प्रपा. १२१.

(२) आगृ. १।१४।७ ; अना. १।१२।७–८ मुप ( मुपा ) ; प्रपा. १२१.

(३) आगृ. १।१४।८ ; अना. १।१२।९ पत्न्यो ( पत्न्यो ) इत्यपि पाठः , ( तत्तत्कुर्युः० ) ; प्रपा. १२१ पत्यो ( पत्न्यो ) ; कृम. १७२६ ( जीवप्रजा० ) सूत्रम् .

(१) यद्यदुपदिशन्ति तत्तत् कर्तव्यम्। अत्र तु स्विष्टकृत्कालः प्रैषं दत्त्वा भवति। $ देभा.

(२) तत्तत् कुर्यादिति शेषः। जीवन्ति पतयो यासां ता जीवपत्यः। छान्दसो यणादेशः। जीवपत्न्य इति पाठे 'विभाषा सपूर्वस्य' इति ङीप्नकारौ। यदा तु तौ न भवतः तदा जीवपतय इति भवति। अना.

[1]**वृषभो दक्षिणा ॥**

(१) अत्र तु कः कर्ता भवति? स्वयमेव। कुतः? मन्त्रलिङ्गात् 'अस्यै मे पुत्रकामायै' इति। ननु च दक्षिणादानं नोपपद्यत इति। ब्रह्मणे दक्षिणां ददाति। ब्रह्मणोऽभावे येऽत्र संनिहिताः तेभ्यो ददाति। देभा.

(२) वृषभः गौरासेचनसमर्थः। तं दक्षिणां दद्यात्। * गानावृ.

(३) दक्षिणोपदेशादन्यकर्तृकमिति केचित्। नेति वयम्। मन्त्रलिङ्गात् 'अस्यै मे पुत्रकामायै गर्भमाधेहि' इति। * अना.

## कौषीतकिगृह्यसूत्रम्

मङ्गलस्नपनम्, होमः, सीमन्तकरणम्, उदुम्बरफलानामुत्सङ्गे निधानं कण्ठे बन्धनं च, अक्षतमिश्रोदकप्राशनम्, उदराभिमर्शनम्, मङ्गलगीतगापनम्

[1]**स्नातामहतवाससं पश्चादग्नेरुपवेश्य ॥**

**अन्वारब्धायां महाव्याहृतिभिर्हुत्वा ॥**

**स्थालीपाकं श्रपयित्वा ॥**

**मुद्गौदनमित्येके ॥**

† [2]**पुंवदुपकरणानि स्युर्नक्षत्रं च ॥**

$ गानावृ. देभावत्।

* शेषं देभावत्।

† व्याख्यानं सीमन्तोन्नयनमुहूर्तप्रकरणे (सं. का. पृ. २५८२) द्रष्टव्यम्।

(१) आगृ. १।१४।९; अना. १।१२।१०; प्रपा. १२१ वृष (ऋष). (२) कौगृ. १।२२।२–५.

(३) कौगृ. १।२२।६; ब्रक. ८३ स्युर्न (न) च (वा).

[1]**'धाता ददातु दाशुषे प्राचीं जीवातुमक्षितिम्। वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ॥ धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान। धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोत ॥' इति, 'नेजमेष परापत' इति तिस्रः, 'प्रजापते' इति षष्ठी ॥**

**त्रिःश्वेतया शलल्या दर्भसूच्या वोदुम्बरशलाटुभिः सह मध्यादूर्ध्वं सीमन्तमुन्नयति— 'भूर्भुवः स्वः' इति ॥**

**उत्सङ्गे निधाय ॥**

**त्रिवृति प्रतिमुच्य कण्ठे बध्नाति— 'अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव' इति ॥**

**अथाऽऽह वीणागाथिनः— 'राजानं संगायत' इति, 'यो वाऽप्यन्यो वीरतरः' इति ॥**

**उदपात्रेऽक्षतानवनिनीय 'विष्णुर्योनिं कल्पयतु, राकामहम्' इति ॥**

***षड्टचेन पाययेत् ॥**

**अथास्या उदरमभिमृशेत् ॥**

**'सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुः। छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूः ॥' ॥**

**मोदमानीं गापयेत् ॥**

**महाहेमवतीं वा ॥**

**ऋषभो दक्षिणा ॥**

अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो माङ्गल्यं स्नानं कारयित्वा अहते वाससी परिधाप्य पश्चादग्नेरुपवेश्यान्वारब्धायां महाव्याहृतिभिश्चतस्र आहुतीर्हुत्वा ततः स्थालीपाकस्य मुद्गमिश्रस्य वा 'धाता ददातु... घृतवज्जुहोत' इति सूत्रपठितं मन्त्रद्वयम्, 'नेजमेष परापत' इति तिस्र ऋचः, 'प्रजापते न त्वदेतान्यन्यः'

* अयं सूत्रच्छेदश्चिन्त्यः।

(१) कौगृ. १।२२।७–१८.

इति षष्ठी एतैः षड्भिर्मन्त्रैः स्वाहाकारान्तैः षडाहुतीः अवदानधर्मेण स्थालीपाकस्य हुत्वा ततस्त्रिःश्वेतया शलल्या दर्भसूच्या वा एताभ्यामन्यतरमुदुम्बरफलैरभिनवैः सह गृहीत्वा ललाटमध्यादारभ्य लोकप्रसिद्धं सीमन्तमुन्नयतीति। अपरे त्वेवं व्याचक्षते— नाभेरन्तरमारभ्य सीमन्तमुन्नयति। ततो 'भूर्भुवः स्वः' इत्येतेन मन्त्रेण तान्युदुम्बरफलानि गर्भिण्या उत्सङ्गे निदधाति। अपरे त्वेवं व्याचक्षते— 'भूर्भुवः स्वः' इत्यनेन मन्त्रेण सीमन्तमुन्नयति, तूष्णीं तान्युत्सङ्गे निदधाति। ततस्तानि फलानि त्रिवृतिसूत्रेण बद्ध्वा 'अयमूर्जावतो ...' इत्यनेन मन्त्रेण त्रिवृतिसूत्रग्रथितैरुदुम्बरफलैः कण्ठे बद्ध्वा वीणागाथिनः 'राजानं संगायत' इति ब्रूयात्। अथवा अन्यं कंचित् पौरुषेण विख्यातं वीरं संगायतेति ब्रूयात्। तत उदकपूर्णे पात्रे व्रीहीन् यवान् वा प्रक्षिप्य 'विष्णुर्योनिं कल्पयतु' इत्येका ऋक् 'राकामहं सुहवां सुष्टुती हुवे' इति षड़ृचः एतैः सप्तभिर्मन्त्रैः अक्षतमिश्रस्योदकस्य प्रतिमन्त्रं सप्तप्रसृतीर्गर्भिणीं पाययेत्। तत आचान्तायाः 'सुपर्णोऽसि ...' इत्यनेन मन्त्रेण गर्भिण्या उदरमभिमृशेत्। ततो नित्यं प्रहृष्टा या स्त्री तां मङ्गलगीतानि गापयेत्, अथवा बहुसुवर्णालंकृता तां वा गापयेत्। एतत् कृत्वा प्रवहनसमर्थो बलीवर्दो दक्षिणा। ततः स्विष्टकृत् ततो महाव्याहृतिभिः सर्वप्रायश्चित्तादिकं कर्मशेषमशेषं समापनीयमिति। कौगृसं.

## आपस्तम्बगृह्यसूत्रम्

ब्राह्मणभोजनम्, आशीर्वाचनम्, होमः, सीमन्तकरणम्, गाथागानम्, यवाबन्धनम्, वाग्यमो वाग्विसर्जनं च

**[1]ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वाऽग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते ॥**

(१) तत्र पूर्वेद्युर्नान्दीश्राद्धम्। अथ तस्मिन्नहनि ब्राह्मणान् भोजयित्वा तैर्भुक्तवद्भिः आशिषो वाचयित्वा अग्नेरुपसमाधानादि प्रतिपद्यते सकृत् पात्राणि शलल्यादयश्च सहशम्याः। अनाकुला.

(२) इह ब्राह्मणभोजनाशीर्वचनयोर्विधानम् उपनयनवत् क्रमार्थम्। ¶ ताद.

**परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैः शलालुग्लप्सेनेत्यूर्ध्वं सीमन्तमुन्नयति व्याहृतीभिरुत्तराभ्यां च ॥**

(१) प्राचीं प्राङ्मुखीं स्वयं प्रत्यङ्मुखः। त्रिषु प्रदेशेषु एनी श्वेता त्रेणी। इकारलोपश्छान्दसः णत्वं च। शलली शल्यकस्य रोमसूची। सविशाखा नाडी पुञ्जीलमित्युच्यते। दर्भस्य पुञ्जीलानि त्रीणि भवन्ति। उदुम्बरस्य फलसंघातविशेषस्तरुणः शलालुग्लप्स इत्युच्यते। पिशाचोदुम्बरस्येत्यन्ये। एतानि द्रव्याणि युगपद्गृहीत्वा तैः सीमन्तमुन्नयति ऊर्ध्वमुदूहति 'भूर्भुवः सुवः' इत्येताभिः, उत्तराभ्यां च 'राकामहम्, यास्ते राके' इत्येताभ्याम्। त्रयाणामन्ते सकृदुन्नयनम्। इह मन्त्रसमाम्नाये व्याहृतीनां पाठो न कर्तव्यः। व्याहृतिभिरित्येतेनैव सिद्धः संप्रत्ययः। यथा 'व्याहृतीश्च जपित्वा' 'व्याहृतीर्विहृताः' इत्यादौ। एवं सिद्धे व्याहृतीनां पाठः समाम्नायार्थम्। किं चासति पाठे व्याहृतिभिरुत्तराभ्यां चेत्युच्यमाने यावमानसमाम्नायात् ग्रहणं प्राप्नोति व्याहृतिभिरुत्तराभ्यां च मन्त्राभ्याम् 'उद्बुध्यस्वाग्ने' इत्येताभ्यामिति। तत्र पाठस्य प्रसिद्धत्वात् 'राकामहम्, यास्ते राके' इत्येतयोश्च प्रधानाहुतित्वं विज्ञायेत, विशेषाभावात्। तस्मादस्मादेव समाम्नायाद्ग्रहणं यथा स्यादिति व्याहृतीनामिह पाठः। अनाकुला.

(२) त्रेणी त्रीण्येतानि शुक्लानि यस्याः सा। यद्वा त्रिषु प्रदेशेषु एनी श्वेता। शलालुः गोष्ठोदुम्बरः खरपत्रोदुम्बरः पिशाचोदुम्बर इत्यनर्थान्तरम्। ग्लप्सः स्तबकः। पिशाचोदुम्बरस्य तरुणफलसंघातविशेष इत्यर्थः। इत्येतैर्द्रव्यैर्युगपद्गृहीतैरूर्ध्वं सीमन्तमुन्नयति शिरसि मध्ये रेखामुदूहति। कैर्मन्त्रैः? 'भूर्भुवः सुवः'

(१) आपगृ. १४।२-८.

¶ शेषम् अनाकुलावत्।

'राकामहं सुहवाम्' 'यास्ते राके सुमतयः' इत्येतैर्मन्त्रैः। चकारो बहुमन्त्रज्ञापनार्थः। ‡ ताद.

**'गायतम्' इति वीणागाथिनौ संशास्ति ॥**

वीणया यो गाथां गायति स वीणागाथी। तावुभौ प्रागेवाऽऽनीतौ भवतः। तौ संशास्ति संप्रेष्यति-- 'गायतम्' इति। तौ गायतः। $ अनाकुला.

**उत्तरयोः पूर्वा साल्वानां ब्राह्मणानामितरा ॥**

(१) तत्र ऋङ्नियमः-- उत्तरयोरिति। उत्तरयोः ऋचोः या पूर्वा 'यौगन्धरिः' इत्येषा सा साल्वानां सीमन्तकर्मणि गाथा। साल्वदेशनिवासिनाम् अस्यामृचि गानं कर्तव्यमित्यर्थः। स देशो यमुनातीरे भवति। वैश्याश्च तत्र भूयिष्ठं भवन्ति। तेषामेव राजा यौगन्धरिः। इतरा 'सोम एव नो राजा' इत्येषा। न सर्वेषां ब्राह्मणानाम्, अपि तु साल्वानाम्।

अनाकुला.

(२) उत्तरयोः ऋचोः वीणागाथिनौ गायेताम्। केषां कतरा गाथा? इत्यत आह-- पूर्वेति। पूर्वा 'यौगन्धरिः' इत्येषा। साल्वदेशीयानां त्रयाणां वर्णानामपि गाथा, 'साल्वीः' इत्यविशेषलिङ्गात्। अन्यदेशवासिनां ब्राह्मणानामितरा 'सोम एव नो राजा' इत्येषा। क्षत्रियवैश्यानां तु 'सोमो नो राजाऽवतु मानुषीः प्रजाः' (आग्. १।१४।७) इत्याश्वलायनीये दृष्टायां सार्ववर्णिक्यामृचि गानं कर्तव्यम्। न तु गानाभावः, गायतमित्यविशेषेण संशासनविधानात्। केचित् साल्वानामपि ब्राह्मणानामितरेति। ताद.

**नदीनिर्देशश्च यस्यां वसन्ति ॥**

(१) द्वितीये मन्त्रे असौशब्दस्य स्थाने नद्या नाम संबुद्ध्या निर्देष्टव्यम्। यस्यां वसन्ति यामुपजीवन्तीत्यर्थः। यथा-- 'तीरेण कावेरि तव' इति। क्षत्रियाणां तु सर्वेषां कल्पान्तरदृष्टायां सार्ववर्णिक्यामृचि गानं भवति-- 'सोम एव नो राजेत्याहुर्मानुषीः प्रजाः। विवृत्तचक्रा आसीना' इति। अत्रापि नदीनिर्देशः संबुद्ध्या।

अनाकुला.

(२) कस्या नद्याः? इति चेत्, यस्यां वसन्ति। समीपसप्तमी चेयम्। यस्याः समीपे वसन्ति तस्या निर्देश इत्यर्थः। ¶ ताद.

**यवान्विरूढानाबध्य वाचं यच्छत्या नक्षत्रेभ्यः ॥**

(१) विरूढान् अङ्कुरितान् सूत्रबद्धानाबध्नाति शिरसि बध्वाः। सैव वाचं यच्छति। एवमुपदेशो भोजनं चास्यास्मिन्नहनि नेच्छन्ति। यवाश्च प्रागेव वसत्याः यथाऽस्मिन् काले विरूढा भवन्ति। अनाकुला.

(२) अङ्कुरितान् सूत्रग्रथितान् यवान् वध्वाः शिरस्याबध्नाति। शिरसीति कुतः? आचारात्।

ताद.

**उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य वत्समन्वारभ्य व्याहृतीश्च जपित्वा वाचं विसृजेत् ॥**

(१) वत्सः पुमान् गौश्च भवति। व्याहृतयः समस्ताः याजमानसमाम्नायात् प्रत्येतव्याः।

अनाकुला.

(२) विस्पष्टार्थम्। इह केचिदध्येतारः 'यच्छतः' 'विसृजतः' इति द्विवचने पठन्ति। तस्मिन् पक्षे वाग्यमनादिपदार्थपञ्चकमुभौ जायापती कुरुतः। केचित् यवाबन्धनादि सर्वं वधूरेव, न पतिरिति। ताद.

## हिरण्यकेशिगृह्यसूत्रम्

होमः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, मङ्गलस्नानादि, सीमन्तकरणम्, अभिमन्त्रणम्

**'अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम्' इति चतस्रो धात्रीर्जुहोति ॥**

अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम्' इति चतस्रो धात्रीर्जुहोति। धात्रीवचनम् 'इदं वामास्ये' इत्याम्नातानां ग्रहणार्थम्। मातृद.

---

‡ शेषम् अनाकुलागतम्।

$ ताद. अनाकुलागतम्।

¶ शेषम् अनाकुलागतम्।

(१) हिगृ. २।१।२-३.

**'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च। अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात्। ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामपरेणाग्निं मण्डलागारे प्राचीमुपवेश्य त्रेण्या शलल्या शलालुग्रप्समुपसंगृह्य पुरस्तात् प्रत्यङ् तिष्ठन् व्याहृतिभिः 'राकामहम्, यास्ते राके' इति द्वाभ्यामूर्ध्वं सीमन्तमुन्नीय अभिमन्त्रयते– 'सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः। नि(? वि)वृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे॥ विश्वा उत त्वया वयं धारा उदन्या इव। अतिगाहेमहि द्विषः॥' इति॥**

वारुणीप्रभृति परिषेकविसर्गान्ते कृतेऽन्नहोमादिपुण्याहवाचनान्तं कृत्वाऽऽरम्भकाल एवाऽऽदीनां (व प्रविश्य ?) पुनः कर्माङ्गस्नानादिब्राह्मणसंभाषणान्तं कृतवतीमपरेणाग्निं प्राङ्मुखीमुपवेश्य पूर्वमेव चैवं कारयित्वा पुण्याहवाचनान्ते त्रेण्या त्रिःश्वेतया शलल्या श्वावित्कण्टकेन सह शलालुग्रप्सम् उदुम्बरफलस्तबकम् उपसंगृह्य। न्यग्रोधफलस्तबकमित्येके। तस्य च युग्मफलत्वं बह्वृचानामुक्तम्– 'अथास्मै युग्मेन शलालुग्रप्सेन' (आगृ. १।१४।४) इति। पुरस्ताद्भार्यायाः प्रत्यङ् तिष्ठन् व्याहृतिभिः 'यास्ते राके' इति द्वाभ्यां सकृदेव तस्याः सीमन्तं शलालुग्रप्सया शलल्या प्रत्यगपवर्गमुन्नीय विभज्य केशान् 'सोम एव नो०, विश्वा उत०' इत्येताभ्यां तामभिमन्त्रयते। मातृद.

## मानवगृह्यसूत्रम्

होमः, सीमन्तकरणम्

**'जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेष्वासीनायाः पत्न्याः सर्वान्प्रमुच्य केशान्नवनीतेनाभ्यज्य त्रिश्येतया शलल्या शमीशाखया च सपलाशया 'पुनः पत्नीमग्निरदात्' इति सीमन्तं करोति॥**

तत्र कथमित्याह– जयप्रभृतिभिरिति। † जयप्रभृतयश्च जयाभ्यातानाः संततिहोमा राष्ट्रभृतः। एवं च प्रभृतिशब्द आद्यर्थवाची न प्रागर्थे वर्णितो भवति। पञ्चमीसमासश्च लाक्षणिकः(?)। बहुव्रीहिषु लाक्षणिकः(?)। तैश्च प्रधानस्थाने होमः। यथा "आयुष्यहोमात्(? होमाञ्जुहुयात्) 'अग्नेरायुरसि' इत्यनुवाकेन"। तैश्च हुत्वाऽनन्तरमेव सीमन्तकरणम्, हुत्वेति वचनात्। कथम्? – पश्चात् (इति)। अग्नेः पश्चात् दर्भेषूपविष्टायां सत्यां सर्वान् केशान् विमुच्य आभ्यज्य नवनीतेन त्रिश्येतया शलल्योक्तया ‡ शमीवृक्षशाखया च सपर्णया समूलेन दर्भेण वा 'पुनः पत्नीम्' इत्यनेन मन्त्रेण सीमन्तं स्त्रीषु प्रसिद्धं कुर्यादित्यर्थः। अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

होमः, सीमन्तकरणम्, ओदनत्रयदर्शनं तत्र प्रश्नप्रतिवचने च, ओदनत्रयस्य ब्राह्मणैर्ब्राह्मणीभिः सकुमारगर्भिण्या च प्राशनम्, वाग्यमविसर्गौ

**'पयसि स्थालीपाकं श्रपयित्वाऽन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान् राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति– 'भूर्भुवः सुवः, प्रजापते' इति चतस्रः। त्रेण्या शलल्या त्रीणि दर्भपुञ्जीलानि शलालुग्रप्समित्युपनियम्योर्ध्वं सीमन्तमुन्नयति– 'भूर्भुवः सुवः, राकामहम्, यास्ते राके, सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः।**

(१) मागृ. १।१५।१.

(१) भागृ. १।२१.

†सीमन्तोन्नयनविधिप्रकरणे संग्राह्योऽपि अतीवाशुद्धत्वादसंगृहीते पूर्वभाष्यांशे 'जयेति। जयेभ्यः प्रभृति तेभ्यः प्राग्ये स्युराघारादयस्ते जयप्रभृतयः, ते हुत्वा पवित्रादिहोमे वक्ष्यमाणं कर्म कुर्यात्' इत्युक्तम्। तेनास्य विरोधश्चिन्त्यः।

‡ विवाहप्रकरणे 'अत्रैव सीमन्तं करोति त्रिश्येतया शलल्या' (मागृ. १।१२।२) इति सूत्रे 'त्रिश्येता शलली त्रिषु स्थानेषु या शुक्ला शलली' इति भाष्येणोक्तयेत्यर्थः।

**विवृत्तचक्रा आसीनास्तीरेण यमुने तव ॥' इति । 'तीरेणासौ तव' इति वा यस्यास्तीरे वसति । पुरस्तादग्नेरेतानि निधाय त्रीनोदनानुद्धृत्य सर्पिषोपसिच्योपनिदधात्युदशरावं चतुर्थम् । तेषामेकैकमवेक्षमाणां पृच्छति- 'किं पश्यसि' इति । 'पुत्रांश्च पशूंश्च' इति प्रत्याह । तेषामेकं ब्राह्मणान् भोजयेदेकं ब्राह्मणीरेकं सह कुमारैः सा प्राश्नाति । वाग्यत आस्त आ नक्षत्राणामुदयात् । उदितेषु नक्षत्रेष्विति समानम् ॥**

## काठकगृह्यसूत्रम्

होममध्ये केशप्रसाधन--सीमन्तकरण--केशपक्षबन्धनानि, गुरोरर्हणम्

**'यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेषु प्राङासीनायाः सर्वान् केशान् संप्रमुच्य प्रसाधयते- 'यं सीमन्तम्' इति । 'यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुरः परिववर्ज वपंस्ते । स्त्रीषु रूपमश्विनौ तं निधत्तं पौंस्येनेमं संसृजतं वीर्येण ॥ इन्द्राणी चक्रे कङ्कतं स सीमन्तं विसर्पतु । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥' इति ॥**

यथोक्तमुपसमाधानं कृत्वा जयप्रभृतिभिराज्यभागान्तं हुत्वा, प्रकृतस्य आवसथ्यस्य अग्नेः पश्चाद्भागे अग्नेर्दर्भेषु प्राङ्मुख्या उपविष्टायाः सर्वान् केशान् सम्यक् प्रकर्षेण मुक्तान् कृत्वा, कङ्कतेन दारुमयोभयदिक्भूरितरदन्तयोगिना वालस्पष्टीकरणेन प्रसाधयते स्पष्टीकरोति वक्ष्यमाणाभिस्तिसृभिर्ऋग्भिः । § देव.

**त्रिःश्येतया शलल्या शमीशाखया सपलाशया वा सीमन्तं विचिनोति- 'यास्ते राके' इति ॥**

§ ब्राह्म., आदित्य. देवगतम् ।

(१) काग्. ३१।२-५.

(१) त्रीन् वारान् त्रिः श्येतया शुक्लया शलल्या । शललिः श्वावित् सेधा । तस्याः शलाका शललिः, उपचारात् । तया, शमीशाखया सपलाशया सपत्रया सीमन्तं विचिनोति- 'यास्ते राके' इति त्रिष्टुभा । शलल्या ताम्रशलाकया श्वेतया लोहितयेति यद्याचक्षते तत्र दृष्टानुरूपम् । देव.

(२) 'यास्ते राके' इति शलल्या शमीशाखया सपर्णया वा ललाटमध्यादारभ्य कृकाटिकां यावद्द्विधा केशान् करोति । ब्राह्म.

(३) ततस्त्रिश्येतया त्रिषु स्थानेषु श्येतया शुक्लया शलल्या श्वाविच्छलाकया शमीशाखया सपर्णया तथा पाटितया वा सीमन्तं विचिनोति केशान् विशुध्यति- 'यास्ते' इत्यनया जगत्या । आदित्य.

**अथास्याः पृथक्केशपक्षौ संनह्यति नीललोहितेन सूत्रेण- 'नीललोहितं भवति §कृत्याऽऽसक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् ॥' इति ॥**

(१) अनन्तरमस्या गर्भिण्याः कङ्कतसमीकृतानां शलल्या विभज्यमानाभिः रेखाभिः परिच्छेदेन कृतसीमन्तभागानां केशानां कृतौ पृथक् द्वौ पक्षौ पार्श्वद्वयगतौ संनह्यति बध्नाति नीललोहितेन सूत्रेण 'नीललोहितम्' इत्यादिकयाऽनुष्टुभा । नीललोहितमिदं सूत्रं भवति । कृतिः क्रिया, तया शक्तिर्व्यज्यते(?) । गर्भस्य पुंस्त्वं व्यज्यत इत्यर्थः । अस्या गर्भिण्या ज्ञातय एधन्ते वर्धन्ते । लोडर्थे लट् । व्यज्यतां शक्तिर्वर्धन्तां ज्ञातय इत्यर्थः । पतिश्च स्नेहादिबन्धेषु सत्सु बध्यताम् । देव.

(२) 'नीललोहितं भवति' इति नीलरक्तसूत्रेण मन्त्रावृत्त्या पृथक् पृथक् केशार्धौ संनह्यति । प्रथमं दक्षिणम् । ब्राह्म.

§ ऋसं. १०।८५।२८, असं. १४।१।२६, आपस्तम्बमन्त्रब्राह्मणे १।६।८, एकस्मिन् काठकगृह्यपुस्तके चेत्यमेवपाठः, काठकगृह्यपुस्तकान्तरे तु 'कृत्या शक्तिः' इति देवपालाभिमतः पाठो मुद्रितः ।

( ३ ) पृथक्केशपक्षौ संनह्यति । आ अवटदेशं कृकाटिकां वा द्विभक्ताः केशाः । तेषां द्वौ पक्षौ विभक्तौ पृथक् पृथक् संनह्यति नीललोहितेन प्रतिसरेण ।

आदित्य.

**यो गुरुस्तमर्हयेत् ॥**

( १ ) यो गुरुः सीमन्तोन्नयनस्य कर्ता ब्राह्मणस्तमर्हयेत् यथाशक्ति मधुपर्कदानादिना पूजयेत् । ... अत्राऽऽग्नेय्या 'ये के च ज्मा ' इत्यादिकया (वा) चतुर्गृहीतेन प्रधानयागः । देव.

( २ ) तत आज्येनाऽऽग्नेय्या वैश्वदेव्या वा प्रधानम्। ऋतुतिथ्यादियागादितन्त्रं समाप्य यथाश्रद्धं गुरुमर्हयेत् । ब्राह्म.

(३) ततः 'देवताऽप्रज्ञायमाना' इति हुत्वा आग्नेय्या यजेद्वैश्वदेव्या वा इति चतुर्गृहीतेन प्रधानम् । एवंविधोऽस्य विषयो यतः तत्र तन्त्रं कृप्यते । आवापस्थाने न किंचित् प्रधानं द्रव्यं देवता वा तत्राप्रज्ञायमाना देवता। योऽत्र कर्मणि गुरुः होमकर्ता मातुलादिस्तमर्हयेत् दक्षिणादानेन । योनिसंबद्धं कंचिदेतत् कर्म कारयेत् न त्वृत्विङ्मात्रम् । आदित्य.

## वाराहगृह्यसूत्रम्

मङ्गलस्नपनम् , होमः , केशप्रसाधनम् , सीमन्तकरणम् , केशानां द्विधाबन्धनम्

**'माङ्गल्यैः स्नापयित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाऽऽज्यस्य पुरस्तात् स्विष्टकृतः पश्चादग्नेर्दर्भेष्वासीनायाः सर्वान् केशान् विमुच्य ' त्वमर्यमा भवसि यः कनीनां देवः स्वधा वो गुह्यं बिभर्षि । अञ्जन्ति विश्वं सुकृतं तपोभिः यद्दम्पती समनसा कृणोमि ॥' इति नवनीतेन पाणी प्रलिप्य सर्वान् केशान् संप्रयौति । 'इन्द्राणी चक्रे कङ्कतं सीमन्तं विसर्पतु ' इति शलल्या शमीशाखया सपलाशया एकीकृत्य कङ्कतेन– 'अन्तर्वत्नी पुमांसं दीर्घं जीवन्तं शतायुषम् । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥' इति त्रिश्वेतया सीमन्तं करोति । अथास्याः पतिर्द्वेधा केशान् बध्नाति नीललोहितेन सूत्रेण जीवोर्णया वा ॥**

## आग्निवेश्यगृह्यसूत्रम्

होमः , ब्राह्मणभोजनम् , पुण्याहवाचनम् , मङ्गलस्नानादि , सीमन्तकरणम् , अभिमन्त्रणम्

**'अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम् ' इति चतस्रो धात्रीर्जुहोति । ' इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम् ' इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति ।**

**यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य ' पुण्याहं स्वस्त्ययनमृद्धिम् ' इति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामपरेणाग्निं मण्डलाकारे प्राङ्मुखमुपवेश्य त्रैण्या शलल्या शलालुद्रप्समुपसंगृह्य पुरस्तात् प्रत्यङ् तिष्ठन् व्याहृतिभिः ' राकामहम् , यास्ते राके ' इति द्वाभ्यामूर्ध्वं सीमन्तमुन्नीयाभिमन्त्रयते– 'सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे ॥ विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥' इति ॥**

## पारस्करगृह्यसूत्रम्

मङ्गलस्नपनादि, होमः , सीमन्तकरणम् , वेण्यामौदुम्बरस्तबकादिबन्धनम् , गाथागानम् , ब्राह्मणभोजनम्

**'अथ सीमन्तोन्नयनम् ॥**

***पुंसवनवत् ॥**

---

* अस्य सूत्रस्य व्याख्यानं मुहूर्तप्रकरणे ( सं. का. पृ. २५८२ ) द्रष्टव्यम् ।

(१) वागृ. १९.

(१) आग्निगृ. २।१।२.

(२) पागृ. १।१५।१–२. शेषः स्थलादिनिर्देशो विधिप्रकरणे ( सं. का. पृ. २५७२ ) द्रष्टव्यः .

**[1]तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टाया युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जूलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति– ' भूर्भुवः स्वः ' इति ॥**

**[2]प्रतिमहाव्याहृतिभिर्वा ॥**

**[3]त्रिवृतमाबध्नाति– ' अयमूर्जावतो वृक्ष *उर्जीव फलिनी भव ' इति ॥**

**[4]अथाऽऽह वीणागाथिनौ– ' राजानं संगायेतां यो वाऽप्यन्यो वीरतरः ' इति ॥**

**[5]नियुक्तामप्येके गाथामुपोदाहरन्ति– ' सोम एव नो राजेमा मानुषीः प्रजाः । अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसौ ॥ ' इति । यां नदीमुपावसिता भवति तस्या नाम गृह्णाति ॥**

**[6]ततो ब्राह्मणभोजनम् ॥**

---

* अत्राऽऽदर्शपुस्तके, मूलमात्रपुस्तकान्तरे, हरिहरभाष्ये, विश्वनाथभाष्ये च ह्रस्वपाठो मुद्रित इति स तथैव रक्षितः । जयरामभाष्ये ब्लूमफील्ड–मन्त्रकोशे विश्वबन्धुपदकोशे च ' ऊर्जी ' इति दीर्घपाठो मुद्रितः । गदाधरभाष्ये मन्त्रव्याख्याने संधिकार्यकरणान्न निर्णयः ।

(१) **पागृ.** १।१५।४ ; **विश्व.** १।११ (=) ( सीमन्तमूर्ध्वं विनयन्ति ) एतावदेव; **जभा.** भंद्र ( मंद्र ) ; **हभा.** पिञ्जू ( पिञ्जु ) ; **गभा.** जभावत् ; **निप.** २३८ (=) पतेर्हुत्वा ( पतये हुत्वा ) भद्र ( मृदु ) ग्रप्सेनौदुम्बरेण ( ग्लप्सेनोदुम्बरेण वा ).

(२) **पागृ.** १।१५।५ ; **निप.** २३८–२३९ (=).

(३) **पागृ.** १।१५।६ ; **विश्व.** १।११ (=) ( आजीवं फलिनी भव ) एतावदेव ; **जभा.** उर्जी ( ऊर्जी ) ; **निप.** २३९ (=).

(४) **पागृ.** १।१५।७ ; **निप.** २३९ (=) ( यो वाऽप्यन्यो वीरतरः० ) इति ( एति ).

(५) **पागृ.** १।१५।८ ; **निप.** २३९ ( = ) मुपोदा ( मुदा ) चक्र ( चक्रा ) पावसिता भवति ( पवसितारो भवन्ति ).

(६) **पागृ.** १।१५।९ ; **निप.** २३९ (=).

( १ ) ' तिलमुद्ग...स्वरिति ' एतदन्तं सूत्रम् । तिलमुद्गानां स्थालीपाके मिश्रणमात्रम् , न तत्प्राधान्यम् , मिश्रणोपदेशात् । तेनैव स्थालीपाकेन प्राजापत्यो होमः । स चाऽऽज्यभागमहाव्याहृत्यन्तराले । तत एव स्विष्टकृत् , 'प्राङ्महाव्याहृतिभ्यः स्विष्टकृत्' इत्युक्तत्वात् । पश्चादग्नेर्भद्रपीठ इति । पश्चादग्नेर्भद्रपीठे इत्येवमादि अन्ते भवति । आगन्तुकत्वादन्ते निवेशः । भद्रपीठं मृदुपीठम् , तत्रोपविष्टायाः स्त्रिया युग्मेन सटालुग्रप्सेनौदुम्बरेण फलस्तबकेन त्रिभिश्च दर्भपिञ्जूलैस्त्र्येण्या शलल्या च वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति 'भूर्भुवः स्वः' इत्यनेन मन्त्रेण । विनयामि इत्यध्याहारः , साकाङ्क्षत्वात् । प्रतिमहाव्याहृतिभिर्वा विनयनम् । वाशब्दो विकल्पार्थः । त्रिवृतदेशं प्रति वेण्याख्यम् , तस्मिन्नेतान्यावध्नाति 'अयमूर्जावतो वृक्षः ' इत्यनेन मन्त्रेण । अथाऽऽह वीणागाथिनौ ... इति । ततश्च तौ राजसंबन्धि सोत्साहौ गायतः , यो वाऽप्यन्यः कश्चिद्वीरतरस्तमिति । विकल्पोऽयम् । नियुक्तामिति । एके आचार्या एनां गाथामुपोदाहरन्ति, एके नेति विकल्पः । असाविति च नामादेशः । यां नदीमुपावसिता भवति तस्या नाम गृह्णाति । ततो ब्राह्मणभोजनम् । **कभा.**

( २ ) मद्रपीठं मृदुपीठम् , तत्रोपविष्टायाः स्त्रियाः । त्र्येण्या त्रिःश्वेता( ? त्रिःश्वेतया ) वीरतरशङ्कुः शरेषी । पूर्णं सूत्रेण चात्रं तर्कुः । युग्मेन द्व्यादियुगलसंख्यान्वितेन सटालुग्रप्सेन आमफलैकस्तबकनिबद्धसर्वसमुदायेन । विनयनम् ' भूर्भुवः स्वः ' इति मन्त्रेण केशविभजनं सकृत् । त्रिवृतमिति । त्रिभिर्वृत्यते ग्रथ्यते इति त्रिवृत् वेणी, तां प्रति तत्रैवेत्यर्थः, औदुम्बरादिपुञ्जमाबध्नाति भर्ता ' अयमूर्जावतः ' इति मन्त्रेण । वेणीबन्धनानन्तरं वीणागाथिनौ वीणां गृहीत्वा गाथागायिनौ प्रति भर्ताऽऽह । किम् ? ' भवन्तौ राजानमन्यो वा यः कश्चिद्वीरतरः अतिशूरः तं संप्रगायेताम् ' इति । आत्मनेपदमार्षम् । एवं च गेये विकल्पः । नियुक्तामिति । एके आचार्या नियुक्तां निगमविहितां

गाथां मन्त्रम् उपोदाहरन्ति समीपे गायन्ति, एके नेति विकल्पः । अपिः समुच्चयार्थः । ततश्च गाथागानपक्षे द्वयम् । असाविति सीमन्तिनी यां नदीमाश्रिता भवति तन्नामादेशः । ‡ जभा.

( ३ ) ततो भर्ता औदुम्बरेण उदुम्बरवृक्षोद्भवेन युग्मेन द्यादियुग्मफलवता सटालुग्रप्सेन अपक्वफलैक-स्तबकनिबद्धेन त्रिभिश्च दर्भपिञ्जुलैः त्रिभिर्दर्भपवित्रैश्च त्र्येण्या त्रिषु स्थानेषु श्वेता त्र्येणी तया त्र्येण्या शलल्या शल्यकाख्यपक्षकण्टकेन वीरतरशङ्कुना शरेषीकया आश्वत्थेन वा शङ्कुना पूर्णचात्रेण च—सूत्रेण पूर्णे चात्रं सूत्रकर्तनसाधनं तर्कुरिति यावत्, तेन लोहकीलकेन च । चकारः सर्वसमुच्चयार्थः । अतश्चौदुम्बरयुग्मादिभिः सर्वैः पुञ्जीकृतैः सीमन्तं स्त्रिया ऊर्ध्वं विनयति पृथक्करोति ललाटान्तरमारभ्य केशान् द्विधा करोति ‘ भूर्भुवः स्वर्वि-नयामि ’ इत्येतावता मन्त्रेण सकृदेव । पक्षान्तरमाह—वेति । प्रतिमहाव्याहृतिभिः त्रिनयति । ततश्च ‘ भूर्विन-यामि भुवर्विनयामि स्वर्विनयामि ’ इत्येवं त्रिर्वि-नयनं भवति । अत्र व्याहृतिमन्त्रपदानामाख्यातपदं विना वाक्यस्यासंपूर्णत्वात् आख्यातपदाध्याहारः कर्तव्यः । तत्र ‘ विधियुक्तस्य मन्त्रभावः स्यात् ’ इति न्यायात् विनयतीति विधिपदं विपरिणम्य विनयामि इत्यध्याह्रियते । राजानं भूपतिं संगायेतां राजवर्णनसंबद्धं ध्रुवादिरूपकं सम्यग्गायेताम् । नियुक्तेति । एके आचार्याः नियुक्तां गाने विहितां गाथां मन्त्रम् उपोदाहरन्ति पठन्ति । अपिः समुच्चयार्थः । तत्पक्षे राजवीरतरयोरन्यतरगानम्, गाथागानं च समुच्चितं भवति । पक्षान्तरे राजवीरतर-योरन्यतरगानं गाथागानं वा । तां गाथामाह— सोम एव ( इत्यादिम् ) तुभ्यमित्यन्ताम् । पद्धतिकारपक्षे राज-वीरतरगाथानामेकतमस्यैव गानम् । तत्पक्षे नियुक्ता-मपीत्यपिशब्दोऽविवक्षितार्थः स्यात् । * हभा.

‡ शेषं कभागतम् ।

* शेषं जभागतम् ।

( ४ ) तिलमुद्गानां स्थालीपाके मिश्रणमात्रम्, न तत्प्राधान्यम्, मिश्रणोपदेशात् । प्रयोजनं चान्तराये उपे-क्षैव । त्यागोऽपि तद्व्यतिरिक्तस्यैव । युग्मेनौदुम्बरवृक्षोद्भवेन द्यादियुग्मफलवता सटालुग्रप्सेन अपक्वफलस्तबकनिबद्धेन । सटालुमिति अपक्वफलानामाख्या । ग्रप्सः स्तबकसंघातः । युग्मानि एकस्तबकबद्धानि औदुम्बरफलानि । ... भद्र-पीठशब्दो गोमयपीठे चतुरस्रे प्रसिद्ध इति भर्तृयज्ञः । वीरतरशङ्कुः शरः( ? शरेषी ) इति जयरामः । अश्वत्थशङ्कुः शरेषीका वेति हरिहरकारिकाकारौ । अश्वत्थशङ्कुरिति कर्कः, खादिरः शङ्कुरित्यपरे इति गर्गपद्धतौ ।

मन्त्रार्थः— हे सीमन्तिनि, यतोऽयम् ऊर्जावान् वृक्ष इति शेषः¶, अस्य चोर्जावतो वृक्षस्योर्जीव सफलशाखेव फलिनी भव । ‡ गभा.

( ५ ) वैश्वदेवपूर्वं मातृश्राद्धं कृत्वा भार्यायाः स्नानं वस्त्रयोः परिधानं च । ततो भर्ता उपलिप्त उद्धतावोक्षिते लौकिकाग्निं स्थापयेद्बहिःशालायाम् । ततो दक्षिणतो ब्रह्मा-सनमिति । अन्वारभ्य तिलैर्मुद्गैर्मिश्रं स्थालीपाकम् ओदनं चरुमाज्यभागान्तं परिभाषाशास्त्रविधिना संपाद्य स्थाली-पाकेन प्रजापतेर्हुत्वेत्यर्थः । तत्र विशेषः— पात्रासादने तण्डुलानन्तरं तिलमुद्गासादनम्, युग्मफलसंबद्धमौदुम्बरं काष्ठम्, गोमयनिर्मितं भद्रपीठं चतुरस्रं मृदुवस्त्रार्घान्वितं पीठं वा, दर्भपिञ्जूलत्रयम्, त्र्येणी शलली, वीरतरः शङ्कुः आयसः खादिरो वा, पूर्णचात्रम्, वीणाद्वयं गाथिनश्च । तिलमुद्गमिश्रिततण्डुलग्रहणम्— ‘ प्रजापतये जुष्टं गृह्णामि ’ । प्रोक्षणे त्वाशब्दोऽधिकः । आज्यभागान्तं प्रकृतिवत् । ततः स्थालीपाकेन प्रजापतेर्हुत्वा ‘ इदं प्रजा-पतये ’ इति त्यागं विदध्यात् ।

¶ ‘यतः, ऊर्जावान्’ इति पदे शेष इत्यर्थः । यदि तु मन्त्रगतवृक्षःपदे छान्दसः षष्ठ्याः सुरादेशस्तदा वृक्षःपदमपि शेषः ।

‡ शेषं हभागतम् ।

त्रिवृतमाबध्नाति– 'अयमूर्जावतो वृक्ष उर्जीव फलिनी भव' इति । पादाङ्गुष्ठमारभ्य ललाटान्तमितं सूत्रं त्रिवृतं 'नव वै त्रिवृत्' इति श्रुतत्वान्नववृतं गुम्फिताऽनेकोदुम्बरफलं हाराकृतिना बध्नाति । यथा नाभिमतिक्रामति तथा कण्ठे क्षिपतीत्यर्थः । $ विभा.

## गोभिलगृह्यसूत्रम्

मङ्गलस्नानम्, होमः, कण्ठे औदुम्बरफलस्तबकबन्धनम्, सीमन्तकरणम्, कृसरेक्षणं प्रश्नप्रतिवचने च, गर्भिण्या कृसरभक्षणम्, जीवपत्नीभिर्मङ्गलवाग्भिर्वधूपासनम्

**[1]प्रातः सशिरस्काप्लुतोदगग्रेषु दर्भेषु पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति ॥**

**[2]पश्चात् पतिरवस्थाय युग्मन्तमौदुम्बरशलाटुग्रप्नमाबध्नाति– 'अयमूर्जावतो वृक्षः' इति ॥**

(१) अग्नेः पश्चात् पतिः स्थित्वा युगानि फलानि यस्मिन् शलाटुग्रप्ने नीलस्तबके स युगमान् । मतुबन्तम् । तथा च भट्टनारायणधृतं छन्दोगपरिशिष्टम्– 'शलाटु नीलमित्युक्तं ग्रप्नः स्तबक उच्यते । कपुष्णिकामितः केशा मूर्ध्नि पश्चात् कपुष्णिकः ॥' इति । एतद्वचनं नारायणोपाध्यायेन धृतम् । उडुम्बरभवमौडुम्बरम् 'अयमूर्जावतो वृक्षः' इति मन्त्रेण भार्यायाः कण्ठे बध्नाति । संत. ९१३

(२) युङ्मन्तमिति । युङ्क्षि युग्मानि फलानि यस्मिन् सोऽयं युङ्मान्, तमिति मतुबन्तमिति भट्टनारायणोपाध्यायादयः । एवं शलाटुग्रप्नं नीलस्तबकम्, 'शलाटु नीलमित्याहुर्ग्रप्नः स्तबक उच्यते ।' इति कर्मप्रदीपात् । वस्तुतस्तु 'युग्मम्' 'ग्रप्सम्' इत्युभयत्र पाठः । तमिति प्रसिद्धार्थम् । 'युग्मं तु युगलं युगम्' इत्याग्नेयाभिधानात् युग्मं युग्मफलोपेतम् । शलाटुग्रप्सम् अपक्वफलस्तबकम्, 'आमे फले शलाटुः स्यात्' इत्याग्नेयाभिधानात्, 'ग्रप्सः स्तबक उच्यते' इति कर्मप्रदीपपाठाच्च । नीलाभिधानं फलस्य तद्रूपत्वात् । हरितमिति तदर्थः । औदुम्बरम् उदुम्बरवृक्षोद्भवम् । 'तस्येदम्' (पा. सू. ४।३।१२०) इत्यण्प्रत्यये आदिवृद्धिः । यथोक्तं स्तबकम् 'अयमूर्जावतः' इति मन्त्रेण बध्वाः कण्ठे सुडोलकेनाऽऽमुच्य बध्नाति बध्नीयात् । मन्त्रो यथा– 'अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव । पर्णं वनस्पते नुत्वा नुत्वाऽस्यां सूयतां रयिः ॥' इति । अस्यार्थः– अयम् उदुम्बरो यशाङ्गो(?ङ्गं) वृक्षः । ऊर्जावान् इति शेषः । अस्य ऊर्जावतः वृक्षस्य ऊर्जीव फलशाखेव हे वधु, त्वं फलिनी बहुफलवती प्रशस्तफलवती वा भव । किंच, हे वनस्पते उदुम्बर, त्वयाऽस्यां रयिः पुत्ररूपं धनं सूयतां प्रसूयताम् । त्वयाऽनुगृहीतेयं भाग्यवतः पुत्राँल्लभतामित्यर्थः । किमिव ? नुत्वा नुत्वा प्रेर्य प्रेर्य पर्णं पत्राणीव । जातावेकवचनम् । यथा त्वया पत्राणि प्रेर्य प्रेर्य प्रसूयन्ते तथेयं बहुपुत्रा त्वया क्रियतामित्यर्थः । मृदुला.

**[1]अथ सीमन्तमूर्ध्वं नयति– 'भूः' इति दर्भपिञ्जलीभिरेव प्रथमम् 'भुवः' इति द्वितीयम् 'स्वः' इति तृतीयम् ॥**

(१) अथ अनन्तरं यत्र सिन्दूरं स्त्री ददाति तं सीमन्तं ललाटोर्ध्वं नयति 'भूः' इति मन्त्रेण दर्भपिञ्जलीभिस्तिसृभिः । एवकारकरणात् यावन्त्युन्नयनानि तावतीभिरेव । तिसृभिरित्यर्थः । प्रथमादिपदानि तु व्याहृतीनां पिञ्जलीनां च पृथग्विनियोगार्थम् । पिञ्जली पवित्रम् । तथा च छन्दोगपरिशिष्टम्– 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् । एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम् ॥' । संत. ९१३–९१४

---

$ शेषं हभागतं गमागतं च ।

(१) गोगृ. २।७।३ ; संत. ९१३ (पश्चादग्नेरुदगग्रेषु दर्भेषु॰).

(२) गोगृ. २।७।४ ; संत. ९१३ युग्मन्तमौदु (युगमन्तमौदु).

(१) गोगृ. २।७।५ ; संत. ९१३.

(२) अथेति स्थाननियमार्थम्। तत्रस्थ एव पतिः सीमन्तम् उक्तरूपम् ऊर्ध्वम् उपरि नयति नयेत् इत्यर्थः। तत्र मन्त्रमाह– भूरितीति। अनेन मन्त्रेण प्रथमम्। केनोन्नयति ? दर्भपिञ्जलीभिरेव 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥ एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्। आज्यस्योत्पवनार्थे यत्तदप्येतावदेव तु॥ एतत्प्रमाणमेवैके कौशीमेवाऽऽर्द्रमञ्जरीम्। शुष्कां वा शीर्णकुसुमां पिञ्जलीं परिचक्षते॥' इति कर्मप्रदीपोक्तलक्षणाभिः। कतमाभिरिति चेत्तिसृभिरित्यवधेहि, कपिञ्जलाधिकरणन्यायात्। तदिदं प्रथममुन्नयनम्। 'भुवः' इति द्वितीयं दर्भपिञ्जलीभिरेव। 'स्वः' इति तृतीयं दर्भपिञ्जलीभिरेव। तदेवं तिसृभिस्तिसृभिरेकैकमुन्नयनमिति उन्नयनत्रित्वाद्दर्भपिञ्जल्योऽपि नवैव संपद्यन्ते। तासां च तिसृभिरेकमुन्नयनम्, तावतीभिरपरम्, तावतीभिरेवापरमिति व्याख्येयम्। अत एव 'भूरिति दर्भपिञ्जलीभिः' इति सूत्रयित्वा 'प्रथमम्' इति सूत्रितम्। यदि पुनस्तिस्र एव दर्भपिञ्जल्यः स्युस्तर्ह्यादित एव 'दर्भपिञ्जलीभिः' इति सूत्रयित्वा 'भूरिति प्रथमं भुवरिति द्वितीयम्' इत्येवं विनियोगममूषामसूत्रयिष्यत्। न चैवम्। तस्मादनुमिमीमहे– भूरिति प्रथम एवोन्नयने तिस्रो दर्भपिञ्जल्यो व्याप्रियन्ते, एवमुत्तरयोः। एवकारोऽत्र पक्षे करणान्तरव्यावृत्त्यर्थं इति चन्द्रकान्तभाष्यम्। मुरारिमिश्रास्तु– दर्भपिञ्जलीभिरेवेत्येवकारकरणाद्यावन्त्युन्नयनानि तावतीभिरेव तिसृभिरित्यर्थः। प्रथमं द्वितीयं तृतीयमिति वचनं व्याहृतिपिञ्जल्योः पृथग्विनियोगप्रदर्शनार्थम्। अन्यथा मिलिताभिराहृत्योन्नयनं प्रसज्येत, तथा चैकैकयाऽपि पिञ्जल्या एकैकमुन्नयनमिति।

मृदुला.

'अथ वीरतरेण 'येनादितेः' इत्येतयर्चा॥

(१) वीरास्तरन्त्यनेन युद्धमिति वीरतरः शरः। तथा च छन्दोगपरिशिष्टम्– 'श्वाविच्छलाका शलली तथा वीरतरः शरः। तिलतण्डुलसंपाकः कृशरः सोऽभिधीयते॥'। ततः शरेण 'येनादितेः' इति मन्त्रेण। 'सीमन्तमूर्ध्वं नयति' इति पूर्वसूत्रादनुवर्तते।

संत. ९१४

(२) मन्त्रो यथा– 'येनादितेः सीमानं नयति प्रजापतिर्महते सौभाग्याय। तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि॥' इति। अस्यार्थः– प्रजापतिः कश्यपः येन वीरतरेण शरेण अदितेः देवमातुः सीमानं सीमन्तं नयति विनीतवान् विवृतं कृतवान्। किमर्थम् ? महते बृहते सौभाग्याय सुभगात्वाय। तेन शरेण अहम् अस्यै अस्याः स्त्रियाः सीमन्तं नयामि विनयामि विवृतं करोमि, तेन च अस्यै अस्याः प्रजां पुत्रपौत्रादिकां जरदष्टिं दीर्घकालजीविनीम् कृणोमि करोमि। † मृदुला.

'अथ पूर्णचात्रेण 'राकामहम्' इत्येतयर्चा॥

(१) चात्रं तर्कुः। तेन सूत्रपूर्णेन 'राकामहम्' इति मन्त्रेण। सीमन्तमूर्ध्वं नयतीति शेषः। संत. ९१४

(२) अथ अनन्तरं पूर्णचात्रेण सूत्रपूर्णेन तर्कुणा, 'चात्रं तर्कु प्रकीर्तितम्' इति मुरारिधृतवचनात्। सीमन्तमूर्ध्वं नयतीति पूर्ववत्। मन्त्रो यथा– 'राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना। सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम्॥' इति। अस्यार्थः– अहं भर्ताऽस्याः सुहवां स्वाह्वानाम् आह्वानप्रयोजनकारिणीं राकां पूर्णचन्द्रां पौर्णमासीं तदधिष्ठातृदेवतां सुष्टुती शोभनया स्तुत्या हुवे आह्वयामि। सा च सुभगा शोभनधना सुपुण्या वा नः अस्माकम्, आह्वानमिति शेषः, शृणोतु। श्रुत्वा च त्मना आत्मना स्वयमेव बोधतु अस्मदभिप्रायमवधारयतु। 'बुधिर् बोधने'। लोट् प्रार्थनायाम्। बुद्ध्वा च अपः कर्म पुत्रोत्पादनलक्षणं सूच्या सूचीस्थानया

---

(१) गोगृ. २।७।६ ; संत. ९१४.

† शेषं संतवत्।

(१) गोगृ. २।७।७ ; संत. ९१४ पूर्णचा (पूर्णेन चा).

अच्छिद्यमानया अनवच्छिन्नया निरवच्छिन्नया । अभज्यमानयेति गुणविष्णुः । अनुग्रहबुद्ध्या सीव्यतु संतनोतु । यथा वस्त्रादिकं छिन्नमपि सूच्या स्यूतं चिरं तिष्ठति एवमिदं कर्म करोतु । कृत्वा च वीरं विक्रान्तं शतदायं बहुधनं बहुप्रदं वा उक्थ्यं प्रशस्यं पुत्रं ददातु इत्याशास्यते । आशंसायां लोट् । मृदुला.

**[1]त्रिश्वेतया शलल्या 'यास्ते राके सुमतयः' इति ॥**

( १ ) स्थानत्रितये शुक्लेन ( शे जाजन्तु ? ) कण्टकेन 'यास्ते' इति मन्त्रेण । सीमन्तमूर्ध्वं नयतीति शेषः । संत. ९१४

( २ ) त्रिश्वेतयेति । त्रिषु स्थानेषु श्वेतया । अवच्छेदकत्वलक्षणविषयता सप्तम्यर्थः । शलल्या शल्लकीकण्टकेन । 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।' इत्यमरः । सीमन्तमूर्ध्वं नयतीति पूर्वेण संबन्धः पूर्ववत् । अत्र 'श्येण्या शलल्या ' इति गृह्यान्तरे पाठः । तत्रैतशब्द एव श्वेतवाचकः 'वर्णादनुदात्तात्तोपधात्तो नः' (पा. सू. ४।१।३९) इति तस्य नः । मन्त्रो यथा– 'यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥' इति । अस्यार्थः– हे राके देवि पौर्णमासाधिदेवते, सुपेशसः शोभनरूपाः । पेश इति रूपनामसु पठ्यते ( निघण्टुः ३।७।१९ ) । ते तव याः सुमतयः शोभनबुद्धयः । प्रतिविशिष्टाः सर्वबुद्धिभ्य इति यावत् । याभिः सुमतिभिस्त्वं दाशुषे हविर्दत्तवते यजमानाय वसूनि धनानि ददासि । हे सुभगे शोभनधने, अद्य इदानीं ताभिः सुमतिभिरुपलक्षिता त्वं सुमनाः उदारचेताः भूत्वा नः अस्मान् उपागहि उपागच्छ । किं कुर्वती ? सहस्रपोषं बहुजनपोषकं सुतं रराणा ददतीति । मृदुला.

**[2]कृसरः स्थालीपाक उत्तरघृतस्तमवेक्षयेत् ॥**

(१) गोगृ. २।७।८ ; संत. ९१४.

(२) गोगृ. २।७।९ ; संत. ९१४ कृसरः स्था ( कृषरस्था ).



( १ ) कृषर उक्तः । स्थालीपाकश्चरुः । स उपरिदत्तघृतः, तं वध्वाः प्रदर्शयेत् । स्थालीपाकपदं चरुस्थाल्यां कृषरस्य श्रपणार्थम् । मनुष्यार्थत्वात् द्विः प्रक्षालनम् । ततश्च यः कश्चिन्महानसे श्रपयित्वा स्थापयेत् ।

संत. ९१४

( २ ) कृसरः 'तिलतण्डुलसंपक्वः कृसरः सोऽभिधीयते ।' इति कर्मप्रदीपोक्तलक्षणः । स्थाल्यां यः पच्यते सोऽयं स्थालीपाकः । तदनेन स्थालीपाकावृता कृसरस्य पाकोऽवगम्यते । मनुष्यार्थत्वाच्च द्विस्तण्डुलानां प्रक्षालनम् । तथा च गृह्यासंग्रहे– 'कृत्वा ब्रह्मासनान्तं द्विः प्रक्षाल्य कृसरं पचेत् । भक्ष्यार्थत्वान्न निर्वाप उदगुद्वासनं तथा ॥ चूडाकर्मणि सीमन्ते यश्च पाकः सदा गृहे । विवाहे चैव लाजानां नोक्तो निर्वापणो विधिः ॥' इति । उत्तरघृतः उत्तरे उपरि घृतं यस्य सोऽयम् । उत्तरधृतघृत इत्यर्थः । तमिमं स्थालीपाकमवेक्षयेत् पत्नीं दर्शयेत पतिः । स खल्वयं कृसरः स्थालीपाकावृता यत्र कुत्रचिद्येन केनापि पक्तव्यः, सिद्धस्य तस्यावेक्षणमात्रस्यैव सूत्रणात् । तस्मादवेक्षणार्थमेवास्याऽऽसादनमिति सिद्धम् । अत्र होमानादेशान्न 'मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ।' इति वचनात् प्रजापतिदेवताकत्वं चरोः, होमादेशे सत्येवास्य प्रवृत्तेः, इत्यवेक्षणलक्षणे एव प्रयोजने इति द्रष्टव्यम् । अत एव चूडाकरणेऽन्नं( ? इमं ) 'वृथापक्वः' इति वक्ष्यति ( गोगृ. २।९।५ ) । मृदुला.

**[1]'किं पश्यसि' इत्युक्त्वा 'प्रजाम्' इति वाचयेत् ॥**

( १ ) किं पश्यसीति पतिरुक्त्वा 'प्रजाम्' इत्यादिमन्त्रं गर्भिणीं वाचयेत् । संत. ९१४

( २ ) एवं स्थालीपाकं पश्यन्तीं वधूं 'किं पश्यसि' इति मन्त्रभागं पतिरुक्त्वा 'प्रजां पशून् सौभाग्यं मह्यं दीर्घायुष्ट्वं पत्युः' इति वधूं वाचयेत् भाषयेत् । अत्र मह्यमिति षष्ठ्यर्थे चतुर्थी । दीर्घायुष्ट्वं बहुकालसुखजीवित्वम् । मृदुला.

(१) गोगृ. २।७।१० ; संत. ९१४.

[१]'तं सा स्वयं भुञ्जीत ॥

(१) तम् अवेक्षितकृसरम्। संत. ९१४

(२) सा वधूः। तम् अवेक्षितं सिद्धं कृसरम्।

मृदुला.

[२]'वीरसूर्जीवसूर्जीवपत्नी' इति ब्राह्मण्यो मङ्गल्याभिर्वाग्भिरुपासीरन् ॥

(१) वीरान् विक्रान्तान् पुत्रान् सूते इति वीरसूः। त्वं भवेति वाक्यशेषः प्रतिपदं स्यात्। जीवतः दीर्घायुषः पुत्रान् सूते इति जीवसूः। जीवतः पत्नी जीवपत्नी अविधवेत्यर्थः। एवं प्रकाराभिर्वाग्भिरनुनयेयुः। ततश्च महाव्याहृतिभिर्हुत्वा औदुम्बरफलस्तबकं कण्ठे बद्ध्वा प्रजामिति वाचयेदित्यन्तं तन्त्रं कृत्वा व्याहृतिभिर्होमादि-तन्त्रं समापयेत्। ततो ब्राह्मण्य उपासीरन्।

संत. ९१४

(२) वीरान् विक्रान्तान् सूते इति वीरसूः। 'वीर विक्रान्तौ'। वीरयतेऽमित्रानिति वीरः, तं सूते इति वीरसूः। 'षूङ् प्राणिगर्भविमोचने'। ततः क्विप्। एवमग्रेऽपि। त्वं भवेति वाक्यशेषः। इति एवंप्रकाराभिर्मङ्गल्याभिः मङ्गले साध्वीभिः। 'तत्र साधुः' (पा. सू. ४।४।९८) इति यत्। वाग्भिर्ब्राह्मण्यो वधूमुपासीरन् गायेरन्। अनुनयेयुरित्यर्थः। यत्तु सांख्यायनपरिशिष्ट-भाष्ये तत्तत्कालेऽकृतान्यपि क्षेत्रसंस्कारकर्माणि का-(१ बा)ले जाते सूतके अपगते मातुरङ्के तं निधाय व्याहृतिभिर्हुत्वा क्रमेण कर्तव्यानीत्युक्तम्, तत्तु प्रमाणा-भावादुपेक्ष्यमिति मुरारिमिश्राः। मृदुला.

## खादिरगृह्यसूत्रम्

मङ्गलस्नानादि, होमः, सीमन्तकरणम्, कृसरेक्षणं प्रश्नप्रतिवचने च

[३]'स्नातामहतेनाऽऽच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठन्ननुपूर्वया फलवृक्षशाखया सकृत्सीमन्तमुन्नयेत् त्रिःश्वेतया च शलल्या 'अयमूर्जावतो वृक्षः' इति ॥

अनुपूर्वयेति। न्यग्रोधशुङ्गाधर्मयुक्तयेत्यर्थः। फलवृक्ष उदुम्बरः, 'ऊर्ग्वा उदुम्बरः' इति श्रुतेः, 'अयमूर्जावतो वृक्षः' इति च मन्त्रवर्णात्। तद्वदेव शाखामाहृत्य वैहायसीं कृत्वा पुंसवनवत् पृष्ठतःस्थानान्तं कृत्वा तया शाखया मूर्ध्नि गतान् बध्वाः केशान् प्रत्यञ्चमुन्नयेत्। 'कृणोमि' इति मन्त्रान्तः। ततस्त्रिषु देशेषु श्वेतया वराहसूच्या तद्वदेव 'राकामहम्' इत्युन्नयेत्। 'रराणा' इति मन्त्रान्तः। रुद्रभा.

कृसरः स्थालीपाकः ॥

कृसरः तिलमिश्रः पाकधर्मयुक्तो भवेत्, चौले 'वृथापक्वः' इति विशेषणात्। निर्वापमन्त्रस्तु नास्ति, देवताभावात्। रुद्रभा.

उत्तरघृतमवेक्षतीं पृच्छेत्– 'किं पश्यसि' इति ॥

स्पष्टम्। उत्तरे घृते यथा छाया दृश्यते तथा घृतसेकः। रुद्रभा.

'प्रजाम्' इति वाचयेत् ॥

पतिः। अथोपरिष्टाद्धोमादि ब्राह्मणभोजनान्तम्। वधूः स्थालीपाकमश्नीयादिति गृह्यान्तरोक्तम्। रुद्रभा.

## जैमिनिगृह्यसूत्रम्

होमः, सीमन्तकरणम्, स्रग्भिः केशान्तालंकरणम्, हिरण्यवज्जलावेक्षणं प्रश्नप्रतिवचने च, दक्षिणादानम्

[१]'तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वाऽन्वारब्धायां जुहुयात्। महाव्याहृतिभिर्हुत्वा प्राजापत्यया च। अथैनां पश्चादग्नेर्भद्रपीठ उपवेश्यैरकायां वाऽहतोत्तरायां तस्यै त्रिःशुक्लया शलल्या प्राणसंमितं सीमन्तं कुर्याच्छुक्लेनाऽऽ मूर्ध्नः– 'प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा' इति। अथास्या दक्षिणं केशान्तं स्रग्भिरलंकृत्य तथोत्तरं हिरण्य-

---

(१) गोगृ. २।७।११; संत. ९१४ सूत्रमुच्छिन्नं व्याख्यानादनुमीयते.

(२) गोगृ. २।७।१२; संत. ९१४ मङ्गल्याभि (मङ्गल्यादिभि).

(३) खागृ. २।२।२५–२८.

(१) जैगृ. १।७.

वतीनामपां कांस्यं पूरयित्वा तत्रैनामवेक्षयन् पृच्छेत्– 'हिं भूर्भुवः स्वः किं पश्यसि' इति। परा प्रत्याह– 'प्रजां पशून् सौभाग्यं मह्यं दीर्घमायुः पत्युः' इति। वासो दक्षिणा हिरण्यं वा॥

आ मूर्ध्नः मूर्धपर्यन्तम्। प्राणसंमितं नासममिकृत्य। सीमन्तं केशविभागं प्रत्यङ्मुखस्तिष्ठन् कुर्यात्। मन्त्रे विभजामि इति शेषः। प्रतिमन्त्रं सकृत्सकृदिति ग्राह्यः। परा अन्या भार्येत्यर्थः। श्रीव्या.

## कौशिकगृह्यसूत्रम्

श्वेतसर्षपबन्धनम्

[1]'यौ ते माता' इति मन्त्रोक्तौ बध्नाति॥

अथ सीमन्तकर्म उच्यते। श्वेतपीतसर्षपान् संपात्याभिमन्त्र्य पुण्याहान्ते बध्नाति। दाकेटी.

## वैखानसगृह्यसूत्रम्

होमः, सीमन्तकरणम्, उदराभिमर्शनम्, पयोदधिघृतप्राशनं पुण्याहवाचनं च मतान्तरेण

[2]पूर्ववद्धातादि हुत्वा त्रेण्या शलल्या सह शलाटुग्लप्सं साग्रपत्रं कुशाङ्कुरं च दर्भेण त्रिराबध्य 'ओं भूर्भुवः सुवः' इति गृहीत्वा तस्यास्तथाऽऽसीनायाः स्रग्गन्धवत्याः सीमन्ते 'राकामहम्, यास्ते राके' इति स्थापयित्वोन्नयनं कुर्यात्। 'सोम एव' इति पुरस्तादिव कुर्यात्। पूर्ववत् त्रिवृत्प्राशनं पुण्याहान्तमित्येके॥

## कात्यायनः

गोभिलगृह्यसूत्रपठितानां शलाटु–ग्रप्सन–शलली–वीरतर–कृसरशब्दानामर्थाः

[3]शलाटु नीलमित्युक्तं ग्रप्सनः स्तबक उच्यते॥
[4]श्वाविच्छलाका शलली तथा वीरतरः शरः।
तिलतण्डुलसंपक्कः कृसरः सोऽभिधीयते॥

(१) कौसू. ३५।२०. (२) वैगृ. ३।१२.
(३) कास्मृ. ३।८२; संत. ९१३.
(४) कास्मृ. ३।८३; संत. ९१४ पक्वः (पाकः).

## आश्वलायनः

सीमन्तहोमः स्मार्ताग्नौ

[1]गर्भपुंसवसीमन्तबलिचौलानि निष्कृतीः।
काम्यांश्च कुर्यात् स्मार्ताग्नावुत्सर्गोपाकृती च वा॥

## लघ्वाश्वलायनः

होमः, सीमन्तकरणम्, गाथागानम्, गर्भिणीं प्रत्युपदेशः, फलदानम्, आचार्यदक्षिणा वृषभः

[2]धाता ददातु मन्त्रौ द्वौ तथा राकामहं च तौ।
नेजमेष त्रयो मन्त्रा एको मन्त्रः प्रजापतेः– (? ते)॥

अष्टावाज्याहुतीर्हुत्वा त्रिशुक्लशललीकुशैः।
औदुम्बरेण गुग्मेन ग्लप्सेन सफलेन च॥

पूर्णसूत्रावृतेनेह सहैवैकत्रमेव च।
त्रिरुन्नयति गर्भिण्याः सीमन्तेन स(? मन्तं तेन)मूलतः॥

कृतकेशविभागं स्याद्योषिद्भालाग्रभागतः।
सीमन्तं सधवाचिह्नं सदा सौभाग्यदायकम्॥

तिष्ठन् पश्चात् प्राङ्मुखोऽग्नेरुच्चरन् भूर्भुवः स्वरोम्।
चतुर्थ्योमूढतं कृत्वा विद्वायां तु निरुच्यते(?)॥

सामस्वरेण मन्त्रं च सोमं राजानमुच्चरेत्।
समीपस्थनदीनाम समुच्चार्य नमेदथ॥

पतिपुत्रवती नारी गर्भिण्या(? णी)मुपदेशयेत्।
मा कुरु क्लेशदं कर्म गर्भसंरक्षणं कुरु॥

ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत्।
पूर्ववत्फलदानानि कृत्वाऽऽचार्याय दक्षिणाम्॥

वृषभं धेनुसंयुक्तं दद्याद्विभवसारतः।
भोजयेच्छक्तितो विप्रान् कर्मसाद्गुण्यहेतवे॥

(१) आश्वस्मृ. ५।३६.
(२) लघ्वाश्वस्मृ. ४।८–१६.

## संग्रहे

सीमन्तकरणम्

[1]त्रेण्या शलल्या दर्भेण उदुम्बरयवाङ्कुरैः ।
विभज्य तस्याः केशेषु मध्ये सीमन्तमुन्नयेत् ॥

त्रेण्या त्रिशुक्लया शलल्या शल्लकरोम्णा, 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।' इति त्रिकाण्डी-स्मरणात् । औदुम्बरस्तबकाभावेऽन्यवृक्षस्तबको ग्राह्यः, 'औदुम्बरः स्यात् स्तबकस्तदभावेऽन्यवृक्षजः ।' इति कारिकोक्तेः । संप्र. १७२

## शौनककारिकाः

पूर्वदिने वृद्धिश्राद्धम्, पुण्याहवाचनादि, वृद्धनार्युपदिष्टसमाचारः, औपासनाग्नौ होमः, सीमन्तकरणम्, गाथाया गानं त्रिर्जपो वा, वृद्धजीवपत्न्युपदिष्टसमाचरणम्, दक्षिणा वृषः

[2]पतिः पूर्वदिने वृद्धिश्राद्धं कृत्वा परेऽहनि ॥
वधूमलंकृतां विप्रैः कृतपुण्याहवाचनाम् ।
कृतकौतुकबन्धां च वन्दिताभीष्टदेवताम् ॥
वृद्धनारीसमुद्दिष्टमङ्गलाचारसंयुताम् ।
कारयित्वा स्त्रियं पश्चान्मुहूर्ते शोभनेऽनलम् ॥
औपासनं समिध्याग्निमन्वाधानपुरःसरम् ।
आज्यसंस्कारपर्यन्तं तन्त्रं कृत्वा पुरस्तनम् ॥

अत्रौपासनाग्निं समिध्याऽऽज्यसंस्कारान्तं तन्त्रं कुर्यादिति तात्पर्यम् । प्रपा. १२०

ततोऽग्नेः पश्चिमे देशे स्वस्य दक्षिणपार्श्वतः ।
गृहप्रवेशहोमोक्तमार्गेणाऽऽनडुहाजिनम् ॥
प्राचीगतगलोद्देशमुपरिस्थितलोमकम् ।
आस्तीर्य तस्मिन्नासीनां धौतवासोयुगां तथा ॥
[3]आचान्तसलिलां नारीमुपवेश्य ततस्तया ॥
[1]स्पृष्टः करेण परिधिनिधानान्तं पुरस्तनम् ।
तन्त्रशेषं विधायाऽऽज्यभागहोमावसानकम् ॥
[2]कुर्यादथ स्रुवेणाऽऽज्यहोमानष्टौ क्रमादिमान् ।
धाता ददात्वित्येताभ्यामृग्भ्यां प्रागाहुतिद्वयम् ॥
[3]हुत्वा राकामहमिति द्वाभ्यां च जुहुयात्क्रमात् ।
राका द्व्यृचोऽन्तमुक्त्वाऽथ पदमुक्थ्यमिति स्मृतम् ॥
[4]तदन्तकं च तद्धोमं कुर्याद्वृद्धोपदेशतः ।
नेजमेष परेत्यादिखिलिकेन तृचेन तु ॥

शौनकजयन्तमते राकादेवत्याहुतिद्वयान्ते 'उक्थ्यं स्वाहा' इत्याहुतिरेका तदनुसार्यन्वाधानं च कार्यम् । संको. ५७

[5]तथा प्रजापते न त्वदेतानीत्याद्यया ऋचा ।
हुत्वोत्थाय स्त्रियाः प्रत्यक्प्रदेशे प्राङ्मुखः स्थितः ॥
[6]औदुम्बरं च स्तबकं युग्मापक्वफलान्वितम् ।
मिश्रैः शुक्लैस्त्रिभिर्युक्तां शलल्रीं त्रिकुशाङ्कुरान् ॥
[7]एकीकृत्य गृहीत्वा तान् समस्तानेव पाणिना ।
तस्य पुञ्जस्य मूलेन नार्याः केशललाटयोः ॥

---

(१) प्रपा. १२१ दर्भे ( गर्भे ) ; संप्र. १७२ ; संग. ४१८.

(२) शौका. ४–९ पृ. ३६ ; प्रपा. १२०–१२१.

(३) प्रपा. १२१.

(१) शौका. १० पृ. ३६ तन्त्रशेषं वि ( तन्त्रं शेषं नि ) ; प्रपा. १२१.

(२) शौका. ११ पृ. ३६ ; प्रपा. १२१.

(३) शौका. १२ पृ. ३६ द्व्यृचो ( ध्वृचा ) क्थ्यमिति स्मृ ( त्यमविस्मृ ) ; प्रपा. १२१.

(४) शौका. १३ पृ. ३६ तद्धो ( पद्धो ) खिलिकेन ( खैलेन तु ) ; प्रपा. १२१.

(५) शौका. १४ पृ. ३६ द्यया ऋचा ( गृचाऽनया ) ; प्रपा. १२१.

(६) शौका. १५ पृ. ३७ औदु ( उदु ) युग्मापक्व ( युग्मफल ) शुक्लै ( शुक्लै ) ; प्रपा. १२१.

(७) शौका. १६ पृ. ३७ ; प्रपा. १२१ गृहीत्वा तान् ( गृहीत्वाऽथ ).

[1]संधिप्रदेशमारभ्य भ्रूमध्योर्ध्वप्रदेशकम् ।
केशानूर्ध्वं पृथक्कुर्यादामूलं परभागतः ॥
[2]त्रिश्चतुर्वा भूर्भुवः स्वरोमित्येतमुदीरयेत् ।
प्रतिप्रयोगं मन्त्रं च सावधानमुदीरयेत् ॥
[3]सोमं राजानमित्यादिप्रैषेण प्रेषितौ द्विजौ ।
ऋचं सोमो न इत्याद्यां गायेतां सह वीणया ॥
[4]ततः सोमो न इत्यादिऋचोऽन्ते नित्यसंयुतात् ।
निविष्टचक्रा इत्यस्मात् पदात्तु समनन्तरम् ॥
[5]तौ दम्पती महानद्या यस्या विषयवासिनौ ।
तन्नाम संबुद्ध्यन्तं तौ वदेतां गायकौ द्विजौ ॥
[6]निविष्टचक्रा कावेरीत्येवमादि निदर्शनम् ।
यदि तत् साम नाधीतं त्रिर्जपेत्तामृचं तदा ॥
[7]प्रैषस्यानन्तरं कुर्यादुपरिष्टात्तनं विधिम् ।
ब्राह्मण्यो जीवपत्न्यश्च जीवपुत्रा वयोधिकाः ॥
[8]यद्यद्वदेयुस्तत्तच्च कुर्याद्दद्यात्तथा वृषम् ।
विदुषे द्विजमुख्याय ब्राह्मणान् भोजयेत्ततः ॥

'ब्राह्मणे ऋषभं दद्यात् तदभावे संनिहितेभ्यो ब्राह्मणेभ्यो दद्यात्' इति यद्यपि वृत्तिकारादिभिरुक्तम्, तथाऽपि 'दद्यात्तथा वृषं विदुषे ब्राह्मणाय' इति शौनकोक्तेः अनियमाभिप्रायं बहुवचनम् । अतः संनिहितानां मध्ये विदुषे ब्राह्मणाय दद्यात् । ऋषभासंभवे तन्मूल्यं 'वृषे षट् कार्षापणकाः' इति प्रसिद्धं दद्यात्, शौनकप्रयोगात्, 'ऋषभो वृषभो वृषः' इति कोशाच्च वृषर्षभयोरभेदात् ।
संको. ५८

## कुमारिलकारिकाः

नान्दीश्राद्धम्, होमः, सीमन्तकरणम्, दक्षिणा वृषभः, वृद्धसधवोपदिष्टाचरणम्

... [1]अन्वाधानादि पूर्ववत् ॥
[2]प्राग्ग्रीवमूर्ध्वलोम स्यात् प्रत्यगानडुहाजिनम् ।
प्रोक्षणीं स्रुवमासाद्य चमसं चाऽऽज्यभाजनम् ॥
[3]इध्मा बर्हिरयं प्रोक्त आज्यहोमेष्वनुक्रमः ।
आज्यासादनपर्यन्तं पवित्रकरणादथ ॥
[4]चर्मण्यथोपविष्टा या समन्वारभते पतिम् ।
स्यादाज्यभागपर्यन्तमिध्माधानादि पूर्ववत् ॥
[5]अष्टावाज्याहुतीर्हुत्वा मन्त्रैर्धाता ददात्विति ।
औदुम्बरः स्यात् स्तवकस्तदभावेऽन्यवृक्षजः ॥
[6]फलवत्स्तवकौ ग्राह्यौ त्रिशुक्ला शलली तथा ।
त्रीणि स्युः कुशपिञ्जूलान्येभिरेकीकृतैरथ ॥
[7]ललाटकेशयोः संधिमारभ्य व्यूहनं भवेत् ।
त्रिर्व्यूहेदथ सीमन्तमा मूर्ध्नो भूर्भुवः स्वरोम् ॥
[8]चतुर्वा व्यूहनं कार्यं सूत्रकारवचो यथा ।
आवर्तते त्वयं मन्त्रः सर्वत्रैवं प्रतीयताम् ॥

---

(१) शौका. १७ पू. ३७ ; प्रपा. १२१.

(२) शौका. १८ पू. ३७ योगं म ( योगम ) ; प्रपा. १२१ तमुदीरयेत् ( तमुदीरयन् ) धानमु ( धान उ ).

(३) शौका. १९ पू. ३७ ; प्रपा. १२२.

(४) शौका. २० पू. ३७ नित्यसंयुतात् ( ऽधीत्य संयुतान् ) ; प्रपा. १२२ दिऋचो ( दे ऋचो ).

(५) शौका. २१ पू. ३७ ; प्रपा. १२२ तौ वदे ( च वदे ).

(६) शौका. २२ पू. ३७ त्तामृचं तदा ( तामृचान्तरम् ) ; प्रपा. १२२.

(७) शौका. २३ पू. ३७ ; प्रपा. १२२ प्रैष (प्रेष).

(८) शौका. २४ पू. ३७ ; प्रपा. १२२ ; संको. ५८ ( दद्यात्तथा वृषम् । विदुषे ब्राह्मणाय ) एतावदेव.

(१) कुका. १।७।२ ; प्रपा. ११९ ; ज्योनि. ११०.

(२) कुका. १।७।४ ; प्रपा. १२०.

(३) कुका. १।७।५ ; प्रपा. १२० रयं प्रोक्त आ ( रिदं प्रोक्तमा ) क्रमः ( क्रमात् ) दथ ( द्यथा ).

(४) कुका. १।७।६ विष्टा या ( विष्टायां ) पतिम् ( पतिः ) ; प्रपा. १२०.

(५) कुका. १।७।७ ; प्रपा. १२० पू. ; संप्र. १७२ उत्त. ; संग. ४२२ म्बरः स्यात् ( म्बरस्य ) उत्त., कारिकायाम्.

(६) कुका. १।७।८ ; प्रपा. १२१.

(७) कुका. १।७।९ ; प्रपा. १२१ मूर्ध्नो ( मूर्ध्न्यो ) उत्त.

(८) कुका. १।७।१० ; प्रपा. १२१ त्रैवं ( त्रैव ).

[1]संप्रेष्य सोमं राजानमिति प्रैषेण गाथिनौ ।
सोमो न इति गायेतां तौ स्थानेऽसौपदस्य तु ॥
समीपे या नदी तस्या नाम गङ्गे सरस्वति ।
ततः स्विष्टकृदादि स्याद्दीयते वृषभस्ततः ॥
[2]ब्रह्मणे तदभावे तु ब्राह्मणेभ्यः प्रदीयते ।
यद्यच्चोपदिशेद्वृद्धा ब्राह्मणी सधवप्रजा ॥
[3]पत्नी कुर्यादिहापि स्यान्नान्दीश्राद्धं पुरैव तु ॥

## कपर्दिकारिकाः

सीमन्ते विरूढयवादिपात्राणामासादनम्

[4]यवा विरूढाः शलली सपुञ्जा
ग्लप्सो यवानामपि बन्धनं च ।
एतानि सीमन्तविधौ प्रयुञ्ज्यात्
पात्राणि साकं खलु मानुषाणि ॥

## रेणुकारिकाः

वृद्धिश्राद्धम् , मङ्गलस्नानादि, मन्त्राणामृषिदैवतच्छन्दोविनियोगाः , तण्डुलमुद्गतिलाद्यासादनम् , होमः , सीमन्तकरणम् , गाथागानम् , ब्राह्मणभोजनम्

[5]पुंसवनोक्ते मुहूर्ते कर्तव्यं श्राद्धपूर्वकम् ॥
आप्लाव्य परिधानान्तं बहिःशाला भवेदिह ।
तच्छालायामिदं कर्म संस्थाप्याग्निं च लौकिकम् ॥
आसीनौ दम्पती अग्नेः पश्चात् पत्नी तु दक्षिणे ।
प्राणानायम्य संकल्प्य स्मरेद्वैकल्पिकानथ ॥
ब्रह्मणो गमनाद्या ये विकल्पाः प्रागुदीरिताः ।
भूर्भुवः स्वर्वीरतरो गाथा स्यात् सोम एव नो ॥
अथमूर्जावतो वृक्ष ऋषिरस्य प्रजापतिः ।
फलिनी देवता छन्दस्तुरीयं वेणिबन्धने ॥

(१) कुका. १।७।११–१२ ; प्रपा. १२१.
(२) कुका. १।७।१३ ; प्रपा. १२१ धवप्रजा ( धवा प्रिया ).
(३) कुका. १।७।१४ ; प्रपा. १२१ पुरै ( पुरे ).
(४) कका. ६।१.
(५) रेका. ५–१३ पृ. ७–८.

विनियोगः सोम एवेत्यृषिरस्याः प्रजापतिः ।
देवता सोमराजः स्याद्गायत्री छन्द इत्यपि ॥
विनियोगो भवेत्तेषामृष्याद्याः स्युः पुरोदिताः ।
देवताध्यानमप्यत्र घृतेनैताः प्रजापतिम् ॥
इन्द्रमग्निं ततः सोमं वरुणं च प्रजापतिम् ।
शेषादग्निं स्विष्टकृतं भूराद्यांश्च घृतेन तु ॥
ब्रह्मणो गमनाद्याज्यभागान्तं पूर्ववद्भवेत् ।
तण्डुलान् सादयेन्मुद्गतिलानामुपकल्पनम् ॥
[1]विशेष इह पात्राणि सादयित्वाऽथ कल्पयेत् ।
औदुम्बरफलं गुच्छद्वयमेकत्र संयुतम् ॥
[2]त्रियेणी शलली त्रीणि पिञ्जुलानि कुशस्य च ।
शङ्कुः श्रीवृक्षजः पूर्णपात्रं मृदु तथाऽऽसनम् ॥
[3]शरेषीकोऽथवा शङ्कुः कातीयपरिशिष्टतः ।
वल्लकीगाथिनावेवमाज्यनिर्वपणं ततः ॥
[4]तण्डुलान् प्रक्षिपेत् स्थाल्यां तिलमुद्गसमन्वितान् ।
चरुं संश्रपयेन्मुद्गतिलयोर्न प्रधानता ॥
[5]अन्तरा तावुपेक्ष्यैव मिश्रणस्योपदेशतः ।
जुहुयादाज्यभागान्ते तस्यैवावयवं चरोः ॥
[6]प्रजापतय इत्येवं शेषात् स्विष्टकृतं ततः ।
आज्येन नव भूराद्याः प्राशनाद्या विमोकतः ॥

(१) रेका. १४ पृ. ८ ; संग. ४२२ गुच्छ ( युग्म ) उत्त.
(२) रेका. १५ पृ. ८ ; संग. ४२२ उत्त.
(३) रेका. १६ पृ. ८ ; संग. ४२२ शरेषी ( शरेषि ) पू.
(४) रेका. १७ पृ. ८ समन्वि ( समिश्रि ) ; संग. ४२१.
(५) रेका. १८ पृ. ८ ; संग. ४२१ तावुपे ( ता उपे ) पू.
(६) रेका. १९–२५ पृ. ८.

अग्नेः पश्चात् प्रतिष्ठाप्य भद्रपीठं सुशोभनम् ।
तस्यां तत्रोपविष्टायां सीमन्तं विनयेत् पतिः ॥
ऊर्ध्वं भूरादितिसृभिर्विनयामीति चान्ततः ।
प्रत्येकं वा व्याहृतिभिरन्त्राप्यव्याहृतिर्भवेत् ॥
औदुम्बरादिभिः पूर्णचात्रान्तैश्च पुलीकृतैः ।
अयमूर्जेति तां वेणीं बध्नात्यत्र पुलीकृतान् ॥
वल्लकीगाथिनावाह सौत्रं प्रैषं यथोदितम् ।
यथार्थं गायतस्तौ च ततो गाथा विकल्पतः ॥
गायतस्तौ सोम एव नो राजेमेत्यसाविति ।
स्थाने नामाऽऽदिशेन्नद्या या स्यात् समीपवर्तिनी ॥
सीमन्तोन्नयनाङ्गं तु ततो ब्राह्मणभोजनम् ॥

## गृह्यासंग्रहः

तिसृभिर्दर्भपिञ्जूलीभिस्त्रिः सीमन्तोन्नयनम् , त्रिःश्वेता-वीरतरपदार्थौ , सीमन्तादिषु हविर्द्रव्यनिर्वापाभावः

'सीमन्ते दर्भपिञ्जूल्यस्तिस्रस्ताभिस्त्रिरुन्नयेत् ।
त्रिभिः श्वेतैश्च शलली प्रोक्तो वीरतरः शरः ॥

(१) गृसं. १।९३–९४.

सीमन्तकरणे कर्मणि तिस्रो दर्भपिञ्जूल्यो भवन्ति । ताभिस्तिसृभिरेव वारत्रयं सीमन्तमुन्नयेत् । तदनेन 'अथ सीमन्तमूर्ध्वमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथमं भुवरिति द्वितीयं स्वरिति तृतीयम्' इति सूत्रोक्ता दर्भपिञ्जूल्य उन्नयनं च व्याख्यातम् । भवदेवभट्टस्त्वेतदजानानः नव दर्भपिञ्जूलीराह । दर्भपिञ्जूलीनां त्रित्वमम्युपगच्छन्नपि भट्टनारायणः एकैकया पिञ्जूल्या एकैकमुन्नयनं वदन् अनादेयवचन एव । त्रिभिः स्थानत्रये स्थितैः श्वेतैः अन्तरा वर्णान्तरसंभिन्नैरित्यर्थः । इत्थंभावे तृतीया । तदेवंभूतैः श्वेतैः 'त्रिश्वेतया च शलल्या' इति सूत्रोक्ता शलली व्याख्याता । 'अथ वीरतरेण' इति सूत्रोक्तो वीरतरः शरः प्रोक्तः । गृसंभा.

चूडाकर्मणि सीमन्ते यश्च पाकः सदा गृहे ।
विवाहे चैव लाजानां नोक्तो निर्वपणो विधिः ॥

चूडाकर्मणि 'आनडुहो गोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः' इति सूत्रोक्तो यः स्थालीपाकः, यश्च सीमन्तकरणे 'कृसरः स्थालीपाक उत्तरघृतस्तमवेक्षयेत्' इति सूत्रोक्तः स्थालीपाकः, यश्च सर्वदा भोजनाद्यर्थं गृहे पाकः, यश्च विवाहे लाजानां पाकः, तेष्वेतेषु निर्वपणो विधिः निर्वपणसंबन्धी विधिः निर्वपणरूपो वा विधिः 'अमुष्मै त्वा जुष्टं निर्वपामि' इत्येवंरूपः आचार्यैर्नोक्तः । गृसंभा.

# विष्णुबलिः

## विष्णुबलिविधिः

विष्णुबलौ गर्भमासः, विष्णुबलेर्नित्यत्वम्, विष्णुबलिफलम्, प्रतिगर्भमावृत्तिः, पत्युरभावे कर्ता

### बौधायनगृह्यसूत्रम्

[1]अष्टमे मासि विष्णव आहुतीर्जुहोति ॥

[2]विष्णवे बलिरष्टमे मासि ॥

### बौधायनगृह्यपरिभाषासूत्रम्

[3]पुंसवनं विष्णव आहुतीश्च नित्याः ॥

### आग्निवेश्यगृह्यसूत्रम्

[4]अथ विष्णुबलिः । अष्टमे मासि ॥

### वसिष्ठः

[5]मास्यष्टमे च गर्भस्य कुर्याद्विष्णोर्बलिक्रियाम् ॥

### वृद्धगार्ग्यः

[6]गर्भपुष्ट्यै विष्णुमासे विष्णुपूजां विधानतः ।
शुक्लाम्बरधरः कुर्यान्नियतोऽथ यमान्वितः ।
नान्यथा गर्भवृद्धिः स्यादित्युवाच चतुर्मुखः ॥

### आश्वलायनः

[7]तथा विष्णुबलिश्चापि सप्तवध्रेषु पुष्टये ।
प्रतिगर्भे बलिः कार्यः सीमन्तश्च प्रशस्यते ॥

(१) अयं च विष्णुबलिः प्रतिगर्भमावर्तते, 'प्रतिगर्भे बलिः कार्यः सीमन्तश्च प्रशस्यते ।' इत्याश्वलायनोक्तेः । इमं च गृह्यसूत्रानुक्तत्वादिदानीं शिष्टा नाऽऽचरन्ति । प्रर. ७२

(२) सप्तवध्राः सप्तधातवः । ¶ संप्र. १७९

(३) बलिः विष्णुबलिः गर्भाष्टमे मासे कार्यः । इदं च 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' इति वचनमाश्रित्य गृह्यसूत्रानुक्तेरिदानीं नाऽऽचरन्ति । * चम. ७

[1]अकृते च भवेद्दोषः कृते पुष्टिं समृच्छति ।
गर्भबाधानिवृत्त्यर्थं सुखसूत्यर्थमेव च ।
महादोषापनुत्यर्थं बलिः कार्यो यथाविधि ॥

[2]बलिरेवं प्रकर्तव्यः प्रतिगर्भं द्विजातिना ॥

अस्य च गर्भपुष्टिफलकत्वश्रवणात् प्रतिगर्भमावृत्तिश्रवणाच्च स्पष्टमेव गर्भसंस्कारत्वम् । $ संप्र. १८०

[3]†पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥

---

(१) बौगृ. १।१०।१३.
(२) बौगृ. १।११।२ ; हिगृशे. ३।१५.
(३) बौगृप. १।१०।१३.
(४) आग्निगृ. २।५।७.
(५) प्रपा. १२४ ; संप्र. १७८ ; संग. ४२६.
(६) प्रपा. १२४.
(७) आश्वस्मृ. ११।६८–६९ बलिश्चा ( बलिं चा ) वध्रेषु ( वध्रेस्तु ) गर्भे ( गर्भे ) कार्यः ( कार्या ) ; प्रपा. १२४ वध्रेषु ( वध्रेस्तु ) ; प्रर. ७२ उत्त. ; संप्र. १७८ ; चम. ७ उत्त. ; बाल. १।११–१२ पृ. १४ उत्त. ; संग. ४२७.

¶ संग. संप्रवत् ।
* बाल. चमवत् ।
$ संग. संस्कारप्रकाशानुवादः ।
† अनयोर्व्याख्यानानि पुंसवनविधिप्रकरणे (सं. का. पृ. २५३८ ) द्रष्टव्यानि ।

(१) आश्वस्मृ. ११।६९–७० अकृते च भ ( नाकृते चेद्भ ) कार्यो ( कार्या ) ; प्रपा. १२४ ; संप्र. १७८ ; संग. ४२७.
(२) आश्वस्मृ. ११।८४ ; प्रपा. १२५ ; संप्र. १८० ; संग. ४२८.
(३) आश्वस्मृ. ११।९४–९५. शेषस्थलादिनिर्देशाः पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३८ ) द्रष्टव्याः,

दीक्षान्ते दीक्षितो भर्ता जातकृत्यादिकं चरेत् ।
पुंसवादीनि कर्माणि त्रीणि श्रेष्ठेन कारयेत् ॥

## अनिर्दिष्टकर्तृकवचनम्

[1]वैष्णवो ह्यष्टमो मासो विष्णुर्गर्भस्य देवता ।
बलिं च तूष्णीं वा कुर्याद्गर्भस्य परिपुष्टये ॥

(१) प्रपा. १२५.

## कालविधाने

[1]मासेऽष्टमे विष्णुबलिं च कुर्यात् ॥

## मुहूर्तचिन्तामणिः

[2]... अथ विष्णुपूजा ।
मासेऽष्टमे... ॥

अथेति सीमन्तानन्तरम् । अष्टमे मासि... विष्णुपूजा कार्या । पीटी.

(१) प्रपा. ११९; संप्र. १७४; सिन्धु. ८३४; विपा. ९७; ज्योनि. ११०; संग. ४२०.

(२) मुचि. ५।१०; संव. ५५.

# विष्णुबलिमुहूर्तः

## बौधायनगृह्यसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

विष्णुबलौ पक्षः तिथिः नक्षत्रं च

[1]पूर्वपक्षस्य सप्तम्यां द्वादश्यां रोहिण्यां श्रोणायां वा ॥

## आग्निवेश्यगृह्यसूत्रम्

विष्णुबलौ पक्षः तिथिः नक्षत्रं च

[2]पूर्वपक्षे पुण्ये नक्षत्रे द्वादश्यां सप्तम्यां रोहिण्यां श्रवणायां वा ॥

## वसिष्ठः

विष्णुबलौ पक्षः तिथिः नक्षत्राणि वाराः लग्नानि दिवसभागाः ग्रहयोगाश्च

[3]रोहिण्यां वा वैष्णवे पूर्वपक्षे
द्वादश्यां वा सप्तमे वा तिथौ वा ।
मध्याह्ने वा पूर्वभागेऽनुकूले
विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ॥

[4]श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते ।
द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः ॥

[5]शुभग्रहोदयाः श्रेष्ठास्तेषां च दिवसा अपि ।
पापाख्यायारिगाः श्रेष्ठा नेष्टाः सर्वेऽष्टमस्थिताः ॥

उदयाः लग्नानि । दिवसाः वाराः । † संप्र. १७८

† संग. संप्रवत् ।

(१) बौगृ. १।११।२ ; हिगृशे. ३।१५.

(२) आग्निगृ. २।५।७.

(३) वसं. २५।११ ; संसौ. ४८ मध्याह्ने वा ( मध्ये चाह्नः ).

(४) प्रपा. १२४ ; संप्र. १७८ ; संग. ४२६ पूर्वार्धे वीरमित्रोदये.

(५) प्रपा. १२४ ; संप्र. १७८ मस्थिताः ( मे स्थिताः ) ; संग. ४२६ पू .

## आश्वलायनः

विष्णुबलौ नक्षत्राणि ग्रहयोगाश्च

[1]पुंनक्षत्रेण कार्यं स्याद्गर्भाधानं विपश्चिता ।
तथा पुंसवसीमन्तबलयश्च विधानतः ॥

वर्जयेत् सर्वकर्माणि विपत्प्रत्यरनैधनैः ।
चन्द्राष्टमे च यत्नेन वधशात्रुव्ययैस्तथा ॥

सावनेन तु मासेन तृतीये वा चतुर्थके ।
मासि तिष्येण मतिमान् कुर्यात् पुंसवनक्रियाम् ॥

अनभीष्टो यदि भवेत्तिष्यस्तु श्रवणेऽपि वा ।
सावित्रादित्याश्वयुग्भिर्वैश्वदेवेन वा द्विजः ॥

एतैर्ऋक्षैश्च सीमन्तो बलिश्चापि विधीयते ।
प्राजापत्यमरुत्पौष्णधिष्ण्ये वाऽपि त्वसंभवे ॥

## श्रीधरीये

विष्णुबलौ पक्षः तिथिः नक्षत्रं दिवसभागाश्च

[2]रोहिण्यां वा वैष्णवे पूर्वपक्षे
द्वादश्यां वा सप्तमे वा तिथौ च ।
मध्ये चाह्नः पूर्वभागे न रात्रौ
विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ॥

## मुहूर्तचिन्तामणिः

विष्णुबलौ नक्षत्राणि लग्नानि ग्रहयोगाश्च

[3]मासेऽष्टमे विष्णुविधातृजीवै-
र्लग्ने शुभे मृत्युगृहे च शुद्धे ॥

(१) आश्वस्मृ. ११।५२-५६. शेषस्थलादिनिर्देशाः पुंसवनमुहूर्तप्रकरणे ( सं. का. पृ. २५४५ ) द्रष्टव्याः .

(२) प्रपा. १२४ ; संप्र. १७८ चाह्नः ( वाऽह्नः ) ; संग. ४२६ संप्रवत् ; पुम. ४३३.

(३) मुचि. ५।१० ; संब. ५५.

अष्टमे मासि विष्णुविधातृजीवैः श्रवणरोहिणीपुष्यैरुपलक्षिते दिवसे, तथा लग्ने शुभे शुभस्वामिके शुभयुक्ते वा सति, तथा मृत्युगृहे अष्टमस्थाने शुद्धे सर्वग्रहरहिते च सति विष्णुपूजा कार्या। † पीटी.

† संव. पीटीगतम्।

## मुहूर्तगणपतौ

विष्णुबलौ पक्षः तिथिः नक्षत्रं च

[1]सीमन्तोर्ध्वे सिते पक्षे रोहिण्यां श्रवणे तथा।
द्वादशीसप्तमीपक्षे हर्यर्चा गर्भपुष्टये॥

(१) संव. ५५.

# विष्णुबलिप्रयोगः

## बौधायनगृह्यसूत्रं हिरण्यकेशिगृह्यशेषसूत्रम् आग्निवेश्यगृह्यसूत्रं च

ब्राह्मणभोजनम् , पुण्याहवाचनम् , प्रणीताप्रणयनान्ते देवतावाहनम् , अग्निमुखान्ते देवताया मार्जनतर्पणार्चनानि, होमः , बलिहरणम् , स्तुतिः , देवतोद्वासनम् , बलिशेषस्य पत्न्या प्राशनम् , विष्णुबलेः फलम्

**[1]अष्टमे मासि विष्णव आहुतीर्जुहोति– ' विष्णोर्नु कम् ' इत्येतेन सूक्तेन ॥**

**विष्णवे बलिमुपहरति ॥**

**वैष्णवो ह्येष मासो विज्ञायते ॥**

**विष्णुर्हि गर्भस्य देवता ॥**

**इति हुतो व्याख्यातः ॥**

**‡[2]यथैतद्धुते बलिहरणम् ॥**

**[3]ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥**

**[4]अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं दैवतमावाहयति– ' ॐ भूः पुरुषमावाहयामि, ॐ भुवः पुरुषमावाहयामि, ॐ सुवः पुरुषमावाहयामि, ॐ भूर्भुवः सुवः पुरुषमावाहयामि ' इत्यावाह्य$ ॥**

**[1]परिधानप्रभृत्याऽग्निमुखात्कृत्वा दैवतमर्चयति ॥**

**[2]' आपो हि ष्ठा मयोभुवः ' इति तिसृभिः ' हिरण्यवर्णाः शुचयः पावकाः ' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वा ॥**

**[3]अथाद्भिस्तर्पयति– ' केशवं तर्पयामि, नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरं तर्पयामि ' इति ॥**

**[4]एतैरेव नामधेयैर्गन्धपुष्पधूपदीपैः ' अमुष्मै नमोऽमुष्मै नमः ' इत्यभ्यर्च्य ॥**

**[5]अथ विष्णव आहुतीर्जुहोति– ' विष्णोर्नु कम् , तदस्य प्रियम् , प्र तद्विष्णुः , परो मात्रया, वि चक्रमे, त्रिर्देवः ' इति ॥**

**[6]जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥**

**[7]अथ गुडपायसं घृतमिश्रमन्नं निवेदयति– ' अमुष्मै स्वाहा नमोऽमुष्मै स्वाहा नमः ' इति द्वादशभिर्यथालिङ्गम् ॥**

---

‡ आदर्शपुस्तकेऽत्र " अयं खण्डः शेषगतोऽप्यत्रैव सौकर्याय पठ्यते' इति शिष्टिर्व्याचष्टे" इति टिप्पणी वर्तते।

$ ' आवाह्य ' इत्युत्तरसूत्रादिर्भवितुं युक्तः।

(१) **बौगृ.** १।१०।१३–१७.

(२) **बौगृ.** १।११।१.

(३) **बौगृ.** १।११।३ ; **हिगृशे.** ३।१५ स्वस्ति ऋ ( **स्वस्त्ययनम्** ) ; **आग्निगृ.** २।५।७ हिगृशेवद्.

(४) **बौगृ.** १।११।४ ; **हिगृशे.** ३।१५ देव ... णाग्निं ( सस्थण्डिलसंस्काराद्यग्निं प्रतिष्ठाप्य ) ; **आग्निगृ.** २।५।७ हयति ( हयामि ) सुवः ( स्वः ).

(१) **बौगृ.** १।११।५ ; **हिगृशे.** ३।१५ धानप्रभृत्याऽग्नि ( समूहनाद्यग्नि ) ; **आग्निगृ.** २।५।७ यति ( यित्वा ).

(२) **बौगृ.** १।११।६ ; **हिगृशे.** ३।१५ ; **आग्निगृ.** २।५।७.

(३) **बौगृ.** १।११।७ ; **हिगृशे.** ३।१५ ; **आग्निगृ.** २।५।७ यति– ' केशवं तर्पयामि ( यते ' केशवं ).

(४) **बौगृ.** १।११।८ ; **हिगृशे.** ३।१५ ; **आग्निगृ.** २।५।७ नामधेयैर्ग ( नामभिर्ग ) इत्यभ्यर्च्य ( इति ).

(५) **बौगृ.** १।११।९ ; **हिगृशे.** ३।१५ ; **आग्निगृ.** २।५।७ विष्णव आ ( वैष्णवा ).

(६) **बौगृ.** १।११।१० ; **हिगृशे.** ३।१५ जयप्रभृति ( अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात् ) ; **आग्निगृ.** २।५।७.

(७) **बौगृ.** १।११।११ ; **हिगृशे.** ३।१५ ( नमोऽमुष्मै स्वाहा० ) ; **आग्निगृ.** २।५।७ ( गुडपायसं घृत-

[1]वैष्णवीभिर्ऋग्यजुःसामाथर्वभिः स्तोत्रैः स्तुतिभिः स्तुवन्ति ॥

[2]व्याहृतीभिः 'पुरुषमुद्वासयामि' इत्युद्वास्यान्नशेषं पत्नीं प्राशयेत् ॥

[3]पुमानस्यै जायत इति विज्ञायते ॥

## बौधायनगृह्यपरिभाषासूत्रम्

उष्णोदकस्नानमष्टममासमभिव्याप्य, बलिहरणम्, व्रताचरणम्, फलम्

[4]अष्टममासमुष्णोदकेन स्नात्वा विष्णवे बलिमुपहृत्य व्रतयति ॥

अथ पुत्रप्रसूर्भवतीति विज्ञायते ॥

## वैखानसगृह्यसूत्रम्

आघारान्ते विष्णोरावाहनस्नापनार्चनानि, आज्यहोमः, बलिनिवेदनम्, पायसहोमः, स्तुतिप्रणामौ, पायसशेषस्य पत्न्या प्राशनम्

[5]अथ विष्णुबलिम् । उत्तरप्रणिधावग्न्यादीन् देवान् 'ओं भूः पुरुषमों भुवः पुरुषमों सुवः पुरुषमों भूर्भुवः सुवः पुरुषं च' इत्यावाह्य तथैव निर्वापाद्याघारं हुत्वाऽग्नेः पूर्वस्यां दर्भासनेषु 'केशवं नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरम्' इति नामभिर्देवं विष्णुमावाह्याऽऽपोहिरण्यपवमानैः स्नापयित्वा तत्तन्नाम्नाऽर्चयति । अतोदेवाद्यैः 'विष्णोर्नु कम्, तदस्य प्रियम्, प्र तद्विष्णुः, परो मात्रया, वि चक्रमे, त्रिर्देवः' इति द्वादशाहुतीराज्येन हुत्वा पायसमाज्यसंयुक्तं हविर्देवं निवेद्य द्वादशनामभिरतोदेवाद्यैर्विष्णोर्नुकाद्यैराज्यमिश्रं पायसं जुहुयात् । ऋग्यजुःसामाथर्वभिर्मन्त्रैर्वैष्णवैर्देवं संस्तूय नमोन्तैर्नामभिः प्रणमेत् । पायसशेषं पत्नीं प्राशयति ॥

## वसिष्ठः

विष्णोः कनकप्रतिमाया मृत्कुम्भे स्थापनं पूजनं ब्राह्मणाय दानं च, विष्णुबलिफलम्

[1]पीताम्बरं कृष्णवर्णं शङ्खचक्रगदाम्बुजम् ।
वैकुण्ठवासिनं विष्णुं मृत्कुम्भे विन्यसेत्ततः ॥

[2]विष्णोः स्वरूपं कनकेन कृत्वा
तल्लिङ्गमन्त्रैरथ गन्धपुष्पैः ।
वस्त्राक्षतैर्गुग्गुलधूपदीपैर्नैवेद्यताम्बूलफलैश्च सम्यक् ॥

[3]एवं पूजां प्रकुर्वीत गर्भाणां रक्षणाय च ।
ब्राह्मणाय प्रदातव्या प्रतिमा वस्त्रसंयुता ॥

## वृद्धगार्ग्यः

विष्णुपूजाया विधिः फलं च

[4]गर्भपुष्टयै विष्णुमासे विष्णुपूजां विधानतः ।
शुक्लाम्बरधरः कुर्यान्नियतोऽथ यमान्वितः ।
नान्यथा गर्भवृद्धिः स्यादित्युवाच चतुर्मुखः ॥

---

मिश्रमथान्नस्य बलिमुपहरति 'अमुष्मै स्वाहाऽमुष्मै स्वाहा' इति द्वादशभिर्यथालिङ्गम् ).

(१) बौगृ. १।११।१२; हिगृशे. ३।१५ स्तुव (स्तुन्व); आग्निगृ. २।५।७ (स्तोत्रैः०).

(२) बौगृ. १।११।१३; हिगृशे. ३।१५ व्याहृती (व्याहृति); आग्निगृ. २।५।७ (व्याहृतीभिः पुरुषमुद्वासयति-- 'पुरुषमुद्वासयामि' इति । अन्नशेषं पत्नीं प्राशयति ).

(३) बौगृ. १।११।१४; हिगृशे. ३।१५ नस्यै (नस्मै); आग्निगृ. २।५।७ (पुमांसं जनयतीति विज्ञायते ).

(४) बौगृप. १।१०।१५-१६.

(५) वैगृ. ३।१३.

(१) वसं. २५।१२; प्रपा. १२४ म्बुजम् (धरम्) वृद्धगार्ग्यः.; संसौ. ४८.

(२) वसं. २५।१३ धूप (गन्ध); प्रपा. १२४ ष्णोः स्वरू (ष्णोश्च रू) मन्त्रैरथ गन्ध (मन्त्रेण सुवर्ण) वृद्धगार्ग्यः; संसौ. ४८ पुष्पैः (युक्तैः) ग्गुल (ग्गुलु).

(३) वसं. २५।१४ प्रथमपादे (विष्णुं च देवतापूज्यं); प्रपा. १२४ उत्तरार्धे (ब्राह्मणाय प्रदद्यात्तु प्रतिमां वस्त्रसंयुताम् ॥) वृद्धगार्ग्यः; संसौ. ४८ प्रथमपादे (विष्णुं च देवतापूजां) गर्भाणां र (गर्भसंर). (४) प्रपा. १२४.

## आश्वलायनः

होमाधिकरणं स्मार्ताग्निः, मङ्गलस्नानं नान्दीश्राद्धं च पूर्वेद्युः, आज्यभागान्ते विष्णुपूजनम्, होमः, बलिहरणमर्घ्यदानं च, बलिशेष-भक्षणम्, बलेः प्रतिगर्भमावृत्तिः

[1]गर्भपुंसवसीमन्तबलिचौलानि निष्कृतीः।
काम्यांश्च कुर्यात्स्मार्ताग्नावुत्सर्गोपाकृती च वा॥

[2]बलिः प्रवक्ष्यते सम्यग्घितार्थाय क्रिया-वताम्॥

[3]तौ तु सन्मङ्गलस्नातौ दम्पती अहताम्बरौ।
भवेतां पूर्वदिवसे नान्दीश्राद्धादयस्तथा॥

[4]प्राङ्गणेऽग्निं समाधाय सुमुहूर्ते गृहेऽथवा।
घृतैर्हुत्वाऽऽज्यभागान्तं स्थण्डिले चार्चये-द्धरिम्॥

[5]पद्मस्थं स्वस्तिकस्थं वा समभ्यर्च्य निवेद्य च।
आज्याक्तेनैव चरुणा वक्ष्यमाणैर्हुनेत् पतिः॥

[6]अग्नेर्दक्षिणतः कुर्यात् स्थण्डिले यजनं हरेः।
विना स्थण्डिलयोगेन केचिज्जुह्वति च द्विजाः॥

[7]अतो देवा इति चरुं तस्मिन्नग्नावभिघ्रितम्।
षड्भिर्विष्णोर्नुकाद्यैश्च दशभिः सप्तभिर्हुनेत्॥

[1]सं वामित्यष्टभिर्ऋग्भिश्चतुर्दशभिरेव च।
पर इत्यथ सूक्तेन पौरुषेण विचक्षणः॥

[3]हुनेदादावथान्ते वा विष्णुर्योनिमिति त्रिभिः।
चतुःषष्टिभिरन्नेन हुनेदेवं बलौ हरेः॥

[4]अग्नेः प्रागुत्तरे भागे लिप्त्वा गां गोमयेन तु।
सितेन रजसा कुर्याच्चतुरस्रं चतुष्पदम्॥

[5]चतुःषष्टिपदं तस्मिन् कृत्वा स्पष्टं यथाविधि।
चतुरङ्गुलमानेन प्रति प्रति ततो बलिम्॥

[6]निर्ऋत्यादिषु तेष्वन्नैस्तैर्मन्त्रैर्विकिरेद्बलिम्।
पिण्डमेकं च तन्मध्ये दद्यादर्घ्यं च विष्णवे॥

[7]नमो नारायणायेति ताराद्यं मन्त्रमुच्चरन्।
दम्पती प्राशयेतां च पृथक् पिण्डद्वयं शुभम्॥

---

(१) आश्वस्मृ. ५।३६.

(२) आश्वस्मृ. ११।७१ वताम् + ( विप्रैः प्रवक्ष्यमाणत्वाद्वृत्तिकारादिभिस्तु तत्॥ ) ; प्रपा. १२४ ; संप्र. १७९ ; संग. ४२७ वीरमित्रोदये वसिष्ठः, एवमुत्तरत्र सर्वत्र.

(३) आश्वस्मृ. ११।७२ सन्मङ्गलस्नातौ ( पुंसवनं पूर्वे ) ; प्रपा. १२४ ; संप्र. १७९ ; संग. ४२७.

(४) आश्वस्मृ. ११।७३ ; प्रपा. १२४ ; संप्र. १७९ ; संग. ४२७ चार्चे ( वाऽर्चे ).

(५) आश्वस्मृ. ११।७४ ; प्रपा. १२४ ; संप्र. १७९ हुनेत् ( हुवेत् ) ; संग. ४२७. आश्वलायनस्मृतिभिन्नग्रन्थेषु अग्रिमश्लोकोत्तरमुत्तरार्धे पठितम्.

(६) आश्वस्मृ. ११।७५ योगे ( यागे ) ; प्रपा. १२४ ; संप्र. १७९ ; संग. ४२७.

(१) आश्वस्मृ. ११।७६ ; प्रपा. १२४ ; संप्र. १७९ हुनेत् ( हुवेत् ) ; संग. ४२७.

(२) आश्वस्मृ. ११।७७ ; प्रपा. १२४ ; संप्र. १७९ ; संग. ४२७.

(३) आश्वस्मृ. ११।७८ दादावथा ( देवाथवाऽ ) ; प्रपा. १२४ ; संप्र. १७९ हुने ( हुवे ) ; संग. ४२७ बलौ हरेः ( च लौहने ).

(४) आश्वस्मृ. ११।७९ रस्रं ( रश्रं ) ; प्रपा. १२४ चतुष्प ( चतुःप ) ; संप्र. १७९ ; संग. ४२७ प्रपावत्.

(५) आश्वस्मृ. ११।८० स्पष्टं ( स्पृष्टं ) बलिम् ( बलिः ) ; प्रपा. १२४ प्रथमपादे ( तथा चतुःषष्टिपदं ) ; संप्र. १७९ ; संग. ४२७ बलिम् ( बलिः ).

(६) आश्वस्मृ. ११।८१ दर्घ्यं च ( दन्तेऽर्घ्यं ) ; प्रपा. १२४ स्तैर्मन्त्रै ( स्तन्मन्त्रै ) ; संप्र. १७९ दर्घ्यं ( दर्घं ) ; संग. ४२७.

(७) आश्वस्मृ. ११।८२ ; प्रपा. १२४–१२५ च्चरन् ( च्चरेत् ) ; संप्र. १७९ ; संग. ४२८.

[1]स्वयं कर्ताऽऽचरेत् कर्म पत्न्या स्पृष्ट इति द्विजः।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥

[1]दक्षिणां गुरवे दत्त्वा भुञ्जीताथ द्विजैः सह ।
बलिरेवं प्रकर्तव्यः प्रतिगर्भे द्विजातिना ॥

---

(१) आश्वस्मृ. ११।८३ ; प्रपा. १२५ ; संप्र. १८० ; संग. ४२८ कर्ताऽऽच ( कर्ता च ).

(१) आश्वस्मृ. ११।८४ भुञ्जीताथ ( शोभयेच्च ) ; प्रपा. १२५ ; संप्र. १८० ताथ ( यातां ) ; संग. ४२८ संप्रवत् .

# सूतिकागृहं तत्प्रवेशश्च

## कौषीतकिगृह्यसूत्रम्

रक्षोविघातार्थमोषधिपञ्चकमूलरसेन सूतिकागृहलेपनम्

**[1]काकातन्या मचकचातन्याः कोशातक्या बृहत्याः काल्क्लीतकस्येति मूलानि पेषयित्वोपलेपयेद्देशं यस्मिन् प्रजायेत रक्षसामपहत्यै ॥**

( १ ) काकादनी अत्र काकजङ्घा । मेचकरातनी काकमाचिका । कोशातकी घोषकः । ब्रक. ८५

( २ ) काकातनिका बृहत्कलञ्जनिका लोहितैः शोभनैर्महद्भिः फलैर्विकचा अञ्जलौ मृद्यमाना पिच्छिला भवति । पाठकिकेति च प्रसिद्धा । कोशातकी घोषाटकीति प्रसिद्धा । बृहती प्रसिद्धा । काल्क्लीतकं कालाघकलिकेति प्रसिद्धा । एतेषां पञ्चानां मूलानि पेषयित्वा भविष्यत्सूतिकागृहमुपलेपयेत् रक्षोपघातार्थम्, न तु शरीरसंस्कारार्थम् अदृष्टार्थे वा । अनित्यमेतत् । कौगसं.

( ३ ) काल्क्लीतकः कृष्णगुञ्जा । ¶ स्मृसा. २

( ४ ) बृहती कण्टकारिका । काकातकः कृष्णगुञ्जेति । एतन्मूलरसेन यस्मिन् जायेत प्रसूयेत तं देशं गृहादिरूपं लेपयेदित्यर्थः । † संप्र. १८५

## वाराहगृह्यसूत्रम्

सूतिकागृहमुखे दिङ्नियमः, समन्त्रकप्रवेशः

**[2]प्राङ्मुखमुदङ्मुखं वा सूतिकालयं कल्पयित्वा 'ध्रुवं प्रपद्ये शुभं प्रपद्ये' इति काले प्रपादयेत् ॥**

---

¶ शेषं ब्रकवत् ।

† शेषं ब्रकवत् । संग. ब्रकवत् संप्रवच्च ।

(१) **कौगृ.** १।२३।१; **ब्रक.** ८५ तन्या मचकचा ( दन्या मेचकरा ) काल्क्लीतकस्येति ( काकातकस्य ) प्रजायेत ( जायेत ); **स्मृसा.** २ ( काकादन्याञ्च मेचकघातक्याः कोशातक्या बृहत्याः काल्क्लीतकस्येति मूलादि पेषयित्वा प्रलेपयेद्देशं यस्मिन् प्रजायेत रक्षसामपहत्यै ) शाङ्खः; **संप्र.** १८५ ब्रकवत्; **संग.** ४३१ तन्या मचकचा ( दन्या मेचकरा ) काल्क्ली ( काल्की ) प्रजायेत ( जायते ).     (२) **वागृ.** १.

## वैखानसगृह्यसूत्रम्

वृषभोषिते तिलसर्षपधूपिते सूतिकागृहे प्रवेशः

**[1]अरिष्टागारं यथोक्तं कृत्वा वृषभोषितं तिलसर्षपैर्धूपयित्वा तां प्रवेशयेत् ॥**

## वसिष्ठः

सूतिकागृहे दिङ्नियमः, प्रवेशकालः, आसन्नप्रसवायाः शुभकालानपेक्षः सद्य एव प्रवेशः

**[2]नैर्ऋत्यां सूतिकागृहम् ॥**

सूतिकागृहनिर्माणविधिमाह वसिष्ठः— 'ऐन्द्रे तु विश्रमस्थानमाग्नेय्यां पचनालयम् । याम्यायां शयनस्थानं नैर्ऋत्यां सूतिकागृहम् ॥ वारुण्यां भोजनगृहं वायव्यां पशुमन्दिरम् । कौबेर्यां तु धनस्थानमैशान्यां देवतालयम् ॥' इति । ¶ प्रपा. १२७

**[3]अथातः संप्रवक्ष्यामि सूतिकागृहवेशनम् ।**
**मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने ।**
**प्रसूतिसंभवे काले सद्य एव प्रवेशयेत् ॥**

## नारदः

सूतिकागृहप्रवेशे तिथिवाराः

**[4]ञ्यर्कारवारे तिथिषु रिक्तामावर्जितेषु च ।**
**दिवा वा यदि वा रात्रौ प्रवेशो मङ्गलप्रदः ॥**

---

¶ निर्दिष्टस्थलाः सर्वे ग्रन्थाः प्रपागताः ।

(१) **वैगृ.** ३।१४.

(२) **प्रपा.** १२७; **संप्र.** १८५; **संम.** १४ नैर्ऋत्यां ( आग्नेये ); **सिन्धु.** ८४२; **विपा.** २४४ ज्योतिर्वसिष्ठः; **संकौ.** ५८; **संग.** ४३०; **संर.** ८२६ ज्योतिर्वसिष्ठः .

(३) **प्रपा.** १२७; **सिन्धु.** ८४२ संभवे ( समये ) तृतीयार्धमात्रम्; **विपा.** २४४–२४५ गृह ( गार ); **ज्योनि.** १८०; **संर.** ८२६ तृतीयार्धमात्रम्, गर्गः .

(४) **ज्योना.** ३१।४–५; **संग.** ४३२ रिक्तामा ( रिक्तास्वा ).

## गर्गः

सूतिकागृहस्य निर्माणे कालदिङ्नियमः, प्रवेशे नक्षत्राणि राशयः ग्रहयोगाश्च

[1]वारेऽनुकूले राशौ तु दिने दोषादिवर्जिते ।
स्वानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः ॥
[2]रोहिण्यैन्दवपौष्णेषु स्वातीवारुणयोरपि ।
पुनर्वसौ पुष्यहस्तधनिष्ठात्र्युत्तरासु च ।
मैत्रे त्वाष्ट्रे तथाऽश्विन्यां सूतिकागारवेशनम् ॥

(१) त्र्युत्तरासु उत्तरफल्गुन्युत्तराषाढोत्तरभाद्रपदेषु । विपा. २४५

(२) एतच्च संभवे, 'प्रसूतिसमये काले सद्य एव प्रवेशयेत् ।' इति वसिष्ठोक्तेः । ‡ सिन्धु. ८४२

[3]मृत्यर्थनाशौ मृत्युश्च वृद्धिपुष्ट्यायुरीप्सितम् ।
मृत्युश्च मरणं पित्रोर्मरणं तु ततस्त्रिषु ।
मेषादिक्रमशो विद्यात् सूतिकागारवेशने ॥
[4]ग्रहेऽनुकूले राशौ तु रिःफषष्ठाष्टवर्जिते ।
सर्वे चाथ शुभाः केन्द्रे पापाश्च त्रिषडायगाः ।
शुभांशे शुभदृष्टौ तु सूतिकावेशनं शुभम् ॥

(१) रिःफं द्वादशं स्थानम् । संप्र. १८७

(२) आयः एकादशस्थानम् । एतच्च संभवे, 'प्रसूतिसंभवे काले सद्य एव प्रवेशयेत् ।' इति तेनैवोक्तत्वात् । संर. ८२६

## मार्कण्डेयपुराणम्

जातहारिणीतो बालरक्षार्थं सूतिकागृहे अग्नि–जल–यूप–दीप–शस्त्र–मुसल–भूति–सर्षपनिधानम्

[1]अग्न्यम्बुशून्ये च तथा निर्यूपे सूतिकागृहे ।
अदीपशस्त्रमुसले भूतिसर्षपवर्जिते ॥
[2]अनुप्रविश्य या जातमपहृत्याऽऽत्मसंभवम् ।
क्षणप्रसविनी बालं तत्रैवोत्सृजते द्विज ॥
[3]सा जातहारिणी नाम सुघोरा पिशिताशना ।
तस्मात् संरक्षणं कार्यं यत्नतः सूतिकागृहे ॥

(१) यूपोऽत्र यूपाकारकाष्ठविशेषः । ‡ ब्रक. ८५

(२) तत्र निधेयद्रव्याण्युक्तानि व्यतिरेकमुखेन मार्कण्डेयपुराणे– 'अग्न्यम्बु...' इति । ¶ संप्र. १८६

---

‡ संर. सिन्धुवत् ।

(१) प्रपा. १२७ दिने दो (रिफफदो); संप्र. १८४; विपा. २४४; ज्योनि. १८० दिने दो (दग्धदो); संग. ४३०.

(२) प्रपा. १२७ सौ पुष्य (सुपुष्य) गार (याः प्र) ज्योतिर्वसिष्ठः; संप्र. १८६ सौ पुष्य (सुपुष्य); सिन्धु. ८४२ वारुण (वरुण); विपा. २४५ संप्रवत् सिन्धुवच्च; ज्योनि. १८०; संकौ. ५८; संग. ४३२ संप्रवत् सिन्धुवच्च; संर. ८२६.

(३) प्रपा. १२७ मृत्यर्थ (मत्यर्थ) तु (च) ज्योतिर्वसिष्ठः; संप्र. १८६ विद्यात् (विन्द्यात्); विपा. २४५ तु (च) शने (शनम्); ज्योनि. १८० मृत्यर्थ (स्मृत्यर्थं) वृद्धिपु (वृद्धिः पु) शने (शनम्); संग. ४३२ मृत्यर्थ (मृत्य्वर्थं) विद्यात् (विन्द्यात्).

(४) प्रपा. १२७ ग्रहेऽनु (ग्रहानु) रिःफ (रिप्फ) दृष्टौ (दृष्टे) ज्योतिर्वसिष्ठः; संप्र. १८६–१८७; विपा. २४५ रिःफ (रिक्ता); ज्योनि. १८०–१८१ रिःफ (रिष्फ); संकौ. ५८ रिःफषष्ठा (रिक्ताषष्ठ्य); संग. ४३२ रिःफ (रिष्फ) चाथ (वाऽथ); संर. ८२६ रिःफषष्ठा (रिक्ताषष्ठ्य) चाथ (वाऽथ) वेशनं शुभम् (गृहवेशनम्).

‡ स्मृसा. ब्रकवत् ।

¶ शेषं ब्रकवत् । संग. संप्रवत् ब्रकवच्च ।

(१) ब्रक. ८५; स्मृसा. २ अदीप (प्रदीप) मुसले भू (मुसलभू); प्रपा. १५७ अग्न्यम्बुशून्ये (अत्यम्बुहीने) निर्यूपे (विधूमे); कृत. ४७२ शून्ये च तथा (पशुशून्ये च) शेषं स्मृसावत्; संप्र. १८६; विपा. ३०७ कृतवत्; संग. ४३१.

(२) ब्रक. ८५; स्मृसा. २ या (तं); प्रपा. १५७ या (सा); कृत. ४७२ या जातम (जातं तु अ) सृजते (सृजति); संप्र. १८६; विपा. ३०७ कृतवत्; संग. ४३१.

(३) ब्रक. ८५; स्मृसा. २ शना (शिनी); प्रपा. १५७; कृत. ४७२; संप्र. १८६; विपा. ३०७ तस्मात् (तस्याः); संग. ४३१–४३२.

(३) पशुः छागः । यूपोऽपि तस्यैव, उपस्थितत्वात् । विपा. ३०७

## पद्मपुराणम्

कृतरक्षे रम्ये प्राग्द्वारे उत्तरद्वारे वा सूतिकागृहे प्रवेशः, देवब्राह्मणगोपूजनम्, पुण्याहवाचनम्, प्रसूतानां स्त्रीणां प्रवेशनमुपचरणं च

**¹प्रविशेत् सूतिकागारं कृतरक्षं समन्ततः ।**
**सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः ।**
**प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम् ॥**

(१) शुभम् आयादिशुद्धम् । संप्र. १८५

(२) अथवोत्तरद्वारमित्यन्वयः । संर. ८२६

**²देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् ।**
**विप्रपुण्याहशब्देन शङ्खवाद्यरवेण च ॥**

**³प्रसूता बहवस्तत्र तथा क्लेशक्षमाश्च याः ।**
**हृद्या विश्वसनीयाश्च प्रविशेयुः स्त्रियश्च तत् ।**
**ताश्चानुलेपनैर्हृद्यैस्तत्रैवमुपचारयेत् ॥**

(१) प्रपा. १२७ गारं (संज्ञं); संप्र. १८५ प्रपावत्, सर्वे श्लोका विष्णुधर्मोत्तरे; संम. १४ द्वितीयार्धे नास्ति; विपा. २४५ रम्यं (दिव्यं); ज्योनि. १८१ रम्यं (सम्यग्) शेषं प्रपावत्, सर्वे श्लोका विष्णुधर्मोत्तरे; संको. ५८ प्रपावत्; संग. ४३१ प्रपावत्, तृतीयार्धे नास्ति, सर्वे श्लोका विष्णुधर्मोत्तरे; कुभ. ८४२ दृढं (हृद्वं) द्वितीयार्धे नास्ति; संर. ८२६ प्रपावत्.

(२) प्रपा. १२७; संप्र. १८५; संम. १४ पू.; विपा. २४५; ज्योनि. १८१ वाद्य (वेणु); संको. ५८–५९; संग. ४३१; कुभ. ८४२ पू.; संर. ८२६.

(३) प्रपा. १२७ क्षमाश्च (सहाश्च); संप्र. १८५–१८६; विपा. २४५–२४६; ज्योनि. १११ द्वितीयतृतीयार्धयोः (विश्वसनीया विप्राश्च प्रविशेयुः स्त्रियश्च तत्। तथाऽनुलेपनैर्धूपैस्तथैवमुपचारयेत् ॥); संको. ५९ क्षमाश्च याः (क्षमादयः) तृतीयार्धे नास्ति; संग. ४३१; संर. ८२६ युः स्त्रियश्च तत् (युर्गृहं स्त्रियः) शेषं सर्वे संकोवत्.

उपचारयेत्, गर्भिणीति शेषः । † संप्र. १८६

**¹आहारैश्च विहारैश्च प्रसवाय सुखं द्विज ।**
**एरण्डमूलचूर्णेन सघृतेन तथैव ताम् ।**
**सुखप्रसवनार्थाय पश्चात्काये विनिक्षिपेत् ॥**

पश्चात्काये पृष्ठभागे तां गर्भिणीं क्षिपेत् अनुलिम्पेत् । उपसूतिकेति शेषः । † संप्र. १८६

## लल्लः

सूतिकागृहस्य निर्माणे प्रवेशे च नक्षत्रम्

**²पुनर्वसौ नृपादीनां कर्तव्यं सूतिकागृहम् ।**
**श्रवणाभिजितोर्मध्ये प्रवेशं तत्र कारयेत् ॥**

## रत्नकोशे

सूतिकागृहनिर्माणे गर्भमासनियमः

**³आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः ।**
**तद्वत् प्रसवकाले स्यादिति शास्त्रेषु निश्चयः ॥**

आसन्नप्रसवे नवमे । प्रसवकालः दशमः, 'दशमे मासि सूतवे' इति मन्त्रलिङ्गात् । † संप्र. १८४

## मुहूर्तगणपतौ

सूतिकागृहप्रवेशे नक्षत्राणि

**⁵श्रवत्रयोत्तराहस्तत्रये पुष्यानुराधयोः ।**
**पुनर्भे रोहिणीयुग्मे रेवतीद्वितये तथा ।**
**शुभाह्ने प्रसवोद्युक्ता सूतिकामन्दिरं विशेत् ॥**

† संग. संप्रवत् ।

(१) प्रपा. १२७ द्विज (द्विजाः); संप्र. १८६; संम. १४ विनिक्षिपेत् (ऽनुलेपयेत्) प्रथमार्धे नास्ति; विपा. २४६ विनि (तु नि); ज्योनि. १११ तथैव ताम् (तथा घृतम्) शेषं प्रपावत् विपावच्च; संको. ५९ काये विनि (कार्ये तु तत्) प्रथमार्धे नास्ति; संग. ४३१ द्विज (द्विजः) नार्थाय (नार्थीयः) विनिक्षिपेत् (क्षिपेदिति); कुभ. ८४२-८४३ ताम् (तु) काये विनिक्षिपेत् (कार्येऽनुलेपयेत्) प्रथमार्धे नास्ति.

(२) ज्योनि. १८०.

(३) प्रपा. १२७ शास्त्रेषु नि (शास्त्रविनि); संप्र. १८४; विपा. २४४; ज्योनि. १८० संग. ४३० तद्वत् (तच्च). (५) संव. ५६–५७.

# सोष्यन्तीकर्म

## वेदाः

सोष्यन्त्या अभ्युक्षणम्

[1]**सोष्यन्तीमद्भिरभ्युक्षति– ' यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा ॥ इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः । तमिन्द्र निर्जहि गर्भेण सावरां सह ॥ ' इति ॥**

सोष्यन्तीमद्भिरभ्युक्षति प्रसवकाले सुखप्रसवनार्थम् अनेन मन्त्रेण ' यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः । एवा ते गर्भ एजतु ' इति । शंकर.

## बौधायनगृह्यशेषसूत्रम्

क्षिप्रप्रसवार्थमुदराभिमर्शनम् , जरायुपतनार्थं जठरसंमार्जनम्

[2]**अथ विजननकाले क्षिप्रंसुवनम् । शिरस्त उदकुम्भं निधाय पत्तस्तूर्यन्तीमथास्या उदरमभिमृशति– ' यथैव वायुः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणाऽपसर्पतु ॥ ' इति ॥**

¶**अथ यदि जरायुर्न पतेद्दर्भैरेव जठरं संमार्ष्टि– ' तिलदेऽवपद्यस्व न मांसमसि नो दलम् । स्थविर्यवपद्यस्व स्वप्स्ये ॥ ' इति ॥**

## आपस्तम्बगृह्यसूत्रम्

क्षिप्रप्रसवार्थमभिमर्शनावोक्षणे , जरायुपतनार्थमवोक्षणम्

[3]**क्षिप्रंसुवनम् ॥**

(१) येन कर्मणा क्षिप्रं सूयते तत् क्षिप्रंसुवनं नाम कर्मोच्यते । अनाकुला.

(२) येन क्षिप्रं शीघ्रं सूतेऽन्तर्वत्नी, न चिरं कालं पीड्यते, तत् क्षिप्रंसुवनं नाम कर्मोपदिश्यते । ताद.

[1]**अनाप्रीतेन शरावेणानुस्रोतसमुदकमाहृत्य पत्तस्तूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमुत्तरेण यजुषाऽभिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत् ॥**

(१) अनाप्रीतेन अस्पृष्टोदकेन । अनुस्रोतसम् उदकस्य प्रस्रवतः न प्रतीपम् । पत्तः पादयोः अधस्तात् यस्याः श्वेतोपमानि पत्राणि पीतोपमानि पुष्पाणि, या च मध्याह्ने पुष्यति, सा तूर्यन्ती वनेषु जायते । वेणुपत्रोपमानि च यस्याः पत्राणि रक्तोपमानि च पुष्पाणि, यां चाग्निशिखेत्याहुः , सा शोष्यन्ती, तत् ओषधिद्वयं समूलपत्रमादाय सुश्लिष्टं निदधाति । मूर्धन् मूर्धनीत्यर्थः । अपरे पिष्ट्वा आलिम्पन्ति । अथ तामुत्तरेण यजुषा ' आभिष्ट्वाऽहं दशभिरभिमृशामि ' इत्यनेनाभिमृशति । दशभिरिति लिङ्गादुभाभ्यां पाणिभ्यामभिमर्शनम् । अनुलोमं मुखादारभ्य । तत एताभिराहृताभिरेवाद्भिस्तामवोक्षेत् उत्तराभिस्तिसृभिः ऋग्भिः ' यथैव सोमः पवते ' इत्येताभिः । प्रतिमन्त्रमवोक्षणम् । अनाकुला.

(२) पत्तः तस्याः पादयोः तूर्यन्तीम् अधःपुष्पिताख्यामोषधिं निधाय । शोष्यन्तीं प्रसवपीडया शुष्यमाणां स्त्रियम् ' आभिष्ट्वाऽहं दशभिरभिमृशामि ' इति यजुषोभाभ्यां हस्ताभ्याम् । मूर्धन् मूर्धनि अभिमृश्य । एताभिराहृताभिरद्भिः उत्तराभिः ' यथैव सोमः पवते ' इत्यादिभिस्तिसृभिस्तां सकृदेवावोक्षेत् । केचित्– प्रतिमन्त्रम् , दृष्टोपकारकत्वादिति । तत्र प्रथमाया ऋचः ' प्रतितिष्ठतु ' इत्यवसानम् , द्वितीयायाः ' तथा कृतम् ' इति, तृतीयायाः ' सरस्वतीः ' इति । अन्ये तु– शोष्यन्तीति चौषधिः , तां मूर्ध्नि निधाय स्त्रियं यत्र कचाभिमृशे-

---

¶ इदं जरायुपतनार्थं कर्म प्रसवोत्तरमनुष्ठेयत्वान्न सोष्यन्तीकर्मेति भवति प्रतिपत्तिः तथाऽपि पूर्वमन्त्रे ' सह जरायुणा ' इत्यादिमन्त्रलिङ्गात् जरायुपतनान्तः प्रसवोऽत्र सूत्रकाराभिप्रेत इति प्रतीयते ।

(१) बृउ. ६।४।२३ ; शब्रा. १४।९।४।२२ वायुः ( वात ) व्रजः ( वज्रः ) सार्गलः ( सार्गडः ) सावरां ( सावरं ). (२) बौगृशे. २।३।१२–१३.

(३) आपगृ. १४।१३.

(१) आपगृ. १४।१४ ; बाल. १।११–१२ पृ. १५.

दिति । तन्न, शोष्यन्तीसंज्ञाया ओषधेरप्रसिद्धत्वात् । केचित्– शोष्यन्तीनामौषधिः या वनेषु जायते, वेणुपत्रोपमानि च यस्याः पत्राणि, पुष्पाणि च रक्तोपमानि, यां चाग्निशिखेत्याहुरिति । तन्न, यतो वाच्यवाचकभावो नोपदेशगम्यः । यथाऽऽहुर्वार्तिककारपादाः– 'वाच्यवाचकभावो हि नाऽऽचार्यैरुपदिश्यते । अन्यथानुपपत्त्या तु व्यवहारात् स गम्यते ॥' (तं. वा. १।३।९) इति । इह तु व्यवहाराभावादेव विप्रतिपत्तिः । सा भाष्यकारादप्यासतमप्रणीताभिधानकोशेषु शोष्यन्तीशब्दस्याग्निशिखापरपर्यायतया पाठाच्छाम्यति । न च तथा दृश्यते । तस्मादरं पूर्वोक्तमेव व्याख्यानमिति । ‡ ताद.

**'यदि जरायु न पतेदेवंविहिताभिरेवाद्भिरुत्तराभ्यामवोक्षेत् ॥**

(१) अथान्यद्भैषज्यमाह– यदीति । जरायु गर्भावेष्टनम्, तद्यदि न पतेत् तत उत्तरो विधिः कर्तव्यः । कः पुनरसौ ? क्षिप्रंसुवने यो विधिश्चोदितः 'अनाप्रीतेन शरावेण' इत्यादि, एवंविहिताभिरद्भिः उत्तराभ्यां मन्त्राभ्याम् 'तिलदेऽव पद्यस्व, निरैतु पृश्नि शेवलम्' इत्येताभ्यां प्रतिमन्त्रमवोक्षेत् । एते च कर्मणी स्वभार्याविषयौ(? ये), 'यक्ष्मगृहीतामन्यां वा' इति कर्मान्तरे यत्नकरणात् । अन्ये पुनरविशेषेणेच्छन्ति ।

अनाकुला.

(२) यदि प्रसूतायास्तस्या जरायु गर्भप्रावरणं न पतेत्तदा 'अनाप्रीतेन शरावेण' इत्यादिविधिनाऽऽहृताभिरद्भिः 'ऐतु गर्भो अक्षितः' इत्येताभ्यामृग्भ्यां तामवोक्षेत् । केचित्– प्रतिमन्त्रम् । तथा पूर्वस्मिन्नवोक्षणे षडवसानास्तिस्र ऋचः, इह तु 'तिलदेऽव पद्यस्व' इत्येका ऋक्, 'निरैतु पृश्नि' इत्यपरं यजुरिति ।

ताद.

‡ शेषम् अनाकुलागतम् ।

(१) आपगृ. १४।१५.

## हिरण्यकेशिगृह्यसूत्रम्

क्षिप्रप्रसवार्थमुदराभिमर्शनमवमार्जनं च, जरायुपतनार्थं मूर्धावसेकः, कर्मणोऽस्य टीकायां मतभेदेन काम्यत्वं नित्यत्वं च

**'विजननकाले क्षिप्रप्रसवनम् । शिरस्त उदकुम्भं निधाय पत्तस्तूर्यन्तीमथास्या उदरमभिमृशति । 'यथैव वायुः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणाऽवसर्पतु ॥' इत्यवाङवमार्ष्टि ॥**

(१) विजननकाले प्रसवकाले क्षिप्रं प्रसूयते येन कर्मणा तत् क्षिप्रप्रसवनम् । तदेव प्रमादपाठो वा । तद्वक्ष्यते । शिरस्तः शिरःसमीपे उदकुम्भं निधाय । पत्तः पादसमीपेऽस्याः स्त्रियाः । उभयत्र तसिः । पद्भावश्छान्दसः । तूर्यन्तीम् अवकाम् । केचित्तामौषधविशेषमाहुः । तां निधायानन्तरमस्या उदरमभिमृशति । कथम् ? यथैवेत्यनेन । अवाङ् अधोपवर्गम् अवमार्ष्टि सुतरामायोनिं(? नि) निमार्ष्टि । यद्येवम् 'अथास्या उदरं यथैवेत्यवाङवमार्ष्टि' इत्येतावता सिध्यति । एवं तर्ह्यथास्या उदरमभिमृशति यथैवेत्यनेन । ततस्तूष्णीमवाङवमार्ष्टि । अथवा, तूष्णीमभिमृशति, मन्त्रेणावाङवमार्ष्टि । एवमवसर्पत्विति लिङ्गोपपत्तिः । अत्राथशब्दोऽनित्यत्वख्यापनार्थः । तेन काम्यमिदम्, न पुंसवनवन्नित्यम् । श्रमपरिहारार्थं शुभाशुभयोरपेक्षया कार्यमिति नित्यत्वख्यापनार्थमितीतरे । मातृद.

(२) उदराभिमर्शो मन्त्रेण तूष्णीमवमार्जनमिति प्रथमे व्याख्याने । उदराभिमर्शस्तूष्णीं मन्त्रेणावमार्जनमिति द्वितीयव्याख्याने । पूर्वव्याख्यानेऽपरितोषादेव व्याख्यानान्तरं कृतं वृत्तिकृता । यथाऽऽहुर्भट्टपादाः– 'पूर्वव्याख्यानतोऽन्यस्य द्वयमिष्टं प्रयोजनम् । पूर्वत्रापरितोषो वा विषयाप्याप्तिरेव वा ॥' इति । अत्रापरितोषोऽवसर्पत्विति लिङ्गानुपपत्तिरूपदोषवशेन । $ संर. ८२७

$ शेषं मातृदत्तगतम् ।

(१) हिगृ. २०।१।११ ; संर. ८२६.

'यद्यपरा न पतेदञ्जलिनोदकमादाय मूर्धानमस्याव( ? स्या अव )सिञ्चेत्-- 'तिलदेऽवपद्यस्व न मांसमसि नो दलमवपद्यस्व स्वपथात्' इति॥

यदि अपरा जरायुः प्रसूताया न पतेत् न निर्गच्छति, अञ्जलिनोदकमादाय अस्या मूर्धानमवसिञ्चेत् प्रक्षालयेत् मूर्ध्नि सिञ्चेदित्यर्थः, 'तिलदेऽव' इत्यनेन । नैमित्तिकमिदम् । मातृद०.

## भारद्वाजगृह्यसूत्रम्

क्षिप्रप्रसवार्थमभिमर्शनावोक्षणे स्रग्दर्शनपरिमोकौ च, जरायुपतनार्थं मूर्धावसेकः

'अथ क्षिप्रंसुवनम् । यज्ञोपवीतं कृत्वाऽप आचम्यानाप्रीतेन शरावेणानुस्रोतसमुदकमाहृत्य पत्तस्तूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमभिमृशति-- 'दशभिस्त्वाऽङ्गुलीभिरभिमृशामि दशमास्याय सूतवै' इति । अथैनामद्भिरवोक्षति-- 'यथैव वातः पवते यथा समुद्र एजति । एवं कुमार एजतु सह जरायुणाऽवपद्यताम्॥' इति। अथ यद्यपरा न पतेत् पाणिनोदकमाय मूर्धन्येनामवसिञ्चेत्-- 'तिलदेऽवपद्यस्व न मांसमसि नो दलमवपद्यस्वासौ' इति॥

'अथ यदि चिरं न विजायते स्रजमेनां दर्शयेत् । परिमुक्तायां क्षिप्रमेवोपनिर्हरेत्॥

## काठकगृह्यसूत्रम्

क्षिप्रप्रसवार्थं शिरःप्रभृत्याहृदयमभिमर्शः, टीकायां होमः

'अथ सोष्यन्तीसवनम्॥

अनन्तरं सोष्यन्तीसवनं नाम दृष्टार्थं कर्मोच्यते । यौगिकीयं संज्ञा । सूयतेऽनेन सवनं सुखप्रसवकं कर्म । सोष्यमाणायाः आसन्नप्रसवायाः सवनं सोष्यन्तीसवनम् । § देव.

विजनिष्यमाणाया अद्भिः पाणिं स्रवन्तं शिरस्याधायाऽऽ हृदयादभिमृशेत्-- 'यथाऽयं वातः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणाऽवपद्यताम्॥' इति॥

विजनिष्यमाणायाः आसन्नप्रसवायाः अद्भिः स्रवन्तं पाणिं शिरस्याधाय हृदयं यावदभिमृशेत् । भर्ता अत्र कर्ता, तदसंनिधावातः कश्चिद्देवरादिः । मन्त्रमाह-- यथाऽयमिति । अनेन मन्त्रेणाभिमृशेत् । यथा प्रत्यक्षो वायुरयं वेगवाही पवते धावति, यथा वा समुद्र एजति कम्पते, एवं ते तव गर्भ एजतु तूर्णं प्रजायताम्, जरायुणा गर्भाशयेन सह अवपद्यतां निर्गच्छतु । ¶ देव.

क्षिप्रमेव प्रजायते॥

(१) तथा सति क्षिप्रमेव सुखेन प्रसूयते इति इति दृष्टार्थतामस्य कर्मण आह । ¶ देव.

(२) सोष्यन्तीसवने त्रिकादिभिर्होमः 'तव श्रिये' इत्यादि 'येन रक्षसि दाशुषे' इत्यन्तम् । ब्राह्म.

## वाराहगृह्यसूत्रम्

क्षिप्रप्रसवार्थं समन्त्रकः कुक्ष्यभिमर्शः मन्त्रश्रावणं वा

१ 'रेतो मूत्रम्' इति च्यावनीभ्यां दक्षिणकुक्षिमभिमृशेत्, श्रावयेद्वा॥

## आग्निवेश्यगृह्यसूत्रम्

क्षिप्रप्रसवार्थमुदरस्याभिमर्शनं मार्जनं च, जरायुपतनार्थं मूर्धावसेकः

'विजननकाले क्षिप्रं सुवनम् । शिरस्त उदकुम्भं निधाय पत्तस्तूर्यन्तीम् । अथास्या उदरमभिमृशति । 'यथैव वायुः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणाऽपसर्पतु॥' इत्यद्भिर्मार्ष्टि॥

§ आवि. देववत् ।

(१) हिगृ. २०१।१३. (२) भागृ. १।२२.
(३) भागृ. १।२५. (४) कागृ. ३३।१-३.

¶ आवि. देववत् ।

(१) वागृ. १.
(२) आग्निगृ. २।१।३.

यद्यपरा न पतेत् तदञ्जलिनोदकमादाय मूर्धानमस्या विसिञ्चेत्— 'तिलदेऽवपद्यस्व न मांसमसि नो दलमवपद्यस्व स्वस्त्या' इति ॥

## पारस्करगृह्यसूत्रम्

क्षिप्रप्रसवार्थमभ्युक्षणम्, जरायुपतनार्थं जपः

[1]सोष्यन्तीमद्भिरभ्युक्षति – 'एजतु दशमास्यः' इति प्राक् 'यस्यै ते' इति ॥

[2]अथावरावपतनम्— 'अवैतु पृश्निशेवलं शुने जराय्वत्तवे । नैव मांसेन पीवरीं न कस्मिंश्चनाऽऽयतमव जरायु पद्यताम्' इति ॥

(१) सोष्यन्ती... इति । षूङ् प्राणिगर्भविमोचने । गर्भं विमुञ्चन्तीं विजनयन्तीमित्यर्थः । अद्भिरभ्युक्षति 'एजतु दशमास्यः' इत्यनेन मन्त्रेण । 'प्राग्यस्यै ते' इति चोच्यते प्रकरणे पाठाभावात् परिसमाप्तत्वाच्च वाक्यस्य । अथावरावपतनम् । मन्त्रं जपतीत्यध्याहारः । अवरेति जरायुविशेषः, अभिधानात् । तस्याधःपतने जपः पितुः 'अवैतु पृश्निशेवलम्' इत्यस्य । § कभा.

(२) सोष्यन्तीं गर्भं मुञ्चन्तीं प्रसवशूलवतीमित्यर्थः । अद्भिरभ्युक्षति भर्ता वक्ष्यमाणमन्त्रेण । अवरः जरायुविशेषः । तस्य अव अधः पतनं पतनहेतुं मन्त्रं जपति पिता । $ जभा.

(३) अथावरावपतनम् । अथ अभ्युक्षणानन्तरम् अवरावपतनम्—अवरम् उल्बं जरायुवेष्टितं गर्भवेष्टनमवाचीनम् अधः पतत्यनेन जप्तेनेत्यवरावपतनो मन्त्रः, तं स्त्रीसमीपे उपविश्य भर्ता जपति, यथा 'अवैतु पृश्निशेवलम्' इत्यादि 'अव जरायु पद्यताम्' इत्यन्तम् । अवरावपतनमन्त्रो भर्त्रा जाप्यः । ¶ हभा.

(४) 'जरायुणा सह' इत्यत्र परिसमाप्तत्वाद्वाक्यस्य 'प्राग्यस्यै ते' इत्युच्यते । न ह्यत्र परादिना पूर्वान्तन्यायः, प्रकरणान्तरे पाठात् । मन्त्रार्थः— हे सोष्यन्ति, तव जरायु अव अधः एतु आयातु पतत्वित्यर्थः । किंभूतम्? पृश्नि नानारूपं शेवलं पिच्छलं जलोपचितं वा । किमर्थम्? शुने श्वानमुपकर्तुम् । यद्वा शुने इति षष्ठ्यर्थे चतुर्थी । शुनः अत्तवे भक्षणाय । हे पीवरि पुत्रादिगर्भधारणेन सुपुष्टगात्रि, तच्च जरायु मांसेन गर्भव्यथकावयवेन सह आयतं संबद्धं विस्तृतं वा अधः नैव पद्यतां पततु न च कस्मिंश्चन गर्भो विपद्यतां निमित्ते सत्यपि इति । * गभा.

## गोभिलगृह्यसूत्रम्

सुखप्रसवार्थं होमः, मन्त्रे अपत्यनामग्रहणं तद्गोपनं च

[1]अथ सोष्यन्तीहोमः ॥

(१) अथ अनन्तरं शोष्यन्तीं शूलापन्नाम् आसन्नप्रसवां ज्ञात्वा होमः शोष्यन्तीहोमः । कर्तव्य इति शेषः । सुप्रसवे । $ संत. ९१५

(२) अथेत्ययमपूर्वप्रकरणोपन्यासार्थः । § मृदुला.

[2]प्रतिष्ठिते वस्तौ परिस्तीर्याग्निमाज्याहुती जुहोति— 'या तिरश्ची' इत्येतयर्चा 'विपश्चित् पुच्छमभरत्' इति च ॥

(१) प्रतिष्ठिते वस्तौ वस्तिदेशं प्राप्ते तत्र स्थिते गर्भे सोष्यन्तीहोमः कर्तव्यः । ¶ व्रक. ८४

---

§ विभा. कभा—जभा—हभा—गभागतम् ।

$ शेषं कभागतम् ।

¶ शेषं कभागतं जभागतं च ।

(१) पागृ. १।१६।१; विश्व. १।१९ (सोष्यन्तीमद्भिरभ्युक्षति) एतावदेव.

(२) पागृ. १।१६।२.

* शेषं कभा—जभा—हभागतम् ।

$ संप्र. संतगतम् ।

§ शेषं संतवत् ।

¶ स्मृसा. व्रकवत् ।

(१) गोगृ. २।७।१३; व्रक. ८४; स्मृसा. २; संत. ९१५ सोष्य (शोष्य); संप्र. १८७ होमः (होमं); संग. ४३५ संप्रवत्.

(२) गोगृ. २।७।१४; व्रक. ८४ हुती जु (हुतीर्जु); स्मृसा. २ (प्रतिष्ठिते वस्तौ) एतावदेव; संत. ९१५ ज्याहुती जु (वाज्याऽऽहुतीर्जु) भरत् (भवत्) (च०); संप्र. १८७ व्रकवत्; संग. ४३५ व्रकवत्.

( २ ) वस्तिः योनिद्वारम् । वस्तौ स्थिते गर्भे । प्रतीत्युपसर्गः । परिस्तीर्याग्निमिति सिद्धे पुनर्वचनं परिसंख्यानार्थम्— परिस्तरणमात्रमेव, न तु ब्रह्मोपवेशनाद्यपीति । ततश्च अयं क्षिप्रहोमः । परिस्तरणाज्यसंस्कारावेवात्राधिकौ, अल्पत्वात् कालस्य । 'या तिरश्ची' इत्याभ्यां जुहोति । ¶ संत. ९१५

( ३ ) अग्निं परिस्तीर्य । परिस्तरणमुक्तम् । तत् कृत्वा द्वे आज्याहुती जुहोति पतिः 'या तिरश्ची' इत्यादिऋग्भ्यां प्रत्येकं स्वाहान्ताभ्याम् । ऋचौ यथा— 'या तिरश्ची निष्पद्यते अहं विधरणी इति । तां त्वा घृतस्य धारया यजे संराधिनीमहम् । संराधिन्यै देव्यै देष्ट्र्यै स्वाहा ॥ विपश्चित् पुच्छमभरत्तद्धाता पुनराहरत् । परेहि त्वं विपश्चित्पुमानयं जनिष्यतेऽसौ नाम स्वाहा ॥' इति । अर्थो यथा— हे संराधिनि तदभिख्ये देवते, या ते धारणा शुभे कर्मणि प्रस्तूयमाने 'अहं विधारणी शुभफलविघातकारिणी' इति, एवंविधा सती तिरश्ची वाञ्छितफलविघ्नकारिणी निष्पद्यते । अहं तां तादृग्धारणावर्तीं त्वा त्वामेव देवतां घृतस्य धारया यजे पूजयामि । कथंभूतां त्वाम् ? संराधिनीं सम्यक्साधिनीं प्राणिनामिष्टस्य । तस्यै संराधिन्यै देव्यै दानादिगुणविशिष्टायै अत एव देष्ट्र्यै शुभफलानां दात्र्यै स्वाहा सुहुतमस्तु ।

विपश्चित् कश्चिद्देवविशेषः । स पुच्छं शिश्नं शिशूनाम् अभरत् अहरत् हृतवान् । तत् विपश्चिदाहृतं- ( ? ता हृतं ) पुच्छं धाता प्रजापतिः पुनः आहरत् आनीतवान् । तदनुध्यानेन तत् पुनर्यथावस्थितमवातिष्ठत । इति परोक्षमुक्त्वा प्रत्यक्षमुच्यते— हे विपश्चित् , त्वं परेहि परागच्छ दूरमपसर । येन अयं मद्बुद्धिस्थो मयाऽभिध्यातोऽत्र गर्भिण्यां पुमान् शिश्नसंपन्नो जनिष्यते उत्पत्स्यते असौ नाम देवदत्ताभिधानः । तस्मै तुभ्यं स्वाहा सुहुतमस्तु इति । ‡ मृदुला.

¶ संप्र. संतगतम् ।

‡ शेषं संतवत् ।

[१]'पुमानयं जनिष्यतेऽसौ नाम' इति नामधेयं गृह्णाति ॥

( १ ) असौ नाम इत्येतस्मिन् सर्वनाम्नि 'देवदत्तशर्मा नाम स्वाहा' इत्येवम् । संत. ९१५

( २ ) स्वार्थे धेयप्रत्ययः । † मृदुला.

यत्तद् गुह्यमेव भवति ॥

यत् तदानीं नाम गृह्णाति तत् गुह्यम् अप्रकाश्यं भवति । एवकारकरणाद्यावज्जीवं स्वयमपि न गृह्णीयाज्ज्येष्ठस्येति । स्मर्यते— 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥' इति । अपरं चैतत् कारणम् — यद्रिपुणा तज्ज्ञातमभिचार उपयोजितं महतेऽनर्थायावकल्पेतेति । अत्र शङ्खः — 'काकादन्याः सेचकघातक्याः कोशातक्या बृहत्याः कालक्लीतकस्य मूलानि पेषयित्वोपलेपयेद्देशं यस्मिन् प्रजायेत रक्षसामपहत्यै' इति । काकादनी काकजङ्घा । गुञ्जेत्येके । सेचकघातकी काकमाची । कोशातकी घोषकः, सोनखेसर इति प्रसिद्धः । कालक्लीतकः कृष्णगुञ्जा । मार्कण्डेयपुराणे— 'अग्न्यम्बुशून्ये च तथा निर्यूपे सूतिकागृहे । प्रदीपशस्त्रमुशलभूतिसर्षपवर्जिते ॥ अनुप्रविश्य जातं तमपहृत्याऽऽत्मसंभवम् । क्षणप्रसविनी बालं तत्रैवोत्सृजति द्विज ॥ सा जातहारिणी नाम सुघोरा पिशिताशनी । तस्मात् संरक्षणं कार्यं यत्नतः सूतिकागृहे ॥' इति । यूपोऽत्र यूपाकारः काष्ठविशेषः । बैजवापः — 'षष्ठेऽह्नि रात्रिजागरणं जन्मगानं च कारयेत्' इति । मृदुला.

## खादिरगृह्यसूत्रम्

होमः , मन्त्रे गोपनीयनामग्रहणम्

[२]प्रतिष्ठिते वस्तौ सोष्यन्तीहोमः ॥

वस्तौ गर्भे प्रतिष्ठिते स्वस्थानात् प्रच्युते । प्रोपसर्गस्तिष्ठतिर्गमनवाचकः । प्रतिगर्भमेतत् , जायमानार्थत्वात् ।

† शेषं संतवत् ।

(१) गोगृ. २।७।१५–१६.

(२) द्रागृ. २।२।२९–३२.

प्रणीतेऽभावेतत् । नात्रान्वारम्भः, अतत्संस्कारत्वात् । अकृते यदि जननं स्यात् न तत्र पुनः क्रिया, जनिष्यते इति मन्त्रलिङ्गात् । तत्राऽऽशौचादूर्ध्वं प्रायश्चित्तेनैव संस्कारः । रुद्रभा.

**'या तिरश्ची' इति द्वाभ्याम् ॥**

प्रपदान्तं कृत्वा व्याहृतिभिस्तिसृभिः हुत्वा 'या तिरश्ची' इति हुत्वा 'विपश्चित्पुच्छम्' इति जुहुयात् । रुद्रभा.

**'असौ' इति नाम दध्यात् ॥**

यदि पुंनामाभिलषितं 'विष्णुशर्मा नाम' इतिवत् मन्त्रस्थेऽसौशब्दे नाम निदध्यात् । 'युग्माक्षरं ब्राह्मणस्य माङ्गल्यं शर्मवत् स्यात् । बलरक्षान्वितं क्षत्रियस्य । धनपुष्टिसंयुतं वैश्यस्य । जुगुप्साप्रेष्यसंयुतं शूद्रस्य', 'युग्माक्षरं ब्राह्मणस्य द्व्यक्षरं चतुरक्षरम् ।', 'माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् । वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् । वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥' (मस्मृ. २।३१,३२) इति मनुवचनाच्च । रुद्रभा.

**तद्गुह्यम् ॥**

तदिति । वैदिककर्मार्थमेतत् । व्यावहारिकं त्वन्यदेव, गुह्यत्वोक्तेः । नामापरिज्ञाने आभिचाराद्यसिद्धिः फलम् । रुद्रभा.

## कौशिकगृह्यसूत्रम्

सुखप्रसवार्थं गर्भिण्या मूर्ध्नि मुञ्जेषीकाधारणम्, उष्णजलेन दक्षिणकेशस्तुकाप्लावनम्, सूतिकागृहग्रन्थिच्छेदनम्, योक्त्रबन्धनम्, स्रजौषधीनां परिक्षेपणं बन्धनं च, स्रजौषधिमूलखननादि, सजलोमाफलानां गर्भिणीहस्ते श्रोतनम्, ब्राह्मणायनेन गर्भिण्यङ्गस्पर्शनम्, अपत्यमरण–पुत्रप्राप्तिसूचनं कर्माङ्गनिष्पत्तिविशेषेभ्यः

**[1] 'वषट् ते पूषन्' इति चतुर उदपात्रे संपातानानीय चतुरो मुञ्जान् मूर्ध्नि विबृहति प्राचः ॥**

अथ प्रसवकाले इदं कर्म क्रियते यथा सुखेनैव प्रसवो भवतीत्यर्थः । अथ प्रसूतिकरणमुच्यते । दाकेटी.

**प्रतीचीरिषीकाः ॥**

**छिद्यमानासु संशयः ॥**

छिद्यमानासु मुञ्जेषीकासु गर्भसंस्थमरणं भवेत् । एकं कर्म । दाकेटी.

**उष्णेनाऽऽप्लावयति दक्षिणात् केशस्तुकात् ॥**

**शालान् ग्रन्थीन् विचृतति ॥**

शालान् ग्रन्थीन् विचृतति । द्वितीयं कर्म । दाकेटी.

**उभयतःपाशं योक्त्रमाबध्नाति ॥**

कटिप्रदेशे बध्नाति । तृतीयं कर्म । केचित् 'वषट् ते पूषन्' इति सूक्तेन तैलमभिमन्त्र्य प्रसवकाले अभ्यञ्जनं कुर्वन्ति । दाकेटी.

**'यदि सोमस्यासि राज्ञः सोमात्त्वा राज्ञोऽधिक्रीणामि यदि वरुणस्यासि राज्ञो वरुणात्त्वा राज्ञोऽधिक्रीणामि' इत्येकविंशत्या यवैः स्रजं परिकिरति ॥**

**'अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत । सध्रीचीः सव्रता भूत्वाऽस्या अवत वीर्यम् ॥' इति संनयति ॥**

'अन्या वो अन्यामव' इति ओषध्यस्ता एवमेकत्र बध्नाति । दाकेटी.

**'मा ते रिषन् खनिता यस्मै च त्वा खनामसि । द्विपाच्चतुष्पादस्माकं मा रिषद्देव्योषधे ॥ स्रजो नामासि प्रजापतिष्ट्वामखनदात्मने शल्यस्रंसनम् । तां त्वा वयं खनामस्यमुष्मै त्वा शल्यस्रंसनम् ॥' इत्यस्तमिते छत्रेण चान्तर्धाय कालेन खनति ॥**

यत्र क्वचिदोषधिखननं तत्र सर्वत्रानेन विधानेन कर्तव्यम् । दाकेटी.

---

(१) कौसू. ३३।१–२०.

'अत्र तव राध्यताम्' इत्यग्रमवदधाति ॥
'इह मम' इति मूलमुपयच्छति ॥
एकसरेऽनुपलीढे कुमारः ॥
दर्भेण परिवेष्ट्य केशेषूपचृतति ॥
एवं ह विवृहशाकवृषे ॥
अवपन्ने जरायुण्युपोद्धरन्ति ॥
स्रजेनौषधिखननं व्याख्यातम् ॥
चत्वार्युमाफलानि पाणावद्भिः श्चोतयते ॥
संवर्तमानेषु कुमारः ॥

यदि तान्येकत्र भवन्ति तदा पुत्रो जायते। विज्ञानकर्मेदम्। दाकेटी.

ब्राह्मणायनोऽङ्गान्यभिमृशति ॥
पुंनामधेये कुमारः ॥

यदि पुंनामधेयं स्पृशन्ति तदा कुमारो जायते। दाकेटी.

## वैखानसगृह्यसूत्रम्

तिसृभिश्चतसृभिर्वा स्त्रीभिर्गर्भिणीसंवाहनम्, आसन्नप्रसवचिह्नम्, योन्यामोषधिरससेचनम्, योनिधूपनम्, हस्तपादे ओषधिमूलनिधानम्

[1]तज्ज्ञाः स्त्रियस्तिस्रः चतस्रो वा परिगृहीनां संवाहयेयुः। कुक्षौ शिथिले हृदयबन्धं मुक्त्वा सशूले जघने प्रजायत इत्यवधारयेत्। गर्भसङ्गे विशल्यां सुवर्चलां वा योनौ निष्पीड्य निदध्यात्। धूपयेत् पिण्डीतकेनाहिकृत्या वा योनिम्। हरिण्यपुष्प्या मूलं हस्तपादयोरादधाति ॥

## ऋग्विधाने

सुखप्रसवार्थे जपः अभिमन्त्रितमुदकपानं च

[2]प्रमन्दिने प्रसूयन्त्यां जपेद्गर्भप्रमोचनीम्।
इन्द्रं च मनसा ध्यायेन्नारी गर्भं प्रमुञ्चति ॥

[1]विजिहीष्व वनस्पते तदिदं च्यावनं स्मृतम्।
यश्च्यावयितुकामः स्याच्च्यावयेत्तदिदं जपन् ॥
[2]स्त्रियं गर्भप्रमूढां वा पाययेदनुमन्त्रितम्।
उदकं च्यावनेनैव गर्भोऽधश्च्यवते सुखम् ॥

अन्यच्च— 'विजिहीष्व ... जपन् ॥ द्विषन्तं वा पदाऽऽक्रम्य भूमौ जन्तुं समीकृतम्। निष्पिषन्निव संग्रामाच्च्यावयेन्नात्र संशयः ॥' इत्युक्त्वाऽभिहितम्— 'स्त्रियं गर्भं ... ॥' इति। पाठस्तु— विजिहीष्वेति पञ्चर्चस्य सूक्तशेषस्य आत्रेयः सप्तवध्रिर्ऋषिः, गर्भस्रावो देवता, अनुष्टुप् छन्दः, सुखप्रसवसिद्ध्यर्थं जलाभिमन्त्रणे विनियोगः। 'विजिहीष्व... जीवन्त्या अधि ॥' (ऋसं. ५।७८।५–९) इति पञ्चर्चेन जलमभिमन्त्र्य वा पाययेत्। एवं कृते च सुखप्रसवो भवति। 'दश मासानुषित्वाऽसौ जननीजठरे सुखम्। निर्गच्छतु सुखं जीवो जननी चापि जीवतु ॥' इति पौराणमन्त्रेणापि जलाभिमन्त्रणं कार्यमिति कश्चित्। 'पुरुषे ह वा अयमादितो' इत्याद्यारण्यकम्, बृहदारण्यकं च जपेत्। विपा. २६७

## सोमः

गुह्यनामकरणम्

[3]सूतिकागृहसंस्कारप्रसवान्तं कर्म जातकर्म गुह्यनामकरणम् ॥

अयमर्थः— सूतिकागृहसंस्कारं कृत्वा प्रसवस्यान्तभूतं जातकर्म कार्यमिति। अन्तशब्देनात्रान्तसंबन्धिकर्म लक्ष्यते। ब्रक. ८४

---

(१) वैगृ. ३।१४.

(२) प्रपा. १३० ने प्रसू (नेत्यसू); विपा. २६५ ने प्रसू (न इत्यसू) प्रमु (विमु); संको. ५९ प्रसूयन्त्यां (ऋच्चं त्वेतां); कुभ. ८४३ प्रमो (विमो) प्रमु (विमु); संर. ८२७.

(१) प्रपा. १३० हीष्व (हीर्ष्व); विपा. २६५ यश्चयाव (प्रच्याव); संको. ५९ यश्चयावयि (प्रच्यावय) दिदं (मिदं) शेषं प्रपावत्.

(२) प्रपा. १३० उत्तरार्धे (उदकं पाययेत्तेन गर्भस्तु च्यवते सुखम् ॥); विपा. २६५; संको. ५९ उदकं च्या (उदकच्या).

(३) ब्रक. ८४.

## पुराणम्

गार्भिणीपेयजलाभिमन्त्रणमन्त्रः

*[1]दश मासानुषित्वाऽसौ जननीजठरे सुखम् ।
निर्गच्छतु सुखं जीवो जननी चापि जीवतु ॥

## अनिर्दिष्टकर्तृकवचनानि

सुखप्रसवार्थमोषधिमूलानां कटौ बन्धनम्, ओषधिविशेषाणां योन्यादिषु लेपः, पेयमौषधम्, अभिमन्त्रिततैलस्य पानमुदरलेपो योनिनिषेकश्च, केशेषु दूर्वाङ्कुरोपगूहनम्

[2]हिङ्गुसैन्धवसंयुक्ततक्रकाञ्जिकया युता ।
प्रसूते स्त्रीकटौ बद्धे मूले वा मातुलङ्गजे ॥
पाठापामार्गमूलाभ्यां योनिमध्ये विलेपनात् ।
प्रसूतिर्जायते शीघ्रं सुखं दुःप्रसवस्त्रियाः ॥
पाठालाङ्गलिसिंहास्यमयूरकजटैः पृथक् ।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥
सुप्रसूतिकरी बद्धा कदलीमूलिका कटौ ॥

[3]पत्राणि निम्बस्य च संप्रपिष्य
त्वक्संयुतां वा तुलसीं रसाढ्याम् ।
मूलाप्रधानं च कपित्थपत्रं
करञ्जबीजं च समस्तमेतत् ॥
अजापयःसंयुतमेव पथ्यं
घृतं च तैलेन युतं समस्तम् ।
योनेः प्रलेपं विदधीत तेन
तत्रापि तस्याः खलु सौख्यसिद्ध्यै ॥
गर्भान्तरादर्भक एति सम्यग्
द्वारं तु योनिर्न करोति दुःखम् ।
एवं विधानं न करोति जानन्
स भ्रूणहा नात्र विचार्यमस्ति ॥

[1]वृषस्य मूलं यदि नाभियोनि-
प्रलेपितं स्त्री झटिति प्रसूते ।
तथा कटिस्थः कदलीसुकन्दो
वेगात्प्रसूतिं कुरुतेऽङ्गनानाम् ॥

वृषः अडुळसा, तस्य मूलम् । संर. ८२७

[2]'हिमवत्युत्तरे पार्श्वे शबरी नाम यक्षिणी ।
तस्या नूपुरशब्देन विशल्या भवतु गर्भिणी
स्वाहा ॥'

शास्त्रान्तरे उपायान्तरम् – "हिमवत्युत्तरे ... ॥' अनेनैरण्डतैलं महिषीक्षीरमिश्रितमभिमन्त्र्य पाययेत् उदरे लापयेच्च" इति । ग्रन्थान्तरे तु "हिमवत्युत्तरे पार्श्वे' इत्यमुं मन्त्रं जपन्नेकविंशतिदूर्वाङ्कुरैस्तिलतैलमेकपलं प्रदक्षिणमावर्तयन्नष्टशतं जपित्वा तत्तैलं किंचित् पाययित्वा शेषं योनौ निषेचयित्वा( ? षेच्य ) दूर्वाङ्कुरान् केशेषूपगूहेत्" इत्युक्तम् । संर. ८२७

## विधानमालायाम्

सुखप्रसवार्थो योनावोषधिमूलप्रलेपः

[3]उपोदक्यास्तु मूलानि तैलयुक्तानि कारयेत् ।
योनेः प्रलेपो दातव्यः सुखप्रसवहेतवे ॥

## यन्त्रप्रकाशे

दर्शनेन सुखप्रसूतिकरं सूतिकागृहे लेखनीयं यन्त्रम्

[4]गजाग्निवेदा उडुराट् शराङ्का
रसर्षिपक्षा इति हि क्रमेण ।
लिखेत् प्रसूतेः समये गृहेऽदः
सुखेन नार्यः प्रसवन्ति शीघ्रम् ॥

अस्यार्थः – गर्भिण्या नार्या दृष्टिगोचरे देशे समं चतुरश्रं संसाध्य तस्य समानव कोष्ठकान् कृत्वैशानोत्तरवायुकोष्ठेष्वष्टमतृतीयचतुर्थानङ्कान् क्रमेण लिखित्वा पूर्वमध्यमपश्चिमकोष्ठेषु प्रथमपञ्चमनवमाङ्कान् क्रमेण

---

* ऋग्विधानवचने व्याख्यानं द्रष्टव्यम् ।

(१) विपा. २६७. (२) निप. २४०–२४१.
(३) विपा. २६३–२६४.

(१) संर. ८२७. (२) संर. ८२७.
(३) विपा. २६३. (४) संर. ८२७.

विलिख्याऽऽग्नेयदक्षिणनैर्ऋतकोष्ठेषु षष्ठसप्तमद्वितीयाङ्कान् क्रमेण विलिखेत् । अदः इदं यन्त्रं प्रसूतिसमये सूतिकागृहे लेखनीयम् । एतद्दर्शनेन सुखेन शीघ्रं नार्यः प्रसवन्तीति ।

संर. ८२७–८२८

## रेणुकारिकाः

प्रसवार्थे मन्त्रवदभ्युक्षणम् , जरायुपतनार्थो मन्त्रजपः

[१]जातकर्माधुना वक्ष्ये सम्यक्शास्त्रं विचिन्त्य तु।
प्रसवार्थे शूलवतीमद्भिरभ्युक्षति स्त्रियम् ॥

(१) रेका. १ पृ. ९ वती ( यन्ती ) ; संग. ४३४.

[१]मन्त्रेणैजतु दशमास्य( ? स्यो ) यस्यै ते प्राक्तनेन तु ।
यदा जराय्वधो याति अवैतु पृश्निरित्यमुम् ॥

मन्त्रं जपेत् स तां नेक्षेत् सोष्यन्तीदोषदर्शनात् ॥

(१) रेका. २–३ पृ. ९ घो याति ( घः पातु ) ; संग. ४३४ यस्यै ते ( एतेन ) प्रथमार्धमात्रम् : ४३५ त्यमुम् ( त्ययम् ) प्रथमार्धे विना.

# जातकर्म

## वेदाः

अग्निस्थापनम्, होमः, कर्णजपः, दधिमधुघृतप्राशनम्, गुह्यनामकरणम्, स्तनदानम्, अभिमर्शनम्, मात्रभिमन्त्रणम्, जातकर्मस्तुतिः

[1]**जातेऽग्निमुपसमाधायाङ्क आधाय कंसे पृषदाज्यं संनीय पृषदाज्यस्योपघातं जुहोति– 'अस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे। अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा ॥ मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा ॥ यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टं सुहुतं करोतु नः स्वाहा ॥' इति ॥**

अथ जातकर्म। जातेऽग्निमुपसमाधाय अङ्के आधाय पुत्रम्, कंसे पृषदाज्यं संनीय संयोज्य दधिघृते पृषदाज्यस्य उपघातं जुहोति– 'अस्मिन्सहस्रम्' इत्याद्यावापस्थाने। शंकर.

[2]**अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिः। अथ दधि मधु घृतं संनीयानन्तर्हितेन जातरूपेण प्राशयति– 'भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामि' इति ॥**

अथास्य दक्षिणं कर्णमभिनिधाय स्वं मुखं 'वाग्वाक्' इति त्रिर्जपेत्। अथ दधि मधु घृतं संनीय अनन्तर्हितेन अव्यवहितेन जातरूपेण हिरण्येन प्राशयति एतैर्मन्त्रैः प्रत्येकम्। शंकर.

---

(१) बृउ. ६।४।२४; शब्रा. १४।९।४।२३, २४ ज्यं संनीय (ज्यमानीय) नः स्वाहा ॥' इति (स्वाहा ॥' इति).

(२) बृउ. ६।४।२५; शब्रा. १४।९।४।२५ अथास्य दक्षिणं (अथास्याऽऽयुष्यं करोति। दक्षिणं) संनीया (संसृज्या) भूस्ते ... स्वस्ते (भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि) 'त्रिः।' इत्यतः परम् 'अथास्य नाम' इति कण्डिकेति क्रमभेदः.

---

[1]**अथैनमभिमृशति– 'अश्मा भव परशुर्भव हिरण्यमस्रुतं भव। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥' इति ॥**

[2]**अथास्य नाम करोति– 'वेदोऽसि' इति। तदस्य तद्गुह्यमेव नाम भवति ॥**

अथास्य नामधेयं करोति– 'वेदोऽसि' इति। तदस्य तद्गुह्यं नाम भवति वेद इति। शंकर.

[3]**अथैनं मात्रे प्रदाय स्तनं प्रयच्छति– 'यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः। येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे कः ॥' इति ॥**

अथैनं मात्रे प्रदाय स्वाङ्कस्थम्, स्तनं प्रयच्छति– 'यस्ते स्तनः' इत्यादिमन्त्रेण। शंकर.

[4]**अथास्य मातरमभिमन्त्रयते– 'इलाऽसि मैत्रावरुणी वीरे वीरमजीजनत्। सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरत् ॥' इति। तं वा एतमाहुः– अतिपिता बताभूः। अतिपितामहो बताभूः। परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन। य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥**

अथास्य मातरमभिमन्त्रयते– 'इलाऽसि' इत्यनेन। तं वा एतमाहुरिति। अनेन विधिना जातः पुत्रः पितरं पितामहं च अतिशेते इति, श्रिया यशसा ब्रह्मवर्चसेन परमां निष्ठां प्रापत् इत्येवं स्तुत्यो भवतीत्यर्थः। यस्य च एवंविदो ब्राह्मणस्य पुत्रो जायते, स च एवं स्तुत्यो भवतीत्यध्याहार्यम्। शंकर.

---

(१) शब्रा. १४।९।४।२६.

(२) बृउ. ६।४।२६; शब्रा. १४।९।४।२५ नाम (नामधेयं) स्य तद्गु (स्यैतद्गु) भवति (स्यात्).

(३) बृउ. ६।४।२७; शब्रा. १४।९।४।२८ कः (ऽकः).

(४) बृउ. ६।४।२८; शब्रा. १४।९।४।२७, २९ इला (इडा) जनत् (जनथाः) प्रापच्छ्रि (प्राप श्रि).

# जातकर्मविधिः

## आश्वलायनगृह्यसूत्रम्

जातकर्मकालः, स्त्रीणाममन्त्रकम्, स्त्रीनपुंसकयोः कर्तव्याकर्तव्यविचारश्चीकासु

**[1]कुमारं जातं पुराऽन्यैरालम्भात् ॥**

(१) 'प्र ते ददामि' इत्यनेन मन्त्रेण कुमारस्य जातस्यायं संस्कारो भवति। तत्र कुमारग्रहणं न कर्तव्यम्। जातमित्येव वक्तव्यम्। कुमार्या अपि प्रसज्येत। न भविष्यति। कस्मात्? जातमिति पुंलिङ्गोपदेशात्। नेत्युच्यते। नात्र लिङ्गं विवक्षितम्। किं तर्हि? नाम-(? जन्म) विवक्षितम्। कुमारग्रहणं कर्तव्यं कुमारीनिवृत्त्यर्थम्। तथापि न कर्तव्यम्। वक्ष्यति— 'आवृतैव कुमार्यै' इति। प्रवासागमनविधानार्थे तद्वचनम्। तस्मात् कुमारग्रहणं कर्तव्यं कुमारीनिवृत्त्यर्थम्। येषां तदुभयया 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' इति कथं कुमारस्य स्यात्, न कुमार्या इति। ननु च तत्रापि पुंलिङ्गोपदेशात् कुमार्या न भविष्यतीति। नेत्युच्यते। तत्रापि न लिङ्गं विवक्षितम्। जातिर्विवक्षिता। जातौ विवक्षितायां च लिङ्गमप्रमाणम्। तद्यथा लोके 'ब्राह्मणो न हन्तव्यः' इत्युक्ते ब्राह्मण्यपि न हन्यते। कस्मात्? जातेर्विवक्षितत्वात्। एवमिहापि जातिविवक्षायां सत्यां कुमारी अपि प्रसज्येत। तन्निवृत्त्यर्थं कुमारग्रहणमधिकारार्थं कर्तव्यम्। न ह्यजातस्य कर्मेदं शक्यते कर्तुम्। ब्रवीति— जातग्रहणमप्यधिकारार्थम्। 'षोडशे वर्षे गोदानम्' इति। तत् कथं जन्मषोडशे वर्षे स्यादिति। पुराऽन्यैरालम्भात् पुरस्तादित्यर्थः। अन्यैः आलम्भात् स्पर्शनादित्यर्थः। अथेदं कर्म भवति। अन्यग्रहणं कर्तव्यमनधिकृतैरालम्भनप्रतिषेधार्थम्। देभा.

(२) इदं जातकर्म। कुमारग्रहणं कुमारीनिवृत्त्यर्थम्। ननु कुमार्या अपि भवत्येव जातकर्म। कुतः? वक्ष्यति— 'आवृतैव कुमार्यै' (आगृ. १।१५।१२) इति। उच्यते— प्रवासादागतस्य विहितं कर्माऽऽवृता भवति, न जातकर्म, अनन्तरत्वात्। एवमेके। अन्ये पुनः 'आवृतैव कुमार्यै' इत्येतदुभयार्थमिति वदन्ति। तेन कुमार्या अपि जातकर्म भवति। मनुनाऽप्युक्तम् 'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।' (मस्मृ. २।६६) इति। तर्हि कुमारग्रहणं किमर्थम्? अधिकारार्थम् 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' इत्युपनयनं कुमारस्यैव यथा स्यान्न कुमार्या इति। ननु ब्राह्मणमिति पुंलिङ्गनिर्देशादेव न भविष्यति। न, जातिनिर्देशे लिङ्गमविवक्षितम्। यथा 'ब्राह्मणो न हन्तव्यः' इति ब्राह्मण्यपि न हन्यते। एवमत्रापि स्त्रियाः प्रसज्येत। तन्निवृत्त्यर्थं कुमारग्रहणमिति। जातग्रहणमप्यधिकारार्थम् 'गोदानं षोडशे वर्षे' इति जन्मतः प्रभृति षोडशो यथा स्यात्, उपनयनप्रभृति मा भूदिति। पुरा पूर्वमित्यर्थः। अन्यग्रहणमनधिकृतालम्भनात्प्राक् कर्म कर्तव्यमित्येवमर्थम्। † गानावृ.

**[1]आवृतैव कुमार्यै ॥**

(१) कुमार्याः आवृतैव कर्म कर्तव्यम् अमन्त्रकम्। तत्रैके अनन्तरं कर्मोपदिशन्ति। ननु चैवं सति जातकर्म समन्त्रकं प्राप्नोति। कुमारग्रहणं(? णात्) न भवति। अन्ये पुनरुभयं कर्म आवृता इच्छन्ति। कस्मात्? उभयोर्विशेषोऽयमिति 'आवृतैव कुमार्यै' इति। एवमुभयथा संप्रतिपन्नाः। देभा.

(२) कुमार्यास्तु अमन्त्रकं कुर्यादिति। अनन्तरस्य चायं शेष इत्येके। अनन्तरस्य जातकर्मणश्चेत्यपरे। गानावृ.

---

(१) आगृ. १।१५।१; मेधा. २।२७ (=); ब्रक. ८७; प्रपा. १३१; धप्र. ३७ (=); संप्र. १९३; संम. १५.

† ब्रक, अना., संप्र. गानावृगतम्। प्रपा. गानावृत्त्यनुवादः।

(१) आगृ. १।१५।१२; प्रपा. १३१; संप्र. १९४; संको. ६१, १०३; संर. ८३८.

( ३ ) षष्ठ्यर्थे चतुर्थी । यदनन्तरमुक्तं 'प्रवासादेत्य' इति तदत्र विधीयते । अपरे जातकर्मणोऽपि विधानमिच्छन्ति तत् गृह्यान्तरेषु न दृष्टम् । अना.

( ४ ) अत्रेदं चिन्तनीयम् । किमिदं जातकर्म पुंस्त्रीनपुंसकानां सर्वेषामपि कर्तव्यम्, उत स्त्रीपुंसयोः, आहोस्वित् पुंस एव ? इति । कुतः संशयः ? बीजगर्भसमुद्भवैनोनिबर्हणस्य बीजगर्भसमुद्भवमात्रापेक्षितत्वात्, स्त्रीपुंसयोः श्रवणात्, कुमारादिशब्देषु पुंस्त्वश्रवणाच्च । किं प्राप्तम् ? त्रयाणामप्येतत्कार्यमिति, पूर्वोक्तयुक्तेः, 'सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः । कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात् ॥' इति ब्रह्मपुराणे जातसामान्योपादानेन मुखदर्शनादिसंस्कारविधानाच्च । अत एव 'तूष्णीमेताः क्रियाः स्त्रीणाम्' इत्यादिविधिर्दृश्यते । स्मर्यते च बौधायनादिभिः क्लीबादीनामुपनयनमिति 'अथ षण्ढबधिरमूकानां संस्कारं व्याख्यास्यामः' इत्यादिना । मनुना तु 'यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथंचन ।' इत्यादिना विवाहोऽपि स्मर्यते । स च जातकर्मादिसंस्काराणां क्रमतल्लोपप्रायश्चित्ताभिधानान्यथाऽनुपपत्त्या पूर्वपूर्वसंस्कारसंस्कृतस्यैवोत्तरोत्तरयोग्यता भवतीति नियमात् जातकर्मादीनप्याक्षिपति । तदाह देवलः— 'प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्षे तूपनयनार्हो भवति' इति । तस्मात् त्रितयसाधारणं जातकर्मेति । मैवम्, सर्वस्मृतिसूत्रपुराणेषु स्त्रीपुरुषावेव प्रक्रम्य जातकर्माद्यभिधानेन तज्जन्यैनोनिबर्हणस्य तन्मात्रविषयत्वेन सर्वसाधारण्याभावात् । अन्यथा षण्ढोऽप्युपक्रम्येत । यत्तु ब्रह्मपुराणीयं जातपदं तत् वाक्यान्तरस्थपुत्रकुमारादिविशेषपदैकार्थतयोपसंहरणीयम्, सामान्यशब्दत्वात् । बौधायनादिवाक्यं तु तावन्मात्रविधानार्थम् । अन्यथा सामान्यवाक्येनैव सिद्धावस्याऽऽनर्थक्यात् । गुणमात्रविधित्वे तु संस्कारप्रतिज्ञानुपपत्तेः । तस्मात् कर्मान्तरमेव, 'अथैष ज्योतिः' इतिवत् अथशब्दोपादानात् । तर्हि स्त्रीपुरुषविषयमेवेदमस्तु इति चेन्न, उत्पत्तिवाक्ये पुत्रकुमारादिपदेषु पुंस्त्वश्रवणात् । अस्तु उद्देश्यगतस्य पुंस्त्वस्य ग्रहैकत्ववदविवक्षेति चेत् । एवं तर्हि 'आवृतैव कुमार्यै' इत्याद्यनारम्भणीयं स्यात्, पुंस्त्वाविवक्षयैव प्राप्तत्वात् । अमन्त्रत्वरूपगुणविधानार्थं तदारम्भ इति चेत् । एवं तर्हि क्लीबे तत्प्राप्तिः केन वार्येतेति पूर्वः पक्षः ।

अत्र देवस्वामी समादधाति—अधिकारार्थं कुमारग्रहणमिति, 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' इत्युपनयनं कुमारस्यैव यथा स्यान्न कुमार्या इति । ननु ब्राह्मणमिति पुंलिङ्गोपदेशादेव स्त्रीणां तन्न भविष्यतीति चेन्न । जात्युद्देशे लिङ्गस्याविवक्षितत्वात् 'न ब्राह्मणो हन्तव्यः' इतिवत् । तस्मात् स्त्रीनिवृत्त्यर्थं कुमारग्रहणमिति । अनेनार्थात् क्लीबनिवृत्तिरभिहिता, कुमारग्रहणस्य स्त्रीनपुंसकनिवर्तनसामर्थ्यात् । मेधातिथिस्तु कण्ठरवेणैव स्त्रीनपुंसकयोर्निवृत्तिमाह 'प्राङ् नाभिवर्धनात् पुंसो जातकर्म विधीयते ।' इति मनुना पुंशब्दोपादानात् । न चात्रापि पुंस्त्वमविवक्षितम्, प्रत्ययार्थस्य तस्योद्देश्यविशेषणस्याविवक्षायामपि प्रकृत्यर्थस्य तस्योद्देश्यस्याविवक्षायां वाक्यानर्थक्यप्रसङ्गात् । सिद्धं चैतत् चमसाधिकरणे, एकत्ववत् ग्रहत्वमप्यविवक्षित्वा चमसानामपि संमार्गोऽस्त्विति पूर्वपक्षे एकत्वविवक्षायामिव ग्रहत्वविवक्षायां वाक्यभेदाभावात्, संमार्गविधाने चार्थाक्षिप्तसोमलिप्तरूपोद्देश्यापेक्षया वाक्योपात्तग्रहरूपोद्देश्यस्य बलवत्त्वान्न चमसानां संमार्ग इति सिद्धान्तकरणात् । तद्वत् प्रकृतेऽपि । तस्मात् स्त्रीणामिव क्लीबानां विध्यन्तराभावात् न जातकर्मेति सिद्धम् । अनेन जातकर्मवदन्येऽपि संस्काराः क्लीबस्य न भवन्तीति गम्यते, तुल्यन्यायत्वात् ।

संप्र. १९४–१९७

## आश्वलायनगृह्यपरिशिष्टम्

### जातकर्मकालः

**'अथ जातकर्म पुत्रे जाते पुराऽन्यैरालम्भात् ॥**

---

(१) आगृप. १।२६ ; प्रपा. १३३ पुत्रे ( कुमारे ) ; संको. ६१.

## पारस्करगृह्यसूत्रम्

जातकर्मकालः

**[1]जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति ॥**

( १ ) अच्छिन्ने नाले एतत् क्रियते । कुमारग्रहणाच्च स्त्रिया अतः प्रभृति न क्रियते । † कभा.

( २ ) आयुष्यम् ' अग्निरायुष्मान् ' इत्यादिजपः । $ ब्रक. ८७

( ३ ) ततो जातस्य उत्पन्नस्य कुमारस्य पुत्रस्य अच्छिन्नायां नाड्यां अखण्डिते नाले सति मेधाजननायुष्ये मेधाजननं च आयुष्यं च मेधाजननायुष्ये, ते करोति पिता । ‡ हभा.

## खादिरगृह्यसूत्रम्

जातकर्मकालः

**[2]प्राङ्नाभिकृन्तनात् स्तनदानाच्च ॥**

प्रागिति । विसमासः प्राक् नाभिकृन्तनात् , असंभवे स्तनदानात् प्राक् कर्तुम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

जातकर्मकालः

**[3]कुमारे जाते जातकर्म प्राक् स्तनप्राशनात् ॥**

## वैखानसगृह्यसूत्रम्

शुभाशुभपरीक्षार्थं नासाग्रदर्शनकालिकग्रहस्थितेर्ज्ञेयत्वम्

**[4]यदा नासाग्रं दृश्यते तदाऽस्य ग्रहस्थितिं ज्ञात्वा शुभाशुभं परीक्षेत । यस्मात्तद्गुणान्वितं वर्धयेत् ॥**

---

† जभा. कभावत् । गभा. कभावत् हभावच्च ।

$ स्मृसा. ब्रकवत् ।

‡ विभा. हभावत् ।

(१) पागृ. १।१६।३ ; विध. १।११ ( जातस्य कुमारस्य च ) एतावदेव ; ब्रक. ८७ ; स्मृसा. २ कुमार ( पुत्र ) ; निप. २४१ (=) ( अथाच्छिन्नायां नाड्याम् ) एतावदेव ; संप्र. १९४.

(२) खागृ. २।२।३३.

(३) जैगृ. १।८. (४) वैगृ. ३।१४.

## बैजवापगृह्यसूत्रम्

जातकर्मकालः

**[1]जातस्य कुमारस्याच्छिन्नायां नाड्याम् ॥**

## गौतमः

नालच्छेदनात्प्राचीनस्य कालस्य पुण्यत्वम्

**[2]प्राङ्नाभिवर्धनात् पुण्यं तदहरित्येके ॥**

## हारीतः

जननदिने दोषाभावः श्राद्धादिविधिश्च , जातकर्मादिकालः

**[3]जाते कुमारे पितॄणामामोदात् पुण्यं तदहः । तस्मात् तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणानाहूय पितृभ्यः स्वधा कुर्यात् प्रजापतये च ॥**

( १ ) ' जातकर्मणि बालानाम् ' इत्यादिवचनविहिते वृद्धिश्राद्धे हिरण्यपात्रद्रव्यविधिः , स्वधाशब्देन श्राद्धोपस्थानात् । प्रजापतये सहिरण्यं तिलपात्रं त्यजेत् । ‡ ब्रक. ८६

( २ ) आमोदः हर्षः । पुण्यं दानादिकर्मणि प्रशस्तमित्यर्थः । स्मृच. २०

**[4]प्राङ् नाभिच्छेदात् संस्कारं पुण्यार्थान् कुर्वन्ति । छिन्नायामाशौचम् ॥**

---

‡ निप. ब्रकवत् । संप्र. ब्रह्मचारिकल्पतरोरनुवादः ।

(१) ब्रक. ८७ जात ( अत्र जात ) ; संप्र. १९३.

(२) मुक्ता. ८०.

(३) अप. १।११-१३ पृ. २६ स्वधा ( स्वधां ) ; ब्रक. ८५-८६ ; स्मृच. २० ( तस्मात् ... च० ) ; चका. ५८२ स्मृचवत् ; प्रपा. १३३ ब्राह्मणाना ( ब्राह्मणमा ) ; निप. २४१ (=) तस्मात् ... च ( तत्र तिलपूर्णानि सहिरण्यपात्राणि ब्राह्मणानाहूय पितृभ्यो दद्यात् ) ; संप्र. १९२ ; मुक्ता. ८० स्मृचवत् , हरदत्तः ; सिन्धु. ८४५ स्मृचवत् ; संकौ. ५९ अपवत् ; संर. ८३२.

(४) अप. १।११-१३ पृ. २६ स्कारं पु (स्कारपु) ; ब्रक. ८६ अपवत् ; स्मृच. १९ ; चका. ५८३ नाभि ( नाडी ) स्कारं पु ( स्कारपु ) कुर्वन्ति । + ( नाड्यां तु ) : ७३६ अपवत् ; स्मृसा. २ ( ब्राह्मणमाहूय नाडी-

( १ ) संस्कारः जातकर्म। पुण्यार्थान् पुण्यप्रयोजनान् दानादीन्। $ व्रक. ८६

( २ ) नाभिः नालम्। संर. ८३१

## बौधायनः

संपूर्णजननदिने नालच्छेदनात्प्राग्वा मतभेदेन दानप्रतिग्रहाधिकारः

**¹गुडतैलहिरण्यानां गोधान्यानां च वाससाम्।**
**तस्मिन्नहनि दानं च कार्यं विप्रैः प्रतिग्रहः।**
**प्राङ्नाभिच्छेदनाद्ग्राह्याण्येतानीत्यपरे जगुः॥**

## वसिष्ठः

जातकर्मकालः, पित्रा कुमारमुखावलोकनम्, जन्मनिमित्तकं पितुः स्नानम्, जातकर्मफलम्, दैवज्ञात् जातकफलश्रवणम्, कर्तृनिर्णयः

**²यस्मिन् मुहूर्ते जनितः कुमार-**
**स्तस्मिन् विधेयं खलु जातकर्म।**
**विनिर्गमे वाऽप्यथ सूतकस्य**
**तस्मिन् दिने तस्य च नामधेयम्॥**
**¶ ³जातमात्रकुमारस्य मुखमस्यावलोकयेत्।**
**पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात्॥**

---

$ स्मृच., चका., निप्र., संप्र., कृभ. व्रकवत्।

¶ अनयोः संप्रव्याख्यानं 'जाते कुमारे' इत्याश्वलायनश्लोकव्याख्याने द्रष्टव्यम्।

च्छेदात्प्राग् जातकर्म पुण्याहवाचनं कुर्वन्ति ); निप्र. ११२ ( प्राङ् नाडीच्छेदनात्संस्कारपुण्यार्थान् कुर्वन्ति ) एतावदेव; संप्र. १९९ नाभिच्छे ( नाभ्याश्छे ); मुक्ता. ८० दात् संस्कारं ( दनात् संस्कारः ); पुम. ४३३ मुक्तावत्; कृभ. ८४४ नाभि ( नाडी ) कुर्वन्ति। + ( नाभ्यां ) शेषम् अपवत्; संर. ८३१ मुक्तावत्.

(१) पमा. ५८३.

(२) बसं. २६।१ निर्गमे ( निर्गते ) कस्य (केऽपि); संसौ. ५१ पू.; संप्र. २००; संग. ४४७.

(३) प्रपा. १३० त्रकुमारस्य ( त्रे कुमारे तु ); संप्र. १८८; संम. १४; ज्योनि. १११; संकौ. ५९; आन. १४७ प्रपावत्, ज्योतिषे; संग. ४३५; कृभ. ८४३ (=); संर. ८२९.

**¹श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत्।**
**उत्तराभिमुखो भूत्वा नद्यां वा देवखातके॥**

( १ ) अत्रासंनिधौ श्रवणानन्तरं स्नानम्। संनिधौ मूलाद्यजातस्य मुखदर्शनानन्तरं स्नानमिति बोध्यम्, पूर्ववाक्ये मात्रपदेन जन्मानन्तरं मुखावलोकने व्यवधाननिषेधात्। संकौ. ५९

( २ ) पुत्रमिति पुंस्त्वमविवक्षितम्, अनुवाद्यविशेषणत्वात्। श्रुत्वेति असंनिधौ श्रवणानन्तरं स्नानम्, संनिधौ तु तज्ज्ञानमात्रं विवक्षितम्। 'जातमात्रकुमारस्य... मुखदर्शनात्॥' इति तु संभवाभिप्रायम्, कदाचित् पुत्रमुखादर्शने स्नाने विलम्बापत्तेः। कृभ. ८४३

( ३ ) उत्तराभिमुख इति विशेषणं प्रवाहाभिमुखत्वादिबाधनार्थम्। एतेषु वसिष्ठादिवचनेषु पुत्रपदगतं पुंस्त्वमविवक्षितम्, अनुवाद्यगतत्वात्। तेनात्र स्त्र्यपत्येऽपि पितुः स्नानमावश्यकम्। सूतिकावर्जं पित्रादीनां सर्वेषां सपिण्डानामस्पृश्यत्वं नास्त्येव। अतो न ¶ तेषां स्नानमपि। † संर. ८३०

**²पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः।**
**राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि॥**

( १ ) यज्ञे अवभृथे। स्नानग्रहणं दानस्यापि प्रदर्शनार्थम्। ‡ स्मृच. १९

---

¶ पित्रतिरिक्तसपिण्डानामित्यर्थः।

† शेषं संकौवत्।

‡ मुक्ता. स्मृचगतम्।

(१) प्रपा. १३० वा ( वै ) ज्योतिर्वसिष्ठः; पमा. १६० पू.; संसौ. ४९ ज्योतिर्वसिष्ठः; संप्र. १८८ पू. ज्योतिर्वसिष्ठः : १८९ ज्योतिर्वसिष्ठः; सिन्धु. ८४३ पू.; विपा. २६७ चैलं ( चेलं ) पू.; ज्योनि. १११; संकौ. ५९ ज्योतिर्वसिष्ठः; बाल. १।११-१२ पृ. १६ पू.; संग. ४३६; संव. ६०; संर. ८२९ ज्योतिर्वसिष्ठः.

(२) अप. १।१५४ पृ. १९७; स्मृच. १९; प्रपा. १३०; संप्र. १८९ नान्यथा ( नान्यदा ); मुक्ता. ७९;

(२) तच्च शीतलोदकेन कार्यम् । तदाह जाबालिः --'कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।' इति । रात्रौ तडागादिगमनाशक्तौ विशेषमाह सांख्यायनः-- 'दिवा यदाहृतं तोयं कृत्वा स्वर्णयुतं तु तत् । रात्रिस्नाने तु संप्राप्ते स्नायादनलसंनिधौ ॥' इति । यत्तु 'स्नानात्तु स्पर्शनं पितुः' इत्यस्पृश्यतापनोदः पितुः स्नानेन श्रूयते सोऽप्यनेनैव प्रसङ्गात् सिध्यतीति न तदर्थं पृथक् स्नानं कर्तव्यम् । यदपि 'जाते पुत्रे पितुः स्नानम्' इत्यादि-वचनेषु पुत्रपदोपादानात् कन्यादिजन्मसु न स्नानमिति, तन्न, बीजसंबन्धाविशेषात् । अत एव बौधायनः-- 'जनने तावन्मातापित्रोर्दशाहमाशौचम्, मातुरित्येके तत्परिहरणात्, पितुरित्यन्ये शुक्रस्य प्राधान्यात्, अयोनिजा ह्यपि पुत्राः श्रूयन्ते, मातापित्रोरेव तु संसर्गसाम्यात्' (बौध. १।११।१७--२१) इति । तत्परिहरणान्मातृपरिहरणात् । संसर्गसाम्यात्-- संसर्गः शुक्रशोणितयोः, तस्य साम्यात् । न चैवं मातापित्रोर्दशाहमस्पृश्यत्वसिद्धान्तात् पूर्वपक्षस्यैव सिद्धिः, तुशब्देन पूर्वपक्षस्य दशाहस्य व्यावृत्त्या कालविशेषानालिङ्गिताभ्युपगतास्पृश्यत्वमात्रस्य सामान्यस्य 'माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः।' इत्यनेन विशेषेण व्यवस्थापनात् । तस्मादपत्यमात्रोत्पत्तौ स्नानं न पुत्रोत्पत्तावेवेति सिद्धम् । आशौचम् अस्पृश्यत्वलक्षणम् । ¶संप्र. १९०

[1]सचैलमाप्लुत्य सुतस्य जन्म
श्रुत्वा स्वगृह्योक्तविधानपूर्वम् ।
जातस्य रक्षार्थमनिष्टहं च
पिता विदध्यादिति जातकर्म ॥

[2]दत्त्वा गोभूहिरण्यादि ततो लग्नं निरीक्षयेत् ।
लग्नमेव प्रशंसन्ति ज्योतिःशास्त्रविदो जनाः ।
अरिक्तपाणिर्दैवज्ञाच्छृणुयात् पुत्रजन्मनि ॥

(१) शृणुयात् जन्मकालीनजातकफलमित्यर्थः । प्रपा. १३३

(२) ततश्च दैवज्ञोक्तदुःस्थानस्थितग्रहप्रीत्यर्थं शक्त्योचितदानानि कुर्यात्, संकल्पपूर्वकं जपपूजादौ ब्राह्मणान्नियुञ्जीतेत्यादि शक्त्यनुसारेण कर्तव्यम् । संर. ८३२

[1]श्रेष्ठः कनिष्ठहस्तेन जातकर्मादि कारयेत् ॥

## विष्णुः

जातकर्मकालः, रात्रावपि स्नानदानकर्तव्यता

[2]जाते च दारके जातकर्म ॥

[3]संजाते जातकर्म च ॥

[4]विवाहव्रतसंक्रान्तिप्रतिष्ठाऋतुजन्मसु ।
तथोपरागपातादौ स्नाने दाने निशा शुभा ॥

ऋतुः गर्भाधानम् । चन्द्रार्कदृष्टिसंनिपातसमयः पातः । चश्रा. २३९

## लघुविष्णुः

जातकर्मणः स्नानोत्तरमनुष्ठानम्

[5]जातकर्म ततः कुर्यात् पुत्रे जाते यथोदितम् ॥

(१) स्वगृह्यत इति शेषः । ततः स्नानादनन्तरमित्यर्थः । ¶स्मृच. १८

(२) जातकर्मेति यौगिकं कर्मनामधेयम् । जाते कर्म जातकर्म इति च योगः । स च यद्यपि मुखदर्शनस्नान-

---

¶ संग. संप्रवत् ।

ज्योनि. १११ ; संग. २२६, ४३६ ; संव. ६० क्रमणे (क्रमणं) ; संर. ८३० संप्रवत्.

(१) संसौ. ५२.

(२) प्रपा. १३३ ; संको. ६० ; कुम. ८४८ द्वितीयार्धं नास्ति ; संर. ८३२.

¶ चका., पमा., मपा., संसौ., मुक्ता., आन., पुम., संर. स्मृचवत् ।

(१) संर. ८३३.

(२) विस्मृ. २७।४ ; चका. ७३६ (जाते वै दारके तु जातकर्म).

(३) चका. ७३६. (४) चश्रा. २३९.

(५) लघुविस्मृ. १।११ ततः (तथा) ; स्मृच. १८ विष्णुः ; चका. ७३६ स्तोकविष्णुः ; पमा. ४३९ विष्णुः ; मपा. ३५२ विष्णुः ; संसौ. ४९ विष्णुः ; संप्र. १८७ विष्णुः ; मुक्ता. ७९ विष्णुः ; आन. १४७ विष्णुः ; संग. ४३२ विष्णुः ; पुम. ४३३ श्लोकविष्णुः ; संर. ८३१ हारीतः .

नान्दीश्राद्धादावतिप्रसक्तः तथापि 'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते। मन्त्रवत् प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥' इत्यत्र हिरण्यादिप्राशनजातकर्मशब्दयोः सामानाधिकरण्याद्धिरण्यादिप्राशनमेव जातकर्म, नान्यदिति सिध्यति। यथा यजतिसामानाधिकरण्यात् खनित्राद्यतिप्रसक्तयोगोऽप्युद्भिच्छब्दः कर्मनामधेयम्, तद्वदयमपि। एतेन 'जातस्य कर्म संस्कारो जातकर्म, मुखदर्शनादेः पितृसंस्कारत्वेन जातसंस्कारत्वाभावात्। जातः कर्म संस्कार्यो यस्मिन्निति वा योगोऽतिप्रसङ्गवारणायाऽऽदरणीयः' इति परास्तम्, कर्मसामानाधिकरण्येनैव तद्वारणात्। ततः स्नानानन्तरम्, 'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते। माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥' इति संवर्तस्मरणात्। यथोदितं स्वस्वगृह्यानुसारेणेत्यर्थः। § संप्र. १८७

## शङ्खः शङ्खलिखितौ च

जातकर्मकालः, जननदिनस्य दानप्रतिग्रहाद्यर्हत्वम्

**[1]जाते वै जातकर्म च ॥**

**[2]प्रसूते जातकर्म ॥**

**[3]पिता पितामहश्चैव तथैव प्रपितामहः।**
**भूयस्तत्रैव जायन्ते तदहर्वेदयन्ति च।**
**तस्मात् स दिवसः पुण्यः पितॄणां प्रीतिवर्धनः॥**

**[4]सर्वेषां सकुल्यानां द्विपदचतुष्पदधान्यहिरण्यादि दद्यात् ॥**

---

§ संग. संप्रवत्।

(१) शंस्मृ. २।२ ; चका. ७३६ ( जाते जातकर्म ).

(२) अक. ८७ शङ्खलिखितौ ; संप्र. १९३ शङ्खलिखितौ ; संग. ४३७ शङ्खः .

(३) अप. ३।१९ पृ. ८९६ पितॄणां प्रीति ( पितॄणामभि ) शङ्खलिखितौ ; प्रपा. १३३ हेमाद्रौ शङ्खः ; वीक. ३।२९ तृतीयार्धं नास्ति, शङ्खलिखितौ.

(४) स्मृच. २० ण्यादि ( ण्यानि ) शङ्खः ; पमा. ४४० शङ्खः ; संसौ. ५० शङ्खः ; संप्र. १९९ शङ्खः ; वम. ८ सर्वेषां + ( च ) शेषं सर्वं स्मृचवत् ; मुक्ता. ७९

**[1]कुमारप्रसवे नाड्यामच्छिन्नायां गुडतिलहिरण्यवस्त्रप्रावरणगोधान्यादिप्रतिग्रहेष्वदोषः। तदहरित्येके गुर्वर्थं कुर्वतः ॥**

(१) नालच्छेदात् प्राक् स्वार्थमपि प्रतिग्रहे न दोषः, गुर्वर्थे तु प्रतिग्रहे संपूर्णदिने न दोष इत्यर्थः। संसौ. ५०

(२) प्रतिग्रहदोषाभावप्रतिपादनं तु नालच्छेदादूर्ध्वं सर्वदिनपुण्यत्वपक्षे। अन्यथा प्राङ्नाभिच्छेदादाशौचाप्रवृत्त्या दोषप्रसक्त्यभावेन तदपवादासंभवात् †। ¶ संप्र. १९९

---

† अस्मिन् व्याख्याने 'नाड्यामच्छिन्नायाम्' इत्यंशस्य 'तदहरित्येके' इत्यंशस्य च संगतिर्न प्रतीयते।

¶ संग. संप्रवत्।

शङ्खः ; आन. १४७ (=) ण्यादि ( ण्यानि ) ; संग. ४४४ शङ्खः .

(१) अप. ३।१९ पृ. ८९६ नाड्या ( नाभ्या ) धान्यादि ( धान्य ) ( गुर्वर्थं कुर्वतः० ) शङ्खलिखितौ ; स्मृच. २० नाड्या ( नाभ्या ) प्रावरणगोधान्यादिप्रतिग्रहेष्वदो ( गोधान्यप्रतिग्रहेष्वपि न दो ) कुर्वतः ( क्रियते ) शङ्खः ; पमा. ५८३ नाड्यामच्छिन्नायां ( प्राङ्नाभिच्छेदनात् ) धान्यादिप्र ( धान्यानां प्र ) ( गुर्वर्थं कुर्वतः० ) शङ्खलिखितौ ; मपा. ३५४ नाड्या ( नाभ्या ) ( प्रावरण० ) हरित्येके गुर्वर्थं ( हस्त्वेके ) शङ्खः ; गमा. १६१ प्रावरणगोधान्यादि ( गोधान्य ) हरित्येके गुर्वर्थं ( हस्त्वेके ) शङ्खः ; निप्र. ११२-११३ धान्यादि ( धान्य ) ( तदहरित्येके गुर्वर्थं कुर्वतः० ) शङ्खलिखितौ ; संसौ. ५० धान्यादि (धान्य) ष्वदोषः। त (षु दोषाभावास्त ) ( कुर्वतः० ) शङ्खः ; संप्र. १९९ वस्त्र + ( गुर्वर्थ ) धान्यादि ( धान्य ) शङ्खः ; मुक्ता. ८० ( कुमारप्रसवे नाभ्यामच्छिन्नायां गुडतिलहिरण्यगोधान्यप्रतिग्रहेष्वदोषः ) एतावदेव, अस्मिन्नेव पृष्ठे पुनरपीदं वचनं प्रावरणशब्दशून्यम् अपवत्पाठयुतम्, शङ्खः ; संग. ४४४ गुर्वर्थं कुर्वतः ( कुर्वन्तः ) शेषं सर्वं संप्रवत् ; कुभ. ८४४ (कुमारप्रसवे नाड्यामच्छिन्नायां प्रतिग्रहे न दोषः ) एतावदेव, शङ्खः .

## मनुः

जातकर्मणः कालः, जातकर्मपदार्थः

[1]§प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते।
मन्त्रवत् प्राशनं चास्य हिरण्यमधुसर्पिषाम्॥

(१) वर्धनं छेदनम्। जातकर्मेति कर्मनामधेयमेतत्। रूपं चास्य गृह्यस्मृतिभ्यो ज्ञातव्यम्। कस्य पुनः कर्मणो जातकर्मेति नाम? तदर्थमुक्तम्– प्राशनं हिरण्यमधुसर्पिषाम्। अस्येति दारकं व्यपदिशन्ति। कर्म वा, अस्य जातकर्मण इदं प्रधानं यन्मन्त्रवत्प्राशनमिति। समन्त्रकं मन्त्रेण कर्तव्यमित्यर्थः। मन्त्रस्य चेहानुक्तत्वात् सर्वस्मृतीनां चैकार्थ्याद्यदन्यत्रोक्तं तदत्रापि प्रतीयते। तेन गृह्यस्मृतिषु ये मन्त्रा उपात्तास्तैर्मन्त्रवदिति द्रष्टव्यम्।

यदि गृह्यस्मृतयोऽपेक्ष्यन्ते द्रव्यनिर्देशोऽपि न कर्तव्यः। एवं हि तत्र पठ्यते – "सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत् 'प्र ते ददामि मधुनो घृतस्य'" इति। किंच, बह्व्यो गृह्यस्मृतयः, भिन्नाश्च प्रतिगृह्यं मन्त्राः, अन्याऽपि भिन्नेतिकर्तव्यता, तत्र काऽऽश्रीयतामिति न विद्मः। अथ चरणसमाख्या नियामिका भविष्यति, व्यर्थस्तर्हि जातकर्माद्युपदेशः, तत एव सिद्धेः, कठानां गृह्यं बह्वृचानामाश्वलायनानां च गृह्यमिति यथैव समाख्यायते स तदुक्तमनुष्ठास्यतीति। उच्यते–द्रव्यादिनिर्देशेन सुस्पष्टं कर्मैकत्वमिति प्रतीयते। तथा हि प्रत्यभिज्ञासिद्धिः 'तद्द्रव्यमेवेदं तन्नामधेयकं चेदं कर्मातस्तदेवेदम्' इति। भूयसा दृष्टं तद्गुणयोगेन प्रत्यभिज्ञायते। सति चैकत्वे यदङ्गजातं क्वचिन्नोक्तं तदविरुद्धमन्यत आनेतव्यम्। यथा सर्वशाखाप्रत्ययमेकं कर्म, एवं सर्वस्मृतिप्रत्ययमपि।

यत्तु– बहुत्वाद्गृह्यस्मृतीनां काऽऽश्रीयतामित्यनध्यवसायः, सर्वासां प्रामाण्याविशेषादेकार्थानां च विकल्पः भिन्नार्थानां समुच्चयः। चरणसमाख्या तु नैव नियामिका। यतो न समाख्यया पुरुषस्य नियतः संबन्धः गोत्रप्रवरवत्। यैव शाखा येनाधीता स एव तथा समाख्यायते 'कठः, बह्वृचः' इति। न चाध्ययने नियमोऽस्त्यनेनेयं शाखाऽध्येतव्येति। अनेकशाखाध्ययनमप्यस्ति 'वेदानधीत्य' इति। तत्र त्रिवेदाध्यायिनः सर्वे व्यपदेशाः प्रवर्तन्ते। केऽप्यूचुः 'कौथुमाः कठा बह्वृचाः' इति। तत्रावश्यं विकल्प आस्थेयः। एकशाखाध्यायिनस्तु यद् गृह्यं यया शाखया समाख्यायते तदुक्तमेव तस्य युक्तं कर्तुम्। एष हि तदुक्तमेव शक्नोति कर्तुम्। तच्छाखामन्त्रा एव तेनाधीताः, शक्नोति तान् प्रयोक्तुम्। त(?ता)मेव वाऽऽवृत्तं वेद। वेदने च कर्मानुष्ठानार्थे वेदाध्ययनम्। येन तावतो मन्त्रान् कर्मोपयोगिनोऽध्येष्यते–इति। उच्यते– स्वाध्यायविधिवशेन वेदाध्ययनम्। अनधीतवेदस्य नाधिकारः। न च कर्मप्रयुक्तमध्ययनम्। अत इयं समाख्या मन्त्रविशेषविनियोगनिमित्तैव 'कठानां गृह्यं वाजसनेयिनां गृह्यम्' इति। यस्यां शाखायां ये मन्त्रा अधीतास्ते यत्र बाहुल्येन विनियुक्तास्तद्गृह्यं तथा समाख्यायते। प्रमाणं गृह्यस्मृतिः। सा कठानामियमिति व्यपदिश्यमाना बह्वृचानामपि स्वार्थावगमनं करोत्येव। कर्तव्यता वेदस्य स्वार्थे स्मृतीनां च। अवगतायां च कर्तव्यतायां कर्तृविशेषश्रावणे स्वाधिकारो न स्यात्, यथा च तनूनपाति प्रयाजे वसिष्ठानाम्। निषेधाद्वा पतित(? पातित्य)म्।

---

§ अस्य संप्रव्याख्यानं एतत्प्रकरणस्थे 'आवृतैव कुमार्यै' इत्याश्वलायनगृह्यसूत्रव्याख्याने, लघुविष्णुवचनव्याख्याने च द्रष्टव्यम्।

(१) मस्मृ. २।२९; भ्रक. ८६; स्मृच. १९ पू.; चका. ७३६ पू.; स्मृसा. २ नाभि (नाडी); पमा. ४३९ हारीतः; मपा. ३५३ पू.; प्रपा. १३० पुंसो (पुंसां) पू.; संप्र. १८७ : १९३ उत्त. : १९६ पू.; चम. ८; मुक्ता. ७९ पूर्वार्धे मनुः, उत्तरार्धे संवर्तः; संम. १५ नं चास्य (येच्चास्य) चतुर्थपादे (हिरण्यं मधुसर्पिषा); सिन्धु. ८४४ पू.; विपा. २६७ पू.; आन. १४७ पू.; बाल. १।११–१२ पू. १६ (=) पू.; संग. ४३७ वर्ध (कर्त); पुम. ४३३ वर्ध (च्छेद) पू.; संर. ८३१ नाभिवर्ध (नालच्छेद) पू.

न चेह द्वयमप्यस्ति। न च शक्यं कल्पयितुम्। न हि कठानां बाहृवृच्यं प्रमाणम्, बहृवृचानां वा काठकम्। यतो य एव कठः स एवाकठोऽसति तच्छाखाध्ययने। गोत्रं तु नियतमित्यसमानः। एष एवार्थः 'स्वसूत्रं यः परित्यज्य परसूत्रेण वर्तते।' इति। तदेवं स यदधीते तदर्थः शक्योऽनुष्ठातुम्। तेन यः स्वाधीतां शाखामतिक्रम्य पित्राद्यधीतशाखया कर्माणि कुर्यात् तद्गृह्यं च समाश्रयेत् तस्य शाखात्यागदोषः। पित्रादीनां वा शाखात्यागः यैर्माणवकः क्रमाधीतां शाखां नाध्यापितः। माणवकस्यात्र दोषो नास्ति। यदा मृतपितृको जाबालवदयं बालः स्वयमाचार्यमाश्रयेत्तदा 'येनास्य पितरो याताः' इत्यनेन शास्त्रेण सैवाध्येतुं युक्ता स्यात्। अथाऽऽत्मशाखाध्ययनं न संभवति, तदा स्वशाखात्यागः।

अतः स्थितमिदम्— सर्वे सर्वासु स्मृतिषु जातकर्माद्युपदिश्यते। तत्र भिन्नार्थमङ्गजातं समुच्चीयते, विरुद्धं विकल्प्यते समानार्थं च। पुंस इति स्त्रीनपुंसकव्यावृत्त्यर्थम्। अन्ये त्वविवक्षितं पुमर्थं मन्यन्ते, 'द्विजन्मनाम्' इति सामान्येन त्रैवर्णिकानां संस्कार्यत्वेन प्रकृतत्वात्। संस्कार्यश्च प्रधानमुद्देशः। न च प्रधाने लिङ्गसंख्यादिविशेषणं विवक्ष्यते। 'ग्रहं संमार्ष्टि' इति सत्यप्येकवचने सर्वे ग्रहाः संमृज्यन्ते। 'ज्वरितं ज्वरमुक्तं च दिवान्ते भोजयेन्नरम्।' इति नार्या अपि ज्वरिताया एष एव भोजनकालः। तथा च प्राप्तप्रतिषेधः स्त्रीणाम् 'अमन्त्रिका तु कार्येयं स्त्रीणामावृत्' (मस्मृ. २।६६) इति, नपुंसकानां च पाणिग्रहणदर्शनम् 'यद्यर्थिता तु दारैः स्यात् क्लीबादीनाम्' (मस्मृ. ८।२०३) इति। तत्रोच्यते — नायं पुंशब्दो मनुष्यजातिवचनो नरशब्दवत्, येन विभक्तिवाच्यं लिङ्गं न विवक्ष्येत। एष हि सर्वत्र स्थावरमूर्तामूर्तगतं लिङ्गविशेषं प्रसवरूपमाचष्टे। प्रातिपदिकार्थो ह्यत्र लिङ्गम्। विभक्तिवाच्यस्य ह्यर्थस्य विवक्षाविवक्षे युज्येते। यतो न विभक्तेर्वचनमेवैकं प्रयोजनम्, कर्माद्यर्थान्तराभिधानेनाप्यर्थवत्त्वात्। इह त्वविवक्षायामानर्थक्यमेव प्राप्नोति पुंस्पदस्य। यथा तत्रैव ग्रहप्रातिपदिकार्थो विवक्ष्यते वाक्यानर्थक्यपरिहाराय।

अथोच्येत — न प्रत्ययार्थमात्रस्याविवक्षा। कृत्स्नोऽपि पदार्थ उद्दिश्यमानविशेषणं न विवक्ष्यते। यथा 'यस्योभयं हविः' इति सत्यप्युभयपदश्रवणे दधिपयसोरन्यतरार्तावपि तदेव प्रायश्चित्तम्। न विवक्षित उभयशब्दः। अत्र केचित् परिहारमाहुः— नैतत्तेन समानम्। न हि हविरर्थः पञ्चशरावः। हविर्विनाशे हि नैमित्तिकोऽधिकारः। इह तु माणवकार्था एव संस्काराः। एष त्वप्रयोजको विशेषः। वाक्यभेदभयाद्विशेषणविवक्षा नेष्यते। तादर्थ्येऽपि वाक्यभेदो नैवापैति। तस्मादयं परिहारः — एतदेवोत्पत्तिवाक्यं जातकर्मणः 'वैदिकैः कर्मभिः' इत्येतदुपक्रमम्। तत्र पुमानेव संस्कार्यतया निर्दिष्टः। तदविवक्षायां वाक्यानर्थक्यम्। यथा तत्रैव हविःपदं विवक्ष्यते। यद्येवम्, शूद्रस्यापि प्राप्तिः, जातिविशेषानिर्देशात्। न प्राप्स्यति, मन्त्रसाध्यत्वात्। अथवा 'द्विजन्मनाम्' इति वाक्यशेषको भविष्यति। न च तदानीं विधेयार्थविषयत्वेन निर्दिष्टः, येन तत एव संस्कार्यावगतौ 'पुंसः' इत्येतदुभयपदवदविवक्षितमाशङ्क्येत। स्त्रीणां त्वप्राप्तेऽपि विधानमुपपद्यते, क्लीबस्यापि दारदर्शनम्। वातरेता यः क्लीब उभयव्यञ्जनोऽप्रवृत्तेन्द्रियो वा। बहुप्रकार(? रं)व्यावृत्तिकरम्। जातकर्मादिसंस्कारकालेऽपरिच्छेद्यत्वाच्छक्यप्रतीकारत्वाच्च। न च यो न नियतो धर्मः सोऽधिकारं व्यावर्तयति, यथाऽद्रव्यत्वम्। न ह्यद्रव्यत्वं नियतं जातिवत्। य एवाद्रव्यः सोऽपि द्रव्यवान् भवति। चिरमधनो भूत्वा भवत्यहो महाधनः। ईदृशस्यैव षण्ढस्य वधे पलालभारकशुद्धिः। स ह्यसंस्कृतोऽनुपनीतः शान्त्यै न कस्यचित्तिष्ठति। अतः स्थितं पुंसामेवैते संस्कारा एभिर्विधीयन्ते। विध्यन्तरेण स्त्रीणाममन्त्रकाः। नपुंसकस्य नैव सन्तीति। ¶ मेधा.

(२) प्राङ्नाभिरिति नाभिच्छेदनात्पूर्वं पुंसो जातकर्माख्यः संस्कारो विधीयते। अस्य च शिशोस्तदानीं 'प्र

¶ ब्रक., मवि., स्मृच., ममु., चका., स्मृसा., पमा., मपा., प्रपा., मच., सिन्धु., विपा., नन्द., भाच. मेधागतम्।

ते ददामि मधुनो घृतस्य ' इत्येवमादिमन्त्रयुक्तं हिरण्यमाक्षिकघृतानां प्राशनं कार्यम्। पुंसो ग्रहणं नपुंसकव्यावृत्त्यर्थम् ' यद्यर्थिता तु दारैः स्यात् क्लीबादीनाम् ' इति नपुंसकस्य दारदर्शनात् , ' ये स्तेनाः पतिताः क्लीबाः ' इति च श्रोत्रियत्वे सति श्राद्धभोजनप्राप्तेः प्रतिषेधदर्शनात् । स्त्र्यर्थत्वे तस्य प्रमाणं नास्ति । तथा च ' अमन्त्रिका तु ' इति स्त्रीणाममाप्तिं वक्ष्यति । गोरा.

( ३ ) वर्धनं छेदः । अत्र पुंस्त्वमविवक्षितम् , अनुवाद्यविशेषणत्वादिति केचित् । मेधातिथिस्तु– विवक्षितमेव पुंस्त्वम् । तेन नपुंसकस्य न भवति । स्त्रियास्तु वाक्यान्तरप्राप्तत्वादमन्त्रकं भवत्येवेत्याह । मं. १५

## वृद्धमनुः

जननदिनस्य प्रतिग्रहार्हत्वम्

**[१]कुमारजन्मदिवसमेकं कुर्यात् प्रतिग्रहम् ।**
**आयान्ति देवपितरस्तत्र तं बोधयन्ति च ।**
**तस्मात्तद्दिवसः पुण्यः पितृवंशविवर्धनः ॥**
**[२]जाते कुमारे तदहः कामं कुर्यात् प्रतिग्रहम् ।**
**हिरण्यधान्यगोवासस्तिलानां गुडसर्पिषाम् ॥**

## याज्ञवल्क्यः

जातकर्मकालः , जननदिने दानाद्यधिकारः

**[३]एते जातकर्म च ॥**

( १ ) अतः परं नाम्नैवा( व )गतकालं जातकर्म भवति । चशब्दात् सोष्यन्तीकर्म च । तथा चाऽऽह– ' सोष्यन्तीमद्भिरभ्युक्षति ' ' जातस्य कुमारस्य च ' ( पागृ. १।१६।१,३ ) इति । विश्व.

( २ ) एते आ इते आगते गर्भकोशाज्जाते कुमारे जातकर्म । † मिता.

( ३ ) ' प्रसवे जातकर्म च ' इति पाठः सुगमः । चशब्देन प्रसङ्गात् अपत्यजन्मकालकृत्यानामन्येषां कर्मणां समुच्चयः । वीमि.

**[१]पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम् ।**
**तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात् ॥**

( १ ) एवं शावाशौचमभिधायेदानीं सूतकाश्रयं विशेषापवादमाह–पित्रोरिति । मातापित्रोर्बीजशोणितसंबन्धादङ्गस्पर्शायोग्यत्वकरं सूतकम् , न पुनः सपिण्डानामपि, तदसंभवात् । एवं चेन्मातुरेव तदसृग्दर्शनात् ध्रुवं निश्चितमित्यर्थः । तथा च स्वायंभुवम्– ' सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् । सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ ' ( मस्मृ. ५।६२ )इति । शावशब्दोऽङ्गस्पर्शाभावप्रतिपत्त्यर्थः । यदपि चान्यत्सपिण्डसामान्यं दानाद्यनधिकारलक्षणमाशौचं तदपेक्षयाऽपि यस्मिन्नहनि पुत्रो जातस्तदहर्न प्रदुष्येत। किमर्थम् ? पूर्वेषां पित्रादीनां पितॄणां जन्मकारणात् । जन्मनि श्राद्धकारणादित्यर्थः । प्रशब्दाच्च भोक्तॄणामप्यदोष इति गम्यते । विश्व.

( २ ) जनननिमित्तमस्पृश्यत्वलक्षणमाशौचमाह – पित्रोरिति । सूतकं जनननिमित्तमस्पृश्यत्वलक्षणमाशौचं पित्रोः मातापित्रोरेव, न सर्वेषां सपिण्डानाम्। तत्रास्पृश्यत्वं मातुर्ध्रुवं दशाहपर्यन्तं स्थिरमित्यर्थः । कुतः ? तदसृग्दर्शनात् । तस्याः संबन्धित्वेनासृजो दर्शनात् । अत एव वसिष्ठः– 'नाऽऽशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति । रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥ ' इति । पितुस्तु ध्रुवं न भवति, स्नानमात्रेणास्पृश्यत्वं निवर्तते । यथाऽऽह संवर्तः – ' जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते । माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥' इति । माता शुध्येद्दशाहेनेत्येतच्च संव्यवहारयोग्यतामात्रम् । अदृष्टार्थेषु पुनः कर्मसु पैठीनसिना विशेष उक्तः– ' सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत् , मासेन

---

† अप. मितावत् ।

(१) बौवि. १।११।१.

(२) अप. ३।१९ पृ. ८९६ नां गुड ( नगुड ) मनुः ; स्मृच. २० ण्यधा ( ण्यं धा ) लानां ( लांश्च ) ; पमा. ५८३ मनुः ; मुक्ता. ८० पू .

(३) यास्मृ. १।११. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे ( सं. का. पृ. ४७ ) द्रष्टव्याः .

(१) यास्मृ. ३।१९ ; विश्व. २।२९ ; मिता. ; अप. ; दीक. ३।२९ ; वीमि. ३।२०.

स्त्रीजननीम्' इति। अङ्गिरसा च सपिण्डानामस्पृश्यत्वाभावः स्पष्टीकृतः — 'सूतके सूतिकावर्ज्यं संस्पर्शो न निषिध्यते। संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते॥' इति। यस्मिन् दिवसे कुमारजननं तदहर्न प्रदुष्येत। तन्निमित्तदानाद्यधिकारापहारकृन्न भवतीत्यर्थः। यस्मात्तस्मिन्नहनि पूर्वेषां पित्रादीनां पुत्ररूपेण जन्म उत्पत्तिः, तस्मात्तदहर्न प्रदुष्येत। तथा च वृद्धयाज्ञवल्क्येनोक्तम्— 'कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः। हिरण्यभूगवाश्वाजवासःशय्यासनादिषु॥ तत्र सर्वं प्रतिग्राह्यं कृतान्नं न तु भक्षयेत्। भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत्॥' इति। व्यासेनाप्यत्र विशेष उक्तः — 'सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तं तु शुचिर्जन्मनि कीर्तिता॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा। त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि॥'। मार्कण्डेयेनाप्युक्तम् — 'रक्षणीया तथा षष्ठी निशा तत्र विशेषतः। रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः। रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके॥' इति। मिता.

(३) सूतकं प्रसूतिभवमस्पृश्यत्वात्मकमशुचित्वं मातापित्रोः, नान्येषां सपिण्डानाम्। तत्र यदि पिता सूतिकायाः संस्पर्शलक्षणं संसर्गं तया सह न भजते तदा मातुरेवास्पृश्यत्वं रजोदर्शनहेतुकं ध्रुवम् अविचलं दशरात्रं यावद्भवति। यदाह वसिष्ठः — 'नाऽऽशौचं सूतके पुंसः संसर्गं चेन्न गच्छति। रजस्तत्राशुचि भवेत्तच्च पुंसि न विद्यते॥' इति। यस्मिन्नहनि पुत्रजन्म तदहर्न दुष्यति। न तस्मिन्नहनि पितुरशुचित्वं भवतीत्यर्थः। अत्र 'पूर्वेषां जन्मकारणात्' इति हेतुः। पूर्वेषां पित्रादिपुरुषाणां तत्र जन्म भवतीति हेतोस्तस्मिन्नहन्यशुद्धिर्नास्तीति। अप.

(४) अस्पृश्यत्वं सामान्यतो मातापित्रोर्भवत्येव, मातुस्तु ध्रुवं चिरकालस्यापि तदस्पृश्यत्वमसृग्दर्शनात्। जननाशौचस्य क्वचित्कर्मण्यविरोधित्वमाह — तदहरिति। पित्रादीनां पुत्ररूपेणोत्पत्तेः पुत्रजन्मदिनं तु दानादौ कर्तव्ये न प्रदुष्येतेत्यर्थः। वीमि.

## वृद्धयाज्ञवल्क्यः

जननदिने कृतान्नातिरिक्तप्रतिग्रहे दोषाभावः

[१]कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः।
हिरण्यभूगवाश्वाजवासःशय्यासनादिषु॥
[२]तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत्।
भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत्।
सूतके तु सकुल्यानामदोषो मनुरब्रवीत्॥

(१) सकुल्यानां तु कृतान्नप्रतिग्रहे दोषाभावः, 'सूतके... ब्रवीत्॥' इति स्मरणात्। तच्च (कृतान्नं ?) सकुल्यब्रह्मचारिव्यतिरिक्तविषयम्। मुक्ता. ७९

(२) अत्र दानं सकुल्येभ्योऽपि देयम्, 'सर्वेषां सकुल्यानां द्विपदचतुष्पदधान्यहिरण्यानि दद्यात्' इति। आन. १४७

## नारदः

जातकर्मकालः

[३]तस्मिञ्जन्ममुहूर्तेऽपि सूतकान्तेऽपि वा शिशोः।
जातकर्म प्रकर्तव्यं पितृपूजनपूर्वकम्॥

---

(१) मिता. ३।१९; अप. ३।१९ पृ. ८९६; पमा. ५८३; प्रपा. १३३ श्वाजवासः (श्वादिधान्य); संप्र. २०० प्रपावत्; मुक्ता. ७९; संकौ. ५९ प्रपावत्; आन. १४७; संग. ४५५ प्रपावत्; संर. ८३२ प्रपावत्.

(२) मिता. ३।१९ तु न (न तु) तृतीयार्धं नास्ति; अप. ३।१९ पृ. ८९६ तृतीयार्धं नास्ति; स्मृच. २० न भक्षयेत् (विवर्जयेत्) तृतीयार्धं नास्ति; पमा. ५८३ तृतीयार्धं नास्ति; मपा. ३८३ तृतीयार्धं नास्ति; प्रपा. १३३ (तत्र सर्वं प्रतिग्राह्यं पक्वान्नं तु विवर्जयेत्। यो भक्षयति तन्मोहाद्द्विजश्चान्द्रायणं चरेत्। सूतकेऽपि सकुल्यानां न दोषो मनुरब्रवीत्॥); संप्र. २०० कृतान्नं (पक्वान्नं) शेषं स्मृचवत्; मुक्ता. ७९ नामदोषो (नां न दोषं) शेषं स्मृचवत्, तृतीयार्धस्य 'स्मरणम्' इति निर्देशः; संकौ. ५९ संप्रवत् स्मृचवच्च; आन. १४७ नामदोषो (नां न दोषो) शेषं स्मृचवत्; संग. ४४५ संप्रवत् स्मृचवच्च; संर. ८३२ संप्रवत् स्मृचवत् आनवच्च.

(३) ज्योता. १९।१; ज्योनि. १११ (=) पि वा (थवा) प्रक (च क); संग. ४४७ ज्योनिवत्, ज्योतिषे; संब. ६० तेऽपि (ते तु) शेषं ज्योनिवत्.

## बृहस्पतिः

जातकर्मफलम्

**¹जातकर्मक्रियां कुर्यात् पुत्रायुःश्रीविवृद्धये ।
ग्रहदोषविनाशाय सूतकाशुभविच्छिदे ।
कुमारग्रहनाशाय पुंसां सत्त्वविवृद्धये ॥**

## भृगुः

जातकर्मणि गुरुशुक्रास्तादिदोषाभावः

**²उत्सवेषु च सर्वेषु सीमन्त ऋतुजन्मनोः ।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते ॥**

चकारान्मलमासातिचारादीनां ग्रहणम् । संर. ८३४

## व्यासः

जातकर्मकालः, जनने रात्रावपि स्नानदानकर्तव्यता, जननदिवसे सुवर्णादिदानं तत्प्रतिग्रहानुमतिश्च, प्रथमादिदिवसविशेषेषु कर्माङ्गमसूतकम्

**³जाते जातक्रिया भवेत् ॥**

**⁴रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिषु ॥**

एतन्मध्यमयामद्वयाभिप्रायम् । * स्मृच. १२०

**⁵ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥**

**¹पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् ।
उपरागविवाहेषु प्राणार्तिषु विशेषतः ॥**

**²जाते कुमारे तदहः कामं कुर्यात् प्रतिग्रहम् ।
हिरण्यधान्यगोवासस्तिलांश्च मधुसर्पिषी ॥**

**³प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥**

चकारात् पञ्चमाष्टमयोरपि । तत्र प्रथमे नैमित्तिकश्राद्धादौ । दशमे बलिदानान्नदानयोः । इतरत्र तु जन्मदेवतापूजादौ । ¶ संकौ. ६१

**⁴पुत्रोत्पत्तौ सदा श्राद्धम्... ॥**

---

* चश्रा. स्मृचवत् ।

(१) संसौ. ५३ शुभ ( शुचि ) ; संव. ६०.

(२) सिन्धु. ८१७ द्वितीयपादे (सीमन्त ऋतुजन्मसु) ; संर. ६८५, ८३४. (३) व्यास्मृ. १।१८.

(४) अप. १।१५४ पृ. १९७ ; स्मृच. १९ तु ( च ), १२० : ३८२ (=) न ( च ) पू. ; चश्रा. ८५७ ; मपा. ३५३ ; प्रपा. १३० ; गभा. १६० ; संसौ. ४९ ; संप्र. १८९ ; मुक्ता. ७९ ; संम. १४ त्तिकं तु ( त्तिके च ) ; संकौ. ५९ उत्त. ; संग. ४३६ तु कुर्वीत ( तु कर्तव्यं ) ; कृभ. ८४४ तु ( च ).

(५) अप. १।१५४ पृ. १९७ यात्रार्तिप्र ( यात्रार्थे प्र ) ; स्मृच. १९ ; मपा. ३५३ ; गभा. १६० यात्रार्तिप्र

¶ संव संकौवत् । कृभ. संकौगतम् ।

( यात्रादौ प्र ) ; संसौ. ५० गभावत् ; मुक्ता. ७९ ; संम. १४ (=) ; आन. १४७ षु च ( ष्वपि ) ; कृभ. ८४३–८४४ दानं ( स्नानं ) ज्ञेयं ( कार्यं ).

(१) अप. १।१५४ पृ. १९७ ; स्मृच. १९ पू. ; प्रपा. १३० दत्त ( दान ) पू. ; गभा. १६१ पू. ; संसौ. ५० पू. ; संप्र. १८९ पू. ; मुक्ता. ७९ पू. ; सिन्धु. ८४५ पू. ; विपा. २६८ र्यां दत्तमक्षयम् ( र्यामपि कारयेत् ) पू. ; संकौ. ५९ पू. ; संग. ४३६ पू. ; संदी. २१६ ( भागः २ ) पू.

(२) प्रपा. १३३ उत्तरार्धे ( हिरण्यधान्यगोवस्त्रतिलाश्च ( ? लाश्च- ) मधुसर्पिषाम् ॥ ) ; संप्र. २०० ; मुक्ता. ८० चतुर्थपादे ( श्चित्रान्नगुडसर्पिषाम् ) ; संग. ४४५.

(३) मिता. ३।१९ ; अप. ३।१९ पृ. ८९७ ; स्मृच. [ आशौच. ] १० चतुर्थपादे ( पुत्रजन्मनि सूतकम् ) ; पमा. ५८३ ; मपा. ३८३ ; प्रपा. १५७ त्रिष्वेतेषु ( त्रिष्वाशौचं ) सूतकं ( सूतके ) ; गभा. १६५ ; धप्र. ३७ (=) प्रपावत् ; संप्र. २०२ प्रपावत् ; संम. १५ प्रपावत् ; सिन्धु. ८६१–८६२ ; शूक. ९२ ; विपा. ३०६ त्रिष्वेतेषु ( त्रिधाऽऽशौचं ) सूतकं ( सूतके ) ; संकौ. ६१ प्रथमपादे ( प्रथमेऽहनि षष्ठे वा ) शेषं प्रपावत् ; बाल. १।११–१२ पृ. २४ ; संग. ४४९ प्रपावत्, वीरमित्रोदये; संव. ५७ (=) चैव सर्वदा ( पुत्रजन्मनि ) कुर्वीत ( कर्तव्यं ) : ६२ संकौवत् प्रपावच्च ; संर. ८४६ प्रपावत्.

(४) संसौ. ५१.

## देवलः

जननिमित्तकस्नानदाने , बालमुखावलोकनम्

**'जाते पुत्रे पिता श्रुत्वा सचेलं स्नानमाचरेत् ।**
**ब्राह्मणेभ्यो यथाशक्ति दत्त्वा बालं विलोकयेत् ॥**

## प्रजापतिः

जननाशौचे पुत्रजनने जातकर्माङ्गशुद्धिः पूर्वाशौचेनाऽऽशौचनिवृत्तिश्च

**'आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।**
**कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति ॥**

(१) कर्तुः जातकर्मादिकर्तुः । पूर्वाशौचेन पूर्वाशौचकालेनेत्यर्थः । अप. ८९९

(२) एतच्च जननाशौचे मरणाशौचे च कार्यमित्याह प्रजापतिः— आशौच इति । मदनपारिजातेऽप्येवम् । केचित्तु ' मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् । आशौचापगमे कार्यं जातकर्म यथाविधि ॥ ' इति स्मृतिसंग्रहोक्तेराशौचान्ते कार्यमित्याहुः । स्मृत्यर्थसारेऽपि विकल्प उक्तः । §गभा. १६१

(३) ' आशौचे तु समुत्पन्ने ' इत्यस्मिन्नपि पाठे आशौचपदं सूत्याशौचपरमेव व्याख्येयम् । तथा च जातूकर्ण्यः— ' जाताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् । जननानन्तरं कुर्याज्जातकर्म यथाविधि । जातेष्टिः सूतकान्ते तु कर्तव्येति विनिश्चयः ॥ ' । जनना (? जाता)-शौचपदं नाऽऽशौचमात्रपरम् , ' मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् । आशौचापगमे कार्यं जातकर्म यथाविधि ॥ ' इति तस्यैव स्मरणात् । ¶ संप्र. २०१

(४) पूर्वाशौचेन शुद्धिर्ज्ञातिविषया ' स्वाशौचकालतस्त्वेव सूतिका जनकोऽग्निदः । ' इति नियमात् । आन. १४७

§ सिन्धु., विपा. गभावत् ।

(१) संत. ९१६.

(२) मिता. ३।२० ; अप. ३।२० पृ. ८९८ आशौचे ( सूतके ) ; स्मृच. २० ; चका. ७३७ ; प्रपा. १३० अपवत् ; गभा. १६१ ; निप्र. ११२ शौचेन शुध्यति ( शौचं न बाधकम् ) ; संप्र. २०१ अपवत् , आदर्शपाठोऽपि ; मुक्ता. ८० ; संम. १४ चतुर्थपादो नास्ति, शेषं अपवत् ; सिन्धु. ८४६ ; विपा. ८६९ ; ज्योनि. १११ आशौचे तु ( सूतके च ) वसिष्ठः ; संको. ५९ चतुर्थपादो नास्ति, शेषं अपवत् ; आन. १४७ ; बाल. १।११–१२ पृ. १६ ; संग. ४४५ अपवत् ; संव. ६० अपवत् , वसिष्ठः ; पुम. ४३३ ; कुभ. ८४४ अपवत् , निर्देशमात्रम् ; संर. ८३० अपवत् .

## संवर्तः

जननिमित्तकं पितुः स्नानं ततः स्पृश्यत्वं च, मातुर्दशाहमस्पृश्यत्वम्

**'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।**
**माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥**

अत्र पुत्र इत्यपत्यपरम् । अतस्त्वपत्ये पितुः स्नानं भवति । यथा गर्भाधानशङ्कायामृतुकालगमने स्नानम् , एवं जननेऽपि समानम् । पितुरपि स्नानादस्पृश्यत्वं निवृत्तमित्यभिधानात् सपिण्डानामस्पृश्यत्वं नास्त्येव, ततो न तेषां स्नानमपि । मपा. ३८२

**'पुत्रे जाते पिता सद्यः सचैलं स्नानमाचरेत् ।**
**स्पर्शयोग्यस्ततः पश्चादित्याह भगवान् मनुः ॥**

¶ संर. संप्रवत् ।

(१) संस्मृ. ४१–४२ ; मिता. ३।१९ ; स्मृच. १८ पू. ; चका. ७३६ चैलं ( चेलं ) पू. ; स्मृसा. ११२, ११७ सचैलं तु ( सचैलस्य ) ; पमा. ४३९ चकावत् , पू. : ५८२, ६१९ चकावत् ; मपा. ३५२ चकावत् , पू. : ३८२ चकावत् ; प्रपा. १३० पू. ; शौक. ३।१८ चकावत् ; गभा. १६० पू. ; संत. ९१५ चकावत् , पू. ; संसौ. ४९ पू. ; शूशि. ७१ (=) पू. ; संप्र. १८८ ; मुक्ता. ७९ पू. ; संम. १४ पू. ; ज्योनि. १११ तु (च) पू., वसिष्ठः ; आन. १४७ चकावत् , पू. ; संग. ४३५ : ४३६ (=) उत्त. ; पुम. ४३३ पू. ; कुभ. ८४४ उत्त.

(२) संव. ५८ (=) ; संर. ८३०.

## पराशरः

पुत्रजन्मनि रात्रौ स्नानदानयोः पाठभेदेन कर्तव्यता

[1]पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि ।
राहोश्च दर्शने दानं प्रशस्तं नान्यदा निशि ॥

यज्ञे अवभृथे । ¶ स्मृच. १२०

[2]खलयज्ञे विवाहे च संक्रान्तौ ग्रहणे स्मृतौ (? मृतौ) ।
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ॥

## बृहत्पराशरः

जातकर्मणः प्राक् वृद्धिश्राद्धानुष्ठानम्

[3]जातस्य जातकर्म स्याद्विधिवच्छ्राद्धपूर्वकम् ॥

## अत्रिः

जनननिमित्तकवृद्धिश्राद्धस्य तात्कालिकत्वम्

[4]पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥

तात्कालिकं पुत्रजन्मानन्तरम् । लता. ३२

## जाबालिः

पुत्रजन्मनिमित्तकवृद्धिश्राद्धस्य विधिः कालश्च, जातकर्मकालः

[5]पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥
[6]जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥

¶ चश्रा. , मुक्ता. स्मृचवत् ।

(१) पस्मृ. १२।२३ ; स्मृच. १२० चात्ययकर्मणि. ( संक्रमणे रवेः ) दानं ( स्नानं ) नान्यदा (नान्यथा) ; चश्रा. ८६० स्मृचवत् ; मुक्ता. २७१ स्मृचवत् .

(२) मुक्ता. ८०. (३) बृपसं. ६।१४९.

(४) अस्य स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे ( सं. का. पृ. १८२२ ) द्रष्टव्यः .

(५) अस्य स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे (सं. का. पृ. १८२३ ) द्रष्टव्यः .

(६) प्रपा. १३१ ; संप्र. २०० ; संकौ. ५९ ; बाल. १।११–१२ पृ. १६ संवर्तः ; संग. ४४७ कालं (काले) ; कृभ. ८४७ ; संर. ८३१.

[1]अच्छिन्ननाले कर्तव्यं श्राद्धं वै पुत्रजन्मनि ।
आशौचोपरमे कार्यमथवा नियतात्मभिः ॥

## पैठीनसिः

दशम्यादिषु क्षत्रियादीनां निषिद्धस्य स्नानस्य पुत्रजन्मनि प्रतिप्रसवः

[2]पुत्रजन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
नित्यस्नाने च कर्तव्ये तिथियोगो न विद्यते ॥

## कार्ष्णाजिनिः

पुत्रजन्मनिमित्तकवृद्धिश्राद्धविधिः

[3]प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वाऽनन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् ॥

श्राद्धं चात्राऽऽभ्युदयिकमेव, न स्वतन्त्रम् ।
गभा. १६०

## गर्गः

नालच्छेदनात्प्राक् बालदर्शनम्, सुवर्णादिदानम्, जातकर्मकालः, वृद्धिश्राद्धविधिः

[4]श्रुत्वा बालस्य वै जन्म कृत्वा वेदोदिताः क्रियाः ।
अच्छिन्ननालं पश्येत्तं दत्त्वा रुक्मं फलान्वितम् ॥
[5]जन्मनोऽनन्तरं तु स्याज्जातकर्म यथाविधि ।
सूतकानन्तरं कुर्यान्नामनिर्देशनादयः ॥
[6]जातमात्रकुमारस्य जातकर्म विधीयते ।
स्तनप्राशनतः पूर्वं नाभिकर्तनतोऽपि वा ॥

(१) प्रपा. १३१ नाले ( नाभौ ) ; संप्र. १९२ पू. ; संकौ. ५९ नाले ( नाभि ) पू.

(२) अप. १।१५४ पृ. १९७.

(३) अस्य स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे (सं. का. पृ. १८२४ ) द्रष्टव्यः .

(४) संत. ९१६. (५) संप्र. २०० ; संग. ४४७.

(६) प्रपा. १३०–१३१ स्तन ( स्तन्य ) वा (च) ; संप्र. १९३ ; संम. १५ ; सिन्धु. ८४५ बैजवापः ; विपा. २६८ बैजवापः ; संग. ४३७ वा ( च ).

( १ ) ‘ नाभिकर्तनतोऽपि वा ’ इत्यवध्यन्तरोपादानं नालच्छेदादूर्ध्वमपि स्तनप्राशनात्प्राक् गौणकालविधानार्थम्, अन्यथा वैयर्थ्यापत्तेः । अत एव ‘ *एषु कालेष्वतीतेषु ’ इत्यत्र कालत्रयाभिप्रायेण बहुवचनं वक्ष्यते । संप्र. १९३

( २ ) एतेन नैमित्तिकमपीदं जातेष्टिवदाशौचान्ते कार्यमिति शङ्का परास्ता । ‡ सिन्धु. ८४५

( ३ ) कुमारस्येति । पुंस्त्वाविवक्षया ‘ तूष्णीमेताः क्रियाः स्त्रीणाम् ’ इति वाक्यान्तराद्वा कन्याया अपि जातकर्म कार्यम् , न तु नपुंसकस्येति मेधातिथिः ।

कृभ. ८४५

**[1]पुत्रोत्पत्तिप्रतिष्ठासु तन्मौञ्जीत्यागबन्धयोः ।**
**चूडायां च विवाहे च वृद्धिश्राद्धं विधीयते ॥**

## सत्यव्रतः

जातकर्मवृद्धिश्राद्धकालः

**[2]पुत्रजन्मन्या नाभिकर्तनात्पुण्यं तदहः ।· कृतजातकर्माऽऽमश्राद्धं कुर्यात् ॥**

## आश्वलायनः

पुत्रदर्शनस्नाननान्दीश्राद्धजातकर्माणीत्यनुष्ठानक्रमः , जातकर्मणः प्राक् पित्रन्यैरस्पृश्यो बालः , जातकर्मकालः , आपत्कालादौ कर्तृनिर्णयः

**[3]जाते कुमारे तं दृष्ट्वा स्नात्वाऽऽनीय गुरून् पिता ।**
**नान्दीश्राद्धावसाने तु जातकर्म समाचरेत् ॥**

* वचनमिदं मुहूर्तप्रकरणे संगृहीतम् ।

‡ विपा. सिन्धुवत् ।

(१) अस्य स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे (सं. का. पृ. १८२६ ) द्रष्टव्यः .

(२) **स्मृच.** १९ ; **मुक्ता.** ८० तदहः । कृतजातकर्माऽऽम ( दानं कृतं जातकर्म ).

(३) **आश्वस्मृ.** ११।८६ गुरून् पिता ( गुरुं तदा ) कर्म ( कृत्यं ) ; **प्रपा.** १३१ ; **संप्र.** १८८ प्रथमपादे ( जातं कुमारं स्वं दृष्ट्वा ) ; **संको.** ५९ जाते कुमारे ( जातं कुमारं ) ; **संग.** ४३७ संकोवत् ; **कृभ.** ८४६ (=) प्रथमपादे (जातं कुमारं दृष्ट्वा तं) वसाने (वसानं).

( १ ) गुरून् ब्राह्मणान् । प्रपा. १३१

( २ ) स्नानं च पुत्रमुखदर्शनानन्तरं कार्यम् , ‘ सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः । कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात् ॥ ’ ‘ जातं कुमारं स्वं दृष्ट्वा स्नात्वा ... ’ इति ब्रह्मपुराणाश्वलायनाभ्यां मुखदर्शनस्नानयोः क्त्वाप्रत्ययेन पौर्वापर्याभिधानात् । यत्तु ‘ श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् । ’ इति ज्योतिर्वसिष्ठेन मुखदर्शनप्राक्कालीनपुत्रजन्मश्रवणानन्तरमेव स्नानमुक्तम् , तत् दशाहानन्तरं पुत्रजन्मश्रवणाभिप्रायमिति न विरोधः , ‘ निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥ ’ इति मनुस्मरणात् । अत एव ‘ जातमात्रकुमारस्य मुखमस्यावलोकयेत् । पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात् ॥ ’ इति वसिष्ठेन जातकर्मकालीनमुखदर्शनव्यावृत्त्यर्थं मात्रशब्दः प्रयुक्तः । ततश्च जातकर्मकालीनानुषङ्गिकान्मुखदर्शनादिदमतिरिक्तं फलार्थं प्रधानभूतं मुखदर्शनं विधीयते इति सिध्यति । तथा च श्रुतिः— ‘ ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ ’ ( ऐब्रा. ७।१३।४ ) इति । न च पुत्रोत्पादनविधेरयमर्थवादः , पुत्रोत्पत्तेः पुत्रमुखदर्शनाविनाभावाभावेन तदाक्षेपकत्वासंभवात् । तस्मादप्राप्तपुत्रमुखदर्शनविधिमुन्नयत्येव । यद्येवं तर्हि $मुखदर्शनाविनाभूतस्य पुत्रोत्पादनस्य मुखदर्शनविधिनैवाऽऽक्षेपात् पुनर्विधानमनुपपन्नमिति चेत् । मैवम् , क्षेत्रजादिमुखदर्शनस्य स्वोत्पादनेनाविनाभावाभावेन तदनाक्षेपकत्वात् । ततश्च परस्परानाक्षिप्तविधिभेदेन फलभेदे सिद्धे पुत्रोत्पादनविधेः पित्रर्णा-

$ रभसोक्तिरियं लेखकप्रमादो वा । अविनाभूतत्वं नाम विनाऽनुपपन्नत्वम् । येन विनाऽनुपपत्तिस्तदुपपादकम् । अनुपपन्नेनोपपादकमाक्षिप्यते । प्रकृते मुखदर्शनेन पुत्रोत्पादनाक्षेपस्य शङ्काविषयत्वात् उपपादकपुत्रोत्पादनाक्षेपकं मुखदर्शनमविनाभूतं वाच्यम् । अत्र तु विपरीतोक्तिः । वस्तुतः एवमत्र ग्रन्थेन भाव्यम्— ‘ ... पुत्रोत्पादनाविनाभूतस्य मुखदर्शनस्यैव विधिना पुत्रोत्पादनस्याऽऽक्षेपात् ... ’ इति ।

पाकरणम् , मुखदर्शनविधेश्च ऋणसामान्यापाकरणममृतत्वं च फलमिति सिध्यति । तस्मात् सिद्धो विधिभेदः । अत एव स्मृतिकारैरस्मादेवार्थवादात् 'मुखमस्यावलोकयेत्' इत्यादिविधिरुन्नीतः । संप्र. १८८–१८९

[1]कैवर्तादिस्त्रियो मुक्त्वा पितुरन्यैश्च तच्छिशुः ।
न स्प्रष्टव्यः पुरा तावज्जातकृत्यादिति स्थितिः ॥
[2]प्राङ्नाभिकर्तनात् कार्या जातकर्मक्रिया द्विजैः ॥
[3]$ पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥
दीक्षान्ते दीक्षितो भर्ता जातकृत्यादिकं चरेत् ।
पुंसवादीनि कर्माणि त्रीणि श्रेष्ठेन कारयेत् ॥
[4]अकृतेऽन्यकृते कर्मण्यापत्सु स्वास्थ्यमागतः ।
दानैर्ब्राह्मणवाक्यैश्च पुत्रकर्मोत्तरं चरेत् ॥
[5]रोगार्दितस्तु तत्कालं स्पृशन्नन्येन कारयेत् ।
यावत्स्वास्थ्यं भवेत्तावन्नाऽऽचरेज्जातकक्रियाम् ॥

अकृत इति । निषिद्धप्रतिनिधिना कृतमित्यकृततामापन्नं कर्मातिक्रान्तं केनापि निमित्तेन कंचित्कालं स्वयं कर्तुमसमर्थोऽपि नान्येन कारयेत् । स्वास्थ्योत्तरं दानसहितब्राह्मणाशीर्भिः सोत्कर्षं पुत्रसंस्कारं कुर्यादित्यर्थः । महारोगार्तस्तु सत्यपि सामर्थ्ये स्वयं जातकर्म न कुर्यात् , 'रोगार्दितस्तु...' इत्याश्वलायनवचनात् ।

† संकौ. ५९–६०

## जातूकर्ण्यः

जननाशौचे पुत्रजन्मनि जातकर्म तत्कालं कर्तव्यं जातेष्टिराशौचनिवृत्तौ, मृताशौचे पुत्रजनने आशौचनिवृत्तौ जातकर्म

[1]जाताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।
जननानन्तरं कुर्याज्जातकर्म यथाविधि ।
जातेष्टिः सूतकान्ते तु कर्तव्येति विनिश्चयः ॥
¶[2]मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।
आशौचापगमे कार्यं जातकर्म यथाविधि ॥

## बैजवापः

जातकर्मकालः

[3]जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥

पुरुषापराधेन काले जातकर्माननुष्ठाने कालान्तरमाह बैजवापः – जन्मन इति । संम. १५

---

$ अनयोः श्लोकयोर्व्याख्यानं पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३८ ) द्रष्टव्यम् ।

(१) आश्वस्मृ. ११।८८ न स्प्रष्ट ( अस्प्रष्ट ) ; प्रपा. १३१ न्यैश्च ( न्यैस्तु ).

(२) आश्वस्मृ. ११।८९ ; प्रपा. १३० कर्त (वर्ध) ; संप्र. १९३ ; संग. ४३७.

(३) आश्वस्मृ. ११।९४–९५ . शेषस्थलादिनिर्देशाः पुंसवनविधिप्रकरणे ( सं. का. पृ. २५३८ ) द्रष्टव्याः.

(४) आश्वस्मृ. ११।९६ ; प्रपा. १३३ दानै (शनै) ; संकौ. ५९ ; कुभ. ८४७ दानैर्ब्रा ( दाने ब्रा ) कर्मोत्तरं च ( कर्म समाच ) ; संर. ८३२ त्तरं ( त्तमं ).

(५) आश्वस्मृ. ११।९७ कालं ( काले ) वन्ना ( वद्रा ) ; प्रपा. १३३ कालं ( काले ) ; संकौ. ६० ; कुभ. ८४७–८४८ र्दित ( र्तिन ) ; संर. ८३३.

† कुभ., संर. संकौवत् ।

¶ अस्य व्याख्यानं प्रजापतिवचनव्याख्याने द्रष्टव्यम् ।

(१) संप्र. २०१ ; मुक्ता. ८० प्रथमपादे ( जननाशौचमु( ? च उ )त्पन्ने ) तृतीयार्धे नास्ति.

(२) गभा. १६१ स्मृतिसंग्रहः ; संप्र. २०१ ; मुक्ता. ८० ( मृताशौचे समुत्पन्ने पुत्रजन्म यदा भवेत् । आशौचे निर्गते कुर्याज्जातकर्म च नाम च ॥ ) ; सिन्धु. ८४६ स्मृतिसंग्रहः ; विपा. २६९ स्मृतिसंग्रहः ; संग. ४४५ ; संर. ८३० वसिष्ठः .

(३) स्मृच. १९ कालं चे ( कालश्चे ) ; चका. ७३६–७३७ ; मपा. ३५३ स्मृचवत् ; गभा. १६० हेमाद्रौ ; संसौ. ५२ यथाविधि ( यथा विधिः ) तीतकालं चे ( तीतः कालश्चे ) वैजनाथः ; संप्र. २०० ; मुक्ता. ७९ ; संम. १५ कालं ( काले ) भवेत् ( सति ) ; सिन्धु. ८४५ ; विपा. २६७ तीतकालं चे ( तीतः कालश्चे ) ; संग. ४४७ कालं ( काले ).

## जैमिनिः

नालच्छेदनोत्तरमाशौचप्रवृत्तिः

**[1]यावन्न च्छिद्यते नालं तावन्नाऽऽप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते ॥**

( १ ) यदपि ' छिन्ने ... विधीयते । ' इति बैजवापस्मरणं तत् सर्वं नालच्छेदात् पूर्वमेव जातकर्म श्राद्धं च कर्तव्यमित्येवंपरम् । मुक्ता. ८०

( २ ) अस्माद्वचनात् नालच्छेदोत्तरमेवाऽऽशौचप्रवृत्तिरिति भाति । प्राञ्चस्तु— यावन्न छिद्यते नालं तावच्छिशुमृतौ पूर्णं सूतकं नाऽऽप्नोति, नालच्छेदोत्तरं तु शिशुमृतौ संपूर्णं प्राप्नोतीति व्याचख्युः । एवं च ज्ञायते— तेषां जन्मोत्तरमेवाऽऽशौचप्रवृत्तिरिष्टेति । युक्तं चेदम् । आशौचं जननोत्तरमेव प्रवर्तते । जातकर्मवृद्धिश्राद्धदानादौ तु तात्कालिकी शुद्धिर्वचनेन बोध्यते ' कर्तुस्तात्कालिकी शुद्धिः ' इतिवत् । एवं च स्नानोत्तरं संध्यादिकं न भवत्येवेति दिक् । संम. १४

( ३ ) पुत्रजन्मनिमित्तशुद्धेरप्यवधिं जैमिनिः ( आह ) — ' यावन्न ... विधीयते ॥ ' इति । नैमित्तिकाधिकारसंपादकसंध्यावन्दनादेः पूर्णतार्थमुत्तरार्धम् । संकौ. ५९

## स्मृत्यन्तरम्

मुख्यकालीनं जातकर्म मलमासेऽपि कार्यम् , जन्मदिने दानविधिः प्रतिग्रहानुमतिश्च

**[2]श्राद्धजातकनामानि ये च संस्कारसव्रताः ।
मलिम्लुचेऽपि कर्तव्याः काम्या इष्टीर्विवर्जयेत् ॥**

( १ ) संस्काराः अन्नप्राशननिष्क्रमणादयः । सव्रताः जनार्दनशयनादारभ्य यावदुत्थानं धारणपारणादिकं करिष्यामीत्येवं संकल्पसहिताः । काम्या इति ग्रहणं काम्यपशुबन्धादिकर्मोपलक्षणार्थम् , सर्वेषामपि काम्यानामनावश्यकत्वेन वर्जनीयत्वात् । स्मृच. ३७३

( २ ) जातकर्मादौ प्रतिप्रसवमाह स्मृतिः— श्राद्धेति । संस्कारा अन्नप्राशननिष्क्रमणादय इति माधवाचार्यः । यत्तु ' † नामान्नप्राशनं ... ॥ ' इति गार्ग्यवचने नामकरणादीनां वर्जनमुक्तम् , तत् नामकरणान्नप्राशनजातकर्मणामेकादशद्वादशप्रधानकालाकृतानाम् ' यद्वाऽऽगामिक्रिया मुख्या ' इत्यादिवचनात् अन्तरालकर्तव्यानाम् ' न सावकाशं मङ्गल्यम् ' इत्युक्तविषयकाणां वेदितव्यम् । तदाह स एव— ' नामकर्म च जातं च यथाकालं समाचरेत् । अतिपातेऽपि कुर्वीत प्रशस्ते मासि पुण्यदे ॥ ' । संत. ८८५

**[1]पुण्यत्वात् पुत्रजन्माहे देयं ग्राह्यं सदा परैः ॥**

परैर्ग्राह्यमिति विधानं सूतकशङ्कानिवारणार्थम् । आन. १४७

**[2]चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दानमक्षयकारकम् ॥**

## मार्कण्डेयपुराणम्

जननिमित्तकश्राद्धविधिः

**[3]§नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम् ।
पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः ॥**

---

(१) मिता. ३।२० ; स्मृच. १९ ; पमा. ४३९–४४०, ५९६ ; मपा. ३५३, ३८२ ; प्रपा. १३१ ; गमा. १६० ; संसौ. ५० ; संप्र. १९९ ; मुक्ता. ७९ बैजावापः : ८० उत्त. बैजावापः ; संम. १४; विपा. २६९ स्मृत्यर्थसारे ; संकौ. ५९ ; संग. ४४४ ; संव. ५७ मनुः ; संर. ८३०.

(२) स्मृच. ३७३ चतुर्थपादे ( इष्टीः काम्याश्च वर्जयेत् ) : ३७५ चतुर्थपादशून्यम्; संत. ८८५ सव्रताः ( माश्रिताः ).

† वचनमिदं मुहूर्तप्रकरणे द्रष्टव्यम् ।

§ अस्य व्याख्यानं नान्दीश्राद्धप्रकरणे ( सं. का. पृ. १८३६ ) द्रष्टव्यम् ।

(१) मुक्ता. ८० संग्रहे ; आन. १४७.

(२) संव. ५७.

(३) अस्य स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे (सं. का. पृ. १८३६ ) द्रष्टव्यः .

## विष्णुपुराणम्

स्नानजातकर्मवृद्धिश्राद्धानां विधिः

[1]¶जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥
यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥

वृषोत्सर्गः काम्यः, न तु प्रेतत्वनिवृत्त्यर्थः, तस्य श्राद्धत्वात् । कृभ. १७२७

[2]सचैलस्य पितुः स्नानं जाते पुत्रे विधीयते ।
जातकर्म ततः कुर्याच्छ्राद्धमभ्युदये तथा ॥

## स्कन्दपुराणम् ( काशीखण्डे )

जातकर्मविधिः

... [3]जातेऽथो जातकर्मवान् ॥

## विष्णुधर्मोत्तरपुराणम्

श्राद्धदानयोः कालः

[4]$अच्छिन्ननाभ्यां कर्तव्यं श्राद्धं वै पुत्रजन्मनि ।
आशौचोपरमे कार्यमथवा नियतात्मभिः ॥
[5]अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः ।
संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्तितम् ॥

## वराहपुराणम्

नालच्छेदनात्प्राक्कालस्य चन्द्रसूर्योपरागकालतुल्यत्वम्

[6]यावत्कालं सुते जाते न नाडी छिद्यते नृप ।
चन्द्रसूर्योपरागेण तमाहुः समयं समम् ॥

---

¶ अस्य व्याख्यानं नान्दीश्राद्धप्रकरणे ( सं. का. पृ. १८३९ ) द्रष्टव्यम् ।

$ अस्य व्याख्यानं नान्दीश्राद्धप्रकरणे ( सं. का. पृ. १८४४ ) द्रष्टव्यम् ।

(१) अनयोः स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे (सं. का. पृ. १८३९,१८४२ ) द्रष्टव्यः.

(२) स्मृसा. २. (३) सस्मृ. ५१.

(४) अस्य स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे (सं. का. पृ. १८४४ ) द्रष्टव्यः.

(५) गभा. १६१.

(६) प्रपा. १३३ ; गभा. १६०–१६१ हेमाद्रौ दानखण्डे ; संत. ९१५–९१६ नृप ( पुनः ).

## बृहन्नारदीयपुराणम्

स्नानस्वस्तिवाचननान्दीश्राद्धजातकर्मविधिः

[1]जाते पुत्रे पिता स्नात्वा सचैलं जातकर्म तु ।
कुर्याच्च नान्दीश्राद्धं वै स्वस्तिवाचनपूर्वकम् ॥

## आदित्यपुराणम्

जननदिनस्य पुण्यत्वं तत्र दानविधिश्च

[2]देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा ॥
[3]तत्र दद्यात् सुवर्णं च भूमिं गां तुरगं रथम् ।
छत्रं छागं च माल्यं च शयनं चाऽऽसनं गृहम् ॥
[4]तिलपूर्णानि पात्राणि सहिरण्यानि पैतृकम् ॥
[5]यावन्न च्छिद्यते नालं तावद्द्यात्स्वशक्तितः ॥

---

(१) संर. ८३१.

(२) अप. १।११–१३ पृ. २६ तस्मा ( यस्मा ) पुण्यं पूज्यं ( पूज्यं पुण्यं ) ब्रह्मपुराणम् ; ब्रक. ८६ ब्रह्मपुराणम् ; स्मृच. २० पुत्रे जाते ( जाते पुत्रे ) ; पमा. ४४० ; प्रपा. १३३ ब्रह्मपुराणम् ; संसौ. ५० आदिपुराणम् ; संप्र. १९९ ब्रह्मपुराणम् ; मुक्ता. ८० तस्मात्तदहः ( तदहस्तस्मात् ) व्यासः ; संम. १४ सर्वदा ( सर्वतः ) आदिपुराणम् ; संकौ. ५९ ब्रह्मपुराणम् ; संग. ४४४ ब्रह्मपुराणम् ; कृभ. ८४४–८४५ संमवत् ; संर. ८३२ ब्रह्मपुराणम् .

(३) अप. १।११–१३ पृ. २६ चतुर्थपादे ( तिलान् वेश्म धनं बहु ) ब्रह्मपुराणम् ; ब्रक. ८६ रथम् ( तथा ) ब्रह्मपुराणम् ; स्मृच. २० च भू ( तु भू ) च माल्यं च ( वस्त्रमूल्यं ) ; पमा. ४४० च भू ( तु भू ) पू. ; प्रपा. १३३ ब्रह्मपुराणम् ; संसौ. ५० गां ( च ) रथम् (तथा) पू. आदिपुराणम् ; संप्र. १९९ सर्वं ब्रकवत् ; चम. ८ च भू ( तु भू ) गां तु ( गास्तु ) चाऽऽस ( वस ) ; मुक्ता. ८० च भू ( तु भू ) च माल्यं च ( वस्त्रमाल्ये ) व्यासः ; संम. १४ च भू ( तु भू ) पू. आदिपुराणम् ; संकौ. ५९ ब्रह्मपुराणम् ; संग. ४४४–४४५ सर्वं ब्रकवत् ; कृभ. ८४५ च भू ( तु भू ) ; संर. ८३२ छागं च मा ( च गन्धमा ) ब्रह्मपुराणम् .

(४) कृभ. ८४५.

(५) चम. ८.

## आदिपुराणम्

पितुः स्नानेन शुद्धिः

[1]सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात् ॥

## अनिर्दिष्टकर्तृकवचनानि

जननिमित्तकदानविधिः, प्रथमषष्ठदिनयोर्दानकाले शुद्धिः, नालच्छेदनविधिः, जातकर्मादौ वृद्धिश्राद्धम्

[2]ऋणत्रयनिवृत्त्यर्थं दद्याज्जाते सुते पिता ।
ब्रह्मसूत्रं धृतं नालं तेनाऽऽवेष्ट्य निकृन्तयेत् ॥

स्वधृतेन ब्रह्मसूत्रेण नालं वेष्टय छिन्द्यादित्यर्थः ।

धप्र. ३७

[3]व्यतीपाते च संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
पुत्रजन्मनि यज्ञे च दत्तं भवति चाक्षयम् ॥

[4]प्रथमेऽह्नि तथा षष्ठे दाता नाऽऽप्नोति सूतकम् ॥

[5]गर्भाधाने विवाहे च सुवने जातकर्मणि ।
नामोपाकर्मस्नानेषु व्रतेषु च समापने ।
ब्राह्मणान् भोजयेदादौ... ॥

## चतुर्विंशतिमतम्

जातकर्मकालः

[6]जाते पुत्रे जातकर्म ॥

(१) पमा. ६१९ तके ( तकी ) चैलं ( चेलं ); संत. ९१६ चैलं ( चेलं ); संप्र. १८८, १९५ ब्रह्मपुराणम्; संग. ४३५ (=).

(२) धप्र. ३७ तेनाऽऽवे ( तेन वे ); संग. ४४२ सूत्रं धृ (सूत्रधृ) उत्त. धर्मप्रवृत्तौ. (३) संब. ५७-५८.

(४) संदी. २१६ ( भागः २ ).

(५) मुक्ता. ७५५. (६) बम. १२.

## स्मृत्यर्थसारः

जातकर्मकालः, स्नानवृद्धिश्राद्धजातकर्मविधिः सफलः, पूर्वप्रवृत्तजननाशौचेऽपि जातकर्मादि कार्यम्, मृताशौचमध्ये तन्निवृत्तौ वा कार्यमिति विकल्पः, कालगुणदोषचिन्ता न कार्या

[1]जाते पुत्रे पिता स्नात्वा रात्रौ संध्ययोर्ग्रहणे वा वृद्धिश्राद्धं हिरण्येन कृत्वा जातकर्मदानादि दुरितक्षयाय प्रजापतिप्रीत्यै च कुर्यात् । जाताशौचान्तरमध्ये च जाते जातकर्मादि कुर्यात् । मृताशौचमध्ये जाते तु तदाऽऽशौचान्ते वा कुर्यात् ॥

[2]दुष्टकालेऽपि कुर्वीत जातकर्म यथाविधि ॥

## हेमाद्रौ

जननवार्ताश्रावकाय पारितोषिकदानम्, जननदिनस्य पुण्यत्वम्, स्नान–श्राद्ध–जातकर्म–दानविधिः, आशौचग्रहणयोरपि कार्यम्

[3]जातः पुत्रस्तवाद्येति श्रुत्वा तस्मै प्रदापयेत् ।
परितोषकमत्यर्थं भूषणाच्छादनादिकम् ॥
वेदाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा ॥

[4]जाते सुतेऽवगाह्यापः श्राद्धं कृत्वा विधानतः ।
जातकर्म विधानेन कुर्याद्दानादिकं ततः ॥

[5]तत्र दद्यात्सुवर्णं च गोभूमितुरगांस्तथा ।
छत्रं छागं च माल्यं च शयनं चाऽऽसनं गृहम् ॥

(१) स्मृसार. ३; मुक्ता. ८० ( जाते पुत्रे स्नात्वा रात्रौ संध्ययोर्ग्रहणे वा वृद्धिश्राद्धं कृत्वा जातकर्म कुर्यात् । आशौचान्तरमध्ये च कुर्यात् ) एतावदेव; आन. १४७ (जाते पुत्रे पिता स्नात्वा वृद्धिश्राद्धं कृत्वा जातकर्म कुर्यात्) एतावदेव.

(२) विपा. २६९. (३) धप्र. ३७.

(४) धप्र. ३७; संग. ४४४ धर्मप्रवृत्तौ.

(५) धप्र. ३७; संग. ४४४ द्वितीयपादे ( भूमिगोतुरगान् रथम् ) चाऽऽसनं ( वसनं ) धर्मप्रवृत्तौ.

[1]यावन्न च्छिद्यते नालं तावद्द्यात्स्वशक्तितः ।
आशौचेऽपि प्रकर्तव्यं ग्रहणेऽपि यथाविधि ॥

आशौच इति पूर्वाशौचे जातके वा मृतके वा सत्यपि जातकर्म कर्तव्यमेवेत्यर्थः । धप्र. ३७

## राजमार्तण्डे

जननिमित्तकश्राद्धविधिः

[2]पुत्रोत्पत्तौ भवेच्छ्राद्धम्... ॥

## महेश्वरः

जातकर्मकालः

[3]कार्यं सूनोर्जननसमये जातकर्म... ॥

## कालादर्शः

जननिमित्तकनान्दीश्राद्धविधिः

†[4]सीमन्तव्रतचौलनामकरणान्नप्राशनो-
पायन-
स्नानाधानविवाहयज्ञतनयोत्पत्ति-
प्रतिष्ठासु च ।
पुंसूत्यावसथप्रवेशनसुताद्यास्याव-
लोकाश्रम-
स्वीकारक्षितिपाभिषेकदयिताद्यर्तौ
च नान्दीमुखम् ॥

## कालिकाविधाने

पुत्रमुखावलोकनविधिः सफलः

[5]मुखावलोकेन सुतस्य जीवतः
पिता विमुच्येत यदा तदृणतः ॥

† अस्य व्याख्यानं नान्दीश्राद्धप्रकरणे ( सं. का. पृ. १८६७ ) द्रष्टव्यम् ।

(१) धप्र. ३७.

(२) श्राको. ४९० ; सिन्धु. १७२७ (सुतोत्पत्तौ तथा श्राद्धम्).

(३) संसौ. ५५ ; संप्र. २३१.

(४) मुक्ता. ७५४ ; लता. ११७ संग्रहकारः ; सिन्धु. १७२८ बोपदेवकालादर्शौ ; आन. १४३.

(५) प्रपा. १३०.

## बोपदेवः

जननिमित्तकनान्दीश्राद्धविधिः

¶[1]सीमन्तव्रतचौलनामकरणान्नप्राशनो-
पायन-
स्नानाधानविवाहयज्ञतनयोत्पत्ति-
प्रतिष्ठासु च ।
पुंसूत्यावसथप्रवेशनसुताद्यास्याव-
लोकाश्रम-
स्वीकारक्षितिपाभिषेकदयिताद्यर्तौ च
नान्दीमुखम् ॥

## धर्मप्रकाशे

यमलयोः संस्कारक्रमः

[2]संस्कारास्तत्र कर्तव्यास्तत्क्रमेणैव सर्वदा ॥

अत्र ज्येष्ठक्रमेणैव संस्कारा उक्ता धर्मप्रकाशे यमौ प्रकृत्य संस्कारा इति । संर. ८५९

## पूर्णसंग्रहे

स्नानदानादिषु आशौच–भोजनदोषाभावः

[3]ग्रहणे चैव गङ्गायां पुत्रस्यैव च जन्मनि ।
आशौचं नास्ति भुक्तोऽपि स्नानदानादिकं
चरेत् ॥

## मुहूर्तगणपतौ

जातकर्मकालः

[4]जातकर्म शिशौ जाते तत्तु तत्कालमाचरेत् ॥

## शाकलकारिकाः

जातकर्मकालः

[5]पुत्रे जाते पिता कुर्याज्जातकर्म विधानतः ।
न चेत् स्यात्संनिधौ कर्ता कारयेन्नामकर्मणि ॥

¶ अस्य व्याख्यानं नान्दीश्राद्धप्रकरणे ( सं. का. पृ. १८६७ ) द्रष्टव्यम् ।

(१) सिन्धु. १७२८ बोपदेवकालादर्शौ.

(२) संर. ८२९.

(३) मुक्ता. ८०.

(४) संव. ६१.

(५) शाका. २ पृ. १.

## शौनककारिकाः

जातकर्मकालः

[1]जातं कुमारं जननादन्यसंस्पर्शनात् पुरा ॥

## कुमारिलकारिकाः

स्नाननान्दीश्राद्धजातकर्मणां कालः क्रमश्च

[2]जाते सुते पिता कुर्यान्नान्दीश्राद्धं विधानतः ।
प्राङ्नाभिच्छेदनात् पुंसः स्नानं कृत्वा सचैलकम् ॥
जातकर्म ततः कुर्यादन्यैरालम्भनात् पुरा ॥

## कपर्दिकारिकाः

जातकर्मणि नक्षत्रनामनिर्देशप्रकारः, स्त्रीणाममन्त्रकः संस्कारः

[3]नक्षत्रनामनिर्देशः संबुद्धया जातकर्मणि ॥
रोरेममृज्येचिषु वृद्धिरादौ
छात्पे च वाऽन्त्यश्रवणाश्वयुक्षु ।
शेषेषु नाम्वोः कपरः स्वरोऽन्त्यः
स्वाप्वोरदीर्घः सविसर्ग इष्टः ॥
जातकादिषु संस्करणं स्त्रिया-
मौपनायनिकादध इष्यते ।
देहसंस्करणाय यथाक्रमं
काल एव समस्तममन्त्रकम् ॥

## रेणुकारिकाः

स्नानविधिः, श्राद्धकालः, अतीतकाले जातकर्मणि विशेषविधिः, जननिमित्तकदानविधिः, आशौचेऽपि जातकर्म, जातकर्मकालः, पित्रभावे कर्तृविधिः

[4]जाते पुत्रे सचैलं स्यात् स्नानं नैमित्तिकं पितुः ।
तच्च शीतेन रात्रावप्येवं जाबालिरब्रवीत् ॥

[1]दिवाऽऽहृतेन तोयेन स्नायात्स्वर्णयुतेन तु ।
इति साङ्ख्यायनः प्राह रात्रावनलसंनिधौ ॥
[2]अच्छिन्ननाड्यां कर्तव्यं श्राद्धं स्नानादनन्तरम् ॥
[3]स्वकाले न कृतं जातकर्मेदं मानुषादपि ।
दैवादतीतकालं चेत्तदाऽऽयुष्यादिकं भवेत् ॥
[4]अश्मा भवेति मन्त्रान्तमित्युपाध्यायसंमतिः ।
कार्यं स्वकालतो मेधाजननं नान्यकालतः ।
कुमारं जातमित्येषा भाष्ये श्रुतिरुदाहृता ॥
[5]अत्र दद्यात् सुवर्णं वा भूमिं गां तुरगं रथम् ॥
छत्रं छागं वस्त्रमाल्यं शयनं चाऽऽसनं गृहम् ।
धान्यं गुडतिलान् सर्पिरन्यद्वाऽस्ति गृहे वसु ॥
आयान्ति पितरो देवा जाते पुत्रे गृहं प्रति ।
तस्मात्पुण्यमहः प्रोक्तं भारते चाऽऽदिपर्वणि ॥
[6]दानं प्रतिग्रहं नाभ्यामच्छिन्नायां तदह्नि वा ।
कुर्यादित्याहतुः शङ्खमनू अन्नं विहाय तु ॥
आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति ॥
[7]जन्मतोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥
[8]कुर्यात् पितुरभावेऽन्यः कुलवृद्धोऽपि गोत्रजः ॥

---

(१) शौका. १ पृ. ३७ ; प्रपा. १३१.
(२) कुका. १।८।१-२ ; प्रपा. १३१ द्वितीयार्धे नास्ति ; धप्र. ३७ प्रथमपादे (जाते पुत्रे पिता स्नात्वा) द्वितीयार्धे नास्ति. (३) ककाः ६।७-८, ११.
(४) रेका. ३-४ पृ. ९ ; गभा. १६१.

(१) रेका. ४-५ पृ. ९ ; गभा. १६१ द्वितीयपादे (स्वर्णयुक्तेन स्नापयेत्).
(२) रेका. ५ पृ. ९ ; गभा. १६१ ; संग. ४४५.
(३) रेका. २१ पृ. १० ; संग. ४४८ कर्मेदं मा (कर्म दुर्मा).
(४) रेका. २२-२३ पृ. ११ ; संग. ४४८.
(५) रेका. २७-२९ पृ. ११ ; गभा. १६४.
(६) रेका. ३०-३१ पृ. ११.
(७) रेका. ३७-३८ पृ. १२.
(८) रेका. ४२ पृ. १२.

# जातकर्ममुहूर्तः

## वसिष्ठः

अयनम्, गुरुशुक्रोदयः, तिथयः, नक्षत्राणि, वार–लग्न–वर्गाः, ग्रहसंस्थानम्

[1]'अतीतकालान्यखिलानि तानि
कार्याणि सौम्यायनगे दिनेशे।
सिते गुरौ वाऽप्यथ दृश्यमाने
तदुक्तपक्षाङ्कदिनेऽप्यखण्डे॥

[2]'मृदुध्रुवक्षिप्रचरेषु भेषु
चारिक्तपर्वाख्यदिनेषु कार्यम्।
शुभग्रहाणां दिनलग्नवर्गे
तज्जातकर्म त्वथ नामधेयम्॥

आशौचापगमे जातकर्मानुष्ठाने नक्षत्राण्याह वसिष्ठः– मृदुध्रुवेति। संर. ८३३

[3]'क्षिप्रैश्चरैर्ध्रुवैर्मिश्रैर्द्वादशे प्रथमेऽह्नि वा।
केन्द्रे गुरौ भृगौ कार्यं जातकर्म सनातनम्॥

## गर्गः

योगः, लग्नम्, गुरुशुक्रास्तादौ मलमासे च निषेधः

[4]'एष्वतीतेषु कालेषु शुभयोगे शुभोदये।
जातकर्मक्रियां कुर्यात् पुत्रायुःपरिवृद्धये॥

एषु नाभिच्छेदपूर्वकालस्तनप्राशनपूर्वकालाशौचानन्तरकालेषु। संप्र. २०१

(१) वसं. २६।३ कालान्य (कार्याण्य) खण्डे (खण्डम्); संसौ. ५३; ज्योनि. १११ कालान्य (कार्याण्य).

(२) वसं. २६।४ मृदु (मैत्र); संसौ. ५२ त्वथ नाम (त्वथवा वि); संर. ८३३ लग्नवर्गे (वर्गलग्ने) धेयम् (कर्म).

(३) ज्योनि. १११; संग. ४४७ ज्योतिषे.

(४) प्रपा. १३१; संप्र. २०१; संग. ४४७.

*[1]'नामान्नप्राशनं चौडं विवाहं मौञ्जिबन्धनम्।
निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम्॥
अस्तंगते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे।
उपायनमुपारम्भं व्रतानां नैव कारयेत्॥

[2]'नामकर्म च जातं च यथाकालं समाचरेत्।
अतिपातेऽपि कुर्वीत प्रशस्ते मासि पुण्यदे॥

## श्रीधरः

नक्षत्राणि, लग्नानि, ग्रहसंस्थानम्

[3]'मृदुध्रुवचरक्षिप्रभेष्वेषामुदयेषु च।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च॥

(१) भानि नक्षत्राणि। अप. १।११ पृ. २६

(२) मृदूनि चित्रा अनुराधा मृगशिर उत्तरात्रयं रोहिणी च। चराणि पुनर्वसुस्वातिश्रवणधनिष्ठाशतभिषाः। क्षिप्राणि हस्ताश्विनीपुष्याः। भानि नक्षत्राणि। केन्द्रस्तु प्रासादाद्यारम्भकाले दर्शितः। चका. ७३७

(३) अत्र सर्वत्र जातकर्मनामकर्मादावुक्तकालातिक्रमे नक्षत्रादिकं ज्ञेयम्, '‡ देशकालोपघाताद्यैः कालातिक्रमणं यदि। अनस्तगेऽज्येन्दुसिते तत्कार्यं चोत्तरायणे॥' (ज्योना. २०१२) इति मदनरत्ने नारदोक्तेः। सिन्धु. ८४८

* अस्य व्याख्यानं विधिप्रकरणे 'श्राद्धजातकनामानि' इति स्मृत्यन्तरवचने (सं. का. पृ. २६४६) द्रष्टव्यम्।

‡ वचनमिदं मूले नामकरणप्रकरणपठितत्वान्नामकर्ममात्रपरमिति मत्वाऽत्र न संगृहीतम्।

§ संधिरार्षः।

(१) संत. ८८५.

(२) संत. ८८५. शेषस्थलादिनिर्देशाः नामकरणविधिप्रकरणे द्रष्टव्याः.

(३) अप. १।११–१३ पृ. २६ द्वितीयपादे (भेषु वारत्रये शुभे) जातकर्म (जातं कर्म) ज्योतिःशास्त्रम्; चका. ७३७ द्वितीयपादे (भेषु वारत्रये शुभे) ज्योतिःशास्त्रे; मपा. ३५४ चरक्षिप्रभे (क्षिप्रचरेषु भे) येषु च

## मुहूर्तचिन्तामणिः

तिथिवारनक्षत्राणि

'तज्जातकर्मादि शिशोर्विधेयं
पर्वाख्यरिक्तोनतिथौ शुभेऽह्नि ।
एकादशे द्वादशकेऽपि घस्रे
मृदुध्रुवक्षिप्रचरोडुषु स्यात् ॥

अथ जातकर्मनामकरणयोर्मुहूर्तमुपजात्याऽऽह—तज्जातकर्मेति । नन्विदमयुक्तम्— 'तज्जातकर्म शुभदिने कार्यम्' इति । कुतः ? जातस्य उत्पन्नस्य कर्म वैदिकः संस्कारविशेषः यः स जातकर्मशब्देनोच्यते । तच्च शब्दप्रवृत्त्योत्पन्नक्षण एव विधेयम् । यदाह वसिष्ठः— 'यस्मिन् मुहूर्ते जनितः कुमारस्तस्मिन् विधेयं खलु जातकर्म । संतर्प्य देवान् सपितॄन् द्विजांश्च सुवर्णगोभूतिलकांस्यवस्त्रैः ॥' इति । विष्णुरपि— 'जातकर्म ततः कुर्यात् पुत्रे जाते यथोदितम् ।' इति । यथोदितं स्वस्वगृह्यानुसारेणेत्यर्थः । तच्च श्रवणानन्तरं सचैलं स्नानं विधाय कार्यम् । उक्तं च ज्योतिःसागरे वसिष्ठेन— 'श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् । उत्तराभिमुखो भूत्वा नद्यां वा देवखातके ॥' इति । तदपि नालच्छेदनात् प्रागेव कार्यम् । उक्तं च मनुना— 'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।' इति । वर्धनं छेदनम्, 'वृधु छेदने' इति धात्वर्थानुसारात् । अत्र हेतुमाह जैमिनिः— 'यावन्नोच्छिद्यते नालं तावन्नाऽऽप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥' इति । तस्माज्जातकर्ममुहूर्तोऽनुपपन्न इति । उच्यते— संक्रान्त्यादिदुष्टकालेषु शुभकर्माचरणं नास्ति । यदाह गर्गः— 'व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि । श्राद्धं विना शुभं कर्म प्राप्तकालेऽपि नाऽऽचरेत् ॥' । अन्यच्च— 'अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत् ।' । किंच, मूलज्येष्ठागण्डान्तादिषु जन्मसंभवे शान्तिविधानात् । अथवा पिता देशान्तरगतो राजगृहादौ निरुद्धो वा जातकर्मादि कर्तुमशक्नुवन् पश्चात् प्रतिबन्धापनोदने गृहमागतोऽपि सन्नेव करोति । तदैव जन्माभावात् सूतकप्रवृत्तेश्च । तदाह बैजवापः— 'जन्मतोऽनन्तरं कार्यं जातकर्म यथाविधि । दैवादतीतः कालश्चेदतीते सूतके भवेत् ॥' इति । अत एव कालविकल्पोऽभिहितो नारदसंहितायाम्— 'तस्मिन् जन्ममुहूर्ते तु सूतकान्ते तथा शिशोः । जातकर्म च कर्तव्यं पितृपूजनपूर्वकम् ॥' इति । इदं च तुल्यन्यायान्नामकर्मण्यपि ध्येयम् । तस्मादतिक्रान्तकालेऽपि अवश्यं जातकर्मादिमुहूर्तो विचार्य इत्यलमतिप्रसङ्गेन ।

पर्वाण्युक्तानि मया । रिक्ताः चतुर्थीनवमीचतुर्दश्यः । ताभिः ऊने वर्जिते तिथौ । जात्यभिप्रायेणैकवचनम् । शुभेऽह्नि व्यतीपातादिदोषरहिते दिवसे शुभग्रहवासरे च, तथा एकादशे द्वादशे वा घस्रे दिने, तथा मृदुध्रुवक्षिप्रचरभानि प्रसिद्धानि तेषु च शिशोः बालस्य तत् जन्मसमयातिक्रान्तं जातकर्मादि । आदिशब्देन नामकर्माप्युच्यते । तत् विधेयं कर्तव्यं स्यात् । §पीटी.

## मुहूर्तगणपतौ

नक्षत्राणि

'रेवतीद्वितये पुष्ये पुनर्वस्वनुराधयोः ।
श्रवणादित्रिभे हस्तत्रितये रोहिणीमृगे ।
त्र्युत्तरे जातकर्माद्यं कालातिक्रमणे विदुः ॥

## रेणुकारिकाः

वाराः नक्षत्राणि ग्रहसंस्थानं च

'मृदुध्रुवक्षिप्रचरेषूडुष्विज्ये च केन्द्रगे ।
भृगौ वा श्रेज्यशुक्राणां वासरे जातकर्म हि ।
क्रियतेऽतीतकालं चेदेवं नामकृतावपि ॥

---

( येऽपि वा ) नाम च ( नाम वा ) ज्योतिःशास्त्रे ; सिन्धु. ८४७ (=) ; विपा. २७० येषु ( येऽपि ) शुक्रेऽथवा ( शुक्रे वाऽथ ).

(१) मुचि. ५।११ ; संव. ६०.

§ संव. पीटीगतम् ।

(१) संव. ६१. (२) रेका. ४३–४४ पृ. १२.

# जातकर्मप्रयोगः

## बौधायनगृह्यसूत्रम्

कुमारस्याभिमन्त्रणम्, स्नापनम्, पितुरुपस्थाधानम्, मूर्धाभिघ्राणम्, कर्णे जपः, दध्यादिप्राशनम्, मातुरुपस्थाधानम्, स्तन्यपानम्, उदकुम्भनिधानम्, होमः, फलीकरणहोमः, हुतशेषनिधानादि

[1]अथ प्रसुतः ॥

जातं कुमारमभिमन्त्रयते– 'अद्भ्यः संभूतः' इत्येतेनानुवाकेन ॥

अथैनं स्नापयति– 'क्षेत्रियै त्वा निर्ऋत्यै त्वा' इति षड्भिरनुच्छन्दसम् ॥

अथैनं स्वोपस्थ आदधाति– 'अङ्गादङ्गात्संभवसि हृदयादधि जायसे। आत्मा वै पुत्र नामासि(? पुत्रनामाऽसि) स जीव शरदः शतम् ॥' इति ॥

[2]अथैनं मूर्धन्यभिजिघ्रति– 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव। पशूनां त्वा हिंकारेणाभिजिघ्राम्यसौ ॥' इति नक्षत्रनामधेयेन ॥

[3]अथास्य दक्षिणे कर्णे जपति– 'अग्निरायुष्मान्' इति पञ्चभिः पर्यायैः ॥

अथैनं दधिमधुघृतमिति समुदायुत्य हिरण्येन प्राशयति– 'प्राणो रक्षति विश्वमेजत्' इत्येतेनानुवाकेन प्रत्यृचम् ॥

अतिशिष्टं गोपदे निनयति व्याहृतीभिः ॥

अथैनं मातुरुपस्थ आदधाति– 'सीद त्वं मातुरस्या उपस्थे' इति चतसृभिः सुहंसाभिः ॥

स्तनमभिमन्त्रयते– 'यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि। यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः ॥' इति ॥

धयन्तमनुमन्त्रयते– 'द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयन्तं सविताऽभिरक्षतु। आ वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात् ॥' इति ॥

अथास्योदकुम्भमुच्छिरसि निदधाति– 'आपः सुप्तेषु जाग्रत रक्षांसि निरितो नुदध्वम्' इति ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति– 'हरिं हरन्तमनुयन्ति देवाः' इति पुरोनुवाक्यामनूच्य 'मा छिदो मृत्यो मा वधीः' इति याज्यया जुहोति ॥

अथाऽऽज्याहुतीरुपजुहोति– 'सद्यश्चकमानाय' इत्याऽन्तादनुवाकस्य ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अथानोयुगं रथयुगं वा स्नाप्याऽऽच्छाद्यालंकृत्याग्रेणाग्निमुद्धृत्य तस्याग्रेणाश्वत्थपर्णेषु हुतशेषं निदधाति– 'नम आव्याधिनीभ्यः' इति ॥

अथास्तमित आदित्ये गौरसर्षपान् फलीकरणमिश्रानञ्जलिना जुहोति– 'कृणुष्व पाजः प्रसितिं न पृथ्वीम्' इत्येतेनानुवाकेन प्रत्यृचम् ॥

अथौदनं तिलसक्तुभिर्घृतेनेति समुदायुत्य गोष्ठेऽश्वत्थपर्णेषु हुतशेषं निदधाति– 'अघोराय महाघोराय नमो नमः' इति ॥

अथातिशिष्टं सर्वा दिशः संप्रकिरन्ति– 'आवेशिना व्यश्रुमुखी कुतूहलिन्येकस्तनी जृम्भणी स्तम्भनी मोहनी च। कृष्णा विशाखा विमला ब्रह्मरात्री भ्रातृव्यसंघेषु पतन्त्यमोघाः। ताभ्यो वै मातृभ्यो नमो नमः' इति ॥

---

(१) बौगृ. २।१।१–४.

(२) बौगृ. २।१।५; संप्र. २४० (अथैनं ... मस्तृतं भव०).

(३) बौगृ. २।१।६–१९.

## बौधायनगृह्यपरिभाषासूत्रम्

औपासनाग्नौ जातकर्महोमः, सूतकाग्नौ फलीकरणहोमः

**[१]सा यदि पुत्रप्रसूर्भवति प्रसिद्धमौपासने जातकर्म कृत्वाऽन्यत्र फलीकरणहोमं जुहोति स सूतकाग्निर्भवति ॥**

## आश्वलायनगृह्यसूत्रम्

सर्पिरादिप्राशनम्, मेधाजननजपः, अंसाभिमर्शनम्

**[२]कुमारं जातं पुराऽन्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्– 'प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम्। आयुष्मान् गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्॥' इति॥**

(१) सर्पिर्मधुनी हिरण्यनिकाषं च हिरण्येनैव प्राशयेत्। हिरण्येन इत्युच्यते पाणिना मा भूदिति। निकाषम् इति निकर्षणम्। निकाषं क्व भवति? शिलायाम्। सर्पिरादीनि द्रव्याणि 'प्र ते ददामि' इत्यनेन मन्त्रेण प्राशयति। देभा.

(२) सर्पिर्मधुनी हिरण्येन निकाशयति। ते हिरण्यसंसृष्टे हिरण्येन प्राशयेत् मातुरुपस्थ आसीनं 'प्र ते ददामि' इति मन्त्रेण। § गानावृ.

(३) सर्पिर्मधुनी विषमघृते प्राशयेदिति संबन्धः। अना.

**[३]कर्णयोरुपनिधाय मेधाजननं जपति– 'मेधां ते देवः सविता मेधां देवी सरस्वती। मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥' इति॥**

§ प्रपा. गार्ग्यनारायणवृत्तेरनुवादः। एवमग्रेऽपि द्रष्टव्यम्।

(१) बौगृप. १।११।१.

(२) आगृ. १।१५।१ ; मेधा. २।२७ (=) (कुमारे जाते पुराऽन्यैरालम्भात्) एतावदेव; ब्रक. ८७ (प्र ते ... इति०); प्रपा. १३१; धप्र. ३७ (=) (कुमारं जातं पुराऽन्यैरालम्भात्) एतावदेव; संप्र. १९३ ब्रकवत्; संम. १५ ब्रकवत्.

(३) आगृ. १।१५।२ ; प्रपा. १३१.

(१) कर्णयोरुपनिधाय मेधाजननं जपति– 'मेधां ते देवः' इत्यनेन मन्त्रेण। देभा.

(२) अस्य कर्णयोः हिरण्यं निधाय मेधाजननं जपति – 'मेधां ते' इति। उपग्रहणं तस्य मुखसमीपे आत्मनो मुखं निधाय जपार्थम्। मेधाजननमिति अस्य मन्त्रस्याऽऽख्या। 'सकृन्मन्त्रः पर्यायेणोपनिधानम्' इत्येके। अन्ये मन्त्रावृत्तिमिच्छन्ति। गानावृ.

(३) कर्णयोरुपनिधाय। किम्? प्रकृतं हिरण्यम्, न मुखम्, कर्णयोर्जपतीत्यर्थसिद्धत्वात्। यस्य मन्त्रस्य जपेन कुमारो मेधावी भवति स मेधाजननः 'मेधां ते देवः सविता' इत्यादिर्मन्त्रः। उभयोः कर्णयोर्युगपज्जपस्याशक्यत्वादर्थान्मन्त्रस्याऽऽवृत्तिः। अना.

**[१]अंसावभिमृशति– 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव। वेदो वै पुत्रनामाऽसि स जीव शरदः शतम्॥' इति। 'इन्द्र श्रेष्ठानि द्रविणानि धेहि' 'अस्मे प्रयन्धि मघवन्नृजीषिन्' इति च॥**

(१) अंसावभिमृशति – 'अश्मा भव' इत्येतैः मन्त्रैः। अत्र संशयः– किं प्रत्यंसमभ्यावर्तन्ते मन्त्राः, अहोस्वित् सकृदेव प्रयुक्तैरुभयोरभिमर्शनं कर्तव्यमिति। तत्रैके सकृत्प्रयोगमिच्छन्ति द्वार्याभिमर्शनवत्। यद्द्वार्याभिमर्शने मन्त्रः सकृत् प्रयुज्यते पर्यायेणाभिमर्शनं भवति, तद्वदिहापीति। नेत्युच्यते। तत्र सकृत्प्रयोग उपपद्यते। कस्मात्? द्विवचनसंयुक्तत्वान्मन्त्रस्य। इह त्वेकवचनसंयुक्तो मन्त्रः। तेन प्रत्यंसमभ्यावृत्तैरेव भवितव्यम्। उच्यते–नात्रांसावभिधीयेते। किं तर्हि? कुमारोऽभिधीयते। तस्मात् तस्यैकत्वात् सकृदेव मन्त्रो भवतीत्येवमेके संप्रतिपन्नाः। अन्ये पुनर्मन्त्रविभागमिच्छन्ति। कस्मात्? आचार्यप्रवृत्तिदर्शनात्। आचार्येण विभक्तावेतौ मन्त्राविति। कथम्? इतिकारपाठात्। अन्यत्र मध्ये न क्वचिदितिकारं पठति। इह च करोति। तेन मन्यामहे विभक्तावेतौ मन्त्राविति। उत्तरत्र चकारग्रह-

(१) आगृ. १।१५।३ ; प्रपा. १३२.

णादेवं मन्त्रविभागमुपदिशन्ति । तेन कल्पजेन मन्त्रेण दक्षिणमंसमभिमृशति । एवमेके । अपरे त्वाहुः–सकृदेव मन्त्रो भवति । न विभागो न च पृथगभिमर्शो भवति । तत्राशक्यत्वात् पृथगभिमर्शो भवति द्वयोः । इह तु शक्यत्वात् द्वयोरंसयोस्तदभिप्रेतम् । यस्य त्रयाणां पक्षाणामन्यः पक्षोऽभिप्रेतः तस्यापि कुर्वतो न दोषः, सर्वेषां गमकत्वात् । देभा.

(२) स्तनबाह्वोर्मध्यप्रदेशः अंसः । अत्र बहुधा विप्रतिपन्नाः । तत्रैके सकृन्मन्त्रम्, पर्यायेणांसाभिमर्शनमिच्छन्ति द्वार्याभिमर्शनवत् । ननु युक्तस्तत्र सकृन्मन्त्रः, द्विवचनयुक्तत्वान्मन्त्रस्य । इह त्वेकवचनयुक्तः । अत आवृत्त्या भवितव्यम् । नैतदेवम् । नात्रांसावुच्येते । किं तर्हि ? कुमारः । स चैकः । तस्मान्नाऽऽवृत्तिरिति । अन्ये मन्त्रविभागमिच्छन्ति– 'अश्मा भव' इत्यनेन दक्षिणमंसमभिमृशेत्, 'इन्द्र श्रेष्ठानि', 'अस्मे प्रयन्धि' इत्याभ्यां सव्यमिति । कथं पुनर्मन्त्रविभागो ज्ञातः ? मध्ये इतिकरणात् । नहि क्वचिन्मन्त्रमध्ये इतिकरणं पठन्ति । अपरे त्वाहुः– सकृदेव त्रयो मन्त्रा वक्तव्याः । न च मन्त्रविभागः, न च पृथगभिमर्शः । द्वार्याभिमर्शने त्वशक्यत्वात्पृथगभिमर्शः । इह तु शक्यते युगपदंसौ स्प्रष्टुम् । यत्पुनरुक्तमितिकरणादिति, तत्र ब्रूमः– अन्यत्रापि मन्त्रमध्ये इतिकारः पठ्यते । यथा– "आसीद सदनं स्वमासीद सदनं स्वम्' इति, 'मा हिंसीर्देवप्रेरितः" (आश्रौ. ३।१४) इति । अयमेव नः पक्षोऽभिप्रेतः । 'यस्य त्रयाणामन्यतमः पक्षोऽभिप्रेतस्तस्यापि कुर्वतो न दोषः, सर्वेषां गमकत्वात्' इति भाष्यकारः । अत्रैके मन्त्रविभागः श्रेष्ठानित्याहुः, मध्ये इतिकारात् । नन्वन्यत्रापि विद्यत इत्युक्तम् । तत्रापि विभाग एव– 'किमुत्पतसीति' बर्हिषि निधाय 'मा हिंसीः' इत्यभिमन्त्रयेत् । कुत एतत् ? आनन्तर्ययोगात् । नन्विडायां दृश्यते– 'हविर्जुषन्तामिति तस्मिन्नुपहूत इति' (आश्रौ. १।७) इति । अनर्थज्ञो भवान् । इतिकारो मन्त्रस्य मध्ये वृथा न पठ्यते इति वयं ब्रूमः । इडायां तु मन्त्रैकदेश इतिकारः । युष्मत्पक्षे त्वभिमन्त्रणे इतिकारो वृथैवेति । तदसत् । भगवता भाष्यकारेण यः पक्षः परिगृहीतः स एव सम्यक् । अन्यत्रापि मन्त्रमध्ये इतिकारदर्शनात्– "नमो यत्र निषीदसि' इति 'अमुं मा हिंसीरमुं मा हिंसीः' इति च" (आश्रौ. १।१२) इति । तेन त्रीन् मन्त्रान् सकृदुक्त्वा युगपदेवोभावंसौ स्पृशेदिति सिद्धम् । गानावृ.

(३) मध्ये इतिकरणात् चशब्दाच्च तेन कल्पजेन मन्त्रेणैव द्वावंसौ युगपदभिमृश्य पश्चादितराभ्यामन्ते सकृदभिमृशति । अना.

## आश्वलायनगृह्यपरिशिष्टम्

होमः, सर्पिरादिप्राशनम्

[1]अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशदेवता हुत्वा प्राक् स्विष्टकृतः सर्पिर्मधुप्राशनादि कुर्यात् ॥

## कौषीतकिगृह्यसूत्रम्

कुमारस्याभ्यवाननानुप्राणने, सर्पिरादिप्राशनम्, गुह्यनामकरणम्, मेधाजननजपः, कुमारहस्ते सुवर्णबन्धनम्

[2]**अथ जातकर्म ॥**

**जातं कुमारं त्रिरभ्यवान्यानुप्राण्यात्– 'ऋचा प्राणिहि, यजुषा समनिहि, साम्नोदनिहि' इति ॥**

**सर्पिर्मधुनी दध्युदके च संनिनीय व्रीहियवौ वा संनिघृष्य त्रिः प्राशयेज्जातरूपेण ॥**

**'प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सवित्रा मघोना । आयुष्मान् गुपितो देवताभिः शतं जीव शरदो लोके अस्मिन् ॥' इति । असाविति नामास्य दधाति घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वाऽपि वा षडक्षरं कृतं कुर्यान्न तद्धितम् ॥**

---

(१) आगृप. १।२६; प्रपा. १३३ देवता (देवताभ्यो) कुर्यात् (कारयेत्); संकौ. ६१.

(२) कौगृ. १।२४।१–१४.

तदस्य पिता माता च विद्याताम् ॥

दशम्यां व्यावहारिकं ब्राह्मणजुष्टम् ॥

गोः कृष्णस्य शुक्लकृष्णानि लोहितानि च रोमाणि मषं कारयित्वैतस्मिन्नेव चतुष्टये संनिनीय चतुः प्राशयेदिति माण्डूकेयः ॥

'भूर्ऋग्वेदं त्वयि दधाम्यसौ स्वाहा, भुवो यजुर्वेदं त्वयि दधाम्यसौ स्वाहा, स्वः सामवेदं त्वयि दधाम्यसौ स्वाहा, भूर्भुवः स्वर्वाकोवाक्यमितिहासपुराणमों सर्वान् वेदांस्त्वयि दधाम्यसौ स्वाहा' इति वा ॥

मेधाजननं दक्षिणे कर्णे 'वाक्' इति त्रिः ॥

'वाग्देवी मनसा संविदाना प्राणेन वत्सेन सहेन्द्रप्रोक्ता । जुषतां त्वा सौमनसाय देवी मही मन्द्रा वाणी वाणीची सलिला स्वयंभूः ॥' इति चानुमन्त्रयेत ॥

शणसूत्रेण विग्रन्थ्य जातरूपम् ॥

दक्षिणे पाणावपिनह्योत्थानात् ॥

ऊर्ध्वं दशम्या ब्राह्मणेभ्यो दद्यात् ॥

अमा वा कुर्वीत ॥

जातकर्म वक्ष्यामः । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । कुमारे जाते अच्छिन्नायां नाभ्यामुपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा महाव्याहृतिचतुष्टयैर्हुत्वा बालं तूष्णीं त्रिरवघ्राय ततः 'ऋचा प्राणिहि, यजुषा समनिहि, साम्नोदनिहि' इत्येतैस्त्रिभिर्मन्त्रैः प्रतिमन्त्रं बहिर्वृत्ति निश्वासं बालकस्योपरिष्टात् करोति । ततो घृतमधुनी एकीकृत्य दध्युदके च एकीकृत्य ततश्चत्वार्येकीकुर्यात् । अथवा व्रीहियवौ वा संनिघृष्य अभ्यवहारयोग्यौ कृत्वा 'प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सविता मघोना । आयुष्मान् गुपितो देवताभिः शतं जीव शरदो लोकेऽस्मिन् देवदत्त' इत्यनेन मन्त्रेण त्रिः प्राशयेत् सुवर्णेन । प्रतिप्राशनं मन्त्रावृत्तिः । देवदत्त इत्येतस्य स्थाने कखचछटठतथपफशषसः एतान् मुक्त्वा शेषाणां मध्ये एकमक्षरमादौ कुर्यात् । यरलवइत्येतेषां चतुर्णामक्षराणामेकं मध्ये कृत्वा ततः कृत्प्रत्ययान्तं कुर्यात् । मिश्रितद्धितप्रत्ययान्तमपि न कुर्यात् । द्व्यक्षरं चतुरक्षरं वा, अथवा षडक्षरम् । एवंलक्षणेन नाम्ना आमन्त्रणं कुमारस्य कुर्यात् । तच्च नाम मातापितरावेव वर्धयेताम् (?) इति । अपरे तु व्याचक्षते— यत्पूर्वपुरुषाणां पितृपितामहप्रपितामहानां कृतं तदेव नाम कुर्यात्, न स्वमनीषिकया । सांप्रतं माण्डूकेयवचनं वक्ष्यामः । गोः कृष्णप्रायस्य शुक्लकृष्णानि लोहितानि च रोमाण्यभ्यवहारयोग्यानि कृत्वा यथोक्ते चतुष्टये प्रक्षिप्य पूर्वोक्तेनैव मन्त्रेण चतुः प्राशयेत् । अथवा 'भूर्ऋग्वेदं त्वयि दधामि देवदत्त स्वाहा, भुवो यजुर्वेदं त्वयि दधामि देवदत्त स्वाहा, स्वः सामवेदं त्वयि दधामि देवदत्त स्वाहा, भूर्भुवः स्वर्वाकोवाक्यमितिहासपुराणमों सर्वान् त्वयि दधामि देवदत्त स्वाहा' इत्येते चत्वारो मन्त्राः स्वाहाकारान्ताः पूर्वोक्तस्य मन्त्रस्य स्थाने वैकल्पिका भवन्ति । एतैश्चतुर्भिर्मन्त्रैश्चतुः प्राशयेत् । देवदत्तस्थाने पूर्वोक्तलक्षणाभ्यामन्यतरन्नाम दध्यात् । अपरे त्वेवं वर्णयन्ति— यदेतत् 'भूर्ऋग्वेदम्' इति माण्डूकेयमतम् एतस्मिन्निर्विकल्पमेव भवति । 'प्र ते यच्छामि' इत्यनेन मन्त्रेण सह विकल्पो नास्ति । ततः अन्यतरेण पक्षेण कुमारस्य प्राशनं कृत्वा ततः 'वाक् वाक् (वाक्)' इत्येवं कुमारस्य दक्षिणे कर्णे पठित्वा 'वाग्देवी मनसा संविदाना प्राणेन वत्सेन सहेन्द्रप्रोक्ता । जुषतां त्वा सौमनसाय देवी मही मन्द्रा वाणी वाणीची सलिला स्वयंभूः ॥' इत्यनेन मन्त्रेण कुमारमनुमन्त्र्य ततः शणसूत्रेण सुवर्णं ग्रथित्वा बालकस्य दक्षिणे हस्ते बध्नाति । तत एकादशेऽह्नि तत्सुवर्णं ब्राह्मणाय दद्यात्, गृहे वा धारयेत् । ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति । कौथुम.

## आपस्तम्बगृह्यसूत्रम्

कुमारस्याभिमर्शनं पित्रुपस्थाधानम् अभिमन्त्रणं मूर्धावघ्राणं कर्णजपश्च, नक्षत्रनामकरणम्, मधुघृतादिप्राशनम्, स्नापनम्, मात्रुपस्थाधानम्, स्तनप्रतिधापनम्, पृथिवीकुमारयोरभिमर्शनम्, फलीकरणहोमः, संशासनम्

**[1]जातं वात्सप्रेणाभिमृश्योत्तरेण यजुषोपस्थ आधायोत्तराभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्णे जापः ॥**

(१) जातमिति पुंलिङ्गस्य विवक्षितत्वात् पुंस एवायं जातकर्माख्यः संस्कारः, न स्त्रियाः । वत्सप्रीर्नाम ऋषिः । तेन दृष्टं वात्सप्रं 'दिवस्परि' (तैसं. ४।२।२) इत्येषोऽनुवाकः । प्रत्यृचमभिमर्शनम् । सर्वान्ते इत्यन्ये । उत्तरेण यजुषा 'अस्मिन्नहम्' इत्यनेन । उत्तरत्र मातुरिति विशेषणादिह स्व उपस्थ आदधाति । उत्तराभिरिति पाठः। उत्तराभिः तिसृभिः ऋग्भिः अभिमन्त्रणादीनि त्रीणि कर्तव्यानि । 'अङ्गादङ्गात्' इत्यभिमन्त्रणम् । 'अश्मा भव' इति मूर्धन्यवघ्राणम् । 'मेधां ते' इति दक्षिणे कर्णे जापः । जप इत्यर्थः । केचित्तु उत्तराभ्यामिति द्विवचनान्तपाठमाश्रित्य द्वयोर्मन्त्रयोः त्रिष्वपि कर्मसु विनियोगं मन्यन्ते । तेषामत्रघ्राणलिङ्गेनाभिमन्त्रणं कर्णयोर्जपश्च प्राप्नोति । आश्वलायनश्चाऽऽह– "कर्णयोरुपनिधाय मेधाजननं जपति– 'मेधां ते देवः सविता'" ( आगृ. १।१५।२ ) इति । अनाकुला.

(२) जातं जातमात्रम्, 'प्राङ् नाभिवर्धनात् पुंसो जातकर्म विधीयते ।' ( मस्मृ. २।२९) इति वचनात् । एतच्चोपरि शोध्यते । जातं कुमारं पिता( ? पित्रा) वात्सप्रेण 'दिवस्परि' इत्यनुवाकेन अन्ते सकृदभिमृश्य 'अस्मिन्नहम्' इत्यनेन यजुषा स्वस्योपस्थे तमाधाय, उत्तराभ्याम् 'अङ्गादङ्गात्' 'अश्मा भव' इति द्वाभ्यां तस्याभिमन्त्रणं कर्तव्यम्, तथैव ताभ्यामेव मूर्धन्यवघ्राणम्, एतयोरेवर्चोः दक्षिणे कर्णे जापः । जप इत्यर्थः । वचनबलाच्च जपाभिमन्त्रणयोरवघ्राणलिङ्गबाधः । अभिधानं तु जातसंस्कारक्रियासामान्यात् । एतच्च 'तीर्थस्थाणुचतुष्पथव्यतिक्रमे' ( आपगृ. ५।२६ ) इत्यत्रोपपादितम् ।

केचित्– उत्तराभिरिति पाठः, नोत्तराभ्यामिति । तेन 'अङ्गादङ्गात्' इत्यभिमन्त्रणम् । 'अश्मा भव' इत्यवघ्राणम् । 'मेधां ते देवः' इति जपः । अत एवाऽऽश्वलायनः– "कर्णयोरुपनिधाय मेधाजननं जपति– 'मेधां ते देवः सविता'" इति । मधुघृतप्राशनं तु 'त्वयि मेधाम्' इति यजुर्भिरेव त्रिभिरिति । तन्न, अनधीयमानपाठाङ्गीकारे अतिप्रङ्गात् । ताद.

**[1]नक्षत्रनाम च निर्दिशति ॥**

(१) 'अभिजिन्नाम्यसौ' इत्यत्रासौशब्दस्य स्थाने नक्षत्रनामनिर्देशः । तत् संबुद्ध्या निर्दिशेत्– 'पशूनां त्वा हिंकारेणाभिजिघ्राम्याश्वयुज' इत्यादि । तत्र नक्षत्रशब्देषु जातार्थे रूपनिर्णयार्थः श्लोकः– 'रोरेममृज्येचिषु वृद्धिरादौ ष्ठात्पे च वाऽन्त्यश्रवशाश्वयुक्षु । शेषेषु नाऽऽर्म्योः कपरः स्वरोऽन्त्यः स्वाप्वोरदीर्घः सविसर्ग इष्टः ॥' । रोहिण्यादिशब्दानामयमाद्यक्षरैर्निर्देशः । तेषामादौ वृद्धिः कर्तव्येत्यर्थः । रौहिणः, रैवतः, माघः, मार्गशीर्षः, ज्यैष्ठः, चैत्रः । ष्ठात्परो यः पशब्दः तत्र वृद्धिः । प्रोष्ठपदासु जातः प्रोष्ठपादः । 'जे प्रोष्ठपदानाम्' ( पा. ७।३।१८ ) इत्युत्तरपदवृद्धिः । एषु 'नक्षत्रेभ्यो बहुलम्' ( पा. ४।३।३७ ) इति बहुलवचनात् लुक् न भवति । नक्षत्रेषु अन्त्यमपभरण्याख्यं तत्र विकल्पः । अपभरणिः आपभरणो वा । तथा श्रोणः( ? श्रवणः ) श्रावणो वा । अनयोर्बहुलवचनादेव लुको विकल्पः । शतभिषजि जातः शतभिषक् शातभिषजो वा । अत्र टिलोपोऽपि पक्षे भवति शतभिष इति । तथा अश्वयुक् आश्वयुजः । अनयोः 'वत्सशालाभिजिदश्वयुक्शतभिषजो वा' (पा. ४।३।३६) इति लुको

(१) आपगृ. १५।१.

(१) आपगृ. १५।२–३ ; बाल. १।११–१२ पृ. २९.

विकल्पः । शेषेषु उक्तादन्येषु नक्षत्रेषु आदौ वृद्धिर्न भवति । अत्र 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' (पा. ४।३।३४), 'नक्षत्रेभ्यो बहुलम्' इति च लुगेव भवति । श्रविष्ठः, फल्गुनः, अनूराधः, स्वातिः, तिष्यः, पुनर्वसुः, अषाढः, बहुलः, कृत्तिकः इति । आर्म्योः आर्द्रा मूल इत्येतयोः अन्त्यः स्वरः कशब्दपरो भवति । आर्द्रकः मूलकः । 'पूर्वाह्णापराह्णार्द्रामूल०' इति (पा. ४।३।२८) (दीर्घः ?) वुन् प्रत्ययः । स्वात्योः स्वाती पुनर्वसू इत्येतयोः अन्त्यस्वरो ह्रस्वः सविसर्गश्चेष्टः स्वातिः, पुनर्वसुः । 'श्रविष्ठाफल्गुनी' इत्यादिना लुक् । सविसर्गत्वं सूक्तवाकादिषु प्रथमया नक्षत्रनिर्देशे । इह तु संबुद्ध्या निर्देशः 'स्वाते, पुनर्वसो' इति । प्राङ्नामकरणात् अग्न्युपस्थानादिषु चास्यैव नक्षत्रनाम्नो निर्देशः कर्तव्यः । यत्र च नामद्वयनिर्देशस्तत्राप्येवंविधं नक्षत्रनामैकम्, दशम्यां कृतमपरम् । अनाकुला.

(२) अपभरणः, आपभरणः । श्रवणः, श्रावणः । कृत्तिकः, तिष्यः, आश्लेषः, फाल्गुनः(?), हस्तः, विशाखः, अनूराधः, आषाढः, श्रविष्ठः ।

¶ ताद.

**तद्रहस्यं भवति ॥**

(१) नक्षत्रनाम रहस्यं भवति । यथा परे न जानन्ति तथा वक्तव्यमित्यर्थः । सूक्तवाकादिष्वप्येवमेव । अनाकुला.

(२) 'नक्षत्रनाम च रहस्यं निर्दिशेत्' इति सूत्रे प्रणेतव्ये सूत्रान्तरकरणात् यत् नाम नक्षत्रनिबन्धनं यच्च दशम्यां कृतं तदुभयं सूक्तवाकान्नप्राशनाभिवादनादिषु नित्यं रहस्यमेव निर्देश्यं भवति । ताद.

**[1]मधु घृतमिति संसृज्य तस्मिन् दर्भेण हिरण्यं निष्टर्क्यं बद्ध्वाऽवधायोत्तरैर्मन्त्रैः कुमारं प्राशयित्वोत्तराभिः पञ्चभिः स्नापयित्वा दधि घृतमिति संसृज्य कांस्येन पृषदाज्यं व्याहृतीभिरोंकारचतुर्थाभिः कुमारं प्राशयित्वाऽद्भिः शेषं संसृज्य गोष्ठे निनयेत् ॥**

(१) मधुघृतमित्येतद्द्वयं विषमपरिमाणं कांस्यपात्रे संसृज्य तस्मिन् हिरण्यं दर्भेण निष्टर्क्यं बद्ध्वाऽऽदधाति । निष्टर्क्यमिति बन्धनविशेषो लोकप्रसिद्धः । तथा बद्धेन हिरण्येन तद्रसद्वयमादाय तेनैव कुमारं प्राशयेत् । उत्तरैस्त्रिभिः 'त्वयि मेधाम्' इत्यादिभिः प्रतिमन्त्रं प्राशनम् । तत उत्तराभिः पञ्चभिः ऋग्भिः 'क्षेत्रियै त्वा' इत्यादिभिः प्रतिमन्त्रं स्नापयति । ततोऽन्यस्मिन् कांस्यपात्रे दधि घृतं च संसृज्य तत्पृषदाज्यं तेनैव कांस्येन प्राशयति । व्याहृतीभिरोंकारचतुर्थाभिः 'भूः स्वाहा' इत्यादिभिः प्रतिमन्त्रम् । ततः शेषद्वयमद्भिः संसृज्य गोष्ठे निनयेत् । कुमारग्रहणमसमर्थस्यापि कुमारस्यैव प्राशनमुपायेन यथा स्यादिति । तेन यत्नाभावे 'धानाः कुमारान् प्राशयन्ति' (आपगृ. १९।१) 'क्षेत्रपत्यं च प्राशयन्ति' (आपगृ. २०।१८) इत्यादौ प्राशनमसमर्थानां न भवति ।

अनाकुला.

(२) निष्टर्क्यं शिखाबन्धनवत् सरन्ध्रेण ग्रन्थिना, 'निष्टर्क्यं बध्नाति प्रजानां प्रजननाय' (तैसं. ६।१।७।२) इति लिङ्गात् । उत्तरैर्मन्त्रैः 'मेधां ते देवः सविता' इत्यृचा, 'त्वयि मेधाम्' इति चतुर्भि(? त्रिभि)र्यजुर्भिः । प्राशनं चतुर्णामन्ते सकृदेव हिरण्येन गृहीत्वा, 'मन्त्रवत् प्राशनं चास्य हिरण्यमधुसर्पिषाम् ।' (मस्मृ. २।२९) इति मनुवचनात् । उत्तराभिः पञ्चभिः 'क्षेत्रियै त्वा, निर्ऋत्यै त्वा' इत्यादिभिः । स्नापनमपि पञ्चानामन्ते सकृदेव । दधि घृतमिति संसृष्टे(? ष्टं) पृषदाज्ये(? ज्यम्) । तच्च यस्मिन् कांस्ये संसृज्यते तेनैव प्राशयेत्, न हस्तेन । व्याहृतीभिरोङ्कारचतुर्थाभिः 'भूः स्वाहा' इत्यादिभिः । अत्राप्यन्ते सकृत्प्राशनम् । प्राशितशेषमद्भिः संसृज्य गोष्ठे अधिकरणेऽन्यो निनयेत् ।

केचित्— मधुघृतसंसर्गोऽपि कांस्ये नियतः, प्राशनद्वयं स्नापनं च प्रतिमन्त्रमिति । ताद.

---

¶ शेषम् अनाकुलावत् ।

(१) आपगृ. १५।४-६.

**उत्तरया मातुरुपस्थ आधायोत्तरया दक्षिणं स्तनं प्रतिधाप्योत्तराभ्यां पृथिवीमभिमृश्योत्तरेण यजुषा संविष्टम् ॥**

(१) अथ तं कुमारं 'मा ते कुमारम्' इत्येतया मातुरुपस्थे आदधाति । एतावन्तं कालं स्वोपस्थे । तस्मात् शेषनिनयनमप्यन्येन कारयितव्यम् । तत उत्तरयर्चा 'अयं कुमारः' इत्येतया दक्षिणं स्तनं प्रतिधाप्य तत उत्तराभ्यामृग्भ्यां 'यद्भूमेर्हृदयम्' इत्येताभ्यां प्रतिमन्त्रं पृथिवीमभिमृशति । ततः तं कुमारम् अभिमृष्टायां भूमौ संवेशयति माता । तं संविष्टमुत्तरेण यजुषा 'नामयति न रुदति' इत्यनेनाभिमृशति । अनाकुला.

(२) इदं च मन्त्रनियमयोर्विधानं प्रथमस्तनपानविषयम्, प्रथमातिक्रमे कारणाभावात् । ततश्च जातेष्टिः 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' (तैसं. २।२।५) इत्यादिना यद्यपि पुत्रजन्माख्यनिमित्तसंयोगेन श्रुता, तथापि क्षामवत्यादिवन्न निमित्तादनन्तरं कर्तव्या । कुत एतत्? रात्रिसत्रन्यायेन आर्थवादिकपुत्रगतब्रह्मवर्चसादिकामनासंवलितस्यैव जन्मनोऽधिकारहेतुत्वाभ्युपगमात्, जातेष्टिप्रवृत्तेश्चोत्कटजीवत्पुत्रगतपूततादिफलरागाधीनत्वात्, दीर्घकालसमाप्यायां चेष्टौ कृतायां पश्चाद्वैधस्तनपाने सति कुमार एव शोषी शुष्ककण्ठतया न जीवेत् । ततश्चेष्ट्यां रागाधीनायां प्रवृत्तिरेव न स्यात् । तस्माज्जननानन्तरमेव संशासनान्तं जातकर्मैव कर्तव्यम् । इष्टिस्तूक्तेन न्यायेन निमित्तस्वारस्यभङ्गस्य दुर्निवारत्वात् चोदकानुग्रहाच्चाऽऽशौचेऽपगते पर्वण्येव कर्तव्या । उत्तराभ्यां 'यद्भूमेर्हृदयम्' इत्येताभ्यां पृथिवीं सकृदभिमृशति, यत्र कुमारः शयिष्यते । $ ताद.

**उत्तरेण यजुषा शिरस्त उदकुम्भं निधाय सर्षपान् फलीकरणमिश्रानञ्जलिनोत्तरैस्त्रिभिस्त्रिः प्रतिस्वाहाकारं हुत्वा संशास्ति– 'प्रविष्टे प्रविष्ट एव तूष्णीमग्नावावपत' इति ॥**

$ शेषम् अनाकुलागतम् ।

(१) ततस्तस्य शिरःसमीपे उत्तरेण यजुषा 'आपः सुप्तेषु' इत्यनेन उदकुम्भं निदधाति । ततः सर्षपान् फलीकरणमिश्रानञ्जलिना जुहोति उत्तरैर्मन्त्रैः अष्टाभिः 'अयं कलिम्' इत्यादिभिः । तत्र च प्रतिस्वाहाकारं त्रिर्होमः सकृन्मन्त्रेण द्विस्तूष्णीम् । द्रव्यं च पुनः पुनरादेयम् । केचित्तु सकृदुपात्तेनैव त्रिर्जुहति, उत्तरयोश्च होमयोः स्वाहाकारमात्रमावर्तयन्ति । होमश्चायमपूर्वः, तन्त्रस्याविधानात् । परिस्तरणं तु भवति । परिषेचनं समन्तमुभयतः(?) । हुत्वा ततः संशास्ति । कान्? ये सूतिकागारं प्रविशन्ति । तत्र संशासने एवकारः एवमित्यस्यार्थे । एतदुक्तं भवति– अस्य सूतिकागारस्य यदा यदा प्रवेशो युष्माभिः क्रियते तदा तदा सर्षपान् फलीकरणमिश्रानस्मिन्नग्नावेवं तूष्णीमावपत यथा मयोप्ताः अञ्जलिना त्रिस्त्रिश्चेति । तत्र तूष्णीमिति अतिदेशप्राप्तस्य मन्त्रस्य प्रतिषेधः । यथासंप्रैषं ते कुर्वन्ति । होमश्चायं कुमारस्य रक्षार्थः संस्कारः, न मातुः, प्रकरणात् । तेन यद्यपि 'यस्यै विजातायां मनः' इति मातुरपि रक्षा प्रतीयते तथापि तदर्थो होमो न भवति । ततश्च स्त्रीप्रसवे दशाहमध्ये पुत्रमृतौ च न भवति । अनाकुला.

(२) 'यत्र क्व चाग्निम्' (आध. २।१।१३) इत्यादिविधिना श्रोत्रियागारादग्निमाहृत्य तमुपनिधाय ... । तूष्णीकेष्वपि स्वाहाकारो भवति, 'प्रतिमन्त्रम्' इति सिद्धे 'प्रतिस्वाहाकारम्' इत्यधिकाक्षरात् । अथ सूतिकागृहपालान् संशास्ति– 'प्रविष्टे ...' इति । संप्रैषस्य चायं विवक्षितोऽर्थः– प्रतिप्रवेशं तदनन्तरमेव सर्षपान् फलीकरणमिश्रान् अञ्जलिना अस्मिन्नेवाग्नौ तूष्णीं वाग्यता एव आवपतेति । एवकाराच्च प्रवेशावापयोर्मध्ये त्रुटिमात्रस्यापि कालस्य न क्षेपः । सर्षपाणामेवाञ्जलिना आवापः, प्रकृतत्वात् । केचित् – एवकार एवमर्थे । तूष्णीमिति चातिदेशप्राप्तमन्त्रप्रतिषेधार्थमिति ।

† ताद.

† शेषम् अनाकुलागतम् ।

## हिरण्यकेशिगृह्यसूत्रम्

अश्मधृतकुमारस्यानुमन्त्रणम्, औपासनाग्निं निःसार्य सूतिकाग्न्याहरणम्, फलीकरणहोमः, भूम्यालम्भनम्, घृतप्राशनरूपमेधाजननम्, कुमारस्नापनम्, मातुरुपस्थाहिताभिमन्त्रणम्, स्तनपानम्, उदकुम्भनिधानम्

**'जातेऽश्मनि परशुं निधायोपरिष्टाद्धिरण्यं तेषूत्तराधरेषूपरिष्टात्कुमारं प्राञ्चं धार्यमाणमनुमन्त्रयते— 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामाऽसि जीव त्वं शरदः शतम् ॥ अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामाऽसि जीव त्वं शरदः शतम् ॥ ' इति ॥**

(१) अथ जातकर्मोच्यते— जाते कुमारेऽश्मनि परशुं निधाय परशोरुपरि हिरण्यम् । तेषूत्तराधरेषु उत्तरमधरं येषामिति बहुव्रीहिः । यथावस्थितं विपर्यस्य यथाऽधस्ताद्धिरण्यमुपरिष्टाच्चाश्मा तथा कृतेषूपरिष्टात्तेषां कुमारं हस्ताभ्यां धारयति— 'अश्मा भव, अङ्गादङ्गात्' इत्येताभ्याम् । मातृवृ.

(२) अत्र 'जाते' इति वचनमित आरभ्य '¶शिरः समीप उदकुम्भं निदधाति' इत्यन्तस्य कर्मणो जातकर्मेतिसंज्ञां गमयति । सप्तमीनिर्देशप्रयोजनं जन्मानन्तरमेव क्रिया स्यात्, न त्वाशौचनिवृत्त्यपेक्षा इत्येतदर्थम् । § संर. ८२९

**'उपनिर्हरन्त्यौपासनमतिहरन्ति सूतिकाग्निम् ॥**

(१) उपनिर्हरन्ति समीपादस्य कर्मणो निर्गमयन्ति औपासनमग्निम् । तमतिहायेमं सूतिकाग्निं हरन्ति । सूतिकाग्नेरभिहरणात् अन्यस्याग्नेरप्रसङ्गः । अथौपासनाग्नेर्निर्हरणवचनं पूर्वत्र पुंसवनसीमन्तोन्नयनयोरौपासने एव क्रियेति ज्ञापनार्थम् । ननु 'तस्मिन् गृह्याणि क्रियन्ते' इति वचनादेव तत्सिद्धम् । न सिध्यति । जायापतिकर्मार्थे तद्वचनमिति व्रतसमावर्तनादिष्वेव संस्कारेषु न प्राप्नोति हि(? इति) तत्रापि प्राप्तिज्ञापनार्थमिदम् । उक्तं च बौधायनेन 'तस्मिन् प्रजासंस्कारः' इति । केचिदुपनिर्हरणवचनं सूतकदिवसेष्वौपासने कर्तव्यानां पार्वणसायंप्रातर्होमानां निवृत्त्यर्थं मन्यन्ते । तद्धर्मशास्त्रादेव सिध्यति मरणे इव— 'उभयत्र दशाहानि कुलस्यान्नं (न) भुज्यते । दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥' इति । वैतानिकनिवृत्त्यर्थं नियम इति चेत् । तदपि न, 'विप्रतिषेधे श्रुतिलक्षणं बलीयः' इत्येव सिद्धत्वात् । अपरे आहुः— प्रयोजनेष्वौपासने कर्तव्यानां सूतिकाग्नौ संक्रमणार्थमिति । ततः पार्वणवैश्वदेवादिष्वतिप्रसङ्ग इति चेत्, नेत्युत्तरत्र वक्ष्यामः । मातृवृ.

(२) सूतकसंबद्धकर्मार्थोऽग्निः सूतकाग्निः, सूतककर्तव्योद्धूपनार्थोऽग्निरिति यावत् । § संर. ८२९

**स एष उत्तपनीय एव ॥**

स एष सूतिकाग्निरुत्तपनीय एव कपालसंतापाग्निरेव स्यात् । आम्बरीषमुत्तपनीयमित्येके । तथा त्वर्थवत्ता शब्दस्य न स्यात् । एवकारकरणं केषांचिन्निर्मन्थ्यस्यौपासनस्य वा वचनान्नियमार्थम् । $ मातृवृ.

**नास्मिन् किंचन कर्म क्रियतेऽन्यत्रोद्धूपनात् ॥**

अस्मिन् सूतिकाग्नौ न किंचित्कर्म क्रियतेऽन्यत्रोद्धूपनात् । प्रथमार्थेऽत्र 'इतराभ्योऽपि दृश्यन्ते' (पा. ५।३।१४) इति सप्तमी । समित्परिषेकनिवृत्त्यर्थमिदम् । परिस्तरणं कुर्वन्ति, परिषेकं च तूष्णीम् । सर्वस्याभावो न्याय्यः । अन्यत्रोद्धूपनादित्यनर्थकम् । विधानसामर्थ्यान्निवृत्तेनाप्य(? वृत्तेः । नाप्य)नर्थकम्, रक्षामात्रार्थोऽयमग्निरिति कृत्वा लौकिकाग्नौ तस्य प्रसङ्गात् । ये त्वौपासने कार्याणामिहोपसंक्रमणार्थमुपनिर्हरणवचनं मन्यन्ते त

¶ अयमर्थानुवादः ।

§ शेषं मातृवृगतम् ।

(१) हिगृ. २०।१।१२ ; संर. ८२९ निर्देशमात्रम्.

(२) हिगृ. २०।१।१४-१६ ; संर. ८२९.

§ शेषं मातृवृगतम् ।

$ संर. मातृवृगतम् ।

आहुः— पार्वणवैश्वदेवसायंप्रातर्होमानामिहोपसंक्रान्तानां प्रतिषेधवचनमिति । अन्यत्रोद्धूपनादिति वचनं तुल्यजातीयापेक्षद्रव्यस्य होमस्य स्थानेऽस्य प्रवृत्त्यर्थम् । तेनान्वहं सायंप्रातरुद्धूपनं सिद्धं भवति । तत्रास्ति परिस्तरणपरिषेकौ मन्त्रवन्तौ च स्याताम् ( इति ) । मातृद्व.

**'अथैनं कणैः सर्षपमिश्रैरुद्धूपयति– ' शण्डो मर्क उपवीरः शाण्डीकेर उलूखलः । च्यवनो नश्यतादितः स्वाहा ॥ आलिखन् विलिखन्ननिमिषन् किंवदन्त उपश्रुतिः स्वाहा ॥ अर्यम्णः कुम्भीशत्रुः पात्रपाणिर्निपुणिः स्वाहा ॥ आन्त्रीमुखः सर्षपारुणो नश्यतादितः स्वाहा ॥ केशिनी श्वलोमिनी बजाबोजोपकाशिनी । अपेत नश्यतादितः स्वाहा ॥ कौबेरका विश्ववासो रक्षोराजेन प्रेषिताः । ग्रामान्सजातयो यन्तीप्सन्तः परिजाकृतान्स्वाहा ॥ एतान्हतैतान् बध्नीतेत्ययं ब्रह्मणो दूतस्तानग्निः पर्यसरत् । तानिन्द्रस्तान् बृहस्पतिस्तानहं वेद ब्राह्मणः प्रमृशतः कूटदन्तान् विकेशाँल्लम्बस्तनान्स्वाहा ॥ नक्तंचारिण उरस्पेशाच्छू( ? ञ्छू )लहस्तान् कपालपान् स्वाहा॥ पूर्व एषां पितेत्युच्चैः श्राव्यकर्णकः । माता जघन्या गच्छन्ति( ? न्ती ) ग्रामे विधुरमिच्छन्ती स्वाहा ॥ नक्तंचारिणी स्वसा संधिना प्रेक्ष्यते कुलम् । या स्वपत्सु जागर्ति तस्यै विजातायां मनः स्वाहा ॥ तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् । अग्ने यक्ष्मीणि निर्दह स्वाहा ॥ ' इति । प्रतिमन्त्रमङ्गारेष्वावपति ॥**

अथैनं कुमारं सर्षपमिश्रैः कणैरुद्धूपयन् क्रमणार्थं रक्षसां स उद्धूपयति । कथम् ? ' शण्डो मर्कः ' इत्येकादशभिः स्वाहाकारान्तैः । प्रतिमन्त्रमङ्गारेषु तान् सर्षपमिश्रान् कणानावपति । अथेति पूर्वस्यानित्यत्वात्तदभावे तदपूर्वाणाम् अर्थात् सायंप्रातः क्रियापेक्षत्वादिहापि कुर्यात् । कथमेनमिति द्वितीया । उद्धूपनं पुरुषसंस्कार एव । तेन सायंप्रातरपि क्रियमाणं रक्षार्थमेव कुमारस्य । अङ्गारेष्विति वचनं ज्वालाकाष्ठवतां निवृत्त्यर्थम् । आवपतीति वचनं हस्तेन प्रक्षेपार्थम् । उद्धूपनार्थे यथैतत्स्वाहाकारवत्त्वाद्धोमकर्मैव । तेन परिस्तरणपरिषेकभावः सायंप्रातःपक्ष उक्तः । परिस्तरणादिप्रतिषेधपक्षे सकृदिहैवोद्धूपनम् । आपस्तम्बस्तु प्रत्यहं सकृदाह । केचित् परिस्तीर्य तूष्णीं परिषिच्य सायंप्रातः कुर्वन्तोऽपि दृश्यन्ते । मातृद्व.

**ततः पाणी प्रक्षाल्य भूमिमालभते– ' यत्ते सुशीमे हृदयं दिवि चन्द्रमसि श्रितम् । तथाऽमृतत्वस्येशानो माऽहं पौत्रमघं रुदम् ॥ वेद ते भूमिहृदयं दिवि चन्द्रमसि श्रितम् । तथाऽमृतत्वस्येशानो माऽहं पौत्रमघं रुदम् ॥ ' इति ॥**

ततः पाणी प्रक्षाल्य ' यत्ते, वेद ते ' इत्येताभ्यां भूमिमालभते । तत इति वचनमुद्धूपनेन संबन्धार्थम् । तस्मादन्वहं सायंप्रातः क्रियायामप्येतदन्तं कार्यम् । मातृद्व.

**अथातो मेधाजननम् । दर्भेण हिरण्यं प्रबध्य तदन्तर्धायोपरिष्टात्प्राञ्चं कुमारं धार्यमाणं घृतं प्राशयति– 'भूर्ऋचस्त्वयि जुहोमि स्वाहा ॥ भुवो यजूंषि त्वयि जुहोमि स्वाहा ॥ सुवः सामानि त्वयि जुहोमि स्वाहा ॥ भूर्भुवः सुवरथर्वाङ्गिरसस्त्वयि जुहोमि स्वाहा ॥ ' इति ॥**

इति ( ? अत्र ) च स्नापनोपस्थाधानकुम्भनिधानेषु चाथशब्दः कालनियमार्थः, कालान्तरेषु शास्त्रान्तरे दर्शनात् । अतःशब्दो हेतौ । यतो नैवाप्रयोजनवन्ति ततोऽनन्तरं भूम्यालम्भनान्मेधाजननमुच्यते । दर्भेण हिरण्यमन्तर्धाय प्राक्शिरसमेनं धार्यमाणं घृतं प्राशयति ' भूर्ऋचः ' इत्येतैश्चतुर्भिः प्रतिमन्त्रम् । मातृद्व.

**अथोष्णशीताभिरद्भिः स्नापयति– ' क्षेत्रियै त्वा निर्ऋत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे ॥ शं ते अग्निः सहा-**

---

(१) हिगृ. २।१।१७–२५.

**द्भिरस्तु शं द्यावापृथिवी सहौषधीभिः । शमन्तरिक्षं सह वातेन ते शं ते चतस्रः प्रदिशो भवन्तु ॥ सूर्यमृतं तमसो ग्राह्या यद्देवा अमुञ्चन्नसृजन् व्येनसः । एवमहमिमं क्षेत्रियाज्जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् ॥ ' इति ॥**

अनन्तरमेनं कुमारमुष्णशीताभिरद्भिः स्नापयति — ' क्षेत्रियै त्वा, शं ते, सूर्यम् ' इत्येताभिः । मातृद्त.

**अथैनं मातुरुपस्थ आदधाति— ' या दैवीश्चतस्रः प्रदिशो वातपत्नीरभि सूर्यो विचष्टे । तासां त्वां जरस आदधामि प्र यक्ष्म एतु निर्ऋतिं पराचैः ॥ ' इति ॥**

अनन्तरमेनं कुमारं स्नातं मातुरुपस्थ आधापयति ' या दैवीः ' इत्यनेन । मातृद्त.

**आधायाभिमन्त्रयते— ' मा ते पुत्रं रक्षो हिंसीन्मा धेनुरतिसारिणी । प्रिया धनस्य भूया एधमाना स्वे वशे ॥ ' इति ॥**

आधायाऽऽधापितमभिमन्त्रयते— ' मा ते ' इत्यनेन । आधायेति वचनं पुत्रस्यैवाभिमन्त्रणम्, अथास्याः संबोध्यमानायाः क्रिया मा भूदिति । अथवाऽधिकारात् पुत्रस्यैव मा भूदिति लिङ्गात् क्रिया एवाभिमन्त्रणमित्येतदर्थम् । अथवोभयोरभिमन्त्रणार्थमेतत्, उभयोराधाने संबन्धान्मन्त्रसंकीर्तनाच्च । मातृद्त.

**प्रक्षाल्य दक्षिणं स्तनमाधापयति— ' अयं कुमारो जरां धयतु सर्वमायुरेतु तस्मै स्तनं प्रप्यायस्वाऽऽयुः कीर्तिर्वर्चो यशो बलम् ' इति ॥**

तूष्णीं प्रक्षाल्य दक्षिणं स्तनम् ' अयम् ' इत्यनेन क्रमादाधापयति आदरेण पाययति । मातृद्त.

**एवमुत्तरम् ॥**

एवमुत्तरं सव्यं स्तनं प्रक्षाल्याऽऽधापयति ' अयम् ' इत्यनेन । मातृद्त.

**' नामयति न रुदति यत्र वयं वदामो यत्र चाऽभिमृशामसि ' इत्युभावभिमृश्याथास्यै शिरस्त उदकुम्भमपिहितं निदधाति— ' आपो गृहेषु जाग्रत यथा देवेषु जाग्रत एवमस्यै सुपुत्रायै जाग्रत ' इति ॥**

' नामयति ' इत्यनेनोभयोः स्तनयोरावर्त्य मन्त्रेणाभिमृश्यानन्तरमस्याः शिरसः समीपे उदकुम्भमपिहितं निदधाति ' आपो गृहेषु ' इत्यनेन । पूर्वः कुम्भः प्रसवानन्तरमपनीतः । कुम्भान्तरमिदम् । समाप्तं जातकर्म । तत्पुंस एव स्यान्न स्त्रियाः । कुतः ? ' जाते कुमारेऽश्मनि ' इत्येतेषु पुंलिङ्गस्य विवक्षितत्वात्, मन्त्राणां च पुंस एवाभिधानात् । मातृद्त.

## मानवगृह्यसूत्रम्

उपाध्यायाय वरदानम्, आयुष्यहोमाः, दध्यादिप्राशनम्, मुखाभ्युद्देशनम्, कर्णजपः, स्तनपानम्

[1]**पुत्रे जाते वरं ददाति ॥**

**अरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमाञ्जुहोति ॥**

* पुत्रे जाते । ' यस्य ( च ) भावेन ' ( पा. सू. २।३।३७ ) सप्तमी । वरं दद्यात् उपाध्यायायेदं दक्षिणाम्, न तु पुत्रजन्माख्यातुः, शूद्रस्यापि संप्रदानत्वप्रसङ्गात् । ' अरणिभ्याम् ' ' अग्नेरायुरसि ' इति निगदव्याख्यातम् । अरणिभ्यामित्युक्ते अरणी आह्रियेते, न तु सीमन्तारणी । सीमन्तस्य स्त्रीद्वारा पुरुषद्वारकत्वम् ( ? अपत्यसंस्कारकत्वम् ), न तु साक्षात् । तस्मात् स्त्रीद्वारा संस्कारार्थमेव ते अरणी । इतरथा सर्वेषां गर्भाधानसाधारणत्वात् सर्वगर्भेषु जातकर्मणि ताभ्यामरणिभ्याममिमन्थनं स्यात् । प्रतिगर्भं वा तृतीये गर्भमासे अरण्याहरणादि सीमन्तकरणात् गुर्वर्हणात् तस्मात्तृतीयगर्भमासाहृताभ्यामरणिभ्याममिमन्थनं स्यात् । प्रतिगर्भं न किंचित्प्रमाणं प्रतिगर्भाहरणं

* " तक्षा यूपं छिनत्ति ' इतिवत् " इत्यन्तोऽयं ग्रन्थ आदर्शपुस्तके सीमन्तोन्नयनसूत्रव्याख्यानमध्ये मुद्रितोऽस्ति । आदर्शपुस्तकपादटिप्पण्यामेकस्मिन् तदादर्शपुस्तके ग्रन्थोऽयं तत्र नास्ति । सोऽयं जातकर्मसंबन्धादस्माभिरत्र संगृहीतः ।

(१) मागृ. १।१७।१–७.

मुक्त्वाऽनेन प्रतिगर्भमाहरण( म् )सीमन्तप्रयुक्तत्वादाहरणस्य । तथा चैकवाक्यत्वम् ‘ अरणी आहृत्य जयप्रभृतिभिर्हुत्वा ’ इति न किंचिदेतत् । प्रकृतमनुसरामः । अन्यथा तदस्ति अन्यथा तद्व्याचष्टे तृतीये गर्भमास इत्यादि । तृतीये गर्भमासे यदरण्याहरणं तदाहरणमात्रं दृष्टादृष्टार्थं तावत् । पुत्रे जाते सति तत् कर्मोच्यते । तच्च जातमात्र एव । तथा च स्मृत्यन्तरम्– ‘ कुमारं जातं पुराऽन्यैरालम्भात् दधि( ? सर्पिर् )मधुनी हिरण्यादिकात्स ( ? हिरण्यनिकाषं )हिरण्येन प्राशयेत् ’ ( आगृ. १।१५।१ ) इति । ( अन्यैरालम्भः ) अन्यैर्ग्रहणमित्यर्थः । युक्तं चैतत्– जातमात्र एव जातकर्म यद्दधिप्राशनं विहितम् , ततः स्तनदानम् । एवं च यदि जातकर्मणः कालान्तरं प्रतीक्षते तदा( न ? ) तस्य प्राणातिपातः स्यात् , एवमाहरणं न तदाऽरण्योः शीघ्रं भवतीति । पूर्वमस्मात्कस्मिंश्चिन्मास आहरित( ? हर्त )व्ये इति दृष्टार्थमाहरणम् । तृतीये तु यदुक्तं तददृष्टार्थम् । तस्मादाहरणमात्रमेव संस्कारकम् , तयोरुपयोक्ष्यमाणत्वात् ‘ तक्षा यूपं छिनत्ति ’ इतिवत् ।

पुत्रे जाते सति, न तु दुहितरि जातायाम् , तथा वरं च तस्मै दद्यात् । तथा पुत्र एव जाते *ताभ्यामरणिभ्यामग्निं मथित्वा जातकर्मादि कुर्यात् , न दुहितरि । तस्यां तूष्णीमेव कुर्यात् । तथा स्मृत्यन्तराणि– ‘ तूष्णीमेताः क्रियाः स्त्रीणां विवाहश्च समन्त्रकः । ’ ( यास्मृ. १।१३ ) इति । तथा ‘ आवृतात् कुमार्यैः ( ? आवृतैव कुमार्यै )’ । आवृता क्रमेण । तूष्णीं कुर्यादित्यर्थः । अत्र ‘ ताभ्यामरणिभ्याम् ’ इत्यादि तदेव ज्ञेयम् । तस्मिन्निति किमर्थम् ? यावता प्रकृतत्वादेव तत्र भवेदिति । सत्यम् , किंतु शाखान्तरमाशङ्क्य प्रतिषेधार्थम् । शाखान्तरे ह्येवं श्रूयते– ‘ तूष्णीं निर्मन्थनं प्राष्टात्स्तांतपनं यत्र दीप्यमानम् ’ । व्यावृत्त्यर्थं तस्मिन्निति । तस्मिन्नेव तूष्णीं निर्मन्थ्ये जातकर्मादि कुर्यान्नेतरयोरिति । अष्टाभा.

* अत्र अग्रे च ‘ ताभ्याम् ’ इत्युक्तेः ‘ ताभ्यामरणिभ्याम् ’ इति सूत्रपाठो भाष्यसंमत इति भाति । पूर्वव्याख्यानादपि तथैव प्रतीयते ।

**‘ अग्नेरायुरसि ’ इत्यनुवाकेन प्रत्यृचं प्रतिपर्यायमेकविंशतिमाज्याहुतीर्जुहोति ॥**

‘ अग्नेरा ’ अनेनानुवाकेनाऽऽज्यं जुहुयादित्यर्थः । तत्रैवाऽऽघारादि पूर्वतन्त्रं तथा अन्वधनोऽनुमतिरित्यादि परं तन्त्रं भवति, यतः साक्षान्नोक्तम् । स्मृत्यन्तरे विकल्पः श्रूयते– ‘ कृताकृतमाज्यहोमेषु परिस्तरणम् । तथा आज्यभागौ ’ ( आगृ. १।३।४,५ ) इति । आज्यशेषग्रहणं सर्वतन्त्रोपलक्षणार्थमित्यर्थः । भट्टाष्टावक्र एवमुक्तवान् । इदानीं भट्टश्रीकुमारोक्तं प्रकृतं लिख्यते । अष्टाभा.

**आज्यशेषे दधिमध्वपो हिरण्यशकलेनोपहत्य त्रिः प्राशापयति ॥**

**‘ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ ’ इति प्रादेशेनाभ्यघि प्रतिमुखं प्रदक्षिणं सर्वतोऽभ्युद्दिशति ॥**

पवित्रादिहोमान्ते आज्यशेषे दधि मध्वानीय हिरण्येनोपहत्य प्राशनं तूष्णीम् । प्रादेशेनाभ्युप( ? द् )दिशति मुखं पञ्चकृत्वः ‘ अश्मा भव परशुर्भव ’ इति मन्त्रेण । अष्टाभा.

**पलाशस्य मध्यमपर्णं प्रवेष्ट्य तेनास्य कर्णयोर्जपेत्– ‘ भूस्ते ददामि ’ इति दक्षिणे, ‘ भुवस्ते ददामि ’ इति सव्ये, ‘ स्वस्ते ददामि ’ इति दक्षिणे, ‘ भूर्भुवः स्वस्ते ददामि ’ इति सव्ये ॥**

**‘ इषं पिन्वोर्जं पिन्व ’ इति स्तनौ प्रक्षाल्य प्रधापयेत् ॥**

पलाशस्य मध्यमपर्णं प्रवेष्ट्य कर्णे पिधाय ‘ भूस्ते ददामि ’ इति व्यत्यासाज्जपेत् तेषाम् । स्तनौ प्रक्षाल्य मन्त्रेण ‘ ( इषं )पिन्व ’ इति, तूष्णीं प्रधापनम् । आशङ्क्य च कुमारको मन्त्रं वाचयितुं प्रधापयतीति प्रेषणमात्रे णिच् । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

फलीकरणहोमः, प्रवेशनिर्गमयोः सर्षपावापसंशासनम्, कुमाराभिमर्शनम्, कर्णजपः, अभिमन्त्रणम्, दध्यादिप्राशनम्, हस्तग्रहणम्, अभिमर्शनम्, मातृउपस्थाधानम्, स्तनपानम्, परिदाकरणम्, उदकुम्भनिधानम्, उत्तपनार्थसूतिकाग्निस्थापनम्

[1]विजातायाः परिदां करोति । दक्षिणार्धेऽगारस्याग्निमुपसमाधाय सर्षपान्फलीकरणमिश्रानञ्जलावध्युप्य जुहोति– 'शण्डो मर्क उपवीरस्तुण्डिकेर उलूखलः । च्यवनो नश्यतादितः स्वाहा ॥' इति । एवं द्वितीयामेवं तृतीयाम् । अथापराम्– 'केशिनी श्वलोमिनी खजाबोजोपकाशिनी । अपेत नश्यतादितः स्वाहा ॥' इति । एवं द्वितीयामेवं तृतीयाम् । अथापराम्– 'अर्यम्णः कुम्भीपात्रः पात्रपाणिर्निपुणिः । अपेत नश्यतादितः स्वाहा ॥' इति । एवं द्वितीयामेवं तृतीयाम् । अथापराम्– 'मिश्रवाससः कौबेरका रक्षोराजेन प्रेषिताः । ग्रामं सजानयो गच्छन्तीच्छन्तोऽपरिदाकृतान् स्वाहा ॥ एतान्घ्नतैतान्गृह्णीतेत्ययं ब्राह्मणो दूतः । तानग्निः पर्यसरत्तानिन्द्रस्तान् बृहस्पतिः । तानहं वेद ब्राह्मणः प्रमृशतः कूटदन्तान् विकेशाल्लम्बनस्तनान् स्वाहा ॥ नक्तंचारिण उरस्पेशाञ्छूलहस्तान्कपालपान् । पूर्व एषां पितेत्युच्चैः श्राव्यकर्णकः । माता जघन्या सर्पति ग्रामे विधुरमिच्छन्ती स्वाहा ॥ प्रदोषचारिणी स्वसा संधिना प्रेक्षते कुलम् । या स्वपन्तं बोधयति यस्यै विजातायां मनः । तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् । अग्ने अक्षीणि निर्दह स्वाहा ॥' इति । एवमेव निष्क्रामति च प्रपद्या( ? द्य )माने चाऽऽवपताहरहरा निर्दशताया इति ॥

---

(१) भागृ. १।२३–२६.

सा यदि पुमांसं जनयति तमभिमृशति 'वृधत्' इति । मध्यमं पलाशपलाशं संवेष्ट्य तेनास्य दक्षिणं कर्णमाजपति– 'भूस्त्वयि दधामि' इति । 'भुवस्त्वयि दधामि' इत्युत्तरम् । 'सुवस्त्वयि दधामि' इति दक्षिणम् । अपि वोत्तरमेव द्विः सकृदेव दक्षिणम् । अथैनमभिमन्त्रयते– 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ मेधां ते देवः सविता मेधां देवी सरस्वती । मेधां ते अश्विनावुभावाधत्तां पुष्करस्रजौ । वेदो वै पुत्रनामाऽसि स जीव शरदः शतम् ॥' इति । अथैनं दधि मधु घृतमिति संसृज्य त्रिभिर्दर्भपुञ्जीलैर्हिरण्येन वा त्रिः प्राशयति– 'अपां त्वौषधीनां रसं प्राशयाम्यायुर्वर्चो यशो मेधां त्वयि दधामि सवित्रा प्रसूतस्त्वष्टा वीरमधात्स मे शतायुरेधि भूर्भुवः सुवः' इति । अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तमभीवाङ्गुष्ठमभीव लोमानि गृह्णाति– 'अग्निरायुष्मान्' इत्येतैर्मन्त्रैः । नवनीतेन पाणी अभ्यज्य हिरण्यं हस्ते कृत्वा ॥

अग्नौ प्रताप्याभिमृशति– 'अग्नेस्त्वा तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाऽभिमृशामि ॥ अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥' इति । अथैनं वात्सप्रेणाभिमृशति– 'दिवस्परि' इत्यनुवाकेन । यत्र शेते तदभिमृशति– 'वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् । वेदामृतस्य गोप्तारं माऽहं पौत्रमघं रुदम् ॥' इति । अथैनं मातुरुपस्थ आदधाति– 'मा ते पुत्रं रक्षो वधीन्मा धेनुरत्यासारिणी । प्रिया धनस्य भूया एधमाना स्वे वशे ॥' इति । स्तनं प्रतिधापयति– 'अयं कुमारो जरां धयतु दीर्घमायुः । तस्मै त्वं स्तनं प्रप्यायाऽऽयुर्वर्चो

**यशो बलम् ॥' इति । संविष्टाभ्यां परिदां करोति– 'नामयति न रुदति यत्र वयं वदामसि यत्र चाभिमृशामसि' इति । शिरस्त उदकुम्भं निदधाति– 'आपः सुप्तेषु जाग्रत रक्षांसि निरितो नुदध्वम्' इति । नैतासामपामुदकार्थं कुर्वन्ति ॥**

**उपनिर्हरन्ति सूतिकाग्निमौपासनमतिहरन्ति । स एष उत्तपनार्थो भवति । नास्मिन् किंचन कर्म क्रियते ॥**

## काठकगृह्यसूत्रम्

नामकरणम्, होमः, कुमारमुखस्पर्शनम्, स्तनानुमन्त्रणम्, संपातानां मधुनो वा प्राशनम्, मूर्धनिघ्राणं स्वस्तिवाचनं च, फलीकरणहोमः

**[1]पुत्रे जाते नाम धीयते ॥**

( १ ) पुत्रे जाते जातकर्म कृत्वा नाभिवर्धनादनन्तरं नाम धीयते संकल्प्यते– 'इदं नाम करिष्यते' इति केचित् व्याकुर्वते । नामकरणं हि 'एकादश्यां नाम कुर्वीत पुण्ये वाऽहनि' इति अशौचशुद्धौ स्मृतम् । अन्ये त्वाहुः– जाते सति एकादशं तदनन्तरं वा सुलग्नं नामकर्मणि नातिक्रामेत् इत्येवंपरमेतदिति । वयं तु तत्त्वमदूरे वक्ष्यामः । देव.

( २ ) न दुहितरि होमः । नाम तु क्रियते । अमन्त्रकं मधुसर्पिषः प्राशनम् । जाते जाते पुत्रे पुत्रे नाम तस्य धीयते स्थाप्यते चिन्त्यते वा । आवि.

**घोषवदाद्यन्तरन्तस्थं चतुरक्षरम् ॥**

( १ ) नाम्न आदौ घोषवदक्षरं कर्तव्यम्, मध्ये चान्तस्थसंज्ञकम् । चत्वार्यक्षराणि यत्र तत् । अक्षराणि अचोऽत्र, हलामनवधारणात् । देव.

( २ ) घोषवान् वर्णः आदिर्यस्य तद् घोषवदादि । वर्गतृतीयचतुर्थपञ्चमा यरलवाश्च घोषवन्तः । अन्तरन्तस्थम् – अन्तः मध्ये अन्तस्थानां यरलवानामन्यतमो यस्य तदन्तरन्तस्थम् । चतुरक्षरं चत्वारि अक्षराणि यस्य । यथा 'देवदत्तः' इति । आवि.

(१) कागृ. ३४।१–७.

**यथोपपत्ति वा ॥**

( १ ) यथा वा देवताप्रसादलब्धत्वाद्यनुसारेण तदुपपद्यते तथा कर्तव्यम् । देव.

( २ ) अथवा यथोपपत्तिः यथोपपद्यते मासर्तुनक्षत्रदेवताकुलप्रबन्धादिनिमित्तेन । आवि.

**अग्निमत्राऽऽनीय तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्यकांस्ये संपातानवनयेत्– 'हिरण्यगर्भः' 'संवत्सरस्य प्रतिमाम्' 'काय स्वाहा, कस्मै स्वाहा, कतमस्मै स्वाहा, प्रजापतये स्वाहा' 'प्रजापते न हि त्वदन्यः' इति च द्वाभ्याम् ॥**

यत्र गृहे प्रसवः तत्र लौकिकमग्निमाहृत्य तत्रैव आज्यभागान्तान् होमान् कृत्वा हिरण्ययुक्ते कांस्यपात्रे संपातान् हुतशेषबिन्दून् अवनयेत् स्रावयेत् 'हिरण्यगर्भः' इत्यष्टाभिराहुतिभिः । 'हिरण्यगर्भः' इत्येकाऽऽहुतिः । 'संवत्सरस्य प्रतिमाम्' इति द्वितीया । 'काय स्वाहा, कस्मै स्वाहा, कतमस्मै स्वाहा, प्रजापतये स्वाहा' इति चतस्रः । 'प्रजापते न हि त्वत्' इति द्वाभ्यां द्वे । एवमष्टौ भवन्ति । केचित् प्रधानकर्मत्वात् चतुर्गृहीतेनैव होम इत्याहुः ।

'हिरण्यगर्भः ... ॥' । एषा विवाहकाण्डे ( सं. का. पृ. २०९० ) विवृता ।

'संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते । तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज ॥' । हे रात्रि, त्वं संवत्सरस्य प्रतिमा निर्मात्री । त्वां ये जनाः उपासते तेषां प्रजामायुष्मतीं कुरु, रायस्पोषेण धनपुष्ट्या संसृज संयोजय ।

'काय स्वाहा ॥' । काय प्रजापतये सुहुतमस्तु । 'कस्मै स्वाहा, कतमस्मै स्वाहा, प्रजापतये स्वाहा ॥' कप्रभृतीनि चत्वारि प्रजापतिनामानि ।

'प्रजापते न हि त्वदन्य एता विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु स्वाहा ॥' विराट् । हे प्रजापते, त्वदन्यो नास्ति य एतानि विश्वानि सर्वाणि जातानि जन्मवन्ति भूतानि परिबभूव परिभूतवान् वशीकरोति व्याप्नोतीति यावत् । एता एतानि, विश्वा

( २ ) ततो हिरण्येन संपातान् संनिघृष्य... तद्धिरण्यं शिशोरास्ये कृत्वा 'आयुर्भव' इति सप्तभिराज्यं स्तनौ च पाययेत् । ब्राह्म.

**'जीव शरदः शतं पश्य शरदः शतम्' इति मूर्धनि निघ्राप्य स्वस्त्ययनं वाचयति ॥**

'जीव...शतम्' इति मूर्धानं निघ्राप्य स्वस्त्ययनं वाचयति 'बोधश्च मा' इत्यनुवाकम् । स्वार्थे णिच् वाचयतीति । शिष्टं स्पष्टम् ।

'बोधश्च मा प्रतीबोधश्च पुरस्ताद् गोपायतामस्वप्नश्च माऽनवद्राणश्च दक्षिणतो गोपायतां गोपायमानश्च मा रक्षमाणश्च पश्चाद् गोपायतां जागृविश्च माऽरुन्धती चोत्तराद् गोपायताम् ॥ अनमित्रं नो अधरागनमित्रमुदक्कृधि । इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ अनमित्रैरहोभिः सचेमहि विश्वे देवा अनमित्रा न उषसः सन्तु निम्रुचः । याः षडुर्वीः पञ्च प्रदिशस्ता नः पान्तु मित्रधा नो मित्रे दधाता अभयं नो अस्तु ॥ ये रात्रीमनुतिष्ठथ ये च भूतेषु जागृथ । पशून् ये सर्वान् रक्षथ ते न आत्मसु जागृत ॥ बोध प्रतीबोधास्वप्नानवद्राण गोपायमान रक्षमाण जागृवेऽरुन्धति ये देवास्तनूपाः स्थ ते म इह तन्वं पात बोधप्रतीबोधेत्यसौ वा आदित्यो बोधोऽग्निः प्रतीबोधोऽस्वप्नानवद्राणेति चन्द्रमा वा अस्वप्नोऽयं यः पवते सोऽनवद्राणो गोपायमानरक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमाणो जागृवेऽरुन्धतीति यज्ञो वै जागृविर्दक्षिणाऽरुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेष्ट आत्मनो गोपीथाय ॥' ।

एतत् स्वस्त्ययनं स्वस्तिः अविनाशः तस्यायनं प्रापणम् अविनाशलाभकारणम् । राष्ट्रभृतामार्षम् । राष्ट्रं जगत् बिभ्रति धारयन्ति पुष्णन्ति च ये ते राष्ट्रभृतः आदित्यादयः । ऋतवोऽपीत्येके । बोधादयः अत्रैवानुवाके पुरस्ताद् व्याख्याताः । आदित्यः बोधः , अग्निः प्रतीबोधः , प्रकाशकत्वात् । चन्द्रमा मनोरूपेण अस्वप्नः , सततजागरणात् । प्राणरूपो वायुः अनवद्राणः , अकुत्सितगतित्वात् । दिवसो गोपायमानः जीवननिमित्तक्रियानुष्ठापनद्वारेण । रक्षमाणः रात्रिः । जागृविः यज्ञः प्रजापतिरूपः , 'यज्ञो वै प्रजापतिः' इति श्रुतेः , सर्वान्तर्यामिरूपेण सर्वप्राणिषु जागरणात् जागृविः । अरुन्धती दक्षिणा । सा हि अरीन्निवारयन्ती सती यजमानाय फलं ददाति ।

बोधः आदित्यः मां पुरस्तात् पूर्वस्यां दिशि गोपायत रक्षतु, प्रतीबोधश्चाग्निः । अस्वप्नः चन्द्रः मां दक्षिणस्यां दिशि गोपायताम् , अनवद्राणश्च वायुः प्राणः । गोपायमानो दिवसो मां पश्चिमदिग्भागे गोपायताम् , रक्षमाणश्च रात्रिकालः । जागृविः यज्ञः प्रजापतिः उत्तरदिग्भागे मां गोपायताम् , अरुन्धती च दक्षिणा ।

अनमित्रं नोऽधरागित्यैन्द्री अनुष्टुप् । न मित्रम् अमित्रम् , न अमित्रम् अनमित्रम् , मित्रमित्यर्थः , नञ्द्वयेन प्रकृतार्थाभिद्योतनात् । हे इन्द्र, नः अस्माकम् अधराग् अधस्तनदिग्भागे उदक् च उत्तरदिग्भागे अनमित्रं कृधि कुरु । यस्तत्रास्मान् हिंसितुमिच्छति तमनुकूलं संपादयेत्यर्थः । एवमुत्तरत्र । पश्चात् पश्चिमदिशि । पुरः पूर्वस्यां दिशि ।

अनमित्रैरहोभिरिति द्वे शक्वर्युष्णिहौ । अभिधेया सर्वत्र देवता । हे विश्वे देवाः सर्वे देवाः , वयं मित्रीभूतैरहोभिः सचेमहि, उषसः प्रभातकालाः निम्रुचश्च रात्रयः अस्माकं मित्राणि सन्तु । 'म्रुचु म्लुचु गतौ' । नितान्तं गच्छति आभ्य आदित्य इति निम्रुचः । याः षड्देवताः उर्वीः उर्व्यः महत्यः । कास्ताः ? द्यौः, पृथिवी, अहः , रात्रिः , उषः, ओषधयः । तथा पञ्च प्रदिशः– चतस्रः प्रागाद्याः , ऊर्ध्वा पञ्चमी । ताः नः अस्मान् पान्तु रक्षन्तु । हे अनन्तरोक्ताः , यतो यूयं मित्रधाः हितस्य कार्यस्य विधात्र्यः ततः नः अस्मान् मित्रे शुभकर्मणि दधात धारयत, अभयं चास्माकमस्तु युष्मत्प्रसादात् ।

हे प्रदर्शितदेवाः , ये यूयं रात्रीमनुतिष्ठथ रात्रीं लक्षणीकृत्य तिष्ठथ, ये च भूतेषु जागृथ, सर्वांश्च पशून् रक्षथ, ते नः अस्माकं संबन्धिषु आत्मसु शरीरेषु जागृत ।

बोध प्रतीबोधेत्यादिनाऽष्टानां संबोधनम् । हे बोधादयः अरुन्धतीपर्यन्ताः , ये यूयं देवास्तनूपाः स्थ तनूनां

शरीराणां रक्षका भवथ ते मे मम इह गहने भवे तन्वं तनूं पात रक्षत । बोधादीन् प्रतीकैरवच्छिद्य व्याचष्टे– बोधप्रतीबोधेत्यादिना । गतार्थमेतत् । एते वै देवाः । वैशब्दोऽवधारणे । एत एव बोधादयो राष्ट्रस्य जगतः भर्तारः ऋतवश्च । अतोऽहं तानेव ईट्टे स्तौमि । किमर्थम्? आत्मनो गोपीथाय रक्षणाय । अन्यान्यप्यत्र स्वस्त्ययनानि पठनीयानि । वचिः चुरादौ पठ्यते । ततः स्वार्थे णिच् – स्वस्त्ययनं वाचयतीति । तेन युक्तं स्वकर्तृकं वचनं पितुः । स्वकर्तृकाणि ह्येतानि उत्सर्गेण प्राक् चूडाकरणात् । § देव.

**'सर्षपान् फलीकरणमिश्रान् दर्व्या जुहोति– 'शण्डो मर्कोपवीतस्तौण्डुलेय उलूखलश्चपलो नश्यतामितः स्वाहा ॥ अनालिखन्नवलिखन् किंवदन्त उलूखलश्चपलो नश्यतामितः स्वाहा ॥ हर्यक्ष्णः कुम्भिः शक्तिर्हन्ता चुपुणीमुखश्चपलो नश्यतामितः स्वाहा ॥ केशिनी श्वलोमिनी कचकेशावकाशिन्यपेतो नश्यतामितः स्वाहा ॥' इति ॥**

(१) बालकसूतिकयोः रक्षार्था अशौचकालेऽमी होमाः, अतश्च दृष्टार्था एव । फलीकरणं कम्बुकाः, तैर्मिश्रितान् सर्षपान् दर्व्या दशाहं यावत् सायंप्रातर्जुहुयात् 'शण्डः' इत्यादिचतुर्भिर्मन्त्रैः ।

शण्ड इति । इह सूतिकास्थानात् शण्डादयो नश्यन्तु पलायन्तामिति समुदायार्थः । शण्डादयः पिशाचानां संज्ञाः । एकैको मन्त्रसंबन्धः । शण्डः इतः स्थानान्नश्यतु । एवं मर्कः, उपवीतः, तौण्डुलेयः, उलूखलः, चपलः नश्यतामितः । स्वाहा सुहुतमस्तु । अनालिखन्निति । समानं पूर्वेणैतत् । हर्यक्ष इत्यादयः संज्ञाः । केशिनी नाम राक्षसी । तथा श्वलोमिनी, कचा, कौचा, अपकाशिनीत्येतान्यपि राक्षसीविशेषनामानि । ‡ देव.

§ आवि. देवगतम् ।

‡ ब्राह्म. देवगतम् ।

(१) कागृ. ३५।१–२.

(२) ततः सर्षपान् फलीकरणमिश्रान् सकम्बुकान् दर्व्या जुहोति सकृद्गृहीतान् स्वाहान्तैश्चतुर्भिः । आवि.

**एवं सायंप्रातर्दशाहं जुहुयात् ॥**

(१) अनेन प्रकारचतुष्टयेन दशाहं जुहुयात् अशौचकालं यावज्जुहुयादित्यर्थः । देव.

(२) एवं सायंप्रातः दशाहं सूतिकाशौचापनिवृत्तये होमो दृष्टार्थः । आवि.

## वाराहगृह्यसूत्रम्

कर्णजपः, अभिमन्त्रणम्, भूम्यभिमर्शनम्, होमः, संपातप्राशनम्, स्तनपानम्, बहिर्द्वारे नित्यमग्निधारणम्, फलीकरणहोमः, अप्रतिरथजपः, सूतिकागारस्य समन्तात्परिषेचनम्

**'पुत्रं जातमन्वक्षं स्नातं न मातोपहन्यादा मन्त्रप्रयोगात् । अग्नेरभ्याहितस्य परिसमूढस्य परिस्तीर्णस्य पश्चादहते वाससि कुमारं प्राक्शिरसमुत्तानं संवेश्य पालाशस्य मध्यमपर्णं प्रवेष्ट्य तेनास्य कर्णावाजपेत्– 'भूस्त्वयि दधामि' इति दक्षिणे, 'भुवस्त्वयि दधामि' इति सव्ये, 'स्वस्त्वयि दधामि' इति दक्षिणे, 'भूर्भुवः स्वस्त्वयि दधामि' इति सव्ये । अथैनमभिमन्त्रयेत्– 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥' इति । यत्र शेते तदभिमृशेत्– 'वेद ते भूमिहृदयं दिवि चन्द्रमसि श्रितम् । वेदामृतस्य देवानहं पुत्रमहं इदम् ॥' इति । आज्यं संस्कृत्य ब्राह्मणमामन्त्र्य समिधमाधायाऽऽघारावाघार्याऽऽज्यभागौ हुत्वा व्याहृतिभिश्चतस्र आज्याहुतीर्जुहुयात् । जयाभ्यातानानां( ? तानान्)**

(१) वागृ. १.

राष्ट्रभृतश्चैके। कांस्ये चमसे वाऽऽहुतिसंपातानवनीय तस्मिन् सुवर्णं संनिघृष्य व्याहृतिभिः कुमारं चतुः प्राशयेदत्यन्तमेके सुवर्णप्राशनमुदके निघृष्याऽऽद्वादशवर्षतायाः। 'इषं पिन्वोर्जं पिन्व' इति स्तनौ प्रदापयेत्। दक्षिणं पूर्वं सव्यं पश्चात्। स्विष्टकृतं हुत्वा प्रायश्चित्ताहुतीश्च समिधमाधाय पर्युक्षति। एष कर्मान्तो बहिर्द्वारेऽग्निर्नित्यः। कणसर्षपयवानां होमः। व्याहृतिभिर्जुहुयात्। अप्रतिरथं जपेत् 'इन्द्रो भूतस्य' इति षड्चं च। सूतिकालयं यथाकालं समन्तादुदकेन परिषिञ्चेत्॥

## आग्निवेश्यगृह्यसूत्रम्

अश्मोपरि कुमारधारणम्, सूतकाग्निस्थापनम्, फलीकरणहोमः, भूम्यालम्भनम्, घृतप्राशनरूपं मेधाजननम्, मातृपस्थाधानम्, अभिमन्त्रणम्, स्तनपानम्, कुमाराभिमर्शनम्, उदकुम्भनिधानम्

'जाते अश्मनि परशुं निधायोपरिष्टाद्धिरण्यं तेषूपरिष्टात् कुमारं धारयति– 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव। वेदो वै पुत्रनामाऽसि जीव त्वं शरदः शतम्॥ अङ्गादङ्गात् संभवसि हृदयादधि जायसे। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्॥' इति। उपनिर्हरन्त्यौपासनाग्निमतिहरन्ति सूतकाग्निम्। स एष उत्तपनीय एव। नास्मिन् किंचन कर्म क्रियतेऽन्यत्रोद्धूपनात्। अथैनं कणैः सर्षपमिश्रैर्धूपयति। 'शण्डो मर्क उपवीरः शाण्डिकेर उलूखलः। च्यवनो नश्यतादितः स्वाहा॥ आलिख(? खन्) विलिखन्ननिमिषन् किं व(? किंव)दन्त उपश्रुति(? तिः) स्वाहा॥ अर्यम्णः कुम्भिशत्रुं पात्रपाणिं निपुणिं स्वाहा॥ आन्त्रमुखं सर्षपाणिरुणो नश्यतादितः स्वाहा॥ केशिनी स्व(?श्व)-लोमिनी खजापोजोपकाशिनी अपेत नश्यतादितः स्वाहा॥ कौबेरिका विश्ववासा रक्षोराजेन प्रेषिताः। ग्रामं सजानयो यन्तीप्सन्तोऽपरिज्ञाकृतान् स्वाहा॥ एतान् घ्नतैतान् बध्नीतेत्ययं ब्रह्मणो दूतः। तानग्निः पर्यसरत् तानिन्द्रस्तान् बृहस्पतिः। तानहं वेद ब्राह्मणान् प्रमृशतः कूटदन्तान् विकेशान् लम्बनस्तनान् स्वाहा॥ नक्तंचारिण उरस्पेशाञ् शूलहस्तान् कपालपान् स्वाहा॥ पूर्व एषां पितेत्युच्चैःश्राव्यकर्णकः। माता जघन्या गच्छन्ती ग्रामे मिथुनमिच्छन्ती स्वाहा॥ नक्तंचारिणी स्वसा संधिना प्रेक्षते कुलम्। या स्वपत्स्वजागर्ति तस्यै विजातायां मनः स्वाहा॥ तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत्। अग्ने अक्षीणि निर्दह स्वाहा॥' इति प्रतिमन्त्रमङ्गारेष्वावपति। ततः पाणिं प्रक्षाल्य भूमिमालभते– 'यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्। तस्यामृतस्य नो धेहि माऽहं पौत्रमघं रुदम्॥ वेदसे भूमि हृदयं दिवि चन्द्रमसि श्रितम्। तस्यामृतस्य नो धेहि माऽहं पौत्रमघं रुदम्॥' इति॥

अथातो मेधाजननम्। अथ दर्भेण हिरण्यं प्रबध्य तदन्तर्धाय प्राञ्चं धार्यमाणं घृतं प्राशयति– 'भूरृचस्त्वयि जुहोमि स्वाहा। भुवो यजूंषि (त्वयि) जुहोमि स्वाहा। स्वः सामानि त्वयि जुहोमि स्वाहा। भूर्भुवः स्वरथर्वाङ्गिरसस्त्वयि जुहोमि स्वाहा।' इति। अथैनमुष्णशीताभिरद्भिः स्नापयति– 'क्षेत्रियै त्वा निर्ऋत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात्। अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे॥ शं ते अग्निः सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः। शमन्तरिक्षं सह वातेन ते शं ते चतस्रः प्रदिशो भवन्तु॥ सूर्यमृतं तमसो ग्राह्या यद्देवा अमुञ्चन्नसृजन् व्येनसः। एवमहमिमं क्षेत्रियाज्जामिशंसाद्द्रुहो मुञ्चामि

(१) आग्निगृ. २।१।३-४.

**वरुणस्य पाशात् ॥' इति । अथैनं मातुरुपस्थ आदधाति– 'या देवीश्चतस्रः प्रदिशो वातपत्नीरभि सूर्यो विचष्टे । तासां त्वा जरस आदधामि प्र यक्ष्म एतु निर्ऋतिं पराचैः ॥' इति । आधायाभिमन्त्रयते– 'मा ते पुत्रं रक्षो हिंसीर्मा धेनुरतिधारिणी । प्रिया धनस्य भूया एधमाना स्वे वशे ॥' इति । प्रक्षाल्य दक्षिणं स्तनमाधापयति– 'अयं कुमारो जरां धयति सर्वमायुरेति । यस्मै त्वं स्तनं प्रप्यायाऽऽयुः कीर्तिर्वर्चो यशो बलम् ॥' इति । एवं सव्यं स्तनं च । 'नामयति न रुदति यत्र वयं वदामसि । यत्र चाभिमृशाम ॥' इति मातापितरौ कुमारमभिमृशतः ॥**

**'आपो गृहेषु जाग्रत । यथा देवेषु जाग्रत । एवमस्यै सुपुत्रायै जाग्रत । ' इति संपूर्य मातुः शिरःस्थानेऽपिहितमुदकुम्भं निदधाति । प्रतिदिवसं कणैरुद्धूपनं कर्तव्यम् ॥**

## पारस्करगृह्यसूत्रम्

मधुघृतप्राशनरूपं मेधाजननम्, कर्णजपरूपमायुष्यकरणम्, काम्यकुमाराभिमर्शनम्, अनुप्राणनम्, जन्मभूमेरभिमन्त्रणम्, कुमाराभिमर्शनम्, मात्रभिमन्त्रणम्, स्तनपानम्, उदकुम्भनिधानम्, सूतिकाग्निस्थापनं फलीकरणहोमश्च

**'जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति ॥**

**'अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा– 'भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामि ' इति ॥**

(१) अनेन मन्त्रेण । प्रतिवाक्यमित्यपरे । अच्छिन्ने नाले एतत् क्रियते । कुमारग्रहणाच्च स्त्रिया अतः प्रभृति न क्रियते ।　　कभा.

(२) तस्य नालच्छेदात् प्राक् मधुघृते मिश्रिते असंभवे घृतमेव वा प्राशयति सकृत् पिता– 'भूस्त्वयि' इत्यादि 'सर्वं त्वयि दधामि' इत्यन्तेन मन्त्रेण । प्रतिवाक्यमित्यपरे । कुमारग्रहणात् अतः प्रभृति स्त्रिया न भवति । अथ मन्त्रार्थः– तत्र सर्वासां प्रजापतिः, क्रमेण गायत्र्युष्णिगनुष्टुभः, अग्निवायुसूर्याः, प्राशने० । भूरादिव्याहृतित्रयेणोपलक्षितं वेदत्रयं सर्वोपलक्षितम् अथर्वत्रयेणोपलक्षितम् अथर्ववेदं च त्वयि दधामि स्थापयामि । यद्वा वेदत्रयं लोकत्रयं च त्वदधीनं स्थापयामि इति ।　　जभा.

(३) ततो जातस्य उत्पन्नस्य कुमारस्य पुत्रस्य अच्छिन्नायां नाड्याम् अखण्डिते नाले सति मेधाजननायुष्ये मेधाजननं च आयुष्यं च मेधाजननायुष्ये, ते करोति पिता । मेधाजननं तावदाह– अनामि...दधामीति । अनामिकया अङ्गुल्या सुवर्णेनाऽऽच्छादितया मधु च घृतं च मधुघृते द्वन्द्वसमाससामर्थ्यात् एकीकृते घृतं वा केवलं कुमारं सकृत् प्राशयति कुमारस्य जिह्वायां निर्माष्टि– 'भूस्त्वयि' इत्यादि 'सर्वं त्वयि दधामि' इत्यन्तेन मन्त्रवाक्यसमुदायेन । ननु 'अर्थैकत्वादेकं वाक्यम्' (जैसू. २।१।४६) इति जैमिनिसूत्रात् 'तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता ।' इत्यमरसिंहोक्तेश्चैकार्थमेकं वाक्यम् । एकस्य वाक्यस्य च 'तेषां वाक्यं निराकाङ्क्षं मिथः संबद्धम्' (काश्रौ. १।३।२, ३) इति कात्यायनवचनेनैकमन्त्रत्वमिति प्रतिपादनात् कथं मन्त्रवाक्यसमुदायस्यैकमन्त्रत्वम् ? अत्रोच्यते– सत्यम् । यदि इतिकारादिकं मन्त्रावसानज्ञापकं किंचिन्न स्यात् तदैतच्छक्यम् । अत्र पुनरितिकारो मन्त्रावसानज्ञापको जागर्ति । तेन नायं दोषः । यथा "स वै भूर्भुवः' इत्येतावतैव गार्हपत्यमादधाति" "तै सर्वैः पञ्चभिराहवनी-

(१) पागृ. १।१६।३. शेषस्थलादिनिर्देशा जातकर्मविधिप्रकरणे ( सं. का. पृ. २६३३ ) द्रष्टव्याः.

(२) पागृ. १।१६।४ ; ब्रक. ८७ ( भुव...इति० ); स्मृसा. २ अशुद्धिबहुलो ग्रन्थः ; निप. २४१ (=) (भूर्भुवः स्वः सर्वं त्वयि दधामि०) ; संम. १५ वा (च) (भूस्त्वयि... इति० ).

यमादधाति 'भूर्भुवः स्वः' इति" (इति) च श्रुतौ वाक्यसमुदायस्य इतिकारेण मन्त्रावसानं ज्ञायते। कातीयसूत्रेऽपि "दारुभिर्ज्वलन्तमादधाति 'भूर्भुवः' इति" "(¶ आहवनीयम्) आदधाति ... 'भूर्भुवः स्वः' इति" (काश्रौ. ४।९।१, ११)। अत्र यद्यपि एकैकस्याः व्याहृतेर्मन्त्रत्वं युक्तं समस्तानां व्याहृतीनां च, तथाऽपि इतिकारेण द्वयोरपि व्याहृत्योर्मन्त्रत्वं व्यवस्थाप्यते। एवमन्यत्रापि बहूनां मन्त्रवाक्यानामितिकारादिविनियोजकेन मन्त्रैक्यं तत्र(? यत्र) तत्रायमेव न्यायोऽनुसर्तव्यः।

* हमा.

(४) अनामिका कनिष्ठासमीपाङ्गुलिः।

स्मृसा. २

(५) तत उत्पन्नस्य पुत्रस्य अच्छिन्ने नाले मङ्गलोदकेन स्नात्वा अहते वाससी परिधाय वैश्वदेववर्जं वसोर्धारामातृपूजनसहितं नान्दीमुखं हिरण्यश्राद्धं कृत्वा मेधाजननं च आयुष्यं च ते करोतीत्यर्थः। तत्राऽऽदौ कुमारदक्षिणे श्रवणे 'वाक्' इति त्रिः पठित्वा 'वेदोऽसि' इति गुह्यं नाम कृत्वा मेधाजननायुष्ययोराद्यं मेधाजननं करोति। सूत्रयति च सूत्रकृत्– 'अनामिकया......दधामीति'। सुवर्णान्वितोपकनिष्ठया मधुघृते मिश्रिते केवलं घृतं वा 'भूस्त्वयि दधामि' इत्यादिभिश्चतुर्भिर्मन्त्रैः प्रतिमन्त्रं कुमारं प्राशयति कुमारस्य जिह्वायां निमार्ष्टि। यत्तु इतिशब्देन मन्त्रावसानश्रुतेः चतुर्णामप्येकमन्त्रतेति, तन्न, 'पृथिव्यास्त्वा नाभौ सादयामीत्यदित्या उपस्थे' इत्यादौ अनेकेतिकारैरनेकमन्त्रतापत्तेः, मित्रविन्दासूत्रे च 'अग्निरन्नादः' इत्यादिमन्त्रेषु इतिशब्दाभावात् मन्त्रैक्यापत्तेः। न च स्वाहाकार एवात्र मन्त्रान्तं बोधयतीति वाच्यम्, 'अग्निरायुष्मान्' इत्याद्यायुष्यकरणमन्त्राणामैक्यापत्तेश्च। इति न किंचिदेतत्। विभा.

¶ सूत्रे पदमिदं नास्ति। तत्राऽऽहवनीयः प्रकरणलब्धः।

* गभा. हभागतम्।

¹अथास्याऽऽयुष्यं करोति॥

²नाभ्यां दक्षिणे वा कर्णे जपति– 'अग्निरायुष्मान्त्स वनस्पतिभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ सोम आयुष्मान्त्स ओषधीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ ब्रह्माऽऽयुष्मत्तद् ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ देवा आयुष्मन्तस्तेऽमृतेनाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ समुद्र आयुष्मान्त्स स्रवन्तीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥' इति त्रिः॥

³'त्र्यायुषम्' इति च॥ *

(१) अधिकरणसप्तम्यभावात् समीपसप्तमीयम्। 'गङ्गायां गावः' यथा। त्रिरेतज्जपति। 'त्र्यायुषम्' इति च त्रिरेव। यदि दैवात् मानुषादपचारात् (वा) मेधाजननं स्वकाले न कृतं तथाऽप्यायुष्यकरणं भवत्येव। मेधाजननस्य हि कालः श्रूयते– 'तस्मात् कुमारं जातं घृतं वै वाऽग्रे प्रतिलेहयन्ति स्तनं वाऽनुपधापयन्ति' इति।

$ कभा.

* सूत्रपाठोऽयं सर्वेषामपि भाष्यकाराणामभिमतत्वात्प्रामाणिक इति मत्वाऽस्माभिः स्वीकृतः। काशी–मुंबई-मुद्रितयोरुभयोरपि पुस्तकयोः 'करोमीति। त्रिस्त्रिस्त्र्यायुषमिति च' इति पाठो मुद्रितः।

$ जभा. कभावत्।

(१) पागृ. १।१६।५; निप. २४१ (=) (अथास्य) एतावदेव.

(२) पागृ. १।१६।६; निप. २४१–२४२ (=) दक्षिणे वा कर्णे (दक्षिणकर्णे वा) (त्रिः ०), 'सोम आयुष्मान्' इत्यादिमन्त्राणां संक्षेपेण निर्देशः.

(३) पागृ. १।१६।७; निप. २४२ (=).

(२) अथ मेधाजननानन्तरम् अस्य कुमारस्य आयुष्यम् आयुषे हितं जीवनवर्धनं कर्म करोति। 'अग्निरायुष्मान्' इत्यादिकान् मन्त्रान् त्रिर्जपति त्रीन् वारान् उपांशु पठति। ततः 'त्र्यायुषं जमदग्नेः' इत्यादि 'तन्नो अस्तु त्र्यायुषम्' इत्यन्तं च मन्त्रं तथैव त्रिर्जपति।

§ हभा.

(३) मन्त्रार्थः– अग्निः कारणात्मना आयुष्मानस्ति। स च वनस्पतिभिः इध्मसमिद्भिः इष्टः आयुष्मत्त्वहेतुर्भवति। वनस्पतिभिः कृत्वा वा। तेन अग्न्यायुषा त्वा त्वाम् आयुष्मन्तं निर्दुष्टदीर्घायुषं करोमीति वाक्यार्थः उत्तरत्रापि संबध्यते। एवं सोमोऽपि व्याख्येयः। स च ओषधीभिः। ¶संधिरार्षः। ब्रह्म वेदः ब्राह्मणैः अध्येतृभिः। देवाः अमृतेन सुधया। ऋषयः व्रतैः कृच्छ्रादिभिः। पितरः स्वधाभिः। पितृदेयं स्वधा उच्यते। यज्ञो दक्षिणाभिः परिक्रयद्रव्यैः। समुद्रः स्रवन्तीभिः नदीभिः। इत्येतावान् विशेषः। त्र्यायुषमिति च। 'त्र्यायुषं जमदग्नेः' इति मन्त्रं चकारात् त्रिर्जपेत् नाभ्यां दक्षिणे वा कर्णे।

$ गभा.

(४) नाभ्यामिति। सप्तम्यर्थो विषयत्वम्। नाभिविषयकमालम्भं कृत्वा जपतीत्यन्वयः। दक्षिणे वा कर्णे दक्षिणकर्णशष्कुल्यवच्छिन्ननभसि समवेतां मन्त्ररूपशब्दानां क्रमेणाभिव्यक्तिं करोतीत्यर्थः। त्र्यायुषमिति च। 'त्र्यायुषं जमदग्नेः' इत्यमुमपि मन्त्रं त्रिः जपति। पूर्वसूत्रस्थत्रिःपदानुकर्षकश्चकारः।

† विभा.

**[1]स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्॥**

[1] '**दिवस्परि**' **इत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि॥**

(१) 'दिवस्परि' इत्येतस्योत्तमामृचं परिशेषयित्वा अवशिष्टं वात्सप्रमुच्यते। कभा.

(२) स पिता यदि कामयेत अयं सर्वं शतवर्षम् आयुः इयात् प्राप्नुयादिति तर्हीदं काम्यमुच्यते। उत्तमां चरमाम् ऋचं परिशेषयित्वा तत्रावशिष्टं वात्सप्रमत्र गृह्यते। तत्र द्वादशानां वत्सप्रीर्भालन्दनः, त्रिष्टुप्, अग्निः, अभिमर्शने०।

$ जभा.

(३) वात्सप्रेण वात्सप्रिणा भालन्दनेन दृष्टेनानुवाकेन 'दिवस्परि' इत्यादिद्वादशर्चेन एनं कुमारम् अभि समन्ततः सर्वं शरीरम् आलभेत। तत्र विशेषमाह– दिवस्प ... शिनष्टि। दिवस्परीत्यादिको द्वादशर्चोऽनुवाकः वात्सप्रः। एतस्य उत्तमाम् अन्त्यां द्वादशीम् 'अस्ताव्यग्निः' इत्येतामृचं परिशिनष्टि व्युदस्यति। तां परित्यज्य एकादशभिर्ऋग्भिः अभिमृशेदित्यर्थः।

¶ हभा.

(४) वात्सप्रभेदात् संशयः- किं 'दिवस्परि' इत्येतेन वात्सप्रेण, किम् (वा) 'उपप्रयन्तो अध्वरम्' इत्येतेनेति। संशयनिवृत्त्यर्थमाह– दिवस्प... शिनष्टि। 'दिवस्परि प्रथमं जज्ञे' इत्येतस्यानुवाकस्योत्तमामृचम् 'अस्ताव्यग्निः' इत्येतां परिशेषयित्वा वर्जयित्वा अवशिष्टं वात्सप्रमुच्यते। यत एकादशसु ऋक्षु वात्सप्रशब्दः प्रसिद्धः। 'अथ वात्सप्रेणोपतिष्ठते' इति प्रकृत्य भवति वाक्यशेषः– 'अथ यत् त्रिष्टुप्(१ ष्टुभो) यदेकादश तेन' (शब्रा. ६।७।४।६) इति (वा १)। वात्सप्रद्वयसद्भावेऽपि अग्निप्रकरणस्थवात्सप्रग्रहणं वाक्यशेषात्।

† गभा.

§ शेषं कभावत्।

¶ इदं 'सौषधीभिः' इति पाठमनुसृत्य।

$ शेषं कभागतं हभागतं च।

† शेषं हभावत्।

(१) पागृ. १।१६।८; निप. २४२ (=) (वात्सप्रेण चैनमभिमृशेत्) एतावदेव.

$ विभा. जभागतं हभागतं च।

¶ शेषं जभागतम्।

† शेषं जभागतं हभागतं च।

(१) पागृ. १।१६।९; निप. २४२ (=)इत्येतस्यानु (इत्यनु).

**¹प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयात्–'इममनुप्राणित' इति ॥**
**²पूर्वो ब्रूयात्– 'प्राण' इति ॥**
**'व्यान' इति दक्षिणः ॥**
**'अपान' इत्यपरः ॥**
**'उदान' इत्युत्तरः ॥**
**³'समान' इति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात् ॥**
**⁴स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु ॥**

(१) प्रतिदिशमेकैकमेवं ब्राह्मणानामवस्थापनं कुमारस्य। तत्र पूर्वे तान् प्रति ब्रूयात्– 'इममनुप्राणित' इति। अविद्यमानेषु ब्राह्मणेषु स्वयमेव करोति अनुपरिक्रम्यानुपरिक्रम्य। कभा.

(२) प्रतिदिशमवस्थापितान् पञ्चब्राह्मणान् प्रति पिताऽऽह– भो ब्राह्मणाः, इमं कुमारमनुप्राणित अनुकूलप्राणं मन्त्रैः कुरुतेति। ततस्ते ब्राह्मणाः 'प्राण' इत्यादि आहुः क्रमेण। अविद्यमानेषु विप्रेषु स्वयमेव। अनुपरिक्रामं परिक्रम्य परिक्रम्य। अथ मन्त्रार्थः– भोः कुमार, त्वं प्राण सुस्थितप्राणो भव। एवमुपर्यपि। तत्र सर्वाङ्गेषु$ सुस्थो व्यानः, गुदे सुस्थः अपानः, कण्ठे सुस्थः उदानः, नाभौ सुस्थः समानः भवेति स्थानभेदः। एवमेते वायवः अस्य सुजीवनं कुर्वन्तु इति वाक्यार्थः। जभा.

(३) कुमारस्य प्रतिदिशं दिशं दिशं प्रति चतसृषु दिक्षु प्राच्यादिषु मध्ये च यथाक्रमं पञ्च ब्राह्मणानवस्थाप्य संनिवेश्य कुमाराभिमुखांस्तान् प्रति ब्रूयात्। किम्? 'इममनुप्राणित' इति। इमं कुमारम् अनुप्राणित अनु लक्षीकृत्य प्राणेत्यादि ब्रूत इति प्रैषः। ततः प्रेषिता ब्राह्मणाः पूर्वादिक्रमेण– प्राणेति कुमारं लक्षीकृत्य पूर्वो ब्रूयात्, व्यानेति दक्षिणो ब्राह्मणः, अपानेति पश्चिमः, उदानेत्युत्तरः, समानेति पञ्चमः उपरिष्टात् ऊर्ध्वम् अवेक्षमाणः। अविद्यमानेषु असत्सु ब्राह्मणेषु स्वयं वा स्वयमेव अनुप्राणनं कुर्यात्। कथम्? अनुपरिक्रामं परिक्रम्य परिक्रम्य पूर्वादिकां दिशं प्राणेत्यादि। अनुपरिक्राममिति णमुलन्तम्। अस्मिन् पक्षे प्रैषाभावः। $ हभा.

(४) मन्त्रार्थः – इमं कुमारम् अनु लक्षीकृत्य भो ब्राह्मणाः, प्राणित यूयं सर्वे प्राणादिपञ्चवायुयुक्तं कृत्वा दीर्घायुष्ट्वेनाऽऽयुष्मन्तं कुरुत। कोष्ठस्थितो वायुः मुखनासिकाभ्यां निःसरन् प्राणः। पुनस्तेनैव मार्गेणान्तः प्रविशन् अपानः। प्राणः रेचकः। अपानः पूरकः। तयोर्वा अधः संधिः संधानं व्यानः कुम्भकरूपः। उत्क्रमणादिरू(? णादू)र्ध्वगतिः उदानः। देहस्थितस्याशितपीतस्यान्नरसस्य सर्वाङ्गेषु समनयनात् समानः। ¶ गभा.

**¹स यस्मिन् देशे जातो भवति तमभिमन्त्रयते– 'वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम् ॥' इति ॥**

(१) स यस्मिन् देशे जातो भवति तमभिमन्त्रयते 'वेद ते भूमि' इत्यनेन मन्त्रेण। † कभा.

(२) स कुमारः यस्मिन् देशे भूभागे उत्पन्नः पतति तं देशमभिमन्त्रयते हस्तेन स्पृशति 'वेद ते भूमि' इत्यादि 'शरदः शतम्' इत्यन्तेन मन्त्रेण। हभा.

$ अत्र 'भव' इति वाक्यशेषात् 'सुस्थव्यानः, सुस्थापानः' इत्यादिभिर्बहुव्रीहिभिर्भाव्यम्।

(१) पागृ. १।१६।१० ; निप. २४२ (=) ब्राह्मणानव (ब्राह्मणान् सं).

(२) पागृ. १।१६।११–१४ ; निप. २४२ (=)

(३) पागृ. १।१६।१५ ; निप. २४२ (=) (ब्रूयात् ०).

(४) पागृ. १।१६।१६ ; निप. २४२ (=) क्राममविद्यमानेषु (क्रामन्नविद्यमाने).

$ विभा. हभावत्।

¶ शेषं हभावत्।

† जभा., विभा. कभावत्।

(१) पागृ. १।१६।१७ ; निप. २४२ (=).

( ३ ) मन्त्रार्थः – हे भूमे कुमारजन्मप्रदेश, ते तव हृदयम् अन्तःकरणं भूमिर्वेद यत्र विद्यते गुप्तम् । विसर्गाभावश्छान्दसः । किंभूतम्? दिवि द्युलोके वर्तमाने चन्द्रमसि श्रितं कृष्णीभावेन देवयशरूपस्थानमसुरजयार्थं गोपितं तत्प्रदेशोपलक्षितम् , 'तदेतच्चन्द्रमसि कृष्णम्' इति श्रुतेः । तत्कर्मभूतमहं वेद जानामि । तत् कर्तृभूतम् एवं पुनरुपकर्तुं मां विद्यात् जानातु । अतः त्वद्दत्तपुत्रेण सह वयं पश्येम इत्याद्युक्तार्थम् । $ गभा.

**'अथैनमभिमृशति– 'अश्मा भव परशुर्भव हिरण्यमस्रुतं भव । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥' इति ॥**

( १ ) अथैनमभिमृशति– 'अश्मा भव परशुर्भव' इत्यनेन मन्त्रेण । वात्सप्राभिमर्शनादि एतदभिमर्शनान्तं कालव्यतिक्रमेणापि क्रियते, तत्संस्कारत्वात् । कभा.

( २ ) अभिमृशति हृदि स्पृशति । ¶ जभा.

( ३ ) अथ जन्मदेशाभिमन्त्रणानन्तरम् एनं कुमारं पिता अभिमृशति समन्ततः सर्वशरीरे स्पृशति ।

¶ हभा.

( ४ ) अभिमृशति हस्तेन स्पृशति । मन्त्रार्थः– हे कुमार, त्वम् अश्मा पाषाण इव दृढः स्थिरश्च, परशुरिव वज्र इव अपकर्तृनाशको भव । किंच, अस्रुतम् अनभिभूतम् अप्रच्युतस्वरूपमिति यावत् , हिरण्यं हिरण्यवत्तेजोयुक्तश्च ग्रहणीयश्च भव । यथा धात्वन्तरामिश्रितं सुवर्णं शुद्धं भवति तथा त्वमपि रोगाद्युपद्रवेण हीनो भव इत्यर्थः । यतस्त्वं पुत्रनामा आत्माऽसि देहः सन् , वै निश्चये, पुत्रेतिसंज्ञामात्रेण भिन्नोऽसि, न तु स्वरूपेण, स त्वं शतं शरदो जीव । § गभा.

---

$ शेषं हभावत् ।

¶ शेषं कभावत् ।

§ शेषं कभावत् अभिमर्शने जभाहभामतयोरनुवादश्च ।

(१) पागृ. १।१६।१८ ; निप. २४२ (=) स ( त्वं ) ( इति ० ).

**'अथास्य मातरमभिमन्त्रयते– 'इडाऽसि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरत् ॥' इति ॥**

( १ ) अथास्य मातरमभिमन्त्रयते– 'इडाऽसि' इत्यनेन मन्त्रेण । कभा.

( २ ) अथास्य मातरं कुमारस्य प्रसूम् अभि अभिमुखो भूत्वा मन्त्रयते मन्त्रश्रावणेन संस्करोति 'इडाऽसि' इति मन्त्रेण । † जभा.

( ३ ) मन्त्रार्थः– हे वीरे वीरवति, पुत्रवतीति यावत् । त्वम् इडा मानवी यज्ञपात्री तद्गतद्रव्यं वा असि । मैत्रावरुणी मित्रावरुणयोरंशोत्पन्ना । यथेडायां पुरूरवा उत्पन्नः यथा च यज्ञपात्र्यां तद्गतद्रव्ये वा पुरोडाशो भवति तथा त्वय्यपि तादृशाः स्वर्गादिसाधनपराः पुत्राः सन्तु इत्यभिप्रायः । यतस्त्वं वीरं पुत्रम् अजीजनथाः असोषीः अतः सा त्वं वीरवती पतिपुत्रवती भव, या त्वमस्मान् वीरवतः पुत्रवतः पुत्रयुक्तान् अकरत् अकरोः कृतवत्यसि । $ गभा.

**'अथास्यै दक्षिणं स्तनं प्रक्षाल्य प्रयच्छति– 'इमं स्तनम्' इति ॥**

**'यस्ते स्तनः' इत्युत्तरमेताभ्याम् ॥**

( १ ) अथास्यै दक्षिणं स्तनं प्रक्षाल्य प्रयच्छति– 'इमं स्तनम्' इत्यनेन मन्त्रेण । 'यस्ते स्तनः' इत्युत्तरमेताभ्याम् ऋग्भ्याम् । द्विवचनोपदेशाच्च 'इमं स्तनम्' इति 'यस्ते स्तनः' इति च द्वितीये । स्तनसमर्पणं च पीतस्तनस्य न भवति । § कभा.

---

† हभा. जभावत् ।

$ शेषं जभावत् ।

§ हभा., गभा. कभावत् जभावच्च ।

(१) पागृ. १।१६।१९ ; निप. २४२ (=) मन्त्रयते ( मन्त्रयेत् ) जनथाः ( जनः ).

(२) पागृ. १।१६।२०-२१ ; निप. २४२ (=) ( अथास्या दक्षिणं स्तनं प्रक्षाल्य प्रयच्छति 'यस्ते स्तनः, इमं स्तनम्' इत्यृग्भ्यामुत्तरमिति ).

( २ ) अस्ये अस्याः मातुः । उत्तरं वामम् ।

§ जभा.

( ३ ) कुमाराय ददाति कुमारस्य मुखे प्रवेशयति ।

‡ विभा.

**[1]उदपात्रं शिरस्तो निदधाति– ' आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ । एवमस्यां सूतिकायां सपुत्रिकायां जाग्रथ ॥ ' इति ॥**

( १ ) उदपात्रं शिरस्तो निदधाति– ' आपो देवेषु जाग्रथ ' इत्यनेन मन्त्रेण । एतच्च प्रागुत्थानाद्भवत्येव ।

कभा.

( २ ) उदपात्रं सजलं शरावं शिरस्तः सूतिकायाः शिरःप्रदेशे खट्वाधस्तान्निदधाति– ' आपो देवेषु ' इति मन्त्रेण । तच्च उत्थानपर्यन्तं तिष्ठति । जभा.

( ३ ) शिरस्तः शिरःप्रदेशे कुमारस्य । § हभा.

( ४ ) मन्त्रार्थः– हे आपः जीवनहेतवः , यूयं देवेषु देवकार्यनिमित्तं जाग्रथ तत्साधनत्वेन तिष्ठथ । अतो यथा देवेषु जाग्रथ एवं तथा अस्यां सूतिकायां सूतिकाया हिते जाग्रथ जाग्रतेत्यर्थः । पुरुषव्यत्ययश्छान्दसः । किंभूतायाम् ? पुत्रादिसहितायाम् ।

$ गभा.

( ५ ) उदपात्रं शिरस्तो निदधाति जलपूर्णं पात्रमतिखट्वं कुमारशिरःप्रदेशाधस्ताद् भूमौ निदधाति ।

विभा.

**[2]द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात् संधिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति– ' शण्डामर्का उपवीरः शौण्डिकेय उलूखलः । मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ॥ आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा ॥ ' इति ॥**

( १ ) द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात् संधिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति– ' शण्डामर्का ' इति प्रतिमन्त्रम् । फलीकरणाः कणाः सर्षपाश्च । आवपनोपदेशाच्च होमेतिकर्तव्यता न भवति । कभा.

( २ ) द्वारदेशे सूतिकागृहस्य च होमः प्रतिमन्त्रम् । फलीकरणाः तण्डुलकणाः । आवपनोपदेशान्न चात्र होमेतिकर्तव्यता । अग्निस्थापनं तु भवत्येव, ' उपसमाधाय ' इत्युक्तत्वात् । ' इदमग्नये ' इत्युभयत्र त्यागः । जभा.

( ३ ) ओत्थानात् उत्थानं यावत् । संधिवेलयोः सायंप्रातः । ¶ हभा.

( ४ ) सूतिकाग्नेर्ग्रहणमावसथ्याग्निनिवृत्त्यर्थमिति भर्तृयज्ञः । एतच्च स्वकाले एव भवति, नियतकालत्वात् । मन्त्रार्थः– शण्डाः शण्डः । मर्काः मर्कः । तत्र शृणोतीति शण्डः बालग्रहः स्वस्थानात् नश्यतात् अपगच्छतु । अयं च वाक्यार्थः उत्तरत्रापि योज्यः । मारयतीति मर्कः । उपघाते वीरः समर्थः उपवीरः । विघ्नकुशलः शौण्डिकेयः । आश्रितपातकः उलूखलः । अप्रतिकार्यः मलिम्लुचः अतिमलिनाशय इत्यर्थः । दीर्घनासः द्रोणासः । च्यावयति अङ्गानीति च्यवनः । एते सर्वे मत्कृतावपनोपद्रुताः भीताश्चापसर्पन्तु इत्यर्थः । एवम् आ समन्ततोभावेन लिखन् भक्षयन् आस्ते स आलिखन् । पराभवितुमव्यवच्छिन्नदृष्टिः अनिमिषः । उप समीपे श्रुत्वा अपकर्ता उपश्रुतिः । हर्यक्षः पिङ्गलनयनः । कुम्भयति स्तम्भयतीत्येवंशीलः कुम्भी । शातयतीति शत्रुः । पात्रहस्तः पात्रपाणिः । नॄन् मिनोति हिनस्तीति नृमणिः । हन्त्री

§ शेषं कभावत् ।

‡ शेषं कभावत् जभावच्च ।

$ शेषं जभावत् ।

¶ शेषं कभावत् ।

(१) पागृ. १।१६।२२ ; निप. २४२–२४३ (=) शिरस्तो (कुमारस्य शिरःप्रदेशे) (सपुत्रिकायां०).

(२) पागृ. १।१६।२३ ; निप. २४३ (=) शण्डा ( षण्डा ) हन्त्री ( हर्तृ ).

हिंसा हननं मुखे यस्यासौ हन्त्रीमुखः । सर्षपवदरुणः उग्रो धूसरो वा सर्षपारुणः । च्यवति अनेनेति च्यवनः । येन उपद्रुतः च्यवति प्रकृतेः परिभ्रश्यतीत्यर्थः । इतः स्थानान्नश्यतात् इति सर्वपदानामेवमेवान्वयः । गणमभिप्रेत्याऽऽह— किंवदन्त इति । एते सर्वे किंवदन्तः किंवद्गणोऽयमित्यर्थः । † गभा.

(५) सूतिकागृहस्य द्वारोपलक्षिते बहिःप्रदेशे दक्षिणत उपलिप्त उद्धतावोक्षिते सूतिकाग्निमुपसमाधाय । तथा च तत्र स्थापितस्याग्नेः सूतिकाग्निरिति नामधेयम् । तस्मिन्नग्नौ तण्डुलकणोपरक्तान् सिद्धार्थानावपति । ¶ विभा.

## गोभिलगृह्यसूत्रम्

जन्मवार्ताश्रवणानन्तरं पित्रा नाभिच्छेदनस्तनदानयोर्निषेधः, पिष्टव्रीहियवलेहनम्, घृतप्राशनरूपमेधाजननम्, नाभिच्छेदनस्तनदानादेशः

**'यदाऽस्मै कुमारं जातमाचक्षीरन्नथ ब्रूयात्— 'काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन च' इति ॥**

(१) अस्मै पित्रे पुत्रं जातं कथयेयुः शिष्यादयः । 'नाभिकृन्तनेन स्तनप्रतिधानेन काङ्क्षत' इति पिता ब्रूयात् । नाभिच्छेदनमकृत्वा स्तनपानप्रतिषेधेन च बालकं प्रतिपालयत । संत. ९१५

(२) अस्मै पित्रे । वक्तव्यमाह— काङ्क्षतेति । नाभिकृन्तनेन नाभिच्छेदनेन । 'कृती छेदने' । ल्युटि बाहुलकान्नुम् । स्तनप्रतिधानेन स्तनपानेन । 'धेट् पाने'। भावे ल्युट् । काङ्क्षत प्रतिपालयत समयं प्रतीक्षत । प्रकृत्यादित्वात् तृतीया । तदुभयं जातकर्मानन्तरं मातरः, करिष्यथेत्यर्थः । नाभिः नाभिलग्ना नाडी नालमित्यनर्थान्तरम् । हारीतः— 'ब्राह्मणमाहूय नाडीच्छेदनात् प्राक् जातकर्मपुण्याहवाचनं कुर्वन्ति' इति । ब्राह्मणं तत्कर्माभिज्ञं विप्रम् । विष्णुपुराणे— 'जाते पुत्रे पितुः स्नानं सचैलस्य विधीयते । जातकर्म ततः कुर्याच्छ्राद्धमभ्युदये च यत् ॥' इति । मनुः— 'प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते । मन्त्रवत् प्राशनं चास्य सुवर्णमधुसर्पिषाम् ॥' इति । 'वर्धनं छेदने' इत्यमरः, 'वर्ध छेदने' इति धात्वनुसारात् । पुंस इत्युक्तेः कन्याया एतन्न भवतीति गम्यते । अत एव 'अस्य प्राशनम्' इत्यप्युक्तम्। सुवर्णेति । सुवर्णेन हेम्ना मधुसर्पिषोः मन्त्रपूर्वकं प्राशनं मुखे निःक्षेपणम् । अस्य बालकस्येत्यर्थः । तदुक्तं गृह्यान्तरे— 'अनामिकया सुवर्णान्तरितया मधुघृते प्राशयति घृतं वा' इति । विकल्पे व्यवस्था गृह्यानुसारेण द्रष्टव्या । ब्रह्मपुराणे— 'जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेषु हि ।' इति । 'एवंविधे श्राद्धे अवनेजनपिण्डदानादि नास्तीति भर्तृयज्ञस्वामिनौ' इति रत्नाकरः । मृदुला.

**'व्रीहियवौ पेषयेत् तयैवाऽऽवृता यथा शुङ्गाम् ॥**

(१) व्रीहिः शरत्पक्वधान्यम्, तदभावे हैमन्तिकं धान्यम् । यवालाभे गोधूमाः । तथा च छन्दोगपरिशिष्टम्— 'यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत् । यवानामिव गोधूमा व्रीहीणामपि शालयः ॥' । उभयालाभे प्रत्ये( १ मे त्वे )कम्, 'यथालाभोपपन्नं वा रौप्येषु तु विशेषतः ।' इति याज्ञवल्क्यवचने पात्रे तद्दर्शनात् । अत्राप्यशक्त्या तथा कल्प्यते । वटशुङ्गापेषणे या परिपाटी तयाऽत्रापि पेषयेत् । संत. ९१६

(२) व्रीहियवाविति द्वन्द्वनिर्देशात् उभावपि मिलितौ पेषयेत्, न त्वेकैकशः । ‡ मृदुला.

**'दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य कुमारस्य जिह्वायां निमार्ष्टि— 'इयमाज्ञा' इति ॥**

---

† शेषं कभावत् हभावच्च ।

¶ शेषं कभाजभाहभागतम् ।

(१) गोगृ. २।७।१७ ; संत. ९१५.

‡ शेषं संतगतम् ।

(१) गोगृ. २।७।१८ ; संत. ९१६.

(२) गोगृ. २।७।१९ ; संत. ९१६ छिकया (ष्ठया) जिह्वायां निमार्ष्टि ( जिह्वां निमार्ष्टि ).

(१) पिष्टौ व्रीहियवौ दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा कुमारस्य रसनायां निदधाति– 'इयमाज्ञा' इति मन्त्रेण। संत. ९१६

(२) निमार्ष्टि निश्च्योतयति। अत्र करणमन्त्रमाह– 'इयमाज्ञा' इति एवमादिनेति। मन्त्रो यथा– 'इयमाज्ञेदमन्नमिदमायुरिदममृतम्' इति। मन्त्रार्थः सुगमः। अत्र 'प्राक् चूडाकरणाद् बालः प्रागन्नप्राशनाच्छिशुः। कुमारस्तावद् विज्ञेयो यावन्मौञ्जीनिबन्धनम्॥' इति विशेषाभिधानेऽपि कुमारस्येति वचनं मौञ्जीबन्धनं यावत् अधिकारार्थम्। तेन एतानि जातकर्मादिमौञ्जीबन्धनान्तानि कर्माणि कुमारस्यैव, न कुमार्याः। मनुरपि– 'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः। संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥ वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः। पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया॥' इत्येताभ्यां वचनाभ्यां जातकर्मादिसंस्कारमुपनयनाभावं च बोधयतीति व्याख्यातारः। मृदुला.

**[1]तथैव मेधाजननं सर्पिः प्राशयेत्॥**

**[2]जातरूपेण वाऽऽदाय कुमारस्य मुखे जुहोति– 'मेधां ते मित्रावरुणौ' इत्येतयर्चा 'सदसस्पतिमद्भुतम्' इति च॥**

(१) तथैव दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां धृतेन जातरूपेण काञ्चनेन घृतं गृहीत्वा मेधाजननं घृतं शिशोरास्ये संदधाति प्रत्येकमृग्भ्याम्। 'जुहोति' इत्यनेन मन्त्रस्य स्वाहान्तत्वम्, 'प्राशयेत्' इत्यनेन मुखाधिकरणत्वम्। संत. ९१६

(२) तथैवेति। 'दक्षिणस्य पाणेः' इत्यादिनोक्तप्रकारेणैवेत्यर्थः। मेधा श्रुतधारणविषया शक्तिः। 'धीर्धारणावती मेधा' इत्यमरः। तज्जनयतीति मेधाजननं सर्पिर्विशेषणम्। प्राशयेत् निःक्षिपेत्। जातरूपं सुवर्णम्। तथा च तत्पर्याये 'चामीकरं जातरूपं महारजतकाञ्चने।' इत्यमरः। वाशब्दः समुच्चये। क्रियाद्वयोपादानं मन्त्रयोः पृथग्विनियोगप्रदर्शनार्थम्। जुहोति जुहुयात्। निःक्षिपेदित्यर्थः। जुहोतिपदोपादानमिह कुमारमुखस्याग्नित्वेन ध्यानलाभार्थम्। अत एव गृह्यासंग्रहे– 'प्रगल्भो जातकर्मणि' इत्यग्निविशेषकथनमर्थवत्। अत एवाग्निविशेषोपदेशादत्र व्याहृतिहोमोऽपि कार्य इति कस्यचिन्मतमपास्तम्, प्रमाणाभावात् अस्य चान्यथासिद्धेः। शिष्टाचारोऽप्येवमेव। अत्र गणेश्वरमिश्रादयस्तु– छन्दोगानामन्यस्यान्नप्राशनस्याविधानात् कुमारमुखे यवरसदानमेतदेवान्नप्राशनम्। अन्यथा संस्कारन्यूनता स्यात्। अत एव न पृथक्करणमिति। ननु सूत्रकारेण पृथगसूत्रणात् अत्रान्नप्राशनं संस्कार एव नास्तीति चेन्न, सूत्रकारानुक्तत्वमात्रस्याप्रयोजकत्वात्, अन्यथा कन्यादानकर्णवेधाग्निहोत्राणामकरणप्रसङ्गात्, 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥' इति वचनात्सिद्धेस्तुल्यत्वात्, इति तात्पर्यगत्या वदन्ति। तत्र भाष्यकृतः– यद्येतदन्नप्राशनं जातकर्म कतरत्तर्हि? इति संस्कारन्यूनता तदवस्थैवेति। न च एकेन कर्मणा संस्कारद्वयसंभवः क्वचिदपि, तथाऽदर्शनात्। किंच, 'ततोऽन्नप्राशनं कार्यं मासि षष्ठे यथाविधि।' इत्यादिब्रह्मपुराणवचनादस्य कालभेदात्। न चैतेषां वचनानां छन्दोगेतरपरत्वम्, बहुषु संकोचापत्तेः। वस्तुतस्तु 'प्रगल्भो जातकर्मणि' 'प्राशने तु शुचिस्तथा' इत्यग्निभेदकथनादस्मिन्नपि कल्पेऽन्नप्राशनं पृथगस्तीति निरपवादमिति। अत एव पद्धतौ पृथग्लिखनमिति दिक्। मन्त्रौ यथा– 'मेधां ते मित्रावरुणौ मेधामग्निर्दधातु ते। मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ §॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधामयासिषं स्वाहा॥' इति। अर्थो यथा– मेधां धारणावतीं धियम्। पुष्करस्रजौ पद्म-

---

(१) गोगृ. २।७।२० ; संत. ९१६.

(२) गोगृ. २।७।२१ ; संत. ९१६ वाऽऽदाय कुमारस्य मुखे (चाऽऽदाय कुमारमुखे) तिमद्भुतम् (तिम्).

§अत्रापि स्वाहाकारः संयोजनीयः। मन्त्रस्वरूप–तदर्थप्रदर्शनमात्रोद्देशे तूत्तरमन्त्रान्तेऽपि न संयोजनीयः।

मालिनौ । इति । सदसस्पतिं सभाया मुख्यम्, अद्भुतम् अभूतम् आश्चर्यम्, इन्द्रस्य देवराजस्य प्रियं वल्लभम्, अथ च काम्यं कमनीयम् अभीष्टसंपादकम्, मेधां धारणावतीं धियं सनिं दातारं (गुरुं ?) सुराचार्यम् अहं शरणत्वेन अयासिषं प्राप्तवानस्मि । सोऽस्मै कुमाराय मेधां ददातु इत्याशंसये(? शंसे)ति वाक्यार्थः । मृदुला.

[1]'कृन्तत नाभिम्' इति ब्रूयात् 'स्तनं च प्रतिधत्त' इति ॥

उक्तनिषेधविधिरयम् । नाभिशब्दो नाभिनिकटनाडीपरः । स्तनपदं तत्क्षीरपरम् । संत. ९१६

## खादिरगृह्यसूत्रम्

विष्टव्रीहियवयोः सर्पिषश्च प्राशनम्

[2]प्राङ्नाभिकृन्तनात् स्तनदानाच्च व्रीहियवौ पेषयेच्छुङ्गावृता ॥

विसमासः प्राक् नाभिकृन्तनादसंभवे स्तनदानात् प्राक् कर्तुम् । द्विवचनात् व्यक्तिद्वयम् । जात्यभिप्रायेणेति केचित् । शुङ्गावृता शुङ्गाप्रकारेण— 'कुमारी ब्रह्मचारी व्रतवती वा ब्राह्मणी पेषयेदप्रत्याहरन्ती' । रुद्रभा.

अङ्गुष्ठेनानामिकया चाऽऽदाय कुमारं प्राशयेत्— 'इयमाज्ञा' इति ॥

अङ्गुष्ठानामिकाभ्यामिति सिद्धे पृथग्ग्रहणं विषयद्वयसूचनार्थम्— अन्नप्राशनमप्याभ्यामेवेति । चशब्दोऽन्नप्राशनेऽप्येतन्मन्त्रप्रापणार्थः । रुद्रभा.

सर्पिश्च— 'मेधां ते' इति ॥

चशब्दः पूर्ववत् 'मेधां ते मित्रावरुणौ' इति मन्त्रनियमार्थः । अन्नप्राशने आभ्यां मन्त्राभ्याम् अन्नमेव प्राशयेत् । कालस्तु 'षष्ठेऽन्नप्राशनं मासे' इति स्मृत्यन्तरात् गम्यते । केचित् चशब्दो हिरण्यमधुसमुच्चयार्थ इत्याहुः । तथा च मनुः— 'हिरण्यमधुसर्पिर्भ्याम् (? षाम्)' इति । रुद्रभा.

(१) गोगृ. २।७।२२ ; संत. ९१६.

(२) खागृ. २।२।३३-३५.

## जैमिनिगृह्यसूत्रम्

व्रीहियवप्राशनम्, कुमाराभिमन्त्रणम्, कुमारपरिदानम्, गुह्यनामकरणम्, मूर्धोपघ्राणम्, फलीकरणहोमः

[1]व्रीहिं च यवं च जातरूपेणावघृष्य 'इदमन्नम्' इति प्राशयेत्— 'इदमन्नमयं रस इदं प्राणेनामृतं सह पृथिवी ते माता द्यौः पिता जीवाहि शरदः शतं पश्याहि शरदः शतम्' इति । अथैनमभिमन्त्रयते— 'अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतं पश्याहि शरदः शतम् ॥' इति । अथैनं परिददाति— 'अह्ने त्वा परिददाम्यहस्त्वा राज्यै परिददातु रात्रिस्त्वाऽहोरात्राभ्यां परिददात्वहोरात्रौ त्वाऽर्धमासेभ्यः परिदत्तामर्धमासास्त्वा मासेभ्यः परिददतु मासास्त्वर्तुभ्यः परिददत्वृतवस्त्वा संवत्सराय परिददतु संवत्सरस्त्वा जरायै मृत्यवे परिददातु' इति । 'कोऽसि कतमोऽसि' इत्याह '‡ सं मा संप्रविशासौ' इति । अथास्य गुह्यं नाम ददाति— 'वेदोऽसि' इति । अथास्य मूर्धानमुपजिघ्रति— 'अश्मा भव परशुर्भव हिरण्यमस्तृतं भव पशूनां त्वा हिंकारेणाभिजिघ्रामि' इति । फलीकरणमिश्रान् सर्षपान् दशरात्रमग्नौ जुहुयात्— 'शण्डाय' इति द्वाभ्याम्— 'शण्डाय मर्कायोपवीराय शौण्डिकेर उलूखलो मलिम्लुचो दुणाशि च्यवनो नश्यतादितः स्वाहा ॥ आलिखन् विलिखन्ननिमिषन् किंवदन्त उपश्रुतिरर्यम्णः कुम्भी

‡ व्याख्यानुसारी पाठोऽयम् । मूले तु 'सं मासं प्रविशासौ' इति पाठो मुद्रितः ।

(१) जैगृ. १।८.

**शत्रुः पात्रपाणिर्निपुणहाऽऽन्त्रीमुखः† सर्षपारुणो नश्यतादितः स्वाहा ॥ ' इति ॥**

जातरूपेण समांशसुवर्णेन शिलादौ संक्षोद्य बालं प्राशयेत् । इदं व्रीहियवम् अन्नम् । अयं सुवर्णशकलो रसः। इदं सुवर्णं प्राणेन अन्नस्य प्राणत्वात् तेन सह सहितम् अमृतम् । पिबेति शेषः । पृथिवीत्यादि । द्यौः आदित्यः तदन्तर्वर्ती पुरुषः पिता, तद्वीर्यत्वाद्वर्षस्य । तस्य धात्री पृथिवी माता । तस्याः खलु ओषधीशरीरेणास्य पूर्वं जननम् , ततोऽन्नरूपेण, ततः शुक्ररूपेण, ततः क्रमाच्छरीरत्वेन । ततोऽस्य पितुरेव स्तनौ व्रीहियवौ । 'तौ हैतौ प्रजापतेः स्तनौ यद् व्रीहिर्यवश्च ' इति श्रुतिः । ' हिरण्यं च प्राजापत्यो रसः ' इति । शतं शरदः शतं संवत्सरान् जीवाहि जीव । पश्याहि पश्य । वाक्यद्वयमेतत् । पुत्रं प्रत्याह– पूर्वं कतमोऽसि ? त्वमस्मिन् जन्मनि सं समस्तगुणैः मा मां संप्रविश अनुकुरु । 'असौ' इत्यस्य स्थाने आश्विनेत्यादि नाक्षत्रं नामास्य संबुद्ध्या निर्दिशेत् । पशूनां हिंकारः सामात्मकतया शुद्ध इति ।

तण्डुलावयवाः फलीकरणाः । लौकिकाग्नौ औपासनवद्धोमः । शण्डादयोऽष्टौ बालघातिग्रहाः । चतुर्थीत्रयं प्रथमार्थे । तथा आलिखन्विलिखन्नित्यादि दश । अर्यम्णः शत्रुः कुम्भीत्येकः । निपुणहा अन्त्रीमुख इति पदच्छेदः । एते सर्वे इतः प्रदेशान्नश्यन्त्विति । श्रीव्या.

## वैखानसगृह्यसूत्रम्

उदकुम्भस्थापनम् , अश्मनि कुमारधारणम् , मूर्धनि सतिलाक्षतारोपणम् , जातकाग्निस्थापनम् , फलीकरणहोमः , घृतप्राशनम् , स्नापनम् , स्तनपानम्

**[1]'जायमाने मातुरुदकुम्भं दक्षिणतः शिरोभागे स्थापयित्वा ततस्तूर्यन्तीं पादतो निधाय 'यथैव सोमः पवते ' इत्युदरमभिमृशेत् । कुमारे जाते द्वारवामेऽश्मनि परशुं तस्मिन् हिरण्यं स्थापयित्वा 'अश्मा भव ' इत्यधरमुत्तरं करोति । तस्योपरि ' अङ्गादङ्गात् ' इति कुमारमेकया स्त्रिया धारयेत् । तमद्भिरभ्युक्ष्य ' तिलदेऽवपद्यस्व ' इति सतिलमक्षतं मूर्ध्न्याधायौपासनमरण्यां निर्हरति ॥**

**चुल्ल्यां कपालमारोप्य वृषभशकृत्पिण्डैर्जातकाग्निं साधयेत् । तमेनमुत्तपनीयमित्युदाहरन्ति । तेनैव धूपं दद्यात् । द्वारस्य दक्षिणतो निधायाङ्गारवर्णे परिस्तीर्य कणसर्षपैर्हस्तेन 'शण्डेरथः, अयः शण्डो मर्कः, आलिखन्विलिखन्, अर्यम्णः, आन्त्रीमुखः, केशिनीः, एतान् घ्नतैतान्, पूर्व एषाम्, मिश्रवाससः, नक्तंचारिणः, निशीथचारिणी, तासां त्वम्, अयं ते योनिः, मम नाम ' इति व्याहृतीश्च हुत्वा प्रक्षाल्य पाणिमवनीमालभ्य ' यत्ते सुसीम ' इति मेधायै घृतं करोति । वचा पथ्या हिरण्यं मधु सर्पिरिति मेधाजननानि भवन्ति । ब्राह्मीघृतं पयो वचाघिकं चाऽऽमनन्ति । सुवर्णं दर्भेण बद्ध्वाऽन्तर्धाय घृतं ' भूर्ऋचः ' इति प्राङ्मुखं प्राशयति । नित्यं सायं प्रातरेवमहरहर्हुत्वा मेधायै पाययेत् । उष्णशीताभिरद्भिरेनं स्नापयित्वा ' क्षेत्रियै त्वा ' इति नीत्वा ' या दैवीः ' इति मातुरङ्के स्थापयित्वा ' तासां त्वा ' इति स्तनौ प्रक्षाल्य ' अयं कुमारः ' इति दक्षिणादि पाययेत् । 'आपो हविःषु ' इति न्यस्तमुदकुम्भं शोधयित्वा नित्यं सायंप्रातरादधाति । तथैव घृतप्राशनान्तं कर्म कृत्वा स्नात्वौपासननिर्हरणादि करोतीत्येके ॥**

## वैजवापगृह्यसूत्रम्

मन्थनेनाग्निनिर्माणम् , आयुष्यहोमः , दध्यादिप्राशनम् , मेधाजननम् , गुह्यनामकरणम्

**[1]'जाते कुमारेऽरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमाञ् जुहोति ॥**

---

† गृह्यान्तरानुसारेण 'आन्त्री॰ ' इति च्छेदः । व्याख्यायां तु ' अन्त्री॰ ' इति । वैदिकपदानुक्रमकोशे तु जैगृपाठोऽपि ' आन्त्री॰ ' इत्येव ।

(१) वैगृ. ३।१४–१५.

(१) ब्रक. ८६.

तस्मिन् शालाग्नौ । ब्रक. ८६

[1]जातस्य कुमारस्याच्छिन्नायां नाड्यां हिरण्यमिश्राभिरद्भिराचामयेन्नानामन्त्रैः । हिरण्येन दधिमधुघृतं प्राशयति– 'भूस्त्वयि दधामि' इति ॥

[2]अथास्य मेधाजननं करोति । दक्षिणं कर्णमभिनिधाय 'वाग्वाग्' इति त्रिः । अथास्य गुह्यं नाम करोति ॥

( १ ) अभिनिधाय अभिमुखीभूय । गुह्यं मातापितृभ्रातृवेद्यम् । ‡ ब्रक. ८८

( २ ) गुह्यं मातापितृवेद्यम् । स्मृसा. २

## परिशिष्टम्

मन्थनेनाग्निनिर्माणम् , तस्मिन् पितुरौपासनाग्नौ वा जातकर्मादिहोमाः

[3]कुमारस्य तु जातस्य अरणीं षोडशाङ्गुलाम् ।
आहृत्य चोत्तरामणीं ताभ्यामग्निं तु मन्थयेत् ॥
जुहुयाज्जातकर्मादि पित्र्ये औपासनेऽपि वा ।
तस्मिन् कुमारकर्माणि विवाहान्तानि कारयेत् ॥
स गृह्यश्चात ऊर्ध्वं स्याद्विधिनाऽनेन संस्कृतः ॥

तस्मिन् मन्थनोत्पन्ने । अपि वा इत्यस्योत्तरार्धेनान्वयः । संको. ६१

## वसिष्ठः

जातकर्मणि देवपितृद्विजसंतर्पणं रक्षोघ्नमन्त्रैर्होमश्च

[4]संतर्प्य देवान् सपितृद्विजांश्च
सुवर्णगोभूतिलकांस्यवस्त्रैः ।
गुडाज्यरौप्यैर्लवणैश्च होमैं
रक्षोघ्नमन्त्रैः सह जातकर्म ॥

‡ संप्र. ब्रकवत् ।

(१) ब्रक. ८७ जातस्य ( अत्र जातस्य ) ; संप्र. १९३.

(२) ब्रक. ८८ ; स्मृसा. २ मभिनिधाय (मपिधारय); संप्र. १९४ ( अथास्य मेधाजननं करोति० ) पारस्करः .

(३) संको. ६१.

(४) संसौ. ५१ तृतीयपादे ( मुदा च रूप्यैः कनकैर्विधाय ) ; ज्योनि. १११ कांस्य ( धान्य ).

## शङ्खलिखितौ

यवपिष्टादिप्राशनम् , मेधाजननम् , ब्राह्मणक्षत्रियविशां समानं जातकर्म

[1]प्रसूते जातकर्म यवपिष्टमधुसर्पिर्भिर्मन्त्रवत् प्राशनं तस्य सुवर्णान्तर्हितयाऽनामिकया मेधाधिकं ब्राह्मणस्य करोति । एवमितरयोः ॥

( १ ) मेधाधिकं मेधाजननम् । इतरयोः क्षत्रियवैश्ययोः । अनामिका कनीनिकासमीपाङ्गुलिः ।
‡ ब्रक. ८७

( २ ) एवंशब्देन क्षत्रियवैश्ययोः मन्त्रवत्प्राशनातिदेशात् शूद्रस्यामन्त्रकं प्राशनमिति गम्यते ।
¶ संप्र. १९३

## आश्वलायनः

जातकर्मणि अनादेशहोमः , कौषीतक्यादीनां होमाभावः , जातकर्मणः प्राक् कर्तुः स्नानभूषणे, जातकर्मावान्तरक्रियाणां पृथक्फलानि, स्त्रीसंस्कारे विशेषः

[2]अनादेशाहुतीर्हुत्वा जातकर्म प्रशस्यते ।
कौषीतकानां चान्येषां विना वा तत् प्रवर्तते ॥

[3]प्राङ्नाभिकर्तनात् कार्या जातकर्मक्रिया द्विजैः ।
स्नात्वा सचैलवच्छुद्धैः सितगन्धादिभूषितैः ॥

[4]गर्भाम्बुपानदोषाणामपनुत्यै शिशुं पिता ।
प्राशयेन्मधुना सार्धं साज्यं हेमरसं शुभम् ॥

‡ संग. ब्रकगतम् ।

¶ शेषं ब्रकवत् ।

(१) ब्रक. ८७ ; संप्र. १९३ ; संग. ४३७–४३८.

(२) आश्वस्मृ. ११।८७ चान्ये ( त्वन्ये ) ; प्रपा. १३३.

(३) आश्वस्मृ. ११।८९ चैल (चेल) ; प्रपा. १३० कर्त ( वर्ध ) ; संप्र. १९३ ; संग. ४३७.

(४) आश्वस्मृ. ११।९० प्राश ( पाय ) सार्धं सा (सार्धमा) ; प्रपा. १३२ ; संम. १९ हेम ( हैम ).

**'मन्त्रेण कर्णयो रुक्मस्पर्शनादेव तच्छिशोः ।**
**मन्त्रश्रवणयोग्यत्वं स्याच्च दुर्वासतः शुचिः ॥**
**'मन्त्रालम्भनमात्रेण शुचिः स्यान्मलवाससः ।**
**रक्षायुषोर्विवृद्ध्यर्थमाजिघ्रति पिता सुतम् ॥**
**तावन्नाम स्मरेत्तस्य स्तनं माताऽथ पाययेत् ।**
**प्राग्जातकर्मणो यस्मात्स्तनपानं न शस्यते ॥**

† ततो रक्षायुरभिवृद्ध्यर्थम् 'अङ्गादङ्गात् ...... शतम् ॥' इति मूर्धानं त्रिराजिघ्रेदिति बहवः पारिजातोदाहृतं 'रक्षायुषो ...... पाययेत् ॥' इत्याचार्यवचोऽनुसरन्तः । वृत्तिकृन्नयन्तादयस्तु प्रवासादागतस्यैव सूत्रानुसारेण तत्त्रिराघ्राणमित्याहुः ।

§ संकौ. ६०–६१

**¶ 'जातकृत्यादि चूडान्तं स्त्रीणां कार्यममन्त्रकम् ।**
**हुतकृत्यं तु पुंवत्स्यात्स्त्रीणां चूडाकृतावपि ॥**

---

† अंसाभिमर्शनानन्तरमित्यर्थः ।

§ संव. संस्कारकौस्तुभानुवादः ।

¶ संस्कारगणपतौ 'स्मृतिरूपेणाप्याह स एव' इति प्रकाशवदेवेदं वचनमवतारितम् । प्रकाशेऽव्यवहितपूर्वमाश्वलायनगृह्यवचनं गृहीतम् । तदत्र नास्ति । गृह्यवचनात्प्राक् प्रकाशगृहीतं याज्ञवल्क्यस्मृतिवचनमत्रास्ति । एवं च पूर्वधृतयाज्ञवल्क्यवचनस्यापि स्मृतिरूपत्वादवतरणिकायां तच्छब्देन याज्ञवल्क्यपरामर्शस्यानुपपत्तेः, पूर्वस्थले आश्वलायननिर्देशात्, गणपतौ प्रायः प्रकाशानुवादस्य दृष्टचरत्वाच्च प्रकाशवदत्रापि पूर्वमाश्वलायनगृह्यवचनमस्ति, तत् प्रमादात्परिभ्रष्टमिति निर्णयादिदं वचनमाश्वलायनीयमेवात्रापि गणपतेरभिप्रेतमिति निश्चीयते ।

(१) **आश्वस्मृ.** ११।९१ दुर्वासतः ( दूर्वारसः ); **प्रपा.** १३२ प्रथमपादे ( स्वर्णेन कर्णयोर्युग्मे ).

(२) **आश्वस्मृ.** ११।९२–९३ युषोर्वि ( युषो वि ); **प्रपा.** १३२; **संकौ.** ६०–६१ युषोर्वि ( युषोऽभि ) स्तनं माताऽथ ( तं माताऽप्यथ ) प्रथमचतुर्थार्धे न स्तः; **संव.** ६२ स्तनं माताऽथ ( तं माताऽप्यथ ) शेषं आश्वस्मृवत्, प्रथमचतुर्थार्धे न स्तः .

(३) **आश्वस्मृ.** ११।१२० ; **प्रपा.** १८८ : २०६ उत्त. ; **संप्र.** २७८ : ३१७ उत्त. ; **सिन्धु.** ९२३ हुत

(१) हुतकृत्यं होमः, स च पुंवत् स्यात् । पुरुषसंस्कार इव कृताकृत इत्यर्थः । २७८

हुतकृत्यं होमः पुंवत् समन्त्रकः । तेन प्रधानमात्रममन्त्रकमित्युक्तं प्राक् । ‡ संप्र. ३१७

(२) एते संस्काराः स्त्रीणाममन्त्रकाः कार्याः । होमस्तु समन्त्रक इति प्रयोगपारिजाते । आश्वलायनोऽपि ... 'होमकृत्यं तु... चूडाकृतावपि ।' इति । होमोऽप्यमन्त्रक इत्येके । 'संस्काराः स्त्रीणामहोमकास्तूष्णीं स्युः' इति स्मृत्यर्थसारे । होमो नेति वृत्तिकृत् ।

सिन्धु. ९२३

## लघ्वाश्वलायनः

स्नान–नान्दीश्राद्धपूर्वकं जातकर्म, सर्पिर्मधुसुवर्णप्राशनम्, मेधाजननजपः, अंसाभिमर्शनम्, स्त्रीणां तूष्णीं क्रिया, जातकर्मणि मतभेदेन होमतदभावौ

**'जाते सुते पिता स्नायान्नान्दीश्राद्धं विधानतः ।**
**जातकर्म ततः कुर्यादैहिकामुष्मिकप्रदम् ॥**

**सौवर्णे राजते वाऽपि पात्रे कांस्यमयेऽपि वा ।**
**मधु सर्पिर्निषिच्याथ हिरण्येनावघर्षयेत् ॥**

**प्राशयेत्तं हिरण्येन कुमारं मधुसर्पिषी ।**
**प्रतिमन्त्रं पठेत्कर्णे हिरण्यं स्थाप्य दक्षिणे ॥**

**तथा वामे जपेन्मेधां स्पृशेदंसावतः परम् ।**
**अश्मा भव जपेदिन्द्र श्रेष्ठान्यस्मै प्रयन्धि च ॥**

**एवं कुर्यात्सुतस्यैव तूष्णीमेव च योषितः ।**
**केचिदिच्छन्त्यनादिष्टहोममन्त्रादिना परे-**
**( ? मन्त्रापि नापरे ) ॥**

---

‡ संग. संप्रवत् ।

( होम ) उत्त. ; **संकौ.** ११६ सर्वे सिन्धुवत् ; **संग.** ५९६ : ६१९ उत्त.

(१) **लघ्वाश्वस्मृ.** ५।१–५.

## शौनककारिकाः

कुमारस्नापनम् , सर्पिर्मधुसुवर्णप्राशनम् , मेधाजननजपः , अंसाभिमर्शनम् , कुमार्या अमन्त्रकं जातकर्म , सहोमकं जातकर्मेति मते प्रधानाहुत्युत्तरतन्त्रयोर्मध्ये उक्तकर्मानुष्ठानम्

[1]जातं कुमारं जननादन्यसंस्पर्शनात्पुरा ।
स्नापयित्वाऽङ्कमारोप्य प्राङ्मुखं चोपवेश्य तम् ॥

[2]मानतो विषमे कृत्वा संसृज्य मधुसर्पिषी ।
सिक्त्वा शिलायां तत्रैव सुवर्णं बहुशः कषन् ॥

सर्पिर्मधुनी मानतो विषमतया मिश्रीकृत्य प्राशयेदिति व्याख्येयम् । तत्साम्ये विषभावप्रसङ्गात् । प्रपा. १३१

[3]मधुसर्पिःसुवर्णानि मिश्रीकृत्याथ खैलिकीम् ।
प्र ते ददामि मधुनो घृतस्येत्यादिकामृचम् ॥
[4]उक्त्वा ततः सुवर्णेन तेनैव प्राशयेच्छिशुम् ।
ततः प्रक्षाल्य तत्स्वर्णं शिशोः कर्णे तु दक्षिणे ॥
[5]पूर्वं निधाय सव्येऽपि निधाय समनन्तरम् ।
आत्मनो मुखमन्यस्य नीत्वा मुखसमीपतः ॥
[6]मेधायुर्जन्महेतुत्वान्मेधाजननसंज्ञितम् ।
मेधां ते देव इत्याद्यं खिलमन्त्रं सकृज्जपेत् ॥
[7]मन्त्रमश्मा भवेत्याद्यमुक्त्वांऽसौ युगपच्छिशोः ।
स्पृष्ट्वा तथेन्द्र श्रेष्ठानि द्रविणान्यादिकामृचम् ॥

(१) शौका. १ पृ. ३७ ; प्रपा. १३१.
(२) शौका. २ पृ. ३७ बहुशः कषन् (बहुकर्षशः) ; प्रपा. १३१.
(३) शौका. ३ पृ. ३७ ; प्रपा. १३१ कृत्याथ खै (कृत्वाऽथ शै).
(४) शौका. ४ पृ. ३७ ततः सु (तानि सु) तत्स्वर्णं (सौवर्णं) ; प्रपा. १३१ पू. : १३२ उत्त.
(५) शौका. ५ पृ. ३७ ; प्रपा. १३२.
(६) शौका. ६ पृ. ३७ मेधायुर्ज (मेधायज) ; प्रपा. १३२.
(७) शौका. ७ पृ. ३७ ; प्रपा. १३२.

[1]अस्मे प्रयन्धीत्याद्यां च जपित्वांऽसौ पुनः स्पृशेत् ।
इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम् ॥
[2]केचित्सहोमकमिदं कर्मेच्छन्ति मनीषिणः ।
तत्प्राक् कृत्वा पुरस्तन्त्रमनादेशाहुतीस्ततः ॥
[3]हुत्वाऽग्निरिन्द्र इत्यादिदेवतापञ्चकस्य च ।
पश्चात् कर्मेदमाचर्य ततः स्विष्टकृदादिकम् ।
उपरिष्टात्तनं तन्त्रं कुर्वीरंश्च यथाक्रमम् ॥

## कुमारिलकारिकाः

स्नान—नान्दीश्राद्धपूर्वकं जातकर्म, सर्पिरादिप्राशनम् , मेधाजननजपः , अंसाभिमर्शनम् , कुमार्या अमन्त्रकं जातकर्म

[4]जाते सुते पिता कुर्यान्नान्दीश्राद्धं विधानतः ।
प्राङ्नाभिच्छेदनात्पुंसः स्नानं कृत्वा सचैलकम् ॥

[5]जातकर्म ततः कुर्यादन्यैरालम्भनात्पुरा ।
एकस्मिन् भाजने सर्पिर्मधु चैव समानयेत् ॥

[6]अवघृष्य हिरण्येन संसृज्येरंल्लवा यथा ।
हिरण्येन कुमारं तं प्राशयेन्मधुसर्पिषी ॥

प्र ते ददामि मन्त्रेण मातुरुत्सङ्गसंस्थितम् ।
हिरण्यं दक्षिणे कर्णे निधायैतामृचं जपेत् ॥
[7]मेधां त इति सव्ये च निधायैतामृचं जपेत् ।
ऋक्त्रयेणास्य युगपदंसावभिमृशेदथ ॥

(१) शौका. ८ पृ. ३८ त्याद्यां (त्याद्यं) ; प्रपा. १३२. (२) शौका. ९ पृ. ३८ ; प्रपा. १३३.
(३) शौका. १० पृ. ३८ चर्य त (चार्यस्त) क्रमम् (क्रमात्) ; प्रपा. १३३ इत्यादिदे (इत्यादेर्दे).
(४) कुका. १।८।१ ; प्रपा. १३१ पू. ; धप्र. ३७ प्रथमपादे (जाते पुत्रे पिता स्नात्वा) पू.
(५) कुका. १।८।२ ; प्रपा. १३१ ; धप्र. ३७ पू.
(६) कुका. १।८।३–४ ; प्रपा. १३१.
(७) कुका. १।८।५ ऋक्त्रये (ऋक्क्रमे) ; प्रपा. १३१ पू. : १३२ उत्त.

[१]प्रथमाऽइमा भवेतीन्द्र श्रेष्ठानीत्यपरा ततः।
तृतीयाऽस्मे प्र यन्धीति कुमार्याः स्यादमन्त्रकम् ॥

## रेणुकारिकाः

मधुघृतप्राशनरूपमेधाजननम्, आयुष्यकरणम्, काम्यमभिमर्शनम्, अनुप्राणनम्, बालप्रसवदेशाभिमन्त्रणम्, मूर्धाभिमर्शनम्, मात्रभिमन्त्रणम्, स्तनदानम्, उदकुम्भस्थापनम्, सूतिकाग्निस्थापनम्, फलीकरणहोमः

[२]दक्षिणस्यानामिकया स्वर्णान्तर्हितया शिशुम्।
कृत्वा मधुघृते पात्र एकस्मिन्तैजसादिके ॥

[३]मिश्रित्य प्राशयेदेनं तयोरन्यतरद् बहु।
घृतं वा भूस्त्वयि दधामीति मन्त्रेण वा सकृत् ॥

[४]प्राशनं प्रतिवाक्यं स्यादिति केचिदिहाब्रुवन्।
मेधाजननमेतस्य नामधेयं विदुर्बुधाः ॥

[५]तस्यैव दक्षिणे कर्णे नाभ्यां वा त्रिर्जपेदमुम्।
मन्त्रं पिताऽग्निरायुष्मानिति त्रिश्च त्रियायुषम्॥

[६]बुधा आयुष्यमित्येतन्नामधेयं प्रचक्षते।
कामयेत यदि स्वामी सर्वमायुरियादयम् ॥
एनं सोऽभिमृशेदेकादशभिस्तु दिवस्परि।
इत्यादिभिः प्रतिदिशं पञ्चावस्थाप्य तान् द्विजान् ॥
ब्रूयादिममनुप्राणितेति स्वामी ततो द्विजाः (? द्विजः)।
प्रत्यगास्यः शुचिर्ब्रूयात्प्राणेति प्रागवस्थितः ॥

(१) कुका. १।८।६ ; प्रपा. १३२ ततः (तथा).
(२) रेका. ८ पृ. १० ; संग. ४३८ स्वर्णा (सुवर्णा).
(३) रेका. ९ पृ. १० येदेनं (येत्येनं) ; संग. ४३८.
(४) रेका. १० पृ. १० वाक्यं (वाक्यैः) तस्य (तस्या) ; संग. ४३८.
(५) रेका. ११ पृ. १० दमुम् (दिदम्) ; संग. ४३९.
(६) रेका. १२–२० पृ. १०.



व्यानेति दक्षिणो ब्रूयादुदगास्यस्तथाऽपरः।
अपानेति तथोदानेत्युत्तरो दक्षिणाननः ॥
उपरिष्टादीक्षमाणो नैर्ऋत्यां च व्यवस्थितः।
पञ्चमस्तु समानेति सर्वालाभे स्वयं पिता ॥
कुर्यादनुपरिक्रामं दिशस्तां (? ताः) प्रैषवर्जितम्।
विप्रावस्थापनं कार्यं वैश्यक्षत्रिययोरिह ॥
ब्राह्मणग्रहणं सूत्रे नेतरान् योक्तुमर्हति।
बालो यस्मिन् प्रदेशेऽभूत्तं देशमभिमन्त्रयेत् ॥
वेद ते भूमि हृदयमिति मन्त्रेण वीक्ष्य च।
बालं स मूर्ध्न्यभिमृशेन्मन्त्रेणाश्मा भवेति तम्॥
अग्निकार्ये तथाऽऽयुष्ये मन्त्राः प्राशनस्पर्शने।
मातुस् नाभ्यां संस्कारकृते मातरि सूतकी ॥ (?)

[१]अथास्य मातरं वेडाऽसीति तामभिमन्त्रयेत्।
आसीनं(? नां) प्राङ्मुखीसंस्थां वीक्षयन् संपुटाञ्जलिः।
उपेक्षितमुपाध्यायैरिदं मात्रभिमन्त्रणम् ॥
श्रुतिवाक्यादलेखीह स्वीकृतं चेतरैर्युतः- (? र्यतः)।
प्रक्षाल्य दक्षिणं तस्याः स्तनं तस्मै प्रयच्छति ॥
इमं स्तनं मन्त्रेण बालायाथोत्तरं स्तनम्।
संप्रयच्छति मन्त्राभ्यां यस्ते स्तन इमं स्तनम्॥
कालान्तरमिदं कर्म न भवेच्छ्रुतिवाक्यतः ॥

[२]अष्टाङ्गुलं परित्यज्य नालं छिन्द्यात्क्षुरादिना।
उदपात्रं शिरःस्थाने सूत्या भूमौ च मृन्मयम्॥

मूलादष्टाङ्गुलं परित्यज्य स्वधृतेन ब्रह्मसूत्रेण नालमावेष्ट्य छिन्द्यात्। तथा च कारिकायाम्– 'अष्टाङ्गुलं ... क्षुरादिना।'। संग. ४४१

(१) रेका. २३–२७ पृ. ११.
(२) रेका. ३२ पृ. ११ ; गभा. १६४ पृ. ; संग. ४४१ पृ.

[1]आपो देवेष्विति स्थाप्यमास्ते तद्यावदु-
त्थितिम् ।
द्वारदेशे समाधाय सूतिकाग्निं सुसंस्कृते ॥

जुहुयात्सर्षपांस्तत्र फलीकरणमिश्रितान् ।
शण्डा मर्का इति द्वाभ्यां प्रतिमन्त्रं पृथग्घुतिः ॥

[2]संध्ययोरुभयोर्हे द्वे नित्यहोमादनन्तरम् ।
ओत्थानादन्वहं कार्यं संध्ययोः स्थापनादि-
कम् ॥

(१) रेका. ३३–३४ पृ. ११.

(२) रेका. ३५ पृ. ११ ओत्था ( उत्था ) ; संग. ४४२ गङ्गाधरकारिकायाम्.

[1]आवपत्युपदेशाच्च नात्र स्यात् कुशकण्डिका ।
अनयोर्देवताऽग्निः स्यान्मन्त्रोक्ताः केचि-
दीरिताः ॥

आवपनोपदेशात् होमेतिकर्तव्यता न भवति । तथा च रेणुः – ' आवपत्युपदेशाच्च ... कुशकण्डिका । ' ।
संग. ४४२

[2]एतच्चापि स्वकाले स्यान्नियतत्वाच्च कालतः ॥

(१) रेका. ३६ पृ. ११–१२ ; गभा. १६३ उत्त. ; संग. ४४२ मन्त्रोक्ताः ( मन्त्रोक्ता ) रिताः (रिता).

(२) रेका. ३७ पृ. १२.

## बौधायनगृह्यसूत्रम्

फलीकरणहोमादेर्दशरात्रमनुष्ठानम्, दशरात्रमभोज्यान्नता, दशमदिने सूतकनिवृत्तिः

¶ '[१]स एवमेव फलीकरणहोमप्रभृति सायंप्रातर्दशरात्रं करोति ॥

नानुत्थितायां सूतिकायां भोज्यान्नता ॥

दशम्यामुत्थानम् ॥

## बौधायनगृह्यपरिभाषासूत्रम्

सूतकाग्नेर्दशाहं धारणम्, दशमदिनकृत्यानि– युगोत्थापनम्, उदकुम्भोत्थापनविसर्जने, सूतकाग्नेः पुत्रिण्याश्चोपस्थानम्, कुमारोत्थापनम्, आदित्यदर्शनम्, होमः, सूतकाग्नेरुत्सर्जनमरणिसमारोपो वा, औपासनोपस्थानम्, पुत्रनामग्रहणम्, मूर्धावघ्राणाभिमन्त्रणे, दशमदिने सूतकनिवृत्तिः

†[२]तं दशाहं धारयति ॥

अथ नवम्यां व्युष्टायां सूतकाग्नावाज्यं विलाप्योत्पूय युगमुत्थापयति– 'ब्रह्म जज्ञानम्' इति ॥

अथोदकुम्भमुत्थापयति– 'भूर्भुवः सुवरोम्' इति ॥

अथैनमप्सु विसर्जयति– 'समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः ॥' इति ॥

अथैतेनैव यथेतमेत्य सूतकाग्निमुपतिष्ठते– 'बोधा नो अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधा वः । पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने ॥' इति ॥

अथ पुत्रप्रसूमुपतिष्ठते– 'स बोधि सूरिर्मघवा वसुदा वा वसुपतिः । युयोध्यस्मद् द्वेषांसि ॥' इति ॥

अथ कुमारमुत्थापयति– 'उत्तिष्ठ ब्रह्मणस्पते । देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानवः । इन्द्र प्राशूर्भवा सचा ॥' इति ॥

अथैनमादायोपनिष्क्रम्याऽऽदित्यमुदीक्षयति– 'उद्वयं तमसस्परि, उदु त्यम्, चित्रम्, तद्विष्णोः परमं पदम्' इति चतसृभिः ॥

अथैतेनैव यथेतमेत्य कुमारं मातृहस्ते दत्त्वा सूतकाग्नावाज्यस्य जुहोति– 'हिरण्यगर्भः समवर्तताग्रे' इत्याऽन्तादनुवाकस्य प्रत्यृचम् ॥

उत्सृजसि(?ति) सूतकाग्निम् ॥

'आयुर्दा अग्ने हविषो जुषाणः' इत्यरण्योर्वा समारोपयते ॥

तमुपनयने मन्थति ॥

अथौपासनमुपतिष्ठते– 'अग्न आयूंषि पवसे, अग्ने पवस्व स्वपाः' इति द्वाभ्याम् ॥

ज्योतिष्मत्या पुत्रस्य नाम गृह्णाति 'अन्नादमेवैनं करोति' इति ब्राह्मणम् ॥

अथैनं मूर्ध्न्यवघ्रायाभिमन्त्रयते– 'अङ्गिराऽयुष्मान्' इति पञ्चभिः पर्यायैः ॥

प्रसिद्धं दशम्यामुत्थानम् ॥

## कौषीतकिगृह्यसूत्रम्

एकादशदिने सूतकनिवृत्तिः

'[१]दशरात्रे चोत्थानम् ॥

¶ अस्मिन् प्रकरणे सर्वत्रातिदिष्टस्य फलीकरणहोमादेः प्रयोगः जातकर्मप्रयोगप्रकरणे द्रष्टव्यः ।

† तमिति सूतकाग्निमित्यर्थः ।

(१) बौगृ. २।१।२०–२२.

(२) बौगृप. १।११।२–१६, १८.

(१) कौगृ. १।२५।१.

## आपस्तम्बगृह्यसूत्रम्

दशाहं फलीकरणहोमः तूष्णीमावपनं वा मतभेदेन, दशमदिने सूतकनिवृत्तिः

[1]**एवमहरहरा निर्दशतायाः ॥**

(१) विजननप्रभृति यावत् दशाहानि न निर्गच्छन्ति तावदेव होमः कर्तव्यः संशासनं चेत्यर्थः। सकृच्च होमाः, न सायम्। यद्यपि संशासनमनन्तरं तथाऽपि तावन्मात्रस्यायमतिदेशो न भवति, तस्य होमशेषत्वात्। नापि वास्तप्रादेः, कृत्स्नस्य कल्पान्तरेषु सर्वेष्वप्रसिद्धत्वात्। अनाकुला.

(२) यथैतदनन्तरोक्तं तूष्णीमावपनम् एवमहरहः आ निर्दशतायाः सूतिकागृहपालैः कर्तव्यम्। आङ् मर्यादायाम्। निर्दशा निर्गता दशम्योऽहोरात्रेभ्यो या रात्रिः सा। आ दशम्या रात्रेरित्यर्थः। ताद.

**दशम्यामुत्थितायां स्नातायाम्... ॥**

## भारद्वाजगृह्यसूत्रम्

दश दिनानि फलीकरणहोमानुष्ठानम्, सूतिकारोगहरणमवमार्जनम्, दशमेऽहनि सूतिकास्नानम्

[2]**एवमेव निष्कामति च प्रपद्या(? द्य)माने चाऽऽवपताहरहरा निर्दशताया इति ॥**

**यदा यदा सूतिकारोगः स्याद्दक्षिणस्य पदस्ततोदकेन पार्ष्णि क्लेदयित्वा तदा तदा तं देशमवमार्ष्टि यत्रास्या दुःखं भवति– 'धनुर्मटची पुरुषस्य हस्तयोरेकशतं शृणोरङ्ग ते धापयितारस्त्वं रोगस्येशिषे त्वमु रोगस्य सूतिकारोगभेषज्यमस्यमुष्याः' इति ॥**

**दशम्यां स्नातौ मातापुत्रौ... ॥**

## काठकगृह्यसूत्रम्

दशाहं फलीकरणहोमः, व्याख्यानादेकादशेऽहनि सूतकनिवृत्तिः

[3]**एवं सायंप्रातर्दशाहं जुहुयात् ॥**

(१) अनेन प्रकारचतुष्टयेन दशाहं जुहुयात् अशौचकालं यावज्जुहुयादित्यर्थः। देव.

(२) एवं सायंप्रातः दशाहं सूतिकाशौचापनिवृत्तये होमो दृष्टार्थः। आवि.

**दशम्यां... स्नापयित्वा... ॥**

दशम्यां व्यतीतायामाशौचशुद्धौ। † देव.

## आग्निवेश्यगृह्यसूत्रम्

दशाहमुद्धूपनम्, द्वादशदिने मातापुत्रयोः शुद्धिस्नानम्

[1]**प्रतिदिवसं कणैरुद्धूपनं कर्तव्यम् ॥**

**द्वादश्यां मातापुत्रयोः स्नानानन्तरं गृहमलंकरोति ॥**

## पारस्करगृह्यसूत्रम्

दशाहं फलीकरणहोमः, कुमारोपद्रवहरजपाभिमर्शने, व्याख्यानत एकादशदिने सूतकनिवृत्तिः

§ [2]**द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्संधिवेलयोः फलीकरणमिश्रान्सर्षपानग्नावावपति– 'शण्डामर्का ...' इति ॥**

[3]**यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताऽङ्क आधाय जपति– 'कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर ॥ तत्सत्यं यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर ॥ तत्सत्यं यत्ते सरमा माता सीसरः पिता श्याम-**

---

(१) आपगृ. १५।७–८.

(२) भागृ. १।२३, २५, २६.

(३) कागृ. ३५।२, ३.

† ब्राह्म., आवि. देववत्।

§ अस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च जातकर्मप्रयोगप्रकरणे (सं. का. पृ. २६७५) द्रष्टव्यः।

(१) आग्निगृ. २।१।४, ५.

(२) पागृ. १।१६।२३.

(३) पागृ. १।१६।२४; निप. २६४ (=) यदि... आधाय (तत्र यदि कुमार उपद्रवेत् जालेन उत्तरीयेण वा विधाय पिता अङ्कमाधाय) स्ते अस्तु (स्तेऽस्तु) (इति०).

**शबलौ भ्रातरौ । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर । ' इति ॥**

**'अभिमृशति– ' न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसि ' इति ॥**

( १ ) यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताऽङ्क आधाय जपति– ' कूर्कुरः सुकूर्कुरः ' इत्यनेन मन्त्रेण । अभिमृशति– ' न नामयति... ' इत्यनेन मन्त्रेण । कुमारशब्देन कुमारग्रहोऽभिधीयते । $ कभा.

( २ ) ' न नामयति ' इति मन्त्रेण सर्वाङ्गेष्वभिमृशति । § जभा.

( ३ ) कुमारशब्देन बालग्रहोऽभिधीयते । स यदि एनं बालमुपद्रवेत् विघ्नयेत् तदा एनं बालकं पिता जालेन प्रच्छाद्य आच्छादयित्वा स्वोत्तरीयेण वा प्रच्छाद्य अङ्के उत्सङ्गे निधाय ' कूर्कुरः ' इति मन्त्रत्रयं जपति । जपान्ते एनं पिताऽभिमृशति ' न नामयति ' इति मन्त्रेण । मन्त्रार्थः– कूर्कुरः भषणाख्यो बालग्रहः । तथा सुकूर्कुरश्च अतिभषणः । बालान् बध्नातीति बालबन्धनः । कूर्कुराख्यो बालग्रहः । सीसरः अङ्गसारकः । हे शुनक तद्गणमुख्य, लपेत लापनरोधकेति यावत् । अपह्वर गात्रापहारक । ह्वृ कौटिल्ये । ते तुभ्यं नमोऽस्तु । ततस्तुष्टश्चैनं कुमारं सृज मुञ्च । किं कुर्वन् ? चेच्चेत् छुच्छुः शब्दं कुर्वन् । हे शुनक, तत्सत्यम् , यत्ते तुभ्यं देवदूताय देवा वरमददुः दत्तवन्तः , स च त्वं हिंसाविहारः कुमारमेव वा वृणीथाः वृतवानसीति । शेषमुक्तार्थम् । हे शुनक, तत्सत्यम् , यत् ते तव सरमा देवशुनी माता सीसरः देवश्वा पिता श्यामशबलौ च तव भ्रातरौ इति । शेषमुक्तार्थम् । ' न नामयति ' इत्यस्यार्थः – यत्र अस्मिन् कुमारे वयं वदामः ब्रूमः साकाङ्क्षत्वात् मन्त्रम् , यत्र च अभिमृशामसि अभितः स्पर्शनं कुर्मः , स कुमारः न नामयत्यङ्गानि । शेषं स्पष्टम् । गभा.

( ४ ) यदि कुमारस्य स्कन्दनादिभ्यः ग्रहोपद्रवो भवेत् ततः पिता अङ्के कुमारमाधाय उत्तरीयजालाभ्यामन्यतरेणाऽऽच्छाद्य वक्ष्यमाणं मन्त्रं जपति । अपह्वरेति । इतिशब्दो मन्त्रसमाप्तिद्योतकः । विभा.

**'दशम्यामुत्थाप्य... ॥**

दशम्यां रात्र्यामतीतायामेकादशेऽहनि । ¶ कभा.

## जैमिनिगृह्यसूत्रम्

दशाहं फलीकरणहोमः सूतकं च, एकादशे शुद्धिस्नानम्

**† 'फलीकरणमिश्रान् सर्षपान् दशरात्रमग्नौ जुहुयात् – ' शण्डाय ' इति द्वाभ्याम् ॥**

**दशरात्रं दम्पती सूतकौ भवतः । तस्यान्ते स्नात्वोत्थानम् ॥**

सूतकौ सूतकवन्तौ । उत्थानम् अशुचित्वान्मोक्षः । भीव्या.

## वैखानसगृह्यसूत्रम्

दशाहं फलीकरणहोमः उदकुम्भस्थापनादि च, तृतीयपञ्चमनवमदिनेषु शयनादिशोधनम् , दशमे द्वादशे वा शुद्धिः

**'नित्यं सायंप्रातरेवमहरहर्हुत्वा मेधायै पाययेत् । 'आपो हविःषु' इति न्यस्तमुदकुम्भं शोधयित्वा नित्यं सायंप्रातरादधाति । तथैव घृतप्राशनान्तं कर्म कृत्वा स्नात्वौपासननिर्हरणादि करोतीत्येके । तृतीये पञ्चमे नवमे चाह्नि शयनादिकं शोधयतीति ॥**

---

$ हभा. कभावत् जभावच्च ।

§ शेषं कभावत् ।

(१) पागृ. १।१६।२५ ; निप. २६४ (=) ( न नामयति० ) ( न ग्लायति० ) मृशा ( मृषा ) (इति०).

¶ सर्वाणि भाष्याण्याशौचनिवृत्तिविषये कभावत् ।

† व्याख्यानं जातकर्मप्रयोगप्रकरणे ( सं. का. पृ. २६७९ ) द्रष्टव्यम् ।

(१) पागृ. १।१७।१.

(२) जैगृ. १।८.

(३) वैगृ. ३।१५, १८.

**अथ दशमे द्वादशे वाऽह्नि भवत्युत्थानम् ॥**

## नारदः

सप्तमदिने जन्मदादिपूजनम्

**[1]जननात्सप्तमे चाह्नि मृत्युरायाति घातकः ।**
**तद्दिने चैव रक्षेयं कर्तव्याऽऽयुर्विवृद्धये ।**
**सायाह्ने पूज्य विघ्नेशमपूपैश्च पृथग्विधैः ॥**

## बृहस्पतिः

पञ्चमेऽहनि जन्मदादिपूजनम्

**[2]जन्मतः पञ्चतारायां याते चन्द्रे शिशुं पिता ।**
**भूषयेद्भूषणैः सर्वैः पञ्चायुधसमन्वितैः ॥**
**[3]विशेषात्कन्यकायाश्च कर्तव्यं मङ्गलेन च ।**
**पुंसः सायुधमाकल्पमायुःश्रीकान्तिदं शिशोः॥**

मङ्गलं जन्मोत्सवजन्मदापूजनादि । † संर. ८४६

## व्यासः

प्रथमषष्ठदशमदिनेषु दानजन्मदापूजननिमित्ता शुद्धिः, प्रथमे सुवर्णदानम्, षष्ठे सप्तमे वा बलिदानम्, दशमेऽन्नदानम्, देव्यादिपूजनम्

**[4]सूतिकावासनिलया जन्मदा नाम देवताः।**
**तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥**

(१) जन्मदाख्यदेवतानां पूजनात् शुद्धिरस्तीत्यर्थः। प्रपा. १५७

(२) जन्मदाख्यदेवतानां पूजने शुद्धिरस्तीत्यर्थः । * संप्र. २०१

(३) सूतिकाया आवासः गृहम्, तदेवाऽऽलयः गृहं यासां ताः । सूतिकागृह एव जन्मदानां देवतानां पूजनं कर्तव्यमिति तात्पर्यार्थः । संर. ८४६

**[1]प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा।**
**त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥**
**[2]दद्यात्तु प्रथमे हेम षष्ठे वा सप्तमेऽपि वा ।**
**बलिदानं तु दशमे ह्यन्नदानं प्रशस्यते ॥**

(१) अत्राऽऽशौचाभावो दानादिविषय एव, न संध्यादिविषये । संम. १५

(२) चकारात् पञ्चमाष्टमयोरपि । तत्र प्रथमे नैमित्तिकश्राद्धादौ, दशमे बलिदानान्नदानयोः, इतरत्र तु जन्म देवतापूजादौ । अन्नदानं च सगोत्रेभ्यः । $ संको. ६१

(३) बलिदानशब्दस्य षष्ठसप्तमपदयोरन्वयः । तुशब्दो दशमपदोत्तरमन्वेति । अन्नदानं सगोत्राणाम्,

† शेषं व्याख्यानं 'प्रथमे दिवसे' व्यासवचनव्याख्याने द्रष्टव्यम् ।

(१) प्रपा. १५७ घातकः ( चान्तकः ); संप्र. २०२; संम. १५ तद्दिने चैव ( दिने दिने च ) तृतीयार्धं नास्ति; संग. ४४९.

(२) प्रपा. १५७; संप्र. २०३ जन्मतः ( जन्मनः ) तारायां या ( ताराङ्गया ); संग. ४५० तारायां ( ताराङ्गं ).

(३) प्रपा. १५७; संप्र. २०३; संग. ४५०; संर. ८४६ लेन च ( लेन वा ) पू. श्रीधरीये.

(४) मिता. ३।१९ शुद्धि ( शुचि ); अप. ३।१९ पृ. ८९७; ब्रक. ८८ निमित्तं तु (निमित्तार्थे) अङ्गिराः; स्मृच. ( आशौच.) १०; पमा. ५८३; मपा. ३८३ दा नाम दे ( नामादिदे ); प्रपा. १५७ मित्तं ( मित्ता );

* संग. संप्रवत् ।

$ क्रम. संकौगतम् । संव. संकौवत् ।

गमा. १६५; कृत. ४७१ विष्णुधर्मोत्तरे; संप्र. २०१ मित्तं ( मित्ते ); संम. १५; सिन्धु. ८६१ देवताः ( देवता ); शूक. ९२; विपा. ३०६ संप्रवत्; संको. ६१ मित्तं तु ( मित्तात्तु ); बाल. १।११-१२ पृ. २४; संग. ४४८ संप्रवत्; संव. ६२ संकौवत्; संर. ८४५.

(१) अस्य स्थलादिनिर्देशाः जातकर्मविधिप्रकरणे ( सं का. पृ. २६४१ ) द्रष्टव्याः .

(२) प्रपा. १५७; ग्रप्र. ३७ ( दद्यात्तु प्रथमे षष्ठे वाऽथ पञ्चमेऽपि वा । दशमे बलिदानं स्यादन्नदानं तथैव च ॥ ) निबन्धसारे; संप्र. २०२; संम. १५ ह्यन्न ( अन्न ); विपा. ३०६ द्वितीयपादे ( षष्ठसप्तमयोरपि ) ह्यन्नदा ( ह्यत्र दा ); संको. ६१ उत्त.; संग. ४४९ वीरमित्रोदये; संव. ६२ (=) उत्त.; क्रम. ८६१ (=) दानं तु ( दानं च ); संर. ८४६.

अन्येषामाशौचाजस्याप्रतिग्राह्यत्वात् । 'सप्तमेऽपि वा' इत्यत्रापिवाशब्दात् पञ्चमस्यापि ग्रहणम्, शिष्टसमाचारात् । पुत्रजन्मनि पुत्रजन्मनिमित्तम् । 'पुत्रजन्मनि' इत्यत्र पुत्रशब्देन पुत्र्यपि गृह्यते । तथा च कन्याजन्मन्यपि जन्मदानां देवतानां पूजनं कर्तव्यमिति सिध्यति । अत एव श्रीधरीये– 'विशेषात् कन्यकायाश्च कर्तव्यं मङ्गलं न वा ।' इति विशेषात् कन्यकाया मङ्गलं न वा कर्तव्यमिति विकल्प उक्तः । एतेन पुत्रजन्मनि विशेषान्मङ्गलमावश्यकमिति सिध्यति । * संर. ८४६

**'निशि जागरणं कार्यं खड्गो धार्यः समीपतः ।**
**आवाह्य पूजयेद्देवीं गणेशं मातरं गिरिम् ॥**

देवीं षष्ठीम् । गिरिं मन्थानमन्दरम्, कृत्यचिन्तामणिधृत– 'मन्थानमन्दा(? न्द)रोऽसि' इति मन्त्रलिङ्गात् । † कृत. ४७१

## अङ्गिराः

षष्ठेऽहनि जन्मदायजनम्

**'षष्ठेऽह्नि रात्रियागं तु जन्मदानां तु कारयेत् ॥**

## मार्कण्डेयः

षष्ठे जागरणं जन्मदाबलिश्च, दशमे शस्त्रधारणेन नृत्यगीतैश्च जागरणम्

**'रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।**
**रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥**

रामेति संबोधनम् । कृत. ४७१

**'पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।**
**रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥**

चशब्दात् पञ्चम्यपि गृह्यते । देशाचारतो व्यवस्थितानि चैतानि पूजादिनानि । संर. ८४७

## विष्णुधर्मोत्तरपुराणम्

सूतिकागारस्याऽऽयुधवह्न्यादिभिर्दशाहं रक्षाविधानम्

**'दशाहं सूतिकागारमायुधैश्च विशेषतः ।**
**वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः ।**
**मुसलेन तथा वारिवर्णकैश्चित्रितेन वा ॥**

## ब्रह्मपुराणम्

राकादीनां पूजनम्

**'कन्याश्चतस्रो राकाद्या वातघ्नी चैव पञ्चमी ।**
**क्रीडनार्थां च बालानां षष्ठी च शिशुरक्षिणी ।**
**खड्गे तु पूजनीया सा वैश्यब्रात्यैर्द्विजातिभिः ॥**

राका अनुमतिः सिनीवाली कुहूरिति चतस्रः कन्याः । § अप. ३।१९

---

* शेषं संमवत् ।

† विपा. कृतवत् ।

(१) कृत. ४७१ ; विपा. ३०४ (=) उत्त.

(२) ब्रक. ८८ ; कृत. ४७१ रात्रियागं ( रात्रौ यागं ) विष्णुधर्मोत्तरे.

(३) मिता. ३।१९ ; अप. ३।१९ पृ. ८९७ तथा च ( तिथिः च ) तत्र ( चैव ) ; स्मृच. ( आशौच. ) १० बलिः ( बलिम् ) ; पमा. ५८४ कार्यं ज ( कुर्याज्ज ) शेषं स्मृचवत् ; मपा. ३८३ ; प्रपा. १५७ ; गभा. १६५ ; कृत. ४७१ रात्रौ ( राम ) विष्णुधर्मोत्तरे ; संप्र. २०२ कार्ये जन्मदानां (कार्यमत्रदानं) आदर्शपाठोऽपि, मार्कण्डेय-

§ गभा., सिन्धु., शूक. अपवत् ।

पुराणे ; संम. १५ ; सिन्धु. ८६१ ; शूक. ९२ ; विपा. ३०६ कार्यं जन्मदानां ( कार्यमत्र दानं ) ; बाल. १।११–१२ पृ. १७ नारदः ; संग. ४४९ सर्वं संप्रवत् ; संर. ८४७.

(१) मिता. ३।१९ ; अप. ३।१९ पृ. ८९७ ; स्मृच. ( आशौच. ) १० नृत्य ( नृत्त ) ; पमा. ५८४ ; मपा. ३८४ ; प्रपा. १५७ ; गभा. १६५ ; संप्र. २०२ मार्कण्डेयपुराणे ; संम. १५ ; सिन्धु. ८६१ ; शूक. ९२ ; विपा. ३०६ ; बाल. १।११–१२ पृ. १७ नारदः ; संग. ४४९ मार्कण्डेयपुराणे ; संर. ८४७.

(२) सिन्धु. ८४२–८४३ ; कुम. ८४३.

(३) अप. ३।१९ पृ. ८९७ वातघ्नी चैव ( बालतक्ष्णी च ) ; गभा. १६५ सा वैश्यब्रात्यैर्द्वि ( वै ब्राह्मणैश्च द्वि ) अपरार्के ; सिन्धु. ८६२ सा वैश्यब्रा ( वै वैश्यैर्ब्रा ) ; शूक. ९२ सिन्धुवत् .

## अनिर्दिष्टकर्तृकवचनानि

षष्ठदिनकर्तव्यमायुर्वृद्धिकरं षष्ठीपूजाविधानम्, प्रथमे षष्ठे च कर्माङ्गशुद्धिः

**युधिष्ठिर उवाच–**

[1]पुत्रजन्मनि कन्याया उत्सवः को विधीयते।
किं दानं कस्य पूजा च तन्मे ब्रूहि जनार्दन॥

**श्रीकृष्ण उवाच–**

शृणु पाण्डव यत्नेन सुतोत्पत्तिमहोत्सवम्।
जन्मषष्ठदिने कार्या षष्ठीनाम्नी त्रिशूलिनी॥
पीठेऽपराह्णसमये गोमयीं प्रतिमां लिखेत्।
कपर्दिकाः प्रदातव्याश्चाङ्गे चाङ्गे विशेषतः॥
कर्णयोः कुण्डले देये दूर्वापल्लवशोभिते।
दिव्यवस्त्रपरीधानां तां देवीं पूजयेत्ततः॥
अग्रे दीपाष्टकं देयं नैवेद्यैर्विविधैः शुभैः।
नालिकेरादिकं तद्वद्देशकालोद्भवैः फलैः॥
कलशं स्थापयेत्तत्र अग्रतः पल्लवान्वितम्।
द्विजन्मानं सपत्नीकं सदाचारसमन्वितम्॥
आहूय कारयेत्तस्यास्तयोर्हस्तेन पूजनम्।
शुक्लतण्डुलवेद्यां तु तस्योपरि समास्थिताम्॥
नृत्यगीतविनोदेन वाद्येन च युधिष्ठिर।
रात्रौ जागरणं कार्यं दैवज्ञेन द्विजैः सह॥
वटकाष्टकमालाभिर्बद्धग्रीवमजासुतम्।
पुनः पुनर्महाशब्दं कारयेत् कर्णताडनात्॥
डाकिन्यो यातुधानाश्च भूतप्रेतपिशाचकाः।
बालग्रहाश्च नश्यन्ति तच्छब्दाकर्णनाद् ध्रुवम्॥
तत्र दानानि देयानि ब्राह्मणेभ्यो विशेषतः।
प्रथमेऽहनि षष्ठे वा दाता नाऽऽप्नोति सूतकम्॥
दानप्रतिग्रहं तत्र श्राद्धं च क्रियते यतः।
प्रभाते दीयते दानं नटनर्तकगायकान्॥
स्त्रियः सभर्तृकाः पूज्या वस्त्रालंकरणादिभिः।
अनेन विधिना यस्तु षष्ठीदेवीं प्रपूजयेत्।
आयुर्वृद्धिर्भवेत्तस्य संततेरपि पाण्डव॥

(१) संवी. २३१–२३२ (भागः २).

पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः।
पितुः संवत्सरदिने दानं कोटिगुणं भवेत्॥

रात्रिवर्गसंज्ञकशान्तिमन्त्रजपो दश दिनानि संध्यायाम्, सूतिकास्नाने नक्षत्रादि

[1]प्रथमं गणपतेर्मन्त्रं श्रीश्च ते तदनन्तरम्।
नवग्रहाणां मन्त्रांश्च दिक्पालानां तथैव च॥
दिवस्परि समारभ्य विबभ्रुस्त्वन्ततः पठन्।
आ नो भद्रेति प्रथमं जनित्वान्तं ततः परम्॥
ऋचं वाचं ततः पश्चादन्ते तु शरदः शतात्।
रात्रिवर्गमिदं जप्यं बालानां भयनाशनम्॥

अथ रात्रिवर्गः। दशदिनं संध्यायां सूतिकासमीपे जपेत्– प्रथममिति। संग. ४४८

[2]मघामूलविशाखार्द्राचित्रादितियमद्वये।
ज्येष्ठासार्पजलेशर्क्षे नैव स्नायात् प्रसूतिका॥
शुभग्रहयुते लग्ने पञ्चमे पापवर्जिते।
परित्यज्य महादोषान् सूतिकास्नानमुत्तमम्॥

### श्रीधरीये

पञ्चमदिने पञ्चायुधाभरणधारणम्

[3]जातस्य पञ्चमदिने शुभदे मुहूर्ते
पञ्चायुधाभरणधारणमिष्टमाहुः।
नाभिप्रदेशपरिलम्बि सुवर्णसूत्रं
प्रोक्तं शिशोर्ग्रहनिवारणकैश्च युक्तम्॥

अस्यार्थः– पञ्चमदिने जातस्य जन्मनक्षत्रात् पञ्चमनक्षत्रे पञ्चमदिने वा पञ्चायुधाभरणधारणं शङ्खचक्रगदाशार्ङ्गनन्दकानि पञ्चायुधानि तद्युक्ताभरणधारणम्। तत्र शिशोरिति सामान्येन कथनात् कुमारस्य कुमार्याश्च पञ्चायुधाभरणं धार्यमिति। $ संप्र. २०२

$ संग. संप्रवत्।
(१) संग. ४४८.
(२) ज्योनि. २३१.
(३) प्रपा. १५७; संप्र. २०२ प्रोक्तं (प्रोतं) पाकैश्च (णकं च); संग. ४४९ संप्रवत्.

## दैवज्ञमनोहरे

सूतिकास्नाने वर्ज्या नक्षत्रवाराः

[1]भरणी कृत्तिका मूलमार्द्रा पुष्यः पुनर्वसुः ।
मघा चित्रा विशाखा च श्रवणो दशमस्तथा ॥

[2]एषु मन्दे बुधे वारे सूतीस्नानं न कारयेत् ।
यदि स्नानं प्रकुर्वीत पुनः सूतिर्न विद्यते ॥

## दैवज्ञवल्लभे

स्तनपाने तिथिनक्षत्रयोगकरणानि, सूतिकास्नाने च तिथिवारनक्षत्राणि

[3]रिक्तां भौमं परित्यज्य विष्टिं पातं सवैधृतिम् ।
मृदुध्रुवक्षिप्रभेषु स्तनपानं हितं शिशोः ॥

[4]करेन्द्रभाग्यानिलवासवान्त्य-
मैत्रैन्दवाश्विध्रुवभेऽह्नि पुंसाम् ।
तिथावरिक्ते शुभमामनन्ति
प्रसूतिकास्नानविधिं मुनीन्द्राः ॥

हस्तज्येष्ठापूर्वाफल्गुनीस्वातीधनिष्ठारेवत्यनुराधामृगशीर्षाश्विनीरोहिणीषु त्रिषू( ? तिसृषू )त्तरासु च सूतिकास्नानमित्यर्थः । पुंसामह्नि रविभौमगुरुवारेषु ।

† गभा. १६९

† संप्र., संग. गभागतम् ।

(१) संसौ. ५३ (=) भरणी कृत्तिका ( कृत्तिका भरणी ) ; संप्र. २०३.

(२) संसौ. ५३ (=) पूर्वार्धे ( एताः प्राणहरास्तारास्तासु स्नानं न कारयेत् । ) ; संप्र. २०३.

(३) संव. ५९.

(४) गभा. १६८–१६९ ज्योतिषे ; संसौ. ५४ (=) भेऽह्नि पुंसाम् ( भे पुरुषवारे ) ; संप्र. २०३ ; सिन्धु. ९०३ ज्योतिषे ; शूक. ९५ ज्योतिःशास्त्रे ; विपा. ३०७ भाग्या ( याम्या ) ज्योतिःशास्त्रे ; संग. ४५४ मैत्रैन्दवा ( मैत्रेन्द्रभा ) ; संर. ८४८ भाग्या ( भागा ) तिथाव ( दिने त्व ) ज्योतिर्निबन्धे.

## मुहूर्तचिन्तामणिः

सूतिकास्नाने तिथिवारनक्षत्राणि

[1]पौष्णध्रुवेन्दुकरवातहयेषु सूती-
स्नानं समित्रभरवीज्यकुजेषु शस्तम् ।
नाऽऽर्द्रात्रयश्रुतिमघान्तकमिश्रमूल-
त्वाष्ट्रे ज्ञसौरिवसुषड्रविरिक्त-
तिथ्याम् ॥

बालजन्मानन्तरं प्राच्यशिष्टाचारप्राप्तप्रसूतास्नानमुहूर्तं वसन्ततिलकयाऽऽह– पौष्णेति । पौष्णं रेवती । ध्रुवाणि प्रसिद्धानि । इन्दुः मृगः । करः हस्तः । वातः स्वाती । हयः अश्विनी । एषु समित्रभरवीज्यकुजेषु अनुराधानक्षत्रसूर्यगुरुभौमवारसहितेषु सूत्याः प्रसूतायाः स्नानं प्रशस्तम् उत्तमफलदम् । निषिद्धनक्षत्राण्युच्यन्ते । आर्द्रात्रयम् आर्द्रापुनर्वसुपुष्याः । श्रुतिमघान्तकमिश्रमूलत्वाष्ट्राणि प्रसिद्धानि । द्वन्द्वैकवद्भावः । एषु दशसु नक्षत्रेषु सूतीस्नानं न शस्तम्, पुनः सूतेरभावात् इति तात्पर्यार्थः । तथा ज्ञः बुधः । सौरिः शनिः । तथा वसुः अष्टमी । षट् षष्ठी । रविः द्वादशी । रिक्ताः चतुर्थी नवमी चतुर्दशी । बुधशनिवारयोः एतासु तिथिषु च न शस्तम् । एतच्च दाक्षिणात्या नानुमन्यन्ते । ( यत्तु ? ) सूतिकास्नानं वदन् प्राच्यः इत्थं प्रष्टव्यः– किं सूतकमध्ये सूतिकास्नानं सूतकात् बहिर्वा । नाऽऽद्यः कल्पः, यदि सूतकमध्ये षष्ठिकापूजार्थं क्रियमाणमपि स्नानं चाण्डालधृतहस्तपुरुषवत् निष्फलमेव, शुद्ध्यभावात् । नापि द्वितीयः, सूतकानन्तरमेव शुद्ध्यापादकस्नानस्य विहितत्वात् । यदपि दैवज्ञवल्लभवाक्यम्, तदाचारमूलकं न स्मृतिमूलकमिति मत्वा संतोष्टव्यम् । * पीटी.

## बालतन्त्रे

प्रथमे षष्ठे वा दिने कर्तव्यस्य षष्ठीपूजनस्य विधानम्

[2]उत्पन्नस्य तु बालस्य षष्ठे वा पञ्चमे दिने ।
विघ्नेशो जन्मदा षष्ठी देवी जीवन्तिका तथा ॥

* संव. पीटीगतम् ।

(१) मुचि. ५।१२ ; संव. ३७.

(२) विपा. ३०४ ; संर. ८४६.

'देवी जीवन्तिका तथा' इत्यत्र तथाशब्दात् स्कन्दस्य, शस्त्रे भगवत्याश्च पूजनं संगृह्यते ।

संर. ८४७

[1]प्रदोषे पूजनीयास्ता गन्धपुष्पादिदानतः ।
फेणिकापूरिकाश्चैव(? मिश्र) कृशरान्नैस्तथैव च ॥
[2]प्रणवादिव्याहृतिभिर्नमोन्तैः पूजनं पृथक् ।
पित्रोर्बालस्य रक्षा स्यादन्येषां च न संशयः ॥
[3]अपूजिताश्च ता देव्यः पीडयेयुः कुमारकम् ।
कुङ्कुमेनाथ गन्धेन कुड्यसंस्थाः प्रकल्पयेत् ॥
[4]पीठे वाऽक्षतपुञ्जादौ पुरुषाः शस्त्रपाणयः ।
स्त्रियश्च गानं कुर्वत्यो जागृयुस्तां निशां पराम् ॥
[5]गृहं धूपाग्निदीपैश्च संयुतं कारयेत्ततः ।
सूतिकाया गृहे शस्त्रं स्थापयेन्मुशलं तथा ॥
[6]सर्षपान् सर्वतो दद्याद् बलिर्देयश्च पुष्कलः ।
विप्रेभ्यश्चैव ताम्बूलदक्षिणादिकमर्पयेत् ॥
[7]हिरण्यवस्त्रशय्यादि यथावित्तं प्रदापयेत् ।
इति कृत्वा ततो देवीं षष्ठीं संप्रार्थयेन्नरः ।
मन्त्रेण वक्ष्यमाणेन सर्वारिष्टनिवृत्तये ॥
[8]गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा ।
तथा ममाप्ययं बालः षष्ठिके रक्ष्यतां नमः ॥
इति मन्त्रेण तां देवीं विघ्नेशादीन् प्रणम्य च ।
गीतवादित्रनिर्घोषैस्तां रात्रिं जागृयान्नरः ॥

(१) विपा. ३०४ पू.; संर. ८४६ नीयास्ता (नीयाश्च). (२) संर. ८४६.

(३) विपा. ३०४ द्वितीयपादे (कुमारं पीडयन्त्यलम्) कुड्य (कुम्भ); संर. ८४६ ता (या).

(४) विपा. ३०४ पाणयः (हस्तकाः) गानं (पानं); संर. ८४६.

(५) विपा. ३०४ पू.; संर. ८४६.

(६) विपा. ३०४ ताम्बूलद (ताम्बूलं द); संर. ८४६-८४७.

(७) विपा. ३०५; संर. ८४७ प्रथमार्धमात्रम्.

(८) विपा. ३०५-३०६.

एवं विधानं यः कुर्यात् षष्ठीप्रीत्यै नरोत्तमः ।
चिरायुर्भविता तस्य शिशुर्नात्र विचारणा ॥

## निबन्धसारे

पञ्चमषष्ठदिनयोर्दिक्पालानामर्चनं बलिहरणं शान्तिसूक्तपाठश्च

[1]जातादिपञ्चमे षष्ठे निशीथे बलिमाहरेत् ।
अर्चयेदष्टदिक्पालान् गीतवाद्यसशस्त्रकैः ॥
[2]कृत्वा जागरणं दीपैः सूक्तैश्च शान्तिपाठकैः ॥
द्वारे द्वितीयभागे तु पुत्तलैश्चापि कज्जलैः ॥

## मुहूर्तगणपतौ

स्तन्यपाने नक्षत्राणि, क्वाथप्राशने मुहूर्तः, पथ्यसेवने मुहूर्तः, पञ्चमे जीवन्त्याः षष्ठे षष्ठीदेव्याश्च पूजनम्, सूतिकास्नाने तिथिवारनक्षत्राणि

[3]जातकर्मोक्तनक्षत्रे श्रवत्रयपुनर्वसू ।
त्यक्त्वा स्वातिं स्तन्यपानं शुभं प्रोक्तं शुभेऽहनि ॥
भेषज्यगदिते धिष्ण्ये वारे दुर्योगवर्जिते ।
आरोग्यहेतवे क्वाथः सूतिकायाश्च तच्छिशोः ॥
अन्नाशनोक्तनक्षत्रे शुभाहे सांशुमालिनि ।
हित्वा रिक्तां च दुर्योगं सूतिकापथ्यमीरितम् ॥
[4]जन्मतः पञ्चमे घस्रे जीवन्त्याः पूजनं निशि ।
षष्ठेऽह्नि षष्ठिका पूज्या गीतैर्जागरणादिभिः ॥
षष्ठी षष्ठदिने देवी पूजनीया निशामुखे ।
शिष्टाचारबलात्तत्र मूलं वेदोऽनुमीयते ॥
[5]हस्ते मृगेऽनुराधायां रोहिण्यां रेवतीद्वये ।
उत्तरात्रितये स्वातौ जीवार्ककुजवासरे ॥
सूतीस्नानं प्रशस्तं स्याद्विहायाऽऽर्द्राश्रवत्रयम् ।
विशाखाभरणीमूलं चित्राख्यं कृत्तिकां मघाम् ।
रिक्तां बुधं शनिं षष्ठीं द्वादशीमष्टमीं तथा ॥

(१) धप्र. ३७; संग. ४४९ पञ्चमे (पञ्चके).

(२) धप्र. ३७; संग. ४४९.

(३) संब. ५९. (४) संब. ६२.

(५) संब. ६७.

## रेणुकारिका:

प्रतिदिनं संध्यायां फलीकरणहोमः, पञ्चमदशमदिनयोर्गणाध्यक्षादिपूजनम्, बालोपद्रवहरजपाभिमर्शने, दशमेऽहनि शुद्धिस्नानम्

[1]जुहुयात्सर्षपांस्तत्र फलीकरणमिश्रितान्।
शण्डामर्का इति द्वाभ्यां प्रतिमन्त्रं पृथग्घुतिः ॥
[2]संध्ययोरुभयोर्द्वे द्वे नित्यहोमादनन्तरम्।
ओत्थानादन्वहं कार्यं संध्ययोः स्थापनादिकम्॥

(१) रेका. ३४ पृ. ११.

(२) रेका. ३५ पृ. ११ ओत्था (उत्था); संग. ४४२ गङ्गाधरकारिकायाम्.

[1]महारक्षा विधातव्याः पञ्चमे दशमेऽहनि॥
पूज्यस्तत्र गणाध्यक्षो गन्धाद्यैर्जातहारिणी।
तं चेत् क्रूरग्रहो बालमुपद्रवति तत्पिता॥
तं प्रच्छाद्योत्तरीयेण मत्स्यजालेन वा स्वके।
अङ्क आधाय जपति मन्त्रं कूर्कुर इत्यमुम्।
मन्त्रं न नामयत्युक्त्वाऽभिमृशेद्बालकं ततः॥
[2]दशमेऽहनि सा स्नायाच्छुद्ध्यर्थं च सबालका॥

(१) रेका. ३८-४१ पृ. १२.

(२) रेका. ४३ पृ. १२; संदी. २३२ (भागः २) (दशमे दिवसे स्नायाच्छुद्ध्यर्थं सा सबालिका॥) मनुः.

# जननशान्तिनिमित्तानि

## हिरण्यकेशिगृह्यशेषसूत्रम्

गोप्रसवशान्तिपूर्वकमुख्यशान्तिनिमित्तानि, शान्तिनिमित्तानि— एकनक्षत्रजननम् , एकलिङ्गत्रिकोत्तरभिन्नलिङ्गप्रसवः , नक्षत्राणि, गण्डान्ताः , कृष्णचतुर्दशी, चन्द्रसूर्यग्रहणे, सिनीवाली, कुहूः , दर्शः , व्यतीपातः , वैधृतिः , रविसंक्रान्तिः , अकालप्रसवः , अतीतकालप्रसवः , विकृतप्रसवः , अमानुषप्रसवः , धूमप्रसवः , सदन्तजननम् , ग्रहसंस्थानविशेषः , यमलजननम् , पशुपक्ष्यादीनामपि दुष्टकालजननं शान्तिनिमित्तम्

[1]मूलाश्लेषाज्येष्ठान्यतमनक्षत्रेष्वतिगण्डे वैधृतौ पातेऽमाविष्टयुपरागादिषु च जनने गोप्रसवशान्तिं विधाय तत्तच्छान्तिं कुर्यात् ॥

[2]एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिश्च तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥

तद्दोषनाशाय तदा प्रशस्तां
शान्तिं च कुर्यादभिषेचनं च ।
संपूज्य ऋक्षप्रतिमां तदग्रे
दानं च कुर्याद्विभवानुरूपम् ॥

[3]सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि ।
मातापित्रोः कुलस्यापि तदाऽरिष्टं महद्भयम् ॥
ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत् ।
तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥

[4]अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः ।
रेवतीसार्पशाक्रान्ते मासाश्च ऋतुसायकाः ॥
अश्विनीमघमूलादौ नाडिकाद्वितयं तथा ।
रेवतीसार्पशाक्रान्ते नाडिकाद्वितयं तथा ॥

(१) हिगृशे. ५।१. (२) हिगृशे. ५।५.
(३) हिगृशे. ५।६. (४) हिगृशे. ५।७.

अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता ।
पूषादिशाक्रपश्चार्धे जननी बाध्यते शिशोः ॥
पितृहा तु दिवाजातो रात्रिजातस्तु मातृहा ।
आत्मधक् संध्ययोर्जातो नास्ति गण्डो निरामयः ॥

सर्वेषां गण्डजातानां परित्यागो विधीयते ।
वर्जयेद्दर्शनं तावत्तच्च षाण्मासिकं भवेत् ॥

[1]कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् ।
चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम् ॥
द्वितीये पितरं हन्ति तृतीये मातरं तथा ।
चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ॥
षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम् ।
तस्मात् सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ॥

[2]ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा भवेत् स्त्रीणामादौ तु ऋतुदर्शनात् ॥
इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिपीडा च दारिद्र्यं शोकश्च सततं भवेत् ॥
शान्तिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया ॥

[3]सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा ।
गवाश्वं महिषी चैव शक्रस्यापि श्रियं हरेत् ॥
ये च सन्ति द्विजाश्चान्ये स्वप्रसादोपजीविनः ।
वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥
कुहूप्रसूतिरत्यर्थं सर्वदोषकरी नृणाम् ।
यस्य प्रसूतिरत्र स्यात्तस्याऽऽयुर्धननाशनम् ॥
सर्वगण्डसमस्तत्र दोषस्तु प्रबलो भवेत् ।
नारीं विनाऽवशेषाणां परित्यागो विधीयते ॥

(१) हिगृशे. ५।९. (२) हिगृशे. ५।१०.
(३) हिगृशे. ५।११.

परित्यागात्तत्र शान्तिं कुर्याद्धीमान् विचक्षणः ।
तत्फलं तत्क्षणार्धेन पुनरेव विलीयते ॥

न त्यजेत् पण्डितो मोहादर्थाद्ज्ञानतोऽपि वा।
तद्योगं नाशयेदाशु स्वयं वा नाशमृच्छति ॥

कल्पोक्तशान्तिः कर्तव्या शीघ्रं दोषापनुत्तये ॥

[1]अथातो दर्शजातस्य मातापित्रोर्दरिद्रता ।
तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि सांप्रतम् ॥

[2]अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डान्तानां च नामानि महादोषकराणि च ॥

दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डे च परिघे वज्रे च यमघण्टके ॥

कालगण्डे मृत्युयोगे दग्धयोगे सुदारुणे ।
तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥

अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य तत्र दैवज्ञं शान्तिं कुर्याद्यथाविधि ॥

[3]अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः ।
वैधृतौ हि व्यतीपाते महादोषोऽभिजायते ॥

कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः ।
संक्रान्तिश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥

दरिद्राणां महादुःखं व्याधिपीडा महद्भयम् ।
अप्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥

स्त्रीणां च शोको दुःखं च सर्वनाशकरं भवेत् ।
शान्तिर्वा पुष्कला चेत् स्यात्तत्र दोषो न कश्चन ॥

गोमुखप्रसवं कुर्यात्(? कृत्वा) शान्तिं कुर्यात् प्रयत्नतः ।
जपाभिषेकदानैश्च होमानपि विशेषतः ॥

[4]अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव धूमप्रसवनास्तथा ॥

(१) हिगृशे. ५।१२. (२) हिगृशे. ५।१३.
(३) हिगृशे. ५।१४. (४) हिगृशे. ५।१५.

अमानुषांश्च खण्डांश्च अज्ञातव्यञ्जनांस्तथा ।
हीनाङ्गानधिकाङ्गांश्च जनयन्ति यदि स्त्रियः ॥

पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥

निर्वासयेत्तान्नृपतिः स्वराष्ट्रात्
स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।
चिकित्सनैर्ब्राह्मणतर्पणैश्च
ततोऽस्य शान्तिं समुपैति पापात् ॥

[1]दन्तजन्मनि बालानां लक्षणं तन्निबोध मे ।
उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ॥

दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ।
मातरं पितरं वाऽथ खादेदात्मानमेव वा ॥

तत्र शान्तिं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥

[2]जातस्य पञ्चमे लग्ने सूर्यादिग्रहसंस्थिते ।
पित्रादीनामरिष्टं तु कुर्वन्ति च यथाक्रमम् ॥

रविश्च पितरं हन्ति मातरं च शशी तथा ।
भ्रातरं भूमिपुत्रस्तु मातुलं चन्द्रजस्तथा ॥

गुरुर्मातामहं तद्वद्भृगुस्तद्वत् पितामहम् ।
शनी राहुः शिशुं हन्ति शिखी भ्रातरमेव च ॥

तद्दोषपरिहारार्थं शान्तिं वक्ष्याम्यशेषतः ॥

[3]त्रिविधा यमलोत्पत्तिर्जायते योषितामिह ।
सुतौ च सुतकन्ये च कन्ये एव तथा पुनः ॥

एकलिङ्गौ विनाशाय द्विलिङ्गौ मध्यमौ स्मृतौ ।
पित्रोर्विरोधिनौ ज्ञेयौ तत्र शान्तिर्विधीयते ॥

(१) हिगृशे. ५।१६.
(२) हिगृशे. ५।१७ ; प्रपा. १७८ मनुः .
(३) हिगृशे. ५।१८ ; गभा. १६५ रोधिनौ (घ्नकरौ) काशीखण्डे.

## कात्यायनगृह्यपरिशिष्टम्

यमलजननं विकृतप्रसवो मूलजननं च शान्तिनिमित्तानि, मूलचरणफलानि, पशूनां दास्याश्च विकृतप्रसवोऽपि शान्तिनिमित्तम्

‡[1]अथातो यमलजनने प्रायश्चित्तं व्याख्यास्यामः। यस्य भार्या गौर्दासी महिषी वडवा वा विकृतं प्रसवेत्, प्रायश्चित्ती भवेत् ॥

[2]अथातो मूलविधिं व्याख्यास्यामः। मूलांशे प्रथमे पितुर्नेष्टो द्वितीये मातुः, तृतीये धनधान्यस्य, चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यात्। मूलनक्षत्रे मूलविधानं कुर्यात् ॥

---

‡ इमे सूत्रे आदर्शपुस्तके नोपलभ्येते। काशीस्थविद्याविलासमुद्रणालयमुद्रितपुस्तकाद्गृहीते। अनयोरुल्लेखः गदाधरभाष्ये 'याज्ञिकाः पठन्ति' इति, अन्येषु ग्रन्थेषु च 'कात्यायनपरिशिष्टम्' इति वर्तते।

(१) पागृ. १।१९ (चौखम्बामुद्रणालयमुद्रितम्); प्रपा. १७८ (अथातो यमलविधिं व्याख्यास्यामो यस्य भार्या गौर्दासी वडवा वा विकृतिं जनयेत्तदा शान्तिं कुर्यात्) कात्यायनगृह्ये; गभा. १६५ अस्य अग्रिमस्य च वचसः 'याज्ञिकाः पठन्ति' इति निर्देशः; शाम. ८० (अथातो यमलजनने विधिं व्याख्यास्यामो यस्य भार्या गौर्वा दासी वा वडवा विकृतिं प्रसवेत् स प्रायश्चित्ती भवेत्) कात्यायनगृह्ये; विपा. ४१५-४१६ (दासी०) प्रसवेत् + (स); संकौ. ९७ प्रायश्चित्तं (प्रायश्चित्तविधिं) (महिषी०) तं प्रसवेत् (तिं प्रसवेत् स) कात्यायनगृह्ये; संग. ५२९.

(२) पागृ. १।२१ (चौखम्बामुद्रणालयमुद्रितम्); गभा. १६७ धान्यस्य (धान्ययोः); विपा. ३८१ मूलविधिं (मूलजातस्य शान्तिविधिं) नेष्टो (नाशो) नक्षत्रे + (जातो) विधानं (शान्तिविधानं) कात्यायनपरिशिष्टम्; ज्योनि. २४१ (मूलस्य प्रथमेंऽशे जातः पितुरनिष्टो द्वितीये मातुस्तृतीये च धनस्य चतुर्थे कुलशोकावह आत्मनः पुण्यभागी स्यात्) कात्यायनसूत्रम्; संग. ५०० कात्यायनपरिशिष्टम्.

## वसिष्ठः

शान्तिनिमित्तानि नक्षत्राणि, गण्डान्तानि, योगाः, पर्वाणि, सदन्तजननम्, पादजननम्, मातापितृजन्मर्क्षादिजननम्, नक्षत्रचरणादिजननफलानि

[1]जनकं जननीं हन्ति भर्तुर्मूलाहिधिष्ण्यजा।
मूलान्त्यपादजा नैव तथाऽऽश्लेषाद्यपादजा ॥

अत्र स्त्रीत्वमविवक्षितम्, सुता वेति पूर्वोदीरितवचनानुरोधात्। विसौ. १६

[2]ज्येष्ठं ज्येष्ठाद्यजो हन्ति द्वितीयेऽप्यथ सोदरम्।
तृतीये मातरं हन्ति स्वयं जातश्चतुर्थके ॥

ज्येष्ठर्क्षे कन्यका जाता हन्ति शीघ्रं धवाग्रजम्।
ज्येष्ठान्त्यपादजातस्तु पितृनाशाय जायते ॥

ज्येष्ठं ज्येष्ठाद्यपादे तु हन्ति बालो न बालिका।
सा बालिका तु मूलर्क्षे पितरं मातरं तथा ॥

वासवे प्रथमे पादे द्वितीये च तृतीयके।
स्वल्पदोष इति प्रोक्तं पितरं हन्ति तुर्यके ॥

वासवर्क्षचतुर्थांशे पुत्री पुत्रस्तु जायते।
पीडारिष्टनिवृत्त्यर्थं शान्तिं कुर्याच्च मूलवत् ॥

[3]नैर्ऋत्यभोद्भूतसुतः सुता वा
क्षिप्रं त्ववश्यं श्वशुरं निहन्ति।
तदन्त्यपादाज्जनिता निहन्ति
नैवोत्क्रमेणाहिभवः कलत्रम् ॥

सर्पेशताराजनिता धवाग्रजं
द्विदैवताराजनिता तु देवरम्।
पुरंदरर्क्षाज्जनितः सुतस्तदा
स्वस्याग्रजं हन्ति न पुत्रिका यदि ॥

---

(१) वसं. ३२।२४२; विसौ. १६.

(२) वसं. ४२।११२-११६.

(३) वसं. ३२।२३९-२४०, ४२।११७-११८ अनयोः शेषस्थलादिनिर्देशः कन्यापरीक्षाप्रकरणे (सं. का. पृ. ५३७) द्रष्टव्याः.

[1]हन्ति ज्येष्ठान्त्यपादोत्थः स्वज्येष्ठं नैव कन्यका।
विप्रेभ्यो गोत्रयं दद्यात्तद्दोषशमनाय वै।
अशक्तो गोद्वयं दद्याद्गामेकां वाऽपि भक्तितः॥

भौजङ्गपौरंदरपौष्णभानां
तदग्रभानां च यदन्तरालम्।
अभुक्तसंज्ञं प्रहरप्रमाणं
त्यजेत् सुतं तत्र भवां सुतां च॥

मूलाद्यपादजनितः पितरं निहन्ति
द्वितीयतः स्वजननीं त्रिपदोऽर्थ-
वृन्दम्।
तुरीयजः शुभकरः फलमेतदेव
वैलोमतो भुजगधिष्ण्यभवस्य
सर्वम्॥

नैर्ऋत्यभौजङ्गमगण्डदोष-
निवारणायाभ्युदयाय नूनम्।
पितामहोक्तां रुचिरां च शान्तिं
प्रवच्मि दैवज्ञहिताय सम्यक्॥

[2]चित्राद्यार्धे पुष्यमध्ये द्विपादे
पूर्वाषाढाधिष्ण्यपादे तृतीये।
जातः पुत्रश्चोत्तराद्ये विधत्ते
पित्रोर्भ्रातुः स्वस्य चापि प्रणाशम्॥

[3]द्विमासं चोत्तरादोषः पुष्ये चैव त्रिमासकः।
पूर्वाषाढाऽष्टमे मासि चित्रा षाण्मासिकं फलम्॥

[1]नवमासं तथाऽऽश्लेषा मूले चाष्टकवर्षकम्।
ज्येष्ठा पञ्चदशे मासि पुत्रदर्शनवर्जिता॥

[2]ज्येष्ठान्त्यपादघटिकामितमेव केचि-
न्मूलं ह्यभुक्तमपरे पुनरामनन्ति।
मूलाद्यपादघटिकाद्वितयेन सार्ध-
मष्टौ समा परिहरेदिह जन्मभाजम्॥

अभुक्तमूलव्यतिरिक्तगण्ड-
दोषेषु शान्तिं विदधीत धीमान्।
शास्त्रोक्तरीत्या खलु सूतकान्ते
मासे तृतीयेऽप्यथ वत्सरान्ते॥

मातृगण्डे सुते जाते सूतकान्ते विचक्षणाः।
कुर्याच्छान्तिं तादृशे वा तद्दोषस्यापनुत्तये॥

मूलाद्यपादो दिवसे यदि स्यात्
तज्जः पितुर्नाशनकारणं स्यात्।
द्वितीयपादो यदि रात्रिभागे
तदुद्भवो मातृविनाशकः स्यात्॥

मूलाद्यपादो यदि रात्रिभागे
तदात्मनो नास्ति पितुर्विनाशः।
द्वितीयपादो दिनगो यदि स्या-
न्न मातुरल्पोऽपि तदाऽस्ति दोषः॥

[3]पुष्ये कर्कटके चापे जलांशे पितृमृत्युके।
पुत्रो जातो यदि भवेन्मातरं स जिघांसति॥

पूर्वाषाढे च पुष्ये च पितरं मातरं सुतम्।
मातुलं च तथा हन्यात् प्रथमाद्यंशजः
क्रमात्॥

अवयोगे कष्टदिने विष्टिवैधृतिसंयुते।
गण्डव्याघातशूले च परिघे चार्धपूर्वके॥

---

(१) वसं. ४२।११९–१२२.

(२) वसं. ४२।१२३ द्यार्धे (द्यर्धे) चतुर्थपादे (मातापित्रोर्भ्रातरं चाऽऽत्मनाशम्); गभा. १६६ चतुर्थपादे (मातापित्रोर्भ्रातरं बाल्नाशम्) नृसिंहप्रसादे; सिन्धु. ८५४ द्यार्धे (द्यर्धे) शेषं सर्वं गभावत्; संकौ. ९३ नृसिंहप्रसादे; कुभ. ८५१–८५२ द्यार्धे (द्यर्धे) मध्ये द्वि (मध्यद्वि) नृसिंहप्रसादे.

(३) वसं. ४२।१२४ मासं चो (मासस्यो); गभा. १६६ मासकः (मासिकः) नृसिंहप्रसादे; सिन्धु. ८५४ नृसिंहप्रसादे.

(१) वसं. ४२।१२५ श्लेषा (श्लेषां) कवर्षकम् (मवर्षकम्) वर्जिता (वर्जिताः); गभा. १६६ नृसिंहप्रसादे; सिन्धु. ८५४–८५५ नृसिंहप्रसादे.

(२) वसं. ४२।१२६–१३०.

(३) प्रपा. १७९.

चन्द्राष्टके नैधने च तत्र विष्टिसमन्विते ।
बलवाञ् जायते दोषस्तिष्यतोयसमुद्भवे ।
शान्तिं तस्य प्रवक्ष्यामि गण्डदोषप्रशान्तये ॥

[1]जातापत्यं पितरमथवाऽऽत्मान-
माद्ये च पादे
युग्मे धात्रीं हरति च धनं
भ्रातरं वा तृतीये ।
पादे तुर्ये शुभमतितरां राज्य-
साम्राज्यलक्ष्मीं
मूले जातं वितरति तथा
काद्रवेये प्रतीपम् ॥

[2]व्यतीपातेऽङ्गहानिः स्यात्परिघे मृत्युमादिशेत् ।
वैधृतौ पितृहानिः स्यान्नष्टेन्दावन्धतां व्रजेत् ॥

व्यतीपातवैधृतिसंक्रमजन्मनि गोमुखप्रसवं कृत्वा शान्तिः कार्या, 'अथातः संप्रवक्ष्यामि शौनकः शान्तिमुत्तमाम् । कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः ॥ संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः । गोमुखप्रसवं कृत्वा कुर्याच्छान्तिं प्रयत्नतः ॥' इति शौनकोक्तेः । नष्टेन्दाविति । चतुर्दशीविद्धा अमा सिनीवाली, प्रतिपद्विद्धा कुहूः, वेधद्वयरहितो दर्शः पृथक्शान्तिनिमित्तप्रविष्टानि । तदुक्तम्— 'खण्डामायां सिनीवालीकुहूजननशान्तिः, अखण्डायां तु दर्शजननशान्तिः' इति । ज्योतिषे तु 'दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूः स्मृता ।' इति वाक्ये नष्टचन्द्रेत्यस्य अदृष्टचन्द्रेत्यर्थः । तथा च दर्शनयोग्यचन्द्रोपलक्षिता सिनीवाली, दर्शनायोग्यचन्द्रोपलक्षिता कुहूः, सूर्योदयोत्तरप्रतिपदघटीषु(?) प्रवृत्त्या दर्श इति भेद उक्तः । कृभ. ८५५

[3]मूले समूलनाशः स्यात् कुलनाशो धृतौ भवेत् ।
विकृताङ्गश्च हीनश्च संध्ययोरुभयोरपि ॥

(१) ज्योनि. २४१.

(२) गभा. १६६ ; सिन्धु. ८५५.

(३) गभा. १६६ धृतौ ( यतो ) इ्गाश्च हीनश्च ( क्गो च हीने च ) ; सिन्धु. ८५६.

[1]पर्वण्यपि प्रसूतौ च सर्वारिष्टभयप्रदः ।
तद्वत् सदन्तजातश्च पादजातस्तथैव च ॥
[2]विपरीतप्रसूतौ तु नाभिनालेन वेष्टितः ।
राष्ट्रस्य नृपतेश्चैव स्वस्यापि च विनाशकः ॥
[3]तस्माच्छान्तिं प्रकुर्वीत ग्रहाणां क्रूरचेतसाम् ॥
[4]पित्रोस्तु जन्मकर्मर्क्षे जातस्तु पितृमातृहृत् ।
जन्मर्क्षांशे च तल्लग्ने जातः सद्यो मृतिप्रदः ॥

## वृद्धवसिष्ठः

अभुक्तमूललक्षणं तज्जननफलं च

[5]ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम् ।
अभुक्तमूलमित्याहुस्तत्र जातं शिशुं त्यजेत् ॥

केचित् ज्येष्ठान्त्यं मूलाद्यं च पादमभुक्तमूलमित्याहुः । गभा. १६६

## नारदः

जननदूषकाणि नक्षत्राणि, नक्षत्रगण्डान्तानि, अभुक्तमूलम्, तिथिगण्डान्तानि, लग्नगण्डान्तानि, तेषां फलानि फलकालाश्च

[6]सुतः सुता वा नियतं श्वशुरं हन्ति मूलजा ।
तदन्त्यपादजा नैव न चाऽऽश्लेषाद्यपादजा ॥
[7]ज्येष्ठान्त्यपादजो ज्येष्ठं हन्ति बालो न बालिका ।
बालिका मूलऋक्षे तु मातरं पितरं तथा ।
ऐन्द्री धवाग्रजं हन्ति देवरं तु द्विदैवजा ॥

(१) गभा. १६६ प्रदः ( प्रदा ) ; सिन्धु. ८५५.

(२) सिन्धु. ८५५.

(३) गभा. १६६ ; सिन्धु. ८५५.

(४) संग. ५१२.

(५) गभा. १६६ चतुर्थपादे ( जातं तत्र विवर्जयेत् ) बृहद्वसिष्ठः ; सिन्धु. ८५२ ; विपा. ३३३ गभावत् ; ज्योनि. २४० शिशुं त्यजेत्.( त्यजेच्छिशुम् ) ; संग. ४६९ शिशुं त्यजेत् ( परित्यजेत् ) रत्नसंग्रहे.

(६) ज्योना. २७।१५३–१५४. शेषाः स्थलादिनिर्देशाः कन्यापरीक्षाप्रकरणे ( सं. का. पृ. ५४३ ) द्रष्टव्याः .

(७) ज्योना. २७।१५४–१५५ ; विसो. १६ पादजो ( पादजा ) धवाग्र ( पत्यग्र ) द्वितीयार्धे नास्ति ; ज्योनि. २४५ तृतीयपादे ( न बालिका तु मूलर्क्षे ) तृतीयार्धे नास्ति.

[1]तिथ्यंशे पञ्चमे जातौ श्वशुरघ्नौ नरस्त्रियौ ।
श्वश्रूघ्नौ चाष्टमे मूलस्यैवं व्यस्तं तु सार्पभे ॥
[2]अभुक्तमूलजं पुत्रं पुत्रीं वाऽपि परित्यजेत् ।
अथवाऽष्टाब्दकं तातस्तन्मुखं नावलोकयेत् ॥
मूलाद्यपादजो हन्ति पितरं तु द्वितीयजः ।
मातरं तु तृतीयोऽर्थं सर्वस्वं तु चतुर्थजः ॥
¶[3]दिवा जातस्तु पितरं रात्रौ तु जननीं तथा ।
आत्मानं संध्ययोर्हन्ति नास्ति गण्डो निरामयः ॥
[4]यो ज्येष्ठामूलयोरन्तरालप्रहरजः शिशुः ।
अभुक्तमूलजः सार्पमघानक्षत्रयोरपि ॥
विधेयं शान्तिकं तत्र गण्डे दोषापनुत्तये ।
अरिष्टं शतधा याति सुकृते शान्तिकर्मणि ॥
तस्माच्छान्तिं प्रकुर्वीत प्रयत्नाद्विधिपूर्वकम् ।
वत्सरात् पितरं हन्ति मातरं तु त्रिवर्षतः ॥
धनं वर्षद्वये चैव श्वशुरं नववर्षके ।
जातं बालं वत्सरेण वर्षैः पञ्चभिरग्रजम् ॥
शालकं चाष्टभिर्वर्षैरनुक्तान् हन्ति सप्तभिः ॥
[5]पूर्णानन्दाख्ययोस्तिथ्योः संधिर्नाडीद्वयं तथा ।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥
[6]कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः ।
गण्डान्तमन्तरालं स्याद्धटिकार्धं मृतिप्रदम् ॥

¶ अन्यस्मिन्नादर्शपुस्तके अस्य श्लोकस्य स्थाने एवं-रूपः श्लोको विद्यते– 'शुभं स्यादश्वसर्वेषामात्मनः श्वशुरस्य च । तथैवाभुक्तपितृभ्यः पार्श्वतः पादयोरपि ॥' ।

(१) ज्योनि. १६०.

(२) ज्योना. ३६।२।३३–३४.

(३) ज्योना. २७।१५२–१५३ गण्डो निरामयः ( गण्डे विपर्ययः ), ३६।२।३५.

(४) ज्योना. ३६।२।३६–४०.

(५) गमा. १६६ ज्योतिर्निबन्धे ; विपा. ४०३ द्विषु ( द्विकम् ) ; संको. ९३ संधिर्ना (संधिना) ज्योतिर्निबन्धे.

(६) गमा. १६६ रालं स्याद्ध ( रं कालं घ ) ज्योतिर्निबन्धे ; विपा. ४०४ ; संको. ९३ ज्योतिर्निबन्धे ; संग. ५१४ ज्योतिर्निबन्धे.



( १ ) केचित् ज्येष्ठान्त्यं मूलाद्यं च पादमभुक्तमूलमित्याहुः । गमा. १६६

( २ ) पूर्णाः पञ्चमीदशमीपञ्चदश्यः । नन्दा एतदुत्तराः षष्ठ्याद्याः । † संको. ९३

[1]ज्येष्ठोत्पन्ना नरा नार्यो घ्नन्ति चन्द्रे बलोज्झिते ।
कुलवृद्धं पितुर्मातुः पक्षजं तु दिवा निशि ॥
ज्येष्ठाद्यपादजो वृद्धं बन्धुवर्गं द्वितीयजः ।
धनं तृतीयजो हन्ति तथाऽऽत्मानं चतुर्थजः ॥

## वृद्धनारदः

जननदूषकनक्षत्रगण्डान्तानि तत्फलं च

[2]कन्यका देवरं हन्ति विशाखायां समुद्भवा ।
चैत्रगण्डोद्भवा कन्या श्वशुरघ्नीति केचन ॥
न हन्ति देवरं कन्या तुलामिश्रद्विदैवजा ।
तदन्त्यपादजा त्याज्या दुष्टा वृश्चिकपुच्छजा ॥

## भारद्वाजः

जननदूषकं ज्येष्ठानक्षत्रं तदंशफलानि च

[3]ज्येष्ठादौ मातृजननीं मातामहं द्वितीयके ।
तृतीये मातुलं हन्ति चतुर्थे जननीं तथा ॥
आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् ।
सप्तमे कुलनाशः स्यादष्टमे ज्येष्ठसोदरः ।
नवमे श्वशुरं हन्ति सर्वस्वं दशमे तथा ॥

## च्यवनः

जननदूषकमभुक्तमूलं बालकपरित्यागकालश्च

[4]अभुक्तमूलसंभवं परित्यजेच्च बालकम् ।
समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ॥

† शेषं गमावत् ।

(१) ज्योनि. २४५. (२) ज्योनि. १५९.

(३) संग. ५०९.

(४) ज्योनि. २४० ; संग. ४६९ ज्योतिर्निबन्धे.

## गर्गः

गोप्रसवशान्तिनिमित्तानि, मुख्यशान्तिनिमित्तानि—सदन्तजननम्, कृष्णचतुर्दशी, सिनीवाली, कुहूः, नक्षत्राणि, तिथिनक्षत्रलग्नगण्डान्तानि, योगाः, विष्टिः, अकालप्रसवः, कालातीतप्रसवः, विकृतप्रसवः, धूमप्रसवः, भिन्नजातिप्रसवः, अखण्डप्रसवः, अज्ञातलिङ्गप्रसवः, तत्तद्दुष्टकालफलानि, पशुपक्ष्यादीनां विकृतादिप्रसवोऽपि शान्तिनिमित्तम्, निमित्तविशेषेषु दानशान्तिसमुच्चयः

**[1]पित्ररिष्टे सुतारिष्टे मात्ररिष्टे तथैव च ।**
**प्रायश्चित्तं तदा कुर्यात्तत्तद्दोषस्य शान्तये ॥**

**[2]पूषाश्विनोर्गुरौ सार्पमघाचित्रेन्द्रमूलभे ।**
**एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥**

(१) तादृशनक्षत्रोत्पत्त्या सूचिते पित्राद्यरिष्टे प्रायश्चित्तमित्यत्रापि तत्तत् अन्वेति देहलीदीपवत् । तत्तद्दोषशान्त्यै तत्तत्प्रायश्चित्तं कुर्यादित्यर्थः ।

$ शाम. ५९–६०

(२) पूषा रेवती । अश्विनी प्रसिद्धा । गुरुः पुष्यः । सर्पः अश्लेषा । मघा प्रसिद्धा चित्रा च । इन्द्रो ज्येष्ठा । मूलं प्रसिद्धम् । एषु नक्षत्रेषु जातस्येत्यर्थः ।

¶ विपा. ३१३

(३) यन्नक्षत्रादावुत्पत्त्या पित्राद्यरिष्टं सूच्यते तद्दोषशान्तये गोमुखप्रसवसंज्ञं प्रायश्चित्तं कुर्यादित्यर्थः । एवं सति 'पूषा...' इति गर्गवाक्येन 'पित्ररिष्टे' इत्यनेन प्राप्तस्य मूलादौ पुनर्विधानं यत्र मूलादेश्चतुर्थपादादौ न दोषस्तत्रापि तत्प्राप्त्यर्थम् । तथाशब्दश्च तत्तन्नक्षत्रादिशान्तिसमुच्चायकः । पुष्यनक्षत्रे तु गोप्रसवमात्रम्, 'गुरौ' इत्युक्तेः, न तु तदन्या काचन शान्तिः, अनुक्तत्वात् ।

कुभ. ८५०

**[1]सदन्तजननेऽपि स्याच्छान्तिर्दोषापनुत्तये ।**
**दोषोत्पत्तिं विविच्याथ कार्या शान्तिर्यथाक्रमम् ॥**

**[2]कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् ।**
**चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम् ॥**

दशघटिकात्मक एको भागः । तत्र आद्यो भागः शुभः ।

विपा. ३२३

**[3]द्वितीये पितरं हन्ति तृतीये मातरं तथा ।**
**चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ॥**
**[4]षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम् ।**
**तस्मात् सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ॥**
**[5]सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा ।**
**गजाऽश्वा महिषी चैव शक्रस्यापि श्रियं हरेत् ॥**

---

$ संकौ., संव. शामवत् ।

¶ संग. विपावत् ।

(१) **प्रपा. १६६** पूर्वार्धे ( मात्ररिष्टे पित्ररिष्टे आत्मारिष्टे तथैव च । ) ; **शाम.** ५९ ; **विपा.** ३१३ षस्य शा (षोपशा) ; **ज्योनि.** २४८–२४९ ; **संकौ.** ६३ तदा (ततः) ; **संग.** ४६२ ; **संव.** ६७ विपावत् संकौवत् च ; **कुभ.** ८५० संकौवत् .

(२) **प्रपा. १६६** न्द्रमूलभे । एषु ऋक्षेषु ( न्दुमूलके । ऋक्षेष्वेतेषु) ; **शाम.** ६० सार्प (सर्प) ; **विपा.** ३१३ सार्पम (सर्पे म) ; **ज्योनि.** २४९ नोर्गुरौ (नां गुरोः) ; **संकौ.** ६३ पूषाश्विनो (पौष्णाश्विन्यो) ; **संग.** ४६२ नोर्गुरौ (नौ गुरौ) ; **संव.** ६७ संगवत् शामवत् च ; **कुभ.** ८५० शामवत् .

(१) **संव.** ६७.

(२) **प्रपा.** १६७ ; **गभा.** १६६ तृतीयपादे (कृष्णां चतुर्दशीं षोढा) उत्त. ; **शाम.** ६१ दादौ (दाद्यं) ; **सिन्धु.** ८५५ सर्वं गभावत् ; **विपा.** ३२३ ; **संकौ.** ६५ ; **संग.** ५२२ तृतीयपादे (चतुर्दश्यां तु षड्भागं).

(३) **प्रपा.** १६७ ; **गभा.** १६६ मातरं तथा (हन्ति मातरम् ) ; **शाम.** ६१ तथा (स्मृतम् ) ; **सिन्धु.** ८५६ गभावत् ; **विपा.** ३२३ नाशनम् ( नाशकः ) ; **संकौ.** ६५ ; **संग.** ५२२.

(४) **प्रपा.** १६७ ; **गभा.** १६६ हानिः (नाशः) पू. ; **शाम.** ६१ ; **सिन्धु.** ८५६ गभावत् ; **विपा.** ३२३ ; **संकौ.** ६५ ; **संग.** ५२२–५२३.

(५) **प्रपा.** १६८ ऽश्वा म (श्वम) ; **शाम.** ६२ ; **विपा.** ३२६ ; **संकौ.** ६७ ; **संग.** ५२४ प्रपावत् .

[1]ये सन्ति सकलाश्चान्ये स्वप्रसादोपजीविनः ।
वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥
[2]कुहूप्रसूतिरत्यर्थं सर्वदोषकरी भवेत् ।
यस्य प्रसूतिरेतेषां तस्याऽऽयुर्धननाशनम् ॥
[3]सर्वगण्डसमस्तत्र दोषस्तु प्रबलो भवेत् ।
शान्तिं विना विशेषेण परित्यागो विधीयते ।
परित्यागात्तत्र शान्तिं कुर्याद्धीमान् विचक्षणः ॥

परित्यागादिति ल्यब्लोपे पञ्चमी । परित्यागं कृत्वेत्यर्थः । ¶ प्रपा. १६८

[4]तत्फलं तत्क्षणार्धेन पुनरेवानुपालनम् ।
न त्यजेत् पण्डितो मोहादर्थादज्ञानतोऽपि वा ॥
[5]तद्योगं नाशयेत् किंचित् स्वयं वा नाशमश्नुते ।
कल्पोक्तशान्तिः कर्तव्या शीघ्रं दोषापनुत्तये ॥
[6]अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः ।
रेवतीसर्पशक्रान्ते मासाश्च ऋतुसायकाः ॥

[1]अश्विनीमघमूलादौ नाडिकाद्वितयं तथा ।
रेवतीसर्पशक्रान्ते नाडिकाद्वितयं तथा ॥
[2]अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता ।
पूषाहिशक्रपश्चार्धे जननी बाध्यते शिशोः ॥
[3]पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा ।
आत्महा संध्ययोर्जातो नास्ति गण्डे निरामयः ॥

(१) शक्रः ज्येष्ठा । सर्पः अश्लेषा । मासाः द्वादश घटिकाः, ऋतुः षट्, सायकाः पञ्च दुष्टा इत्यर्थः। दिवादिजननमपि एष्वेव नक्षत्रेषु दुष्टमित्यवगन्तव्यम्, तस्यैव प्रकरणाद्गण्डशब्दनिर्देशाच्च । विपा. ४०२

(२) पूषा रेवती । अहिः आश्लेषा । शाक्रं ज्येष्ठा । दिवाजातो दिवा गण्डान्ते जात इति यावत् । ९१

अत्र चाश्विन्या( दीनामा )दिभागे त्र्यादिसंख्याः रेवत्यादीनामन्त्यभागे च द्वादशादिसंख्या घटिका दुष्टाः। तत्तदाद्यान्त्यभागस्थे द्वे द्वे घटिके दुष्टतरे । अश्विन्याद्यादिभागो दिवा, रेवत्याद्यन्त्यभागो रात्रौ दुष्टतमः । तत्रापि द्वे द्वे घटिके अतिदुष्टे । ¶ संकौ. ९२

---

¶ शाम. प्रपावत् ।

(१) प्रपा. १६८ ; शाम. ६२ लाश्चान्ये स्व (लाः पश्चात्तत् ); विपा. ३२६ ; संकौ. ६७ ; संग. ५२४.

(२) प्रपा. १६८ भवेत् (महत्) ; शाम. ६३ भवेत् (स्मृता) ; विपा. ३२७ यस्य प्र (कुहूप्र) ; संकौ. ६७ करी भवेत् (करा स्मृता) ; संग. ५२४.

(३) प्रपा. १६८; शाम. ६३ शान्तिं विना वि (तत्र शान्तिवि) ; विपा. ३२७ द्धीमान् ( द्धोमाद् ); संकौ. ६७ द्धीमान् (दिमां); संग. ५२४ द्धीमान् (द्धोमं).

(४) प्रपा. १६८ पालनम् (पालने) ; शाम. ६३ तत्फलं (तत्कालं) पाल (लेप) ; विपा. ३२७ पू. ; संकौ. ६७ ; संग. ५२४ पू.

(५) प्रपा. १६८; शाम. ६३; विपा. ३२७ ; संकौ. ६७ गं ना ( गान्ना ) ; संग. ५२४.

(६) प्रपा. १७४; शाम. ७८ षट्कनवनाडिकाः ( वेदनवनाडिका ) चतुर्थपादे ( मासरुद्ररसाः क्रमात् ) ; विपा. ४०१ सर्पशक्रा ( शक्रसर्पा ) ; संकौ. ९१ सर्पशक्रा ( सार्पशाक्रा ) पारिजाते ; संग. ५१४ ( अश्विनीमघमूलादौ त्रिवेदनवनाडिकाः । रेवतीशाक्रसार्पान्त्यमासशक्रशिवास्त्यजेत् ॥ ) ज्योतिःसागरे ; कुम. ८४९ संकौवत् .

¶ कुम. संकौगतम् ।

(१) प्रपा. १७४ ; संप्र. १९८ द्वितीयपादे ( त्रिषट्कं नव नाडिकाः ) नवनीतारिष्टे ; शाम. ७८ पू. ; विपा. ४०२ सर्पशक्रा ( शक्रसर्पा ) ग्रन्थान्तरे ; संकौ. ९१ उत्तरार्धे ( रेवतीसार्पशाक्रान्ते नाडिकाद्वयमेव हि । ) पारिजाते ; संग. ४४६ द्वितीयपादे (त्रिषट्कनवनाडिकाः ) नवनीतारिष्टे ; कुम. ८४९ पू.

(२) प्रपा. १७४ ध्यते पि ( धते पि ) ; संप्र. १९८ नवनीतारिष्टे ; शाम. ७८ हिशक्र ( दिसर्प ) ; विपा. ४०२ क्रमेण गर्गः ; संकौ. ९१ शक्र ( शाक्र ) पारिजाते ; संग. ४४६ वीरमित्रोदये; कुम. ८४९ शक्रप (शाक्रे प).

(३) प्रपा. १७४ ; संप्र. १९८ आत्महा ( आत्मध्रुक् ) गण्डे ( गण्डो ) नवनीतारिष्टे ; शाम. ७८ ; विपा. ४०२ आत्महा ( आत्मध्रुक् ) क्रमेण गर्गः ; संकौ. ९१ आत्महा ( आत्मघ्नः ) पारिजाते ; संग. ४४६ रात्रिजात ( रात्रौ जात ) आत्महा ( आत्मनः ) गण्डे ( गण्डो ) वीरमित्रोदये ; कुम. ८४९ संकौवत् .

[1]**सर्वेषां गण्डजातानां परित्यागो विधीयते ।**
**वर्जयेद्दर्शनं रावं तच्च षाण्मासिकं भवेत् ॥**

(१) अन्ये तु होमपूर्वकदानेन तद्दर्शनं शुभमित्याहुः । निप. २४४

(२) श्रावं श्रवणम् । षण्मासपर्यन्तं तदुत्पत्तिमपि न शृणुयादित्यर्थः । विपा. ४०५

(३) तच्च वर्जनम् । संकौ. ९१

[2]**अभुक्तेतरजातस्य सूतकान्त्यदिनेऽथवा ।**
**शान्तिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत् ॥**

[3]**तिथिगण्डे त्वनड्वाहं नाक्षत्रे धेनुरुच्यते ।**
**काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥**

[4]**आद्यभागे पितुर्गण्डे त्रयाणामभिषेचनम् ।**
**इतरत्र शिशोर्मातुरभिषेकं च कारयेत् ॥**

---

(१) प्रपा. १७४ ; निप. २४४ (=) उत्तरार्धे (जातस्यादर्शनं तावद्यावत् पूर्णं समाष्टकम् ॥) ; गभा. १६६–१६७ रावं (श्राद्धं) रत्नसंग्रहे ; संप्र. १९८ नवनीतारिष्टे ; शाम. ७८–७९ रावं तच्च (यावद्वर्षे) ; सिन्धु. ८५० रावं (श्रावं) रत्नसंग्रहे नवनीतारिष्टे ; विपा. ४०२ गण्ड (द्वन्द्व) रावं तच्च षाण्मासिकं (तावद्यावत्षाण्मासिको) क्रमेण गर्गः : ४०५ रावं (श्रावं) उत्तरगार्ग्यः ; संकौ. ९१ सिन्धुवत्, पारिजाते ; संग. ४४६ रावं तच्च (तावद्यावत्) वीरमित्रोदये : ५१५ वर्जयेद्द (तातेन द) शेषं विपावत्, उत्तरगर्गः .

(२) प्रपा. १७५ कान्त्य (कान्त) एतदाद्यष्टश्लोक्याः 'उत्तरगार्ग्योक्ताः' इति निर्देशः, एवमेव विधानपारिजाते संस्कारगणपतौ च द्रष्टव्यम् ; विपा. ४०३ ; संकौ. ९२ ; संग. ५१६ प्रपावत् ; कुम. ८५०–८५१ (=).

(३) प्रपा. १७५ ; गभा. १६७ (=) नाक्ष (नक्ष) ; सिन्धु. ८५०–८५१ गभावत्, उत्तरगार्ग्यः ; विपा. ४०४ द्वितीयपादे (नक्षत्रे धेनुमेव च) गण्डदोषो (दद्याद्दोषो) ; संकौ. ९२ गभावत् ; संग. ५१५ त्वनड्वाहं ना (त्वन्नदानं न).

(४) प्रपा. १७५ ; विपा. ४०४ र्गण्डे (र्गण्डं) ; संकौ. ९२–९३ ; संग. ५१५ विपावत् .

[1]**उत्तरे तिलपात्रं स्यात् पुष्ये गोदानमुच्यते ।**
**अजाप्रदानं त्वाष्ट्रे च पूर्वाषाढे च काञ्चनम् ॥**

[2]**उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च ।**
**कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकारजं बुधः ॥**

(१) त्वाष्ट्रं चित्रानक्षत्रम् । नक्षत्राकारत इत्यत्र ल्यब्लोपे पञ्चमी । नक्षत्राकारं विधायेत्यर्थः । * विपा. ४०४

(२) (त्रयाणामिति) मातापित्रोः शिशोश्चेत्यर्थः । (शिशोर्मातुरिति) द्वयोरेवेत्यर्थः । एवं चोदाहृतगार्ग्यस्मृतावुत्तरादौ तिथिगण्डादौ च दानशान्त्योर्वक्ष्यमाणवचनालोचनेन समुच्चयप्राप्तौ 'अभुक्तेतरजातस्य' इत्यनेन सर्वनिषिद्धैतत्कालानामभुक्तशब्दोक्तपूर्वार्धेतरोत्तरार्धजन्मनि निमित्ते शान्तिरेव, न बहिःप्रयोगं दानमिति बोध्यते । पूर्वार्धजन्मनि तु दानमप्याह– तिथिगण्ड इति । नक्षत्रे नक्षत्रगण्डे ज्येष्ठामूलसंध्यादावित्यर्थः । न तूत्तरादौ, तत्र दानान्तरस्य वक्ष्यमाणत्वात् । अत्र च निमित्तानन्तरं नालच्छेदात् पूर्वं गण्डोत्तरार्धाधिकरणकं दानं कार्यमिति दर्शयितुं सप्तमीनिर्देशः, पूर्वोत्तरवाक्यपर्यालोचनेनैव निमित्तलाभात् । उत्तरार्धात् पूर्वार्धे दोषाधिक्यमेव दर्शयितुमाह– आद्यभाग इति । एवम् 'उत्तरे तिलपात्रं स्यात्' इत्यादावपि पूर्वार्धजन्मनि $उत्तरादेः दानानि कर्तव्यानीत्युच्यते । अत एव शान्तिविधौ 'प्रयत्नेन' इति पूर्वोत्तरार्धयोर्जन्मनि शान्तिर्नियमेन

---

* संग. विपागतम् ।

$ अत्र 'उत्तरार्धे' इत्यादर्शपुस्तकमुद्रणमशुद्धम् । 'उत्तरादेः पूर्वार्धजन्मनि' इति कृष्णंभट्टी ।

(१) प्रपा. १७५ ; गभा. १६७ (=) त्वाष्ट्रे च (त्वाष्ट्रे स्यात्) ; सिन्धु. ८५१ गभावत्, उत्तरगार्ग्यः ; विपा. ४०४ अजा (आज्य) ; संकौ. ९३ ; संग. ५१६ विपावत् .

(२) प्रपा. १७५ रजं (रकं) ; गभा. १६७ (=) कारजं (करजां) ; सिन्धु. ८५१ तिष्य (पुष्य) उत्तरगार्ग्यः ; विपा. ४०४ रजं (रतो) ; संकौ. ९३ चित्रासु (चित्रर्क्षे) ; संग. ५१६.

कर्तव्येति ज्ञापनार्थं नक्षत्राकारेति पदं †रूपमित्यनेन संबध्यते । ‡ संकौ. ९३

[1]अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डान्तानां च नामानि महादोषकराणि च ॥
[2]दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥
[3]कालगण्डे मृत्युयोगे दग्धयोगे सुदारुणे ।
तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥
[4]अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य तत्र दैवज्ञं शान्तिं कुर्याद्यथाविधि ॥

तस्मिन् पापयुते सति इति विष्ट्यादेरपि निषिद्धांशयुते जन्मकाले सति दोषाधिक्यमित्याशयः । ततश्च प्रतिप्रसूतेर्भद्रापुच्छादौ जन्मनि स्वल्पदोष इत्यर्थः ।

‡ संकौ. ९४

[5]नाक्षत्रं मातरं हन्ति तिथिजं पितरं तथा ।
लग्नोत्थं जातकं हन्ति तस्माद्गण्डान्तमुत्सृजेत् ॥

[1]सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि ।
मातापित्रोः कुलस्यापि तदाऽनिष्टं महद्भवेत् ॥
[2]ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत् ।
तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥
[3]अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा ॥
[4]अमानुषा अखण्डाश्च अज्ञातव्यञ्जनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥

अखण्डाः पिण्डीभूताः । $ विपा. ४२२

[5]पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
[6]निर्वासयेत्तान्नृपतिः स्वराष्ट्रात्
स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।
चिकित्सनैर्ब्राह्मणतर्पणैश्च
ततोऽस्य शान्तिं समुपैति पापम् ॥

---

† 'रूपं कृत्वा' इत्यध्याहृतरूपपदार्थेनेत्यर्थः । "रूपं कृत्वा' इति शेषः" इति कृष्णंभट्टी ।

‡ कुम. संकौवत् ।

(१) प्रपा. १७५ ; संप्र. १९७ उत्तरगार्ग्यः ; विपा. ४०५ राणि च ( राणि वै ) ; संकौ. ९४ ; संग. ४४६, ४६१, ५१७ गण्डान्तानां ( गण्डान्तानि ) ; कुम. ८६०.

(२) प्रपा. १७५ ; संप्र. १९७ उत्तरगार्ग्यः ; शाम. ७९ शूले (मूले) ; विपा. ४०५ ; संकौ. ९४ ; संग. ४४६, ४६१ : ५१७ शामवत् ; कुम. ८६०.

(३) प्रपा. १७५ ; संप्र. १९७ (दग्धयोगे०) उत्तरगार्ग्यः ; शाम. ७९ दग्ध (दुष्ट) ; विपा. ४०६ ; संकौ. ९४ सुदा (च दा) ; संग. ४४६ गण्डे ( योगे ) : ४६१ गण्डे (दण्डे) : ५१७ ; कुम. ८६० पूर्वार्धे (कामगण्डे मृत्युरोगे दग्धयोगे च दारुणे । ).

(४) प्रपा. १७५ ; संप्र. १९७ वज्ञं (वज्ञः) उत्तरगार्ग्यः ; शाम. ७९ कुर्याद्य (कृत्वा य) ; विपा. ४०६ दैवज्ञं (धर्मज्ञः) ; संकौ. ९४ तत्र पा (तस्मिन्पा) पू. ; संग. ४४६, ५१७ ; कुम. ८६० सर्वे संकौवत् .

(५) ज्योनि. २३९.

$ संग. विपावत् ।

(१) गभा. १६८ ; शाम. ७९ शान्तिसर्वस्वे ; सिन्धु. ८६० शान्तिसर्वस्वे ; विपा. ४१७ निष्टं (रिष्टं) ; संकौ. ९८ शान्तिसर्वस्वे ; संग. ५३४ विपावत् .

(२) गभा. १६८ वा सुमह (चैवु मह) ; शाम. ७९ शान्तिसर्वस्वे ; सिन्धु. ८६० शान्तिसर्वस्वे ; विपा. ४१७ प्रथमपादे ( धनहानिर्ज्येष्ठनाशो ) ; संकौ. ९८ पू., शान्तिसर्वस्वे ; संग. ५३५ विपावत् .

(३) प्रपा. १७८ ( = ) ; शाम. ८० ( = ) धूम (युग्म) ; विपा. ४२२ पू. ; संग. ५३२.

(४) प्रपा. १७८ (=) (अमानुषांश्च खण्डांश्च अज्ञातव्यञ्जनांस्तथा । हीनाङ्गानधिकाङ्गांश्च जनयन्ति यदि स्त्रियः ॥ ) ; शाम. ८० (=) ज्ञात (जात) ; विपा. ४२२ ; संग. ५३२.

(५) प्रपा. १७८ (=) ; शाम. ८० (=) देश (देह) ; विपा. ४२२ ; संग. ५३२.

(६) प्रपा. १७८ (=) पापम् (पापात् ) ; शाम. ८० (=) ; विपा. ४२२ तर्पणैश्च ततोऽस्य (तोषणैश्च तत्तस्य) ; संग. ५३२ तिः स्वरा (तिश्च रा).

[1]मूलजा श्वशुरं हन्ति सार्पजा च तदङ्गनाम् ।
ज्येष्ठाजा तु पतिज्येष्ठं देवरं तु द्विदैवजा ॥

## वृद्धगार्ग्यः

शान्तिनिमित्तानि– गण्डान्तानि, नक्षत्राणि, एकनक्षत्रजननम्, विषनाड्यः, भिन्नजात्याद्यद्भुतजननम्, सूर्य–बृहस्पति–बुधाद्भुतविभागः, पशुपक्ष्याद्यद्भुतमपि शान्तिनिमित्तम्

[2]घटिकैका च मैत्रान्ते ज्येष्ठादौ घटिकाद्वयम् ।
तयोः संधिरिति ज्ञेयः शिशुगण्डः समीरितः ॥

[3]प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके ।
पादत्रये जातनरो ज्येष्ठोऽप्यत्र प्रजायते ॥

मैत्रमनुराधा । ज्येष्ठाद्यघटिकाद्वयं परित्यज्य प्रथमादिचरणत्रये जातो नरो ज्येष्ठः श्रेष्ठ इत्यर्थः, दोषाभावात् । विपा. ३९४

[4]ज्येष्ठान्त्यपादजातस्तु पितुः स्वस्य विनाशनः ।
जायते नात्र संदेहो दशाहाभ्यन्तरे तथा ॥

[5]ज्येष्ठर्क्षेऽथ पुमान् जातो ह्यग्रजस्य विनाशनः ॥

[1]ज्येष्ठर्क्षे कन्यका जाता हन्ति शीघ्रं धवाग्रजम् ।
तच्छान्तिं तस्य वक्ष्यामि गण्डदोषप्रशान्तये ॥

[2]एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥

[3]तद्दोषनाशाय तदा प्रशस्तां
शान्तिं च कुर्यादभिषेचनं च ।
संपूज्य ऋक्षप्रतिमां तदग्रे
दानं च कुर्याद्विभवानुरूपम् ॥

भ्रात्रोः पितृपुत्रयोरित्यत्र पुंस्त्वमविवक्षितम् । निमित्तविशेषणत्वात् । एकोदरयोर्जन्यजनकयोश्चैकनक्षत्रजनने शान्तिरित्याशयः । संकौ. ८९

[4]विषनाडीषु संजातः पितृमातृधनात्मनाम् ।
नाशकृद्विषशस्त्राद्यैः क्रूरे लग्नेऽष्टमेऽपि वा ।
तद्दोषपरिहारार्थं शान्तिकर्म समाचरेत् ॥

---

(१) ज्योनि. १५९ ; संग. १९२ ज्येष्ठा (ज्येष्ठ) ज्योतिर्निबन्धे.

(२) प्रपा. १७३ मैत्रा (मित्रा) ; शाम. ६५ (=) ज्ञेयः (ज्ञेयं) गण्डः समीरितः (गण्डं समीरितम्) ; विपा. ३९४ शामवत् ; संकौ. ८४ शामवत्, पारिजाते; संग. ५०८ शामवत्.

(३) प्रपा. १७३ ज्येष्ठो (ज्येष्ठे) ; शाम. ६५ (=); विपा. ३९४ ; संकौ. ८४ पारिजाते ; संग. ५०८ नरो (मर्त्यो).

(४) प्रपा. १७३ ; शाम. ६५ (=) नाशनः (नाशकः) ; विपा. ३९४ विनाशनः (च नाशकः); ज्योनि. २४५ जातस्तु (जातस्य) नाशनः (नाशनम्) तथा (यतः) ; संकौ. ८४ पारिजाते ; संग. ५०९ विनाशनः (च नाशनः).

(५) संकौ. ८४ पारिजाते.

(१) प्रपा. १७३ ; शाम. ६५ (=) ; विपा. ३९४ तृतीयपादे (तस्य शान्तिं प्रवक्ष्यामि) ; ज्योनि. २४५ धवा (तथाऽ) तृतीयपादे (तस्माच्छान्तिं प्रवक्ष्यामि); संकौ. ८४ पारिजाते ; संग. ५०९ विपावत्, उत्तरार्धे गर्गः.

(२) गभा. १६६ श्चेत्तयो (श्च तयो) निश्चयः (निश्चितम्) गर्गः ; शाम. ७६ गर्गः ; सिन्धु. ८५६ निश्चयः (निश्चितम्) गर्गः ; विपा. ३९९ ; ज्योनि. २४६ (=) भ्रात्रोर्वा (पुत्रयोः) तिश्चेत्तयो (तयोस्तयो); संकौ. ८९ ; संग. ५१२.

(३) शाम. ७६ गर्गः ; विपा. ३९९ : संकौ. ८९ ; संग. ५१२.

(४) प्रपा. १७७ ; शाम. ७८ मातृ (भ्रातृ) क्रूरे लग्ने (क्रूरलग्ने) हारार्थं (हाराय) चरेत् (रभेत्) ; विपा. ४१२ स्त्राद्यैः (स्त्राग्नैः) लग्नेऽष्ट (लग्ने स) हारार्थं (हाराय) प्रथमार्धे नास्ति ; संकौ. ९५ स्त्राद्यैः (स्त्राग्नैः) लग्नेऽष्टमे (लग्नेऽशके) हारार्थे (हाराय) चरेत् (रभेत्) ; संग. ५२१ प्रथमार्धे (विषनाडीषु संजाते मातापित्रोरथाऽऽत्मनः ।) शेषं विपावत् ; क्रम. ८५७ लग्नेऽष्टमे (लग्नेऽशगे) तृतीयार्धं नास्ति.

[१]यत्र गर्भे विपर्यासो मानुषाणां गवामपि ।
अद्भुतानि प्रसूयन्ते तस्य देशस्य विद्रवः ।
अत्रापि दिव्यजा शान्तिः कार्या पञ्चदर्शी बुधैः ॥

पञ्चदर्शीं प्राप्येति शेषः । पर्वणीत्यर्थः । संकौ. १००

मानुषामानुषाणां च गोजाश्वमृगपक्षिणाम् ।
जायन्ते जातिभेदाश्च सदन्ता विकृतास्तथा ॥
बहुशीर्षा अशीर्षा वा बहुकर्णा अकर्णकाः ।
एकशृङ्गा द्विशृङ्गाश्च तथैव चतुरा द्विजाः ॥
दीर्घकर्णा महाकर्णा गजकर्णाश्च मानवाः ।
मानवाश्च यदा व्याघ्रा मार्जारास्तनुधारिणाम् ॥
जायन्ते पुरुषा यत्र तत्र संग्राममादिशेत् ।
राजश्रेष्ठकुले नाशो धनस्य च कुलस्य च ॥
यमला यत्र जायन्ते नारीणां गजवाजिनाम् ।
ब्रह्मशान्तिं ततः कुर्याद्यत्र ब्रह्मा प्रशासिता ॥
अशिरा जायते जन्तुस्तथा द्वित्रिशिरास्तथा ।
सूर्याद्भुतं विजानीयात् ......॥
मृगी जनयते सर्पान् मण्डूकांश्चाप्यमानुषान् ।
बृहस्पत्यद्भुतमिदं तद्वारे सं( ? तं )प्रपूजयेत् ॥
स्त्रीगर्भपातो यमलं प्रसूयन्तेऽथवा स्त्रियः ।
सदन्ताश्चैव जायन्ते जातमात्रा हसन्ति च ।
बुधाद्भुतं विजानीयात्तद्वारे तं प्रपूजयेत् ॥

[२]चन्द्रोदये पुष्यजलर्क्षजातो
निहन्ति तातं जननीं सपुत्राम् ।
पुष्ये जलर्क्षे पितृमातृपुत्र-
तन्मातुलं हन्ति पदक्रमेण ॥

## बादरायणः

गण्डान्तं जननदूषकम्

[३]दिवाजं पितरं हन्ति रात्रिजं मातरं तथा ।
संध्ययोर्जातमात्मानं गण्डजं नो निरामयम् ॥

(१) संकौ. ९९–१००.
(२) प्रपा. १७९.
(३) ज्योनि. २३९.

## माण्डव्यः

गण्डान्तं जननदूषकम्

[१]जातो न जीवति नरो
मातुरपथ्यो भवेत्स्वकुलहन्ता ।
यदि जीवति गण्डान्ते
गजतुरगयुतो भवेद्भूपः ॥

## कश्यपः

शान्तिनिमित्तानि नक्षत्राणि तेषां पादशः फलानि च

[२]मूलाद्यपादजो हन्ति पितरं तु द्वितीयजः ।
मातरं स्वां तृतीयोऽर्थान् सुहृदं तु तुरीयजः ।
फलं तदेव सार्पर्क्षे प्रतीपं त्वन्त्यपादतः ॥
[३]पत्न्यग्रजामग्रजं वा हन्ति ज्येष्ठर्क्षजः पुमान् ।
तथा भार्यास्वसारं च शालकं च द्विदैवजः ॥
[४]व्यालजा श्वशुरं हन्ति मूलजा स्त्री तथा नरः ।
हन्ति सार्पोद्भवा कन्या पुमांश्च श्वशुरं स्त्रियम् ॥
[५]मूलान्त्यपादजौ श्रेष्ठौ तथाऽऽश्लेषाद्यपादजौ ।
द्वीशान्त्यपादजौ दुष्टौ तद्वज्ज्येष्ठान्त्यपादजौ ॥

## मत्स्यपुराणम्

शान्तिनिमित्तानि– अकालप्रसवः , कालातीतप्रसवः , भिन्नजात्यादिविकृतप्रसवाः , युग्मप्रसवः , पशुपक्ष्यादीनामपि विकृतप्रसवे शान्तिः

[६]अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवकास्तथा ॥
अमानुषा अमुण्डाश्च अजातव्यञ्जनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥

(१) ज्योनि. २३९.
(२) गभा. १६६ ; सिन्धु. ८५२ तु तुरी (तत्तुरी).
(३) ज्योनि. १५९–१६० कश्यपपटले ; संग. १९२ च द्वि ( वा द्वि ) कश्यपपटले.
(४) ज्योनि. १६० कश्यपपटले.
(५) ज्योनि. १६० कश्यपपटले ; संग. १९२ द्वीशान्त्य ( तदन्य ) ज्योतिर्निबन्धे.
(६) गभा. १६७ ; सिन्धु. ८५७.

पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
निर्वासयेत्तान्नगरात्ततः शान्तिं समाचरेत् ॥

अत्र देशनाशं कुलनाशं च वारयितुं शान्तिरित्यर्थः । प्रसववैकृतानां कौस्तुभादौ विस्तरः । युग्मप्रसवका इति । यमलजनने । कृभ. ८५७

## पद्मपुराणम्

शान्तिनिमित्तानि– सदन्तजननम् , प्रथममुपरिदन्तजननम् , द्वितीयादिपञ्चमान्तेषु मासेषु दन्तजननम् , हीनाङ्गत्वादीनि प्रसववैकृतानि

[1]दन्तजन्मनि बालानां लक्षणं तन्निबोध मे ॥

[2]उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ।
दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ॥

द्विजाः दन्ताः । ‡ प्रपा. १७८

[3]द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ।
यदा दन्ताश्च जायन्ते मासे चैव महद्भयम् ॥

[4]मातरं पितरं वाऽथ खादेदात्मानमेव वा ।
तत्र शान्तिं प्रवक्ष्यामि तां मे निगदतः शृणु ॥

‡ शाम., विपा., संग., प्रपावत् ।

(१) प्रपा. १७८ ; संप्र. २८१ विष्णुधर्मोत्तरे ; विपा. ४१९ ; संकौ. ९९ विष्णुधर्मोत्तरे ; संग. ५३०.

(२) प्रपा. १७८ ; गभा. १६७ ; संप्र. २८१ विष्णुधर्मोत्तरे ; शाम. ६१ विष्णुधर्मोत्तरे ; सिन्धु. ८५७ ; विपा. ४१९ च ( वै ) ; संकौ. ९९ च ( ऽथ ) विष्णुधर्मोत्तरे ; संग. ५३० च शिशो ( तच्छिशो ).

(३) गभा. १६७ ; सिन्धु. ८५७–८५८ ; विपा. ४१९ उत्तरश्लोकपूर्वोत्तरार्धयोर्मध्येऽयं श्लोकः पठितः ; संकौ. ९९ विष्णुधर्मोत्तरे.

(४) प्रपा. १७८ तां मे ( तन्मे ) ; गभा. १६७ वाऽथ ( चास्य ) वा ( च ) पू. ; संप्र. २८१ पू., विष्णुधर्मोत्तरे ; शाम. ६१ विष्णुधर्मोत्तरे ; सिन्धु. ८५८ वा ( च ) पू. ; विपा. ४१९ वाऽथ ( चाथ ) ; संकौ. ९९ सिन्धुवत्, विष्णुधर्मोत्तरे ; संग. ५३० वाऽथ ( चाथ ) तां मे ( तन्मे ).

[1]विकृताङ्गानि जायन्ते त्वपत्यानि नृपोत्तम ।
यानि यानि महाबाहो तच्छृणुष्व विधानतः ॥

हीनाङ्गान्यधिकाङ्गानि सदन्तानि विशेषतः ।
उत्पन्नान्येव पश्यन्ति प्रवदन्ति हसन्ति च ॥

[2]सकूर्चानि च जायन्ते पित्रोर्मृत्युं दिशन्ति च ।
सिंहव्याघ्रवृकादीनां रूपैर्नानाविधैर्नृप ॥

[3]जायन्ते प्राणिनां गर्भा महाभयविधायकाः ।
उत्पद्यन्ते विलीयन्ते कालेनैकेन देहिनः ।
तज्जन्यभयनाशाय विधानं कथ्यते मया ॥

## ब्रह्मपुराणम्

मूलनक्षत्रचरणफलानि

[4]मूलांशे प्रथमे मातुर्द्वितीये च पितुस्तथा ।
तृतीये धनधान्यस्य नाशस्तुर्ये धनागमः ॥

## शिवसंहिता

एकनक्षत्रजनने शान्तिः

[5]समानभे यदा देवि पितापुत्रौ च सोदरौ ।
भगिन्यौ वा स्वबन्धू वा तदा पूर्वस्य नाशनम् ।
विधानं तत्र कर्तव्यं जन्मनक्षत्रपूजनम् ॥

## मानवसंहिता

चित्रानक्षत्रचरणफलानि

[6]चित्रानक्षत्रजातानामरिष्टं च पदक्रमात् ।
पितुश्च मातुश्च पितामहस्य च धनस्य च ।
तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि नारद ॥

(१) विपा. ४२२ ; संग. ५३३.

(२) विपा. ४२३ ; संग. ५३३ सिंह ( सर्प ).

(३) विपा. ४२३ तज्जन्य ( तज्जन्म ) ; संग. ५३३.

(४) ज्योनि. २४१.

(५) विपा. ४०० ; ज्योनि. २४६ (=) ; संग. ५१३.

(६) प्रपा. १८०.

## अनिर्दिष्टकर्तृकवचनानि

प्रथममुपरिदन्तजननं सदन्तजननं प्रथमादिसप्तमान्तमासदन्तजननं च शान्तिनिमित्तानि, मूलपुरुषाश्लेषापुरुषाङ्गघटीफलानि, मूलाश्लेषयोर्मुहूर्तफलानि, मूलस्त्रिया अङ्गघटीफलानि, चरण-मुहूर्त-वृक्षाङ्ग-पुरुषाङ्गफलेषु शुभाधिक्ये शुभमशुभाधिक्येऽशुभं फलम्, मूलवृक्षाङ्गघटीफलानि, गण्डान्तफलानि कुमारादर्शनकालश्च, तिथिनक्षत्रयोगविशेषा हीनाङ्गत्वादिवैकृतानि त्रिकप्रसवश्च शान्तिनिमित्तानि, जातकर्मणः प्राक्शान्त्यनुष्ठानम्

[१]उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ।
दन्तैर्वा सह यस्य स्याज्जन्म तद्बालकं न सत् ॥
मातरं पितरं खादेदात्मानं वाऽपि मातुलान् ।
सदन्तं बालकं विद्याद्राक्षसं स्वकुलान्तकम् ॥
यदि दन्तैः समं जन्म यदि वा दशनाः शिशोः ।
स्युर्मध्ये सप्तमासानां कुलनाशस्तदा ध्रुवम् ॥
अष्टमासादिमासेषु दन्तोत्थानं शुभावहम् ।
अथ तद्दोषनाशाय विधानं शृणु सत्तम ॥
[२]मूलर्क्षषष्टिघटिकाः कृत्वा स्थाप्य नराकृतौ ।
मस्तके घटिकाः पञ्च वक्त्रे पञ्च घटीस्तथा ॥
स्कन्धे चत्वारि चत्वारि भुजयोरष्टकं तथा ।
एकैकं हस्तयोर्न्यस्य हृदये चाष्टकं पुनः ॥
नाभिस्थाने द्वयं दद्याद्गुह्ये च दशकं तथा ।
रससंख्यास्तु जान्वोश्च पादयोश्च षडेव हि ॥

अथ मूलपुरुषविचारः– 'मूलर्क्षषष्टि...षडेव हि ।' ।

संग. ४६९

क्षेत्रलाभः शिरोदेशे वदने पितृघातकम् ।
स्कन्धयोर्धूर्वहं चैव बाहुयुग्मे त्वकर्मकृत् ॥
हत्याकरः करद्वन्द्वे पूज्यात्तिर्हृदये भवेत् ।
अल्पायुर्नाभिदेशे च गुह्ये च सुखमद्भुतम् ॥
§जङ्घायां भ्रमणे प्रीतिः पादयोर्जीविताल्पता ।
घटीफलं किल प्रोक्तं मूलस्य मुनिपुङ्गवैः ॥
विज्ञेयं विबुधैः सर्वं सार्पे तच्च विपर्ययात् ॥

घटीफलम्– 'क्षेत्रलाभः......विपर्ययात् ॥' ।

संग. ४७०

राक्षसो यातुधानश्च सोमः शुक्रः फणीश्वरः ।
पिता माता यमः कालो विश्वेदेवा महेश्वरः ॥
शर्वाख्यश्च कुबेरश्च घस्रो मेषदिवाकरः ।
गन्धर्वो यमदेवश्च ब्रह्मा विष्णुर्यमस्तथा ॥
ईश्वरो विष्णुरन्ध्रं च पवनो मुनयस्तथा ।
षण्मुखो भृङ्गिरिटी च गौरनाम्नी सरस्वती ॥
प्रजापतिश्च मूलस्य त्रिंशन्मुहूर्त एव च ।
विपरीता पुनर्ज्ञेया त्वश्लेषा जातबालके ॥
प्रथमे च द्वितीये च षष्ठे च द्वादशे तथा ।
त्रयोविंशे च नवमे कुलक्षयकरः शिशुः ॥

अथ मुहूर्तफलम्– 'राक्षसः... शिशुः ॥' ।

संग. ४७०

लिखेत् स्त्रीसदृशीं मूर्तिं तत्र स्थाप्यो घटीक्रमः ।
चतस्रो नाडिकाः शीर्षे कुर्वन्ति पशुनाशनम् ॥
मुखे षड् धनहानिः स्यात्कण्ठे पञ्च धनागमम् ।
कौटिल्यं हृदये पञ्च कुचे वित्तागमं च षट् ॥
पाणौ वेद(?दा)दयाधर्मौ वेद(?दा)गुह्ये च कामुकी ।
ज्येष्ठमातुलनाशं च जङ्घयोर्युग्मनाडिका ॥
ज्येष्ठभ्रातृविनाशं च चतस्रो युग्मजानुके ।
पादयोः पञ्च नाड्यस्तु तत्र वैधव्यमादिशेत् ॥

अथ स्त्रीजातके विशेषः– लिखेदिति । इति स्त्रीजातके मूलविचारः । संग. ४७०–४७१

(१) ज्योनि. २५०.
(२) संग. ४६९–४७१.

§ पूर्वं जानुरूपणात् 'जङ्घायाम्' इति पदं प्रामादिकं वा लाक्षणिकं वेति कल्प्यते ।

पादे मुहूर्तवेलायां वृक्षे च पुरुषाकृतौ ।
अनिष्टमशुभाधिक्ये शुभाधिक्ये शुभं फलम् ॥

§[1]मूले सप्तघटीषु मूलहननं
स्तम्भेऽष्टसु स्वक्षयं
त्वग्दिग्बन्धुविनाशनं च विटपे
रुद्रैर्हतो मातुलः ।
पत्रेऽर्कैः सुकृती तु बाणकुसुमे
मन्त्री फले सागरै
राजा वह्निशिखाऽल्पमायुरिति स-
न्मूलाङ्घ्रिपे स्यात्फलम् ॥

[2]मूर्धास्यनेत्रगलकांसयुगं च बाहु-
हृज्जानुगुह्यपदमित्यहिदेहभागः ।
बाणाद्रिनेत्रहुतभुक्श्रुतिनागरुद्र-
षण्नन्दपञ्चशिरसः क्रमशस्तु नाडयः ॥

[3]राज्यं पितृक्षयो मातृनाशः कामक्रियारतिः ।
पितृभक्तो बली स्वघ्नस्त्यागी भोगी धनी
क्रमात् ॥

[4]नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम् ।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥

[5]संध्यारात्रिदिवाभागे गण्डयोगोद्भवः शिशुः ।
आत्मानं मातरं तातं विनिहन्ति यथाक्रमम् ॥

गण्डप्रसूतं पुरुषं शुभमाहुरपश्यताम् ।
अश्विन्यां षोडशाब्दानि पित्र्ये चाष्टौ च
वत्सरान् ॥

मूलेऽब्दानि च चत्वारि ज्येष्ठे वर्षयुगं तथा ।
सार्पेऽब्दपञ्चकं चैव रेवत्यामब्दपञ्चकम् ॥

[1]न बाला हन्ति मूलर्क्षे पितरं मातरं तथा ।
मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम् ।
माहेन्द्रजाऽग्रजं हन्ति देवरं तु द्विदैवजा ॥

व्यालः आश्लेषा । माहेन्द्रं ज्येष्ठा । द्विदैवं विशाखा ।
‡ शाम. ६८

[2]तातभ्रातृभवस्य मे शिशुजनौ
मूले मघायां तथा
ज्येष्ठासार्पभयोस्तु सप्तदशके
योगे धृतौ दर्शके ।
कृष्णे भूतदिने कुहौ ग्रहदिने
राकादिने च स्थिते
हीनाङ्गे च सदन्तजे च यमले
जाते त्रिकप्रोद्भवे ॥
कृत्वा तत्कृतदुष्कृतोपशमनीं
शान्तिं ततो जातकं
कुर्याद्गर्गमुनिर्जगाविति न चे-
ज्जातक्रिया मारिका ॥

## उत्पलाचार्यविवृतौ

मूलादिजनने कुमारत्यागः शान्तिर्वा

[3]मूलाद्युत्थं दुष्टफलं परित्यागाद्विलीयते ।
शिशोरदर्शनाद्वाऽपि दानहोमजपैरपि ॥

---

§ गदाधरभाष्ये निर्णयसिन्धौ च जयार्णवीयत्वेन कानिचिद् वचनानि संगृह्याव्यवहितोत्तरम् ' अन्यत्र त्वन्यथोक्तम् ' इत्युक्त्वेदं वचनं संगृहीतम्। तत्प्रामाण्यात् ज्योतिर्निबन्धाभिमतमस्य जयार्णवीयत्वमुपेक्षितमस्माभिः ।

(१) गभा. १६६ हननं (हवनं) सन्मूला (संमूला) ; सिन्धु. ८५३ ; ज्योनि. २४१ ष्टसु स्वक्षयं त्व (ष्ट सौख्यक्षयस्त्व ) जयार्णवे.

(२) गभा. १६७ ; सिन्धु. ८५१.

(३) गभा. १६७ पूर्वार्धे (राज्यं च पितृनाशः स्यात्तथा कामक्रिया रतिः । ) ; सिन्धु. ८५२.

(४) संग. ५१४.

(५) निप. २४४.

‡ संकौ. शामवत् ।

(१) प्रपा. १६९ ; गभा. १६६ प्रथमार्धं नास्ति , प्रयोगपारिजाते ; शाम. ६८ तु (च) ; सिन्धु. ८५४ प्रथमार्धे नास्ति, प्रयोगपारिजाते ; विपा. ३३३ दैव (देव); संकौ. ७१.

(२) प्रका. १४१-१४२.

(३) ज्योनि. २४३.

## यवनः

गण्डान्तानि व्यतीपातादियोगा विष्टिश्च शान्तिनिमित्तानि

[1]यत्र गण्डं क्रूरयुतं महादोषकरं भवेत् ।
शुभग्रहसमायोग ईषच्छुभकरं भवेत् ॥
दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डातिगण्डे च परिघे यमघण्टके ॥
ब्रह्मद(? ग)ण्डे मृत्युयोगे प्राप्ते गण्डदिने शिशुः ।
जातो हन्ति कुलं सर्वं तस्मात् कुर्वीत शान्तिकम् ॥
धनगण्डे दरिद्रोऽपि शान्तिं कुर्यात् स्वशक्तितः ।
अन्यथा नाशमाप्नोति चाभुक्तर्क्षे विशेषतः ॥

## ब्रह्मयामले

ज्येष्ठानक्षत्रदशांशफलानि, प्रथमोर्ध्वदन्तजननफलम्

[2]ज्येष्ठादौ जननीमाता द्वितीये जननीपिता ।
तृतीये जननीभ्राता स्वयं माता चतुर्थके ॥
आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् ।
सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ।
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ॥
[3]प्रथमं दन्तनिर्मुक्तिरूर्ध्वे बालस्य चेद्भवेत् ।
क्लेशाय मातुलस्येह तदा प्रोक्ता मनीषिभिः ॥

## रुद्रयामले

आश्लेषाल्ताङ्घ्रघटीफलानि, गण्डान्तादिजनने कुमारादर्शनकालाः

[4]फलं पुष्पं दलं शाखा त्वग्लता स्कन्ध एव च ।
सार्पवल्या दशाक्षाङ्कस्वरविश्वार्कसागराः ॥
नाडिकास्तद्भवे बाले फलं कुर्युर्यथाक्रमम् ।
श्रीः श्री राजभयं हानिर्मातृपित्रात्मसंक्षयः ॥
शाक्रे पक्षे च गण्डान्तमूलयोर्वत्सराष्टकम् ।
मासानां नवकं सार्पे त्यजेत्संदर्शनं शिशोः ॥
भुक्तमूलर्क्षजं बालं षण्मासं नावलोकयेत् ।
ततः संदर्शनं कुर्याद्विधिवच्छान्तिपूर्वकम् ॥
भुक्तमूलभवं बालं दिनानि सप्तविंशतिः ।
पित्रा नाऽऽलोकनं कार्यं ततः शान्तिं समाचरेत् ॥

## रत्नमालायाम्

जननदूषकानि गण्डान्तानि

[1]पौष्णाश्विन्योः सार्पपित्र्यर्क्षयोश्च
यच्च ज्येष्ठामूलयोरन्तरालम् ।
तद्गण्डान्तं स्याच्चतुर्नाडिकं हि
यात्राजन्मोद्वाहकालेष्वनिष्टम् ॥

## राजमार्तण्डे

गण्डान्तजनने शान्तिरदर्शनं वा

[2]गण्डप्रसूतं पुरुषं शुभमाहुरपश्यताम् ।
अन्ये तु होमपूर्वेण दानेन दर्शनं शुभम् ॥

## नृसिंहप्रसादे

ज्येष्ठादिनक्षत्रजननफलानि

[3]धवाग्रजं हन्ति सुरेन्द्रजाता
तथैव पत्न्या भगिनीं पुमांश्च ।
द्विदैवजा देवरमाशु हन्या-
द्भार्यानुजामाशु निहन्ति सूनुः ॥
[4]पत्न्यग्रजामग्रजं वा हन्ति ज्येष्ठर्क्षजः पुमान् ।
तथा भार्यास्वसारं वा शालकं वा द्विदैवजः ॥

---

(१) ज्योनि. २३९.

(२) गभा. १६७; सिन्धु. ८५२ ; संकौ. ८३.

(३) गभा. १६८ रुद्रयामले ; सिन्धु. ८५८ ; विपा. ४२१ निर्मुक्तिरू ( निर्मोक ऊ ) तदा प्रोक्ता ( स च प्रोक्तो ) ; संग. ५३१ विपावत्.

(४) ज्योनि. २४२-२४३.

(१) गभा. १६६ (=) ; सिन्धु. ८४९-८५० ; ज्योनि. ७१ पित्रर्क्ष (पित्राख्य) ; संग. ५१४ ज्योनिवत्.

(२) ज्योनि. २४०.

(३) गभा. १६६ प्रजं ( प्रजां ) निहन्ति ( हि हन्ति ) ; सिन्धु. ८५४ हन्याद्भा ( हन्याद ).

(४) गभा. १६६ ; सिन्धु. ८५४.

कन्यका देवरं हन्ति विशाखान्त्यसमुद्भवा ।
आद्यपादत्रये नैव आद्यमे तु पुमान् भवेत् ॥
[1]न हन्याद्देवरं कन्या तुलामिश्रद्विदैवजा ।
तद्दक्षान्त्योद्भवा वर्ज्या दुष्टा वृश्चिकपुच्छवत् ॥

### नवनीतारिष्टे

तिथ्यादिगण्डान्तफलानि

[2]तिथ्यर्क्षगण्डे पितृमातृनाशो
लग्ने तु संधौ तनयस्य नाशः ।
सर्वेषु नो जीवति हन्ति वंशं
जीवन्पुनः स्याद्बहुवारणाश्वः ॥

### ज्योतिर्निबन्धे

शान्तिनिमित्तानि– मूलविरुद्धावयवजननम्, तिथिवार-विशेषयुतमूलजननम्, ज्येष्ठाजननम्, एकनक्षत्र-जननम्, प्रथमादिपञ्चमान्तमासदन्तजननम्, सदन्तजननम्, प्रथमोर्ध्वदन्तजननम्,

[3]मूलं विरुद्धावयवं समूलं
कुलं हरत्येव वदन्ति सन्तः ।
चेदन्यथा तत् कुरुते विशेषात्
सौभाग्यमायुश्च कुलाभिवृद्धिः ॥
कृष्णे तृतीया दशमी वलक्षे
भूतो महीजार्किबुधैः समेतः ।
चेज्जन्मकाले किल तत्र मूल-
मुन्मूलनं तत् कुरुते कुलस्य ॥
[4]ज्येष्ठायाः प्रथमे पादे गृहज्येष्ठविनाशनम् ।
द्वितीये धनहानिः स्यात्तृतीये मातृपीडनम् ॥
तातस्य जन्मभे यस्य प्रसूतिर्यदि जायते ।
तातं वा भ्रातरं ज्येष्ठं रिष्टं तस्य भवेद्ध्रुवम् ॥

(१) गभा. १६६ ; सिन्धु. ८५४ मिश्रद्वि ( मिश्राद्वि ) क्षान्त्यो (क्षान्तो).

(२) गभा. १६७ वंशं (बन्धून्) णाश्वः (णश्व) ; संप्र. १५८ ; सिन्धु. ८५० वंशं (बन्धून्) ; संग. ५१५ (=) वंशं (सर्वे) चतुर्थपादे (जीवेत्पुनः स्याद्धनवान् स जातः).

(३) संग. ४६८. (४) संग. ५०९, ५१२.

[1]दन्तैर्युतश्चेत् प्रथमेऽर्भकः स
स्वयं विनश्येदनुजं द्वितीये ।
हन्ति तृतीये भगिनीं चतुर्थे
स्वमातरं बाणमितेऽग्रजातम् ॥
षष्ठादिमासेषु शुभं फलं स्यात्
स्वकं यदा जन्म भवेत्तु दन्तैः ।
यस्योर्ध्वपङ्क्तौ प्रथमं रदा स्युः
स्वमातरं स्वं च निहन्ति तातम् ॥

### ज्योतिष्प्रकाशे

दिवसभागभेदेन त्रिविधगण्डान्तफलानि, गण्डान्तजातस्य त्यागो मासषट्कमदर्शनं वा

[2]संध्यारात्रिदिवाभागे धिष्ण्यगण्डोद्भवः शिशुः ।
आत्मानं मातरं तातं ध्रुवं हन्ति यथाक्रमम् ॥
मातरं तातमात्मानं तिथिगण्डान्तजस्तथा ।
लग्नगण्डान्तजस्तद्वत्तातमात्मान (? नं)मातरम् ॥
सर्वेषां गण्डजातानां परित्यागो विधीयते ।
अथवा दर्शनं तस्य मासषट्कं न कारयेत् ॥

### भास्करव्यवहारे

आश्लेषाचरणफलानि

[3]सार्पांशे प्रथमे राज्यं द्वितीये च धनक्षयः ।
तृतीये जननीनाशश्चतुर्थे मरणं पितुः ॥

### मुहूर्तकल्पद्रुमे

मूलजननफलम्

[4]आद्यः पादो मूलजो रात्रिभोग-
तातानिष्टं नो दिने चेद्द्वितीयः ।
मातू रिष्टं नो सदा शान्तितो नो
साऽऽशौचान्तेऽब्दे त्रिमासेऽपि तज्ज्ञे ॥

(१) संग. ५७३. (२) ज्योनि. २३९–२४०.

(३) ज्योनि. २४२.

(४) संग. ४७२.

## मुहूर्तचिन्तामणिः

अभुक्तमूलस्वरूपे मतभेदाः, तत्र जातस्य परित्यागोऽष्टौ वर्षाण्यदर्शनं वा, मूलाश्लेषयोश्चरणफलानि, मूलस्य स्वर्गादिनिवासः, गण्डान्तादीनि द्वाविंशतिः शान्तिनिमित्तानि, प्रथमादिमासदन्तजनने सदन्तजनने प्रथमोर्ध्वदन्तजनने च फलानि, विवाहानुरोधेन मूलादिनक्षत्रजननफलानि

[1]अभुक्तमूलं घटिकाचतुष्टयं
ज्येष्ठान्त्यमूलादिभवं हि नारदः ।
वसिष्ठ एकद्विघटीमितं जगौ
बृहस्पतिस्त्वेकघटीप्रमाणकम् ॥

अथोचुरन्ये प्रथमाष्टघटयो
मूलस्य शाक्रान्तिमपञ्चनाड्यः ।
जातं शिशुं तत्र परित्यजेद्वा
मुखं पिताऽस्याष्टसमा न पश्येत् ॥

नक्षत्रविशेषोत्पन्नस्याभुक्तमूलदोषमनेकविधं सफलमुपजातिकाभ्यामाह— अभुक्तमूलमिति, अथोचुरिति च । अत्राभुक्तमूलस्यानेके भेदाः । तत्रैकस्तावदयं भेदः— ज्येष्ठानक्षत्रान्ते भवं ज्येष्ठान्त्यम्, मूलादौ भवं मूलादिभवम्, ज्येष्ठान्त्यजातं घटीचतुष्टयं मूलादिजातं घटीचतुष्टयं मिलित्वाऽष्टौ घटिकाः । प्रहर इति यावत् । तावान् कालोऽभुक्तमूलाख्य इति नारद आह । उपलक्षणत्वात् आश्लेषान्तिमघटीचतुष्टयं मघादिमघटीचतुष्टयं च अभुक्तमूलाख्यः कालः । अथापरो भेदः— एकेति । ज्येष्ठान्ते एकघटीमितं मूलादौ घटीद्वयमितमेवं मिलित्वा त्रिघटिकमभुक्तमूलं स्यादिति वसिष्ठो मुनिर्जगौ । अथान्यो भेदः— एकेति । ज्येष्ठान्त्यार्धघटिका मूलादावर्धघटिका मिलित्वा एकघटी प्रमाणमस्य तदेकघटीप्रमाणकम् । तादृशमभुक्तमूलं स्यादिति बृहस्पतिर्जगौ । अथेतरो भेदः— अथेति । अथशब्दः पादपूरणे । मूलनक्षत्रस्य प्रथमाः आदिमाः अष्टघटिकाः, शाक्रस्य ज्येष्ठायाः अन्तिमाः पञ्च नाड्यः घटिकाः, एवमुभयोर्ज्येष्ठामूलयोरन्तरालवर्तिन्यस्त्रयोदश घटिका अभुक्तमूलमिति लोका ऊचुः । एवमभुक्तमूलस्यानेकभेदसंभवे कः साधीयान् पक्षः इति चेत् उच्यते— नारदोक्तः पक्ष एव साधीयान् । किमत्र प्रमाणमिति चेच्छृणु— बहुमुनिसंवाद एवात्र प्रमाणम् । यद्येवं घटीन्यूनाधिकभावाभिधायिनां प्रागुक्तवाक्यानां का गतिरिति चेत् उच्यते— दोषस्याधिक्याल्पत्वसूचनमेव गतिः । अथाभुक्तमूलदेशकथनस्य प्रयोजनमाह— जातमिति । तत्र अभुक्तमूलाख्ये काले जातं शिशुं बालकम् उपलक्षणत्वात् तत्र जातां कन्यां वा पिता परित्यजेत् निष्कासयेत् । यद्यशक्यं निष्कासनं स्यात्तदा किं कार्यमित्यत आह— वेति । वा अथवा पूर्वपक्षकर्तव्यताशक्तौ पिता अस्य शिशोः कन्याया वा मुखम् अष्टसमाः अष्टौ वर्षाणि तावत्कालं न पश्येत् । पीटी.

आद्ये पिता नाशमुपैति मूल-
पादे द्वितीये जननी तृतीये ।
धनं चतुर्थोऽस्य शुभोऽथ शान्त्या
सर्वत्र सत्स्यादहिभे विलोमम् ॥

मूलाश्लेषाजातस्य बालस्य चरणवशेन शुभाशुभफलमुपजात्याऽऽह— आद्ये इति । मूलनक्षत्रस्य आद्ये पादे प्रथमे चरणे । चतुर्थांशे इति यावत् । तत्र जातस्य शिशोः कन्याया वा पिता नाशं मरणम् उपैति प्राप्नोति । तथा मूलद्वितीयपादे जननी माता नाशमुपैति । तथा तृतीये मूलपादे धनं द्रव्यं नाशमुपैति । चतुर्थो मूलपादोऽस्य शिशोः शुभः शुभफलदः । अत्र पितुर्बहुस्त्रीत्वेऽपि स्वमातुरेव नाशो वाच्यः, न सापत्नमातुः । यदाह कश्यपः— ‘मूलाद्यपादजो हन्ति पितरं तु द्वितीयजः । मातरं स्वां तृतीयोऽर्थान् सुहृदश्च तुरीयजः ॥’ इति । अन्येऽत्र स्वमातुरिव सापत्नमातुरपि नाशो वाच्यः । यतो मातृशब्दः सापत्नमातुरपि वाचकः । यदाह गौतमः— ‘पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तदपत्यानि मातुलेयानि’ इति । अतः स्पष्टार्थमेव कश्यपवाक्ये स्वामिति पदोपादानम् । अथ दोषसत्त्वे किं कार्यमत आह— अथेति । अथ अनन्तरं शान्त्या मूला-

(१) मुचि. २।५२–५६.

श्लेषाशान्त्या स्वनुष्ठितया सर्वत्र चरणचतुष्टयेऽपि शुभमनिष्टफलनाशकं कल्याणकरं स्यात्। ननु मूलपादचतुष्टयेऽपि शान्तिः कर्तव्येत्युक्तम्। तत्र चतुर्थचरणस्य शुभफलत्वात् शान्तिरयुक्तेति प्रतिभाति, 'अनिमित्तकृता शान्तिर्निमित्तायोपजायते।' इति स्मरणात्। उच्यते— यद्यपि चतुर्थचरणे धनागमरूपं शुभफलमभिहितम्, तथाऽपि कश्यपेन 'सुहृदश्च तुरीयजः' इति सुहृन्नाशरूपफलस्यानिष्टस्योक्तेस्तदपाकरणार्थमवश्यं कर्तव्या शान्तिः। न हि कस्यचिद्वैरिनाशवन्मातुलाद्यनेकसुहृन्नाश इष्टः। किंच, मूलवृक्षविचारेऽपि चतुर्थपादे पुरुषकन्ययोरशुभफलकथनाच्च। अहिमे विलोममिति। अहिमे आश्लेषायामुक्तं फलं विलोमं विपरीतं ज्ञेयम्। तद्यथा— मूलस्य प्रथमे पादे पितृनाश इति फलमुक्तम्, तत्फलमाश्लेषाचतुर्थपादोत्पन्नस्य स्यात्। मूलस्य द्वितीयपादे मातृनाश इत्युक्तं फलम्, तदाश्लेषातृतीयचरणोत्पन्नस्य स्यात्। मूलस्य तृतीयचरणे धननाश इत्युक्तं फलम्, तदाश्लेषाद्वितीयचरणोत्पन्नस्य स्यात्। मूलस्य चतुर्थपादः शुभ इत्युक्तं फलम्, तदाश्लेषाप्रथमचरणोत्पन्नस्य स्यादित्यर्थः।

पीटी.

**स्वर्गे शुचिप्रौष्ठपदेषमाघे**
**भूमौ नभःकार्तिकचैत्रपौषे।**
**मूलं ह्यधस्तात्तु तपस्यमार्ग-**
**वैशाखशुक्रेष्वशुभं च तत्र॥**

अथ मूलनिवासं सफलमिन्द्रवज्राछन्दसाऽऽह—स्वर्गे इति। शुचिः आषाढः। प्रौष्ठपदः भाद्रपदः। इषः आश्विनः। माघः प्रसिद्धः। एषु मासेषु मूलं मूलनक्षत्रं स्वर्गेऽस्ति स्वर्गे निवासस्तस्य। नभाः श्रावणः। अन्ये प्रसिद्धाः। श्रावणकार्तिकचैत्रपौषेषु भूमौ मूलं तिष्ठति। तपस्यः फाल्गुनः। शुक्रः ज्येष्ठः। अन्यौ प्रसिद्धौ। फाल्गुनमार्गशीर्षवैशाखज्येष्ठेषु अधस्तात् पाताले मूलं तिष्ठति। एष मूलनिवास उक्तः। एतत्फलं च मूलनक्षत्रं यदा यस्मिन् मासे यत्र वसति तत्रैव स्वर्गभूमिपातालेष्वेव स्वोक्तशुभाशुभफलं ददाति। अयमत्र तात्पर्यार्थः— द्रव्याद्यभावेन शान्तिकं कर्तुमशक्नुवतः पुंसः स्वर्गपातालनिवासित्वेन मूलस्यारिष्टदोषः तथा न प्रभवेत्। यदा तु भूमावेव निवासस्तदा दोषनिवारणं नैव स्यादित्यशक्तेनापि शान्तिकं विधेयम्। नैतावता प्रागुक्ते विषये शान्त्यभाव एव, किंतु यथाशक्ति तत्रापि शान्तिकं विधेयम्। शक्तेन तु सर्वत्रैव विधेयम्।

पीटी.

**गण्डान्तेन्द्रभशूलपातपरिघ-**
**व्याघातगण्डावमे**
**संक्रान्तिव्यतिपातवैधृतिसिनी-**
**वालीकुहूदर्शके।**
**वज्रे कृष्णचतुर्दशीषु यमघ-**
**ण्टे दग्धयोगे मृतौ**
**विष्टौ सोदरभे जनिर्न पितृभे**
**शस्ता शुभा शान्तितः॥**

मूलप्रसङ्गात् दुष्टेषु गण्डान्तादिनिमित्तेषु सत्सु जातस्यारिष्टं सपरिहारं शार्दूलविक्रीडितेनाऽऽह— गण्डान्तेति। एतेषु पदार्थेषु सत्सु जनिः शिशोरुत्पत्तिः न शस्ता दुष्टफलदा। गण्डान्तः संधिविशेषः। स त्रिविधो नक्षत्रतिथिलग्नभेदेन। इन्द्रभं ज्येष्ठानक्षत्रम्। शूलः शूलाख्यो दुष्टयोगः। पातो महापातो गणितसाध्यो व्यतीपाताख्यो वैधृताख्यश्च। परिघव्याघातगण्डा अपि दुष्टयोगाः। अवमः तिथिक्षयः। संक्रान्तिः सूर्यस्य राश्यन्तरसंक्रमपुण्यकालः। व्यतीपातवैधृती सप्तदशसप्तविंशतितमौ दुष्टयोगौ। सिनीवाली दृष्टेन्दुरमावास्या। कुहूः नष्टेन्दुरमावास्या। दर्शः चन्द्रदर्शनादर्शनरहिताऽमावास्या। वज्रे दुष्टयोगे। कृष्णे कृष्णपक्षे चतुर्दशी। बहुवचनमावृत्त्यभिप्रायम्। यमघण्टे 'मघाविशाखा' इत्युक्ते दुष्टयोगे। दग्धयोगे 'सूर्येशपञ्चाग्निरसाष्टनन्दा' इत्युक्ते दुष्टयोगे। केचित्तु 'चापान्त्यगे गोघटगे पतङ्गे' इति वक्ष्यमाणो दुष्टयोग इति व्याचख्युः। मृतौ 'द्वीशात्तोयात्' इत्यादिनोक्ते मृत्युयोगे। विष्टौ भद्रायाम्। सोदरस्य भ्रातुर्भगिन्या वा भे नक्षत्रे। पितृभे माता च पिता च पितरौ तयोर्भे मातृभे पितृभे च। एषु निमित्तेषु सुतस्य सुताया वा जन्म

चेत्स्यात्तदनिष्टकृत्स्यादित्यर्थः । दुष्टनिमित्तस्योपलक्षणत्वात् सूर्यचन्द्रग्रहणजन्म त्रीतरजन्माप्यनिष्टम् । सजातीयापत्यत्रयप्रसवानन्तरं विजातीयापत्यप्रसवः त्रीतरः । यथा पुत्रत्रयप्रसवानन्तरं कन्याया जननम् , कन्यात्रयप्रसवानन्तरं पुत्रस्य जननम् । अत एव त्रिभ्यः सजातीयेभ्य इतरो विजातीयः त्रीतरः स्त्री च त्रीतरेति । व्युत्पत्तिश्च त्रीतरश्च त्रीतरा च त्रीतरौ । 'पुमान् स्त्रिया' इत्येकशेषः । अथ परिहारोऽप्युच्यते— सा जनिः शान्तितो वसिष्ठाद्यृषिप्रोक्तायाः शान्त्याः स्वनुष्ठितायाः शुभा परिणामे सुखदायिनी, शारीरक्लेशानुभवपूर्वकनीरोगदीर्घायुष्ट्वं शिशोः स्यादित्यर्थः । पीटी.

[1]मासे चेत्प्रथमे भवेत् सदशनो
बालो विनश्येत् स्वयं
हन्यात् स क्रमतोऽनुजातभगिनी-
मात्रग्रजान् द्व्यादिके ।
षष्ठादौ लभते हि भोगमतुलं
तातात्सुखं पुष्टतां
लक्ष्मीं सौख्यमथो जनौ सदशनो
वोर्ध्वे स्वपित्रादिहा ॥

अथ प्रसङ्गतः संस्कारानन्तर्गतमपि प्रथमादिमासोत्पन्नदन्तफलं शार्दूलविक्रीडितेनाऽऽह—मासे चेदिति । बालकश्चेज्जन्मानन्तरं प्रथमे सदशनः दन्तयुक्तः भवेत् स्यात् तदा स्वयं विनश्येत् । ततो द्व्यादिके द्वितीयादिके मासे सः बालकः दन्तयुक्तो भवेत्तदाऽनुजातभगिनीमात्रग्रजान् हन्ति । यथा द्वितीयमासेऽनुजातं कनिष्ठभ्रातरं हन्ति, तृतीयमासे भगिनीं हन्ति, चतुर्थमासे मातरं हन्ति, पञ्चमे मासि अग्रजं ज्येष्ठभ्रातरं हन्ति । षष्ठादिमासेषु दन्तजन्म समीचीनफलम् । यथा षष्ठे अतुलं भोगं लभते, सप्तमे तातात् पितृतः सुखं लभते, अष्टमे पुष्टताम् , नवमे लक्ष्मीम् , दशमे सौख्यम् । एतच्चोपलक्षणम् । एकादशेऽपि मासे सौख्यमेव, द्वादशे मासे सुख( १ धन )बाहुल्यं लभते इत्यर्थः । यदाह चण्डेश्वरः— 'प्रथमे दन्तजननात्स्वयमेव विनश्यति । द्वितीये भ्रातरं हन्ति तृतीये भगिनीं तथा ॥ चतुर्थे मातरं हन्ति पञ्चमे चाऽऽत्मनोऽग्रजम् । षष्ठे च मन्त्रजीवी स्यात्सप्तमे पितृसौख्यदः ॥ अष्टमे पुष्टिजनको नवमे लभते धनम् । लभते दशमे मासि सौख्यमेकादशेऽपि वा । द्वादशे धनसंपत्तिर्दन्तानां जनने फलम् ॥' इति । अथो जनौ जन्मकाल एव सदशनः दन्तयुक्तः स्यात्तदा स्वपित्रादिहा स्वम् आत्मानं पितरं च आदिशब्देन मातरं च हन्ति नाशयतीति स्वपित्रादिहा । केचिदादिशब्देन भ्रात्रादीनामपि नाशं व्याचक्षते । वोर्ध्वमिति । वा अथवा ऊर्ध्वे ऊर्ध्वपङ्क्तौ स्वजन्मानन्तरं निषिद्धे विहितेऽपि वा काले सदशनश्चेत् स्यात् तदाऽपि स्वपित्रादिहा आत्मपितृमातृनाशक इत्यर्थः । पीटी.

‡[2]श्वश्रूविनाशमहिजौ सुतरां विधत्तः
कन्यासुतौ निर्ऋतिजौ श्वशुरं हतश्च ।
ज्येष्ठाभजाततनया स्वधवाग्रजं च
शक्राग्निजा भवति देवरनाशकर्त्री ॥

## ज्योतिःसंग्रहे

मूलजनने आश्लेषाजनने च फलम्

[3]ऊढायाः पितरं हन्ति मातरं च यथाक्रमम् ।
यदि वा पादसंख्याब्दैर्मूलसार्पोद्भवः पुमान् ॥

## भूपालवल्लभः

मूलस्य स्वर्गादिनिवासः तत्फलं च, मूलपुरुषाङ्गघटीफलानि

[3]वृषालिसिंहेषु घटे च मूलं
दिवि स्थितं युग्मतुलाङ्गनान्त्ये ।
पातालगं मेषधनुःकुलीर-
नक्रेषु मर्त्येष्विति संसरन्ति ॥

(१) मुचि. ५।१३.

‡ अस्य व्याख्यानं कन्यापरीक्षाप्रकरणे ( सं. का. पृ. ५५५) द्रष्टव्यम् ।

(१) मुचि. ६।१९. (२) ज्योनि. १६०.

(३) गभा. १६६ ; सिन्धु. ८५३ मूलं ( मूले ) ; संग. ४६८ घटे च (घटेषु) कुलीर...स्मरन्ति (कुलीरे नक्रेऽर्कसंस्थे विचरेच्च मर्त्ये) ज्योतिर्निबन्धे.

[1]स्वर्गे मूले भवेद्राज्यं पाताले चेद्धनागमः ।
मर्त्यलोके यदा मूलं तदा शून्यं समादिशेत् ॥

[2]मूलस्य घटिकान्यासो मूर्ध्नि पञ्च नृपो भवेत् ।
मुखे सप्त मृतिः पित्रोः स्कन्धे वेदो महाबलः ॥

बाह्वोरष्टौ बली पाण्योस्तिस्रो हस्तान्वितो भवेत् ।
हृदि खेटा भूपमन्त्री नाभौ द्वे ब्रह्मविद्भवेत् ॥

गुह्ये देशेऽति( ? दशाति )कामी स्याज्जानुनोः षण्महामतिः ।
पादयोः षण्मृतिस्तस्येत्युक्तवान् कमलासनः ॥

### भल्लाटः

अभुक्तमूलजनने परित्यागोऽष्टौ वर्षाण्यदर्शनं वा, मूलाश्लेषाचरणफलानि

[3]अभुक्तमूलसंभवं परित्यजेत्तु बालकम् ।
समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ॥

[4]तदाद्यपादके पिता द्वितीयके जनन्यथ ।
धनक्षयस्तृतीयके चतुर्थकः शुभावहः ॥

[5]प्रतीपमन्त्यपादतः फलं तदेव सार्पभे ।
तदुक्तदोषशान्तये विधेयमत्र शान्तिकम् ॥

(१) गभा. १६६ मूले (मूलं) चेद्धनागमः (च धनागमम् ) मर्त्य (मृत्यु) मूलं (भूतं) ; सिन्धु. ८५३ ; संग. ४६९ चेद्धनागमः (च धनागमम् ) मर्त्य ( मृत्यु) यदा मूलं ( स्थिते मूले ) ज्योतिर्निबन्धे.

( २ ) ज्योनि. २४१.

(३) गभा. १६६ लल्लः ; सिन्धु. ८५२.

(४) गभा. १६६ द्वितीयके (विपद्यते) उत्तरार्धे (तृतीयके धनक्षयश्चतुर्थके शुभावहम् ॥ ) लल्लः ; सिन्धु. ८५२ ; ज्योनि. २४१ द्वितीयपादे (विपद्यते जनन्यथो) र्थकः (र्थके) रत्नमालायाम् ; संग. ४६८ क्षयस्तृ ( क्षयं तृ ) रत्नमालायाम् .

(५) गभा. १६६ पू ., लल्लः ; सिन्धु. ८५२ पू .; संग. ४६८ रत्नमालायाम् .

### जयार्णवे

मूलवृक्षः तदङ्गघटीफलानि च

[1]मूलं स्तम्भस्त्वचा शाखा पत्रं पुष्पं फलं शिखा ।
वेदाश्च मुनयश्चैव दिशश्च वसवस्तथा ॥

[2]नन्दा बाणा रसा रुद्रा मूलभेदाः प्रकीर्तिताः ।
नक्षत्रमानघटिकाः षष्टिमानमितीरिताः ॥

[3]मूले मूलविनाशाय स्तम्भे हानिर्धनक्षयः ।
त्वचि भ्रातृविनाशाय शाखा मातृविनाशकृत् ॥

[4]पत्रे सपरिवारः स्यात् पुष्पेषु नृपवल्लभः ।
फलेषु लभते राज्यं शिखायामल्पजीवितम् ॥

[5]मूलं स्तम्भस्त्वचा शाखा पत्रं पुष्पं फलं शिखा ।
$तत्राङ्गाष्टदशेशार्कपञ्चाब्ध्यग्निघटीफलम् ॥

मूले स्वामिविनाशः
स्तम्भे हानिस्त्वचि च सहजनाशः ।
जननीनाशः स्कन्धे
दले मङ्गलकृन्नृपप्रियः पुष्पे ॥

$ अत्र षष्टिसंख्यापूरणार्थमङ्गशब्दो राज्याङ्गाभिप्रायेण सप्तसंख्येयबोधक इति कल्पनीयम् ।

(१) गभा. १६६ ; सिन्धु. ८५२–८५३ स्तम्भस्त्व ( स्तम्भं त्व ) ; संग. ४६९ ज्योतिर्निबन्धे.

(२) गभा. १६६ पू .; सिन्धु. ८५३ दाः प्रकीर्तिताः (दः प्रकीर्तितः) पू . ; संग. ४६९ नन्दा बाणा र (नन्दबाणर) ज्योतिर्निबन्धे.

(३) गभा. १६६ मूले ( मूलं ) मातृवि (मातुर्वि) ; सिन्धु. ८५३ ; संग. ४६९ मूलवि ( मूलं वि ) क्षयः (क्षयम् ) त्वचि (त्वचां) मातृवि (मातुर्वि) ज्योतिर्निबन्धे.

(४) गभा. १६६ ; सिन्धु. ८५३ ; संग. ४६९ पूर्वार्धे (पत्रेषु परिवारघ्नः पुष्पेषु नृपतिप्रियः । ) ज्योतिर्निबन्धे.

(५) ज्योनि. २४१.

सचिवः फले शिखायां
मृत्युमवाप्नोति भूपो वा ।
हासर्धिर्न्यू( ? न्यू )नाधिक-
षष्ट्या स्यादत्र नाडिकामानम् ॥

### देवकीर्तिः

एकनक्षत्रजननदोषः

[1]यद्येकस्मिन् धिष्ण्ये
जायन्ते दुहितरोऽथवा पुत्राः ।
पितुरन्तकरा ह्येते
यद्यपरे प्रीतिरतुला स्यात् ॥

### सहदेवः

मूलपुरुषाश्लेषापुरुषाङ्गघटीफलानि

[2]मूर्धा वक्त्रं तथा बाहू हृन्नाभी च कटिद्वयम् (?) ।
गुह्यं पादौ दशस्थानं ( ? ) कट्यां षट्कं
क्रमात्फलम् ॥
मूर्ध्नि घातो मुखे क्षेमं भृत्यमातुलयोः करौ(?)।
हृदये शुभसौख्यं च नाभ्यां स्वामिविघातकः ॥
करद्वये मातृहन्ता गुह्ये तस्कर एव च ।
पादयोर्धनहानिः स्यान्मूलचक्रफलं विदुः ॥
मूर्ध्नि पञ्च सुराज्याप्तिर्मुखे सप्त पितृक्षयः ।
नेत्रे द्वे जननीनाशो ग्रीवायां त्रिषु लम्पटः ॥
स्कन्धे वेदा गुरोर्भक्तो हस्तेऽष्टौ च बली
भवेत् ।
हृद्येकादशभिश्चाऽऽत्मघाती संजायते नरः ॥
ग्रीवानाभौ भ्रमी षड्भिर्गुदे नव तपोधनः ।
पादे पञ्च धनं हन्ति सार्पादेतत् फलं क्रमात् ॥

### प्रश्नप्रदीपे

गण्डान्तजननफलम्

[3]विवाहादौ भवेन्मृत्युर्जातके कुलनाशनम् ।
यात्रायां सर्वनाशश्च कार्यनाशोऽन्यकर्मणि ॥

(१) गमा. १६६ ; सिन्धु. ८५६.
(२) ज्योति. २४१-२४२. (३) ज्योति. २४०.
सं. का. ३४०

### ढुण्ढिराजः

गण्डान्तजातस्याष्टौ वर्षाण्यदर्शनं ततः शान्तिश्च

[1]अष्टवर्षाणि नाऽऽलोक्यं तातेन शुभमिच्छता ।
तद्दोषपरिहारार्थं शान्तिकं प्रोच्यतेऽधुना ॥

### मुहूर्तगणपतौ

अभुक्तमूलस्वरूपे मतभेदाः, मूलादिनक्षत्रचरणफलानि, मूलनिवासः, गण्डान्त-विकृति-तिथिनक्षत्रयोगकरण-विशेष-पित्रादिनक्षत्रजनन-त्रिकप्रसवरूपाणि शान्तिनिमित्तानि

[2]ज्येष्ठान्त्ये घटिकायुग्मं मूलादौ घटिकाद्वयम् ।
अभुक्तमूलमेतत् स्यादित्येवं नारदोऽब्रवीत् ॥
वसिष्ठस्तु तयोरन्त्याद्ययोरेकद्विनाडिकम् ।
अङ्गिरा घटिकामेकामन्त्ये पश्चाष्ट तत्र तु ।
जातं शिशुं त्यजेत्तातो न पश्येद्वाऽष्टहायनम् ॥
मूलाद्यचरणे तातो द्वितीये जननी तथा ।
तृतीये तु धनं नश्येच्चतुर्थोऽस्य शुभावहः ॥
माघाषाढाश्विने भाद्रपदे मूलं वसेद्दिवि ।
कार्तिकश्रावणे चैत्रे पौषे मासे तु भूतले ॥
वैशाखे फाल्गुने ज्येष्ठे मार्गे पातालवर्ति तत् ।
भूतले वर्तमाने तु ज्ञेयो दोषोऽन्यथा नहि ॥
यदुक्तं मूलपादेषु फलं तत् स्याद्विलोमकम् ।
अश्लेषायां तु विज्ञेयं शान्तिस्तस्माद्विधीयते ॥
गण्डान्तत्रितये चापि ज्येष्ठायामशुभा जनिः ।
तथा यमलजातादिविकृतिर्न शुभावहा ॥
सर्पांशे प्रथमे श्रेष्ठं द्वितीये च धनक्षयः ।
तृतीये जननीं हन्ति चतुर्थे मरणं पितुः ॥
आद्ये पादेऽग्रजं हन्ति ज्येष्ठाया अनुजं द्विके ।
तृतीये जननीं जातः स्वात्मानं च तुरीयके ॥
गण्डान्तः परिघः शूलं व्यतीपातोऽथ वैधृतिः ।
मूलाश्लेषाऽप्यमा ज्येष्ठा यमघण्टोऽर्कसंक्रमः ॥
वज्रगण्डौ मृतिर्भद्रा व्याघातो दग्धवासरः ।
कृष्णा चतुर्दशी पातस्तातसोदरजन्मभे ॥

(१) संग. ४७२. (२) संव. ६६-६७.

तथाऽष्टमदिनं नेष्टं जन्मकाले शिशोस्त्रिकम्।
तद्दोषपरिहाराय शान्तिं कुर्याद्यथाविधि ॥

पूर्वोक्ता अन्ये च जनने दुष्टकालाः शान्त्या शुभावहाः, तानाह– गण्डान्तः परिघ इति। संव. ६७

यदि पुत्रत्रयादूर्ध्वं चतुर्थी कन्यका भवेत्।
एवं कन्यात्रयात्पुत्रस्तदा दोषस्त्रिकाभिधः ॥
रेवतीजनने दोषस्तथा च ग्रहणोद्भवे।
एवं जाते प्रकुर्वीत शान्तिं शान्तिविधानतः ॥

## शौनककारिकाः

शान्तिनिमित्तानि– अभुक्तमूलम्, मूलनक्षत्रम्, योगाः, संक्रान्तिः, ग्रहणम्, अधोमुखप्रसवः, एकनक्षत्रजननम्, गण्डान्तानि, निमित्तविशेषे कुमारस्य त्यागः अदर्शनं शान्तिर्वा, मासविशेषे पशुप्रसवोऽपि शान्तिनिमित्तम्

[1]अथातः संप्रवक्ष्यामि मूलजातहिताय च।
मातापित्रोर्धनस्यापि कुलज्ञातिहिताय च ॥
[2]त्यागो वा मूलजातस्य स्यादष्टाब्दात् प्रदर्शनम्।
अभुक्तमूलजातानां परित्यागो विधीयते ॥
[3]अदर्शनाद्वाऽपि पितुः स तु तिष्ठेत्समाष्टकम्।
एवं च दुहितुर्ज्ञेयं मूलजातफलं बुधैः।
शान्तिर्वा पुष्कला स्याच्चेत्तर्हि दोषो न कस्यचित् ॥

(१) शौका. १ पृ. ११४ शाति (शान्ति) ; प्रपा. १६९ मनुः ; शाम. ६७ च। मा (वै। मा) ; विपा. ३३३ शौकावत् ; संकौ. ७१ शौकावत् ; संग. ४६८ शौकावत्.

(२) शौका. २ पृ. ११४ ; प्रपा. १६९ मनुः ; शाम. ६७ ; विपा. ३३३ ; संकौ. ७१ ; संग. ४६८ पू.

(३) शौका. ३ पृ. ११४ तृतीयार्धं नास्ति ; प्रपा. १६९ मनुः ; शाम. ६७–६८ द्वितीयार्धे (एवं दुहितरि प्रोक्तं मूलजायां फलं बुधैः।) कस्यचित् (कश्चन) तृतीयार्धमनिर्दिष्टकर्तृकम् ; विपा. ३३३ स तु ति (समुत्ति) त्तर्हि (त्तदा) कस्यचित् (कश्चन) ; संकौ. ७१ कस्यचित् (विद्यते) तृतीयार्धमनिर्दिष्टकर्तृकम्.

[1]अथातः संप्रवक्ष्यामि शौनकः शान्तिमुत्तमाम्।
वैधृतौ च व्यतीपाते महादोषोऽभिजायते ॥
[2]कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः।
संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥
[3]दरिद्राणां महादुःखं व्याधिपीडा महद्भयम्।
अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥
[4]स्त्रीणां च शोकदुःखं च सर्वनाशकरो भवेत्।
शान्तिर्वा पुष्कला कार्या तत्र दोषो न कश्चन ॥
[5]गोमुखप्रसवं कुर्याच्छान्तिं कुर्यात् प्रयत्नतः।
जपाभिषेकदानैश्च होमादपि विशेषतः ॥

(१) शौका. १ पृ. १२० ; प्रपा. १७५ ; संप्र. १९७ उत्त. ; विपा. ४०८ च व्यतीपाते (व्यतिपाते च) ; ज्योनि. २५० (=) शौनकः शान्तिमु (शान्तिं शौनक उ) ; संकौ. ८६ ; संग. ५१८ ; कुभ. ८५५ पू.

(२) शौका. २ पृ. १२० दारिद्र्य (दारिद्र) ; प्रपा. १७५ ; संप्र. १९७ रवेस्तत्र (रवेरत्र) ; शाम. ७४ ; विपा. ४०८ तु (च) ; ज्योनि. २५० (=) संक्रम (संक्रान्ति) ; संकौ. ८६ ; संग. ४४६ : ४६१ संक्रमश्च (संक्रमे च) : ५१८ तु (च) ; कुभ. ८५५.

(३) शौका. ३ पृ. १२० महादुःखं (महद्दुःखं) ; प्रपा. १७५ दरिद्राणां (दारिद्र्यं च) पीडा (पीडां) ; संप्र. १९७ ; शाम. ७४ पीडा महद्भयम् (पीडासमुद्भवम्) अश्रियं (अश्रियो) ; विपा. ४०८ शौकावत् ; संकौ. ८६ ; संग. ४४६, ५१८ पीडा मह (पीडामह).

(४) शौका. ४ पृ. १२० स्त्रीणां (स्त्रियां) ; प्रपा. १७५ दोषो न कश्चन (दोषविनाशिनी) ; शाम. ७४ शोकदुःखं (शोकं दुःखं) तत्र (तस्य) ; विपा. ४०८ शोकदुखं (शोको दुःखं) तत्र दोषो न (तद्दोषो न च) ; ज्योनि. २५० (=) प्रथमपादे (दरिद्राणां महादुःखं) ; संकौ. ८६ ; संग. ५१८ तत्र (तदा).

(५) शौका. ५ पृ. १२० ; प्रपा. १७५ कुर्यात् प्र (चापि प्र) दानैश्च होमादपि (दानानि होमानपि) ; शाम ७४ ; विपा. ४०८ जपा (सर्पा) ; ज्योनि. २५० (=) कुर्यात् प्रय (कुर्याच्च य) ; संकौ. ८६ ; संग. ५१८ ; कुभ. ८५५ कुर्याच्छान्तिं कुर्यात् (कृत्वा कुर्यात् शान्तिं) पू.

[1]नवग्रहमखं कुर्यात् तस्य दोषस्य शान्तये ।
प्रथमं गोमुखाज्जन्म ततः शान्तिं समाचरेत् ॥
[2]ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥
[3]इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥
[4]प्रसवेत्तु यदा नारी बालकं तु अधोमुखम् ।
वंशारिष्टकरं चैव मातापित्रोर्विशेषतः ॥

बालकं तु परित्याज्यं यावच्चूडोपकर्मणि (?) ।
मातापित्रोर्विशेषेण तन्मुखं नावलोकयेत् ॥
तस्यारिष्टविनाशार्थं कुर्याच्छान्तिं यथाविधि ॥

(१) शौका. ६ पृ. १२० दोषस्य शा (दोषोपशा) चरेत् (रभेत्) ; प्रपा. १७६ दोषस्य शा (दोषप्रशा) ; शाम. ७४ दोषस्य शा (दोषोपशा) ; विपा. ४०८ शामवत् ; ज्योनि. २५० (=) प्रपावत् ; संको. ८६ ; संग. ५१८ शामवत् .

(२) शौका. १ पृ. १२२ ; गभा. १२८, १६६ ; शाम. ७७ ; सिन्धु. ८५६ ; विपा. ६७ व्याधिपी (व्याधिः पी) ; संर. ६५४ (प्रसूतिर्यदि जायेत ग्रहणे चन्द्रसूर्ययोः । संक्रान्तौ च तदा स्त्रीणामादौ च ऋतुदर्शने ॥) भार्गवः .

(३) शौका. २ पृ. १२२ ; गभा. १२८, १६६ यस्तु (यस्य) पू. ; शाम. ७७ ; सिन्धु. ८५६ सर्वे गभावत् ; विपा. ६७ व्याधिपी (व्याधिः पी) ; संर. ६५४ विपावत् , भार्गवः .

(४) शौका. १–३ पृ. १२३.

[1]सिंहे तु गावो महिषी तु माघे
नभे तु मासे वडवाप्रसूतिः ।
पौषे तु भार्या प्रथमे प्रसूति (? भार्या-प्रथमप्रसूतिः)
कृत्वा (तु) शान्तिं सुखमश्नुते गृही ॥
[2]एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥
[3]शौनकोऽहं प्रवक्ष्यामि नक्षत्रैक्यस्य शान्तिकम् ।
मातृनक्षत्रजातस्य मात्ररिष्टं तथैव च ॥
पितृनक्षत्रजातस्य पित्ररिष्टं भवेद्ध्रुवम् ।
तन्नक्षत्रे पादयुक्ते तत्र जातं शिशुं त्यजेत् ॥
तस्य नक्षत्रजातस्य न श्रोतव्यो ध्वनिः पितुः ।
जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने ॥
गोमुखप्रसवं कुर्याद्गोदानं च ततः परम् ।
सर्वारिष्टविनाशाय गोमुखप्रसवो भवेत् ॥
पुत्रो यदि पितुर्गण्डे दिवा चैव प्रजायते ।
कन्यकाजननं रात्रौ मातृगण्डे तथैव च ॥
संध्ययोर्धनगण्डे च प्रसूतिर्यदि जायते ।
विनाशो जायते शीघ्रं मध्यमं तद्विपर्यये ॥

## कुमारिलकारिकाः

भार्यागवोर्यमलजननं शान्तिनिमित्तम्

[4]अथ यस्य वधूर्गौर्वा जनयेद्यमौ ततः ।
स मरुद्भ्यश्चरुं कुर्यात् पूर्णाहुतिमथापि वा ॥

(१) शौका. १ पृ. १२४. (२) प्रपा. १७४.
(३) ज्योनि. २३९ शौनकीयतन्त्रे.
(४) कुका. ३।२३।१ ; प्रपा. १७७ ; शाम. ८० ; विपा. ४१५ ; संको. ९६–९७ ; संग. ५२९.

# नामकरणम्

## नामकरणविधिः

### बौधायनगृह्यसूत्रम्

नामकरणकालः , नामस्वरूपम्

[1]**दशम्यां द्वादश्यां वा नामकरणम् ॥**

**द्व्यक्षरं चतुरक्षरं षडक्षरमष्टाक्षरं वा ॥**

**घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम् ॥**

**अपि वा यस्मिन् स्वित्युपसर्गः स्यात्तद्धि प्रतिष्ठितमिति विज्ञायते ॥**

[2]**ऋष्यणूकं देवताणूकं वा ॥**

[3]**यथैवैषां पूर्वपुरुषाणां नामानि स्युः ॥**

( १ ) अणूकम् अभिधायकम् । मुक्ता. ८२

( २ ) ऋषिनाम देवनाम । पूर्वपुरुषाणां पितामहादीनां नामानि स्युः तादृशं नाम कुर्वीतेत्यर्थः । नामकर्मविषये बोधायनपक्ष एव साधुः । आन. १४८

( ३ ) वसिष्ठः नारदः विष्णुः शिवः यज्ञशर्मा सोमशर्मा इत्यादि । बाल. १।१२ पृ. २९

[4]**अयुगक्षरं कुमार्याः ॥**

**अमुष्मै स्वस्तीति ॥**

### बौधायनगृह्यपरिभाषासूत्रम्

नामकरणकालः

[5]**दशम्यां द्वादश्यां वा नामकरणम् ॥**

---

(१) बौगृ. २।१।२३, २५–२७.

(२) बौगृ. २।१।२८ ; मुक्ता. ८२ ; आन. १४८ ; बाल. १।११–१२ पृ. २९ णूकं ( नूकं ).

(३) बौगृ. २।१।२९ ; मुक्ता. ८२ यथैवै ( यथा वै ) ; आन. १४८ ; बाल. १।११–१२ पृ. २९.

(४) बौगृ. २।१।३०–३१.

(५) बौगृप. १।११।१९.

### बौधायनगृह्यशेषसूत्रम्

नामकरणकालः , व्यावहारिकं नाक्षत्रं चेति नामद्वयम् , सोमयाजिनि कर्तरि तृतीयं नाम , नामद्वयस्वरूम्

[1]**अथ प्रसुते प्रसिद्धं जातकर्म कृत्वा दशम्यां द्वादश्यां वा मातापितरौ स्नात्वा शुच्यगारं कृत्वा पुत्रस्य नामधेयमस्य निदधीयातामिति ॥**

† [2]**नक्षत्रनामधेयेन द्वितीयमस्य नामधेयं गुह्यम् । अस्यान्यदभिवादनीयमोपनयनकालान्मातापितरौ संविदितौ भवतः ॥**

[3]**विज्ञायते च– ' तस्माद् द्विनामा ब्राह्मणोऽर्धुकः ' इति ॥**

( १ ) द्वितीयं व्यावहारिकापेक्षया । तदेव गुह्यम् । नाक्षत्रमिति यावत् । न पुनस्तृतीयम् , ' द्विनामा ब्राह्मणः ' इतिवाक्यशेषासंगतेः । ‡ संप्र. २३८

( २ ) §तृतीयमप्याह बौधायनः– नक्षत्रेति । अन्यत्

---

† ' नक्षत्रनामधेयेन ' इति पदमादर्शपुस्तकपाठे चतुर्थसूत्रशेषत्वेन मुद्रितम् । निबन्धकारैस्तु पञ्चमसूत्रादित्वेन पठितम् । निबन्धकारपाठ एव युक्तत्वादस्माभिरनुसृतः ।

‡ संग. संप्रवत् ।

§ पूर्वोक्तकुलदेवतासंबद्धनाम–मासनामापेक्षया तृतीयत्वमभिप्रेतमिति ' द्वितीयम् ' इति मूलोक्त्या न विरोधः । ' द्विनामा ब्राह्मणः ' इत्युक्त्या विरोधस्तु कौस्तुभकारेण न समाहितः ।

(१) बौगृशे. १।११।१ ; संप्र. २४५ ( अथ... कृत्वा० ) दधीयातामिति ( धीयत इति ) ; संग. ५६४ ( अथ...कृत्वा० ) निदधीयातामिति ( विधीयत इति ).

(२) बौगृशे. १।११।५ ; संप्र. २३८ द्वितीयमस्य ( द्वितीयं ) नयनकालान्मा ( नयनान्मा ) ; संकौ. १०१ संप्रवत् ; संग. ५५७ संप्रवत् ; संब. ६८ ( नक्षत्रनामधेये द्वितीयं नामधेयं गुह्यमस्यान्यत् ) एतावदेव.

(३) बौगृशे. १।११।६ ; संप्र. २३८ ( च० )

व्यावहारिकात् । नक्षत्रनामधेयेन इति तृतीयया 'तत्र जातः' (पा. सू. ४।३।२५) इत्यधिकारे विहिततद्धितान्तेन कृत्तिकादिनाम्ना निष्पन्नमित्यर्थो लभ्यते । अत एव 'नक्षत्रनाम द्वितीयं स्यात्' (हिगृ. २०।१।१२) इतिहिरण्यकेशिसूत्रव्याख्यावसरे मातृदत्तग्रन्थः– 'किं तत्? जन्मनक्षत्रप्रकृतिकम् । तत्रजातार्थतद्धितान्तम् । यथा– रौहिणः श्रविष्ठः आर्द्रक इति' इति । उक्तस्यास्य नाम्नो विनियोगः सूक्तवाके आश्वलायनेन– 'असावसावित्यस्याऽऽदिश्य नामनी' (आश्रौ. १।१।९) इति । उक्तं च एतद्व्याख्यानावसरे नाम्नोः क्रमनियमाय देवत्रातेन– "'तत्र जातः' इत्यस्मिन्नर्थे तद्धित उत्पद्यते" इति प्रकृत्य 'तस्मादेवं प्रयोगो भवति– अनूराधो देवदत्तः' इति । तथा बौधायनेन 'पुत्रस्य नाम गृह्णाति' इति प्रक्रम्य 'रो(?रौ)हिणाय, तिष्याय' इति यथानुशासनं विनियोगोऽभ्यधायि । तथा उपनयनप्रकरणस्थस्य 'को नामासीति नामधेयं पृच्छति तस्याऽऽचार्यः । अभिवादनीयनामधेयं कल्पयित्वा देवताश्रयं नक्षत्राश्रयम् । गोत्राश्रयमप्येके' (गोगृ. २।१०।२२–२५) इति सूत्रस्य व्याख्यावसरे छन्दोगसूत्रभाष्यकृता उक्तम्– 'नक्षत्राश्रयं फल्गुननामाऽसीति' । एवं च ज्योतिर्वित्प्रसिद्धस्वरोदयाभिहितशतपदचक्रसारोद्धारो यो ज्योतिषार्केऽभिहितः– 'चूचेचोलापदेष्वाद्ये लीलूलेलो यमस्य च ।' इत्यादि, तत्र 'इति प्रोक्ता इमे पद्ये वर्णानामादिजाः स्फुटाः ।' इत्युपसंहारात् अश्विन्यां पदेषु चरणेषु ये चू इत्यादयो वर्णाः तदादीनि नामानि 'चूडामणिः, चेदिपतिः, चोलपतिः, लाटपतिः' इत्येवं कार्याणीति प्रतीतेः ज्योतिर्विदां नक्षत्रतच्चरणज्ञानफलानि सन्तु तान्यपि नामानि । यदि नामकरणप्रकरणे क्वचिद् गृह्यग्रन्थे तादृशनाक्षत्रनाम कार्यमिति स्फुटो विधिर्भवेत् तदाऽपि सूक्तवाकादिसंबद्धकर्मानधिकृतजात्यन्धविषयोऽसाविति ज्ञेयम्, तदधिकृतान् प्रति व्याकरणानुसारिनाक्षत्रनाम्नामेवाऽऽवश्यकताया दर्शितत्वात् । † संको. १०२–१०३

[1] 'सोमयाजी तृतीयं नामधेयं कुर्वीत' इति विज्ञायते ॥

अयुगक्षरं कुमार्यै स्वस्तिश्रीसोम्येति दीर्घवर्णान्तम् ॥

[2] अथाप्युदाहरन्ति– शर्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य गुप्तान्तं वैश्यस्य भृत्यदासान्तं शूद्रस्य दासान्तमेव वा ॥

[3] अथ नक्षत्राणि– रोहिणीमृगशीर्षमघाचित्राज्येष्ठाश्रवणशतभिषग्रेवत्यश्वयुक्षु प्रथमाक्षरवृद्धिः स्याद्रोहिण्यां रौहिणायेति । तथेतराणि ॥

[4] तिष्याश्लेषाहस्तविशाखानूराधाषाढाश्रविष्ठासु प्रकृतिवत्तिष्यायेति । तथेतराणि ॥

[5] फल्गुन्यां फाल्गुनायेति ॥

स्वातीपुनर्वस्वोः स्वातये पुनर्वसव इति ॥

मूलार्द्रयोर्मूलकायाऽऽर्द्रकायेति ॥

[6] प्रोष्ठपदासु प्रोष्ठपदाय प्रौष्ठपदायेति वा ॥

---

ब्राह्मणोऽर्धुकः (ब्राह्मणः); संको. १०२ (विज्ञायते द्विनामा ब्राह्मण इति); संग. ५५७ संप्रवत् .

† संव. संकोगतम् ।

(१) बौगृशे. १।११।७–८.

(२) बौगृशे. १।११।९ ; संर. ८५५ (अथाप्युदाहरन्ति०) (भृत्य०) (दासान्तमेव वा०).

(३) बौगृशे. १।११।११ ; संप्र. २३८ अथ (यथा) वृद्धिः स्याद्रो (वृद्धिरस्माद्रो) तराणि + (इति) ; संको. १०२ (रोहिणाय) एतावदेव ; बाल. १।११–१२ पृ. २९ (रौहिणाय) एतावदेव ; संर. ८५६ बालवत् .

(४) बौगृशे. १।११।१२ ; संप्र. २३८ श्लेषा (श्लेषा) नूराधा (नुराधा) ; संको. १०२ (तिष्याय) एतावदेव ; बाल. १।११–१२ पृ. २९ संकोवत् ; संर. ८५६ संकोवत् .

(५) बौगृशे. १।११।१३–१५ ; संप्र. २३८.

(६) बौगृशे. १।११।१६ ; संप्र. २३८ प्रोष्ठपदाय प्रो (प्रौष्ठपदाय प्रो).

[१]अपभरण्यामपभरणायाऽऽपभरणायेति वा ॥

[२]अग्नये कृत्तिकाय कार्तिकायेति वा व्याख्यातान्यग्नेर्होतुः ॥

† [३]स्त्रीविषये कुमार्यै रोहिण्यै सुश्रियै गौर्यै स्वस्तीति ॥

( १ ) अग्नय इति तत्तन्नक्षत्रदेवतानामुपलक्षणम् । संप्र. २३९

( २ ) अत्रेदं बोध्यम्— देशभाषानुसारेण क्रियमाणनाम्नः सूक्तवाकादौ संकल्पादौ च उल्लेखः बर्बराणां भ्रान्त्यैव । तस्मात् 'घोषवदाद्यन्तर(न्त)स्थं द्व्यक्षरं चतुरक्षरं वा नाम कर्तव्यं कृतं कुर्यान्न तद्धितम्' इत्याश्वलायनगृह्यसूत्रोक्त( ? )नाम्नैव साधुना तदुचितम् । किंच, अग्न्यादिनक्षत्रदेवता उक्त्वा 'नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि । यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम् ॥' इति वेदाङ्गज्योतिषोक्तं नक्षत्रनाम च तदुपयोगि । नामकरणे नाक्षत्रं नाम नक्षत्रपादाक्षरादि कार्यमिति वृद्धाः । गृह्यपरिशिष्टे च क्वचित् तथैवोक्तम् । एतदेव नामकरणप्रकरणे 'नक्षत्रनाम च निर्दिशति तद्रहस्यं भवति' ( आपगृ. १५।२,३ ) इत्यापस्तम्बेनोक्तम् । तदेव च 'अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयात्' इत्याश्वलायनेनोक्तम् । एवमेव नामकरणे वृद्धशिष्टानामाचारः । अत एव ज्योतिषे 'यज्ञकर्मणि' इत्युक्तम् । तत्तन्नक्षत्रवाचकेभ्यः जातार्थप्रत्यये निष्पन्नं तत्तन्नक्षत्रजं नाम इति केचित् । तत्र 'पुत्रस्य नाम गृह्णाति रौहिणाय तिष्याय' इति बौधायनसूत्रं मूलम् । यत्तु 'असावसावित्यादिश्य नामनी' इत्याश्वलायनेनोक्तं तत्तु संदिग्धम् । यत्तु देवव्रातेन 'अनुराधो देवदत्तः इति प्रयोक्तव्यम्' इत्युक्तं तत्र सूत्राक्षरानुग्रहश्चिन्त्यः । शाङ्खायनादयस्तु ज्योतिषोक्तमेवाऽऽद्रियन्ते । इदानीमाश्वलायना देवव्रातोक्त्या 'निर्दिशेद्यजमानस्य नाम सांव्यवहारिकम् । नाक्षत्रं च यथा कृष्णशर्मा रौहिण इत्यपि ॥' इत्याश्वलायनश्रौतकारिकोक्त्या च तथैवाऽऽचरन्ति, नामकरणेऽपि तदेव नाक्षत्रं नामेति च वदन्ति । गुरुचरणास्तु— 'बौधायनादिवाक्ये रौहिणादिपदं तत्तन्नक्षत्रजातत्वेन तत्तद्देवतानामुपलक्षणम् । एवं हि ज्योतिषेण तेषामेकमूलकल्पनालाघवं भवति । विकल्पस्यानौचित्याच्च, संज्ञापर्यायनामशब्देन पाचकादिशब्दवत् केवलयौगिकभावणादिशब्दानां ग्रहीतुमनौचित्याच्च, अभिवादनं प्रयोजनम् अस्य इत्यर्थकाभिवादनीयशब्देन तस्य वक्तुमशक्यत्वाच्च, तस्य साधारणत्वात्' इत्याहुः । बाल. १।१२ पृ. २९

---

† एतत्सूत्रे यः संप्रपाठः स किंचिदक्षरभेदेनाऽऽदर्शपुस्तकपादटिप्पण्यां पुस्तकान्तरीयत्वेन निर्दिष्टः ।

(१) बौगृशे. १।११।१७ ; संप्र. २३८ ( भरण्यामपभरणायेति ) एतावदेव.

(२) बौगृशे. १।११।१८; संप्र. २३८–२३९ व्याख्यातान्यग्नेर्होतुः ( ख्यातानि । होतुः– ).

(३) बौगृशे. १।११।१९ ; संप्र. २३९ ( स्त्रीविषये कुमार्यै रोहिण्यै सुश्रियै जयन्त्या इति प्रकृतिवत्तिष्यायै वेति फाल्गुन्यै स्वात्यै पुनर्वसवे इति । मूलार्द्र( योरार्द्र )कायै मूलकायै वेति प्रोष्ठपदासु निर्ऋत्यै रुद्राण्यै चेत्यापभरण्यै कार्तिकायै गौरिण्यै स्वस्तीति ).

## आश्वलायनगृह्यसूत्रम्

नामकरणविधिः, व्यावहारिकनामस्वरूपम्, द्वितीयमभिवादनीयं गुह्यं नाम, कुमार्या अमन्त्रकं नामकरणम्

[१]नाम चास्मै दधुः ॥

( १ ) कुर्युरित्यर्थः । देना.

( २ ) कुर्युरित्यर्थः । नामकरणस्याऽऽचार्येण कालान्तरानुक्तेः जातकर्मानन्तरं कार्यमित्येके । अन्ये शास्त्रान्तरोक्तः कालो ग्राह्य इत्याहुः । उक्तं च मनुना— 'नामधेयं दशम्यां तु द्वादश्यां वाऽपि कारयेत् । पुण्ये

---

(१) आगृ. १।१५।४ ; प्रपा. १६५ ; संप्र. २३२, २४१ ; संम. १५ ; संको. १००, १०३ ; संब. ६७ ; कुम. ९०७.

तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ ' ( मस्मृ. २।३० ) इति । † गाना॰.

(३) बहुवचननिर्देशात् मातृपितृबान्धवा इति समुदिता नाम दद्युः । कालस्तु शास्त्रान्तरादागमयितव्यः । तत्र मनुः— ' नामधेयं दशम्यां तु द्वादश्यां वाऽथ कारयेत् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ ' ( मस्मृ. २।३० ) इति । अना.

( ४ ) आश्वलायनगृह्ये जातकर्मोत्तरं कालान्तरमनुक्त्वा ' नाम चास्मै ... ' इति नामकरणमुक्तम् । तेन ज्ञायते जातकर्मोत्तरमेव कालः । संम. १५–१६

**[१]घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरम् ॥**
**[२]चतुरक्षरं वा ॥**

( १ ) कीदृग्लक्षणं तन्नामेति तस्य लक्षणमाचष्टे— घोषवदित्यादि । घोषवन्तो वर्णा आदौ कर्तव्याः । अन्तरन्तस्थमिति । मध्ये अन्तस्थाः कर्तव्याः । अभिनिष्ठानान्तमिति । अभिनिष्ठानो नाम विसर्जनीयः । विसर्जनीयान्तमित्युक्तम् । द्व्यक्षरं द्वे अक्षरे परिमाणं तदिदं द्व्यक्षरं नाम परिमाणतः । भवः रुद्रः देवः इत्येवंप्रकाराणि । चतुरक्षरं वा नाम कर्तव्यम् । एतैर्लक्षणैः संयुक्तं भवेत् । देवदत्तः भवनाथः इत्येवंप्रकाराणि । देभा.

( २ ) कीदृग्लक्षणं तन्नामेत्याह— घोषेति । प्रथमद्वितीया वर्गाणामूष्माणश्च हकारवर्जमघोषवन्तः, शिष्टा घोषवन्तः, ते आदौ यस्य तत्तथोक्तम् । अन्तः मध्ये अन्तस्था यस्य तत्तथोक्तम् । यकारादयश्चतस्रः( ? श्चत्वारः) अन्तस्थाः । अभिनिष्ठानः विसर्जनीयः । सः अन्ते यस्य तत्तथोक्तम् । अक्षरं स्वरव्यञ्जनात्मकम् । अकारादयः द्वादश स्वराः । शिष्टं व्यञ्जनम् । द्वे अक्षरे यस्य तत् द्व्यक्षरम् । व्यञ्जनमपरिमितम् । चतुरक्षरं वा । उक्तलक्षणं नाम कुर्युः । भद्रः, देवः, भवः, भवनाथः, नागदेवः, रुद्रदत्तः, देवदत्तः इत्येवंलक्षणानि नामानि भवन्ति । ¶ गाना॰.

( ३ ) वर्गाणां द्वि(? तृ)तीयचतुर्थौ रहौ च घोषवन्तः । तेषामन्यतमो वर्ण आदौ कर्तव्यः । § अना.

( ४ ) कु चु टु तु पु इति पञ्च वर्गाः । तेषां प्रथमद्वितीया वर्णाः शषसाश्च अघोषाः । शेषाः पञ्चदश हकारश्च इत्येवं षोडश वर्णा घोषवन्तः । ते आदौ यस्य तत् घोषवदादि । अक्षरं स्वरः । ते च अकारादयः $नपुंसकवर्जाः द्वादश । ‡ संप्र. २४१

( ५ ) अक्षरं स्वरः, स च ऋऌभिन्नः । † संकौ. १०३

**[१]द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः ॥**

( १ ) द्व्यक्षरं प्रतिष्ठाकामस्य कर्तव्यम् । तत्र कस्यायं ¶कामः ? कुमारस्य । कः कामयते ? यो नाम करोति ।

---

† संकौ., संव. गानावृत्त्यनुवादः । प्रपा. सर्वत्र गानावृत्त्यनुवादः अत्र अनागतं च । संप्र. गानावृत्त्यनुवादः अनागतं च ।

(१) आगृ. १।१५।५ ; प्रपा. १६५ ; संप्र. २४१ ; संम. १५ ; संकौ. १०३ ; बाल. १।११–१२ पृ. २९ ( घोषवदाद्यन्तरन्तस्थं द्व्यक्षरम् ) ; संव. ६९ ; कुभ. ९०७.

(२) आगृ. १।१५।६ ; प्रपा. १६५ ; संप्र. २४१ ; संम. १५ ; संकौ. १०३ ; बाल. १।११–१२ पृ. २९ वा + ( नाम कर्तव्यं कृतं कुर्यान्न तद्धितम् ) ; संव. ६९ ; कुभ. ९०७.

¶ संम. गानावत् । कुभ. गानावृगतं संप्रगतं च ।

§ शेषं गानावृगतम् ।

$ नपुंसकस्वरौ ह्रस्वदीर्घौ ऋकारऌकारौ, ' ऋॠवर्णद्वयं ऌॡद्वयं क्लीबं प्रचक्षते । ' इति वाचस्पत्यकोशे तन्त्रसारवचनात् ।

‡ शेषं गानावृवत् ।

† शेषं गानावृगतं संप्रगतं च । संव. संकौवत् ।

¶ कामशब्दोऽयं कर्मन्युत्पत्त्या प्रतिष्ठाब्रह्मवर्चसरूपफलपरः, अन्यथाऽग्रिमग्रन्थविरोधः ।

(१) आगृ. १।१५।७ ; प्रपा. १६५ ; संप्र. २४१ ; संम. १५ ; संकौ. १०३ ; संव. ६९ ; कुभ. ९०७.

कस्मात्? इतरस्याशक्यत्वात्। ब्रह्मवर्चसं यः कामयते तस्य चतुरक्षरं कर्तव्यम्। देभा.

(२) द्व्यक्षरं चतुरक्षरं वा इति यदुक्तं तत् काम्यमपीत्याह– द्व्यक्षरमिति। प्रतिष्ठाब्रह्मवर्चसे च कुमारस्य, तत्संस्कारत्वात्, न कर्तुः। ¶ गानावृ.

## [1]युग्मानि त्वेव पुंसाम्॥

(१) युग्मानीति युग्माक्षराणीति समानाक्षराणीत्यर्थः। तेन षडक्षरमित्येवमादीन्यपि भवन्ति। † वसुशर्मजनार्दनदेवघोषेत्येवंप्रकाराणि। एवकारः किमर्थः? अवधारणार्थः। तेन किं सिद्धं भवति? पुरंदरः विष्णुशर्मा इत्येवंप्रकाराण्यपि नामानि सिद्धानि भवन्ति। देभा.

(२) अथवा युग्मानि युग्माक्षराणि पुंसां नामधेयानि भवन्ति। एवकारः अवधारणार्थः। कथम्? युग्ममेवाऽऽद्रियेत, न पूर्वाणि लक्षणानीति। तेन शिवदत्तः, नागदत्तः, देवस्वामी, वसुशर्मा, रुद्रः, जनार्दनः, वेदघोषः, पुरंदरः, विष्णुशर्मा इत्यादि सिद्धम्। $ गानावृ.

## [2]अयुजानि स्त्रीणाम्॥

(१) अयुजानि अयुग्माक्षराणि स्त्रीणां नामानि कर्तव्यानि। यथा सर्वदा, यशोदा इत्येवंप्रकाराणि। § देभा.

(२) अयुजानि विषमाक्षराणि त्रीणि पञ्च वा अक्षराणि येषु तानि। अत्र च घोषवदादिनियमो नास्ति। तथा च कारिका– 'पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम्। पक्षो घोषवदित्यादिरेवकारादनादृतः॥' (कुका. १।९।२) इति। एवकारात् 'युग्मानि त्वेव पुंसाम्' इतिसूत्रस्थात् घोषवदादिपक्षः स्त्रीणां नास्तीत्यर्थः। शर्मान्तादिनियमस्त्वत्राप्यस्त्येव, 'तत्तत्स्त्रीणां तथा तथा' इत्याश्वलायनस्मरणात्। तेषां वर्णानां स्त्रियः कन्यकाः, तासामपि तथा शर्मवर्माद्यन्तमित्यर्थः। तस्य च स्त्रीत्वेऽपि 'मनः' (पा. सू. ४।१।११) इति नान्तलक्षणस्य ङीपः प्रतिषेधात् 'गार्गीशर्मा' इत्यादि पुंवत्प्रयोगः। 'डाबुभाभ्याम्' (पा. सू. ४।१।१३) इति डाबन्तत्वे त्वाबन्तवत् 'गार्गीशर्मा' इत्यादिरिति विशेषः। संप्र. २४४

## [3]अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्॥

(१) अभिवादनीयं च नाम समीक्षेत। अभिवादनीयमिति आहूतः सन् येन नाम्ना तमभिवादयति तदभिवादनीयम्। अव्यावहारिकमित्यर्थः। तच्च समीक्षेत कुर्यादित्यर्थः। तत् मातापितरौ विज्ञायेताम्। तत् अभिवादनीयं नाम मातापितरौ कुर्याताम्। आ उपनयनात्। प्रवासादेत्य उत्तरार्थे कुर्वन्ति। एवमेते द्वे नामनी विहिते। पूर्वं नाम गुह्यम् उत्तरं व्यावहारिकमित्येवमेके। अन्ये पुनः– नाम चास्मै दद्युः कारयेयुरित्यर्थः। कस्मिन् काले तन्नाम कर्तव्यम्? आचारतः कालाः। केषांचित् दशरात्रे, केषांचिदन्यस्मिन् काले। तेनैतदेव सांव्यवहारिकं

---

¶ अना. गानावृवत्।

† अत्र ग्रन्थसंगतिश्चिन्त्या। नेमान्युदाहरणानि 'तेन षडक्षरम्' इत्यादिपूर्वविधानस्येति स्पष्टम्, उदाहृतनाम्नां चतुरक्षरत्वात्। नाप्येवकारद्योत्यस्य पूर्वलक्षणानादरस्य, एवकारस्य व्याख्यास्यमानत्वात् तदुदाहरणानां वक्ष्यमाणत्वाच्च।

$ अना., संप्र., संको., कुभ. गानावृवत्।

§ गानावृ., अना. देभावत्।

(१) आगृ. १।१५।८; प्रपा. १६५; संप्र. २४१, २४४; संम. १५; संको. १०३; संग. ५६२; संव. ६९; कुभ. ९०७.

(२) आगृ. १।१५।९; प्रपा. १६५; संप्र. २४४; संम. १५ अयुजा (अयुग्मा); संको. १०३; संग. ५६२; संव. ६९ संमवत्; कुभ. ९०७ संमवत्.

(३) आगृ. १।१५।१०; प्रपा. १६५; संप्र. २३८; संम. १५; सिन्धु. ९०८; विपा. ३१०; बाल. १।११-१२ पृ. २९; संग. ५३७.

नाम। अभिवादनीयं च समीक्षेत। अनेन नाम्नाऽभिवादयति। एतच्च मातापितरौ विद्यायेतां तावद्यावदुपनयनमिति। उपनीतस्य सतस्तस्य माताऽप्येतत् समाचष्टे— अनेन नाम्नाऽभिवादयस्वेति। तेन पूर्वं सांव्यवहारिकम् उत्तरमभिवादनीयमिति सिद्धं भवति। देभा.

(२) सांव्यवहारिकं नाम कृत्वा अभिवादनीयं च कार्यमित्याह— अमीति। येन नाम्ना उपनीतोऽभिवादयते तच्च समीक्षेत कुर्यादित्यर्थः। तच्च मातापितरावेव विद्यातामोपनयनात्। उपनीतस्य त्वाचक्षते—अनेन नाम्नाऽभिवादयस्वेति। $ गानाष्ट्र.

(३) अथाभिवादनीयस्य नाम्नः करणमाह— अमीति। अयमुपनीतः येनाभिवादयते तदभिवादनीयं नाम। करणे कृत्यप्रत्ययः। तदप्यस्मिन् काले समीक्षेत। पूर्वत्र 'दध्युः' इति बहुवचनम्, उत्तरत्र 'मातापितरौ विद्याताम्' इति द्विवचनम्, इह तु एकवचनम्। तत्र न ज्ञायते कः समीक्षेतेति। नामकरणे यः प्रधानभूतः कर्ता स समीक्षेत। स च पिता। तदभावे तत्स्थानीयः। समीक्षणं च सम्यक् निरूप्य करणम्। अतस्तदानीमेवाभिवादनीयमपि नाम पिता सम्यक् निरूप्य कुर्यादिति, यथा परेण न ज्ञायते। ततस्तन्नाम मात्रेऽपि ब्रूयात्— 'इदमस्याभिवादनीयं नाम, अस्मिन्नवधारस्व' इति। तन्मातापितरौ विद्यातामोपनयनात् तत् अभिवादनीयं नाम मातापितरावेव विद्याताम् जानीयाताम्, नान्ये। कियन्तं कालम्? ओपनयनात् आ उपनयनात्। उपनयने कृते तेनाभिवादयस्वेति कुमारायाऽऽचक्षीयाताम्। अना.

§[१]आवृतैव कुमार्यै ॥

---

$ संग. गानाष्ट्रगतम्।

§ जातकर्मविधिप्रकरणेऽस्मिन्नेव सूत्रे (सं. का. पृ. २६३१–२६३२) व्याख्यानानि द्रष्टव्यानि।

(१) आगृ. १।१५।१२; प्रपा. १३१; संप्र. १९४; संकौ. ६१, १०३; संर. ८३८.



## आश्वलायनगृह्यपरिशिष्टम्

नामकरणकालः

[१]नाम त्वेकादशे दिवसे शतरात्रे संवत्सरे वा यथोपपत्ति ॥

[२]अमनाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणम् ॥

व्युष्टे अतीते। ¶ संम. १६

## कौषीतकिगृह्यसूत्रम्

नामकरणकालः

[३]दशम्यां व्यावहारिकं ब्राह्मणजुष्टम् ॥

## आपस्तम्बगृह्यसूत्रम्

नामकरणकालः, नामस्वरूपम्

[४]दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम दधाति पिता मातेति ॥

---

¶ विपा. संमवत्।

(१) संकौ. १०१; संब. ६८.

(२) अप. १।११–१३ पृ. २६ नाम + (धेय) गृह्यपरिशिष्टे, एवमग्रिमस्थलेष्वपि यत्र विशेषनिर्देशो नास्ति तत्र 'गृह्यपरिशिष्टे' इति निर्देशो ज्ञेयः; स्मृच. २१; चका. ७३८; पमा. ४४१ (शतरात्रे०); मपा. ३५५ वा (च) (नामकरणम्०); प्रपा. १६३ शत (पर) त्सरे (त्सरेऽपि); संप्र. २३४ गोभिलगृह्यपरिशिष्टयोः; चम. ९ शत (दश); मुक्ता. ८१ (व्युष्टे०) बह्वृचपरिशिष्टे; संम. १६ (वा०); सिन्धु. ९०४; विपा. ३०८ आश्वलायनगृह्यपरिशिष्टे; आन. १४८ (व्युष्टे०) (नामकरणम्०); संग. ५५५ (व्युष्टे शतरात्रे०) गोभिलगृह्यपरिशिष्टयोः; पुम. ४३३–४३४; कृम. ९०४ (=) (शतरात्रे संवत्सरे वा) एतावदेव.

(३) कौगृ. १।२४।६.

(४) आपगृ. १५।८; उ. १।१६।१९ (दशम्यामुत्थितायाम्) एतावदेव; मुक्ता. ८१; आन. १४८ मातेति + (च); बाल. १।११–१२ पृ. २८ मातेति (माता वेति); संर. ८४९ (स्नातायां नाम दधाति) एतावदेव.

( १ ) उत्थानं नाम सूतिकालिङ्गानामग्न्युदककुम्भादीनामपनयनम्, भर्तुश्च नापितकर्म, यच्चान्यत् स्त्रियो विदुस्तच्च सर्ववर्णानां दशमेऽहनि भवति। दशमीशब्देन न रात्रिरुच्यते। किं तर्हि ? अहोरात्रसमुदायः। यथा 'तस्मात् सदृशीनां रात्रीणाम्' इति। तत्र परिभाषावशात् अहन्येव कर्म स्नानं च सति संभवे तस्मिन्नेवाहनि नियमेन भवति। प्रकरणादेव सिद्धे 'पुत्रस्य' इति वचनं वक्ष्यमाणो नाम्नो लक्षणविशेषस्तस्यैव यथा स्यात्। तेन कुमार्याः 'अयुजाक्षरं कुमार्याः' (आपगृ. १५।११) इत्येतावदेव भवति, न 'नामपूर्वमाख्यातोत्तरम्' इत्यादि। पिता मातेति वचनं तौ नाम अग्रेऽभिव्याहरेतामित्येवमर्थम्। विज्ञायते च– 'पिता माता च दधतुर्यदग्रे' (तैसं. १।५।१०।१) इति। तत्र प्रयोगः– 'शुचीन् मन्त्रवतः सर्वकृत्येषु भोजयेत्' (आध. २।१५।११) इति ब्राह्मणान् भोजयित्वा पिता माता च नाम अग्रेऽभिव्याहृत्याऽऽशीर्वचनं ब्राह्मणैरभिव्याहारयेताम् 'अमुष्मै स्वस्ति' इति, कल्पान्तरे दर्शनात्। केचित् 'नाम करिष्यावः' इति संकल्पमिच्छन्ति। अनाकुला.

( २ ) दशम्यां रात्रौ दशमेऽहनि। उत्थितायां सूतिकागृहान्निष्क्रान्तायां प्रसूतिकायां स्नातायां च सत्याम्। एवं वदता दशमेऽहनि निष्क्रम्य स्नातव्यमित्युक्तं भवति। पुत्रस्य पिता नाम दधाति व्यवस्थापयति, न तु करोति, शब्दार्थयोः संबन्धस्य नित्यत्वात्। माता च। इतिशब्दश्चार्थे मातापितरौ सहितौ नाम धत्त इति। इममर्थं मन्त्रवर्णोऽप्याह 'मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे।' (तैसं. १।५।१०।१) इति। ताद.

( ३ ) सूतिकाशुद्ध्यर्थमेकादशेऽहनि च स्नानं भवति। ¶ मुक्ता. ८१

( ४ ) दशम्यामुत्थितायां गतायां सूतिकायां च स्नातायामेकादशेऽहनि नाम कुर्यादित्यर्थः, 'दशाहं दर्शनं वाच्यं सूतिकायास्त्यजेत्ततः।' इत्यादशाहं दर्शनभाषणनिषेधात्। आन. १४८

**'द्व्यक्षरं चतुरक्षरं वा नामपूर्वमाख्यातोत्तरं दीर्घाभिनिष्ठानान्तं घोषवदाद्यन्तरन्तस्थम्॥**

( १ ) अथ नाम्नो लक्षणविशेषः। सव्यञ्जनो निर्व्यञ्जनो वा स्वरः अक्षरम्। नाम द्रव्यप्रधानम्, तत् पूर्वपदं यत्र तत् नामपूर्वम्। क्रियानिमित्तमाख्यातम्, तत् उत्तरपदं यत्र तत् आख्यातोत्तरम्। दीर्घात् परः अभिनिष्ठानः विसर्जनीयः अन्ते यस्य तत् दीर्घाभिनिष्ठानान्तम्। तथा घोषवद्व्यञ्जनमादिभूतं यस्य तत् घोषवदादि। अन्तः मध्ये अन्तस्था यस्य तत् अन्तरन्तस्थम्। वर्गाणां तृतीयचतुर्थौ हकारश्च घोषवन्तः। यरलवा अन्तस्थाः। दिवं नयतीति द्युतिः( ? नीः ), गाः श्रयते इति गोश्रिः( ? श्रीः ), गां प्रीणातीति गोप्रीः, हिरण्यं ददातीति हिरण्यदाः, भूरिदाः, ¶ हरदत्तः इत्यादीन्युदाहरणानि। 'ऋष्यणूकं देवताणूकं वा। यथा वैषां पूर्वपुरुषाणां नामानि स्युः' (बौगृ. २।१।२८,२९) इति बौधायनः। ऋष्यणूकम् ऋष्यभिधायि 'वसिष्ठः, जमदग्निः' इति। देवताणूकं देवताभिधायि 'रुद्रः, विष्णुः' इति। पूर्वपुरुषाः पित्रादयः। अनाकुला.

( २ ) अथ व्यवस्थापनीयस्य नाम्नः लक्षणमुच्यते– द्व्यक्षरं चतुरक्षरं वेति। समासोऽभिप्रेतः, न तु रूढिः, 'नामपूर्वमाख्यातोत्तरम्' इति पूर्वोत्तरखण्डव्यवस्थापनात्। नापि वाक्यम्, तस्य द्रव्यवाचकत्वाभावात्। कुतः पुनर्वाक्यसमासयोरर्थवत्समुदायत्वाविशेषेऽपि समास एव द्रव्यवाचकः, न वाक्यम् ? इति चेत्, 'कृत्तद्धितसमासाश्च' (पा. सू. १।२।४६) इति समासग्रहणस्य नियमार्थत्वात्। नामपूर्वम्– द्रव्यवाचकं सुबन्तं पदं नाम, तत् पूर्वं यस्य तत् नामपूर्वम्। तथा आख्यातम् उत्तरं

---

¶ शेषं तादवत्।

¶ इदं दीर्घाभिनिष्ठानान्तत्वाभावात्कथमुदाहरणमिति चिन्त्यम्।

(१) आपगृ. १५।९; मुक्ता. ८२; आन. १४८; बाल. १।११–१२ पृ. २८.

पदं यस्य नाम्नः तत् आख्यातोत्तरम् । ननु '‡ सुप्सुपा ' इति समासनियमात् आख्यातेन तिङन्तेन नैव समासः, सत्यम् । अत एवात्र आख्यातशब्देन $ आख्यातसदृशं क्विबन्तं सुबन्तमेव विवक्षितम् । सादृश्यं च क्रिया-प्राधान्याभावेऽपि क्रियावाचित्वमात्रात्, ' क्विबन्तो धातुत्वं न जहाति' इति धातुसंज्ञत्वाच्च । दीर्घाभिनिष्ठानान्तं दीर्घश्च अभिनिष्ठानश्च अन्ते यस्य नाम्नस्तत् तथोक्तम् । अभिनिष्ठान इति विसर्जनीयस्य पूर्वाचार्याणां संज्ञा । घोषवान् वर्णः आदिर्यस्य नाम्नस्तत् घोषवदादि । घोषवर्णाश्च प्रातिशाख्यसूत्रे प्रसिद्धाः– ' ऊष्मविसर्जनीय-प्रथमद्वितीया अघोषाः । न हकारः । व्यञ्जनशेषो घोषवान् ' इति । अन्तरन्तस्थम् अन्तः मध्ये यस्य नाम्नः अन्तस्थाः यरलवाः तत् तथोक्तम् । द्व्यक्षरस्योदाहरणम्– वार्दाः वाः उदकं ददातीति वार्दाः, गिरं ददातीति गीर्दाः इत्यादि । चतुरक्षरस्य तु भाष्योक्तम्– ' द्रविणोदाः, वरिवोदाः ' इति । एतद् द्वयमपि छान्दसम् । अन्यदपि हिरण्यदाः, युवतिदाः इत्यादि । † ताद.

[1]**अपि वा यस्मिन् स्वित्युपसर्गः स्यात्तद्धि प्रतिष्ठितमिति हि ब्राह्मणम् ॥**

( १ ) अपि वा अयमपि पक्षः– यस्मिन्नाम्नि ' सु ' इत्ययमुपसर्गः स्यात् तदेव तत्र लक्षणम्, नान्यत् द्व्यक्षरत्वादि । तद्धि प्रतिष्ठितम् । हिशब्दः अतिशये । पूर्वस्मादप्यतिशयेन प्रतिष्ठितम् । तेन पूर्वमपि द्व्यक्षरादि प्रतिष्ठितम् । तथा च पूर्वस्मिन्नेव लक्षणे स्थित्वा भरद्वाज आह– ' द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं तद्धि प्रसिद्ध( ? प्रतिष्ठित )मिति विज्ञायते ' ( भागृ. १।२६ ) इति । प्रतिष्ठितमिति ध्रुवम् अविनाशि आयुष्यमित्यर्थः । सुभद्रः, सुमुखः इत्याद्युदाहरणम् । उपसर्ग इति वचनात् सोमसुदित्यादि प्रतिष्ठितं न भवति । अनाकुला.

( २ ) प्रतिष्ठितम् आयुष्मद्यशादिक्रियावच्च भवति । यथा– सुजातः, सुदर्शनः इत्यादि । इह ब्राह्मणग्रहणात् द्व्यक्षरादिविशेषणैः ' सु 'इति विशेषणं विकल्प्यते । हिशब्दः अनर्थको निपातः, ' अनर्थको मिताक्षरेषु ' इति वचनात् । § ताद.

[1]**अयुजाक्षरं कुमार्याः ॥**

( १ ) या संख्या अर्धे विमितुं न शक्यते सा अयुक् संख्या । अयुञ्जि अक्षराणि यत्र तत् अयुजाक्षरम् एकाक्षरं त्र्यक्षरमित्यादि । एतावदेव कुमार्या नामलक्षणम् । गौः, वाक्, पृथिवी, पार्वतीति । अनाकुला.

( २ ) अयुगक्षरम् विषमाक्षरं कुमार्या नाम भवति । अयुजाक्षरमिति छान्दसः । अयुगक्षरत्वमेकमेवात्र विशेषणम्, द्व्यक्षरादीनामनेन निवर्तितत्वात् । तद्यथा– श्रीः, गौः, भारती, पार्वती, कमला, पतिवल्लभा, कमलेक्षणा इत्यादि । कुमार्या अपि जातकादय-श्चौलान्ता देहसंस्कारार्थाः क्रियास्तूर्ष्णीं कर्तव्या एव, ' अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः । संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ ' ( मस्मृ. २।६६ ) इति मनुवचनात् । इह च द्रव्यनिष्ठा भावार्थाः प्राशन-वपनादय एव निष्कृष्य कर्तव्याः, न तु होमाः, एवमेव शिष्टाचारात् स्मृत्यर्थसारे दृष्टत्वाच्च । ‡ ताद.

---

‡ नैतादृशः सूत्रपाठः, किंतु ' सह सुपा ' ( पा. सू. २।१।४ ) इत्यत्रानुवृत्तसुप्पदावापेन निष्पन्नस्तत्सूत्रैकदेशोऽयम् ।

$ अत्राऽऽख्यातपदं धातुपरमभिप्रेयते । शास्त्रेषु तस्य तिङ्वाचकत्वं तिङन्तवाचकत्वं वा प्रसिद्धम् । तस्मात् मतान्तरमिदं लक्षणया वा धातुपरत्वमिति समाधेयम् । उदाहरणानुरोधेनेदमेव युक्तम् ।

† मुक्ता., आन. तादगतम् ।

(१) आपगृ. १५।१० ; मुक्ता. ८२ ( हि० ) ; आन. १४८ ; बाल. १।११–१२ पृ. २८–२९.

§ शेषं अनाकुलागतम् । मुक्ता., आन. तादगतम् ।

‡ मुक्ता., आन. तादगतम् ।

(१) आपगृ. १५।११ ; मुक्ता. ८२ ; आन. १४८ ; बाल. १।११–१२ पृ. २९.

## हिरण्यकेशिगृह्यसूत्रम्

प्रथमनामस्वरूपम्, द्वितीयं गुह्यं नाक्षत्रं नाम,
सोमयाजिनः पुत्रस्य सोमयाजीति तृतीयं नाम

**[1]पुत्रस्य नाम दध्याद् द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्टानान्तम् । यत्र वा स्वित्युपसर्गः स्यात् । तद्धि प्रतिष्ठितमिति विज्ञायते । पिता मातेत्यग्रेऽभिव्याहरेयाताम् । विज्ञायते च– 'मम नाम प्रथमं जातवेदः' इति ॥**

नाम संज्ञा अभिधानमित्यनर्थान्तरम् । कीदृशम् ? द्वे अक्षरे परिमाणं तस्य( ? यस्य ) तत् द्व्यक्षरम्, चत्वारि अक्षराणि परिमाणं यस्य तच्चतुरक्षरम् । अक्षरशब्दोऽत्र स्वरेषु वर्तते । यथा 'चतुर्विंशत्यक्षरा गायत्री' इति । यत् द्व्यक्षरं वा चतुरक्षरं वा तत् घोषवत् शषससर्ववर्गप्रथमद्वितीयेभ्योऽन्यत् व्यञ्जनम् आदिर्यस्य तत् घोषवदादि । अन्तः मध्ये अन्तस्थः यरलवानामेकः यस्य तदन्तरन्तस्थम् । अभिनिष्ठानान्तः( ? ष्टानेति ) प्रमादपाठः इत्येके । विसर्जनीय इत्यर्थः । दीर्घश्च अभिनिष्टानश्च दीर्घाभिनिष्टानौ । तौ अन्ते यस्य तद्दीर्घाभिनिष्टानान्तम् । यौगपद्येनाऽऽम्नातत्वात्( ? नासंभवात् ) दीर्घान्तं विसर्जनीयान्तं वेत्यर्थः । केचित् दीर्घात् परं विसर्गं मन्यन्ते । प्रथमवचनात् यत् परमक्षरं तत् दीर्घाभिनिष्टानान्तम् । यस्मिन् नाम्नि सु इत्युपसर्गः स्यात् तद्वा दध्यात् अनादृत्य घोषवदादिकं लक्षणम् । कुतः ? तत् प्रतिष्ठितं लोक इति विज्ञायते हि । प्रतिष्ठा नाम्नो नामवत दीर्घायुष्यम् । उपसर्गग्रहणं प्रातिपदिकतच्छब्दोपग्रहणार्थं सुपुत्राणादिषु मा भूदिति । क्रियायोगस्य नाम्नि विवक्षा । तत्र उदाहरणानि धावा ग्रावा दावा मयः द्रोणः बलः देवः निर्णीः दयूः निलूः निवीः वीर्यदावी भूरिदा माल्भारी बहुदावा विशालदा बहुभावाः सुभीः सुषदाः सुविशाखः भुवः सुभ्रीः इत्येवमादीनि ।

तन्नाम पिता माता च प्रथममभिव्याहरेयाताम् उच्चारयेयाताम् । कर्त्रभिप्रायत्वादात्मनेपदार्थताऽपि । पुत्रनामकरणे हि जातेष्टिप्रत्यायनभूतावात्मनेपदवदिति । कुतः ? विज्ञायते हि 'मम नाम' ( तैसं. १।५।१०।१ ) इत्यस्मिन् मन्त्रवर्णे 'पिता माता च दधतुर्यदग्रे' इति । तस्मात् आदितस्ताभ्यामुच्चारयितव्यम् – 'देवदत्तोऽयम्, यज्ञदत्तोऽयम्' इति । ततः पुण्याहादिवाचने ब्राह्मणैरभिव्याहारयितव्यम् । $ मातृवृ.

**[1]द्वे नामनी कुर्यात् । विज्ञायते च– 'तस्माद् द्विनामा ब्राह्मणोऽर्धुकः' इति ॥**

द्वे नामनी कुर्यात्, न एकमेव । कुतः ? विज्ञायते हि– 'तस्माद् द्विनामा ब्राह्मणोऽर्धुकः' इति धिष्ण्यव्याघारणवाक्यशेषेषु । अर्धुकः वर्धमानशील इत्यर्थः । अस्यानुवादत्वात् ब्राह्मणग्रहणं त्रैवर्णिकप्रदर्शनार्थम् । नामाधिकारे पुनर्नामग्रहणं नामेदमनित्यमुक्तलक्षणमिति । तेन द्व्यक्षरादिघोषवदाद्यनियमेन संख्याद्यनियमेन च चतुर्णां वर्णानां क्रमेण शर्मवर्मभूतिदासान्तता पूर्वपुरुषनामक्रिया ऋष्यनूकत्वं देवतानूकत्वं कृदन्ततानियमः वृद्धतद्धितप्रतिषेधः स्त्रीणामयुगक्षरत्वमिति सिद्धानि भवन्ति । एवं कुर्यादिति किमर्थम् ? 'दध्यात्' इत्यधिकारात् 'भवतः' इति वाऽध्याहारात् सिद्धेः । नानर्थकम् । तस्येदं प्रयोजनम्– द्वयोरेव लक्षणयोर्नाम्नोः क्रिया स्यात् इति । यद्येवम्, पूर्वत्रैव 'नामनी दध्यात्' इति वाच्यम् । नैवं शक्यम् । एवमुच्यमाने द्वयोर्नाम्नोः पुण्याहादिवाचनकाल एव क्रिया वाचनं च प्रसज्येत । इह पुनः क्रियमाणे अन्यस्मिन् काले गुह्यनाम्नः क्रिया वाचनाभावश्च सिद्धो भवति ।

$ मातृवृ.

**[2]नक्षत्रनाम द्वितीयं स्यात् ॥**

---

(१) हिगृ. २०।१।३० ; संर. ८५३ ( स्यात्० ).

$ संर. मातृवृगतम् ।

(१) हिगृ. २०।१।३१ ; संर. ८५३.

(२) हिगृ. २०।१।३२ ; संप्र. २४० ; संकौ. १०२ ; संग. ५६० ; संर. ८५३.

तयोर्नाम्नोरेकस्य नाम्नः नक्षत्रनाम द्वितीयं स्यात् । नक्षत्रनाम किं तत् ? जन्मनक्षत्रप्रकृतिकं तत्रजाततद्धितान्तम् । यथा– रौहिणः, श्रविष्ठः, आर्द्रकः, शतभिषगिति । $ मातृवृ.

[1]अन्यतरद्गुह्यं स्यादन्यतरेणैनमामन्त्रयेरन् ॥

(१) तस्य पुनरिदं द्वितीयं तथा कृत्रिमयोर्नाम्नोः अन्यतरन्नाम गुह्यम् अन्यैरविदितं स्यात् । मातापितरावेव तज्जानीतः । उपनयनात्प्रभृति कुमारोऽपि जानातीत्येके । अन्यतरेण गुह्यात् अन्येन नाम्ना एनं कुमारं लौकिकेषु वैदिकेषु च कर्मसु आमन्त्रयेरन् संबोधनादिना व्यवहरेयुः । येन व्यवहरेयुः तस्य नक्षत्रनाम द्वितीयं स्यात् । अथ तद्वाक्यत्रयमेकं वाक्यम्, व्यत्ययेन च संबन्धः । तयोः कर्तृक( ? कृत्रिम )योर्नाम्नोरन्यतरन्नाम गुह्यं स्यात्, अन्यतरेण गुह्यादन्येन नाम्ना एनं कुमारं लौकिके चैनमामन्त्रयेरन्, तस्य च आमन्त्रणीयस्य नाक्षत्रनाम द्वितीयं स्यादिति । ¶ मातृवृ.

(२) अनेन व्यावहारिकस्याप्यभिवादनीयत्वं सिध्यति । यद्यपि अभिवादनीयं नाम व्यावहारिकनामकरणानन्तरं कर्तव्यमित्याश्वलायनादिसूत्रपाठक्रमादवगम्यते, तथाऽपि बौधायनापस्तम्बाभ्यां जातकर्मण्येव 'पशूनां त्वा हिंकारेणाभिजिघ्राम्यसाविति नक्षत्रनामधेयेन' ( बौगृ. २।१।५ ) इति मूर्धाभिघ्राण एव नक्षत्रनाम्नो विनियोगात् व्यावहारिकनाम्नः पूर्वमेव तत् कर्तव्यमिति सिध्यति । * संप्र. २४०

[2]सोमयाजीति तृतीयं नाम कुर्वीतेति विज्ञायते ॥

यः सोमेनेष्टवान् स सोमयाजी । स एतयोस्तृतीयं नाम्नोः 'सोमयाजी' इत्येतत् कुर्वीतेति विज्ञायते– 'तृतीयं सोमयाजिनः' इति । अत्र केषांचिद् व्याख्या– 'द्वे नाम्नी( ? मनी ) कुर्यात्' इत्युक्तम् । तयोः 'पुत्रस्य नाम दध्यात्' इत्येकम् । लक्षणं तदु( ? तच्चो)क्तम् । अथ किं द्वितीयं नाम ? इति । उच्यते– नक्षत्रनाम द्वितीयं स्यात् । तयोश्चान्यतरन्नाम कृत्रिमं नक्षत्रनाम वा गुह्यं स्यादिति अन्यतरेण गुह्यादन्येन एनं लौकिकेषु व्यवहारेषु आमन्त्रयेरन् । सोमयाजीति तृतीयमिति तुल्यम् । तेषां कुर्यादित्यनुपपन्नम्, अकृत्रिमत्वात् । नक्षत्रनाम्नो गुह्यत्वं च कस्यचिन्न स्यात् । प्रयोगकाले व्यक्त्यभावात् विरोधश्च शास्त्रान्तरेणाऽऽगमेन स्यात् । बह्वृचानां च व्यक्तम् 'नाम चास्मै दध्युः घोषवदादि' ( आगृ. १।१५।४,५ ) इत्येवमादिना लक्षणेन एकं नाम विधाय 'अभिवादनीयं च समीक्षते' ( आगृ. १।१५।१० ) (इति) द्वितीयं नाम विहितम् । तथा कौषीतकानाम् 'नामात्र( ? स्य) दधाति' ( कौगृ. १।२४।४ ) इति जातकर्मानन्तरमेकस्य क्रियामुक्त्वा 'दशम्यां व्यावहारिकम्' ( कौगृ. १।२४।६ ) इति द्वितीयस्य क्रिया उक्ता । तस्मात् पूर्वोक्त एवार्थः । तत्र जातकर्मानन्तरमेव गुह्यं नाम कर्तव्यमिति, केषांचित् तत्र दर्शनात् । इहैव वा प्राक् पुण्याहादिवाचनात्, अत्र वचनसामर्थ्यात् । तत्र प्रयोगः– अनन्यसंकाशे मातापितरौ 'देवोऽयम्, देवदत्तोऽयम्' इति यथानाम गुह्यमभिव्याहृत्य प्राक् स्वस्तिवाचनात् कृत्वा पूर्ववत् व्यावहारिकं मातापितरौ प्रथममभिव्याहृत्य ब्राह्मणैरप्यभिव्याहारयतः नक्षत्रनाम्ना सह । कथम् ? 'देवदत्ताय कार्तिकाय स्वस्ति भवन्तो ब्रुवन्तु' इत्ययं ब्रूते, ते च यथार्थं ब्रूयुः । तत्र ऋद्धिवाचने नक्षत्रनामापि मातापितरौ व्यावहारिकादनन्तरं कार्तिकः रौहिणः इति प्रथमया विभक्त्या व्याहारयतः । पुण्याहादिवाचन इव कृत्रिमेऽपीत्येके । तदपि न विरुध्यत एव । स्त्रियाश्चार्थप्राप्तत्वान्नामकरणं कर्तव्यं तदर्थत्वात् पुण्याहादिवाचनं च, नान्यदस्ति । जातकर्मादि

---

$ संर. मातृवृगतम् । संकौ. मातृदत्ताचार्यवृत्तेरंशतोऽनुवादः ।

¶ संर. मातृवृगतम् ।

* संग. संप्रगतम् ।

(१) हिगृ. २०।१।३३ ; संप्र. २४० ; संग. ५६० ; संर. ८५३ येरन् ( यीरन् ).

(२) हिगृ. २०।१।३४ ; संर. ८५४.

प्रागुपनयनात् सर्वं कर्म तूष्णीं कर्तव्यम् । बह्वृचानामप्युक्तम्– 'अमन्त्रतैव( ? आवृतैव ) कुमार्यै' अपि( ? इति ) । जातकर्मणस्तूष्णींक्रियाऽपि नास्तीत्येके । तत्र स्त्रिया एकाक्षरादीनि आसप्ताक्षराणि अयुगक्षराणि नामानि । यथा श्रीः, सुभद्रा, माधवदत्ता, स्कन्दविशाखदत्ता इति । नक्षत्रनामान्यपि स्त्रीपुंसयोरबुधबोधायानुक्रमिष्यामः । कार्तिकः, कार्तिकी । रौहिणः, रोहिणी । मार्गशीर्षः, मार्गशीर्षी । आर्द्रकः, आर्द्रिका । पुनर्वसुः, पुनर्वसूः । तिष्यः, तिष्या । आश्लेषः, आश्लेषा । माघः, माघी । फल्गुनः, फल्गुनी । हस्तः, हस्ता । चैत्रः, चित्रा । स्वातिः, स्वातिः । विशाखः, विशाखा । अनुराधः, अनुराधा । ज्यैष्ठः, ज्यैष्ठी । मूलकः, मूलिका । अषाढः, अषाढा । आभिजितः, आभिजिता( ? ती ) । श्रावणः, श्रावणी । श्रविष्ठः, श्रविष्ठा, श्राविष्ठीयः, श्राविष्ठीया । शतभिषक्, शातभिषः, शातभिषजः, शतभिषक्, शातभिषी, शातभिषजी । प्रोष्ठपादः, प्रोष्ठपादी । रैवतः, रेवती । अश्वयुक् आश्वयुजः, अश्वयुक्, आश्वयुजी । आपभरणः, आपभरणी इति । यथार्थं विभक्तयः । ¶ मातृवृ.

## मानवगृह्यसूत्रम्

नामकरणकालः, नामस्वरूम्

**[1]दशम्यां रात्र्यां पुत्रस्य नाम दध्याद्घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा त्र्यक्षरं दान्तं कुमारीणाम् ॥**

दशम्यां रात्र्याम् । जातकर्मप्रभृति दशमी रात्रिर्गृह्यते । पुत्रस्येति वचनात् पितुरधिकारः । दध्यात् कुर्यादित्यर्थः । रात्र्यामित्यधिकरणे च सप्तमी । दशम्यां रात्र्या विशेषणम् । तेन सूतिकाशौचेऽपि नामकरणं वचनादभिप्रेयते । केचित्तु– एकादश्यां वा, सूतकं त्विच्छन्ति, दशम्यां रात्र्यां व्यतीतायामिति द्रष्टव्यम् । द्व्यक्षरं घोषवान् वर्णः आदिः ( यस्य ) घोषवदादि । अन्तः मध्ये अन्तस्था यस्मिंस्तदन्तरन्तस्थम् । द्व्यक्षरं ( चतुरक्षरं ) वा । वर्णानां प्रथमद्वितीयशषसेभ्योऽन्ये घोषवन्तः । यरलवा अन्तस्थाः । त्र्यक्षरं दान्तं दो( ? दा अ )न्ते यस्मिंस्तत् दान्तमिति । दा इति वर्णो गृह्यते । घोषवदाद्यधिकारात् 'देविदा' इत्येवमादिकं दान्तम् । अत्रापि घोषवदाद्यन्तरन्तस्थमिति बाध्यते त्र्यक्षरेण । अष्टाभा.

**तेनाभिवादयितुं त्यक्त्वा पितुर्नामधेयं यशस्यं नामधेयं देवताश्रयं नक्षत्राश्रयं देवतायाश्च प्रत्यक्षं प्रतिषिद्धम् ॥**

तेन 'देवदत्तोऽहं भोः अभिवादयामि' इति । स्त्री 'अभिवादये देविदा अहम्' त्यक्त्वा पितुः संबन्धिनो नामधेयमिति षष्ठी पृथक् कृतेत्यन्तः अवयवः इत्यस्मात् पितृनामधेयावयवात् संबन्धिनीयं पुत्रनामधेये गुप्तं तद् यशस्यं यशसे हितं यशसो हितं नामधेयं देवताश्रयं त्यक्त्वान्( ? क्त्वा ) ब्रह्मपितुर्देवप्रत्यक्षमिति चकारार्थः प्रत्यक्षं प्रतिषिद्धं पितुर्देवतायाश्च प्रत्यक्षे परिपूर्णे प्रतिषिध्यते । अन्ये परस्य नामधेयं शर्मवद् ब्राह्मणस्येत्यादि वदन्ति । अन्यस्तु 'त्यक्त्वा पितुर्नामधेयम्' इति पाठात् पितुर्नामधेयं यदा गृह्णीयात् तदा त्यक्त्वाऽन्यश्च प्रह्वः सन् देवतायाश्च तत्रैव गृह्णीयात् । अथवा अभिवादनस्य प्रकृतत्वात् पितुरभिवादनं कुर्यात् प्रह्वः सन् नामधेयमुच्चारयेत् । देवतायाः प्रत्यक्षं तथैवाऽऽत्मनो नाम गृह्णीयात् । प्रतिषिद्धं तेन श्रद्धया यदाऽभिवादनं करोति तदा नामधेयं नोच्चारयेत् । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

नामकरणकालः, नामद्वयकरणम्, द्वयोर्नाम्नोरेकं लक्षणवत् द्वितीयं नक्षत्रनाम, तयोरेकं गुह्यमपरं व्यावहारिकम्

**[1]दशम्यां पुत्रस्य नाम दधाति द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम् । तद्धि प्रतिष्ठितमिति विज्ञायते । पिता मातेत्यग्रेऽभिव्याहरेयाताम् । विज्ञायते–**

¶ संर. मातृवृगतम् ।

(१) मागृ. १।१८।१–२.

(१) भागृ. १।२६.

'मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे । ' इति । द्वे नामनी कुर्यात् । विज्ञायते च– 'तस्माद् द्विनामा ब्राह्मणोऽर्धुकः' इति । नक्षत्रनाम द्वितीयं स्यात् । अन्यतरद्गुह्यं स्यादन्यतरेणैनमामन्त्रयेरन् ॥

## काठकगृह्यसूत्रम्

नामकरणकालः , जातकर्मकृतस्यैव नाम्नः पुनः-करणम् अन्यस्य वेति मतद्वयम्

'दशम्यां तस्मिन्नेवाग्नौ... ॥

(१) दशम्यां व्यतीतायामाशौचशुद्धौ एकादशेऽहनि, द्वादशेऽहनि, तत्र नक्षत्रादिवैगुण्ये दिनान्तरे, ' नामधेयं दशम्यां वा द्वादश्यां वाऽपि कारयेत् । पुण्येऽहनि मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ ' ( मस्मृ. २।३० ) इति स्मरणात् । औदयिक्या व्यवस्थया त्रयोदशमी( १ ऽत्र दशमी ) तिथिर्गृह्यते, न तु ' आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनादद्यतनकालः ' इत्यादिकया, ' रात्रिशेषे द्वाभ्याम् । प्रभाते तिसृभिः ' ( गोध. १४।७,८ ) इति विभातायामपि रजन्यामुदयात्प्रागाशौचानुवृत्तिदर्शनात् । देव.

(२) एवं दशम्यां राज्यामतीतायां नामधेयकरणम् । ब्राह्म.

(३) दशमीग्रहणमाशौचनिवृत्त्युपलक्षणम् । † आवि.

तदेव नाम धीयते ॥

अत्रानुवाके 'असौ' इत्यस्य स्थाने तदेव नाम धीयते यत्तु जातकर्मणि कृतम् , नान्यत् । $ देव.

अन्यदित्येके ॥

एके पुनराहुः– अन्यत् विधीयते । द्वे हि नाम्नी ब्राह्मणस्य कर्तव्ये । तत्र यद्रहस्यं जातकर्मण्युक्तम् ' पुत्रे जाते नाम धीयते ' इति, तस्य प्रयोजनं परैरभिचारे क्रियमाणेऽनुच्चारणादि । प्रकटं तु एकादशाहादौ व्यावहारिकम् । तथा च श्रुतिः– ' तस्माद् ब्राह्मणो द्विनामा ' इति । § देव.

## वाराहगृह्यसूत्रम्

नामकरणकालः , नामस्वरूपम्

'एवमेव दशम्यां कृत्वा पिता माता च पुत्रस्य नाम दध्याताम् । घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं न तद्धितं द्व्यक्षरं चतुरक्षरं वा त्यक्तपितृनामधेयात्नक्षत्रदेवतेष्टनामानो वा । द्विनामा तु ब्राह्मणो नामैवं कन्याया अकारव्यवधानमाकारान्तमयुग्माक्षरं नदीनक्षत्रचन्द्रसूर्यपूषादेवदत्तरक्षितावर्जम् ॥

## आग्निवेश्यगृह्यसूत्रम्

नामकरणकालः , नामस्वरूपम् , द्वितीयं नक्षत्रनाम , द्वयोर्नाम्नोरन्यतरत् गुह्यमन्यतरत् व्यावहारिकम् , सोमयाजिना तृतीयं नाम कर्तव्यम्

'द्वादश्यां... पुत्रस्य नाम दधात् । द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम् । यत्र वा स्वित्युपसर्गः स्यात् । ' तद्धि प्रतिष्ठितम् ' इति विज्ञायते । पिता मातेत्यग्रेऽभिव्याहरेयाताम् । विज्ञायते च– 'मम नाम प्रथमं जातवेदः ' इति । द्वे नामनी कुर्यात् । विज्ञायते च– ' तस्माद् द्विनामा ब्राह्मणोऽर्धुकः ' इति । नक्षत्रनाम द्वितीयं स्यात् । अन्यतरद्गुह्यं स्यात् । अन्यतरेणैनमामन्त्रयेरन् । ' सोमयाजी तृतीयं नाम कुर्वीत ' इति विज्ञायते ॥

---

† शेषं देवगतम् ।

$ आवि. देवगतम् ।

(१) कागृ. ३६।१, ३–४.

§ ब्राह्म. , आवि. देवगतम् ।

(१) वागृ. २.

(२) आग्निगृ. २।१।५.

## पारस्करगृह्यसूत्रम्

नामकरणकालः, नामस्वरूपम्

§ [1]**दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति ॥**

[2]**द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम् ॥**

[3]**अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम् ॥**

[4]**शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य ॥**

---

§ विश्वव्याख्यानम् 'अहन्येकादशे' इति याज्ञवल्क्यवचनव्याख्याने द्रष्टव्यम् ।

(१) **पागृ.** १।१७।१ ; **विश्व.** १।१२ (=) ; **मेधा.** २।३० ( ब्राह्मणान् भोजयित्वा० ) गृह्यम् ; **गोरा.** २।३० ( दशम्या...यित्वा० ) गृह्यम् ; **ब्रक.** ९० ; **स्मृच.** २१ ; **चका.** ७३७ पाराशरः ; **स्मृसा.** ३ मुत्थाप्य (मुपोष्य) ; **निप.** २६६ (=) दशम्यामुत्थाप्य (एकादशाहे) ; **वीमि.** १।१२ (=) ( नाम करोति० ) ; **संप्र.** २३२ : २४५ ( दशम्यामुत्थाप्य० ) ; **मुक्ता.** ८१ ; **विपा.** ३०८ ; **संकौ.** १०० ; **कृम.** ९०६-९०७.

(२) **पागृ.** १।१७।२ ; **मेधा.** २।३१ 'द्व्यक्षरं चतुरक्षरं वा कुर्यात्' 'कृतं कुर्यान्न तद्धितम्' इति वाक्यद्वयमात्रम्, तत्र प्रथममनिर्दिष्टकर्तृकम्, द्वितीयं गृह्ये ; **ब्रक.** ९० ; **स्मृसा.** ३ कृतं कुर्यान्न त ( कृतमत ) ; **निप.** २६६ (=) ; **मच.** २।३२ ( द्व्यक्षरं चतुरक्षरं वा नाम कुर्यात् ) एतावदेव, स्मृतिः ; **विपा.** ३१० (चतुरक्षरं०) रन्तस्थं ( रस्थं ) ; **कृम.** ९०७.

(३) **पागृ.** १।१७।३ ; **ब्रक.** ९० ; **स्मृच.** २१ अयुजा ( अयुगा ) ; **स्मृसा.** ३ स्त्रियै तद्धितम् ( स्त्रीणां तद्धितान्तम् ) ; **मपा.** ३५७ (अयुग्माक्षरमाकारान्तं स्त्रियै तद्धिहितम् ) शङ्खः ; **निप.** २६६ (=) अयुक्ताक्षरमाकारान्तं स्त्रियास्तद्धितान्तं वा ) ; **मुक्ता.** ८२ ( अयुगाक्षरमाकारान्तं स्त्रियाः ) ; **विपा.** ३१० ; **कृम.** ९०७ माकारा ( मौकारा ) ; **संर.** ८५६ अयुजा ( अयुग ).

(४) **पागृ.** १।१७।४ ; **विपा.** ३१० गुप्तेति वैश्यस्य ( गुप्तं वैश्यस्य दासं शूद्रस्य ).

(१) दशम्यां रात्र्यामतीतायामेकादशेऽहनि श्राद्धव्यतिरेकेण ब्राह्मणान् भोजयित्वा पिता नाम करोति कुमारस्य । अन्यस्मिन्नपि संस्कारे पितुरेवोत्सर्गात् कर्तृत्वम् । इह पितृग्रहणादन्यत्रापि नियमोऽवगम्यते । तच्च द्व्यक्षरं चतुरक्षरं वा कर्तव्यम् । घोषवदादि । घोषवदक्षरमादौ कृत्वा भवति । वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः । अन्ये घोषवन्तः । तदादि कर्तव्यम् । अन्तरन्तस्थम् । अन्तस्थाः यरलवाः, ते नाम्नः अन्तः मध्ये कर्तव्याः । दीर्घाभिनिष्ठानम् । निष्ठानं समाप्तिरुच्यते सा दीर्घा कर्तव्या । कृतं कुर्यात् । कृदिति प्रत्ययसंज्ञा, तदन्तं कुर्यात् । अपरे पितामहादिकृतं वर्णयन्ति । न तद्धितम् । तद्धितप्रत्ययान्तस्यापवादोऽयम् । अयुग्मैरक्षरैराकारान्तं च स्त्रियै तद्धितान्तं कर्तव्यम् । शर्म ब्राह्मणस्य । शर्मशब्दः सुखवाचकः सुखनीयं ब्राह्मणस्य कर्तव्यम् । यथा 'शुभंकरः, प्रियंकरः' इति । वर्म क्षत्रियस्य । वर्मशब्दश्च शौर्यवचनः शौर्ययुक्तं क्षत्रियस्य कर्तव्यम् – 'नरवर्मा, शशिवर्मा' । गुप्तेति वैश्यस्य । गुप्तशब्दश्चाऽऽढ्यवचनः । आढ्यत्वाभिधायि वैश्यस्य– 'मणिभद्रः' । * कभा.

(२) प्रसवदिनमारभ्य दशम्यां तिथौ सूतिकां सूतिकागृहादुत्थाप्य नामकरणाङ्गतया ब्राह्मणान् त्रीन् भोजयित्वा भोजनं कारयित्वा पिता अपत्यस्य नामधेयं करोति । अत्र दशम्यामिति सूतकान्तोपलक्षणम् । ततश्च यस्य यावन्ति दिनानि सूतकं तदन्तदिने सूतिकोत्थापनमित्यर्थः । अपरदिने च नामकरणम् । स्त्रियै स्त्रियाः । ब्राह्मणस्य विप्रस्य पूर्वोक्तलक्षणनामान्ते शर्मेति, क्षत्रियस्य पूर्वोक्तलक्षणनामान्ते वर्मेति, वैश्यस्य पूर्वोक्तनामान्ते गुप्तेति पदं कुर्यात् । ‡ हभा.

---

* जभा. कभावत् । ब्रक., कृम., संर. कभागतम् ।

‡ शेषं कभावत्, शर्मादिविषये कभावदपि । गभा. प्रथमसूत्रव्याख्यानं कभावत्, शेषं हभावत् ।

( ३ ) वर्गाणां तृतीयचतुर्थपञ्चमाः हकारश्च घोषवन्तः ते आदौ यस्य नाम्नः तद् घोषवदादि । † स्मृसा. ३

( ४ ) जननाशौचस्य प्रक्रान्तत्वात् तत्प्रतियोगिनी दशमी चरमावस्था, तस्यां जातायां सूतके विनष्टे दशाहे निवृत्त इत्यर्थः । ततः एकादशेऽहनि सूतिकागृहात् सूतिकामुत्थाप्य स्नापयित्वा नाम करोति । जननाशौचत्वात् (? चसत्वात्) वस्त्रशरीरादिगोचरां शुद्धिं सूतिकायाः संपाद्य पिता नाम करोतीत्यन्वयः । तदुक्तम्— ' अहन्येकादशे नाम ' (यास्मृ. १।१२) इति । अत्राप्येकादशाहपदं सूतकान्तोपलक्षणम् । तेन क्षत्रियादेरपि सूतकनिवृत्त्यनन्तरमेव नामकरणम् । कथमित्यपेक्षायामाह— ब्राह्मणान् भोजयित्वेति । एतस्य नामकरणपूर्वाङ्गत्वात् आदौ वैश्वदेवपूर्वकमाभ्युदयिकं श्राद्धं कुर्यात् । ततः इतरान् ब्राह्मणान् नामकरणाङ्गत्वेन भोजयेत् । कृतं राशिचक्रादिविचारेण ज्योतिःशास्त्रे कृतं कर्तव्यतया बोधितम् । अथवा पितामहाद्यैः कृतं यत् प्रपितामहादिभिः । अथवा रामकृष्णादिदेवतासंबन्धि पुराणादौ कृतमिति श्रुतम् । यद्वा कृत्प्रत्ययान्तम् । कृतमिति क्रियाविशेषणं वा । कुर्यात् कुमारस्य दक्षिणं कर्णमभिनिधाय पठेदित्यर्थः । कुमार्यास्तु वामश्रवणे जपेदिति शेषः । ब्राह्मणक्षत्रियविशां नामकीर्तनानन्तरं शर्मवर्मगुप्तेति यथाक्रमं प्रयोगादौ प्रयोक्तव्यम् । यद्वा केषांचिच्छर्मविशेषाः सन्ति, तत्तदुपस्थापकपदप्रयोगानन्तरं शर्मपदं प्रयोगादौ प्रयोक्तव्यम् । यद्वा केषांचित् क्लृप्तम् । एवं क्षत्रियादेरपि वर्मोपस्थापकपदविशेषप्रयोगानन्तरं वर्मेतिपदप्रयोगः । एवं वैश्यस्यापि धनविशेषविषयकरक्षणपदप्रयोगानन्तरं गुप्तेतिपदप्रयोगः । शूद्रस्यापि प्रेष्यत्वप्रतिपादकं दासादिपदं नामकीर्तनानन्तरं प्रयोक्तव्यमिति नामकरणम्, यथाकुलाचारं वा । § विभा.

( ५ ) उत्थाप्य, सूतिकामिति शेषः । इदं च दशमदिनविधानमाशौचानिवृत्तावपि विप्राणां नामकरणकर्तव्यतां गमयति । अत एव नारदः— ' जन्मतो दशमे वाऽपि द्वादश्यां वाऽपि तत्पुनः । विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः ॥ ' इति जन्मतो दशमेऽह्नि विप्राणां नामकर्माभिधायाऽऽशौचान्ते क्षत्रियादिविषयत्वेनोपसंहृतवान् । कल्पतरुस्तु दशम्यामित्येतत् येषां दशाहतः प्राक् शुद्धिस्तेषामित्याह । शेषयोः क्षत्रियवैश्ययोः । शूद्राणां त्वनन्तरमाह स एव— ' शूद्राणामपि चैवं स्यात् सतां नामासतामपि । केचिन्नाम सतां प्राहुरेकत्रिंशदिने शुभम् ॥ ' इति । एवम् आशौचान्ते इत्यर्थः । एतेन ' आशौचव्यपगमे नामधेयम् ' इति विष्णुवाक्यम् ' आशौचे च व्यतिक्रान्ते नामकर्म विधीयते । ' इति शङ्खवाक्यं च विप्रातिरिक्तविषयं व्याख्यातम् । अन्ये तु ' आशौचापगमे नामधेयम् ' इति विष्ण्वादिवाक्यानुरोधेन ' दशरात्रे व्युष्टे ' इति गोभिलवाक्यैकवाक्यतार्थे दशमेऽहनीत्यादिवाक्यान्यतीतपदाध्याहारेण योजयन्ति । तदिदं मेधातिथ्यपरार्कौ न क्षमेते, लक्षणायां प्रमाणाभावादिति । विष्णुवाक्यं तु व्याख्यातमेवानुपदम् । संप्र. २३२–२३३

( ६ ) अभिनिष्ठानः विसर्गः । † विपा. ३१०

( ७ ) उत्थाप्य सूतिकाम् । न च दशम्यामतीतायामिति व्याख्यानमुचितम्, अध्याहारस्यानुचितत्वात् अपरार्कमेधातिथिभ्यामनङ्गीकाराच्च । ' जन्मतो दशमे वाऽपि द्वादश्यां वाऽपि तत्पुनः । विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः ॥ ' इति नारदवाक्ये विप्राणां दशमे आशौचनिवृत्तिं विनाऽपि कर्तव्यताप्रतीतेश्च । एवम् ' येषां दशाहतः प्राक् शुद्धिस्तद्विषयं दशम्यामिति ' ( इति ) कल्पतरूक्तिरप्ययुक्ता, तथा सति क्षत्रियवैश्ययोर्विप्रवैधर्म्योक्तौ उक्तवाक्यव्यवस्थायां निस्तात्पर्यकत्वापत्तेः । संको. १००–१०१

† शेषं कभागतम् ।

§ शेषं कभावत् ।

† शेषं कभागतं हभागतं च ।

सं. का. ३४२

## गोभिलगृह्यसूत्रम्

नामकरणकालः, नामस्वरूपम्

[1]**जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम् ॥**

(१) व्युष्टे अतिक्रान्ते। † व्रक. ८९

(२) व्युष्टे अतिक्रान्ते। व्युष्टे इत्यस्य नोत्तरयोरन्वयः। अन्नप्राशनपूर्वभाविनो नामकरणस्य संवत्सरात्मकोत्तरकाले क्रियायां तदाद्युत्कर्षन्यायेनान्नप्राशनमपि संवत्सर उत्कृष्यते। संवत्सरान्त्यदिवसे नामकरणवदन्नप्राशनस्यापि क्रिया भवति, दिनस्य विहितत्वात्। अत्र सूत्रोक्तकालव्यतिरिक्ताः काला असंभवे द्रष्टव्याः। संर. ८५०

(३) जननात् जन्मदिवसात् आरभ्य दशरात्रे व्युष्टे अतिक्रान्ते। एवं शतरात्रे संवत्सरे वा व्युष्टे। नामैव नामधेयम्। 'भागरूपनामभ्यो धेयः' (वार्तिकम्) इति धेयप्रत्ययः स्वार्थे। तस्य करणम्। इति कर्मणो नामधेयम्। कर्तव्यमिति सूत्रशेषः। अत्र विष्टयादिदोषात् अन्यहेतोर्वा पूर्वत्रासंपत्तावुत्तरग्रहणमिति व्यवस्थितो विकल्पो वाशब्दार्थः, न तु ऐच्छिकः। तुल्यवद्विकल्पेऽनेको वाशब्दः सूत्रकारशैलीसिद्धः, स चेह नास्तीति। तथाऽप्यैच्छिकविकल्पाङ्गीकारेऽष्टौ दोषास्तत्र संभवन्तीति व्यक्तं शुभकर्मनिर्णये। मृदुला.

[2]**घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं नाम दध्यात् ॥**

(१) कीदृशम्? कवर्गादिपञ्चकतृतीयादिवर्णान्यतमवर्णादि। अन्तर(न्त)स्थं यरलवाद्यन्यतमवर्णमध्यम्। दीर्घं द्विमात्रमाकारादि, अभिनिष्ठानः विसर्गः, एतदुभयान्यतरं यस्यान्ते। अर्थादर्थबुद्धिप्रथमान्तप्रयोगः, अन्यविभक्तेरसंभवात्। कृतं कृदन्तम्। यथा 'बलिध्वंसी विश्वंभरः' इत्यादि। संत. ९१८

(२) कीदृशं नामेत्यपेक्षायामाह— घोषवदादीति। वर्गाणां प्रथमद्वितीयाः शषसाश्च अघोषप्रयत्नवन्तः, तद्भिन्नाश्च घोषवन्तः। तेषां मध्ये एकतमो वर्ण आदौ यस्य तत् घोषवदादि। अन्तरन्तःस्थम्— अन्तःस्थाः यरलवाः, तेषां मध्ये च एकतमोऽपि वर्णः अन्तः मध्ये यस्य तत्तथा। दीर्घाभिनिष्ठानान्तम्। दीर्घः द्विमात्रो वर्णः। अभिनिष्ठानः विसर्जनीयमक्षरम्। 'अभिनिष्ठानोऽप्यक्षरमात्रेऽपि स्याद् विसर्जनीयेऽपि।' इति मेदिनी। तौ(? तदन्यतरौ) अन्तौ यस्य तत्तथा। क्वचित्तु 'दीर्घाभिनिष्ठानम्'इति पाठः, 'दीर्घेण अभिनिष्ठयते समाप्यते यन्नाम तत्'इति तत्रैव व्याख्या चेति। कृतं कृदन्तम्। अथ च कृतं पूर्वेषाम्, तेन पितामहादीनां नामस्वेवैकमिति दाक्षिणात्याः। मृदुला.

[1]**एतदतद्धितम् ॥**

(१) एतत् नाम तद्धितरहितम्। एतच्च स्वगृह्योक्तत्वात् प्रशस्ततरम्। 'कुलदेवतानक्षत्राभिसंबद्धं पिता नाम कुर्यात् तदन्यो वा कुलवृद्धः' इति कल्पतरुशङ्खलिखितवचनात् नामान्तरकरणव्यवहारः। अत्र नक्षत्रसंबन्धेन नामकरणं शतपदचक्रानुरोधात् स्वनक्षत्रपादानुसारेण। तच्च देवशर्माद्युपपदान्तत्वेन कर्तव्यम्। संत. ९१९

(२) एतदिति नाम्नः परामर्शः। अतद्धितम् न विद्यते तद्धितः तन्नामा प्रत्ययविशेषः यत्र तत् तद्धितान्तभिन्नम्। ननु 'कृतं नाम दध्यात्' इत्यनेनैवैतत् सिद्धमिति चेत्, सत्यम्। सर्वथा तद्धितसंबन्धनिरासार्थमेतदिति पृथगभिहितम्। तथा च महाभाष्यम्

---

† स्मृसा., संत., वीमि. व्रकवत्।

(१) गोगृ. २।८।८; व्रक. ८९; हमा. १७१ (दशरात्रे व्युष्टे नामकरणम्) एतावदेव; स्मृसा. ३; गमा. १७२ हमावत्; संत. ९१७ शतरात्रे + (वा); वीमि. १।१२; संप्र. २३३ (दशरात्रे व्युष्टे) एतावदेव: २३४ (धेय०) गोभिलगृह्यपरिशिष्टयोः; मुक्ता. ८१ (दशरात्राच्छतरात्रात्संवत्सराद्वा नाम कुर्यात्); संकौ. १०१ (धेय०) गोभिलपरिशिष्टे; संग. ५५५ (व्युष्टे शतरात्रे०) (धेय०) गोभिलगृह्यपरिशिष्टयोः; संर. ८५० संकौवत्.

(२) गोगृ. २।८।१४; संत. ९१८.

(१) गोगृ. २।८।१५; संत. ९१९.

–'नाम कृतं कुर्यान्न तद्धितम्' इति। तथा च पुंसो नाम 'बलिध्वंसी, विश्वंभरः' इत्येवम्। मृदुला.

[1]अयुग्दान्तं स्त्रीणाम्॥

(१) अयुक् अयुग्माक्षरं दान्तम्। यथा 'यशोदा' इत्यादि। † संत. ९१९

(२) दान्तम् 'यशोदा, शर्मदा' इत्यादि। केचित्तु यन्नाम तत् दाशब्दान्तं वर्णयन्ति। तथा च 'पार्वतीदा, गङ्गादा' इत्येवं प्रयोज्यम्। तथा च तेषां मते 'यशोदा' इत्यादिषु 'यशोदादा' इति प्रयुज्येत। इदं च व्याख्यानं न क्वापि निबन्धेषु दृष्टम्। अतः पूर्वोक्तमेव ब्याय इति। $ संम. १६

## खादिरगृह्यसूत्रम्

### नामकरणकालः

[2]जननादूर्ध्वं दशरात्राच्छतरात्रात् संवत्सराद्वा नाम कुर्यात्॥

जननदिवसादूर्ध्वं यो दशरात्रः तस्मादूर्ध्वं यदहः तस्मिन्नित्यर्थः। द्वादशेऽहनीति यावत्। एवमुत्तरयोः पक्षयोः। नात्रोदगयनपूर्वपक्षादरः, क्वचित् संभवस्य नियतत्वात्(?)। असंभवेऽपि न तद्वशेन कालविनिवेशः। वैरूप्यप्रसङ्गात्(?)। रुद्रभा.

‡ [3]को नामासीत्युक्तो देवताश्रयं नक्षत्राश्रयं वाऽभिवादनीयं नाम ब्रूयादसावस्मीति॥

आचार्येणोक्तः सन् देवताश्रयं स्वजन्मनक्षत्रं यद्देवत्यं तद्देवताश्रयम् 'आग्नेयः' इतिवत्, नक्षत्राश्रयं स्वजन्मनक्षत्राश्रयम् 'अश्वयुक् विष्णुशर्मा नामास्मि' इतिवत् प्रतिब्रूयात् माणवकः। अभिवादनीयं गुह्यम्। आश्वयुजः, आपभरणः, कार्तिकेयः(? कार्तिकः), रौहिणेयः (? रौहिणः), मार्गशीर्षः, आर्द्रकः, पौन(? पुन)र्वसुः, पौषः, आश्लेषः, माघः, फा(? फ)ल्गुनः, औत्तरफा(? फ)ल्गुनः, हस्तः, चैत्रः, स्वातिः, वै(?वि)शाखः, अनूराधः, ज्यैष्ठः, मौलः(? मूलकः), आषाढः, औत्तराषाढः, श्रावणः, श्रविष्ठः, शातभिषजः, प्रौष्ठपदः(? प्रोष्ठपादः) औत्तरप्रौ(? प्रो)ष्ठपदः, रैवतः इति नक्षत्राश्रयनिर्देशः। आश्विनः, याम्यः, आग्नेयः, प्राजापत्यः, सौम्यः, रौद्रः, आदित्यः, बार्हस्पत्यः, सार्पः, पित्र्यः, आर्यमणः, भागः, सावित्रः, ¶ऐन्द्रः, वायव्यः, ऐन्द्राग्नः, मैत्रः, ऐन्द्रः, पित्र्यः, $ आप्यः, वैश्वदेवः, वैष्णवः, वासवः, ऐन्द्रः, अजएक(? आजैक)पादः, अहि(? आहि)र्बुध्न्यः, पौष्णः इति देवताश्रयनिर्देशः। रुद्रभा.

## जैमिनिगृह्यसूत्रम्

### नामकरणकालः, नामस्वरूपम्

[1]अथातो नामकर्म। पूर्वपक्षे पुण्ये नक्षत्रे द्वादश्यां वा पिता नाम कुर्यादाचार्यो वा। ... तस्य नामधेयं दध्याद् द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थमनुनक्षत्रमनुदैवतमनुनामातद्धितम्। आकारान्तं स्त्रियै। यथार्थं वा॥

---

† मृदुला. संतवत्।

$ क्रम., संर. संमगतम्।

‡ यद्यपीदं सूत्रमुपनयनप्रकरणगतं तथापि सूत्रभाष्ययोः सामान्यतो विशेषतश्चाभिवादनीयनामस्वरूपनिर्देशादत्र संगृहीतम्।

(१) गोगृ. २।८।१६; संत. ९१९; संम. १६; विपा. ३१०; क्रम. ९०७; संर. ८५६ (अयुगक्षरं दान्तं नाम स्त्रीणाम्).

(२) खागृ. २।३।६. (३) खागृ. २।४।१२.

¶ यद्यपि चित्रामूलशततारकानक्षत्राणां क्रमेण 'त्वष्टा, निर्ऋतिः, वरुणः' इति देवताः प्रसिद्धाः, तथापि तैत्तिरीयसंहिताब्राह्मणयोः 'इन्द्रः, पितरः, इन्द्रः' इति क्रमेण तन्नक्षत्रदेवतानां निर्देशात्तदनुसारेणात्र 'ऐन्द्रः, पित्र्यः, ऐन्द्रः' इति तन्नक्षत्रदेवताश्रयनामनिर्देशः कृत इति ज्ञेयम्।

$ सर्वत्र देवताश्रयनामनिर्देशे देवताया नक्षत्रद्वारा कुमारसंबन्धमभिप्रेत्य देवतार्थकप्रत्ययान्तं नाम निर्दिष्टम्। तथा चात्र 'आपः' इति नामनिर्देशो युक्तः। यथाश्रुते तु देवताण्णन्तात् स्वार्थे ष्यञ् कल्पनीयः।

(१) जैगृ. १।९.

द्वादश्यां जन्मदिनाद् द्वादशे दिवसे इत्यर्थः। यथा-कथंचित् अस्य जन्मनक्षत्रसंबन्धसहितं वा। यथा 'सुकृत्तिकः, अग्निमित्रः, मेषः' इति। देवतासंबन्धसहितं वा। यथा 'केशवः, शंकरः' इत्यादि। पित्रादेर्नामानुगतं वा। यथा 'विश्वामित्रः, पराशरः' इत्यादि। सर्वत्र तद्धितान्तवर्जम्। विहितं नामैव स्त्रियै चेदाकारान्तं कुर्यात्। स्त्रीप्रत्ययोपलक्षणमेतत्। यथा 'जया शंकरी' इत्यादि। उक्तसर्वविशेषानपेक्षया यथार्थम् अर्थानुरूपं ज्योतिर्दृशा भाविकर्मनिर्णये योऽर्थोऽभिलषितोऽभिधातुं तदभिधानसमर्थं वा नाम कुर्यात्। यथा 'सुयशः, पुण्यकीर्तिः, महामतिः' इति। श्रीव्या.

## वैखानसगृह्यसूत्रम्

नामकरणकालः, नामस्वरूपम्, द्वितीयं गुह्यं नक्षत्रनाम

**[1]अथ नामकरणम्। ‡ तत्रैव... दीर्घान्तमभिनिष्ठान्तं वा घोषवदाद्यन्तरं द्विप्रतिष्ठितान्तस्थं मृष्टाक्षरपदस्वरं द्विवर्णं चतुर्वर्णं वा नाम शस्यते। यथोक्तम्– 'मम नाम प्रथमम्' इति। गोत्रनामयुक्तं तदर्हं नाम कुर्यात्। द्वे नामनी तु। नक्षत्रनाम रहस्यम्। अग्न्याधानात्परमाहिताग्न्यादिस्वकर्मान्तं प्रकाशं नाम भवेत्॥**

## बैजवापगृह्यसूत्रम्

नामस्वरूपम्

**[2]पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरं चतुरक्षरमपरिमितं वा॥**

अपरिमिताक्षरम् उक्ताक्षरसंख्यातिरिक्तसंख्यम्।

$ ब्रक. ९०

---

‡ तच्छब्देन 'दशमे द्वादशे वाऽह्नि भवत्युत्थानम्' इति पूर्वखण्डोक्तस्योत्थानकालस्य परामर्शः।

$ स्मृसा. ब्रकवत्।

(१) वैगृ. ३।१९.

(२) अप. १।११–१३ पृ. २७; ब्रक. ९० (त्र्यक्षरं०) क्षरम (क्षरं वाऽ) मितं (मिताक्षरं); स्मृच. २१; स्मृसा. ३ पिता + (तु); पमा. ४४२; मपा. ३५७

**[1]घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम्॥**

अयमर्थः– घोषवन्ति यान्यक्षराणि वर्गतृतीयचतुर्थानि, तान्यादौ कार्याणि। अन्तस्थाः यरलवाः, ते मध्ये कर्तव्याः। अभिनिष्ठानो विसर्जनीय इति।

§ स्मृच. २१

**[2]कृतं कुर्यान्न तद्धितम्॥**

**[3]त्र्यक्षरमीकारान्तं स्त्रियै॥**

## गृह्यपरिशिष्टम्

नक्षत्रचरणाक्षरादि नाम

**[4]तदक्षरादिकं नाम यस्मिन् धिष्ण्ये यदक्षरम्॥**

(१) ज्योतिर्विदस्तु जन्मनक्षत्रचरणलक्षितस्वरोदयाभिहितशतपदचक्रान्तर्गताक्षरादिकमेव कार्यमित्याहुः। तथा च गृह्यपरिशिष्टे– 'तदक्षरादिकं...' इति।

$ संप्र. २३९

(२) अश्वयुक् आश्वयुज इति विकल्पे प्राप्ते नियमः परिशिष्टे– 'तदक्षरादिकं नाम यस्मिन् धिष्ण्ये यदक्षरम्।' इति। अक्षरं स्वरः, द्व्यक्षरमित्यादौ तथा दर्शनात्। ततश्च 'अश्वयुक्' इत्येवोचितम्। संकौ. १०३

(३) अक्षरमित्येकवचनं पादाक्षराभिप्रायेण।

संर. ८५८

---

§ पमा. स्मृचवत्।

$ संग. संप्रवत्।

रमपरिमितं वा (रं परिमितं च); संप्र. २४१ (चतुरक्षरम्०); मुक्ता. ८२; संग. ५६१ (चतुरक्षरम्०) मितं (मिताक्षरं).

(१) स्मृच. २१; पमा. ४४२; मुक्ता. ८२ नान्तम् + (इति).

(२) अप. १।११–१३ पृ. २७; मुक्ता. ८२ (कृदन्तं कुर्यान्न तद्धितान्तम्).

(३) अप. १।११–१३ पृ. २७ (त्र्यक्षरम्०); ब्रक. ९० त्र्यक्ष (तथा त्र्यक्ष); स्मृसा. ३ (स्त्रियै०); संप्र. २४४; संग. ५६३.

(४) संप्र. २३९ यदक्षरम् (तदक्षरम्); सिन्धु. ९०८; शूक. ९५; संकौ. १०३; संग. ५५८ संप्रवत्; संर. ८५८.

## लगधः

नक्षत्रनामप्रकृतिभूता नक्षत्रदेवताः

[1]अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः।
सर्पाश्च पितरश्चैव भगश्चैवार्यमाऽपि च ॥

[2]सविता त्वष्टाऽथ वायुश्चेन्द्राग्नी मित्र एव च।
इन्द्रो निर्ऋतिरापो वै विश्वेदेवास्तथैव च ॥

[3]विष्णुर्वसवो वरुणोऽज एकपात्तथैव च।
अहिर्बुध्न्यस्तथा पूषा अश्विनौ यम एव च ॥

[4]नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि।
यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम् ॥

(१) यज्ञकर्मणीत्यभिवादनस्याप्युपलक्षणम्, 'देवताश्रयं नक्षत्राश्रयं वाऽभिवादनीयं नाम' इति खादिरसूत्रात्। देवताऽत्र नक्षत्रदेवता। संप्र. २३९

(२) जन्मनक्षत्रदेवतानाम ज्यौतिषे– 'नक्षत्रदेवता ... नक्षत्रजं स्मृतम् ॥' इति। एतच्छन्दपरामृष्टा नक्षत्रदेवतास्तु– 'अग्निः प्रजापतिः ... यम एव च॥' इति। एता देवताः कृत्तिकाप्रभृति ज्ञेयाः। अभिजिद्देवता तु ब्रह्म श्रुतितो ज्ञेयम्। अत्र कृत्तिकादौ उत्पन्नस्य 'आग्नेयः प्राजापत्यः' इत्येवमादीन्युदाहरणानि। एतानि यज्ञकर्मण्येव विकल्पेन प्रवर्तन्ते। संर. ८५८

---

(१) संप्र. २३९; संव. ६९ (=); संर. ८५८ ज्यौतिषे.

(२) संप्र. २३९ (वै०); संव. ६९ (=) (वै०); संर. ८५८ ज्यौतिषे.

(३) संप्र. २३९ णोऽज ए (णो अजै); संव. ६९ (=) पूषा अश्वि (पूषाऽश्वि); संर. ८५८ ज्यौतिषे.

(४) संप्र. २३९ एताभिर्यज्ञ (एता वै यज्ञ); संकौ. १०३ श्रुतिमाष्योदाहृतवचनम्; बाल. १।११–१२ पृ. २९ वेदाङ्गज्योतिषम्; संव. ६९ (=); संर. ८५८ ज्यौतिषे.

## वसिष्ठः

मासनामानि, नामस्वरूपम्, नामकरणकालः, मुख्यकाले गुरुशुक्रास्त–मलमासदोषाभावः, व्यावहारिकनाम्न एव शर्मान्तता

*[1]चैत्रादिमासनामानि वैकुण्ठोऽथ जनार्दनः।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्त्रिविक्रमः ॥
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा।
चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥

[2]तद् द्व्यक्षरं वा चतुरक्षरं वा
विवर्जयेच्चान्त्यलकाररेफम् §।
तन्मासनामादिकमेव चिन्त्यं
स्फुटं वदेद्दक्षिणकर्णरन्ध्रे ॥

(१) एतच्च नाम मासनामपूर्वकमेव कार्यमित्याह वसिष्ठः– चैत्रादीति। तथा च पूर्वे मास(पूर्व?)नाम्ना व्यपदेशं विधाय व्यवहारार्थं नामान्तरमपि कुर्यात् इत्यवगम्यते। अन्यथाऽन्त्यलकारादिवर्जनमसंगतमेव स्यात्। संसौ. ५८

(२) अन्त्यलकाररेफं 'परहल्' इत्यादि। संप्र. २४२

(३) बालस्येति शेषः। संर. ८५५

[3]विनिर्गते वाऽप्यथ सूतकेऽपि
तस्मिन् दिने तस्य च नामधेयम् ॥

---

* एतत्समानानुपूर्वीकगार्ग्यश्लोकयोः संमव्याख्या तत्रत्या टिप्पणी च द्रष्टव्या।

§ अन्त्यरेफस्य नाम्नः संभवश्चिन्त्यः। केनापि व्याख्यात्रा न व्याख्यातमिति चित्रम्।

(१) वसं. २५।१५–१६; संसौ. ५७; संम. १७.

(२) वसं. २५।१७; संसौ. ५७ येच्चा (येद); संप्र. २४१–२४२ संसौवत्; संकौ. १०३ संसौवत्; कृम. ९०८ येच्चा (येद) रेफम् (रेफौ); संर. ८५५ संसौवत्.

(३) वसं. २६।१; संसौ. ५४ वाऽप्य (चाप्य); संप्र. २०० निर्गते (निर्गमे) केऽपि (कस्य); संग. ४४७ संप्रवत्.

[1]जन्माहे द्वादशाहे वा दशाहे वा विशेषतः ।
कुर्याद्वै नामकरणं कुमारस्येति वै श्रुतिः ॥
[2]दशमे द्वादशे वाऽह्नि नामकर्म विधीयते ।
ततः परं विधानोक्तवारनक्षत्रराशिषु ॥
[3]द्वादशे षोडशे वाऽपि द्वात्रिंशद्दिवसेऽपि वा ।
नामकर्म द्विजातीनां कर्तव्यं श्रुतिचोदनात् ॥
[4]द्वात्रिंशद्दिवसादूर्ध्वं यावत्संवत्सरं भवेत् ।
नामकर्म द्विजैः कार्यमिति कैश्चिदुदीरितम् ॥
[5]आवत्सरं नैव दोषो मूढयोर्गुरुशुक्रयोः ।
मलमासेऽपि तत्कुर्यादुक्तकाले न दोषभाक् ॥
[6]शर्मान्तं ब्राह्मणस्य येन व्यवह्रियते ॥

अनेन नाक्षत्रादिनाम्नां शर्मान्तता व्यावर्त्यते ।

संर. ८५५

## विष्णुः

नामकरणकालः, वर्णभेदेन नामस्वरूपम्

$[7]आशौचव्यपगमे नामधेयम् ॥
[8]माङ्गल्यं ब्राह्मणस्य ॥
बलवत् क्षत्रियस्य ॥
धनोपेतं वैश्यस्य ॥
जुगुप्सितं शूद्रस्य ॥

## शङ्खः शङ्खलिखितौ च

नामकरणकालः, नामस्वरूपम्, कुलदेवतानक्षत्रमास-नामानि, यथोक्तनामकरणफलम्

‡[1]आशौचे च व्यतिक्रान्ते नामकर्म विधीयते ॥

नायं नियमः, 'नामधेयं दशम्याम्' इत्यादिवचन-विरोधात् । अतो विकल्प एव । स्वगृह्यापेक्षया चैतद्-व्यवस्था । एवं च 'अहन्येकादशे' 'द्वादश्यां वाऽस्य कारयेत्' इत्यादि विवक्षितार्थमेव, नाऽऽशौचान्तोप-लक्षणार्थम् । तेनाऽऽशौचेऽपि तत् कार्यम् ।

अप. १।१२ पृ. २६

[2]नामधेयं च कर्तव्यं वर्णानां च समाक्षरम् ।
माङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
धनान्तं चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ॥
[3]दशम्यामुत्थाप्य ... तदहरेव नामकरणं कुर्यात् ॥

§ [4]कुलदेवतानक्षत्राभिसंबद्धं पिता नाम कुर्यात् । अन्यो वा कुलवृद्धः ॥

---

$ संप्रव्याख्यानं पारस्करगृह्यसूत्रव्याख्याने ( सं. का. पृ. २७३१ ) द्रष्टव्यम् ।

(१) संप्र. २३१ श्रुतिः ( श्रुतेः ) ज्योतिर्वसिष्ठः; सिन्धु. ९०९ पू.; संको. १०० ज्योतिर्वसिष्ठः; संव. ६८ अशुद्धिबहुलो ग्रन्थः, ज्योतिर्वसिष्ठः.

(२) प्रपा. १६३; संप्र. २३१ वार ( नाम ).

(३) धप्र. ३८.

(४) धप्र. ३८; संग. ५५४ त्रिंश (विंश) धर्मप्रवृत्तौ.

(५) धप्र. ३८ दोषो ( दोषा ); संग. ५५६ धर्म-प्रवृत्तिकारः. (६) संर. ८५५.

(७) विस्मृ. २७।५; ब्रक. ८९; स्मृसा. ३ आशौ-चव्य ( अशौचा ); वीमि. १।१२ धेयम् (धेयकरणम्); संप्र. २३२ : २३३ आशौचव्य ( आशौचा ); चम. ९ संप्रवत्; सिन्धु. ९०४ संप्रवत्; विपा. ३०८ स्मृसावत्.

(८) विस्मृ. २७।६-९.

‡ संप्रव्याख्यानं पारस्करगृह्यसूत्रव्याख्याने ( सं. का. पृ. २७३१ ) द्रष्टव्यम् ।

§ चकाव्याख्यानमस्मिन्नेव प्रकरणे 'नामधेयं दश-म्याम्' इति यमवचनव्याख्याने, संतव्याख्यानं चास्मि-न्नेव प्रकरणे 'एतदतद्धितम्' इति गोभिलगृह्यसूत्रव्याख्याने ( सं. का. पृ. २७३२ ) द्रष्टव्यम् ।

(१) शंस्मृ. २।२; अप. १।११-१३ पृ. २६ आशौचे च ( अशौचे तु ) गृह्यपरिशिष्टम्; ममु. २।३० च ( तु ) शङ्खः; चका. ७३८ सर्वे ममुवत्; मपा. ३५६ अपवत्, शङ्खः; संप्र. २३३ शङ्खः; पुम. ४३३ सर्वे ममुवत्; संर. ८४९ सर्वे ममुवत्.

(२) शंस्मृ. २।३-४.

(३) अस्य स्थलादिनिर्देशाः प्रयोगप्रकरणे द्रष्टव्याः.

(४) मिता. १।१२ ( नक्षत्राभि० ) ( अन्यो वा कुलवृद्धः० ) शङ्खः; अप. १।११-१३ पृ. २७

( १ ) अनेन नामकरणात् प्रभृति ये संस्कारास्तेषु पित्रभावे आवश्यकसंस्कारापेक्षितकर्तृविधिसिद्धयर्थं यथाप्रत्यासत्ति कुलीनानां कर्तृत्वमुक्तम् । चभा. १०८

( २ ) कुलं गोत्रं तत्संबन्धम् । स्मृसा. ३

( ३ ) कुलसंबद्धं देवतासंबद्धं वेत्यर्थः । मपा. ३५७

( ४ ) कुलदेवता कुलपूज्या देवता, तया संबद्धं तत्प्रतिपादकमित्यर्थः । अस्मिंश्च व्याख्याने अनादिरविच्छिन्नः शिष्टाचारो मूलम् , अन्यथोक्ताचारे मूलान्तरकल्पनाक्लेशापत्तेः । अन्ये तु कुलसंबद्धं देवतासंबद्धमित्यप्याहुः । नक्षत्रनामाऽऽहतुः शङ्खलिखितौ– ' नक्षत्राभिसंबद्धं पिता वा कुर्यादन्यो वा कुलवृद्धः ' इति । नक्षत्रादिसंबद्धमिति मदनरत्नादिपाठः । तत्र आदिशब्देन व्यावहारिकं नाम गृह्यते । नाक्षत्रमेव च अभिवादनिकं नामेत्युच्यते । † संप्र. २३७

( ५ ) पिता मातुरप्युपलक्षणम् । ¶ संग. ५६४

[1]चतुरक्षरं द्व्यक्षरं वा घोषवदाद्यन्तरन्तस्थं पुंसाम् ॥

[2]ईकारान्तं स्त्रीणाम् ॥

[3]एवं कृते नाम्नि शुचि तत्कुलं भवति ॥

( १ ) कवर्गादीनां तृतीयादयो यरलवहाश्च घोषवन्तः। तेषां मध्ये यकारादयश्चतस्रोऽन्तस्थाः । ते नाम्नः अन्तः मध्ये कार्याः । शेषास्तु घोषवन्तो नामादौ । अप. १।१२

( २ ) वर्गतृतीयचतुर्थान्यक्षराणि गकारघकारादीनि ( घोषवन्ति ), तान्यादौ कृत्वा यरलवा अन्तस्थाः तन्मध्ये कुर्यादिति । मपा. ३५६

( ३ ) व्यावहारिकनाम्नि विशेष उक्तः शङ्खलिखिताभ्याम्– ' घोषवदाद्यन्तरन्तस्थं ... भवति ' इति । संर. ८५५

[4]माससंबद्धमपि नाम कार्यमिति केचित् ॥

---

( अन्यो वा कुलवृद्धः ) एतावदेव, शङ्खलिखितौ ; ब्रक. ८९ ( नाम० ) शङ्खलिखितौ ; स्मृच. २० भिसंबद्धं ( दिसंबन्धं ) ( नाम० ) शङ्खः : २१ (=) बद्धं ( बन्धं ) ( नाम० ) ; चका. ७३८ ( नाम० ) शङ्खः ; चभा. १०७–१०८ त्राभि ( त्रादि ) ( नाम० ) शङ्खलिखितौ ; स्मृसा. ३ ( कुलदेवतानक्षत्रादिसंबन्धं ) एतावदेव, शङ्खलिखितौ ; पमा. ४४१ बद्धं (बन्धं) (नाम०) शङ्खः ; मपा. ३५६ ( कुल० ) त्राभि (त्रादि) शङ्खलिखितौ : ३५७ सर्वं मितावत् ; संत. ९१९ अन्यो (तदन्यो) शङ्खलिखितौ ; संसौ. ५७ भिसंबद्धं (दिमाससंबन्धं ) नाम ( वा ) अन्यो ( अन्योऽपि ) शङ्खः ; संप्र. २३७ सर्वं मितावत् : २४५ ( पिता नाम कुर्यादन्योऽपि वा कुलवृद्धः ) एतावदेव, शङ्खः ; मुक्ता. ८१ सर्वं पमावत् : ८२ ( कुलदेवतानक्षत्राभिसंबन्धं पिता कुर्यात् ) एतावदेव, शङ्खः ; सिन्धु. ९०८ त्राभि ( त्र ) ( अन्यो वा कुलवृद्धः० ) शङ्खः ; शूक. ९५ सर्वं सिन्धुवत् ; संकौ. १०२ सर्वं मितावत् : १०५ ( कुल... बद्धं० ) शङ्खः ; संग. ५५७ (कुलदेवता०) नाम (वा) मितावदपि पाठः , शङ्खः : ५६४सर्वं संप्र.२४५ वत् ; संव. ६८ सर्वं मितावत् ; पुम. ४३४ ब्रकवत् , शङ्खः ; कुम. ९१० ( पिता वा कुर्यादन्यो कुलवृद्धः ) एतावदेव, शङ्खः ; संर. ८५२ मितावत् , शङ्खलिखितौ : ८६४ सर्वं संकौ. १०५ वत् .

† संकौ. , संर. संप्रगतम् ।

¶ शेषं संप्रगतम् ।

(१) अप. १।११–१३ पृ. २७ शङ्खलिखितौ ; ब्रक. ८९ शङ्खलिखितौ ; मपा. ३५६ शङ्खलिखितौ ; संर. ८५५ ( चतुरक्षरं द्व्यक्षरं वा० ) शङ्खलिखितौ.

(२) अप. १।११–१३ पृ. २७ शङ्खलिखितौ ; ब्रक. ८९ स्त्रीणाम् ( स्त्रीणामेव ) शङ्खलिखितौ ; स्मृच. २१ रान्तं ( रान्तः ) शङ्खः ; मपा. ३५६ शङ्खलिखितौ ; मुक्ता. ८२ शङ्खः ; संर. ८५५ ईका (इका) शङ्खलिखितौ.

(३) अप. १।११–१३ पृ. २७ शङ्खलिखितौ ; ब्रक. ८९ ( एवं० ) शङ्खलिखितौ ; स्मृच. २१ शङ्खः ; पमा. ४४२ शङ्खलिखितौ ; मपा. ३५६ शङ्खलिखितौ ; मुक्ता. ८२ शङ्खः ; संर. ८५५ शङ्खलिखितौ.

(४) संम. १६ शङ्खलिखितौ.

## महाभारतम्

द्विजानां नामकरणकालः

**'द्वादशे षोडशे विंशे द्वाविंशे क्रमतो दिने ।**
**नाम कार्यं द्विजातीनां विप्रस्य दशमेऽपि वा ॥**

## मनुः

नामकरणकालः, वर्णभेदेन नामस्वरूपम्, स्त्रीनामस्वरूपम्

† **'नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ॥**

(१) दशम्यां तिथौ द्वादश्यां वाऽस्य दारकस्य नामधेयं कुर्वीत । णिजर्थो न विवक्षितः । तथा च गृह्यम्– 'दशम्यामुत्थाप्य पिता नाम करोति ' इति । नामैव नामधेयम् । येन शब्देन कार्येष्वाहूयते तन्नाम । 'प्राङ् नाभिवर्धनात्' इति जातकर्मणः प्रकृतत्वात् जन्मनः प्रभृति दशमीद्वादश्यौ गृह्येते, न चन्द्रतिथी । इह केचित् दशमीग्रहणमाशौचनिवृत्तिरित्युपलक्षणार्थं वर्णयन्ति । अतीतायामिति चाध्याहारः । दशम्यामतीतायां ब्राह्मणस्य द्वादश्यां क्षत्रियस्य पञ्चदश्यां वैश्यस्येति । तदयुक्तम् । लक्षणायां प्रमाणाभावात् जातकर्मवत् आशौचेऽपि करिष्यते । यदि तु ब्राह्मणभोजनं विहितं क्वचित्तदा युक्ता लक्षणा । यदि दशमीद्वादश्यौ वक्ष्यमाणगुणयुक्ते भवतस्तदा तयोः कर्तव्यम् । अथ न, तदाऽन्यस्मिन्नपि पुण्येऽहनि । † मेधा.

(२) 'दशम्याम्' इत्येतच्च येषां दशाहात् प्राक् शुद्धिस्तेषाम् । क्र. ८८

(३) नाम्नो व्यवस्थापनं दशम्यां तिथौ द्वादश्यां वा कारयेत् । स्वयं करणाशक्तावन्येनापीत्येतदर्थं कारयेदित्युक्तम्, 'मम नाम प्रथमं जातवेदः पिता माता च दधतुः' (तैसं. १।५।१०।१) इति मन्त्रलिङ्गात् पित्रोरेव मुख्यत्वेनाधिकारात् । तत्र च तिथिह्रासवृद्ध्योरपि दशमतिथावेव नामधेयम्, न दशमेऽहन्येवेत्येतदर्थं स्त्रीलिङ्गनिर्देशः । केचित् रात्रिविशेषणतया स्त्रीलिङ्गत्वम्, तथा चाहोरात्रोपलक्षणमित्याहुः । मवि.

(४) जातकर्मेति पूर्वश्लोके जन्मनः प्रस्तुतत्वात् जन्मापेक्षयैव दशमे द्वादशे वाऽहनि अस्य शिशोः नामधेयं स्वयमसंभवे अन्येन कारयेत् । अथवा 'अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ।' (शंस्मृ. २।२) इति शङ्खवचनात् दशमेऽहन्यतीते एकादशाहे इति व्याख्येयम् । ¶ ममु.

(५) कारयेदिति स्वार्थिको णिच्, 'ततस्तु नाम कुर्वीत पितैव दशमेऽहनि ।' इति विष्णुपुराणवचनात् । यद्वा पितुरभावे अयोग्यत्वे वाऽन्येन कारयेत् । तदाह शङ्खः– 'कुलदेवतानक्षत्राभिसंबन्धं पिता कुर्यादन्यो वा कुलवृद्धः' इति । § पमा. ४४१

(६) अत्र दशम्यामतीतायामेकादशे नाम कार्यमित्यतीतपदाध्याहारो ज्ञेयः । अन्यथा दशरात्रातिक्रमं विनाऽऽशौचनिवृत्तेरभावादशौचमध्य एवानुष्ठानप्रसङ्गः । न चैतद् युक्तम्, वसिष्ठाद्यननुमतत्वात् ।

---

† विश्वव्याख्यानं 'अहन्येकादशे नाम' इति याज्ञवल्क्यवचनव्याख्याने द्रष्टव्यम् ।

(१) प्रपा. १६३; संप्र. २३४.

(२) मस्मृ. २।३०; विश्व. १।१२ वाऽस्य (चास्य); अप. १।११–१३ पृ. २७ (=) द्वितीयः पादः; क्र. ८८; स्मृच. २० विश्ववत्; पमा. ४४०; मपा. ३५५; प्रपा. १६३ वाऽस्य कारयेत् (वा द्विजन्मनाम्) आदर्शवदपि पाठः : १६५ वाऽस्य (वाऽपि); संसौ. ५४; वीमि. १।१२; संप्र. २३३; चम. ९; मुक्ता. ८१; संम. १६ वाऽस्य (वाऽपि); संको. १०१ संमवत्; आन. १४८; सस्मृ. ३१ : ५१ वाऽस्य (वाऽथ); संर. ८५० संमवत्; संदी. २३२ (भागः २) तु (च).

† मुक्ता., स्मृच., नन्द. मेधागतम् । संम. मेधागतं संसौगतं च ।

¶ भाच. ममुगतम् ।

§ वीमि. पमावत् ।

तथा च वसिष्ठः– 'विनिर्गते चाप्यथ सूतकेऽपि तस्मिन् दिने तस्य च नामधेयम् ।' (वसं. २६।१) ।

$ संसौ. ५४

(७) दशम्यामिति पूर्वाशौचनिवृत्तिपरम्, 'आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ।' इति शङ्खोक्तेः । सामीप्ये सप्तमी वा । 'अहन्येकादशे नाम' (यास्मृ. १।१२) इति याज्ञवल्क्यः । 'एकादशेऽहन्यपि नाम कुर्यात्' इति श्रुतेः( ? श्रुतिः ) । द्वादशीपदं प्राशस्त्यपरम् । अत एवाऽऽह– पुण्य इत्यादि । मच.

(८) अपिशब्दादेकादशे । संकौ. १०१

'मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥

(१) इदानीं यादृशं नाम कर्तव्यं तन्नियमयति स्वरूपतोऽर्थतश्च, तत्र स्वरूपमवधारयिष्यन्नाह– मङ्गल्यमिति । मङ्गलाय हितं तत्र वा साधु मङ्गल्यमिति व्युत्पत्तिः । अभिमतस्यार्थस्य चिरजीवित्वबहुधनादेर्दृष्टादृष्टसुखफलस्य सिद्धिः मङ्गलम् । तदभिधानमेव शब्दस्य हितत्वं साधुत्वं चेति तद्धितसिद्धिः । साधुत्वं नाभिप्रेतार्थसिद्धिप्रतिपादनमेव विवक्षितम्, किं तर्हि? य आशास्यते तद्वचनेनैव सिद्धिः । समासात् वा आयुःसिद्धिः धनसिद्धिः पुत्रलाभ इत्यादि प्रतीयते तद्धिताद्वा हितनिमित्तप्रयोजनार्थीयात् । तत्र गृह्ये तद्धितान्तं प्रतिषिद्धम्– 'कृतं कुर्यान्न तद्धितम्' (पागृ. १।१७।२) इति । समासेऽपि पदद्वयैकार्थीभावः तत्र बह्वक्षरप्रयोगप्रसङ्गाः । यतो वक्ष्यति– 'शर्मवद् ब्राह्मणस्य' इत्युपपदनियमम् । तत्र चतुरक्षरे त्र्यक्षरे वा नाम्नि शर्मशब्दे चोपपदे पञ्चाक्षरं षडक्षरं नाम भवति । तच्च प्रतिषिद्धम् –'द्व्यक्षरं चतुरक्षरं वा कुर्यात्' (पागृ. १।१७।२) इति । तेन यद्यत् किंचित् प्रायेण सर्वस्याभिलषणीयमगर्हितं पुत्रपशुग्रामकन्याधनादि तद्वचनाः शब्दा नामधेयत्वेन विनियोक्तव्याः शर्मान्ताः । तेन गोशर्मा, धनशर्मा, हिरण्यशर्मा, कल्याणशर्मा, मङ्गलशर्मेत्यादिशब्दपरिग्रहः सिद्धो भवति । अथवा मङ्गलं धर्मः, तत्साधनं मङ्गल्यं नाम । कतमत् पुनर्धर्मसाधनं नाम? य एते देवताशब्दा इन्द्रोऽग्निर्वायुः । तथा ऋषिशब्दा वसिष्ठो विश्वामित्रो मेधातिथिः । तेषामपि धर्मसाधनत्वमस्ति– 'ऋषींस्तर्पयेत् पुण्यकृतो मनसा ध्यायेत्' इति, 'देवतानामृषीणां च द्विजानां पुण्यकर्मणाम् । प्रातः प्रबुद्धः श्रीकामो नरो नामानि कीर्तयेत् ॥' इति । मङ्गल्यग्रहणाच्च यदप्रशस्तम् 'यमः, मृत्युः' इत्यादि तन्निरस्यते, यच्चानर्थकं डित्थादि यदृच्छानिमित्तम् । क्षत्रियस्य बलान्वितम् । बलसंयुक्तं बलवाचि । अन्वयः संबन्धः । शब्दस्यार्थेन संबन्धः प्रतिपाद्यप्रतिपादकभाव एव । सामर्थ्यं बलम्, तत् येन प्रतिपाद्यते तादृशं नाम क्षत्रियस्य कर्तव्यम् 'शत्रुंतपः, दुर्योधनः, प्रजापालः' इत्यादि । येन विभागेन च नामनिर्देशो जातिचिह्नम् । एवं वैश्यस्य धनसंयुक्तम् । न चात्र पर्याया एव गृह्यन्ते– धनम्, वित्तम्, स्वापतेयमिति । किं तर्हि? येन प्रकारेण तत्प्रतिपत्तिः । यदि वा धनादिशब्दप्रयोगात् अर्थसंबन्धाद्वा । 'धनकर्मा, महाधनः, गोमान्, धान्यग्रहः' इति । एवं सर्वत्र द्रष्टव्यम् । तथा च अन्विताद्दिशब्दप्रयोगः– बलान्वितम्, धनसंयुक्तमिति । इतरथा एवमेवावक्ष्यत्– 'बलनामानि कुर्यात्' इति । स्वल्पत्वाद्बलार्थवाचिनामानन्त्याच्च पुरुषव्यक्तीनां दुरवधाने भेदे व्यवहारोच्छेद एव स्यात् । शूद्रस्य जुगुप्सितम्– 'कृपणकः, दीनः, शबरकः' इत्यादि । § मेधा.

$ चम., आन. संसौगतम् ।

(१) मस्मृ. २।३१ ; गोरा. मङ्ग (माङ्ग) ; अप. १।११–१३ पृ. २७ गोरावत् ; ब्रक. ९० ; स्मृच. २१ ; स्मृसा. ३ ; पमा. ४४१ गोरावत् ; मपा. ३५७ ; स्मृकौ. २७ चतुर्थपादमात्रम् ; प्रपा. १६४ गोरावत् ; संसौ. ५७ णस्य स्यात् (णस्योक्तं) तु जुगु (त्वजुगु) ; शूशि. ६८ चतुर्थपादमात्रम्, योगी ; संप्र. २४२ ; मुक्ता. ८१ ; संम. १६ ; संग. ५६१ ; सस्मृ. ३१ : ५१ गोरावत्.

§ ब्रक., मवि., मच., संप्र., संग., नन्द., भाच. मेधागतम् ।

(२) तच्च– माङ्गल्यं ब्राह्मणस्येति । मङ्गलबलधन-निन्दाप्रतिपादकानि एषां यथाक्रमं भद्रशक्तिधनदीनकादीनि नामानि स्युः । ‡ गोरा.

'शर्मवद् ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥

(१) अत्र स्वरूपग्रहणं पाठानुक्रमश्च आदौ मङ्गल्य-मन्ते शर्मशब्दः । तथा चोदाहृतम् । क्षत्रियादिनाम्नां तु नैतत् संभवति, रक्षाशब्दस्य स्त्रीलिङ्गस्य श्रवणात् पुंसां सामानाधिकरण्यानुपपत्तेः । तस्मात् एकोपक्रमत्वात् समाचाराच्च सर्वत्रार्थग्रहणम् । वाक्यभेदाच्च समुच्चयः । यन्मङ्गल्यं तच्छर्मार्थवत् । शर्म शरणम् आश्रयः सुखं च । अर्थग्रहणात् स्वामिदत्तभवभूत्यादिशब्दपरिग्रहः । इन्द्रस्वामी, इन्द्राश्रयः, इन्द्रदत्तः । तदाश्रयता प्रतीयते । एवं सर्वत्रोन्नेयम् । अथ कोऽयं हेतुः 'वाक्यभेदात् समुच्चयः' इति ? 'व्रीहिभिर्यजेत, यवैर्यजेत' इति किं न समुच्चयः ? इति । उच्यते । लिङ्गदर्शनमात्रमेतत् पौरुषेयत्वात् ग्रन्थस्य । विकल्पेऽभिप्रेते 'मङ्गल्यं शर्मवद्वा' इति लाघवादवक्ष्यत् । वाक्यभेदे हि द्विराख्यातोच्चारणम् । तद् गुरु भवति । रक्षा परिपालनम् । पुष्टिः वृद्धिर्गुप्तिश्च । 'गोवृद्धः, धनगुप्तः' इति । प्रेष्यः दासः । 'ब्राह्मणदासः, देवदासः, ब्राह्मणाश्रितः, देवताश्रितः' इति । ¶ मेधा.

(२) शर्मरक्षापुष्टिप्रेष्यवाचकान्येव तेषां क्रमेण उपपदानीत्यर्थः । एवं चैव नामधेयानि भवन्ति– 'भद्रशर्मा, शक्तिपालः, धनपुष्टः, हीनदासः' इति । अन्ये तु शर्मादीनामर्थपरत्वं मन्यन्ते, न तु शब्दपरत्वम्, अस्मिन् मते 'सुमित्रः (?मतिः), धृतराष्ट्रः, निधिपालः, पशुसंघः' इत्यादीनि भवन्ति । मुक्ता. ८१

(१) प्रकारान्तरमाह– शर्मेति । शर्मवत् सुखवत् सुखप्रकाशनसमर्थमित्यर्थः । एवमुत्तरत्र । यथा 'सुमतिः, सुमन्तुः' इत्यादि । रक्षासमन्वितं धृतराष्ट्रादि । पुष्टिः समृद्धिः, तेन संयुक्तम् । तेन 'धनसंयुक्तम्' इत्यनेन न पुनरुक्तिः । यथा सीरभद्रादि । प्रेष्यसंयुतं पशुसखादि । अन्ये तु शर्मादीनां शब्दपरत्वमेव मन्यन्ते, न त्वर्थपरत्वम् । नन्द.

'स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् §॥

(१) पुंस इत्यधिकृतत्वात् स्त्रीणामप्राप्तौ नियम्यते । सुखेनोद्यते सुखोद्यम् । स्त्रीबालैरपि यत् सुखेनोच्चारयितुं शक्यते तत् स्त्रीणां नाम कर्तव्यम् । बाहुल्येन स्त्रीणां स्त्रीभिर्बालैश्च व्यवहारः तेषां च स्वकरणसौष्ठवाभावान्न सर्वं संस्कृतं शब्दमुच्चारयितुं शक्तिरस्ति । अतो विशेषेणोपदिश्यते, न तु पुंसामसुखोद्यमभ्यनुज्ञायते । उदाहरणम्– 'मङ्गलदेवी, चारुदती, सुवदना' इत्यादि । प्रत्युदाहरणम्– 'शर्मिष्ठा, सुश्लिष्टाङ्गी' इति । अक्रूरम्

---

‡ स्मृच., ममु., स्मृसा., पमा., मपा., मुक्ता. गोरावत् ।

¶ गोरा., व्रक., मवि., स्मृच., ममु., पमा., मच. मेधागतम् ।

(१) मस्मृ. २।३२ ; व्रक. ९१ रक्षा (राज) ; स्मृच. २१ ; ममु. प्रेष्य (प्रैष्य) ; पमा. ४४१ ; स्मृकौ. २७ चतुर्थपादमात्रम् ; प्रपा. १६४ व्रकवत् ; गमा. १७२ पूर्वार्धे (शर्मान्तं ब्राह्मणस्य स्याद्वर्मान्तं क्षत्रियस्य तु ।) पुष्टि (धन) ; शूशि. ६८ चतुर्थपादमात्रम् ; संप्र. २४२ व्रकवत् ; मुक्ता. ८१ ; सिन्धु. ९०५ गमावत् ; शूक. ९५ चतुर्थपादमात्रम् ; विपा. ३०९ (शर्मान्तं ब्राह्मणस्य स्याद्वर्मान्तं क्षत्रियस्य तु । वैश्ये गुप्तसमायुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥) ; सस्मृ. ३१, ५१ ; कृम. ९०६ (=) (शर्मान्तं ब्राह्मणस्य) एतावदेव.

§ निष्क्रमणविधिप्रकरणसंगृहीताग्रिममनुश्लोकव्याख्यानान्यप्यत्रानुसंधेयानि ।

(१) मस्मृ. २।३३ ; अप. १।११-१३ पृ. २७ द्यमक्रू (द्यमं क्रू) मङ्ग (माङ्ग) ; व्रक. ९१ हर (रम) ; स्मृच. २१ ; स्मृसा. ३ ; पमा. ४४१ व्रकवत् ; प्रपा. १६४ सुखोद्य (च सुख) मङ्ग (माङ्ग) ; संप्र. २४३ ; मुक्ता. ८२ ; विपा. ३१० मङ्ग (माङ्ग) ; संकौ. १०४ प्रपावत् व्रकवच्च ; आन. १४८ ; संब. ५६३ प्रपावत् ; सस्मृ. ३१.

अक्रूरार्थवाचि । क्रूरार्थवाचि क्रूरार्थम्— 'डाकिनी, परुषा' इति । विस्पष्टार्थं यस्यार्थो व्याख्यानगम्यो न भवति, अत एव विदुषामविदुषां वाऽर्थप्रतीतिं करोति । अविस्पष्टार्थं यथा— 'कामनिधा, कारीषगन्ध्या' इति । 'कामस्य निधेव निधा, तया कामस्तत्रैव तिष्ठतीति' एवं यावन्न व्याख्यातं तावन्नावगम्यते । एवं 'करीषगन्धेर्दुहिता कारीषगन्ध्या' इति व्याख्यानमपेक्ष्यते । मनोहरं चित्ताह्लादकरम्— 'श्रेयसी' । विपरीतं तु— 'कालाक्षी' । 'शर्मवती' (इति) मङ्गल्यम् । विपरीतम्— 'अभागा, मन्दभागा' इति । दीर्घः वर्णः अन्ते यस्य । विपरीतम्— 'शरत्' । आशिषं वदतीत्याशीर्वादम्, अभिधानं शब्दः, तयोर्विशेषणसमासः । तद् यस्मिन्नस्ति( विद्यते ? ) तत् आशीर्वादाभिधानवत् । 'सपुत्रा, बहुपुत्रा, कुलवाहिका' इति । एते ह्यर्था आशीर्विषयाः । विपरीताः— 'अप्रशस्ता, अलक्षणा' इति । अथ मङ्गल्यस्याऽऽशीर्वादस्य च को विशेषः ? न कश्चित् । वृत्तपूरणार्थं तु भेदेनोपादानम् ।
¶ मेधा.

(२) दीर्घवर्णः आकार ईकारो वा ।
§ स्मृच. २१

(३) अत्र च न रूपसमुच्चये तात्पर्यम्, किंच ( ? किंतु ) एकद्विरूपवत्त्वे । $ मवि.

## याज्ञवल्क्यः

### नामकरणकालः

[1]अहन्येकादशे नाम ॥

(१) एकादशेऽहनि नाम कर्तव्यम् । यत्तु 'दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति' (पागृ. १।१७।१) इति, दशम्यां व्युष्टायामिति तत्रार्थः । तथा चाऽऽह मनुः— 'नामधेयं दशम्यां तु द्वादश्यां चास्य कारयेत् ।' (मस्मृ. २।३०) इति । आनन्तर्यार्थश्चकारः । दशम्यां व्युष्टायां द्वादश्यां वेति द्रष्टव्यम् । अंशाजातत्वेन 'एकादश्याम्' इति नोक्तम् । तुशब्दाच्चायमेवाऽऽद्यः कल्प इति द्योतितम् । अथ तु दशम्यामेवेति तस्यार्थस्तदा यस्य प्राग्दशरात्राच्छुद्धिस्तद्विषयत्वेन द्रष्टव्यम्, सूतकवाक्योपरोधात् । एकादशे त्वविशेषेण प्राथमकल्पिकः । ¶ विश्व.

(२) एकादशेऽहनि नाम । तच्च पितामहमातामहादिसंबद्धं कुलदेवतासंबद्धं वा । यथाऽऽह शङ्खः— 'कुलदेवतासंबद्धं पिता नाम कुर्यात्' इति । मिता.

(३) अहन्येकादशे नाम । धेयमिति शेषः । एकादशादिसंख्या जन्मनः, तस्य प्रकृतत्वात् । अप.

(४) 'अहन्येकादशे नाम' इत्यत्रापि 'अशौचव्यपगमे नामधेयम्' (विस्मृ. २७।५) इति विष्णुसूत्रात् सूतकोत्तरदिनपरमेकादशादिनपदम् ।
‡ संत. ९०८

(५) एकादशे जन्मदिनात् । एतच्च सूतकान्तोपलक्षणम्, 'आशौचव्यपगमे नामधेयकरणम्' इति विष्णुवचनात् । अत्र श्रुतिः— 'एकादशे द्वादशे वा पिता नाम कुर्यात्' । मनुः— 'नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥' । दशम्यां तिथौ दशमे दिन इति यावत् । एतच्चाऽऽशौचापकर्षे । 'दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता' (पागृ. १।१७।१) । 'नामधेयं दशम्यां तु केचिदिच्छन्ति पार्थिव । द्वादश्यामपराभ्यां मासे पूर्णे तथा परे । अष्टादशेऽह्नि च तथा वदन्त्येके मनीषिणः ॥' । रात्रिपदमहोरात्रपरम् । गोभिलः—

¶ गोरा., व्रक., ममु., पमा., मच., संप्र., संग., नन्द., माच. मेधागतम् ।

§ शेषं मेधागतम् । स्मृसा., मुक्ता. स्मृचवत् मेधागतं च ।

$ शेषं मेधागतम् ।

(१) यास्मृ. १।१२. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे ( सं. का. पृ. ४७ ) द्रष्टव्याः .

¶ चूडाकर्मप्रकरणे 'चूडा कार्या यथाकुलम्' इति याज्ञवल्क्यवचनेऽपि विश्वव्याख्यानं द्रष्टव्यम् ।

‡ विमा. संतवत् ।

'जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम्' । व्युष्टे अतीते । अत्र कालविकल्पे (यथाकुलं) व्यवस्थेति वक्ष्यते । ... * कार्येति विभक्तिविपरिणामेन गर्भाधानादिषु उपनयनान्तेष्वप्यन्वेति । नाम्नस्तु करणं व्यवस्थापनमात्रमिति विशेषः । न च चूडापदवन्नामपदमपि कर्मविशेषपरमेवास्त्विति वाच्यम्, प्रामाणिकलिखनविरोधादिति । वीमि.

## नारदः

वर्णभेदेन नामकरणकालः, नामस्वरूपम्

**[1]सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् ।**
**नाम पूर्वं प्रशस्तं स्यान्मङ्गलैः सुसमाक्षरैः ॥**

**‡[2]जन्मतो दशमे वाऽपि द्वादश्यां वाऽपि तत्पुनः ।**
**विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः॥**

शेषयोः क्षत्रियवैश्ययोः । तेन विप्रशूद्रयोराशौचमध्येऽपि भवतीति केचित् । संम. १६

**[3]शूद्राणामपि चैवं स्यात्सतां नामासतामपि ।**
**केचिन्नाम सतां प्राहुरेकविंशदिने शुभम् ॥**

एवम् आशौचान्ते इत्यर्थः । संप्र. २३२

* 'चूडा कार्या यथाकुलम्' इति चतुर्थचरणस्थं 'कार्या' इति पदमित्यर्थः ।

‡ अस्य श्लोकस्य संप्र-संकौव्याख्याने पारस्करवचने (सं. का. पृ. २७३१) द्रष्टव्ये ।

(१) ज्योना. २०११ नाम पूर्वं (नामपूर्वं) लैः सुसमा (लैश्च शुभा); गभा. १७२ पू.; संसौ. ५४ पू.; सिन्धु. ९०५ प्रशस्तं स्यान्मङ्गलैः (तु मासस्य मङ्गलं); शूक. ९५ प्रशस्तं स्यान्मङ्गलैः (तु बालस्य मङ्गलं); ज्योनि. १११; संग. ५५५ पू.; संर. ८४९ पू.

(२) प्रपा. १६३ द्वादश्यां (द्वादशे) न्ते तु (न्तेषु); संप्र. २३२; संम. १६ त्पुनः (त्परः); संकौ. १००.

(३) प्रपा. १६३ शुभम् (शुभे); संप्र. २३२ विंश (त्रिंश).

## बृहस्पतिः

नामकरणप्रशंसा, वर्णभेदेन नामकरणकालः, स्त्रीणां मासनामानि

**[1]नामाखिलस्य व्यवहारहेतुः**
**शुभावहं कर्मसु भाग्यहेतुः ।**
**नाम्नैव कीर्तिं लभते मनुष्य-**
**स्ततः प्रशस्तं खलु नामकर्म ॥**

तदपि नाम जन्मनक्षत्रांशकलक्षि शतपदचक्रान्तर्गताक्षरादिकमेव कार्यम्, यतस्तन्नाम्ना जन्मनक्षत्रजन्मराशिप्रयुक्तो व्यवहारः सुकरो भवति । परे तु 'जन्मनाम तु गोपयेत्' इति स्मरणात् जन्मनक्षत्र(? त्राक्षर)पूर्वकं नाम गुप्तं संस्थाप्य नामान्तरं व्यवहारोपयिकं कार्यमित्याचक्षते । संसौ. ५८

**[2]अहन्येकादशे नाम ॥**

**[3]द्वादशे दशमे वाऽपि जन्मतो दिवसे शुभे ।**
**षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात् ॥**

(१) संसौ. ५८ द्वितीयपादः अशुद्धिबहुलः, स्मृतिः; संप्र. २४२; संकौ. १०३ (नामाखिलस्य व्यवहारहेतुः शुभावहम्) एतावदेव; संग. ५५४.

(२) बका. ७३८ याज्ञवल्क्यबृहस्पती.

(३) प्रपा. १६३; गभा. १७२ तो दिवसे शुभे (तोऽपि त्रयोदशे) मदनरत्ने; संप्र. २३३ (दशाहे द्वादशाहे वा जन्मतोऽपि त्रयोदशे । षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात् ॥) इत्यपि पाठः; संम. १६ जन्मतो (जन्मना) संप्रवदपि पाठान्तरम्; सिन्धु. ९०४ विंशे (त्रिंशे) शेषं गभावत्; शूक. ९५ सिन्धुवत्; विपा. ३०८ वाऽपि (चापि); ज्योनि. ११२; संकौ. १०१ उत्तरार्धे (षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात् ॥) इत्यपि पाठः; संग. ५५५ वसिष्ठः, अस्मिन्नेव पृष्ठे 'दशाहे द्वादशाहे वा जन्मतोऽपि त्रयोदशे ।' इत्यर्धं बृहस्पतेः; संब. ६८ संकौवत्; पुम. ४३३ संप्रपाठान्तरवत्, द्वात्रिंशे (द्वाविंशे) इति विशेषः; कुम. ९०४ (षोडशैकोनविंशे वा) एतावदेव; संर. ८५० संकौवत्.

( १ ) दशाहद्वादशाहयोर्विप्राणाम्, त्रयोदशे क्षत्रियाणाम्, षोडशे वैश्यानाम्, शेषयोः शूद्राणामिति वर्णतः क्रमादित्यस्यार्थः । ‡ संप्र. २३४

( २ ) 'दशाहे( द्वादशाहे )त्रा जन्मतोऽपि त्रयोदशे । षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात् ॥' इति मदनरत्नधृतबृहस्पतिवचने चतुर्वर्णानां षट्काला उक्ताः, न तु ते मदनेन व्यवस्थापिताः । व्यवस्था त्वेवम्— दशाहे अतीते तथा च एकादशद्वादशाहौ ब्राह्मणस्य, वाशब्दस्वरसात् । त्रयोदशेति क्षत्रियस्य, स्कृत( ? )कालत्वात् । षोडशैकोनविंशौ वैश्यस्य, द्वितीयवाशब्दस्वरसात् । द्वात्रिंशत्तमः शूद्रस्य, सूतकान्तेनाल्पान्तरत्वात् आकाङ्क्षासत्त्वाच्च । एतत्संवादेन नारदोऽपि— 'जन्मतो दशमे वाऽपि द्वादश्यां वाऽपि तत्पुरः । विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः ॥' इति । शेषयोः क्षत्रियवैश्ययोः । तेन विप्रशूद्रयोराशौचमध्येऽपि भवतीति केचित् । अत एव प्रयोगपारिजाते बृहस्पतिवचनमेवं पठितम्— 'द्वादशे दशमे वाऽपि जन्मना दिवसे शुभे । षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात् ॥' इति । तेन तन्मते दशमेति यथाश्रुतमेव । एतेषां च पक्षाणां स्वस्वगृह्यानुसारेण व्यवस्थेति हेमाद्रिमाधवमदनादयः ।

संम. १६

( ३ ) अत्र दशाहे व्यतीते सतीति ज्ञेयम्, वचनान्तरविरोधात् । पुम. ४३३

( ४ ) दशमेऽतीत इत्यर्थः । तेन एकादशदिनेऽनुष्ठानं सिध्यति । अयं च कल्पः सत्याषाढसूत्रानुसारिणां न भवति, मातापुत्रयोरशुचित्वेन तत्र तस्यासंभवात् । 'षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात् ।' इति क्वचित् पाठः । एकादशद्वादशौ ब्राह्मणस्य । क्षत्रियस्य षोडशः । वैश्यस्य विंशतिः । द्वाविंशः शूद्रस्येति वर्णतः क्रमादित्यस्यार्थः । संर. ८५०

‡ कृभ. संप्रवत् ।

[१]वाग्देवी मार्गशीर्षे तु पौषे पद्मावती भवेत् ।
श्रीदेवी माघमासे स्यात्सावित्री फाल्गुने स्मृता ॥
चैत्रमासे भवेद्भूतिः कल्याणी माधवे भवेत् ।
सत्यभामा स्मृता ज्येष्ठे शुचौ पुण्यवती भवेत् ॥
नभसि स्याद्रूपवती भाद्र इन्दुमती भवेत् ।
चन्द्रवत्याश्विने प्रोक्ता लक्ष्मीः कार्तिक ईरिता ।
एतानि मासनामानि स्युः स्त्रीनामकृतौ ध्रुवम् ॥

स्त्रीणां मासनामान्याह बृहस्पतिः— वाग्देवीति । माधवः वैशाखः । शुचिः आषाढः । नभाः श्रावणः । भाद्रः भाद्रपदः । मासाश्चात्र चान्द्राः, तत्रैव चैत्रादिशब्दानां मुख्यत्वात् । ते च शुक्लादिकृष्णान्ता एव, एतादृशचान्द्रमानस्यैव मुख्यत्वात् । ब्राह्मणेन चैतदेव विशेषेणाऽऽदरणीयम्, 'अमावास्यापरिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु ।' इति वचनात् ।

संर. ८५३

## व्यासः

नामकरणकालः, शर्माद्युपपदानि

[२]एकादशेऽह्नि नाम ॥
[३]नामधेयं दशम्यां तु केचिदिच्छन्ति सूरयः ।
द्वादश्यामाहुरन्ये तु मासे पूर्णे तथा परे ॥
[४]अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ॥
[५]शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य तु ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥

(१) संर. ८५३. (२) व्यास्मृ. १।१८.

(३) प्रपा. १६३ ; संप्र. २३२ पू., २३३ ; मुक्ता. ८१ माहुरन्ये तु ( मथवा रात्रौ ) ; ज्योनि. १११ ; संग. ५५५.

(४) प्रपा. १६३ ; मुक्ता. ८१ ; ज्योनि. १११–११२.

(५) प्रपा. १६४ ; संसौ. ५७ (=) वर्मेति ( वर्मान्तं ) ; शूशि. ६८ पूर्वार्धे ( शर्मान्तं ब्राह्मणे प्रोक्तं वर्मान्तं क्षत्रिये भवेत् । ) प्रशस्तं ( विशेयं ) ; संप्र. २४३.

## यमः

नामकरणकालः, शर्माद्युपपदानि

'नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ॥

अत्र च पितुः कथंचिन्नामकरणायोग्यत्वे कारयेत् इति विधीयते। अत एव शङ्खः— 'कुलदेवतानक्षत्राभिसंबद्धं पिता कुर्यादन्यो वा कुलवृद्धः' इति। पितुः कथंचिदयोग्यत्वे अभावे वा कुलवृद्धः कुर्यात्, न तु योग्यस्य सद्भावे, प्राग्दर्शितविष्णुवचनविरोधप्रसङ्गात् †। अत्र केचित् 'कारयेत् कुर्यात्' इति व्याचक्षते। तदयुक्तम्, लक्षणायां कारणाभावात्, 'पितैव कुर्यात्' इति वचनविरोधस्यापि परिपूरितत्वात्, लक्षणातश्च संकोचस्य युक्तत्वात्। चका. ७३८

'शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः। भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

(१) एतान्युत्तरपदानि समासरूपस्य नाम्नः कार्याणि। अप. १।१२

(२) यमोऽप्युत्तरपदनियममाह— 'शर्मा देवश्च ... शूद्रस्य कारयेत्।' इति। अत्रापि 'मङ्गल्यं ब्राह्मणस्य स्यात्' इति मनुनोक्तैः पूर्वपदैर्नामधेयानि द्रष्टव्यानि। † स्मृच. २१

(३) त्रातेति रक्षशब्दप्रदर्शनार्थम्। अत्र शक्तिपालेत्यादिशब्दा भवन्ति। मपा. ३५७

(४) भूतिपदं पुष्टेरुपलक्षणम्। मच. २।३२

## शातातपः

शर्मान्तं ब्राह्मणस्य नाम

'शर्मान्तं ब्राह्मणस्य स्यात् ॥

## बृहत्पराशरः

नामकरणकालः

'दिने चैकादशे नामकर्म स्याच्च द्विजन्मनाम् ॥

## गर्गः

नामकरणविधिः, नामस्वरूपम्, मासनामानि, गुरोर्नाम

'नामकर्म च दर्शोर्ध्वं यथाकालं समाचरेत् ॥

'आदौ घोषवदक्षरान् (? क्षरं) वरलवान् मध्ये पुनः स्थापयेदन्ते दीर्घविसर्जनीयसहितं नाम प्रयत्नात् कृतम्। ... पुंसां समैरक्षरैः ॥

'मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता। कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ॥

---

† 'ततस्तु नाम कुरुते पितैव दशमेऽहनि।' इति विष्णुपुराणवचनं प्राग्दर्शितम्।

(१) स्मृच. २०; चका. ७३८; मुक्ता. ८१; कृम. ९०५ ऽस्य (ऽपि).

(२) अप. १।११-१३ पृ. २७; ब्रक. ९०-९१ शर्मा (शर्म) वर्मा त्राता (वर्म राजा) भूतिर्द (गुप्तो द); स्मृच. २१; मभु. २।३२ शर्मा दे (शर्मदे) वर्मा त्रा (वर्मत्रा) भूतिर्द (भूतिद); मपा. ३५७; प्रपा. १६४ शर्मा दे (शर्मदे) वर्मा त्राता (वर्म राजा) भूतिर्दत्त (गुप्तो दास); उत. १४४ वर्मा त्राता (वर्मत्राता); संत. ९१९ दत्त (गुप्त); मच. २।३२ शर्मा दे (शर्मदे) वर्मा त्रा (वर्मत्रा); संप्र. २४३ ब्रकवत्; मुक्ता. ८१ वर्मा (वर्म) दासः (दास्यं); संको. १०४ ब्रकवत्; संग. ५६२ वर्मा त्राता (वर्म राजा) भूतिर्द (गुप्तो द); संर. ८५५ ब्रकवत्, संतवदपि पाठः.

† मुक्ता. स्मृचवत्।

(१) उत. १४४; संत. ९१९.

(२) बृपसं. ६।१४९.

(३) अस्य स्थलादिनिर्देशाः नामकरणमुहूर्तप्रकरणे द्रष्टव्याः. (४) संत. ९१८-९१९.

(५) प्रपा. १६४; प्रर. ७४ (=) उत्त.; गभा. १७३ (=) उत्त.; संप्र. २३७; संम. १७; सिन्धु. ९०५ उत्तरार्धे स्मृतिसंग्रहे; शूक. ९५; विपा. ३०९ उत्त., स्मृतिसंग्रहे; ज्योनि. ११२; संको. १०२; बाल. १।११-१२ पृ. २८ उत्तरार्धे संग्रहे; संग. ५५७ गुरो (हुधुडो); संव. ६८; संर. ८५२ पूर्वार्धे (मासनाम प्रकुर्वीत बालकस्य पिता ततः।).

**'उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।**
**योगीशः पुण्डरीकाक्षो माससनामान्यनुक्रमात् ॥**

(१) अत्र यथाऽऽचारं चैत्रादिर्मार्गशीर्षादिर्वा क्रमः । $ गभा. १७३

(२) अनुक्रमोऽत्र मार्गशीर्षादिकः, चैत्रादिक्रमे वैकुण्ठादिनामश्रवणात् । § संप्र. २३७

(३) ‡ तत्र माससनामान्याह गार्ग्यः– 'माससनाम गुरोर्नाम... माससनामान्यनुक्रमात्' । अत्र मार्गशीर्षादिक्रमः, 'चैत्रादिमाससनामानि वैकुण्ठोऽथ जनार्दनः । उपेन्द्रो यज्ञपुरुषो वासुदेवस्त्रिविक्रमः ॥ योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा । चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥' इति मदनरत्नधृतगार्ग्यवचनैकवाक्यत्वात् । पितामहचरणास्तु 'मासानां मार्गशीर्षोऽहम्' इति सामान्यलिङ्गात् मार्गशीर्षमारभ्य माससनामानि कल्पयन्ति । तत् वासिष्ठे चैत्रग्रहणेन विशेषाभिधानात् उपेक्ष्यम् । मलमासे जन्म चेत् उत्तरमाससनाम, 'षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः । पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रिया ॥' इत्युत्तरमासशेषत्वेनाभिधानात् । संम. १७

$ प्र., बाल., सिन्धु., शूक. गभावत् ।

§ संकौ., संग, संव., कृम., संर. संप्रवत् ।

‡ इदं संमव्याख्यानं श्रीधारपुरेसंपादितपुस्तकात्संगृहीतम् । तत्रानेका अनुपपत्तयः सन्ति । मार्गशीर्षादिक्रमाभिप्रायेण चैत्रादिक्रमाभिप्रायेण चेत्युभयथा माससनामानुक्रमणमेकेनैवर्षिणा कृतमिति न युज्यते । मार्गशीर्षादिमाससनामवचनस्य व्याख्येयत्वेन प्रकृतत्वात् हेतुघटकचैत्रादिमाससनामवचनमपरामृश्य पितामहमतोक्तिर्मार्गशीर्षादिमाससनामवचनविषयैवेति प्रतीतिरुपजायते । सा स्वमतपितामहमतयोरवैलक्षण्यान्नोपपद्यते । चैत्रग्रहणवतो वासिष्ठवचनस्य पूर्वमनुद्धृतत्वात् 'वासिष्ठे चैत्रग्रहणेन' इत्युक्तिर्न संगच्छते । 'पितामहचरणाः' इत्युच्चैः कृत्वा 'उपेक्ष्यम्' इत्यधःकरणमित्येवंरूपोऽविनयोऽपि श्रीशंकरभट्टे नोपपद्यते । पुस्तकान्तरे 'तत्र माससनामान्याह गार्ग्यः' इत्यादेः 'पितामहचरणास्तु' इत्यन्तस्य ग्रन्थस्य स्थाने "तत्र माससनामानि वसिष्ठ आह– 'चैत्रादिमाससनामानि... क्रमादाहुर्मनीषिणः ॥' इति । अत्र केचित्" इति ग्रन्थो विद्यते । तत्र नोक्ता अनुपपत्तयः, किंतु वासिष्ठवचनस्यैव प्रकृतत्वात् 'वासिष्ठे' इत्युक्तेरनर्थकत्वमात्रम् ।

(१) **प्रपा.** १६४ ; **प्र.** ७४ (=) ; **गभा.** १७३ (=) ; **संप्र.** २३७ ; **संम.** १७ ; **सिन्धु.** ९०५ स्मृतिसंग्रहे ; **शूक.** ९५ ; **विपा.** ३०९ स्मृतिसंग्रहे ; **ज्योनि.** ११२ ; **संकौ.** १०२ ; **बाल.** १।११–१२ पृ. २८ संग्रहे ; **संग.** ५५७ ; **संव.** ६८ ; **संर.** ८५२.

**'तन्माससनाम प्रथमं दद्यात् संबोध्य चैव हि ॥**

**'चैत्रादिमाससनामानि वैकुण्ठोऽथ जनार्दनः ।**
**उपेन्द्रो यज्ञपुरुषो वासुदेवो हरिस्तथा ॥**

**'योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ।**
**चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥**

मासाश्चात्र चान्द्राः, तेष्वेव चैत्रादिशब्दानां मुख्यत्वात् । ते च शुक्लादिकृष्णान्ता एव, तादृशचान्द्रमासस्यैव मुख्यत्वात् । ब्राह्मणेन चैतदेव विशेषेणाऽऽदरणीयम्, 'अमावास्यापरिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु ।' इति वचनात् । ‡ संकौ. १०२

‡ संव. संकौवत् ।

(१) **प्रपा.** १६४ ; **सिन्धु.** ९०६ (=) बोध्य (बुध्य) ; **विपा.** ३०९ (=) सिन्धुवत् ; **कृम.** ९०६ (=) (संबोध्य चैव हि० ).

(२) **संप्र.** २३७ ; **संम.** १७ वो हरिस्तथा (वस्त्रिविक्रमः) ; **संकौ.** १०२ ; **संग.** ५५७ ; **संव.** ६१ संमवत्, गुरुः : ६८ वो हरिस्तथा (वस्तथा हरिः) ; **कृम.** ९०६ संव. ६८ वत् ; **संर.** ८५२.

(३) **संप्र.** २३७ ; **संम.** १७ ; **संकौ.** १०२ ; **संग.** ५५७ ; **संव.** ६१ गुरुः, ६८ ; **कृम.** ९०६ ; **संर.** ८५२ तृतीयपादे ( चक्रीत्येतानि नामानि ).

## आश्वलायनः

नामस्वरूपम् , नामकरणकालः , शर्माद्युपपदानामुपपत्तयः

[1]द्विद्व्यक्षरं द्व्यक्षरं वा नामकर्मणि शस्यते ।
नाम पैतामहं शस्यं यादृशं वा द्विजन्मसु ॥

पितामहो देवतानामप्युपलक्षणम् । तथा च कपिलसंहितायाम्– 'एकादशेऽह्नि विधिवन्नाम कुर्यात् कुलोचितम् । देवतानां विशेषेण पित्रोर्वा नाम शस्यते ॥' इति । संप्र. २४२

[2]द्वादशेऽहनि कार्या स्यान्नामकर्मक्रिया शुभा ।
गृह्योक्तविधिना विप्रैरुत्तरत्र शुभेऽह्नि वा ॥

[3]शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
गुप्तदासपदे स्यातामुभयोर्वैश्यशूद्रयोः ॥

[4]तपसा ब्रह्मचर्येण दमेन च शमेन च ।
जगतां शर्मदानेन शर्मान्तं ब्राह्मणे भवेत् ॥

[5]तापत्रयादतिबलाज्जगत्संरक्षतीति यत् ।
तस्मात् सर्वसमे धीरे वर्मान्तं क्षत्रिये भवेत् ॥

[6]काले काले धनं दत्त्वा सर्वान् गोपायतीति यत् ।
तस्माद्वैश्यस्य नामैतद्गुप्तान्तमभिधीयते ॥

[1]द्विजान् शुश्रूषया नित्यं शूद्रस्तोषयतीति यत् ।
तस्मात्तस्य च दासत्वं †तत्तत्स्त्रीणां तथा तथा ॥

## लघ्वाश्वलायनः

नामकरणकालः , मासनाम–नक्षत्रचरणाक्षरनाम–पितामहनामानि, नामस्वरूपम्

[2]अहन्येकादशे कुर्यान्नामकर्म विधानतः ।
कृत्वाऽऽभ्युदयिकं श्राद्धं द्वादशे षोडशेऽपि वा ॥

मार्गशीर्षे समारभ्य मासानां नाम निर्दिशेत् ।
नक्षत्रपादतो जातजन्मनाम तदुच्यते ॥
यद्वा तातपिताना( ? तुर्ना )म भवेत्संव्यवहारिकम् ।
क्रमेणानेन संलिख्य नामानि च समर्चयेत् ॥
समाक्षरयुतं नाम भवेत् पुंसः सुखप्रदम् ।
विषमं यदि तत्र श्रीः स( ? श्रीस )मेतं च विनिर्दिशेत् ॥

## सोमः

नामकरणकालः

[3]दशम्यां प्रकाशनामकरणम् ॥

## पतञ्जलिः

नामस्वरूपम्

[4]याज्ञिका अपि पठन्ति– घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं द्व्यक्षरं चतुरक्षरं वा कृतं कुर्यान्न तद्धितम् ॥

---

(१) आश्वस्मृ. ११।९८ ; प्रपा. १६४ द्विद्व्यं ( चतुर ) शस्यं ( शस्तं ) ; संप्र. २४२ द्विद्व्यं (द्विद्वय) नामक ( नाम क ) ; संग. ५६१ द्विद्व्यं ( द्विद्वय ).

(२) आश्वस्मृ. ११।९९ शुभा (शुभैः) ; प्रपा. १६३.

(३) आश्वस्मृ. ११।१०० दे स्यातामुभयोर्वै ( दान्तं स्यादभिधा वै ) ; स्मृच. १९५ उत्तरार्धे ( गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥ ) बोधायनः ; प्रपा. १६४ ; मुक्ता. ८१ आश्वस्मृवत् ; संको. १०३ (=) प्रथमपादमात्रम् .

(४) आश्वस्मृ. ११।१०१ ; प्रपा. १६४ ; संप्र. २४३ दमेन च श ( शमेन च द ) ; संग. ५६२ संप्रवत् .

(५) आश्वस्मृ. ११।१०२ तापत्रयादति ( तावत्रयाणीति ) ; प्रपा. १६४ रक्ष ( वह ) ; संप्र. २४३ ; संग. ५६२ (=) जगत्संर ( जगतां र ).

(६) आश्वस्मृ. ११।१०३ पू. ; प्रपा. १६४ ; संप्र. २४३ ; संग. ५६२ (=).

† चरणस्यास्य संप्रव्याख्यानम् 'भयुजानि स्त्रीणाम्' इत्याश्वलायनगृह्यसूत्रे (सं. का. पृ. २७२२ ) द्रष्टव्यम् ।

(१) आश्वस्मृ. ११।१०३ उत्त. ; प्रपा. १६४ ; संप्र. २४३ यया ( यन् ) ; संग. ५६१ (=) संप्रवत् .

(२) लघ्वाश्वस्मृ. ६।१–४.

(३) चका. ७३७.

(४) संप्र. २४२ स्थमवृद्धं ( स्थं ) नूक ( नूक्त ) महाभाष्ये ; संम. १६ ( याज्ञिका अपि पठन्ति० ) न्तःस्थ ( न्तस्थ ) ( अनरि...तद्धितम्० ) ; संको. १०३–१०४

( १ ) त्रिपुरुषाः पितृपितामहप्रपितामहाः, तेषु अनूक्तम् अनूदितम्। कृतमिति यावत्। कृतं कृदन्तम्। तद्धितं तद्धितान्तम्। अरौ शत्रौ यन्न प्रतिष्ठितम्।

संप्र. २४२

( २ ) विशेषमाह पतञ्जलिः– घोषवदिति। "नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्तान् अनुकायति अभिधत्ते इति त्रिपुरुषानूकम्। 'अन्येषामपि' (पा. सू. ६।३।१३७) इति दीर्घः" इति प्रदीपकारः।

$ संम. १६

( ३ ) कृदन्तं कुर्यात्, न तद्धितान्तमिति भावः।

संको. १०४

( ४ ) अवृद्धम्– 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' (पा. सू. १।१।७३), तद्भिन्नम्। अनरिप्रतिष्ठितमिति। एवम् 'नैव कार्यं नृपादीनां नाम जीवनहेतुतः। पूर्वः परस्य वर्णस्य हीनस्यापि न धारयेत्॥' इत्यपि बोध्यम्।

* कृभ. ९०७

## स्मृत्यन्तरम्

मासनामानि, जन्मनाम्नो रहस्यत्वम्, जननशान्तिं कृत्वा नामकरणमिति क्रमः, नामकरणकालः

[1]केशवं मार्गशीर्षे तु पौषे नारायणं विदुः।
माधवं माघमासे तु गोविन्दं फाल्गुने तथा॥
चैत्रे विष्णुं तथा विद्याद्वैशाखे मधुसूदनम्।
त्रिविक्रमं तथा ज्येष्ठ आषाढे वामनं विदुः॥
श्रावणे श्रीधरं विद्धि हृषीकेशं तु भाद्रके।
आश्विने पद्मनाभं तु ऊर्जे दामोदरं विदुः॥

---

$ संर. संमवत् संकोवच्च।

* शेषं संमवत्।

( याज्ञिकाः पठन्ति–त्रिपुरुषानुकमनरिप्रतिष्ठितं कृतं कुर्यान्न तद्धितम्) महाभाष्ये; कृभ. ९०७ (घोषवदाद्यन्तरन्तस्थमवृद्धमनरिप्रतिष्ठितं कुर्यान्न तद्धितं त्रिपुरुषानूकम्) महाभाष्ये; संर. ८५५ (याज्ञिका ... न्तः-स्थम्०) (द्व्यक्षरं चतुरक्षरं वा०).

(१) संर. ८५२–८५३.



[1]जन्मनाम तु गोपयेत्॥

[2]दुष्टनक्षत्रजातानां शान्तिं कृत्वा विधानतः।
द्वादशैकादशे वाऽह्नि नाम कुर्यात्ततः परम्॥

एतानि जननिमित्तशान्तिविधानानि § नामकरणपूर्वं कर्तव्यानि। नैमित्तिकत्वात् 'दुष्टनक्षत्र... परम्॥' इति स्मृत्यन्तराच्च शान्तिविधानात्परं नामकरणमिति केचित्। 'द्वादशैकादशे' इत्यत्र संधिरार्षः। यदा तु बहुनिमित्तसंपातस्तदा 'प्रतिनिमित्तं नैमित्तिकम्' इति न्यायेन सर्वाण्येव नैमित्तिकानि कार्याणि। यथा अमावास्यायां ज्येष्ठानक्षत्रे व्यतीपातादौ जातस्य अमावास्यादिशान्तिः क्रियते। तत्र क्रमस्त्वैच्छिकः। यद्वा तन्त्रेणैव कार्याणि, कर्त्रादीनामेकत्वात्। कुमार्या अप्येतत्कार्यम्, न्यायसाम्यात्, 'सुतः सुता वा' इत्यादिवक्ष्यमाणवचनाच्च।

विपा. ३१२–३१३

## विष्णुपुराणम्

नामकरणकर्ता, नामकरणकालः, नामस्वरूपम्, शर्माद्युपपदानि

[3]ततस्तु नाम कुर्वीत पितैव दशमेऽहनि।
देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम्॥

( १ ) एतच्छास्त्रान्तरोक्तकालोपलक्षणार्थम्।

स्मृच. २०

( २ ) नरमाचष्टे इति नराख्यं नरनाम देवात्पूर्वम्। तच्च विशिष्टं शर्मयुतम्, 'शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः। भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य

---

§ उत्तरमतानुरोधेन बहुव्रीहिरयम्।

(१) संसौ. ५८.

(२) विपा. ३१२.

(३) स्मृच. २० पू.; चका. ७३७ कुर्वीत (कुरुते) पू.; पमा. ४४१ पू.; संत. ९१९ ततस्तु (ततश्च); उत. १४३–१४४ संतवत्; संसौ. ५६ पितैव (पिता वै) पू.; संप्र. २३२, २४४ पू.; वम. ९ पू.; मुक्ता. ८१ पू., स्मृतिरत्ने; आन. १४८ पू., स्मृतिरत्ने; संग. ५६४ पू.; माव. २।३० पू.; संर. ८५० पू.

कारयेत् ॥ ' इति यमवचने समुच्चयोपलब्धेः । ' शर्मान्तं ब्राह्मणस्य स्यात् ' इति शातातपीयेन शर्मान्तता च ।

* संत. ९१९

( ३ ) पितैवेत्येवकारः पितृपितामहादिसमवधाने पितृनियमार्थः । असमवधाने तु पितामहादिरपि कुर्यात् । तथा च शङ्खः– ' पिता नाम कुर्यादन्योऽपि वा कुलवृद्धः ' इति । $ संप्र. २४४–२४५

'शर्मवद् ब्राह्मणस्योक्तं वर्मेति क्षत्रसंयुतम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥
'नार्थहीनं न चाशस्तं नापशब्दयुतं तथा ।
नामकृल्यं न जुगुप्स्यं नाम कुर्यान्मनोहरम् ॥
'नातिदीर्घं न कुत्सार्थं नातिगुर्वक्षरान्वितम् ।
सुखोच्चारयुतं नाम कुर्याद्द्विप्रवरो गुरुः ॥

## स्कन्दपुराणम्

देवालयपशुवृक्षादीनामपि नामकरणम् , नामकरणकालः

'देवालयगजाश्वानां वृक्षाणां वापिकूपयोः ।
सर्वापणानां पण्यानां चिह्नानां योषितां नृणाम् ॥
'काव्यादीनां कवीनां च पश्वादीनां विशेषतः ।
गजप्रासादयन्त्राणां नामकर्म यथोदितम् ॥

( १ ) यथोदितं शास्त्रान्तरे यथाऽभिहितम् । यथा– 'स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च । बिच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ॥ ' इत्यादि ।

संप्र. २४५

( २ ) वापीशब्दस्य ह्रस्व आर्षः । संर. ८५६

'नामान्येकादशे... ॥

## ब्रह्मपुराणम्

नामस्वरूपम्

'नार्थहीनं नापकृष्टं नापशब्दात्मकं तथा ।
नामकृल्यं जुगुप्स्यं च नाम कुर्यात् समाक्षरम् ॥

## भविष्यपुराणम्

नामकरणकालः

'नामधेयं दशम्यां तु केचिदिच्छन्ति पार्थिव ।
द्वादश्यामपरे रात्र्यां मासे पूर्णे तथा परे ।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ॥

( १ ) दशम्यां रात्र्याम् । रात्रिपदम् अहःपरम् । तच्चाऽऽशौचापकर्षे बोद्धव्यम् , ' अशौचापगमे नामधेयम् ' इति विष्णुवचनात् । स्मृसा. २–३

( २ ) अयं च व्यवस्थितो विकल्पः । तथा च सारसंग्रहे– ' एकादशेऽह्नि विप्राणां क्षत्रियाणां त्रयोदशे ।

---

* उत. संतवत् ।

$ संग. संप्रवत् ।

(१) ममु. २।३२.

(२) स्मृसा. ३ पू. ; प्रपा. १६४ शस्तं ( शास्त्रं ) सायणीये.

(३) स्मृसा. ३ ( नातिदीर्घं न वा दुःखं नातिगुर्वक्षरं तथा । सुखोच्चार्यं समं कुर्यात्तथैव प्रणवाक्षरम् ॥ ) ; प्रपा. १६४ सायणीये.

(४) संप्र. २४५ पण्या ( पृष्ठ्या ) ; सिन्धु. ९०७ (=) ह्नानां ( ह्नार्थे ) ; विपा. ३०९ ( = ) णानां प (गानां पु ) शेषं सिन्धुवत् ; संको. १०४ ; संर. ८५६.

(५) संप्र. २४५ ; सिन्धु. ९०८ (=) ( काव्यानां च कवीनां च पश्वादीनां च सर्वशः । राजप्रासादवास्तूनां नामकर्म विशिष्यते ॥ ) ; विपा. ३१० (=) (काव्यानां च कवीनां च पश्वादीनां च सर्वशः । राजप्रसादवस्तूनां नामकर्म विशिष्यते ॥ ) ; संको. १०४ ; संर. ८५६ चतुर्थपादे ( नाम नैव प्रदीयते ).

(१) सस्मृ. ५१. (२) संसो. ५८.

(३) अप. १।११–१३ पृ. २६ तु ( च ) ; ब्रक. ८८ मपरे रात्र्यां ( मथवा रात्रौ ) था परे ( थाऽपरे ) ; स्मृच. २० रात्र्यां मासे ( रात्रौ मासि ) था परे ( थाऽपरे ) ; चका. ७३८ श्यामपरे रात्र्यां ( श्यां पररात्रौ वा ) अष्टादशेऽह (आहुर्दशाह) न्त्यन्ये (न्त्येके) ; स्मृसा. २ दशम्यां तु ( दशस्यान्ते ) हनि ( ह्नि च ) ; पमा. ४४१ अपवत् ब्रकवच्च ; मपा. ३५५ रात्र्यां ( रात्रौ ) ; संसो. ५५ न्त्यन्ये (न्त्येके) ; वीमि. १।१२ परे रा ( परशा ) हनि ( ह्नि च ) न्त्यन्ये ( न्त्येके ) ; संप्र. २३२ प्रथमार्धमात्रम् : २३४ हनि ( ह्नि च )

वैश्यानां षोडशे कार्यं मासान्ते शूद्रजन्मनः ॥ ' इति ।

संकौ. ५५

( ३ ) रात्रिपदमहोरात्रपरम् । वीमि. १।१२

( ४ ) दशम्यामतीतायामिति ज्ञेयम् , ' आशौचापगमे नामधेयम् ' इति विष्णूक्तेः ।

† सिन्धु. १०४

## कपिलसंहिता

नामकरणकालः , कुलोचितं देवतानिष्ठं पितामहादिनिष्ठं वा नाम कार्यम् , नृप–परवर्णादिनिष्ठनामधारणनिषेधः

**[1]एकादशेऽह्नि विधिवन्नाम कुर्यात्कुलोचितम् ।**
**देवतानां विशेषेण पित्रोर्वा नाम शस्यते ॥**

( १ ) कर्तुः पित्रोरित्यर्थः । इदं च दाक्षिणात्यशिष्टा आचरन्ति । * संम. १६

( २ ) यत्तु प्रयोगपारिजाते कपिलसंहितावचनम्– ' एकादशेऽह्नि...॥ ' इति, तदपि नामकर्तुः पित्रोर्नामित्येवं व्याख्येयं पातञ्जलेनाविरोधाय । अतश्च पित्रादिः कर्ता स्वनामैव करोतीति केषांचिदनाचार एव ।

संर. ८५५

**[2]नैव कार्यं नृपादीनां नाम जीवनहेतुतः ।**
**पूर्वैः परस्य वर्णस्य हीनस्यापि न धारयेत् ॥**

† संर. सिन्धुवत् ।

* कृम. संमगतम् ।

प्रथमार्धे नास्ति ; चम. ९ अपवत् व्रकवच्च ; संम. १६ था परे ( थाऽपरे ) ; सिन्धु. १०४ केचिदिच्छन्ति पार्थिव ( द्वादश्यां मासि केचन ) द्वितीयार्धे नास्ति ; विपा. ३०८ सर्वे सिन्धुवत् ; संकौ. १०१ सर्वे संप्र.२३४ वत् ; संग. ५५५ था परे ( थाऽपरे ) शेषं सर्वे संप्र. २३४ वत् ; संर. ८५० रात्र्यां मा ( प्राहुर्मा ).

(१) प्रपा. १६४ र्वा नाम ( र्नाम च ) ; संप्र. २४२ ; संम. १६ ; संकौ. १०४ उत्त. ; संग. ५६१ ; कृम. ९०६ उत्त. ; संर. ८५५.

(२) प्रपा. १६४ पूर्वैः ( पूर्वं ) ; संम. १६ ; कृम. ९०७ (=) ; संर. ८५५.

## अनिर्दिष्टकर्तृकवचनानि

स्त्रीनामोपपदम् , नक्षत्रचरणाक्षरनिर्णायकशतपदचक्रोद्धारः , नामादिवर्णविशेषविचारः

**[1]देव्यन्तास्तु स्त्रियः स्मृताः ॥**

**शूद्रा दासान्तकाः स्मृताः ॥**

' देव्यन्तास्तु स्त्रियः स्मृताः ' इति द्विजातिस्त्रीपरम् , ' शूद्रा दासान्तकाः स्मृताः ' इति वचनात् । तत्पत्न्याश्च ' पुंयोगात् ' ( पा. सू. ४।१।४८ ) ' जातेः ' (पा. सू. ४।१।६३ ) चेति ईप्रत्ययेन दास्यन्तता । शूद्रे शिष्टव्यवहारोऽपि तथा । यत्तु सर्ववर्णस्त्रीपरं ' देव्यन्ताः ' इति, तन्न, प्रकरणात् , द्विजातिपुंयोगबाधाच्च । शर्मणीवर्मणीप्रयोगस्तु न व्यवहार्यः , ' देवपूर्वं नराख्यं स्यात् ' इत्यस्य तत्परत्वानौचित्यात् । एवमेव कुल्लूकभट्टः । तेन वाक्येऽपि तथा कल्पना । उत. १४४

**[2]शुण्ठीकोष्ठेषु तिर्यक्त्ववकहड लिखाधःस्थितालीष्विदार्थे-**
**$स्तान्युकांश्च स्वरैश्च क्रमत इह कुयु-**
**ग्घ( कु ? )ञ्छा मध्यकोष्ठे ।**
**थैर्धैरूर्ध्वाधरालीष्वनलभत इहा-**
**ऽऽसार्पमर्णैर्भपाद्या**
**एवं चान्येषु दधान्मटपरत पुयुक्-**
**ष( ण् ? ) णता मध्यकोष्ठे ॥**

**पितृभत इह भानि वाऽऽह्निदैवं**
**नयभजखाश्च तथा भुयुग्घफौ ढः ।**
**हरिभमवधि मैत्रतः स्यु-**
**र्गसदचला वसुभाद्युयुग्मञौ थः ॥**

शतपदचक्रसारोद्धारो ज्योतिषेऽभिहितः– शुण्ठीति । अस्यार्थः– शुण्ठीकोष्ठेषु पञ्चविंशतिकोष्ठेषु तिर्यक् तिर्यक् मार्गेण अवकहड वर्णान् लिख । अधःस्थितालीषु अधः-

$ आदर्शपुस्तकेऽयं पाठो मूले मुद्रितः । स एव साधीयान् । टीकातस्तु ' स्तानुकैश्च ' इति पाठः प्रतीयते ।

(१) उत. १४४. (२) संग. ५५८.

स्थितपङ्क्तिषु उक्तैः कथितैः इदाद्यैः स्वरैः तान् वर्णान् क्रमतः संयोज्य लिख। इकाराद्यैः स्वरैः तेषां वर्णानां संयोगः कथं कर्तव्यः? तदेवाऽऽह– व क ह ड एतेषु इकारसंयोगेन वि कि हि डि भवेत्। उकारसंयोगेन वु कु हु डु भवेत्। एकारसंयोगेन वे के हे डे भवेत्। ओकारसंयोगेन वो को हो डो भवेत्। इह अत्र चक्रे मध्यकोष्ठके कुयुकृघङ्छा लेख्याः। यत्र कोष्ठे कुकार-स्तस्मिन्नेव कोष्ठे घङ्छा इत्यर्थः। एवं पञ्चविंशतिकोष्ठेषु वर्णा लेख्याः। घैर्घैः चतुर्भिश्चतुर्भिर्वर्णैः अनलभतः कृत्तिकानक्षत्रतः आसार्पम् अश्लेषापर्यन्तं नक्षत्रचरणा भवन्ति। यथा अ इ उ ए कृत्तिका। ओ व वि वु रोहिणी। एवं सर्वत्र। अन्येषु पञ्चविंशतिकोष्ठेषु मटपरता लेख्याः। यत्र मध्यकोष्ठे पुकारस्तत्र षणठा लेख्याः। पितृभतः मघामारभ्य आद्विदैवं विशाखान्तम् इकारादिस्वरैर्युक्ता लेख्याः। मि टि पि रि ति, मु टु पु रु तु, मे टे पे रे ते, मो टो पो रो तो। यत्र पुस्तत्र ष ण ठ। मैत्रतः अनुराधामारभ्य हरिभमवधि श्रवणपर्यन्तं न य भ ज ख, नि यि भि जि खि, नु यु भु जु खु, ने ये भे जे खे, नो यो भो जो खो। यत्र भुस्तत्र धफढ। वसुभात् धनिष्ठामारभ्य भरणीपर्यन्तं ग स द च ल, गि सि दि चि लि, गु सु दु चु लु, गे से दे चे ले, गो सो दो चो लो। यत्र दुस्तत्र झ ञ थ। चतुर्भिश्चतुर्भिरक्षरैः एकैकं नक्षत्रं भवति। चतुश्चरणात्मकमेकं नक्षत्रं भवतीत्यर्थः।

## ¶शतपदचक्रम्

(१)

| अ | व | क | ह | ड |
|---|---|---|---|---|
| इ | वि | कि | हि | डि |
| उ | वु | कु घ ङ छ | हु | डु |
| ए | वे | के | हे | डे |
| ओ | वो | को | हो | डो |

(२)

| म | ट | प | र | त |
|---|---|---|---|---|
| मि | टि | पि | रि | ति |
| मु | टु | पु ष ण ठ | रु | तु |
| मे | टे | पे | रे | ते |
| मो | टो | पो | रो | तो |

(३)

| न | य | भ | ज | ख |
|---|---|---|---|---|
| नि | यि | भि | जि | खि |
| नु | यु | भु ध फ ढ | जु | खु |
| ने | ये | भे | जे | खे |
| नो | यो | भो | जो | खो |

(४)

| ग | स | द | च | ल |
|---|---|---|---|---|
| गि | सि | दि | चि | लि |
| गु | सु | दु झ ञ थ | चु | लु |
| गे | से | दे | चे | ले |
| गो | सो | दो | चो | लो |

¶ अभिजिता सहाष्टाविंशतिं नक्षत्राण्यभिप्रेत्येदं चक्रम्।

[1]न प्रोक्ता ङञणा वर्णा नामादौ सन्ति ते न हि ।
चेद्भवन्ति तदा ज्ञेया गजडास्ते यथाक्रमम् ॥
[2]खषौ शसौ बवौ चैव ज्ञेयावेतौ परस्परम् ।
संयोगाक्षरजे नाम्नि ज्ञेयं तत्राऽऽदिमाक्षरम् ॥

## चतुर्विंशतिमतम्

नामकरणकालः

[3]नाम चैकादशेऽहनि ॥

## संग्रहकारः

वर्णभेदेन नामकरणकालः , देवालयपशुवृक्षादीनामपि नामकरणम्

[4]एकादशेऽह्नि विप्राणां क्षत्रियाणां त्रयोदशे ।
वैश्यानां षोडशे कार्यं मासान्ते शूद्रजन्मनः ॥

( १ ) एकादशाहपदं दशाहद्वादशाहयोरुपलक्षणम् । संप्र. २३४

( २ ) एकादश इति दशमद्वादशयोरुपलक्षणम् , त्रयोदश इति षोडश इति च विंशादेः । क्षत्रियादिभिः स्वाशौचकालात्पूर्वं न कार्यमित्यत्र तात्पर्यम् । संको. १०१

[5]देवालयगजाश्वानां वृक्षाणां वापिकूपयोः ।
सर्वोपकरणानां च चिह्नानां योषितां नृणाम् ॥
[6]काव्यादीनां कवीनां च पश्वादीनां विशेषतः ।
राजप्रासादसंज्ञानां नामकर्म विशिष्यते ॥

(१) ज्योनि. ९९ स्वरशास्त्रे.

(२) ज्योनि. ९९ शसौ ( सशौ ) वेतौ ( विति ) ज्ञेयं ( ग्राह्यं ) स्वरशास्त्रे ; संर. ८६१ स्वरशास्त्रे.

(३) चम. १२.

(४) संसौ. ५५ सारसंग्रहे ; संप्र. २३४; संको. १०१ ; संग. ५५५ ; संब. ६८.

(५) प्रपा. १६४ ; ज्योनि. ११२ वापि ( वापी ).

(६) प्रपा. १६४ काव्या ( कन्या ) ; ज्योनि. ११२ प्रासाद ( प्रसाद ).

## स्मृत्यर्थसारः

नामकरणकालः

[1]नामकरणं जातकर्मानन्तरं वा द्वादशेऽह्नि वाऽन्यस्मिन् शुभेऽह्नि वा कुर्यात् ॥

## राजमार्तण्डः

कन्याया नामविशेषनिषेधः

[2]कन्यां नदीपर्वतपादपादि-
नाम्नीं तथा पुण्यदिवौकसां च ।
तथाऽचलान्तामहिपक्षिनाम्नीं
प्राज्ञो न कुर्वीत हिताय नित्यम् ॥

## श्रीधरः

नामकरणकालः

[3]नामकर्म दशमेऽथवाऽहनि
द्वादशे शुचिषु वा विधीयते ॥

अत्र 'अहनि' इति दिवसविधानेन नामकर्मणि गुरुशुक्रमूढत्वदोषो नास्तीत्युच्यते । प्रपा. १६३

## संस्कारनृसिंहे

स्त्रीणां मासनामानि

[4]श्रीः पद्मा कमला लक्ष्मीः सीता सत्या च रुक्मिणी ।
माधवी चेन्दिरा देवी तुलसी जाम्बवती तथा ॥

## महेश्वरः

नामकरणस्य कर्ता कालश्च

[5]कार्यं सूनोर्जननसमये जातकर्माथ नाम
पित्राऽन्यैर्वा जननदिवसाद्
द्वादशेऽह्नयाद्यके वा ॥

(१) स्मृसार. ३.

(२) संसौ. ५८ पुण्य ( पुष्प ) ; संग. ५६४ न्तामहिपक्षि ( न्तां महिपक्ष ) ज्योतिर्निबन्धे.

(३) प्रपा. १६३.

(४) संग. ५६३.

(५) संसौ. ५५ ; संप्र. २३१.

## ज्योतिषार्के

नक्षत्रचरणाक्षराणि

[1]चूचेचोला पदेष्वाद्ये लीलूलेलो यमस्य भे।
आईऊए इमेऽग्नेर्भे ओवावीवू तथा कभे ॥
[2]वेवोकाकी मृगः ख्यातः कुघङच्छास्तु रौद्रभे।
केकोहाही त्वदितिभे हुहेहोडा च पुष्यभे ॥
[3]डीडूडेडो इमे सार्पे मामीमूमे मघाभिधे।
मोटाटीटू तथा भाग्ये टेटोपाप्यर्यमर्क्षके ॥
[4]पूषाणाठा तथा हस्ते पेपोरारीति चित्रभे।
रूरेरोता तथा स्वातौ तीतूतेतो द्विदैवभे ॥
[5]नानीनूने क्रमान्मैत्रे नोयायीयू इतीन्द्रभे।
येयोभाभीति मूलाख्ये भूधफढ(? धाफाढा) जलस्य भे ॥
[6]भेभोजाजीति विश्वर्क्षे जूजेजोखाऽभिजिद्भवेत्।
खीखूखेखो श्रुतौ ज्ञेया गागीगूगे च वासवे ॥
[1]गोसासीसू जलेशर्क्षे सेसोदादीत्यजाङ्घ्रिभे।
दूझञथ(? झाञाथा) तथोपान्त्ये देदोचाचीति पौष्णभे ॥
[2]इति प्रोक्ता इमे पद्ये वर्णा नामादिजाः स्फुटाः।
ज्ञेया मेषादिराशीनां नवभिर्नवभिः पदैः ॥

( १ ) आद्ये अश्विनीनक्षत्रे पदेषु चतुर्ष्वपि चरणेषु। ततश्च तत्तदक्षरादीनि चूडामणिचेदिपतिचोलपतिलाटपति- रि( ? पती )त्यादीत्युन्नेयानि। तथा च तत्रैवोपसंहृतम्— ‘ इति प्रोक्ता... नवभिः पदैः॥ ’ इति। इमे पूर्वोक्ताः। नामादिजाः नामादौ जाताः।

संप्र. २४०

( २ ) अत्र ह्रस्वस्थाने दीर्घोच्चारस्तु न दोषाय भवति, ह्रस्वदीर्घप्लुतसवर्णत्वात्। अश्वाद्ये अश्विन्याद्ये पदे नवमांशे। $ संग. ५६०

( ३ ) आद्यम् अश्विनीनक्षत्रम्। यमस्य नक्षत्रं भरण्यः। वह्निभं कृत्तिकाः। कः प्रजापतिः, तस्य नक्षत्रं रोहिणी। शिवस्य भम् आर्द्रानक्षत्रम्। अदितिभं पुनर्वसू। सार्पम् आश्लेषाः। भाग्यं भगदैवतं पूर्वा(? र्वं)- फल्गुनीनक्षत्रम्। अर्यमर्क्षम् उत्तरा( ? र )फल्गुनी- नक्षत्रम्। द्विदैवभं विशाखानक्षत्रम्। मैत्रम् अनूराधाः। इन्द्रभं ज्येष्ठाः। जलस्य भं पूर्वाषाढाः। विश्वर्क्षम् उत्तराषाढाः। श्रुतिः श्रवणनक्षत्रम्। वासवं श्रविष्ठाः। जलेशः वरुणः, तस्य नक्षत्रं शततारकाः। अजैकभं पूर्वा( ? र्व )- प्रोष्ठपदाः। उपान्त्यम् उत्तरा( ? र )प्रोष्ठपदाः। पौष्णभं रेवतीनक्षत्रम्। इतराणि प्रसिद्धार्थानि। ‘इति प्रोक्ता इमे पद्ये वर्णा नामादिजाः स्फुटाः। ’ इत्युपसंहारात् आद्ये अश्विन्यां पदेषु चरणेषु ये चु इत्यादयो वर्णास्तदादीनि नामानि कार्याणीति प्रतीतेर्ज्योतिर्विदां नक्षत्रचरणज्ञान-

---

(१) संप्र. २३९ ; संकौ. १०३ यमस्य भे (यमस्य च ) पू.; संग. ५६० पदेष्वा ( पदेऽश्वा ) आईऊ ( अईउ ) शेषं संकौवत्; संर. ८५९ चू ( चु ) लीलू ( लिलु ) उत्तरार्धे ( अइउए वह्निभे च ओवविवु तथा कभे ॥ ).

(२) संप्र. २३९–२४० ; संग. ५६० ; संर. ८५९ ( वेवोककि मृगः ख्यातः कुघङच्छ शिवस्य भे। केकोहहि त्वदितिभे हुहेहोडाश्च पुष्यभे ॥ ).

(३) संप्र. २४० ; संग. ५६० टीटू ( टिटु ) ; संर. ८५९ डीडू ( डिडु ) मामी (ममि ) टाटीटू ( टटिटु ) भाग्ये ( भागे ) टोपा ( टोप ).

(४) संप्र. २४० ; संग. ५६० षाणाठा ( षणठ ) ; संर. ८५९ ( पुषणठास्तथा हस्ते पेपोररि च चित्रभे। रूरेरोतास्तथा स्वातौ तितुतेतो द्विदैवभे ॥ ).

(५) संप्र. २४० धफढ ( धाफाटा ) ; संग. ५६० ; संर. ८५९ ( ननिनूने क्रमान्मैत्रे नोययियु इतीन्द्रभे। येयोभभि च मूलाख्ये बुधफाढा जलस्य भे ॥ ).

(६) संप्र. २४० ; संग. ५६० ; संर. ८५९ ( भेभोजजि च विश्वर्क्षे जुजेजोखाभिजिद्भवेत्। खिखुखेखो श्रुतौ ज्ञेया गगिगूगे च वासवे ॥ ).

$ शेषं संप्रगतम्।

(१) संप्र. २४० झञथ ( थाह्याला ) ; संग. ५६० ; संर. ८५९ ( गोससिसु जलेशर्क्षे सेसोददि अजैकभे। दुयझञास्तथोपान्त्ये देदोचचीति पौष्णभे ॥ ).

(२) संप्र. २४० ; संकौ. १०३ पू. ; संग. ५६० ; संर. ८५९.

फलानि सन्तु तान्यपि नामानि । यदि नामकरणप्रकरणे क्वचिद् गृह्यग्रन्थे ' तादृशं नक्षत्रनाम कार्यम् ' इति स्फुटो विधिर्भवेत् तदाऽपि सूत्रवाक्यादिसंबद्धकर्मानधिकृतजात्यन्धविषयोऽसाविति ज्ञेयम् , तदधिकृतान् प्रति व्याकरणानुसारिनक्षत्रनाम्नामेवाऽऽवश्यकताया दर्शितत्वात् ।

संर. ८५९–८६०

## तन्त्रकारः

व्यावहारिकनामकरणम्

'स्वामीष्टं व्यावहारिकं नाम कुर्यात् ॥

## सुदर्शनभाष्ये

तद्धितान्तनाक्षत्रनामसाधनम्

'रोरेममृज्येष्विषु वृद्धिरादौ
ठात्पे च वाऽन्त्यश्रवशाश्वयुक्षु ।
शेषेषु नाऽऽर्म्वोः कपरः स्वरोऽन्त्यः
स्वाप्वोरदीर्घः सविसर्ग इष्टः ॥

(१) ठात्पे इति । प्रोष्ठपदा इत्यत्र आदौ ठात्परे च वृद्धिः प्रौष्ठपाद इति । अन्त्यम् अपभरणीशब्दः श्रुतावुक्तः । तत्र श्रवणादौ च वाऽऽदिवृद्धिः । अपभरण आपभरण इत्यादि । सिन्धु. ९०९

[ ठात्पे इतीति । ठकारात् पकारे परे वृद्धिः चकारादादौ च, प्रौष्ठपादः, 'जेप्रोष्ठपदानाम्' (पा. सू. ७।३।१८) इति सूत्रात् । कृम. ९०९ ]

(२) रो इति रोहिणी । आदौ आद्याक्षरे । ततश्च रौहिणः, रैवतः, माघः, मार्गशीर्षः, ज्यैष्ठः, चैत्र इति षण्णां सिद्धिः । प्रोष्ठपदाप्रकृतिके नाम्नि ठकारात् परे वृद्धिरित्यर्थः । ततश्च प्रोष्ठपाद इति नक्षत्रद्वयसंबन्धिनामसिद्धिः । अन्त्यम् अपभरणी, तैत्तिरीयाणां नक्षत्रेष्टिपाठे कृत्तिकाद्यपभरण्यन्तपाठात् । ततश्च अपभरणः आपभरणः । श्रवणः श्रावणः । शतभिषक् शातभिषजः । 'जातार्थे प्रतिप्रसूतोऽण् ङिद्वा वक्तव्यः' इति वाक्यकारोक्तेः शातभिष इत्यपि । अश्वयुक् आश्वयुजः । एवं चतुर्नक्षत्रसंबन्धिनामसिद्धिः । शेषेषु उक्तान्यनक्षत्रप्रकृतिकनामसु न वृद्धिः । 'श्रविष्ठाफल्गुन्यनुराधा' (पा. सू. ४।३।३४) इत्यादिसूत्रे तद्धितलुको नियमात् 'लुक् तद्धितलुकि' (पा. सू. १।२।४९) इति श्रविष्ठाफल्गुन्यादौ स्त्रीप्रत्ययनिवृत्त्या च श्रविष्ठः, फल्गुनः, अनुराधः, तिष्यः, आश्लेषः, हस्तः, विशाखः, अषाढः, कृत्तिकः, बहुल इति वेति एकादशसंबन्धिनामसिद्धिः । आर्म्वोः आर्द्रामूलयोरन्त्यस्वरः ककारात् परो भवति । रेफग्रहणम् आश्लेषाग्रहणमाकारेण मा भूदिति । आर्द्रकः मूलक इति । स्वाप्वोः स्वातीपुनर्वस्वोरन्त्यस्वरः सविसर्गो ज्ञेयः स्वातिः पुनर्वसुरिति । केषांचित् स्वातीति सदीर्घपाठात् पुनर्वस्वोर्द्वित्वेन च पुनर्वसू इति दीर्घत्वप्रसक्तेरदीर्घत्वमुक्तम् । पूर्वैः सह इमानि चत्वारि । सप्तविंशतिनक्षत्रसंबन्धिनाम्नामेवं सिद्धिः । तैत्तिरीयैः नक्षत्रेष्टिषु अभिजितः पृथगाम्नातत्वेऽपि, पाणिनिना 'वत्सशालाभिजिदश्वयुक्' (पा. सू. ४।३।३६) इति तत्प्रकृतिकयोः 'अभिजित्, आभिजितः' इति नाम्नोरनुशिष्टयोरपि श्लोके तयोर्नाऽऽदरः स तस्य नक्षत्रान्तरेऽन्तर्भावात् तन्नाम्नैव व्यवहारसौकर्यादिति बोध्यम् । आदृतं तु 'आभिजितः' इति नाक्षत्रनाम मातृदत्तेनेति तत्स्वीकारेऽपि न बाधकम् ।

$ संकौ. १०२–१०३

## पद्धतिरत्ने

स्त्रीणां मासनामानि

'मार्गशीर्षे च वाग्देवी ततः पद्मावती भवेत् ।
श्रीदेवी चापि सावित्री भूमिः कल्याणकी तथा ॥
सत्यभामा पुण्यवती इन्द्राणीन्दुमती तथा ।
चन्द्रामृता च लक्ष्मीश्च मासनामानि च स्त्रियः ॥

---

(१) विपा. ३१०.

(२) सिन्धु. ९०८–९०९; संकौ. १०२ ठात्पे (ष्ठात्पे) ; संर. ८५७.

$ संर. संकौवत् । कृम. संकौगतम् ।

(१) संग. ५६४.

## मुहूर्तगणपतौ

नामकरणकालः

[1]एकादशेऽह्नि नामोक्तं द्वादशे वा यथाविधि ॥

## शाकलकारिकाः

नामकरणकालः, कर्तृविचारः, मासनामानि, पितृदत्तनाम–जन्मनाम–मासनाम्नां विनियोगः

[2]नामकर्म द्विजः कुर्याज्जननाद्द्वादशेऽहनि ।
कर्त्रभावेऽथवाऽन्येन कारयेत्तद्विधानतः ॥

पिता पितामहश्चैव भ्राता वाऽपि पितृव्यकः ।
मातुलाचार्यगुरवः कर्मण्यस्मिन् विवक्षिताः ॥

अन्यो यः कश्चन कर्ता पितृस्थाने भवेद्यदि ।
शिशोः पितृपितृभ्यस्तु दत्त्वा कर्म समाचरेत् ॥

मार्गशीर्ष(? र्षे) समारभ्य निर्देशा(? दिशे)-
न्नाम वै शिशोः ।
कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ
जनार्दनः ॥

उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥

पित्रा दत्तं तु यन्नाम भवेत्सांव्यावहारिकम् ।
विवाहे जन्मनाम स्यान्मासनाम्नाऽभिवादयेत् ॥

## शौनककारिकाः

नामकरणकालः, लक्षणयुक्तं पितामहादिनिष्ठं वा एकं नाम, द्वितीयमभिवादनीयं रहस्यं नाम, स्त्रीणाममन्त्रकं नामकरणम्

[3]शिशोर्नामाथ पित्रादिर्दशमे द्वादशेऽपि वा ।
कुर्याद्यद्वा गुणैर्युक्ते नक्षत्रेऽनुगुणे शिशोः ॥

[4]नाम घोषवदादित्वाद्युक्तलक्षणसंयुतम् ।
पुण्ये मुहूर्ते बालस्य विधेयं वेदपारगैः ॥

[5]येन नाम्नोपनीतोऽसौ करिष्यत्यभिवादनम् ॥

[6]तस्मिन्नेव समये कर्ताऽसौ नामकर्मणः ।
अभिवादननामेदमस्येत्यालोच्य चेतसा ॥

[7]उपांशु निर्दिशेच्चैतन्न जानीयुर्यथा परे ।
तच्च नामोपनयनात् स्मरेतां पितरौ शिशोः ॥

अभिवादनीयं च नाक्षत्रमेव, पूर्वोदाहृतबौधायनवचनात् । तच्च व्यावहारिकोत्तरं कार्यमिति यद्यप्याश्वलायनीयपाठक्रमादवगम्यते, यद्यपि पारिजाते प्रयोगकालेऽयमेव क्रमोऽनुसृतः, तथाऽपि सूक्तवाके देवत्रातेन नाक्षत्रोत्तरं व्यावहारिकविनियोगकथनात्तदुदाहृततत्साधकन्यायसहकृतवृद्धाचारवशाच्च विपरीतक्रमो मयोदाहृतो नामकर्मणि । व्यावहारिकस्यैव शर्मान्तत्वे स्मृतिसिद्धेऽपि अभिवादने नाक्षत्रस्य तदन्तत्वं वाचनिकमिति । संको. १०५

[8]कुमार्याश्चेदमखिलं कर्म कुर्यादमन्त्रकम् ॥
[9]पुंसां युग्माक्षरं नाम स्यात्स्त्रीणामयुजाक्षरम् ।
यत्किंचिद्वाऽथ पित्रादेर्नाम दद्याद्यथेष्टतः ॥

---

(१) संव. ६१.

(२) शाका. ८–१०, १३–१४, १७ पृ. १–२.

(३) शौका. १ पृ. ३८ नामाथ ( नामाद्य ) त्रेऽनुगुणे ( त्रे तु गुणैः ) ; प्रपा. १६५ ऽपि ( ऽह्नि ) त्रेऽनु ( त्रे सु ) ; संप्र. २४५ ऽपि ( ऽह्नि ) र्युक्ते न (र्युक्तेन) ; संको. १०४.

(४) शौका. ३ पृ. ३८ ; प्रपा. १६५.

(५) शौका. ८ पृ. ३८ ष्यत्य ( ष्यन्न ) ; प्रपा. १६५ ; संप्र. २३८ ; संग. ५५८.

(६) शौका. ९ पृ. ३८ ; प्रपा. १६५ च्य चेतसा ( च्यते सदा ) ; संप्र. २३८ ; संको. १०५ उत्त. ; संग. ५५८.

(७) शौका. १० पृ. ३८ नामो ( नामौ ) ; प्रपा. १६५ नयनात् ( नयने ) ; संप्र. २३८ नामोपनयनात् ( नामौपनयनं ) ; संको. १०५ युर्यथा परे ( युः परे यथा ) पू. ; संग. ५५८ परे ( ऽपरे ) शेषं संप्रवत्.

(८) शौका. १३ पृ. ३८ ; प्रपा. १६६ ; संप्र. २४४ ; संग. ५६२ कर्म ( नाम ).

(९) शौका. १४ पृ. ३८–३९ ; प्रपा. १६६ युजा ( युग ) ; संप्र. २४४ युजा (युगा) पू. ; संग. ५६३ पू.

## कुमारिलकारिकाः

नामकरणकालः, स्त्रीपुंसनामस्वरूपम्, अभिवाद-नीयनाम्नो रहस्यत्वम्

[1]अनन्तरं दशम्यादौ यद्वा नामकृतिर्भवेत्।
द्वादश्यां नामकरणं नान्दीश्राद्धे कृते सति ॥

अनन्तरं जातकर्मानन्तरं वेत्यर्थः। प्रपा. १६५

[2]पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम्।
पक्षो घोषवदित्यादिरेवकारादनाहतः ॥

एवकारात् 'युग्मानि त्वेव पुंसाम्' इति सूत्रस्थात् ‡ घोषवदादिपक्षः स्त्रीणां नास्तीत्यर्थः। § संप्र. २४४

[3]नामाभिवादनीयं तु पित्रोर्ह्योपनीतितः ॥

कुर्यादिति शेषः। प्रपा. १६५

## रेणुकारिकाः

नामकरणकालः, नामस्वरूपम्, शर्माद्युपपदानि, पितामहादिनाम कुलदेवतानाम नक्षत्रनाम वा कर्तव्यम्, नामकरणकर्ता, स्त्रीनामस्वरूपम्, नक्षत्राक्षरनिर्णयः

[4]ततस्तु नाम कुर्वीत पितैव दशमेऽहनि ॥

[1]एकादशे द्वादशे वा मासे पूर्णेऽथवा परे ॥

[2]अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः।
शतरात्रे व्यतीते वा पूर्णे संवत्सरेऽथवा ॥

[3]तत्र घोषवदाद्यन्तरन्तस्थं चतुरक्षरम्।
द्व्यक्षरं कृत्प्रत्ययान्तं विसर्गान्तं न तद्धितम् ॥

[4]शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम्।
वैश्यस्य गुप्तसंयुक्तं पदान्येतान्यनन्तरम् ॥

शर्मरक्षापुष्टयः स्युर्मनुराह पदानि वा।
शर्मा देवश्च विप्राणां वर्मा त्राता च भूभुजाम् ॥

भूतिर्दत्तश्च वैश्यानां पदान्याह स्वयं यमः।
पितुर्ग्रहणादन्यत्रानियमोऽस्येह गम्यते ॥

[5]अन्यस्मिन्नपि संस्कारे तथैवोत्सर्गतः क्रिया।
पैतामहं वा नाम स्यान्मातामहमथापि वा ॥

पितामहो देवतानामप्युपलक्षणम्। संग. ५६१

[1]कुलस्य देवता या वा धिष्ण्यसंबन्धि वा भवेत्।
एतत् पितुरभावेऽन्यः कुलवृद्धोऽपि कारयेत् ॥

आकारान्तं स्त्रियो नाम तद्धितं वियुजाक्षरम्।
इ(? ई)कारान्तं तु शङ्खोक्त्या तत्कृते स्यात्कुलं शुचि ॥

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।
माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥

---

‡ 'अयुजानि स्त्रीणाम्' इत्युत्तरसूत्रेऽनुवृत्तादिति शेषः। तेन पुंनामविषयकसूत्रस्थादेवकारात् स्त्रीणां घोषवदादिपक्षो नास्तीति यथाश्रुतग्रन्थे प्रतीयमाना निसंगतिर्नास्ति। अत एवाग्रे 'स्त्रीणाम्' इत्युक्तिरपि स्त्रीनामकरणप्रकरणाभिप्रायेणैव, न तु पुरुषव्यावृत्त्यभिप्रायेण। एवं स्त्रीपुंसयोरुभयोरपि घोषवदादिपक्षो नास्तीति कारिकास्वरसेनापि न विरोधः।

§ संग. संप्रगतम्।

(१) कुका. १।९।१; प्रपा. १६४–१६५ नामकृ (नाम्नः कृ) सति (भवेत्) पूर्वोत्तरार्धे व्यत्यासेन पठिते; धप्र. ३७ सति (भवेत्) उत्त.

(२) कुका. १।९।२ दनाहृ (दिनाऽऽहृ); प्रपा. १६५; धप्र. ३७ पू.; संप्र. २४४; संग. ५६३ कारिका.

(३) कुका. १।९।३; प्रपा. १६५ तु (च) चतुर्थपादे (गुप्तमा मौञ्जिबन्धनात्).

(४) रेका. १ पू. १२.

(१) रेका. २ पू. १२; गभा. १७२.

(२) रेका. ३ पू. १२; गभा. १७२.

(३) रेका. ४ पू. १२; संग. ५६१ न्तं न त (न्तमत).

(४) रेका. ५–७ पू. १२–१३.

(५) रेका. ८ पू. १३; संग. ५६१ पैतामहं वा (पितामहं च) उत्त.

(१) रेका. ९–१८ पू. १३.

तदक्षरादिकं नाम यस्मिन् धिष्ण्ये यदक्षरम्।
शंकरोक्तागमादेस्तदुपायं कथयाम्यहम् ॥

आभ्यामश्वियुगे जाता भरणी कृत्तिका पुनः।
लिपित्रया(द्) रोहिणी च तत्परस्माच्चतुष्ट-
याद् ॥

पादतो मृगशीर्षार्द्रे तदन्त्याभ्यां पुनर्वसुः।
क्रमशः केवलौ योगो रेवत्यर्धे पृथङ्मतः ॥

कतस्तिष्यस्तथाऽऽश्लेषा खगयोर्घङयोर्मघा।
चतः पूर्वाश्च(? पूर्वा तु) छजयोरुत्तरा झञयो-
स्तथा ॥

हस्तश्चित्रा तु टठयोः स्वाती डादक्षरादभूत्।
विशाखास्तु ढणोत्पन्नास्तथदेभ्योऽनुराधका ॥
ज्येष्ठा धकारान्मूलाख्यो नपफेभ्यो बतस्तथा।
पूर्वाषाढा भतोऽन्याऽथ संजाता श्रवणो मतः ॥
धनिष्ठा द्वापरा(? च यरा)श्चैव तथा शतभिष-
ग्लतः।
वशयोः प्रोष्ठपत्संज्ञाः षसहेभ्यः पराः स्मृताः ॥

# नामकरणमुहूर्तः

## आश्वलायनगृह्यपरिशिष्टम्

नामकरणे नक्षत्रम्

(१) एके जन्मन्येकादशे चैव नक्षत्रे ॥

## जैमिनिगृह्यसूत्रम्

नामकरणे पक्षः नक्षत्रं च

(२) अथातो नामकर्म । पूर्वपक्षे पुण्ये नक्षत्रे ॥

## वैखानसगृह्यसूत्रम्

नामकरणे नक्षत्रम्

(३) अथ नामकरणम् । § तत्रैव शुभे पुंनाम्नि नक्षत्रे ॥

## वसिष्ठः

नामकरणे दिवसभागाः, नक्षत्राणि, तिथयः, ग्रहसंस्थानम्, लग्न–नवांशादि

(४) पूर्वाह्णे चैव मध्याह्ने कुर्यादेवं विचक्षणः ।
अपराह्णे च रात्रौ च नामकर्म विवर्जयेत् ॥
(५) उत्तरारेवतीहस्तमूलपुष्याः सवारुणाः ।
श्रवणादितिमैत्रं च स्वाती मृगशिरस्तथा ।
प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि ॥
(६) पक्षच्छिद्रां च नवमीं पञ्चमीं चैव वर्जयेत् ।
शेषास्तु तिथयः सर्वाः प्रशस्ता नामकर्मणि ॥
(७) स्वपुत्रायभ्रातृपत्नीनवमस्थाः शुभग्रहाः ।
पापाखिलाभषष्ठस्था नामकर्मणि पूजिताः ।
व्ययवर्ज्याः शुभाः सौम्याः प्रयच्छन्ति महद्यशः ॥

§ तच्छब्देन 'दशमे द्वादशे वाऽह्नि भवत्युत्थानम्' इति पूर्वखण्डोक्तस्योत्थानकालस्य परामर्शः ।

(१) संको. १०१. (२) जैगृ. १।९.
(३) वैगृ. ३।१९.
(४) संप्र. २३६ ज्योतिर्वसिष्ठः .
(५) सिन्धु. ९०९ ; बाल. १।११–१२ पृ. २८ ; पुम. ४३४ पुष्याः ( तिष्याः ) मैत्रं ( मैत्रे ).
(६) पुम. ४३४. (७) संप्र. २३६ ज्योतिर्वसिष्ठः .

(१) बुधेन्दुसितजीवानामंशके दिवसोदये ।
द्रेष्काणे कालहोरायां नामकर्म प्रशस्यते ॥

षष्ठयन्तस्य सप्तम्यन्तेषु प्रत्येकं समन्वयः । अंशकः नवांशो राशेः । उदयः लग्नम् । द्रेष्काणः राशेस्तृतीयांशः । कालहोरा वारप्रवृत्तिमारभ्याहोरात्रसंबन्धिनो भागभेदाः । दिवसोदय इत्येकवद्भावः । ततश्चत्वारो वासराः प्रशस्ता इत्यर्थः ।

† संको. १०१

## मनुः

नामकरणे पुण्यतिथिमुहूर्तनक्षत्राणि

(२) पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥

(१) यदि दशमीद्वादश्यौ वक्ष्यमाणगुणयुक्ते भवतः तदा तयोः कर्तव्यम् । अथ न, तदाऽन्यस्मिन्नपि पुण्येऽहनि । पुण्यान्यहानि द्वितीयापञ्चम्यादीनि । पुण्यं प्रशस्तम् । नवमीचतुर्दश्यादयो रिक्तास्तिथयः अपुण्याः । मुहूर्तः लग्नं कुम्भादि । तस्मिन् पुण्ये पापग्रहैरनधिष्ठिते गुरुभ्यां च दृश्यमाने । लग्नशुद्धिर्ज्योतिषादवगम्यते । नक्षत्रे च गुणयुक्ते । नक्षत्रं श्रविष्ठादि तद्यस्मिन्नहनि गुणयुक्तं भवति । नक्षत्रगुणा( ? ण)श्च क्रूरग्रहपापग्रहविष्टिव्यतीपातविवर्जित( त्व )म् । वाशब्दः समुच्चये । तेन प्रशस्तायां तिथौ नक्षत्रे च शुद्धे लग्न इत्युपदिष्टं भवति । समुच्चयश्च ज्योतिषाऽवगम्यः । अयं च

† संर. संकोवत् ।

(१) प्रपा. १६४ द्रेष्का ( द्रेका ) ; संप्र. २३५ प्रपावत् ; संको. १०१ प्रपावत् ; संग. ५५६ द्रेष्का ( द्रेः-का ) ; संर. ८५१.

(२) मस्मृ. २।३० ; स्मच. ८८ ; स्मृच. २० ; पमा. ४४० ; मपा. ३५५ ; प्रपा. १६३ ते वा ( ते च ) आदर्शवदपि पाठः, १६५ ; संसौ. ५४ ते वा ( ते च ) ; वीमि. १।१२ ; संप्र. २३३ ; मुक्ता. ८१ ; संम. १६ ; संको. १०१ ; सस्मृ. ३१ संसौवत् : ५१ पुण्ये ( पूर्णे ) ; संर. ८५० ; संबी. २३२ ( भागः २ ).

परमार्थः — दशमीद्वादशीभ्यामर्वाक् न कर्तव्यम्, उत्तरकालं च यदहर्नक्षत्रं लग्नं परिशुद्धं तदहरेव कर्तव्यम्। § मेधा.

(२) पुण्ये तिथौ, न रिक्तायाम्। मुहूर्ते गुणान्विते अभिजिदादौ। ब्रक. ८८

(३) पुण्ये मङ्गलयोगे वा यत्र क्वापि तिथौ तादृशे वा मुहूर्ते लग्ने नक्षत्रमात्रे वा ज्योतिषोक्तगुणवतीति पक्षत्रयं पूर्वोक्तपक्षद्वयासंभवे। मवि.

(४) ततश्च द्वादशदिनान्तकालेषु न पुण्यतिथिनक्षत्रचन्द्रानुकूल्यादिगुणादरः, तुल्यन्यायात्। तथा क्षत्रियादेर्विशिष्यविहिते त्रयोदशादिदिनेऽपि न तदादरः कार्य इत्युत्तरार्धगतैकवाशब्दस्यार्थः। ततश्च कालान्तरेषु तदादरौचित्यं ध्वन्यते। द्वितीयवाशब्देन तु गुणान्वितं नक्षत्रमपि स्वतन्त्रः काल इति ज्ञाप्यते। अत एव ब्राह्मणादेर्दशमैकादशद्वादशदिनेषु कुर्वतः क्षत्रियादेश्च त्रयोदशादौ न मलमासगुरुशुक्रमौढ्यादिनिषेधादरोऽपि। † संको. १०१

## नारदः

मुख्यकालातिक्रमे नामकरणे मुहूर्तापेक्षा, तत्र गुरुशुक्रयोरुदयः नक्षत्रवारचन्द्रबललग्नतन्नवांशाः, शुभाशुभमुहूर्तयोः शुभाशुभफले, दिवैव कर्तव्यता

[१]देशकालोपघाताद्यैः कालातिक्रमणं यदि।
अनस्तगे भृगावीज्ये( ? विज्ये ) तत्कार्यं चोत्तरायणे॥

§ ममु., भाच. मेधागतम्।

† संर. संकोगतम्।

(१) ज्योना. २०१२; संप्र. २३५ गे भृगावीज्ये (गेज्ये च सिते); सिन्धु. ८४८ गे भृगावीज्ये (गेज्येन्दुसिते); विपा. २६९ तृतीयपादे (अनन्तगेज्येन्दुसिते); ज्योनि. ११२; संग. ५५६; पुम. ४३४ संप्रवत्; कुम. ९०५ भृगावीज्य (इज्यसिते); संर. ८५१ संप्रवत्.

[२]चरस्थिरमृदुक्षिप्रनक्षत्रे शुभवासरे।
चन्द्रताराबलोपेते दिवसे च शिशोः पितुः॥
[३]शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते।
लग्ने त्वनैधने सौम्यैः संयुते वा निरीक्षिते॥
[४]प्रातःकाले त्वतिक्रान्ते नाम स्याच्छास्त्रचोदिते॥
[५]शुभनक्षत्रयोगेषु शुभेषु शुभमीरितम्।
अशुभेष्वशुभं विद्यान्नामकर्मणि मानुषे॥
[६]नराणां सवनं पुंसः सीमन्तः कर्णवेधनम्।
नामकर्मक्रिया चौलं विद्यारम्भोपनायने।
दिवा कार्याणि चान्यानि कर्तव्यानि दिवैव हि॥

## बृहस्पतिः

नामकरणे नक्षत्र-लग्न-नवांश-वार-षड्वर्ग-राशि-ग्रहसंस्थान-दिवसभागाः

[७]त्र्युत्तरासु धनिष्ठायां रेवतीहस्तयोरपि।
मूलवारुणपुष्येषु श्रवणादित्ययोरपि॥
[८]मैत्रवाजिभयोः स्वातिरोहिण्यैन्दवभेषु च।
कुर्यान्नामक्रियां विद्वानायुःश्रीकीर्तिवृद्धये॥
[९]शुभांशे शुभवीक्षायां शुभक्षेत्रे शुभोदये।
शुभवारे च षड्वर्गे शुभानां नाम संपदे॥

(१) ज्योना. २०१३ पितुः (पिता); ज्योनि. ११२ से च (सेऽपि); पुम. ४३४.

(२) ज्योना. २०१४ तृतीयपादे (लग्नेऽन्यत्नैधने सौम्ये); ज्योनि. ११२ नृसिंहः; पुम. ४३४ युते वा (युक्तं वा).

(३) प्रपा. १६३.

(४) प्रपा. १६४.

(५) प्रपा. २००; संप्र. ३११ मन्तः (मन्तं).

(६) प्रपा. १६३ धनि (श्रवि) श्रवणा (श्रविष्ठा); संप्र. २३५; संग. ५५६.

(७) प्रपा. १६३ कीर्ति (कान्ति); संप्र. २३६; संग. ५५६ स्वाति (स्वाती).

(८) प्रपा. १६३; संप्र. २३५ उत्त.; ज्योनि. ११२ उत्त.

[1]राशयश्च स्थिराः श्रेष्ठा द्विस्वभावाः शुभैर्युताः ।
श्रेष्ठा नेष्टास्तथा शेषा यद्यप्युक्तशुभैर्युताः ॥

[2]स्वोच्चस्वषड्वर्गयुतग्रहाणां
लग्नेऽथवा वीक्षितयुक्तराशौ ।
शुभग्रहाणां च विशेषतश्च
नामानुकीर्तिं शुभदां वदन्ति ॥

[3]अष्टमे तु ग्रहाः सर्वे नेष्टास्ते नामकर्मणि ।
धनकर्मसुतभ्रातृनवमस्थः शुभः शशी ॥
शुद्धे व्ययाष्टमे लग्ने पापाश्च त्रिषडायगाः ।
शुभेषु शेषसंस्थेषु नामकर्म शुभावहम् ॥

[4]पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः ।
अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ॥

## यमः

नामकरणे पुण्यनक्षत्रदिवसमुहूर्ताः

[5]पुण्ये नक्षत्रदिवसे मुहूर्ते वा गुणान्विते ॥

पुण्ये नक्षत्रे पुण्ये वाऽहनि प्रशस्ते वा मुहूर्ते इत्यर्थः ।
स्मृच. २०

## गर्गः

गुरुशुक्रयोरस्तबाल्यवृद्धत्वेषु मलमासे च नामकरणनिषेधः, मुख्यकालातिक्रमे मुहूर्तापेक्षा, तत्र त्याज्यतिथिवारयोगकरणानि, ग्राह्यनक्षत्रग्रहसंस्थानादि

†[6]नामान्नप्राशनं चौडं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम् ॥
अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥

[1]नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे ॥

नामकर्मग्रहणं नित्यनैमित्तिकस्मार्तकर्मोपलक्षणम्, दर्शेष्टिग्रहणं नित्यनैमित्तिकश्रौतकर्मोपलक्षणमिति प्रयोगपारिजातहेमाद्र्यादयः ।
६२६

नामकर्मेत्युपलक्षणमितरसंस्काराणाम् । संर. ८३४

[2]सायाह्ने दुष्टयोगे च शनिभूमिजवारयोः ।
रिक्ता पर्वाष्टमी विष्टिः किंस्तुघ्नं तु विशेषतः ।
एतैर्दोषैर्युते काले रात्रावपि न कारयेत् ॥

[3]उत्तरा रेवती पुष्यो हस्तो मूलं च वारुणम् ।
श्रवणादितिमैत्रं च स्वाती मृगशिरस्तथा ।
प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि ॥

स्वपुत्रायभ्रातृपत्नीनवमस्थाः शुभग्रहाः ।
पापास्त्रिलाभषष्ठस्था नामकर्मणि पूजिताः ॥

शुभे योगे सुकरणे चन्द्रताराबले दिने ।
शुभोदये नाम कुर्याच्चिरंजीवी भवेच्छिशुः ॥
भास्करार्कजवाराणां वर्जयेदंशकोदयान् ॥

[4]ऋक्षे तिष्यकराश्विसौम्यवसुभे
चित्रानुराधोत्तरे
पौष्णे चादितिरोहिणीषु शुभकृत्... ॥

---

† अनयोर्व्याख्यानं जातकर्मविधिप्रकरणे 'श्राद्धजातकनामानि' इति स्मृत्यन्तरवचने ( सं. का. पृ. २६४६ ) द्रष्टव्यम् ।

(१) प्रपा. १६३ ; ज्योनि. ११२ पू.

(२) प्रपा. १६३. (३) संप्र. २३६ ; संग. ५५६.

(४) प्रपा. १६३ मुहूर्तसंग्रहे ; संसौ. ५५ ; संप्र. २३६ ; संम. १७ ; ज्योनि. ११२ ; संको. १०१ मुहूर्तसंग्रहे ; संग. ५५६–५५७ ; कुम. ९०५ ; संर. ८५१.

(५) स्मृच. २० ; चका. ७३८ ( पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ ) ; मुक्ता. ८१ ; कुम. ९०५ चकावत्. (६) संत. ८८५.

(१) प्रपा. ४१० ; गभा. १३३ ; संत. ८८५ दर्शेष्टिं ( जातं च ) ते सति तयोः ( तेऽपि कुर्वीत ) ण्यभे ( ण्यदे ) ; प्रर. ३६ ; संग. ३८५ ; संर. ६२६ : ८३४ (=).

(२) प्रपा. १६३ द्वितीयार्धे ( रिक्तापर्वाष्टमीविष्टिकिंस्तुघ्नेषु विशेषतः । ) ज्योतिर्नृसिंहः ; संसौ. ५६ वारयोः ( वासरे ) रात्राव ( रात्रौ चा ) ; ज्योनि. ११२ तु ( च ) नृसिंहः .

(३) संसौ. ५६.

(४) संत. ९१९.

## आश्वलायनः

नामकरणे मानुषमासः

[1]गर्भाधाने पुंसवने सीमन्ते नामकर्मणि ।
संग्राह्यो मानुषो मासो रुद्राऽऽशौचविधावपि ॥

## कश्यपः

नामकरणे कालातिक्रमे मुहूर्तापेक्षा, तत्र गुरुशुक्रयोरस्त-वार्धके त्याज्ये, लग्न–नवांश–तिथि–वारादि शुभं ग्राह्यम्

[2]उक्तकाले प्रकर्तव्या द्विजानामखिलाः क्रियाः ।
अतीतेषु तु कालेषु कर्तव्याश्चोत्तरायणे ॥

[3]सुरेज्येऽप्यसुरेज्ये वा नास्तगे न च वार्धके ।
शुभलग्ने शुभांशे च शुभेऽह्नि शुभवासरे ॥

चन्द्रताराबलोपेते नैधनादपवर्जिते ॥

## भविष्यपुराणम्

नामकरणे पुण्यानि तिथिमुहूर्तनक्षत्राणि ग्राह्याणि

पुण्ये तिथौ मुहूर्ते च नक्षत्रे च गुणान्विते ॥

## नृसिंहः

नामकरणे त्याज्यानि तिथिकरणग्रहसंस्थानानि

[4]छिद्राख्यां पर्व नवमीं हित्वा शेषाः शुभावहाः ।
शकुन्यादीनि विष्टिं च नामकर्मणि वर्जयेत् ॥

( १ ) चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दश्यः छिद्राः । एताश्च पञ्चदशीं नवमीं च सप्त तिथीर्विहाय शेषास्तिथयो नामकर्मणि विहिताः ।　　२३५

आदिशब्दाच्चतुष्पन्नागकिंस्तुघ्नानां ग्रहणम् ।
　　संप्र. २३६

( २ ) चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दश्यः छिद्राः द्वे पर्वणी नवमी चेत्यष्टौ तिथीर्विहाय शेषास्तिथयो नामकर्मणि शस्ता इत्यर्थः ।　　¶ संकौ. १०१

[1]शुभनक्षत्रवारेषु शुभेषु शुभमीरितम् ॥

[2]लग्नाद्व्ययेऽष्टमे सर्वे न शुभा नामकर्मणि ।
केन्द्रत्रिकोणगाः सौम्या व्यये सर्वेऽप्यशोभनाः ॥

## माधवीये

रात्रौ नामकरणनिषेधः

[3]कृषिं बीजवापं नरेन्द्राभिषेकं
सविद्या गृहारम्भदेवप्रतिष्ठा ।
क्रियाः सप्त चौलादिका नामधेय-
क्रियां च क्षपायां न कुर्वन्ति सन्तः ॥

## विधिरत्ने

नामकरणे नक्षत्राणि

[4]आदित्यतिष्यश्रवणश्रविष्ठाः
पूषा विरिञ्चिः पवनोऽपि मित्रः ।
हस्तो मघाद्यो वरुणश्च मूलं
त्रीण्युत्तराण्याहुरुडूनि नाम्नि ॥

## श्रीधरः

नामकरणे ग्रहसंस्थान–लग्न–नवांश–तिथि–वार–नक्षत्राणि

[5]स्वोच्चमित्रभवनेषु सद्ग्रहै-
स्ताहशैर्यदि विलोकिताः शुभाः ॥

---

(१) आश्वस्मृ. ३।५६–५७.
(२) संम. १७.
(३) अप. १।११–१३ पृ. २६ ; ब्रक. ८८ च ( वा ) ; स्मृसा. २ तें च ( तें वा ).
(४) प्रपा. १६४ ख्यां ( ख्याः ) ; संप्र. २३५ पू. : २३६ उत्त. ; ज्योनि. ११२ छिद्राख्यां पर्व ( छिद्रां पूर्णिमां ) ; संकौ. १०१ पू. ; संर. ८५१ प्रपावत्, पू.

¶ संर. संकौवत् ।
(१) ज्योनि. ११२.
(२) प्रपा. १६४ न शुभा ( अशुभा ) ; संप्र. २३६ लग्नाद्व्ययेऽष्टमे ( लग्नद्व्यष्टमके ) सर्वेऽप्य ( सर्वे त्व ) ; ज्योनि. ११२ येऽष्ट ( याष्ट ) सर्वेऽप्य ( सर्वे त्व ).
(३) प्रपा. २०१.
(४) प्रपा. १६३ ; संकौ. १०१ ( = ) चतुर्थपादमात्रम् .
(५) प्रपा. १६३.

अथोत्तरार्धे लग्नगोचराणि लग्नविधिश्चोच्यते– स्वोच्च-मित्रेति। उत्तरश्लोके 'राशौ स्थिरे चोभये' इति वक्ष्यमाणस्वोच्चमित्रभवनगताः शुभग्रहाः स्वोच्चमित्रभवन-गतैः शुभग्रहैर्निरीक्षिताः राशेश्च स्थिराख्यराशेश्च नाम-कर्मणि शुभप्रदाः। प्रपा. १६३

[1]मित्रादित्यमघोत्तराशतभिषक्-
स्वातीधनिष्ठाच्युत-
प्राजेशाश्विशशाङ्कपौष्णदिनकृ-
त्पुष्येषु राशौ स्थिरे।
छिद्रां पञ्चदशीं विहाय नवमीं
शुद्धेऽष्टमे भार्गव-
ज्ञाचार्यामृतपादभागदिवसे
नामानि कुर्याच्छिशोः॥

(१) मित्रः अनूराधा। आदित्यः पुनर्वसुः। अच्युतः श्रवणः। प्राजेशः रोहिणी। शशाङ्कः मृगशिरः। दिनकृत् हस्तः। शेषाणि प्रसिद्धानि। एषु नक्षत्रेषु शिशोर्नामानि कुर्यात् इति संबध्यते। राशौ स्थिरे वृषभसिंहवृश्चिककुम्भेषु। अथ तिथिनिर्णयः– छिद्रा-मित्यादि। चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दश्यः छिद्राः। एताश्च पञ्चदशीं नवमीं चेति सप्त तिथीन् विहाय शेषास्तिथयो नामकर्मणि विहिताः। अथ लग्नगोचरमाह– शुद्धेऽष्टम इति। लग्नादष्टमे ग्रहरहिते इत्यर्थः। अथ वारांशकविधिमाह– भार्गवेत्यादि। भार्गवः शुक्रः। ज्ञः बुधः। आचार्यः बृहस्पतिः। अमृतपादः शशी। एषां चतुर्णामंशकेषु दिवसेषु (च) नामकर्म कार्यम्। अत्र शिशोरिति (नामादीनां ?) देवालयग्रामादीनामुपलक्षणम्। प्रपा. १६३–१६४

(२) उत्तरेत्युत्तरात्रयं गृह्यते, 'त्रीण्युत्तराण्याहुरु-डूनि नाम्नि' इति शाखान्तरसंवादात्। अश्वीत्यश्विनी। राशौ स्थिरे वृषसिंहवृश्चिककुम्भलग्नेषु। तेभ्य एवा-ष्टमस्थाने(शुद्धे।)अरिष्टसूचकग्रहानाक्रमणं शुद्धत्वम्। भागदिवसमित्येकवद्भावः। नामानीति बहुवचनम् एकस्य शिशोर्बहूनि नामानि कार्याणीति ज्ञापनार्थम्।

§ संकौ. १०१–१०२

(३) शतभिषक् शततारकाः। * संर. ८५२

‡ [2]मृदुध्रुवचरक्षिप्रभेष्वेषामुदयेषु च।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च॥

## महेश्वरः

नामकरणे वार–नक्षत्र–ग्रहसंस्थानानि

[3]नक्षत्रैर्वा ध्रुवमृदुचरक्षिप्रसंज्ञैस्तु शुक्रे
केन्द्रस्थे वा सुरपतिगुरौ वासरे
सद्ग्रहाणाम्॥

## कालनिर्णये

ग्राह्याग्राह्यौ वारषड्वर्गौ

[4]शुभवारे च षड्वर्गे शुभानां नाम संपदे।
पापानां वारवर्गाश्च निन्दिता नामकर्मणि॥

## नारायणपद्धतौ

नामकरणे वार–लग्न–ग्रहसंस्थानानि

[5]बालनामकरणं स्थिरलग्ने
केन्द्रपञ्चनवमस्थितसौम्ये।
त्र्यायषष्ठसमधिष्ठितपापे
जीवशुक्रशशिसौम्यदिनेषु॥

## मुहूर्तगणपतौ

मुख्यकालातिक्रमे नामकरणनक्षत्राणि

[6]रेवतीद्वितये पुष्ये पुनर्वस्वनुराधयोः।
श्रवणादित्रिभे हस्तत्रितये रोहिणीमृगे।
त्र्युत्तरे जातकर्माद्यं कालातिक्रमणे विदुः॥

---

(१) प्रपा. १६३; सिन्धु. ९०५; विपा. ३०९; संकौ. १०१ पारिजाते; संब. ६८ (=); संर. ८५२ पारिजाते.

§ शेषं प्रपागतम्। संब. संकौगतम्।

* शेषं प्रपागतं संकौगतं च।

‡ अस्य व्याख्यानानि जातकर्ममुहूर्तप्रकरणे (सं. का. पृ. २६५१) द्रष्टव्यानि।

(१) अस्य स्थलादिनिर्देशः जातकर्ममुहूर्तप्रकरणे (सं.का. पृ. २६५१) द्रष्टव्यः. (२) संसौ. ५५.
(३) प्रपा. १६४; संप्र. २३५ उत्त.
(४) विपा. ३१०. (५) संब. ६१.

## शौनककारिकाः

शुभयोर्नक्षत्रमुहूर्तयोर्नाम कर्तव्यम्

[1]कुर्याद्वा गुणैर्युक्ते नक्षत्रेऽनुगुणे शिशोः ॥
[2]पुण्ये मुहूर्ते बालस्य विधेयं वेदपारगैः ॥

(१) शौका. १ पृ. ३८ शेषस्थलादिनिर्देशा नामकरण-विधिप्रकरणे (सं. का. पृ. २७५४) द्रष्टव्याः .

(२) शौका. ३ पृ. ३८ ; प्रपा. १६५.

## रेणुकारिकाः

नामकरणे मुख्यकालातिक्रमे मुहूर्तापेक्षा

[1]मुख्यकाले यदा नामधेयं कर्तुं न शक्यते ।
उक्तानामन्यतमस्मिन् दिने स्यात्तद्गुणान्विते ॥

(१) रेका. १९ पृ. १३ तमस्मिन् ( तस्तस्मिन् ) ; गमा. १७२ स्यात्तद्गु ( स्यात्तु गु ).

# नामकरणप्रयोगः

## बौधायनगृह्यसूत्रम्

प्राजापत्यहोमः, ब्राह्मणभोजनम्, पुण्याहादिवाचन-मन्त्रेषु नामोच्चारणरूपं नामकरणम्

[1]**प्राजापत्येन सूक्तेन हुत्वा ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयन्नामास्मै दधाति ॥**

## बौधायनगृह्यपरिभाषासूत्रम्

ब्राह्मणभोजनमात्रेण पुण्याहवाचनमात्रेण वा नाम-करणसंस्कारसंपत्तिरिति मतद्वयम्

[2]**नामकरणोपनिष्क्रामणान्नप्राशनानि ब्राह्मण-भोजनादेवैकेषाम् ॥**

**पुण्याहवाचनादेवैकेषाम् ॥**

## बौधायनगृह्यशेषसूत्रम्

ब्राह्मणभोजनम्, पुण्याहवाचनमन्त्रेषु नामोच्चारणम्, प्राजापत्यहोमः, जयप्रभृत्युत्तरतन्त्रम्, ब्राह्मणा-लाभे ज्योतिष्मत्या नामकरणम्

[3]**ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वा देवयजनोल्लेखन-प्रभृत्याऽग्निमुखात्कृत्वा प्राजापत्येन सूक्तेन जुहोति– 'प्रजापते न त्वदेतान्यन्यः' इति षड्भिरनुच्छन्दसम् ॥**

**जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥**

**ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयन्नामास्मै दधाति ॥**

[4]**अथ यदि ब्राह्मणं न विन्देतौपासने ज्योतिष्मत्या पुत्रस्य नाम गृह्णात्युपतिष्ठते वा ॥**

---

(१) **बौगृ.** २।१।२४.

(२) **बौगृप.** १।११।२०–२१.

(३) **बौगृशे.** १।११।२–४.

(४) **बौगृशे.** १।११।१० ; **संप्र.** २३८ ( पुत्रस्य नाम गृह्णात्युपतिष्ठते वा ) एतावदेव ; **संकौ.** १०२

## कौषीतकिगृह्यसूत्रम्

मातृपितृकुमाराणां स्नानमहतवासःपरिधानं च, सूतिकाग्नौ स्थालीपाकः, नामप्रकाशनम्, स्वस्तिवाचनम्, प्रथमवर्षे प्रतिमासं ततः प्रतिसंवत्सरं जन्मतिथौ स्थालीपाकः, नक्षत्रतद्देवतानुक्रमणम्

[1]**दशरात्रे चोत्थानम् ॥**

**मातापितरौ शिरःस्नातावहतवाससौ ॥**

**कुमारश्च ॥**

**एतस्मिन्नेव सूतिकाग्नौ स्थालीपाकं श्रपयित्वा ॥**

**जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि ॥**

[2]**तन्मध्ये जुहुयाद्यस्मिञ्जातः स्यात् । पूर्वं तु दैवतं सर्वत्र ॥**

[3]**'आयुष्टे अद्य गीर्भिरयमग्निर्वरेण्यः । आयुर्नो देहि जीवसे ॥ आयुर्दा अग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमिह रक्षतादिमम् ॥' इति । 'त्वं सोम महे भगम्' इति दशमी स्थालीपाकस्य ॥**

**नामधेयं प्रकाशं कृत्वा ॥**

**ब्राह्मणान् स्वस्ति वाच्य ॥**

**एवमेव मासि मासि जन्मतिथिं हुत्वा ॥**

**ऊर्ध्वं संवत्सराद् गृह्येऽग्नौ जुहोति ॥**

‡[4]**अग्नये कृत्तिकाभ्यः ॥**

---

‡ क्षेपकोऽयं खण्ड इति नारायणभाष्ये ।

( पुत्रस्य नाम गृह्णाति ) एतावदेव ; **बाल.** १।११–१२ पृ. २९ संकौवत् ; **संर.** ८५६ संकौवत्.

(१) **कौगृ.** १।२५।१–५.

(२) **कौगृ.** १।२५।६ ; **संत.** ९१७ ( पूर्वं तु दैवतं सर्वत्र० ) बह्वृचगृह्यम्.

(३) **कौगृ.** १।२५।७–११.

(४) **कौगृ.** १।२६।१–२८.

प्रजापतये रोहिण्यै ॥
सोमाय मृगशिरसे ॥
रुद्रायाऽऽर्द्राभ्यः ॥
अदितये पुनर्वसुभ्याम् ॥
बृहस्पतये पुष्याय ॥
सर्पेभ्योऽश्रेषाभ्यः ॥
पितृभ्यो मघाभ्यः
भगाय फल्गुनीभ्याम् ॥
अर्यम्णे फल्गुनीभ्याम् ॥
सवित्रे हस्ताय ॥
त्वष्ट्रे चित्रायै ॥
वायवे स्वातये ॥
इन्द्राग्निभ्यां विशाखाभ्याम् ॥
मित्रायानुराधायै ॥
इन्द्राय ज्येष्ठायै ॥
निर्ऋत्यै मूलाय ॥
अद्भ्योऽषाढाभ्यः ॥
विश्वेभ्यो देवेभ्योऽषाढाभ्यः ॥
ब्रह्मणेऽभिजिते ॥
विष्णवे श्रवणाय ॥
वसुभ्यो धनिष्ठाभ्यः ॥
वरुणाय शतभिषजे ॥
अजायैकपदे प्रोष्ठपदाभ्यः ॥
अहिर्बुध्न्याय प्रोष्ठपदाभ्यः ॥
पूष्णे रेवत्यै ॥
अश्विभ्यामश्विनीभ्याम् ॥
यमाय भरणीभ्यः ॥

नामकरणं वक्ष्यामः । यस्मिन्नेवाग्नौ जातकर्महोमः कृतस्तस्मिन्नेवेदमपि कर्तव्यम् । अत्र स्तरणाघाराज्यभागा निर्विकल्पाः । ग्रहणमोक्षणानि न कुर्यात् । मातापितरौ कुमारस्य शिरः स्नाप्य (?) अहतवाससौ भूत्वा उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततो यस्यां तिथौ कुमारो जातस्तां तिथिम् 'प्रतिपदे द्वितीयायै तृतीयायै चतुर्थ्यै पञ्चम्यै षष्ठ्यै सप्तम्यै अष्टम्यै नवम्यै दशम्यै एकादश्यै द्वादश्यै त्रयोदश्यै चतुर्दश्यै पौर्णमास्यै अमावास्यायै' अनेन प्रकारेण जन्मतिथिं स्वाहाकारान्तं हुत्वा ततो जन्मनक्षत्रस्य यत् पूर्वं नक्षत्रं तस्य देवतं हुत्वा नक्षत्रं जुहोति । ततो जन्मनक्षत्रस्य देवतं हुत्वा जन्मनक्षत्रं जुहोति । ततो जन्मनक्षत्रस्योपरिष्टात् यन्नक्षत्रं तस्य देवतं हुत्वा तन्नक्षत्रं जुहोति । कथं जुहोतीति वक्ष्यामः— 'अश्विभ्यां स्वाहा, अश्विनीभ्यां स्वाहा । यमाय स्वाहा, भरणीभ्यः स्वाहा । अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा । प्रजापतये स्वाहा, रोहिण्यै स्वाहा । सोमाय स्वाहा, मृगशिरसे स्वाहा । रुद्राय स्वाहा, आर्द्राभ्यः स्वाहा । अदित्यै स्वाहा, पुनर्वसुभ्यां स्वाहा । बृहस्पतये स्वाहा, पुष्याय स्वाहा । सर्पेभ्यः स्वाहा, अश्लेषाभ्यः स्वाहा । पितृभ्यः स्वाहा, मघाभ्यः स्वाहा । भगाय स्वाहा, फल्गुनीभ्यां स्वाहा । अर्यम्णे स्वाहा, फल्गुनीभ्यां स्वाहा । सवित्रे स्वाहा, हस्ताय स्वाहा । त्वष्ट्रे स्वाहा, चित्रायै स्वाहा । वायवे स्वाहा, स्वात्यै स्वाहा । इन्द्राग्निभ्यां स्वाहा, विशाखाभ्यां स्वाहा । मित्राय स्वाहा, अनुराधायै स्वाहा । इन्द्राय स्वाहा, ज्येष्ठायै स्वाहा । निर्ऋत्यै स्वाहा, मूलाय स्वाहा । अद्भ्यः स्वाहा, अषाढाभ्यः स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा, अषाढाभ्यः स्वाहा । विष्णवे स्वाहा, श्रवणाय स्वाहा । वसुभ्यः स्वाहा, धनिष्ठाभ्यः स्वाहा । वरुणाय स्वाहा, शतभिषजे स्वाहा । अजायैकपदे स्वाहा, प्रोष्ठपदाभ्यः स्वाहा । अहिर्बुध्न्याय स्वाहा, प्रोष्ठपदाभ्यः स्वाहा । पूष्णे स्वाहा, रेवत्यै स्वाहा' । एवं जन्मतिथिं नक्षत्रदेवतास्तिस्रः त्रीणि नक्षत्राणि एताः सप्त आहुतीर्हुत्वा ततः 'आयुष्टेऽद्य ... जीवसे स्वाहा । आयुर्दाऽग्ने ... मभिरक्षतादिमं स्वाहा ॥', 'त्वं सोम महे भगम्' इति ऋक् स्वाहाकारान्ता । एवमेता दश आहुतीः स्थालीपाकस्यावदानधर्मेण हुत्वा ततोऽघोषवदाद्येवमादिवर्जितमात्मने यद्रोचते तन्नामधेयं प्रकाशं कृत्वा ब्राह्मणान् स्वस्ति वाच्य स्विष्टकृतं हुत्वा यथोत्साहं दद्यात् । ततो महा-

व्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति । 'एवमेव मासि मासि जन्मतिथिं हुत्वोर्ध्वं संवत्सराद् गृह्येऽग्नौ जुहोति' इति नामकरणस्यैव कर्मशेष उक्तस्तं वक्ष्यामः— अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा तत उक्तेन प्रकारेण कुमारस्य जन्मतिथिमाज्येन हुत्वा ततः पाक्षिकः स्विष्टकृत्, ततो महाव्याहृत्यादितन्त्रशेषं समापनीयमिति । एतत् कर्म मासि जन्मतिथौ तस्मिन्नेवाग्नौ तावत्क्रियते यावत्संवत्सरं पूर्णम् । तत ऊर्ध्वं संवत्सरे आवसथ्याग्नौ तावत् क्रियते यावत् कुमारस्याऽऽत्मीयमावसथ्याधानं जायते । तत आत्मीयावसथ्याग्नौ यावज्जीवं कर्तव्यमिति । कौग्रसं.

## हिरण्यकेशिगृह्यसूत्रम्

मातापुत्रयोः स्नानम्, सूतिकागारस्य शुचीकरणम्, सूतिकाग्निनिर्हरणमौपासनाग्नेराहरणं च, प्रधानहोमः, उपहोमः, ब्राह्मणभोजनम्, पुण्याहादिवाचनम्, नामकरणम्

[1]**द्वादश्यां मातापुत्रौ स्नातः ॥**

**शुच्यगारं कुर्वन्ति ॥**

(१) अथ नामकरणमुच्यते— द्वादश्यामिति । द्वादशे दिवसे । माता च पुत्रश्च मातापुत्रौ इत्येके, तन्न, जातिनिर्देशात् पुंल्लिङ्गस्याविवक्षितत्वात् । दुहितृपुत्रार्थे पुंसवनस्य विद्यमानत्वाद्वा लिङ्गार्थः पुत्रौ स्नात इहानङ्गावदवयवसंख्यानाधिकाराच्च । यद्वा तस्माद्वचनात् एकादश्यामप्यस्याः शौचमिति गम्यते । 'मातापुत्रौ' इति मातुरेवाऽऽशौचपक्षमाश्रित्य प्रदर्श्यते । तेन पिताऽपि स्नाति तत्कुलीनाश्च । यथाविकल्पं वा । शुचि अगारं सूतिकागृहमवशिष्टं च सेचनलेपनसंमार्जनासेचनोपलेपनैः कुर्वन्ति भृत्याः । एवं मरणेऽपि शौचविधिः । मातृवृ.

( २ ) सूतकनिवृत्तिर्द्वादशेऽहन्येव 'द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति' इतिसूत्रेण स्नानागारशुद्ध्यादिकं द्वादशेऽह्नि विदधताऽऽचार्येणैकादशेऽह्न्याशौचसत्त्वबोधनात् । एतच्च मातापुत्रयोः पितुः तत्कुलीनानां च । सूत्रे मातृग्रहणं मातुरेवाऽऽशौचपक्षमाश्रित्येति मातृदत्त आह । वैजयन्तीकारकारिकाकारादयश्चाप्येवमाहुः । वस्तुतस्तु मातापुत्रयोरेव, न तु पित्रादीनाम्, सर्वस्मृत्यविरोधेन व्याख्यानसंभवे तद्विरुद्धस्य 'एकादशेऽह्नि पितुरप्याशौचं तत्कुलीनानां च' इत्येतादृशव्याख्यानस्यायुक्तत्वात् । न चैवं मातुरप्येकादशेऽह्न्याशौचसत्त्वबोधनं सर्वस्मृतिविरुद्धमिति वाच्यम्, सर्वस्मृतिविरुद्धस्यापि मातापुत्रयोरेकादशेऽह्न्याशौचस्य 'द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति' इति स्पष्टार्थकसूत्रप्रतिपादितस्नानागारशुद्धिविधानबललभ्यत्वात् । न च मातापुत्रयोरपि बहुस्मृत्यनुरोधेनैकादश्यामेवाऽऽशौचनिवृत्तिः, स्नानं तु द्वादश्यां पुनरदृष्टार्थं कर्तव्यमिति वाच्यम्, शुद्धिरूपे दृष्टे संभवति अदृष्टकल्पनायोगात्, 'स्नातायां नाम दधाति' इत्यापस्तम्बसूत्राद् दृष्टार्थत्वस्यैव प्रतीतेश्च । न च दृष्टार्थकस्य स्नानस्य स्मृतित एव सिद्धत्वात् विधेर्वैयर्थ्यमिति वाच्यम्, तस्य द्वादशीविधायकत्वेन वैयर्थ्याभावात् । न चैवमेकादशेऽह्नि पितुराशौचस्य निवृत्तत्वेन कर्मण्यधिकृतत्वात् तत्रैव नामकरणानुष्ठानं युक्तमिति वाच्यम्, पितुरधिकारित्वेऽपि सहाधिकारिण्या भार्यायाः संस्कार्यस्य चाशुचित्वेन नामकरणस्यैकादशेऽहन्यनुष्ठानस्यायुक्तत्वात् । जातकर्मणस्तु तथात्वेऽपि निमित्तप्राबल्यादनुष्ठानम् । अतः समन्त्रकस्नानसंपूर्णसंध्यावन्दनादीन्येकादशेऽह्नि पित्रादिभिः कर्तव्यान्येवेति युक्तं प्रतिभाति । स्नात इत्यत्रान्तर्भावितो ¶ णिच् । तेन स्नापयत इत्यर्थः । स्त्रियाविति शेषः । कुर्वन्तीत्यत्र परिकर्मिणः स्त्रियो वेति शेषः । 'द्वादश्यां मातापुत्रौ स्नातः शुच्यगारं कुर्वन्ति' इति सर्ववर्णप्रसूतिकासाधारणम्, सूत्रकृता विशेषानुपदेशात् । अतः क्षत्रियादिप्रसूतिकानामपि द्वादश्यामेव शुद्धिः ।

संर. ८४९

(१) हिगृ. २।१।२६–२७ ; संर. ८४५, ८४९.

¶ णिजर्थ इत्यर्थः ।

**[1]'उपनिर्हरन्ति सूतिकाग्निमतिहरन्त्यौपासनम् ॥**

उपनिर्हरन्तीत्युक्त्याऽर्थादुत्सृजन्ति सूतिकाग्निं प्रयोजनाभावात् संबद्धानि च पात्राणि । अन्येषां च पात्राणां यथोक्तं शौचं कार्यम् । आहरन्त्यौपासनाग्निम् । अतः प्रभृति नित्यानि कर्माणि प्रवर्तन्ते । मातृवृ.

**तमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम्' इति द्वादशाऽऽहुतीर्जुहोति । त्रयोदशेत्येकेषाम् ॥**

तमौपासनमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम्' इत्येवमादि 'या सुपाणिः' इत्येवमन्ता द्वादशाऽऽहुतीर्जुहोति । 'कुहूमहम्' इत्येतया सह त्रयोदश जुहोतीत्येकेषां मतम् । 'उपनिर्हरन्ति सूतिकाग्निमग्निमुपसमाधाय' इत्येव सिद्धे 'अतिहरन्त्यौपासनम्' इति वचनमित ऊर्ध्वं प्रागुपनयनात् प्रजासंस्काराः तेऽपि औपासन एव भवेयुरित्येतदर्थम् । केषांचित् सूतिकाग्निमेव समारोप्य मथित्वा निधानं तस्मिन् क्रिया युक्ता हि । मातृवृ.

**'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात् । ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा पुत्रस्य नाम दध्यात् ॥**

वारुणीहोमादिपरिषेकविसर्गान्ते कृते अन्नहोमादिब्राह्मणतर्पणान्तं कृत्वा पुत्रस्य नाम दध्यात् ।

मातृवृ.

## मानवगृह्यसूत्रम्

स्नानम्, पुत्राभिमर्शनम्, गुरवे वरदानम्

**[2]'स्नात्वा सहपुत्रोऽभ्युपैति ॥**

स्नात्वा सहपुत्रोऽभ्युपैति– अग्निमभि आसीनो भवति । सहपुत्रोऽभ्युपैति सहेति नामधेयमभिवादवाक्ये नोच्चारयेत् । अष्टाभा.

**अथैनमभिमृशति– 'अग्नेष्ट्वा तेजसा सूर्यस्य वर्चसा विश्वेषां त्वा देवानां क्रतुनाऽभिमृशामि' इति । 'प्रक्षालितपाणिर्नवनीतेनाभ्यज्याग्नौ प्रताप्य ब्राह्मणाय प्रोच्याभिमृशेत्' इति श्रुतिः ॥**

अथैनमभिमृशति– अथ एनं कुमारम् । 'अग्नेष्ट्वा' इति अनेन मन्त्रेण प्रक्षालितपाणिर्नवनीतेन तेन हस्तावभ्यज्याग्नौ प्रताप्य ब्राह्मणाय प्रोच्याभिमृशेत् । इति श्रुतिः । श्रुतिग्रहणमादरार्थम् । स्वास्यानुलिप्य प्रताप्य तापयित्वा ब्राह्मणाय प्रोच्याभिमृशेदिति सूत्रम्, तेन ब्राह्मणानुज्ञयाऽभिमृशेदित्यर्थः । अष्टाभा.

**वरं कर्त्रे ददाति ॥**

वरं कर्त्रे जातकर्मादिकर्त्रे गुरवे इति । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

जयादिहोमाः, प्रधानहोमः

**[1]'अन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानान् राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति– 'धाता ददातु नो रयिम्' इत्यष्टौ ॥**

## काठकगृह्यसूत्रम्

फलोत्तरैः सर्वगन्धैः स्नापनम्, स्थालीपाकहोमः, अग्नेरायुरसीतीत्यादिजातकर्मोक्तविधिः, आज्यहोमः, घृतप्राशनम्, हिरण्यबन्धनम्, ललाटाभिमर्शनजपौ, मूर्धावघ्राणम्, संस्थितयजुर्होमः, स्वस्त्ययनम्

**§ [2]'दशम्यां तस्मिन्नेवाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नाप-**

(१) हिगृ. २०।१।२८–३०.
(२) मागृ. १।१८।३–५.

§ 'दशम्याम्' इति पदस्य व्याख्यानानि विधिप्रकरणे (सं. का. पृ. २७२९) द्रष्टव्यानि ।

(१) भागृ. १।२६.
(२) काागृ. ३६।१–२, ५–११.

**पित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति– 'कया नश्चित्रः' इति द्वाभ्याम्, 'कया तच्छृण्वे, प्रजापतये स्वाहा, प्रजापते नहि त्वदन्यः' इति च द्वाभ्याम् ॥**

( १ ) तस्मिन्नेव सूतिकागारस्थे सूतकाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वौषधिप्रभृतिभिः सुगन्धिद्रव्यविशेषैरुपरिविनिहितमङ्गलार्थजातीपूगफलविशेषैः सशिरस्कं स्नापयित्वा, पुंलिङ्गनिर्देशात् स्त्रियं वर्जयति, अनुपभुक्तेन वस्त्रेण संछाद्य तस्य स्थालीपाकस्य संबन्धिभिरवदानैर्व्यत्ययेन स्थालीपाकेन जुहोति 'कया नश्चित्रः' इति पञ्चा( ? पञ्च )हुतीः ।

'कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥' – व्रतस्याऽऽर्षम् । इन्द्रः प्रजापतिर्वा देवता । चित्रः चित्रचरितः प्रजापतिः इन्द्रो वा नः अस्मान् कया ऊत्या आभुवत् आभावयति जनयति । अवनं ऊतिः । 'सुपां सुलुक्पूर्वसवर्णा०' ( पा. सू. ७।१।३९ ) इति तृतीयैकवचनस्य पूर्वसवर्णैकादेशः ऊतीशब्दाल्लुक् च( ? वा ) । कीदृशः प्रजापतिः ? सखा समानख्यानः अन्तर्यामी । कीदृशानस्मान् ? सदावृधः सर्वकालं वृद्धियुक्तान् । कया वृता वर्तनेनाऽऽभावयति । कया शचिष्ठया शक्त्यतिशयेन चैतन्यातिशयेन वा । अतिशयेन शकिता शचिष्ठा । 'तुरिष्ठेमेयः सु' ( पा. सू . ६।४।१५४ ) इति तृचो लोपः । छान्दसो वर्णव्यत्ययश्चकारः । केन शक्त्यतिशयेन वर्तयेदित्यर्थः । स्रष्टृत्वादिशक्त्यतिशययुक्तः प्रजापतिः वृद्धिविषये कृतावस्माभिरिष्यते, स इष्टया प्रीतः सन् बालं वृद्ध्यादिसंयुक्तं संपादयतु इति तात्पर्यार्थः ।

हे प्रजापते, कः यजमानः त्वा मत्सत् मादयति । अन्धसः अन्धसा हविषा दृढा दृढानि वसु वसूनि धनानि आरुजे आरुजति वितरति दक्षिणादिद्वारेण ? कीदृशो यजमानः ? सत्यः उत्तमसत्त्वः । तथा मदानां मंहिष्ठः हृष्टानामानन्दयोगिनां मध्ये वृद्धतमः परमानन्दयुक्तः । ब्रह्मस्वभाव इत्यर्थः । 'बहि महि वृद्धौ' इति धातोः प्रकृतित्वं मंहिष्ठशब्दे इष्यन्ते ।

'कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु काचिदृष्वः । पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे ॥' – अत्रापि प्रजापतिर्देवता । अहं शृण्वे शृणोमि वेदात् । किं तत् ? काचिदेवास्य प्रजापतेः शक्तिर्लोकोत्तराऽस्ति प्रज्ञा वा । का ? यया शच्या शक्त्या प्रज्ञया वा स ऋष्वः महत्तमः पुरु अंहः पापं मुहुर्मुहुः पुनः पुनः कृणोति कृन्तति नाशयति । कस्मै ? दाशुषे यजमानाय । पापं च नाशयित्वा, अनन्तरं जरित्रे स्तोत्रे दाशुषे पुरु सुबहु द्रविणं धनं दधाति ददाति करोति वा । कीदृशः प्रजापतिः ? शचिष्ठः शक्ततमः प्राज्ञतमो वा, विचयिष्ठः विविधशक्तिनिचयवत्तमः । 'कया' इति व्यत्ययेन तृतीया प्रथमास्थाने ।

'प्रजापतये स्वाहा ॥' – प्रजापतये सुहुतमस्तु । 'प्रजापते नहि त्वत्' इति, 'असा अमुष्य' इति द्वयं व्याख्यातम् ‡ । † देव.

( २ ) तस्मिन्नेवाग्नौ । सूतकापगमे नाशौ सूतिकाग्निः । तस्मिन्नेवाग्नौ तत्र च गृहे । यावच्छिशोर्निष्क्रमणं गृहान्न कृतं तावदन्यत्रायुक्तम् । $ आवि.

**'अग्नेरायुरसि' इति तुल्यमा ललाटाभिमर्शनात् ॥**

'अग्नेरायुरसि' इत्यादिकमायुषेष्ट्या तुल्यमित्यतिदेशः । अवधिमाह– आ ललाटाभिमर्शनात् । "तस्य ललाटमभिमृश्य 'अश्विनोः प्राणः' इति जपति" ( काग्र. ३६।१० ) इति वक्ष्यति, तदनन्तरमायुषेष्ट्या समानमित्यर्थः ।

'अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्देहि ॥' – ब्रह्मण आर्षम् । अनेन हिरण्यं

---

‡ जातकर्मप्रयोगप्रकरणे (सं. का. पृ. २६६५–२६६६) व्याख्यानं द्रष्टव्यम् ।

† ब्राह्म. देवगतम् ।

$ शेषं देवगतम् ।

घृतेऽवदधाति । हे सुवर्ण, असि त्वमग्नेरायुः । आयातीत्यायुः । अग्नेरागतं त्वमुत्पन्नमित्यर्थः । तथा च श्रुतिः —'अग्नेर्यद्रेतः सिच्यते तद्धिरण्यमभवत्' इति । तस्य एवंभूतजननस्य ते तव मनुष्याः आयुष्कृतः । इन्धनाध्माननिर्मन्थनजागरणादिना मनुष्या अग्नेरायुः कुर्वन्ति, तद्द्वारेण सुवर्णस्य । तेन मनुष्याणामुपकारकत्वात् असै यजमानाय अमुष्मै च बालकाय आयुर्देहि कुरु वा । $ देव.

**तदेव नाम धीयते ॥**

अत्रानुवाके 'असौ' इत्यस्य स्थाने तदेव नाम धीयते यत्तु जातकर्मणि कृतम्, नान्यत् । $ देव.

**अन्यदित्येके ॥**

एके पुनराहुः— अन्यद्विधीयते । § देव.

**प्राक् स्विष्टकृतः कांस्ये पूतमाज्यमासिच्य हिरण्यं चाऽऽबन्धनीयम् 'अग्नेरायुः' इत्यवधाय तस्य जुहोति— 'इन्द्रस्य प्राणः' इति पञ्चभिः ॥**

( १ ) स्विष्टकृतः पूर्वं पूतमाज्यं कांस्यपात्रे आसिच्य प्रक्षिप्य तत्र च हिरण्यं प्रक्षिप्य 'अग्नेरायुरसि' इत्यादिना मन्त्रेण । कीदृशं सुवर्णम् ? आबन्धनीयं बालकस्य कण्ठादौ बन्धनार्हम् । तस्याऽऽज्यस्य जुहोति 'इन्द्रस्य प्राणः' इत्यादिभिः पञ्चभिर्मन्त्रैः ।

'इन्द्रस्य प्राणः स ते प्राणं ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥' — इन्द्रोऽत्र देवता । इन्द्रस्य प्राणः इन्द्रः प्राणस्य स्वामी, अतः सः इन्द्रः तुभ्यं प्राणं ददातु । यस्य प्राणस्तस्मै इन्द्राय ते तुभ्यं स्वाहा ।

'पितॄणां प्राणस्ते प्राणं ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥' — पितृदेवताको यतः पितृस्वामिकः प्राणः अतः ते पितरः ते तुभ्यं प्राणं ददतु । येषां प्राणः तेभ्यः पितृभ्यः वः युष्माकं सुहुतमस्तु ।

$ आवि. देवगतम् ।

§ शेषं व्याख्यानं विधिप्रकरणे (सं. का. पृ. २७२९) द्रष्टव्यम् ।

'मरुतां प्राणस्ते०' 'विश्वेषां देवानां प्राणस्ते०,' 'प्रजापतेः प्राणः स ते प्राणं ददातु परमेष्ठिनः प्राणः स ते प्राणं ददातु ययोः प्राणस्ताभ्यां वां स्वाहा ॥' — प्रजापतिः प्राणस्य स्वामी । स तुभ्यं प्राणं ददातु । परमेष्ठी प्राणस्य प्रभुः । स तुभ्यं प्राणं ददातु । उभयोः प्रजापतिपरमेष्ठिनोर्ययोः प्राणः ताभ्यां वां युवाभ्यां स्वाहा । देव.

( २ ) तत ऋतुतिथियागादि 'परि ते दूडभो रथः' इत्यन्तं हुत्वा बाह्यितन्त्रेण विधिनाऽऽज्यं संस्कृत्य कंसपात्र आसिच्य तत्र कण्ठाभरणयोग्यं हिरण्यम् 'अग्नेरायुः' इत्यवदधाति । 'अमुष्मा आयुर्देहि' इत्यत्र चतुर्थ्यन्तं शिशुनाम पूर्ववत् । ततः कंसस्थस्याऽऽज्यस्य 'इन्द्रस्य प्राणः' इति पञ्चभिः स्वाहाकारान्तैः पञ्चाहुतीः स्रुवेण जुहोति । ब्राह्म.

( ३ ) अत्र 'अमुष्मा' इति द्वितीयस्य नाम्नः प्रयोगः । * आवि.

**प्राक् संस्थितयजुषो ब्रह्मा घृते हिरण्यमवपद्यते सर्वे च ऋत्विजः 'यदसर्पः' इति ॥**

( १ ) संस्थितयजुर्होमात् पूर्वं ब्रह्मा घृते हिरण्यमवपद्यते अवष्टम्नाति यत्तद् बालगलादिबन्धनार्थं घृते निहितम्, सर्वे च ऋत्विजस्तदवष्टम्नन्ति 'यदसर्पः' इत्यादिमन्त्रैः ।

'यदसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदम्रियथास्तद्घृतमभवः ॥' — घृतं निरुच्यते — हे घृत, यत् यस्मात् त्वम् अपसर्पः सृतं ततः सर्पिर्भूतमसि । यस्माच्च नवं प्रत्यग्रं सत् ऐः आगतमसि ततो नवनीतमुच्यसे । यस्मादम्रियथाः तत् घृतं भूतमसि । 'धृ धारणे' इत्यस्य वर्णव्यत्यये घृतशब्दः ।

'घृतस्य धारामम्रुतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः । तत्त्वा विष्णुरन्वपश्यत्तत्त्वेळा गव्यैरयत् ॥' —विष्णोरार्षम् । 'धारां पन्थाम्' इति प्रथमायाः स्थाने द्वितीया । येयं घृतस्य धारा सा अमृतस्य अमरणधर्मस्य पन्था उपायः । इदं हि घृतमिन्द्रेण यजमानेभ्यो दत्तं

* शेषं देवगतम् ।

वृष्ट्यादिद्वारेण, प्रयतं च मरुद्भिः प्रकर्षेण यतं नियम्य स्थापितं वचनादिद्वारेण । तत् दीयमानं नियम्यमानं च त्वां विष्णुरपश्यत् । तत्त्वाम् इळा देवताविशेषः गवि ऐरयत् निक्षिप्तवती । देव.

( २ ) ततः स्विष्टकृदादि 'मनो ज्योतिः' इति समान्ते हुते †ब्रह्मणः अन्येषां च ऋत्विजां गृह्यकर्मण्यनुपयोगित्वात् कर्तैव 'यदसर्पः' इति 'ऐरयत्' इत्यन्तेन कंसे घृतस्थं हिरण्यमवष्टम्नाति । ब्राह्म.

( ३ ) ततः स्विष्टकृदादि कृत्वा प्राक् संस्थितयजुषो ब्रह्मा घृते हिरण्यमवपद्यते हस्तेनावष्टम्नाति । †इह ब्रह्मणः ऋत्विजां चाभावात् कर्ताऽवपद्यते । आवि.

**'पावमानेन' इत्युद्धृत्य 'देवा आयुष्मन्तः' इति यजमानाय प्रयच्छति ॥**

( १ ) आज्यात् सुवर्णं 'पावमानेन' इत्युद्धृत्य यजमानाय प्रयच्छति 'देवा आयुष्मन्तः' इत्यादिमन्त्रैः ।

'पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्योपांशोर्वीर्येणोद्धराम्यसौ ॥' –पावमानेन स्तोमेन बहिष्पवमानादिना, गायत्र्या वा ऋचा, वर्तन्या सामावयवेन, उपांशोर्ग्रहस्य वीर्येण सामर्थ्येन उद्धरामि त्वाम् । 'असौ' इति नाम प्रतीयात् ।

'बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ ॥' –गतार्थम् ।

'अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याया असौ ॥' – 'अग्नेरुन्नयामि' इति विपरिणतस्यानुषङ्गः, न तु 'तु उद्धरामि' इत्यस्यानुषङ्गः, 'व्यवायान्नानुषज्येत' (जैसू. २।१। ४९) इति न्यायात् । 'पावमानेन' इत्यादि समुच्चितं मन्त्रत्रयमाहुः सुवर्णोद्धरणे, भिन्नाख्यातत्वेन भिन्नमन्त्रत्वात् । अन्ये तु एकमन्त्रतां मन्यन्ते ।

देवा इत्यादयः षट् ।

'देवा आयुष्मन्तस्तेऽमृतेनाऽऽयुष्मन्तस्तेषामयमायुषाऽऽयुष्मानस्त्वसौ ॥' – तेषामायुषा देवानामायुषा तत्परिमाणेन जीवनेन अयं यजमानो बालश्च आयुष्मानस्तु । असाविति पूर्ववत् ।

'ब्रह्माऽऽयुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषाऽऽयुष्मानस्त्वसौ ॥' – ब्रह्म वेदः । तच्च आयुष्मत् अविनाशि । तद्धि ब्राह्मणैः ब्रह्मसंबन्धिभिः अध्ययनधारणादिभिरनुच्छित्तिकर्मकम् । तस्यायमित्यादि पूर्ववत् ।

'अग्निरायुष्मान् स वनस्पतिभिरायुष्मांस्तस्यायमायुषाऽऽयुष्मानस्त्वसौ ॥' – वनस्पतयः इन्धनानि अरण्यं च । समानमन्यत् ।

'यज्ञ आयुष्मान् स दक्षिणाभिरायुष्मांस्तस्यायमायुषाऽऽयुष्मानस्त्वसौ ॥' –दक्षिणालोभेन ऋत्विजः अभ्यस्यन्ति यज्ञविद्याम्, सम्यगनुतिष्ठन्ति च कर्माणि । तेन दक्षिणया आयुष्मत्त्वं यज्ञस्य ।

'सोम आयुष्मान् स ओषधीभिरायुष्मांस्तस्यायमायुषाऽऽयुष्मानस्त्वसौ ॥' –ओषधयः व्रीह्याद्याः, ताभिः । चरुपुरोडाशादिना इष्टमन्नादि चन्द्रमसमाप्याययतीति कृत्वा भवत्योषधीभिरायुष्मान् सोमः ।

'ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्तासामयमायुषाऽऽयुष्मानस्त्वसौ ॥' – वृष्ट्या वर्धन्ते भ्रियन्ते चौषधयः । देव.

( २ ) 'पावमानेन त्वा' 'बृहता त्वा' 'अग्नेस्त्वा मात्रया' इति त्रिभिः 'असौ' इत्यन्तैः उद्धरति । अत्र असौशब्दस्थाने शिशोरामन्त्रितप्रथमान्तं नाम ग्राह्यम् । यथा– 'उपांशोर्वीर्येणोद्धरामि देवस्वामिन्, शुक्रस्य वीर्येणोत्सृजामि यज्ञमित्र, जीवनस्यायै सोमशर्मन्' । 'देवा आयुष्मन्तः' इति षड्भिर्यजमानाय प्रयच्छति । अत्र असौशब्दस्थाने शिशोः प्रथमान्तं नाम ग्राह्यम् । ब्राह्म.

( ३ ) 'पावमानेन' इति त्रिभिरुद्धृत्य । असौशब्दस्थाने संबुद्ध्यन्तं शिशोर्नाम, अनुदात्तत्वात् असौशब्दस्य । केचित् हिरण्यस्य नाम गृह्णन्ति, तदभिधानत्वात् । तदयुक्तम् । इदानीं हिरण्यशब्द एव पठ्येत, किं सर्वनाम्ना ? हिरण्यं तु यजमानेनाध्यास्यते । 'यथा वध्य-

† सूत्रविरोधात् चिन्त्यमिदम् ।

मुद्वरस्युत्सृजस्युन्नयत्येवमेवैनमेतदुद्वरस्युत्सृजत्युन्नयति ' (काश. ११।८) इति 'एनम्' इति पुंलिङ्गेन यजमानमन्वादिशति । 'देवा आयुष्मन्तः' इति षड्भिर्यजमानाय प्रयच्छति हिरण्यम् । अत्र उदात्तत्वात् असौशब्दस्थाने प्रथमान्तं नाम । आश्व.

**तत्पिबति, निरवधयेत् ॥**

**हिरण्याद्घृतं प्रक्षाल्य 'इममग्ने' इति हिरण्यमाबध्नाति ॥**

(१) तत् सुवर्णनिःस्रावमाज्यं बालकः पिबति । तच्च निःशेषेण अवधयेत् पिबेत् । हिरण्यलग्नं घृतं प्रक्षाल्य तत् हिरण्यं बध्नाति बालकस्य गलादौ 'इममग्ने' इत्यादिना ।

'इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत् ॥' –हे अग्ने, इमं बालकं यजमानं च आयुषे वर्चसे च कृधि कुरु । विद्यासंपत्तिः वर्चः । यथैतस्याऽऽयुर्वर्चश्च भवति तथा कुर्वित्यर्थः । हे वरुण, त्वमपि तिग्मम् उत्कृष्टम् ओजः बलं संशिशाधि सम्यक् संपादय । हे अदिते देवमातः, त्वम् अस्मै शर्म सुखं यच्छ देहि मातेव जननी यथा । हे विश्वे देवाः, यूयं यथा जरदष्टिः असत् भवति तथा कुरुत । जराम् अश्नोति व्याप्नोति जरदष्टिः । जराजर्जरितशरीरमेनं कुरुतेत्यर्थः । देव.

(२) ततः तत् हिरण्यात् घृतं प्रक्षाल्य तूष्णीं पाययति कंसस्थशेषं च । प्रक्षाल्य हिरण्यम् 'इममग्ने' इति शिशोः कण्ठे आबध्य । ¶ ब्राह्म.

**तस्य ललाटमभिमृश्य 'अश्विनोः प्राणः' इति जपति ॥**

ललाटतलं हस्तेन स्पृष्ट्वा जपति 'अश्विनोः प्राणः' इत्यादिकम् ।

'अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव ॥ मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव ॥ बृहस्पतेः प्राणः स ते प्राणं ददातु तेन जीव ॥' – अश्विनौ अत्र देवता । अश्विप्रभृतिभिर्दत्तेन प्राणेन जीवेति गतार्थम् ।

$ देव.

**'अङ्गादङ्गात् संभवसि हृदयादधि(?धि)-जायसे । आत्मा वै पुत्रनामाऽसि जीव शरदः शतं पश्य शरदः शतम् ॥' इति मूर्धनि निघ्राप्य स्वस्त्ययनं वाचयति ॥**

(१) 'अङ्गादङ्गात्' इत्यादिना बालस्य मूर्धनि शिङ्घनं कृत्वा स्वस्त्ययनं वक्ति । क्वचित् 'निघ्राप्य' इति पाठः, तत्र स्वार्थे णिच् । पित्रसंनिधौ वा मातरं प्रयुज्येति केचित् । ऋत्विग्वा पितुः प्रयोजको विवक्षितः ।

'अङ्गादङ्गात्... पश्य शरदः शतम् ॥' –सर्वाङ्गपरिस्रुतरससारवीर्यसंभूतत्वात् अङ्गादङ्गात् सम्यक् भवसि, हृदयसंकल्पितमनोरथसंभूतत्वाच्च हृदयादाधिक्येन जायसे । वैशब्दः अवधारणे । किं बहु ब्रूमहे ? आत्मा वै पुत्रनामाऽसि । त्वं मच्छरीरेण संभूतत्वात् मदीयमेव मूर्त्यन्तरमसि पुत्रनामाङ्कितमुपकारितरमित्यर्थः । एवंभूतः त्वं शरदां शतं प्राणान् धारय पश्य च पटुविन्द्रियो भव वर्षशतम् । देव.

(२) एतत् 'अग्नेरायुरसि' इति हिरण्यावधानादिललाटाभिमर्शनादनन्तरम् 'अङ्गादङ्गात्' इति पितरं मूर्धनि निघ्राप्य संस्थितयजुर्हुत्वा 'बोधश्च' इति स्वस्त्ययनम् । बहु सर्पिष्मदन्नं ब्राह्मणान् भोजयेत् । ब्राह्म.

(३) एतत्तुल्यमा ललाटाभिमर्शनात् । ततः संस्थितयजुः । 'अङ्गादङ्गात्' इति पङ्क्त्या मूर्धनि निघ्राय गन्धमुपादाय स्वस्त्ययनं वाचयति । ये 'निघ्राप्य' इति पठन्ति माणवकस्य पितरं निघ्रापयन्ति, तमेव स्वस्त्ययनं वाचयन्ति । आश्व.

## वाराहगृह्यसूत्रम्

नवनीतलिप्तपाणिना कुमाराभिमर्शनम्

**'नवनीतेन पाणी प्रलिप्य 'सोमस्य त्वा द्युम्नेन' इत्येनमभिमृशेत् ॥**

---

¶ आश्व. ब्राह्मवत् ।

$ ब्राह्म. देवगतम् ।

(१) वागृ. २.

## आग्निवेश्यगृह्यसूत्रम्

स्नानम्, गृहालंकरणम्, सूतकाग्न्युद्वासनमौपासनाग्निस्थापनं च, नामकरणसंकल्पः, होमः, जयाद्युपहोमा मतान्तरेण, ब्राह्मणभोजनम्, पुण्याहादिवाचनम्, नामकरणम्

**[1]द्वादश्यां मातापुत्रयोः स्नानानन्तरं गृहमलंकरोति । सूतकाग्निमुद्वास्यौपासनाग्निं निधाय 'जातस्य कुमारस्य नाम धास्यावः' इति मातापितरौ संकल्पं कुरुतः । अनन्तरमौपासनाग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा 'धाता ददातु नो रयिम्' इति चतस्र आहुतीः सीमन्तवद्धुत्वा 'अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतां दाशुषे मयः स्वाहा ॥ अनुमत्या इदम् । अन्विदनुमते त्वं मन्यासै शं च नः कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः स्वाहा ॥ अनुमत्या इदम् । अनुमन्यतामनुमन्यमाना प्रजावन्तꣳ रयिमक्षीयमाणम् । तस्यै वयꣳ हेडसि माऽपि भूम सा नो देवी सुहवा शर्म यच्छतु स्वाहा ॥ अनुमत्या इदम् । यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रतिभूषन्त्यायवः । यस्या उपस्थ उर्वन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु स्वाहा ॥ अनुमत्या इदम् । राकामहꣳ सुहवाꣳ सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरꣳ शतदायमुक्थ्यꣳ स्वाहा ॥ राकाया इदम् । यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषꣳ सुभगा रराणा स्वाहा ॥ राकाया इदम् । सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः स्वाहा ॥ सिनीवाल्या इदम् । या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन स्वाहा ॥ सिनीवाल्या इदम् । कुहूमहꣳ सुभगां विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितॄणां तस्यास्ते देवि हविषा विधेम स्वाहा ॥ कुह्वा इदम् ।' इति द्वादश त्रयोदश वाऽऽहुतीर्हुत्वा 'इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्' इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति । यथा पुरस्ताद् ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वा पुत्रस्य नाम दद्यात् ॥**

(१) आग्निगृ. २।१।५.

## गोभिलगृह्यसूत्रम्

मात्रा कुमारस्य प्रदानं मातुर्यथाविध्युपवेशनं च, होमः, मुख्यप्राणस्पर्शनं जपश्च, मन्त्रान्ते नामोच्चारणम्, मात्रे प्रथमं नाम्नोऽभिधानम्, दक्षिणादानम्

**[1]अथ यस्तत्करिष्यन्भवति पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङुपविशति ॥**

(१) अथेति जन्मगृहाभ्यन्तरे । अन्यथा चन्द्रदर्शनात् प्राक् तद्बहिर्गमनं स्यात् । य इत्यनेन पितुरभावे अन्योऽप्यधिकारी । संत. ९१७

(२) अथेति जातगृहनियमार्थम् । तथा च 'निष्क्रमणात् पूर्वमेतत् कर्म जन्मशालायामेव कर्तव्यम्, अन्यथा तु बहिःशालायामपीत्यथशब्दाल्लभ्यते' इति भाष्यकृतः । तथा चोक्तं बह्वृचशाखायाम्– '† तन्मध्ये

† सूत्रमिदं गृह्यसूत्रपुस्तकमनुद्घाटयता टीकाकृता तात्पर्यं भित्त्वोदाहृतम् । वस्तुतस्तु 'जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि' 'पूर्वे तु दैवतं सर्वत्र' इति पूर्वोत्तरसूत्रानुरोधेन 'जन्मनक्षत्रतद्देवतोद्देश्यकहोमौ पूर्वोत्तरनक्षत्रतद्देवतोद्देश्यकहोमानां मध्ये कुर्यात्' इत्यस्मिन्नर्थेऽस्य

(१) गोगृ. २।८।९ ; संत. ९१७ प्राङुप ( प्रागुप ).

जुहुयाद्यस्मिञ्जातः स्यात्' ( कौगृ. १।२५।६ ) इति। यः कश्चित् पिता अन्यो वा तत् नामकरणं करिष्यन् कर्तुमुद्यतो भवति। प्राङ् प्राङ्मुखः। निगदव्याख्यातमन्यत्। स खल्वयमग्निः ‡शालाग्नेरपि लौकिक एव बोद्धव्यः, न पुनः स्वयमाहितः, गर्भसंस्कारहोमानामेव तथाऽनुष्ठानात् नामधेयादौ लौकिकाग्नेरुपदेशाच्च। तथा च कर्मप्रदीपः— 'न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम्। स्वगर्भसंस्क्रियार्थोश्च यावन्नासौ प्रजायते॥ अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः। न हि पित्रा समानीतः पुत्रस्य भवति क्वचित्॥' ( कात्स्मृ. २। १४७, १४८ ) इति। मृदुला.

'अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं कर्त्रे प्रयच्छत्युदक्शिरसम्॥

( १ ) आच्छाद्य। आङीषदर्थे। तेन मुखवर्जं छादयित्वा। दक्षिणतः पत्युर्दक्षिणतः स्थित्वा। उदञ्चम् उत्तानम्। संत. ९१७

( २ ) निगदव्याख्यातम्। मृदुला.

'अनुपृष्ठं परिक्रम्योत्तरत उपविशत्युदगग्रेषु दर्भेषु॥

( १ ) अनुपृष्ठं कर्तुः पश्चिमदेशम्। परिक्रम्य गत्वा। संत. ९१७

( २ ) प्रदाय च माता— अनुपृष्ठमिति। एतदप्युक्तार्थम्। मृदुला.

'अथ जुहोति— 'प्रजापतये तिथये नक्षत्राय देवतायै' इति॥

( १ ) तिथये नक्षत्राय। कुमारस्येति शेषः। देवतायै तिथिनक्षत्रयोरित्यर्थः। तथा च बह्वृचगृह्यम्— 'तन्मध्ये जुहुयाद्यस्मिन् जातः स्यात्' इति। तिथयः प्रतिपदाद्याः। तद्देवता ब्रह्मत्वष्टृविष्णुयमसोमकुमारमुनिवसुपिशाचधर्मरुद्रवायुमन्मथयक्षपितरः। पौर्णमास्यां विश्वे देवाः। एषां होमे विशेषमाह छन्दोगपरिशिष्टम्— 'नामधेये मुनिवसुपिशाचा बहुवत्सदा। यक्षाश्च पितरो देवा यष्टव्यास्तिथिदेवताः॥'। तेन मुन्यादयो बहुवचनान्ता होतव्या इति शेषा एकवचनान्ता होतव्याः। नक्षत्राणि अश्विन्यादीनि। देवता ज्योतिषे अश्वियमेत्यादि। अत्र अभिजितः भिन्नत्वात् अष्टविंशतिः। होमे तु नाभिजितो ग्रहणम्, उत्तराषाढात्वेन श्रवणात्वेन च तदभिधानात्। तेन विरिञ्चिग्रहणम्।

संत. ९१७–९१८

( २ ) अथेत्यानन्तर्यार्थकम्। 'उपविष्टायां तस्यां कुमारं तस्यै प्रदाय जुहोति, इतरथा गृहीतकुमारस्य हवनासंभवात्' इत्येवमेके। 'गृहीतकुमार एव जुहोति' इत्यपरे। पद्धतावप्येवमेव। कस्मै जुहोति? प्रजापतये। स चायम् 'मनसा प्रजापतिं ध्यायेत् तूष्णीं होमेषु सर्वत्र' इत्याश्वलायनवचनात् तथा कर्तव्यः। अत्राविशेषोक्तेर्देवतापदेन तिथिनक्षत्रोभयदेवतालाभः। अत एव च विसमासकरणम्। तदुभयं च कुमारजन्मकालिकमेव। तथा च बह्वृचगृह्ये— 'त्रीणि चैतानि सदैवतानि जुहुयाद् यस्मिन् जातः स्यात्' ( कौगृ. १।२५।५,६ ) इति। तिथिदेवतास्तु— 'ब्रह्मा त्वष्टा च विष्णुश्च यमः सोमः कुमारकः। मुनिर्वसुः पिशाचश्च धर्मो रुद्रो रविस्तथा॥ मदनश्चैव यक्षश्च विश्वेदेवास्तथैव च। अमायां पितरः प्रोक्ता यज्ञार्थास्तिथिदेवताः॥' इतिवचनोपात्ता इह ग्राह्याः, न तु पुराणान्तरोक्ताः, परिशिष्टसंवादात्। तथा चात्र होमप्रकारे कात्यायनः— 'नामधेये

---

सूत्रस्य तात्पर्यम्, न तु 'जन्मगृहे नामकरणं कुर्यात्' इत्यत्र। अग्रे 'अथ जुहोति०' इत्यादिसूत्रीयसंतव्याख्यानेऽस्य सूत्रस्योदाहरणं गोभिलकौषीतकिसूत्रयोर्जन्मनक्षत्रतद्देवतोद्देश्यकहोमांशमात्रे तात्पर्यसाम्यमभिप्रेत्येति कथंचित् संगमनीयम्।

‡ 'अग्निहोत्रिणोऽपि' इत्यादर्शपुस्तके मृदुलाकारस्यैव टिप्पणी।

(१) गोगृ. २।८।१० ; संत. ९१७ वसनेन (वस्त्रेण) कर्त्रे ( कर्मकर्त्रे ).

(२) गोगृ. २।८।११ ; संत. ९१७ दर्भेषु (कुशेषु).

(१) गोगृ. २।८।१२ ; संत. ९१७.

मुनिवसुपिशाचा बहुवत् सदा । यक्षाश्च पितरो देवा यद्व्यास्तिथिदेवताः ॥' इति । पुराणान्तरे मुन्यादिदेवतानमिधानात्। बहुवदिति बहुवचनान्तशब्देनेत्यर्थः। एवमग्रेऽपि नक्षत्रदेवताहोममधिकृत्य तथा– 'आग्नेयाद्येऽथ सार्पाद्ये विशाखाद्ये तथैव च । अषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥ द्वन्द्वान्येतानि बहुवदृक्षाणां जुहुयात् सदा । § देवतास्वपि हूयन्ते बहुवत् सर्पपित्र्यपः ॥' इति । आग्नेयाद्ये कृत्तिकारोहिण्यौ । एवमग्रेऽपि । सार्पम् अश्लेषा । शेषम् अवशिष्टं द्वन्द्वद्वयं पूर्वोत्तरफल्गुन्यौ पूर्वोत्तरभाद्रौ च द्विवत् द्विवचनान्तम् । अवशिष्टानि मृगशिरःप्रभृतीनि नक्षत्राणि एकवत् एकवचनान्तशब्देनेत्यर्थः । देवाः विश्वे देवाः । ज्यौतिषे– 'अश्वो यमोऽनलो ब्रह्मा शशी शर्वोऽदितिर्गुरुः । सर्पः पिता भगश्चैव अर्यमा च दिवाकरः ॥ त्वष्टा वातः कृशान्विन्द्रो मित्रश्चैव पुरंदरः । निर्ऋतिः सलिलं चैव विश्वे देवा हरिस्तथा ॥ वसवो वरुणश्चैव तथैव स्यादजैकपात् । अहिर्बुध्न्यस्तथा पूषा क्रमान्नक्षत्रदेवताः ॥' इति । अत्र 'अहिर्बुध्न' इत्यपपाठः, 'उत्तानाहिर्बुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः' इति श्रुतौ पाठाविवादेन तथा निर्णयात् । सोऽयं होमस्य प्रकारविशेष इतिशब्देन सूच्यते इति द्रष्टव्यम् ।

मृदुला.

**[1]'तस्य मुख्यान् प्राणान्त्संस्पृशन् 'कोऽसि कतमोऽसि' इत्येतं मन्त्रं जपति ॥**

(१) कुमारस्य मुखभवान् वायून् प्राणनिर्गमोपायभूतान् छिद्रविशेषान् सप्त मुखम्, अक्षिणी, नासिके, कर्णौ इति आभिमुख्येन स्पृशन् 'कोऽसि' इति मन्त्रं जपेत् । संत. ९१८

(२) तस्य कुमारस्य । मुख्यान् मुखप्रभवान् । 'शरीरावयवाद्यत्' (पा. सू. ५।१।६) इति भवार्थे यत्प्रत्ययः । प्राणान् प्राणनिर्गमोपायभूतान् सप्तच्छिद्रविशेषान् मुखम्, अक्षिणी, नासिके, कर्णौ इत्येतद्रूपानिति यावत् । 'कोऽसि' इत्येवमादिमन्त्रं जपति । मन्त्रो यथा– 'कोऽसि कतमोऽस्येषोऽस्यमृतोऽसि । आहस्पत्यं मासं प्रविशासौ ॥ स त्वाऽह्ने परिददात्वहस्त्वा रात्र्यै परिददातु रात्रिस्त्वाऽहोरात्राभ्यां परिददात्वहोरात्रौ त्वाऽर्धमासेभ्यः परिदत्तामर्धमासस्त्वां मासेभ्यः परिददातु मासास्त्वर्तुभ्यः परिददत्वृतवस्त्वा संवत्सराय परिददतु संवत्सरस्त्वाऽऽयुषे जरायै परिददात्वसौ ॥' इति । अस्यार्थः – असौ इत्यामन्त्रणे । हे देवदत्त, त्वं कोऽसि ? इति स्वरूपप्रश्नः । कतमोऽसि ? इति जातिप्रश्नः । एषोऽसि इति प्रत्यक्षनिर्देशः । अमृतोऽसि अमरणधर्माऽसि यतः अतः त्वाम् आहस्पत्यम् अहस्पतेः सूर्यस्य संबन्धिनं मासं संक्रान्तिचिह्नितं प्रविश तत्राऽऽत्मानमनुप्रवेशय । प्रथमं मासजीवी भव, ततः क्रमेणामृतत्वमेष्यसीति भावः । असौ हे देवदत्त, इति पुनरामन्त्रणमादरार्थम् । सः अहस्पतिः सूर्यः त्वा त्वाम् अह्ने दिवसाय परिददातु अर्पयतु संवर्धनाय यावच्छतायुष्ट्वम् । अत्र मासस्य विशेषणभूतोऽप्यहस्पतिः प्राधान्यात् स इत्यनेन परामृश्यते इति गुणविष्णुभाष्यम् । इति । त्र्यवसानोऽयं मन्त्रः ।

मृदुला.

**[1]'आहस्पत्यं मासं प्रविशासौ' इत्यन्ते च मन्त्रस्य कृतं $घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं नाम दध्यात् ॥**

(१) 'आहस्पत्यं मासं प्रविशासौ' इत्यत्र 'असौ' इति मन्त्रान्ते च 'असौ' इति च पदद्वयस्थाने संबोधनान्तं नामोच्चारयेत् । संत. ९१८

(२) तत्र च मन्त्रे– आहस्पत्यमिति । इति– एतस्मिन् मन्त्रान्तस्थे च 'असौ' इति स्थानद्वयस्य-

---

§ अत्रत्यं 'द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत् ।' इति श्लोकार्धं गलितमिति व्याख्यानात्प्रतीयते ।

(१) गोगृ. २।८।१३; संत. ९१८ तस्य + (च) न्त्संस्पृ (न्स्पृ) तं मन्त्रं (तन्मन्त्रं).

$ घोषवदित्याद्यंशस्य व्याख्यानं नामकरणविधिप्रकरणे (सं. का. पृ. २७३२) द्रष्टव्यम्।

(१) गोगृ. २।८।१४; संत. ९१८.

सर्वनाम्नि प्रकृतत्वात् कुमारस्य नाम दध्यात् गृह्णीयात् इत्यर्थः । मृदुला.

[1]मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् ॥

( १ ) उदीच्यं वामदेव्यगानान्तं कुर्यात् । संत. ९१९

( २ ) तच्च नामधेयं प्रथमं पूर्वम्, मात्रे कुमारस्य आख्याय कथयित्वा यथार्थं तत्कर्मसमापनं कुर्यादित्यर्थः । चशब्दात् पुरुषनाम्नः स्त्रीनाम्नश्च प्रथमं मात्रे कथनम् । एवकारो मात्रे प्रथमनिवेदनार्थः । मृदुला.

गौर्दक्षिणा ॥

( १ ) सा च प्रधानस्य नामकर्मणः । * संत. ९१९

## खादिरगृह्यसूत्रम्

कुमारस्नापनम्, पित्रे कुमारप्रदानम्, यथाविधि मातुरुपवेशनम्, होमः, मुख्यप्राणाभिमर्शनम्, मन्त्रान्ते नामकरणम्, मात्रे कुमारप्रदानम्, मात्रे प्रथमं नामाख्यानम्

[2]स्नाप्य कुमारं करिष्यत उपविष्टस्य शुचिनाऽऽच्छाद्य माता प्रयच्छेदुदक्छिरसम् ॥

होमारम्भात् पूर्वं दर्भेषूपविष्टस्य शुचिना वस्त्रेणाऽऽच्छाद्य दक्षिणत उपविश्य प्रयच्छेत् । रुद्रभा.

अनुपृष्ठं गत्वोत्तरत उपविशेत् ॥

दर्भेषु माता । रुद्रभा.

हुत्वा 'कोऽसि' इति तस्य मुख्यान् प्राणानभिमृशेत् ॥

उदक्छिरसं कुमारं स्वाङ्के धारयन् प्रपदान्तं कृत्वा द्विः तिसृभिर्व्याहृतिभिर्हुत्वा कुमारस्य चक्षुषी श्रोत्रे नासिके चाभिमृशेत् । रुद्रभा.

'असौ' इति नाम कुर्यात्तदेव मन्त्रान्ते ॥

यत् सोष्यन्तीहोमे तदेव 'परिददातु विष्णुशर्मन्' इतिवत् कुर्यात् मन्त्रान्ते असौशब्दे, न मध्ये । रुद्रभा.

मात्रे ॥

प्रयच्छेदुदक्छिरसमिति शेषः । रुद्रभा.

प्रथममाख्याय ॥

मात्र इत्यनुवर्तते । प्रथमशब्दस्य द्वितीयापेक्षत्वात् प्रथमं गुह्यं नाम मातुरुक्त्वा द्वितीयमपि व्यावहारिकं नाम इदानीं ब्रूयादित्यर्थः । ततो ब्राह्मणभोजनम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

अहतवाससा कुमाराच्छादनम्, होमः

[1]तमहतेन वाससा समनुपरिगृह्य पिताऽङ्केनाऽऽसीत । ... कुमारयज्ञेषु च नक्षत्रं नक्षत्रदैवतं तिथिमिति यजते । अष्टावन्या जुष्टा देवता यजतेऽग्निधन्वन्तरि(? री) प्रजापतिमिन्द्रं वसून् रुद्रानादित्यान् विश्वान् देवानिति । एतासु स्विष्टासु सर्वा देवता अभीष्टा भवन्ति ॥

नामकर्मार्थे वक्ष्यमाणदशाहुतयो होतव्या इत्यर्थः । नामाधानानन्तरं कुमारस्य जन्मनक्षत्रं तद्दैवतं जन्मतिथिं च यजते । तेभ्यः स्वनामभिर्जुहुयात् । जुष्टाः सेविताः सर्वैरित्यर्थः । 'अग्निधन्वन्तरिभ्यां स्वाहा, प्रजापतये स्वाहा' इत्यादि सप्ताऽऽहुतयः । श्रीव्या.

## कौशिकगृह्यसूत्रम्

उदकधारापातनम्, पूतुदारुबन्धनम्, पूतुदारुजलपायनम्, टीकायां पायनोत्तरं नामकरणम्, आच्छादनम्, परिदानम्, टीकायां श्राद्धसंस्कारकर्मणोः क्रमे मतद्वयम्

[2]अथ नामकरणम् ॥

---

* मृदुला. संतवत् ।

(१) गोगृ. २।८।१७-१८; संत. ९१९.

(२) खागृ. २।३।७-१२.

(१) जैगृ. १।९.

(२) कौसू. ५८।१३-१७, २०-२१.

**'आ रभस्वेमाम्' इत्यविच्छिन्नामुदकधारामालम्भयति ॥**

**पूतुदारुं बध्नाति ॥**

**पाययति ॥**

**'यत्ते वासः' इत्यहतेनोत्तरसिचा प्रच्छादयति ॥**

पाययति । ततः पिता नाम करोति । अथ आचार्यो वा दक्षिणे कर्णे श्रावयति । नक्षत्रकल्पोक्तं नाम द्व्यक्षरं चतुरक्षरमित्यादि । प्रच्छादयति । 'शिवे ते स्ताम्' इत्यादि परिदानानि सिंहावलोकनन्यायेन गोदानमध्ये उक्तानि । अभ्यातानाद्युत्तरतन्त्रम् । ततः श्राद्धम् । नामकरणं समाप्तम् । दाकेटी.

**'अह्ने च त्वा' इत्यहोरात्राभ्यां परिददाति ॥**

**'शरदे त्वा' इत्यृतुभ्यः ॥**

गोदानवत् परिदानानि ददाति । नामकरणे निष्क्रमणे अन्नप्राशने च गोदानिकानि परिदानानि भवन्ति । ऊनो वाऽतिरिक्तो वा यः स्वशाखोदितो विधिस्तेनैव सर्वे परिपूर्णम्, न कुर्यात् पारतान्त्रिकम् । पश्चात् श्राद्धं सर्वेषु संस्कारेषु कुर्यादिति दारिलभाष्यकारस्याभिप्रायेण व्याख्यायत इति । श्राद्धं कृत्वा पश्चात् कर्मेति रुद्रभट्टो । दाकेटी.

## वैखानसगृह्यसूत्रम्

कुमारशिरस्यक्षतारोपणम्, होमः, त्रिवृत्प्राशनम्, देहाङ्गसंधौ शिरसि चाक्षतादिनिक्षेपः, पुण्याहवाचनम्

**[1]परिस्तीर्याग्निं तथाऽऽसीनस्याक्षतं कुमारस्य मूर्ध्नि विन्यस्य पञ्च वारुणं प्राजापत्यं स्विष्टाकारं च हुत्वाऽस्य पूर्ववत् त्रिवृत्प्राशनम् । अक्षतोदकपुष्पाम्बरसगन्धसमैः पाणिभ्यां दक्षिणेतराभ्यां कुमारस्य 'शाङ्करिरिव' इति कन्यायाः 'मन्देवाऽऽनन्ददायिनी' इति वदन् पादत आरभ्य क्रमेण देहाङ्गसंधौ शिरसि च निक्षिपेत् । पुण्याहम् ॥**

(१) वैगृ. ३।१९.

## शङ्खः शङ्खलिखितौ च

होमः, नान्दीश्राद्धम्, ब्राह्मणभोजनम्, नामकरणम्

**[1]दशम्यामुत्थाप्य पिण्डवर्धनम्, 'पितॄणां तत्र सांनिध्यम्' इति श्रुतेः । ब्रह्मणे चाऽऽहुतिं पूर्वं हुत्वा पितॄननुमान्य ब्राह्मणान् भोजयित्वा तदहरेव नामकरणं कुर्यात् ॥**

सूतिकां पूर्वं शय्यात उत्थाप्य दशम्यां तिथौ दशमेऽहनीत्यर्थः । पिण्डवर्धनं पूजा । तत्स्वरूपं च– ब्राह्मणः पूर्वमाहुतिं हुत्वा पितॄननुमान्य अभ्युदयश्राद्धेन पूजयित्वा ।

‡ अप. १।१२

## नारदः

स्वस्तिवाचनपूर्वकं नामकरणम्

**[2]काले नाम प्रयोक्तव्यं तद्विप्रैः स्वस्ति वाच्य च ॥**

## कात्यायनः

तिथिदेवताहोमे नक्षत्रहोमे नक्षत्रदेवताहोमे च एकद्विबहुवचननिर्णयः

**$[3]नामधेये मुनिवसुपिशाचा बहुवत्सदा ।**
**यक्षाश्च पितरो देवा यष्टव्यास्तिथिदेवताः ॥**

‡ ब्रक., स्मृच., मपा. अपवत् ।

$ अस्य श्लोकस्य संतव्याख्यानमस्मिन्नेव प्रकरणे 'अथ जुहोति प्रजापतये' इति गोभिलगृह्यसूत्रे (सं. का. पृ. २७७२) द्रष्टव्यम् ।

(१) अप. १।११–१३ पृ. २७ ब्रह्मणे...हुत्वा (ब्राह्मणोऽग्नावाहुतिं दत्वा) शङ्खलिखितौ; ब्रक. ८९ (ब्राह्मणान् भोजयित्वा०) शङ्खलिखितौ; स्मृच. २१ वर्धं (विवर्धं) चाऽऽहुतिं पूर्वं हुत्वा (हुत्वाऽऽहुतीः पूर्वं) (कुर्यात्०) शेषं ब्रकवत्, शङ्खः; बभा. १०७ (दशम्यामुत्थाप्य, तदहरेव नामकरणम्) एतावदेव, शङ्खलिखितौ; मपा. ३५६ (हुत्वा०) शेषं सर्वं ब्रकवत्; मुका. ८१ (दशम्यामुत्थाप्य पिण्डविवर्धनं पितॄणां तत्र सांनिध्यम्) एतावदेव, शङ्खः.

(२) प्रपा. १६३.

(३) कास्मृ. ३।८४; संत. ९१७.

¹आग्नेयाद्येऽथ सार्पाद्ये विशाखाद्ये तथैव च।
आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च॥
²द्वन्द्वान्येतानि बहुवदृक्षाणां जुहुयात्सदा।
द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत्॥

कृत्तिका द्वे विशाखा द्वे आषाढा द्वे धनिष्ठा द्वे एतानि द्विकानि द्विकानि 'ओं कृत्तिकाभ्यः स्वाहा, रोहिणीभ्यः स्वाहा' इत्यादिबहुवचनयुक्तानि जुहुयात्। शेषं द्वन्द्वद्वयं भाद्रपदद्वयं फल्गुनीद्वयं च द्विवचनयुक्तं जुहुयात्। शेषाण्येकवचनयुक्तानि। संत. ९१८

³देवतास्वपि हूयन्ते बहुवत्सर्पवस्वपः।
देवाश्च पितरश्चैव द्विवदेवाश्विनौ सदा॥
देवाः विश्वे देवाः। संत. ९१८

## आश्वलायनः

स्त्रीणां नामकरणममन्त्रकम्, होमः समन्त्रकः

†⁴जातकृत्यादि चूडान्तं स्त्रीणां कार्यममन्त्रकम्।
हुतकृत्यं तु पुंवत् स्यात् स्त्रीणां चूडाकृतावपि॥

## लघ्वाश्वलायनः

नामपूजामन्त्रः, स्वस्तिवाचने नामोच्चारणम्, ब्राह्मणभोजनम्

⁵आचार्येणात्र मन्त्रोऽयं नामानि तु(? ते) उदाहृतः।
नमस्करोत्यसौ देवं ब्राह्मणेभ्यः पिता वदेत्॥
त्रिभिः स्यात्प्रतिनामैवं ततः स्वस्तीति निर्दिशेत्।
भवन्तोऽस्य ब्रुवन्त्वेवं प्रतिब्रूयुस्तथा द्विजाः॥
ततन्नाम शिशोस्त्रिस्त्रिर्ब्रूयात्तत्र तथाऽऽशिषः।
ब्राह्मणान्भोजयेच्छक्त्या भुञ्जीयात् सह बन्धुभिः॥

## कश्यपः

मङ्गलघोषे रहस्यनामश्रावणम्

¹नाम मङ्गलघोषेण रहस्यं दक्षिणश्रुतौ॥

## शाकलकारिका:

मासादिनाम्नां सुवर्णेन लेखनं पूजनं कर्णोच्चारणं च, नामपूजामन्त्रः

²मासजन्मप्रवर्तानां(?) नामानि च लिखेत् क्रमात्।
सुवर्णेन च संपूज्य त्रिभिः कर्णे समुच्चरेत्॥
मन्त्रेणानेन संपूज्य नामानि ते शतक्रतो।
नमस्करोति विप्रेभ्यो ह्यसावित्युच्चरेत् पिता॥

## शौनककारिका:

नामकरणे विद्वदनुज्ञाग्रहणम्, पुण्याहवाचने स्वस्तिपर्याये नामोच्चारणम्, होमपक्षे स्विष्टकृद्धोमात्प्राक् पुण्याहवाचने नामकरणम्

³इदमार्याः कुमारस्य नामास्य विदधाम्यहम्।
इति विज्ञापितैर्विप्रैर्विद्वद्भिरनुमोदितम्॥
⁴नाम घोषवदादित्वाद्युक्तलक्षणसंयुतम्।
पुण्ये मुहूर्ते बालस्य विधेयं वेदपारगैः॥
⁵ब्राह्मणैः सार्धमारभ्य पूर्वं पुण्याहवाचनम्।
तत्र पुण्याहपर्यन्तं यथाविधि समाप्य च॥

---

† अस्य व्याख्यानं जातकर्मप्रयोगप्रकरणे (सं. का. पृ. २६८१) द्रष्टव्यम्।

(१) कास्मृ. ३।८५; संत. ९१८ (आग्नेया द्वेऽथ सर्पा द्वे विशाखा द्वे तथैव च। आषाढा द्वे धनिष्ठा द्वे अश्विन्या द्वे तथैव च॥).

(२) कास्मृ. ३।८६; संत. ९१८.

(३) कास्मृ. ३।८७ सर्पवस्वपः (सर्प्यपि त्रयः) पितरश्चैव (वसवश्चापि); संत. ९१८ तास्वपि (ता अपि) चतुर्थपादे (द्विवद्ब्रध्नाश्विनौ तथा).

(४) आश्वस्मृ. ११।१२०. शेषस्थलादिनिर्देशा जातकर्मप्रयोगप्रकरणे (सं. का. पृ. २६८१) द्रष्टव्याः.

(५) लघ्वाश्वस्मृ. ६।५-७.

(१) संम. १७.

(२) शाका. १५-१६ पृ. २.

(३) शौका. २ पृ. ३८; प्रपा. १६५ दितम् (दितः); संकौ. १०४.

(४) शौका. ३ पृ. ३८; प्रपा. १६५.

(५) शौका. ४ पृ. ३८; प्रपा. १६५; संकौ. १०४ पर्यन्तं (पर्यायं).

[1]स्वस्तिपर्यायमध्ये तु नामधेयं विधित्सितम् ।
चतुर्थ्यन्तमुदीर्याऽऽदौ पिता तन्नामकर्मणि ॥
[2]स्वस्तीत्याद्यं ब्रुवन्त्वन्तं भवत्पदमुदीरयेत् ।
वक्तारश्च चतुर्थ्यन्तबालनामोक्तिपूर्वकम् ॥
[3]स्वस्तीत्येव प्रतिब्रूयुरथ सर्वैरपि द्विजैः ।
सह मन्द्रमुदीर्याऽऽदौ पिता तन्नामकर्मणः ।
पुण्याहशेषं तत्सर्वं यथाविधि समाप्नुयात् ॥
[4]अत्रापि होमवत्पक्षे जातकर्मवदादितः ।
पुरस्तात्तन्त्रमाचार्यः कृत्वाऽनादेश आहुतीः ॥
[5]ततस्तेनैव पुण्याहप्रकारेण यथा पुरा ।
नामाऽऽधित्सितमाधाय ततः स्विष्टकृदादिकम् ।
उपरिष्टात्तनं तन्त्रं कुर्याच्चैव यथाक्रमम् ॥

---

(१) शौका. ५ पृ. ३८ कर्मणि ( कर्मणः ) ; प्रपा. १६५ शौकावत् ; संकौ. १०४.

(२) शौका. ६ पृ. ३८ ; प्रपा. १६५ त्याद्यं ( त्यादिं ) ; संकौ. १०४.

(३) शौका. ७–८ पृ. ३८ मन्द्र ( क्रान्त ) चतुर्थपादे ( तेन सर्वे समाप्नुयुः ) ; प्रपा. १६५.

(४) शौका. ११ पृ. ३८ ; प्रपा. १६५.

(५) शौका. १२–१३ पृ. ३८ ; प्रपा. १६५–१६६ यथा पुरा ( यथापरम् ) ऽऽधित्सि ( मीप्सि ).

## कुमारिलकारिकाः

स्वस्तिपर्याये नामोच्चारणम्

[1]स्वस्त्यस्मै देवदत्ताय ब्रूतेति ब्राह्मणान्वदेत् ॥

## कपर्दिकारिकाः

पुण्याहवाचने स्वस्तिपर्याये नामोच्चारणम्

[2]पुण्याहवाचने नाम्नि मध्यमे स्वस्तिवाचने ।
सूक्त्वा( ? उक्त्वा ) बालकनामानि स्वस्तीत्यन्यत् समं भवेत् ॥

## रेणुकारिकाः

वृद्धिश्राद्धपूर्वकं नामकरणम्

[3]ततस्तु नाम कुर्वीत पितैव दशमेऽहनि ।
उत्थाप्य पूर्वशय्यायाः पिण्डवर्धनपूर्वकम् ॥
ब्राह्मणान् भोजयित्वा त्रिप्रभृतींस्तत्र
देवताम् ( ? ) ॥

---

(१) कुका. १।९।३ ; प्रपा. १६५.

(२) कका. ६।६.

(३) रेका. १–२ पृ. १२.

# दोलारोहणम्

## बृहस्पतिः

दोलारोहणकालः

'दोलारोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा ।
षोडशे दिवसे वाऽपि द्वाविंशे दिवसेऽपि वा ॥

प्रेङ्खा दोलिका । क्वचित् खट्वेत्यपि पाठः ।

§ संप्र. २४६

## भविष्यपुराणम्

दोलारोहणे सावनदिवसः मुहूर्तश्च , शिशोः शिरोदिङ्नियमः

'अभीष्टे पुण्यदिवसे चन्द्रताराबलान्विते ।
मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः ।
योगशायिहरिं स्मृत्वा प्राक्शीर्षं विन्यसे-
च्छिशुम् ॥

(१) स्त्रीशूद्रयोरप्येतद्भवति, दृष्टार्थत्वात् ।

संप्र. २४७

---

§ संग. संप्रवत् ।

(१) प्रपा. १८१ दोला ( खट्वा ) विंशे दि ( त्रिंशद्दि ) ; गभा. १७३ दोला ( खट्वा ) पारिजाते ; संप्र. २४५ दोला ( प्रेङ्खा ) ' खट्वा ' इत्यपि पाठः , विंशे ( त्रिंशे ) ; सिन्धु. ९०९ ; शूक. ९७ गभावत्, पू . ; विपा. ४३१ विंशे ( त्रिंशे ) शेषं गभावत् ; ज्योनि. ११२ गभावत् ; संकौ. १०६ विंशे ( त्रिंशे ) इत्यपि पाठः ; संग. ५६५ शेऽपि वा (शेऽहनि) ; संव. ७१ विंशे ( त्रिंशे ) इत्यपि पाठः ; पुम. ४३४ विपावत् ; संर. ८७० द्वितीयपादे ( बालस्य द्वादशे दिने ), विंशे (त्रिंशे) इत्यपि पाठः .

(२) प्रपा. १८१ यिहरिं ( यं हरिं ) ; संप्र. २४६ प्रपावत् ; विपा. ४३१ ; ज्योनि. ११२–११३ अभीष्टे पु ( अभीष्टपु ) भेषु ( मे तु ) ; संकौ. १०५ ; संग. ५६६ ; संव. ७१ प्रथमपादे (अष्टमे दिवसे पुण्ये) चतुर्थपादे ( कुर्याद्दोलाधिरोहणम् ) तृतीयार्धं नास्ति ; पुम. ४३४ वा ( च ) शेषं प्रपावत् ; संर. ८७०.

(२) मृगः चित्रा रेवती अनुराधा मृदूनि । रोहिणी उत्तरात्रयं ध्रुवम् । हस्ताश्विन्यौ पुष्यम् अभिजित् क्षिप्राणि ।

§ संग. ५६६

'करत्रये वैष्णवरेवतीष्व-
दितिद्वये चाऽऽश्विनकध्रुवेषु ।
कुर्याच्छिशूनां नृपतेश्च तद्व-
दान्दोलनं वै सुखिनो भवन्ति ॥

'आन्दोलाशयने पुंसो द्वादशो दिवसः शुभः ।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा ॥

द्वादशो दिवसः षोडशदिवसस्योपलक्षणम् । जन्मदिवसात् द्वादशे षोडशे वा दिवसे पुंसः , त्रयोदशे कन्यायाः ।

संर. ८७१

'अन्यस्मिन् दिवसे चेत् स्यात् $तिर्यगास्ये
प्रशस्यते ॥

---

§ संर. संगवत् ।

$ अश्विनीमृगपुनर्वसुहस्तचित्रास्वात्यनुराधाज्येष्ठारेवत्यस्तिर्यगास्यानि नक्षत्राणि ।

(१) गभा. १७३ ष्वदिति ( षु दिति ) ज्योतिर्निबन्धे ; संप्र. २४२ श्विनक ( श्विनभ ) शेषं सर्वं गभावत् ; सिन्धु. ९१० चाऽऽ ( वाऽऽ ) ज्योतिर्निबन्धे ; शूक. ९७ ध्रुवेषु ( द्वयेषु ) शेषं सर्वं गभावत् ; ज्योनि. ११३ गभावत् ; संग. ५६६ सर्वं गभावत् ; संर. ८७१ रेवतीष्व ( पौष्णभे चा ) ज्योतिर्निबन्धे.

(२) गभा. १७३ ज्योतिर्निबन्धे ; संप्र. २४६ पुंसो ( पुंसां ) कन्याया ( कन्यानां ) ज्योतिर्निबन्धे ; सिन्धु. ९१० ज्योतिर्निबन्धे ; शूक. ९७ ज्योतिर्निबन्धे ; विपा. ४३२ प्रयोगसारे ; ज्योनि. ११३ उत्त ; संकौ. १०६ कन्याया ( कन्यायां ) ज्योतिर्निबन्धे ; संग. ५६६ ज्योतिर्निबन्धे ; संव. ७१ ज्योतिर्निबन्धे ; संर. ८७१ शयने ( रोहणे ) ज्योतिर्निबन्धे.

(३) गभा. १७३ ज्योतिर्निबन्धे ; संप्र. २४६ ज्योतिर्निबन्धे ; सिन्धु. ९१० ज्योतिर्निबन्धे ; ज्योनि. ११३ ;

## अनिर्दिष्टकर्तृकवचनानि

नक्षत्रविषये दोलिकाचक्रं नक्षत्रफलानि च

'सूर्यभाच्चन्द्रभं यावत्पञ्च पञ्च चतुर्दिशम् ।
मध्ये तु सप्त देयानि दोलिकाचक्र उत्तमे ॥
'पूर्वभागे निरोगत्वं दक्षिणे मरणं ध्रुवम् ।
पश्चिमे तु कृशो बाल उत्तरे व्याधिसंभवः ।
शेषेषु सप्तधिष्ण्येषु बालकस्य सुखं भवेत् ॥

## मुहूर्तचिन्तामणिः

दोलचक्रम्, दोलारोहणे सावनकालः वाराः नक्षत्राणि च

*'दोलारोहेऽर्कभात्पञ्चशरपञ्चेषुसप्तभैः ।
नैरुज्यं मरणं कार्श्यं व्याधिः सौख्यं क्रमा-
च्छिशोः ॥

अथ दोलारोहणमुहूर्ते विवक्षुस्तत्संबन्धिशुभाशुभफलदातृदोलाचक्रमनुष्टुभाऽऽह— दोलारोह इति । काष्ठलोहाद्याधारोपनिबद्धपरुषाघातवशादन्तरिक्षे गतागतं कुर्वन् अल्पो बालकयोग्यः पर्यङ्कविशेषो दोलाशब्देनोच्यते । तत्र शिशोः बालस्य दोलारोहे दोलास्थापने चिकीर्षिते सति अर्कभात् सूर्यनक्षत्रात् पञ्चनक्षत्रैर्नैरुज्यं नीरोगता स्यात्, तदग्रिमपञ्चनक्षत्रैर्मरणं स्यात्, तदग्रिमपञ्चनक्षत्रैः कार्श्यं देहे कृशत्वं स्यात्, तदग्रिमैः इषुभिः पञ्चनक्षत्रैः व्याधिः स्यात्, तदग्रिमसप्तनक्षत्रैः सौख्यं स्यादिति यथासंख्यं योजना । फलं चेदं शिशोरेव, संस्कार्यत्वात् । $ पीटी.

'दन्तार्कभूपधृतिदिङ्मितवासरे स्या-
द्वारे शुभे मृदुलघुध्रुवभैः
शिशूनाम् ।
दोलाधिरूढिः ... ॥

अथावसरप्राप्तं दोलामुहूर्तं वसन्ततिलकायाः पूर्वार्धेन ... आह— दन्तार्केति । दन्ताः द्वात्रिंशत् । अर्काः द्वादश । भूपाः षोडश । धृतयः अष्टादश । दिशः दश । एतन्मितदिवसेषु तथा शुभे वारे सोमबुधगुरुशुक्राणां वारे तथा मृदुगणलघुगणध्रुवगणनक्षत्रैरुपलक्षिते शिशूनां बालानां दोलाधिरूढिः दोलायाम् अधिरूढिः आरोहः स्यात् । $ पीटी.

## मुहूर्तगणपतौ

दोलारोहणे स्तन्यपाननक्षत्रातिदेशः, दोलाचक्रम्, शिरोदिङ्नियमः

'स्तन्यपानोक्तनक्षत्रे कुर्याद्दोलाधिरोहणम् ।
धृत्यर्कनृपदिग्दन्तवासरे जन्मतः शिशोः ॥
रविभात्पञ्चमे सौख्यं ततः पञ्चदशस्वपि ।
अशुभं च ततः शेषे शुभं दोलाधिरोहणम् ॥
दोलोक्तमे सुपर्यङ्के जननी वा सुवासिनी ।
योगशायिहरिं ध्यात्वा स्थापयेत्प्राक्शिरः-
शिशुम् ॥

---

* अत्र दोलाचक्रे हस्तादीनि पञ्च नक्षत्राणि आर्द्रादीनि सप्त नक्षत्राणि च शुभफलमुखेन दोलारोहणे विहितानि, अग्रिमश्लोके तु मृदुलघुध्रुवनक्षत्राणि विहितानीति द्वयोर्विधानयोर्विरोधः । स च मतभेदोक्त्यादिना मूले टीकायां संस्कारवत्से च न परिहृत इति चित्रम् ।

संको. १०६ ज्योतिर्निबन्धे ; संग. ५६६ ज्योतिर्निबन्धे, संव. ७१ ज्योतिर्निबन्धे.

(१) संप्र. २४६–२४७ ; संग. ५६६ वीरमित्रोदये ; संव. ७१ चक्र उत्तमे ( चक्रमुत्तमम् ).

(२) संप्र. २४७ निरो ( तिर्य ) ; संग. ५६६ निरोगत्वं ( च नैरुज्यं ) सुखं भवेत् ( भवेदिति ) द्वितीयार्धं नास्ति, वीरमित्रोदये ; संव. ७१ कस्य सुखं भवेत् ( कः शयने सुखी ).

(३) मुचि. ५।१४ ; संव. ७०–७१.

$ संव. पीटीवत् ।

(१) मुचि. ५।१५ ; संव. ७१.

(२) संव. ७१.

## प्रथमकञ्चुकधारणम्

### ज्योतिर्निबन्धे

प्रथमकञ्चुकधारणे तिथिवारनक्षत्रमुहूर्तचन्द्रताराबलानि, कञ्चुकवर्णः

'अश्विनीत्वाष्ट्रपौष्णेज्यमित्रोत्तरकरानिले ।
सितसौम्येज्यवारेषु जयापूर्णादिने तथा ॥
शुभे मुहूर्ते पूर्वाह्णे चन्द्रताराबलान्विते ।
शिशूनां धारयेत्तत्र कञ्चुकं चित्रवर्णकम् ।
नीलवर्णं शिशूनां च मुख्यं प्रथमकञ्चुकम् ॥

(१) संर. ८७२.

इज्यः तिष्यः । करः हस्तः । अनिलः स्वाती । सितः शुक्रः । जयाः तृतीयाष्टमीत्रयोदश्यः । पूर्णाः पञ्चमीदशमीपञ्चदश्यः । यद्यपि अविशेषात् पञ्चदशीत्वेन अमावास्याया अपि प्राप्तिः, तथाऽपि तस्याः शुभकर्मसु सामान्यतो निषिद्धत्वात् त्याज्येति द्रष्टव्यम् । एवं पूर्णमास्याः पूर्वार्धमपि त्याज्यम्, तस्य भद्रात्वेन निषिद्धत्वात् । संर. ८७२

# कर्णवेधः

## कर्णवेधविधिः

### बौधायनगृह्यशेषसूत्रम्

कर्णवेधकालः

[1]सप्तमेऽष्टमे वा मासि कर्णवेधः ॥

### पारस्करगृह्यपरिशिष्टम्

कर्णवेधकालः

§[2]अथ कर्णवेधः । वर्षे तृतीये पञ्चमे वा ॥

'अथ कर्णवेधः ...' इति गृह्यपरिशिष्टखण्डेन यद्यपि कर्णवेधस्तृतीयपञ्चमान्यतरवर्षे एव प्राप्नोति तथाऽपि 'अयुक्संवत्सरे प्राहुः कर्णवेधविधिं बुधाः ।' इति संस्कारप्रकाशे राजमार्तण्डवचनादयुग्मवर्षे कार्यः, 'कृतचूडेऽकृते बाले कर्णवेधो विधीयते ।' इति व्यासवचनात् । 'उपनीत्या सहैव वा' इति पक्षे चौलस्योपनयनसहभावित्वात् कर्णवेधस्य च तत्प्रागभावित्वात् कृतचूडत्वं न नियतम् । अत एव व्यासस्मृतौ $ नवमत्वेन निर्दिष्टोऽपि सोऽत्राष्टमत्वेन निर्दिष्टः, चौलानुष्ठानस्य उपनयनेन सहैव पर्वतीयसमाचारसिद्धत्वात् ।

संदी. २६२ ( भागः २ )

§ कर्णवेधसूत्रमिदं सभाष्यपञ्चकपारस्करगृह्यसूत्रपुस्तके नास्ति, नापि केनापि भाष्यकृताऽत्र व्याख्यातम् । दीपकादिभिर्गृह्यपरिशिष्टत्वेन गृहीतम् । चौखम्बामुद्रितपुस्तके तु पारस्करगृह्यसूत्रे समावेशितम् । अत एवास्माभिः पारस्करगृह्यपरिशिष्टत्वेनात्र संगृहीतम् । परिशिष्टानुपलम्भात् चौखम्बापुस्तकमनुसृत्य गृह्यसूत्रीय एव स्थलनिर्देशोऽत्र कृतः ।

$ चूडाकरणमष्टमत्वेन संख्याय कर्णवेधस्य नवमसंस्कारत्वेन संख्यातत्वेऽपीत्यर्थः । व्यासवचने प्रतिसंस्कारं प्रथमद्वितीयादिशब्दैः संख्यानाभावेऽपि 'संस्काराः षोडश स्मृताः' इति मिलितानां संख्यानात्प्रत्येकसंख्यानमर्थसिद्धम् । दीपके षोडश संस्कारास्तत्तत्संस्कारप्रकरणारम्भे '(१), (२)' इत्याद्यङ्कमुद्रणेन संख्याताः । तत्र कर्णवेधोऽष्टमत्वेन संख्यातः ।

(१) बौगृशे. १।१२।१.

(२) पागृ. ( चौखम्बामुद्रितम् ) २।२ ; गभा. १७४ याज्ञिकाः ; संग. ५७४ परिशिष्टम् ; संर. ८७४ गृह्यपरिशिष्टे ; संदी. २६१–२६२ (भागः २) गृह्यपरिशिष्टखण्डः.

### वसिष्ठः

कर्णवेधकालः

[1]मासे षष्ठे सप्तमे वाऽष्टमे वा
वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि ॥

### शङ्खः

छिद्रप्रमाणम्

[2]अङ्गुष्ठमात्रसुषिरौ कर्णौ न भवतो यदि ।
तस्मै श्राद्धं न दातव्यं दत्तं चेदासुरं भवेत् ॥

### बृहस्पतिः

कर्णवेधकालः, सूचीप्रकृतिधातवः तेषां वर्णभेदेन व्यवस्था च, सूचीप्रमाणम्

[3]जन्मतो दशमे वाऽह्नि द्वादशे वाऽथ षोडशे ।
सप्तमे मासि वा कुर्याद्दशमे मासि वा पुनः ॥

कर्णवेधं कुर्यादिति शेषः । संसौ. ६१

(१) सिन्धु. ९१० वसिष्ठश्रीधरौ ; शूक. ९८ ; पुम. ४३५.

(२) प्रपा. १८३ सुषिरौ ( विवरौ ) दत्तं चे (दद्याच्चे) ; गभा. १७४ ; सिन्धु. ९११ ; विपा. ४४५ दत्तं चे ( यदीच्छे ) ; ज्योनि. ११५ दत्तं ( यदि ).

(३) प्रपा. १८२ र्याद्दश ( र्यादष्ट ) ; संसौ. ६१ प्रपावत् ; संप्र. २५८ ; संम. १७ वाऽह्नि ( चाह्नि ) ; विपा. ४४२ ; ज्योनि. ११४ प्रपावत् ; संग. ५७४ ; संर. ८७२.

'शातकुम्भमयी सूची वेधने शोभनप्रदा ।
राजती वाऽऽयसी वाऽपि यथाविभवतः शुभा ॥

शातकुम्भं सुवर्णम् । संर. ८७४

'सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः ।
शूद्रस्य चाऽऽयसी सूची मध्यमाऽष्टाङ्गुलात्मिका ॥

( १ ) मध्याङ्गुलिमध्यमपर्वमितम् अङ्गुलम् , तेन प्रमाणेनाष्टाङ्गुलेत्यर्थः । संसौ. ६४

( २ ) मध्यमाङ्गुलिमध्यमपर्वमितम् अङ्गुलम् , तेन प्रमाणेनाष्टाङ्गुलेत्यर्थ इति प्राञ्चः । तन्न, अनक्षरार्थत्वात् । किंतु मध्यमा चासौ अष्टाङ्गुलात्मिकेति सम्यगर्थः । मध्यमा नातिस्वल्पा नात्यधिकेत्यर्थः । स्त्रीशूद्रयोरप्येतत् भवति, 'भिषग्वामे तु योषितः' 'शूद्रस्य चाऽऽयसी सूची' इति पूर्वोक्तलिङ्गात् । † संप्र. २६२–२६३

( ३ ) बालस्य मध्यमाङ्गुलिमध्यपर्वमिताङ्गुलेनाष्टाङ्गुलेत्यर्थः । ¶ संको. १११

## व्यासः

कर्णवेधकालः

'$कृतचूडे च बाले च कर्णवेधो विधीयते ॥

† संग. संप्रवत् ।

¶ संव. , संर. संकौवत् ।

$ अस्य संदीव्याख्यानं पारस्करगृह्यपरिशिष्टवचने ( सं. का. पृ. २७८१ ) द्रष्टव्यम् ।

(१) प्रपा. १८३ शोभन ( तु शुभ ) सुबोधे ; संसौ. ६४ (=) पू. ; संप्र. २६२ ; संम. १७ वाऽऽय ( चाऽऽय ) शेषं सर्वं प्रपावत् ; विपा. ४४४ (=) तः शुभा ( सारतः ) शेषं प्रपावत् ; ज्योनि. ११४ प्रपावत् , संग्रहे ; संग. ५७५–५७६ ; संर. ८७४ सर्वं प्रपावत् .

(२) गमा. १७४ मदनरत्ने ; संसौ. ६४ (=) ; संप्र. २६२ ; सिन्धु. ९११ ; शूक. ९८ मदनरत्ने ; संको. ११०–१११ ; संग. ५७६ ; संव. ८१ ; पुम. ४३५ वसिष्ठः ; संर. ८७४.

(३) व्यास्मृ. १।१९ ; संदी. २६२ ( भागः २ ) चूडे च बाले च ( चूडेऽव्रते बाले ).

## देवलः

छिद्रप्रमाणम्

'कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः ।
तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः ॥
'तस्मै श्राद्धं न दातव्यं यदि चेदासुरं भवेत् ॥

पुरुषकर्णरन्ध्रवृद्धिविषये विशेषमाह हेमाद्रौ देवलः – 'कर्णरन्ध्रे रवि ... पुरातनाः ॥' इति । § प्रपा. १८३

## गर्गः

कर्णवेधकालः

'मासे षष्ठे सप्तमे वाऽप्यष्टमे मासि वत्सरे ।
कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये ॥

( १ ) वत्सरे अयुग्म इत्यर्थः । संप्र. २५८

( २ ) 'वत्सरे' इति प्रथमवत्सरान्तर्गतानुक्तमाससंग्रहार्थम् । संको. ११०

§ विपा. , संर. प्रपावत् ।

(१) प्रपा. १८३ रवेश्छा ( रविच्छा ) ; गमा. १७४ पुरातनाः ( पुनः पुनः ) शेषं प्रपावत् ; संसौ. ६५ ; संप्र. २६३ ; सिन्धु. ९११ ; विपा. ४४५ ; ज्योनि. ११४–११५ प्रपावत् ; संको. १११ ; संग. ५७६–५७७ ; संर. ८७५.

(२) संप्र. २६३ ; संग. ५७७.

(३) प्रपा. १८२ ; संसौ. ६१ वाऽप्यष्टमे मासि ( वा अष्टमे वाऽपि ) वृद्धये ( वर्धनम् ) ; संप्र. २५८ वाऽप्यष्ट ( वा अष्ट ) ; संम. १७ वत्सरे । + ( कार्तिके पूर्णमासे वा चैत्रे वा फाल्गुनेऽपि वा । ) चतुर्थपादे ( शुक्लपक्षे शुभे दिने ) ; सिन्धु. ९१० ; शूक. ९८ पुष्ट्या ( पुण्या ) ; विपा. ४४२ चतुर्थपादे ( शुक्लपक्षे शुभे दिने ) ; ज्योनि. ११४ द्वितीयपादे ( ऽष्टमेऽपि द्वादशेऽपि वा ) ; संको. ११० संप्रवत् ; बाल. १।११–१२ पृ. ३० ; संग. ५७४ मासि वत्सरे ( द्वादशेऽह्नि वा ) ; संर. ८७३ ( मासेऽष्टमे सप्तमे वाऽप्यष्टमे वत्सरेऽथ वा । कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा । कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥ ).

## शालङ्कायनः

कर्णवेधस्य नियतत्वम्

[1]अविद्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च ।
दग्धकर्णैस्तु यद्भुक्तं तद्वै रक्षांसि गच्छति ॥

## संग्रहे

कर्णवेधकालः, पाठान्तरे सूचीप्रकृतिद्रव्यम्

[2]शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः ।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥

## नृसिंहः

कर्णवेधकालः

[3]वेध्यौ कर्णावदन्तस्य विषमेऽब्देऽपि वा
शिशोः ॥

## राजमार्तण्डः

कर्णवेधकालः

[4]अयुग्मवर्षे शुभदं शिशूनां
कर्णस्य वेधं मुनयो वदन्ति ॥

(१) प्रपा. १८३; संसौ. ६५ द्भुक्तं (द्भक्तं) कर्णैस्तु (कर्णैश्च); संप्र. २६३; विपा. २४५ कर्णैस्तु (कर्णैश्च); संग. ५७७.

(२) स्मच. २२ ज्योतिःशास्त्रम्; चका. ७४१; मपा. ३५९ ज्योतिःशास्त्रे; प्रपा. १८३; संसौ. ६४ सर्पिणः । सौचिको (शायिनः । सुलौह्या) रत्नमालायाम्; संप्र. २६१ 'सूच्या' इत्यत्र 'लौह्या' 'शल्या' इत्यपि पाठौ, श्रीपतिः; मुक्ता. ८२ सायणीये; विपा. ४४३ (=); ज्योनि. ११४ सौचि (सूचि); आन. १४८ जातदन्त (दन्तजात) सायणीये; बाल. १।११–१२ पृ. ३० ज्यौतिषोक्तम्; पुम. ४३५ व्यासः; संर. ८७४ द्वितीयपादे (मात्रुत्सङ्गगतस्य च).

(३) ज्योनि. ११४; संग. ५७५ ब्देऽपि वा (ब्दे पिता) ज्योतिर्निबन्धे.

(४) संसौ. ६१; संप्र. २६१; संग. ५७४ वीरमित्रोदये.

[1]अयुक्संवत्सरे प्राहुः कर्णवेधविधिं बुधाः ॥

## श्रीधरीये

कर्णवेधकालः

[2]मासे षष्ठे सप्तमे वाऽष्टमे वा
वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि ॥

अस्यार्थः– जातस्य जन्मदिवसात् द्वादशे षोडशे वा दिवसे षष्ठे सप्तमेऽष्टमे वा मासि शिशोः कर्णौ वेध्यौ ।
प्रपा. १८२

## मुहूर्तचिन्तामणिः

कर्णवेधकालः

‡[3]हित्वैतांश्चैत्रपौषावमहरिशयनं
जन्ममासं च रिक्तां
युग्माब्दं जन्मतारामृतुमुनिवसुभिः
संमिते मास्यथो वा ।
जन्माहात्सूर्यभूपैः परिमितदिवसे
ज्ञेज्यशुक्रेन्दुवारे-
ऽथौजाब्दे विष्णुयुग्मादितिमृदुलघुभैः
कर्णवेधः प्रशस्तः ॥

## मुहूर्तसंग्रहे

कर्णवेधकालः

[4]दशमे द्वादशे वाऽह्नि षोडशे कर्णवेधनम् ।
प्रथमे सप्तमे मासि अष्टमे दशमेऽथवा ।
द्वादशे च तथा कुर्यात् कर्णवेधं शुभावहम् ॥

‡ अस्य व्याख्यानं मुहूर्तप्रकरणे द्रष्टव्यम् ।

(१) संसौ. ६१ अयुक् (ऊर्जे) धिं बु (धिर्बु); संप्र. २५८; संकौ. ११०; संग. ५७४; संब. ८०; संबी. २६२ (भागः २).

(२) प्रपा. १८२; सिन्धु. ९१० वसिष्ठश्रीधरौ; विपा. ४४२ वेध्यौ कर्णौ (कर्णौ वेध्यौ); आन. १४८ ज्योतिषे.

(३) मुचि. ५।२४; संब. ८०.

(४) गभा. १७४ मेऽथवा (मे तथा) प्रथमार्धे नास्ति, मदनरत्ने; संप्र. २५८; सिन्धु. ९१० प्रथमार्धे

## मुहूर्तगणपतौ

### कर्णवेधकालः

[१]शुभे वारे हि जन्माहाद्द्वादशे षोडशे दिने ।
कर्णवेधोऽथवा मासे षष्ठे सप्ताष्टमेऽपि वा ॥

नास्ति, मदनरत्ने ; संको. ११० ; संग. ५७४ सर्वे गभावत् ; संब. ८० ऽथवा ( ऽपि वा ) ; संर. ८७३ मासि ( वाऽपि ) च तथा कुर्यात् ( वा प्रकुर्वीत ) प्रथमार्धे नास्ति, मदनरत्ने.

(१) संब. ८०.

युग्माब्दं जन्ममासं च पौषं चैत्रं हरेः शयम् ।
जन्मतारां विहायाथ ह्युत्तरेऽपि च केचन ॥

## रेणुकारिकाः

### कर्णवेधकालः

[१]शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः ।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥
[२]पञ्चमेऽब्दे तृतीये वा... ॥

(१) रेका. ५ पृ. १४ ; प्रपा. १८२ तृतीयपादे ( सव्यं च वेधयत्कर्णं ) कारिका ; संग. ५७४ पृ.

(२) रेका. ६ पृ. १४.

# कर्णवेधमुहूर्तः

## पारस्करगृह्यपरिशिष्टम्

कर्णवेधे नक्षत्राणि, दिवसभागः

... $ 'पुष्येन्दुचित्राहरिरेवतीषु पूर्वाह्णे ... ॥

## वसिष्ठः

कर्णवेधे दिवसभागः, निषिद्धानि तिथिग्रहसंस्थानानि

'मध्ये वाऽह्नः पूर्वभागे न रात्रौ
नक्षत्रे द्वे द्वे तिथी वर्जयित्वा ॥

यस्मिन्दिने नक्षत्रद्वयं तिथिद्वयं वा तद्दिनं वर्जयेदित्यर्थः । ¶ पुम. ४३५

'न कश्चिदिष्टोऽष्टमराशिसंस्थ-
स्तिथिद्वयं चावमसंज्ञकं च ।
न तत्र कुर्याद्दिवसे विशेषा-
द्रात्रौ न कुर्यात्खलु कर्णवेधम् ॥

## नारदः

कर्णवेधे मतभेदेन राशयो लग्नानि वा

'वृषभे मिथुने मीने कुलीरे कन्यकासु च ।
तुलाचापे तु कुर्वीत कर्णवेधं शुभर्द्धये ॥

'मेषश्च मकरश्चैव मध्यमौ गुरुचोदितौ ।
सिंहवृश्चिककुम्भाश्च अधमत्वाद्विवर्जिताः ॥

(१) अथ राशयोऽभिधीयन्ते– ... नारदश्च– 'वृषभे ...' इति । $ प्रपा. १८२

(२) लग्नव्यवस्थां नारदः– 'वृषभे...' इति । संकौ. ११०

## बृहस्पतिः

कर्णवेधे तिथिवारनक्षत्रयोगकरणराशिनवांशाः, दिवसभागः, तिथिद्वयनक्षत्रद्वयवद्दिननिषेधः, ग्रहसंस्थानम्

'द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ।
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥
'एकादश्यष्टमीपर्वरिक्ता वर्ज्याः शुभावहाः ।
शिष्टाश्च तिथयः सर्वाः कृष्णे चान्त्यत्रिकं विना ॥

अनेन कृष्णपक्षेऽप्येतत् सिध्यति । संप्र. २६०

'शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ।
शुभयोगेषु सर्वेषु कर्णवेधः शुभावहः ॥

---

$ विधिप्रकरणे (सं. का. पृ. २७८१) एतत्सूत्रपूर्वभागे टिप्पणी द्रष्टव्या ।

¶ कुभ. पुमवत् ।

(१) पागृ. (चौखम्बामुद्रितम्) २१२; गभा. १७४ याज्ञिकाः; संग. ५७४ परिशिष्टम्; संर. ८७४ गृह्यपरिशिष्टे; संवी. २६१–२६२ (भागः २) गृह्यपरिशिष्टखण्डः.

(२) सिन्धु. ९१० मध्ये वाऽह्नः (मध्येनाह्नः) वसिष्ठश्रीधरौ; पुम. ४३५.

(३) संप्र. २६१; संग. ५७५ चावम (वा यम); पुम. ४३५.

(४) प्रपा. १८२; संप्र. २६१ शुभर्द्धये (शुभं द्वये); ज्योनि. ११४ तु (च) बृहन्नारदः; संकौ. ११० संप्रवत्; संग. ५७५ शुभर्द्धये (शुभावहम्) वृद्धनारदः; संर. ८७४.

$ संप्र., संर. प्रपावत् ।

(१) प्रपा. १८२ चतुर्थपादे (मध्यत्वादपि वर्जिताः); संप्र. २६१; ज्योनि. ११४ अधम (ह्यधम) बृहन्नारदः; संकौ. ११० चोदि (नोदि); संर. ८७४ चतुर्थपादे (अधमाः परिकीर्तिताः).

(२) गभा. १७४ मदनरत्ने; संसौ. ६३ (=) शस्ता तृ (शस्तास्तृ); संप्र. २६०; सिन्धु. ९११; संकौ. ११०; बाल. १।११–१२ पृ. ३०; संब. ८१ (=); पुम. ४३५.

(३) प्रपा. १८२–१८३; संप्र. २६० मीपर्वरि (मी पर्व रि) नृसिंहः; ज्योनि. ११४ नृसिंहः; संकौ. ११० (एकादश्यष्टमीपर्वरिक्ता वर्ज्याः) एतावदेव, नृसिंहः; संग. ५७५ रिक्ता व (रिक्ताव) शिष्टा (श्रेष्ठा) नृसिंहः; संर. ८७३.

(४) प्रपा. १८३; संप्र. २६०; ज्योनि. ११४ नृसिंहः; संकौ. ११० उत्त., कश्यपः; संग. ५७५ विष्टिं च (विष्टिश्च) नृसिंहः.

आदिशब्दात् चतुष्पान्नागकिंस्तुघ्नानि गृह्यन्ते ।

संप्र. २६०

[1]मन्दारार्कांशवारास्तु वर्ज्याः स्युः कर्णवेधने ।
गुरुशुक्रेन्दुजेन्दूनां पूज्या वारांशकोदयाः ॥

मन्दः शनिः । आरः भौमः । इन्दुजः बुधः ।

संर. ८७३

[2]भूमिजार्कात्मजार्काणां दिवसान्परिवर्जयेत् ।
जीवेन्दुजेन्दुशुक्राणां दिवसाः पूजिता मताः ॥
[3]तस्मिन्वारे तिथौ तारे द्वे द्वे युक्ते न शोभने ।
संध्योर्द्वयोः पुराः पश्चाद्दिनानि शुभतारयोः ।
पूर्वाह्णे सुप्रशस्तं स्यादपराह्णे न शोभनम् ॥
[4]एकं भद्रकमल्परन्ध्रमपरं स्यात्कर्णयुग्मं बुधे
सोमे शीर्णतनु व्रणेन सहितं शस्तं गुरौ भार्गवे ॥

' एकं भद्रक... भार्गवे ' इति तु वचनं क्षीणेन्दुवासरविषयं पापाक्रान्तबुधवासरविषयं वेति ध्येयम् ।

संसौ. ६२–६३

[5]वागीशशुक्रेन्दुजवासरेषु
शस्तः शिशूनामपि कर्णवेधः ।
वदन्ति तज्ज्ञाः रवीन्दुभौम-
मन्दे कृते श्रुट्यति कर्णयुग्मम् ॥
[6]सौम्यार्द्रार्यादित्युत्तराहस्तचित्राश्विविष्णुभम् ।
धनिष्ठा रेवती चैव शुभाः स्युः कर्णवेधने ॥

( १ ) आर्यः पुष्यः । $ संप्र. २६०

( २ ) सौम्यं मृगशिरः । आर्यः गुरुः, तस्य नक्षत्रं पुष्यः । वेधने कर्णवेधने । संर. ८७३

[1]जन्मर्क्षे कर्मनक्षत्रे आधानर्क्षे च वर्जयेत् ।
कर्णवेधं तथा यानं क्षौरकर्मान्नभोजनम् ॥
[2]स्थिराः श्रेष्ठाश्चरा निम्ना मध्यमाश्चोभये स्मृताः ।
मध्यमे शेषिताः सर्वे शुभाः स्युः कर्णवेधने ॥
[3]रन्ध्रारिव्ययगो नेष्टो गुरुः शेषेषु शोभनः ।
सुतरन्ध्रगतः सौम्यो नेष्टः शेषेषु शोभनः ॥
[4]सप्ताष्टमगतः शुक्रो न शुभोऽन्यत्र शोभनः ।
चन्द्रो द्वित्रिसुतस्त्रीषु धर्मकर्मगतः शुभः ॥

( १ ) सुतः पञ्चमः । धर्मः नवमः । कर्म दशमः । शेषाः प्रसिद्धाः । प्रपा. १८३

( २ ) रन्ध्रः नवमः । अरिः षष्ठः । व्ययः द्वादशः । स्त्री सप्तमः । ‡ संप्र. २६१

[5]त्रिषडायगताः पापाः शुभाः कर्णस्य वेधने ।
अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युः कर्णवेधने ॥

---

(१) प्रपा. १८२ ; ज्योनि. ११४ रास्तु वर्ज्याः स्युः कर्णवे ( राः स्युर्वर्ज्याः कर्णस्य वे ) ; संर. ८७३ पूर्वार्धे ( मन्दारसूर्यवाराः स्युर्वर्ज्याः कर्णप्रवेधने । ).

(२) संसौ. ६३ (=) द्वितीयपादे ( वारान् संवर्जयेत्सुधीः ) पूजिता मताः ( परिपूजिताः ) ; संप्र. २६० ; संको. ११० ; पुम. ४३५ पू.

(३) प्रपा. १८२.

(४) संसौ. ६२ (=) ; संप्र. २६०.

(५) ज्योनि. ११४.

(६) प्रपा. १८२ चित्राश्विवि ( चित्राश्व वि ) धनि (श्रवि) ; संप्र. २६० ; संको. ११० द्रार्यादित्युत्तरा (र्यादित्युत्तरात्रि) ; संव. ८१ (=) संकोवत् ; संर. ८७३ र्यादित्युत्तरा ( र्योत्तरादित्य ) धनि ( श्रवि ) भाः स्युः कर्णवे ( भान्येतानि वे ).

$ संको. संप्रवत् ।

‡ शेषं प्रपावत् ।

(१) संव. ७६.

(२) प्रपा. १८२.

(३) प्रपा. १८३ गुरुः शेषे ( गुरुः शिष्टे ) सुतर (शुभो र) नेष्टः ( नष्टः ) ; संप्र. २६१ द्वितीयपादे ( गुरुः शेषः सुशोभनः ) पू. ; ज्योनि. ११४ सुतरन्ध्र ( चतुरस्र ) ; संग. ५७५ वृद्धनारदः .

(४) प्रपा. १८३ ; संप्र. २६१ ; ज्योनि. ११४ ; संग. ५७५ वृद्धनारदः .

(५) प्रपा. १८३ ; संप्र. २६१ स्युः कर्णवे ( कर्णस्य वे ) ; ज्योनि. ११४ स्था ग्रहाः ( स्थानगाः ) शेषं संप्रवत् ; संग. ५७५ पापाः (सौम्याः) पू. , वृद्धनारदः ; संर. ८७४ उत्त.

[1]कर्णवेधे त्रिलाभस्थौ क्रूरौ नेष्टौ शुभाशुभौ ॥
[2]कर्णवेधादिकार्येषु नेष्टाः सर्वेऽष्टमस्थिताः ।
कर्णवेधो विनिर्देश्यो लग्नस्थे भार्गवे गुरौ ।
तदभावेऽन्यकेन्द्रस्थे तदभावे त्रिकोणगे ॥

### व्यासः

कर्णवेधे मासपक्षशुभदिनानि, जन्ममासनिषेधः

[3]कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥

(१) 'न जन्ममासे न च चैत्रपौषे न भाद्रसंज्ञे न हरौ प्रसुप्ते । तिथौ न रिक्ते न च विष्टिदुष्टे कर्णस्य वेधं मुनयो वदन्ति ॥' इति व्यवहारोच्चये चैत्रपौषनिषेधः स मीनधनुर्विषयः, कार्तिकविधिस्तु बोधिन्युत्तरविषय इति न विरोधः । संप्र. २५९

(२) तत्र तृतीयादिवत्सरे च नियममाह व्यासः– 'कार्तिके... दिने ॥' इति । ‡ संको. ११०

[4]यो जन्ममासे क्षुरकर्म यात्रां
कर्णस्य वेधं कुरुतेऽतिमोहात् ।
मूढः स रोगी धनपुत्रनाशं
प्राप्नोति गूढं वधबन्धनानि ॥

‡ शेषं संप्रवत् ।

(१) ज्योनि. ११४ ; संग. ५७५ वृद्धनारदः .

(२) संसौ. ६३ सर्वेऽष्टमस्थिताः ( सर्वे पापा जुगुप्सिताः ). प्रथमार्धपाठः पीयूषधारातः ( पीटी. ५।२५ ) संगृहीतः .

(३) स्मृच. २२ ज्योतिःशास्त्रम् ; चका. ७४१ वा फाल्गुने (फाल्गुनके) ज्योतिःशास्त्रे ; मपा. ३५९ ज्योतिःशास्त्रे ; गभा. १७४ ; संसौ. ६२ मासे वा ( मासे च ) दिने ( ऽहनि ) ; संप्र. २५९ ; मुक्ता. ८२ शुक्लपक्षे ( शुक्ले पक्षे ) सायणीये ; सिन्धु. ९११ ; शूक. ९८ ; संको. ११० ; बाल. १।११–१२ पृ. ३० ज्यौतिषोक्तम् ; संग. ५७५ ; संब. ८१ ; पुम. ४३५.

(४) प्रपा. १८२ तेऽतिमो ( ते तु मो ) मूढः ( नूनं ) गूढं (मूढो) : १९३ मूढः (नूनं) गूढं (नूनं) : २०० मूढः (नूनं) गूढं (मूढो) ; संप्र. २५९ वधबन्ध-



जन्ममासो जन्मनक्षत्रादेरप्युपलक्षणम् । संप्र. २५९

### गर्गः

कर्णवेधे मासपक्षतिथयः

[1]कार्तिके पूर्णमासे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥

(१) कार्तिकादिकं $पूर्वकालापेक्षया भिन्नम् । पूर्णमास इति स्वतन्त्रः कालः, न विशेषणविशेष्यभावः । संम. १७

(२) अनन्तरोदाहृतगर्गवाक्यगतकार्तिकविधिस्तु बोधिन्युत्तरभागविषयो द्रष्टव्यः । संर. ८७३

### बादरायणः

कर्णवेधे पक्षतिथिवारनक्षत्रग्रहसंस्थानानि

[2]मूले चाश्विविधातृचित्रसहिते
हस्ते त्रिपूर्वे तथा
चन्द्रे तिष्यपुनर्वसौ शतभिषग्-
वारे तिथौ शोभने ।
लग्ने सौम्ययुते तथा स्थिरगृहे
पक्षे सिते वा ततः
केन्द्रे शुक्रबृहस्पती शुभकरौ
कर्णस्य वेधे स्मृतौ ॥

### कश्यपः

कर्णवेधे वारनक्षत्रचन्द्रबललग्नानि

[3]हस्ताश्विनीस्वातिपुनर्वसौ च
तिष्येन्दुचित्राहरिरेवतीषु ।
चन्द्रेऽनुकूले गुरुशुक्रवारे
कर्णौ तु वेध्यावमरेज्यलग्ने ॥

$ विधिप्रकरणे ( सं. का. पृ. २७८२ ) गर्गवचने पूर्वकालो द्रष्टव्यः ।

नानि (निधनं तदाऽऽशु); संम. १७ नानि ( नादि ) ; विपा. ४४३ तेऽतिमो ( ते तु मो ) रोगी ( रोगं ) गूढं वधबन्धनानि (शोकं च समस्तमेतत् ); पुम. ४३७ पू .

(१) संम. १७ ; ज्योनि. ११४ पूर्ण ( पौष ) ; संर. ८७३ ज्योनिवत् . (२) संसौ. ६३.

(३) स्मृच. २२ ज्योतिःशास्त्रम् ; चका. ७४१ मरेज्य ( मरेड्य ) ज्योतिःशास्त्रे ; मपा. ३५५ वेध्यावम (वेध्यौ

( १ ) अमरेज्यः बृहस्पतिः । स्मृच. २२

( २ ) अमरेज्यः बृहस्पतिः । चका. ७४१

( ३ ) अमले ग्रहदोषशून्ये । संर. ८७४

## अगस्त्यः

संध्याकाल्यो रात्रौ तिथिनक्षत्रसंधिषु च कर्णवेधनिषेधः

[1]द्वयोश्च संध्ययोर्लग्ने न कुर्यात् कर्णवेधनम् ।
रात्रावपि तथा लग्ने नक्षत्रतिथिसंधिषु ।
कर्णवेधं न कुर्वीत कुर्याच्चेच्छेदनं भवेत् ॥

छेदनं नाशः । संर. ८७४

## अनिर्दिष्टकर्तृकवचनानि

कर्णवेधे मासनक्षत्रवाराः

[2]प्रथमे जन्ममासे तु कर्णवेधं शुभं विदुः ॥
[3]पुष्येऽनुराधाश्रवणे च मैत्रे
पौष्णादितौ त्वाष्ट्रसवासवार्के ।
शुष्यन्ति वेधाद्विरुजो भवन्ति
नो पीड्यते जातु शिशुः कदाचित् ॥
शुष्यत्यर्कदिने द्रुतं शशभृति
स्यादार्द्रता कर्णयोः
सौरे बन्धुविभिन्नता श्रवणयोः
षष्ठे सुते त्रुट्यति ॥

प्रव ) ज्योतिःशास्त्रे ; प्रपा. १८२ वंसौ ( वंसू ) चन्द्रेऽनु ( चन्द्रानु ) रेज्यलग्ने ( ले च लग्ने ) कारिका ; संप्र. २६० द्वितीयपादे ( चित्रेन्दुतिष्ये श्रवणे च पौष्णे ) ; बाल. १। ११–१२ पृ. ३० रेज्यलग्ने ( ले च लग्ने ) ज्यौतिषोक्तम्; पुम. ४३५ नीस्वातिपुनर्वसौ ( नी स्वातिपुनर्वसू ) शेषं संप्रवत्; संर. ८७३ वंसौ ( वंसू ) रेज्यलग्ने ( ले च लग्ने ) चण्डेश्वरः.

(१) प्रपा. १८२ लग्ने न (लग्नन) ; ज्योनि. ११४ ; संर. ८७४.

(२) संर. ८७३.

(३) चका. ७४१.

## संग्रहे

कर्णवेधे शोभननक्षत्रचन्द्रलग्नानि ग्राह्याणि , त्याज्ययोगादि

[1]सुनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदये शुभे ।
दिनच्छिद्रव्यतीपातविष्टिवैधृतिवर्जिते ॥

कर्णवेध इति शेषः । संप्र. २६१

## लल्लः

कर्णवेधे गुरुबलम्

[2]नीचस्थे वक्रसंस्थे त्वतिचरणगते
बालवृद्धेऽस्तगे वा
संन्यासो देवयात्राव्रतनियमविधिः
कर्णवेधश्च दीक्षा ।
मौञ्जीबन्धो नराणां परिणयनविधि-
र्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपति-
गुरौ सिंहराशिस्थिते च ॥

## वराहसंहिता

कर्णवेधे नक्षत्रलग्नग्रहसंस्थानानि

[3]लाभे तृतीये च शुभैः समेते
क्रूरैर्विहीने शुभराशिलग्ने ।
वेध्यौ तु कर्णौ त्रिदशेज्यलग्ने
तिष्येन्दुचित्राहरिरेवतीषु ॥
पापाख्यिलाभाष्टमराशिसंस्था-
स्तिथिद्वयं चावमसंज्ञकं च¶ ॥

¶ अतः परं श्लोकार्धं प्रभ्रष्टमिति भाति ।

(१) स्मृच. २२ ज्योतिःशास्त्रम् ; चका. ७४१ सुनक्षत्रे ( पुंनक्षत्रे ) ये शुभे ( येऽपि वा ) ज्योतिःशास्त्रे ; मपा. ३५९ द्रव्यतीपातवि ( द्रेऽव्यतीपाते वि ) ज्योतिःशास्त्रे ; प्रपा. १८३ ; संप्र. २६१ वैधृति ( वेधवि ) ; विपा. ४४३ (=) ; पुम. ४३५ उत्त. व्यासः ; संर. ८७४ च्छिद्र ( च्छिद्रा ) उत्त.

(२) अस्य स्थलादिनिर्देशो विवाहमुहूर्तप्रकरणे ( सं. का. पृ. १०२२ ) द्रष्टव्यः .

(३) संसौ. ६३.

## नृसिंहः

कर्णवेधे मासपक्षवारनक्षत्रग्रहसंस्थानानि

[1]कर्णद्वयादितिक्षिप्रमृदुभिस्त्रायगैः शुभैः ।
गुरौ लग्नेऽथ केऽप्याहुरुत्तरासु श्रुतिव्यधम् ॥

[2]वेध्यौ कर्णावदन्तस्य विषमेऽब्देऽपि वा शिशोः ।
शुक्लपक्षे शुभे वारे चैत्रे पौषोर्जफाल्गुने ॥

## राजमार्तण्डः

कर्णवेधे सूर्यचन्द्रगुरुताराबलानि

[3]अर्केऽनुकूले शशिनि प्रशस्ते
ताराबले चन्द्रविवृद्धिपक्षे ।
अयुग्मवर्षे शुभदं शिशूनां
कर्णस्य वेधं मुनयो वदन्ति ॥

[4]ताराचन्द्रानुकूलेऽह्नि शस्ते भास्वति वाक्पतौ ।
अयुक्संवत्सरे प्राहुः कर्णवेधविधिं बुधाः ॥

## श्रीधरीये

कर्णवेधे तिथिवारनक्षत्रलग्नानि दिवसभागः ग्रहसंस्थानं च, तिथिद्वयवत् नक्षत्रद्वयवच्च दिनं वर्ज्यम्

[5]मध्ये वाऽह्नः पूर्वभागे न रात्रौ
नक्षत्रे द्वे द्वे तिथी वर्जयित्वा ॥

अह्नः पूर्वभागे मध्यभागे वा कर्णौ वेध्यौ, न तु रात्रौ । नक्षत्रद्वययुक्ते तिथिद्वययुक्तेऽह्नि च संधेः प्राक् पश्चात् वर्जयेत् । § प्रपा. १८२

[1]हरिहरकरचित्रासौम्यपौष्णोत्तरार्या-
दितिवसुषु घटालीसिंहवर्जे विलग्ने ।
शशिबुधगुरुकाव्यानां दिने पर्वरिक्ता-
रहिततिथिषु शुद्धे नैधने कर्णवेधः ॥

अस्यार्थः– श्रवणादिषु द्वादशसु नक्षत्रेषु कर्णौ वेध्यौ । अथ राशयोऽभिधीयन्ते– घटालीति । एभिस्त्रिभिः वर्जितेषु कर्णवेधः स्यात् । अथ वारा विधीयन्ते–शशीति । चन्द्रगुरुशुक्राणां वारेषु कर्णवेधः कार्यः । अथ तिथिविधिः– पर्वेति । पर्वद्वयेन रिक्ताभिश्च वर्जितासु तिथिषु कर्णवेधः कार्यः । अथ लग्नगोचरमाह– शुद्धे नैधन इति । नैधनम् अष्टमम् । तस्मिन् सर्वग्रहरहिते कर्णवेधः कार्यः । प्रपा. १८२–१८३

## ज्योतिःसागरे

कर्णवेधे मीनरवौ चैत्रः धनूरवौ पौषश्च वर्ज्यः

[2]मीनस्थिते रवौ चैत्रे पौषे चापस्थिते तथा ।
कर्णवेधं नैव कुर्यादिति प्राहुर्मनीषिणः ॥

## मुहूर्तचिन्तामणिः

कर्णवेधे मासतिथिवारनक्षत्रलग्नग्रहसंस्थानानि

[3]हित्वैतांश्चैत्रपौषावमहरिशयनं जन्ममासं च रिक्तां
युग्माब्दं जन्मतारामृतुमुनिवसुभिः संमिते मास्यथो वा ।

---

(१) ज्योनि. ११४ ; संग. ५७५ मृदुभि ( मृदुभे ) व्यधम् ( व्वधः ).

(२) ज्योनि. ११४ ; संग. ५७५ ब्देऽपि वा ( ब्दे पिता ) चैत्रे पौ ( चैत्रपौ ) ज्योतिर्निबन्धे.

(३) संसौ. ६१ ; संप्र. २६१ ; संग. ५७४ वीरमित्रोदये.

(४) संसौ. ६१ अयुक् ( ऊर्ब ) धिं बुधाः ( धिर्बुधाः ) ; संप्र. २५८ ; संको. ११० कूले (कूल्ये) ; संग. ५७४ ; संब. ८० ; संदी. २६२ ( भागः २ ) उत्त.

(५) प्रपा. १८२ ; सिन्धु. ९१० मध्ये वाऽह्नः ( मध्येनाह्नः ) वसिष्ठश्रीधरौ ; विपा. ४४२.

§ क्रम. प्रपागतम् ।

(१) प्रपा. १८२ ; सिन्धु. ९११ हर ( हय ) वर्जे वि ( वर्ज्ये सु ) रिक्ता ( रिक्त ) ; विपा. ४४३ वर्जे वि ( वर्ज्ये सु ) ; संर. ८७४ हरिहरकर ( हरकरवसु ) र्यादितिवसुषु ( श्विन्यदितिषु तु ) विलग्ने ( सुलग्ने ).

(२) संर. ८७३.

(३) मुचि. ५।२४–२५ ; संब. ८०.

जन्माह्वात्सूर्यभूपैः परिमितदिवसे

ज्ञेज्यशुक्रेन्दुवारे-

ऽथौजाब्दे विष्णुयुग्मादितिमृदुलघुभैः

कर्णवेधः प्रशस्तः ॥

( १ ) कर्णवेधमुहूर्ते स्रग्धरयाऽऽह– हित्वेति । अत्र एतान् पदार्थान् हित्वा कर्णवेधः प्रशस्त इत्यन्वयः । कान् ? तत्र चैत्रं पौषमासं च, अवमं दिनक्षयम्, हरिशयनम् आषाढशुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यन्तम्, जन्ममासम् ‘ आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु ॥ ’ इति लक्षणलक्षितम्, रिक्तां तिथिम् ४।९।१४, युग्माब्दं समवर्षं द्वितीयचतुर्थादिकम्, जन्मतारां प्रथमदशमैकोनविंशात्मिकां हित्वा । अत्र चैत्रस्य निषेधो मीनार्कविषयः, पौषनिषेधो धनुरर्कविषयः, अन्यथा ‘ कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा । कर्णवेधं प्रशंसन्ति शुक्ले पक्षे शुभेऽहनि ॥ ’ इति व्यासवचनमसंगतं स्यात् । अत्र कार्तिकशुक्लपक्षैकादशीतः कार्तिकः प्रशस्तः । पूर्वस्य देवशयनसत्वात् निषेधः । विहितकालमाह– ऋत्विति । ऋतवः षट् । मुनयः सप्त । वसवः अष्टौ । एतैः संमिते गणिते मासि षष्ठे मासे सप्तमे मासेऽष्टमे मासे वा, अथो वा जन्माह्वात् सूर्यभूपैः द्वादशषोडशभिर्वा परिमिते गणिते दिवसे सौरसावने कर्णवेधः प्रशस्तः उक्तः । ज्ञेज्यशुक्रेन्दुवार इति । बुधबृहस्पतिशुक्रचन्द्रवारेषु प्रशस्तः कर्णवेधः । अथौजेति । ओजाब्दे विषमवर्षे वा कर्णवेधः प्रशस्तः । सूर्यबले सतीत्यपि ध्येयम् । विष्ण्विति । श्रवणधनिष्ठापुनर्वसुचित्रानुराधामृगरेवत्यश्विनीपुष्यहस्तनक्षत्रैर्दशभिरुपलक्षिते काले कर्णवेधः प्रशस्तः । पीटी.

(२) जन्ममासम्, यस्मिन् चान्द्रमासे चैत्रादौ जन्म स जन्ममासः । केचित् ‘ आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु ॥ ’ इति लक्षणलक्षितं वर्जयन्ति । † संव. ८०

† शेषं पीटीगतम् ।

संशुद्धे मृतिभवने त्रिकोणकेन्द्र-

ऽयायस्थैः शुभखचरैः कवीज्यलग्ने ।

पापाख्यैररिसहजायगेहसंस्थै-

र्लग्नस्थे त्रिदशगुरौ शुभावहः स्यात् ॥

कर्णवेधे लग्नशुद्धिं प्रहर्षिण्याऽऽह– संशुद्ध इति । मृतिभवने अष्टमस्थाने संशुद्धे सर्वग्रहवर्जिते सति । ग्रन्थकृद्दीपिकाकारमतमाश्रित्याऽऽह– कवीति । कवीज्ययोः लग्ने वृषतुलाधनुर्मीनानामन्यतमलग्ने सति त्रिकोण(९।५)-केन्द्र( १।४।७।१० )–ऽयाय( ३।११ )–स्थितैः शुभग्रहैः तथा पापाख्यैर्ग्रहैः अरिसहजायगेहसंस्थैः षष्ठतृतीयैकादशस्थानस्थितैरुपलक्षिते तथा केन्द्रसंस्थे त्रिदशगुरौ सति कर्णवेधः शुभावहः शुभकारकः स्यात् । $ पीटी.

## व्यवहारोच्चये

कर्णवेधे मासतिथिकरणनिषेधः

§‘न जन्ममासे न च चैत्रपौषे

न भाद्रसंज्ञे न हरौ प्रसुप्ते ।

तिथौ न रिक्ते न च विष्टिदुष्टे

कर्णस्य वेधं मुनयो वदन्ति ॥

( १ ) अत्र चैत्रस्य निषेधो मीनार्कविषयः, धनुर्विषयश्च पौषनिषेधः, ‡ हरिस्वापविषयः भिन्नकार्तिकविषयः कार्तिकस्याविधिरिति विवेकः । अन्यथा ‘ कार्तिके पौषमासे च चैत्रे वा फाल्गुनेऽपि वा । कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभेऽहनि ॥ ’ इति व्यासवचनमसंगतं स्यात् । संसौ. ६१–६२

$ संव. पीटीगतम् ।

§ अस्य संप्रव्याख्यानं ‘ कार्तिके ’ इति व्यासवचने ( सं. का. पृ. २७८७ ) द्रष्टव्यम् ।

‡ अशुद्धो ग्रन्थः । हरिस्वापनिषेधः कार्तिकशुक्लैकादश्युत्तरभागाविषय इति तात्पर्यम् ।

(१) संसौ. ६१ ; संप्र. २५९ ; संकौ. ११० ; संर. ८७३ तिथौ ( दिने ).

(२) भाद्रपदनिषेधश्च दोषाधिक्यार्थः ।

$ संको. ११०

(३) अयं च जन्ममासनिषेधो द्वितीयादिवर्षगत-जन्ममासविषयः, न त्वाद्यवर्षगतविषयः, 'प्रथमे जन्म-मासे तु कर्णवेधं शुभं विदुः।' इति वचनेन तस्य विहित-त्वात् ।

¶ संर. ८७३

## दीपिकायाम्

कर्णवेधे मासनक्षत्रवारलग्नग्रहसंस्थानानि, जन्म-मासनक्षत्रनिषेधः

[1]जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु ।
क्षौरभेषजवादाध्वकर्तनेषु च वर्जयेत् ॥

कर्तनं 'कृती छेदने' इत्यनुसारेण कर्णच्छेदनमिह विवक्षितम् ।

‡ संसौ. ७७

[2]नो जन्मेन्दुभमाससूर्यरविज-
क्ष्माजाहसुताच्युते
शस्तेऽर्के लघुविष्णुयुग्ममृदुभ-
स्वात्युत्तरादित्यभे ।
सौम्यैस्त्र्यायत्रिकोणकण्टकगतैः
पापैस्त्रिलाभारिगै-
रोजाब्दे श्रुतिवेध इज्यसितयो-
र्लग्नेऽनुकूले शुभः ॥

(१) अत्र जन्मशब्देन इन्दुभमासशब्दानां प्रत्येकं संबन्धः ।

संसौ. ६२

(२) ओजाब्दे अयुग्मवर्षे इत्यर्थः । संप्र. २५९

## मुहूर्तगणपतौ

कर्णवेधे वारा नक्षत्राणि च

[1]रेवतीद्वितये पुष्ये पुनर्वस्वनुराधयोः ।
श्रवणद्वितये चित्रामृगे हस्ते शुभे तिथौ ॥
शुभे वारे हि...... ।
जन्मतारां विहायाथ ह्युत्तरेऽपि च केचन ॥

## रेणुकारिकाः

कर्णवेधे मासपक्षतिथिवारनक्षत्रयोगकरणदिवसभागाः, ग्रहसंस्थानम्, वारफलानि

[2]..................कर्णवेधमथोच्यते ॥
[3]कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभेऽहनि ॥
[4]सुनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदये शुभे ।
दिनच्छिद्रव्यतीपातविष्टिवैधृतिवर्जिते ॥
[5]चित्रानुराधामृगरेवतीषु
पुनर्वसौ पुष्यकराश्विनीषु ।
श्रुतौ धनिष्ठातिसृषूत्तरासु
लग्ने गुरौ लाभनृगे शुभे तत् ॥
[6]क्लेशाविष्टाविने विद्धौ कर्णौ भौमे निकृन्ततः ।
नीरन्ध्रौ मन्दविद्धौ स्तः शेषेष्वाभरणान्वितौ ॥
[7]पञ्चमेऽब्दे तृतीये वा पूर्वाह्णे ... ॥

---

$ शेषं संसौगतम् ।

¶ शेषं संसौगतं संकौगतं च ।

‡ संप्र. संसौवत् ।

(१) संसौ. ७६–७७ च वर्जे (विवर्जे); संप्र. ३०४.

(२) संसौ. ६२ सितयोर्लग्ने (सितमकरकुम्भलग्ने) शुभः (शुभे); संप्र. २५९; बिपा. ४४३ (=) दित्यभे (दैवतैः) चतुर्थपादे (रोजोऽब्दे श्रुतिवेध इज्यदिवसे लग्ने च काले शुभे).

(१) संब. ८०.

(२) रेका. १ पृ. १४.

(३) रेका. १ पृ. १४; प्रपा. १८२ कार्तिके पौष (कृत्तिकापूर्व) मेऽहनि (मे दिने) कारिका.

(४) रेका. २ पृ. १४ पातविष्टि (पाते विष्टि); प्रपा. १८२ दिनच्छिद्र (दिने छिद्र) कारिका; मभा. १७४ सुस्थे (स्वस्थे) ये शुभे (ये तथा) कारिकायाम्.

(५) रेका. ३ पृ. १४; मभा. १७४.

(६) रेका. ४ पृ. १४. (७) रेका. ६ पृ. १४.

# कर्णवेधप्रयोगः

## बौधायनगृह्यशेषसूत्रम्

ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमः, हुतशेषनिधानम्, आशीर्वाचनम्, कर्णवेधनम्, कर्णबन्धनम्, श्वोभूते कर्णविस्रंसनम्, छिद्रवर्धनम्

[1]ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति 'श्रोत्रेण भद्रम्' इति पुरोनुवाक्यामनूच्य 'येन प्राच्यै' इति याज्यया जुहोति ॥

अथाऽऽज्याहुतीरुपजुहोति– 'प्राणो रक्षति विश्वमेजत्' इत्येतेनानुवाकेन प्रत्यृचम् ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अथाग्रेणाग्निं वेणुपर्णेषु हुतशेषं निदधाति– 'समुद्राय वयुनाय सिन्धूनां पतये नमः' इति ॥

अथाऽऽशिषो वाचयित्वा लोहितसूच्या वा कण्टकेन वा दक्षिणं कर्णमातृणत्ति– 'गायत्री त्रिष्टुप्' इति । 'द्विपदा' इत्युत्तरम् ॥

अथ लोहितसूत्रेण वा वेणुसूत्रेण वा कर्णौ बध्नाति– 'वरुणस्य स्कम्भनमसि' इति ॥

श्वोभूते विस्रंसयति– 'वरुणस्य स्कम्भसर्जनमसि' इति ॥

सूत्रेण वा वेणुकाण्डेन वा वर्धयति ॥

## पारस्करगृह्यपरिशिष्टम्

कुमाराय मधुरदानम्, कर्णाभिमन्त्रणम्, वेधनम्, ब्राह्मणभोजनम्

† [2]कुमारस्य मधुरं दत्त्वा प्रत्यङ्मुखायोपविष्टाय दक्षिणं कर्णमभिमन्त्रयते– 'भद्रं कर्णेभिः' इति, सव्यं 'वक्ष्यन्तीवेत्' इति च । अथ भिन्द्यात् । ततो ब्राह्मणभोजनम् ॥

## विष्णुधर्मोत्तरपुराणम्

केशवादिपूजनम्, कुमारस्य दक्षिणवामयोः कुमार्या वामदक्षिणयोः क्रमेण वेधनम्, छिद्रवर्धनम्, सांवत्सरिकचिकित्सकसुवासिनीसुहृद्द्विजपूजनम्

[1]शिशोरेवाथ कर्तव्यं कर्णवेधं यथा शृणु ।
पूर्वाह्णे पूजनं कुर्यात् केशवस्य हरस्य च ॥
[2]ब्रह्मणश्चन्द्रसूर्याभ्यां दिगीशानां तथैव च ।
नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा ॥

चन्द्रसूर्याभ्यां चन्द्रसूर्ययोरित्यर्थः । ‡ विपा. ४४४

[3]गुरूणां मण्डनं कृत्वा तत्र दत्त्वा वरासनम् ।
तथोपवेशयेत्तत्र धात्रीं शुक्लाम्बरां तथा ॥

मण्डनं संमाननम् । संर. ८७५

[4]अलंकृतं तदुत्सङ्गे बालं धृत्वा तु सान्त्वितम् ।
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ॥

---

† विधिप्रकरणे (सं. का. पृ. २७८१) एतत्सूत्रपूर्वभागे टिप्पणी द्रष्टव्या ।

(१) बौगृशे. १।१२।२-९.

(२) पागृ. (चौखम्बामुद्रितम्) २।२ प्रत्यङ् (प्राङ्); गभा. १७४ याज्ञिकाः; संग. ५७४ (सव्यं०) परिशिष्टम्; संर. ८७५ (प्राङ्मुख उपविश्य दक्षिणकर्णमभिमन्त्रयते– 'भद्रं कर्णेभिः' इति । सव्यमप्येवम् । यदि रोदिति कुमाराय मधुरं दत्त्वा ब्राह्मणभोजनम्) गृह्यपरिशिष्टे; संदी. २६२ (भागः २) गृह्यपरिशिष्टखण्डः.

‡ संर. विपावत् ।

(१) प्रपा. १८३ कुर्यात् (कृत्वा); संप्र. २५८ पू., २६२; विपा. ४४४ प्रपावत्; संकौ. ११० हरस्य च (शिवस्य वा) उत्त.; संग. ५७६; संर. ८७५ हरस्य (शिवस्य) शेषं प्रपावत्, उत्त.

(२) प्रपा. १८३; संप्र. २६२; विपा. ४४४; संकौ. ११०; संग. ५७६; संर. ८७५.

(३) प्रपा. १८३ तथो (अथो) रां तथा (राङ्गताम्); संप्र. २६२; विपा. ४४४ मण्डनं (मण्डलं) त्रीं शुक्लाम्बरां (त्री शुक्लाम्बरा); संकौ. ११० णां मण्डनं (णामर्चनं); संग. ५७६; संर. ८७५ तथो (तत्रो) त्तत्र धात्रीं शु (द्धात्रीं धृतशु).

(४) प्रपा. १८३ (अलंकृतां तदुत्सङ्गे बालं संस्थाप्य पूजितम् । कर्णौ तु निश्चलं तस्य अलक्तकरसाङ्कितौ ॥);

'अलंकृतं तदुत्सङ्गे' इत्यनन्तरमुपवेशयेदित्यनुषज्यते। सा धात्री। अन्विता सावधाना। निश्चलं यथा स्यात्तथा सम्यक्। अलक्तकरसचिह्निते वेधस्थाने।

संर. ८७५

[1]विध्येदेवं कृते छिद्रे सकृदेवात्र लाघवात्।
प्राग्दक्षिणे कुमारस्य भिषग्वामे तु योषितः॥

अनावृतो देशः अङ्गणादिः। तत्रोपविष्टो भिषक् वेधकः। लाघवेन कौशल्येन। प्राक् पूर्वं दक्षिणः, अथ अनन्तरं वामः। अस्य शिशोः पुंसः। योषितः स्त्रियास्तु वामः पूर्वम्। अर्थादनन्तरं दक्षिणः। एवं क्रमेण वेधयेदिति 'प्राग्दक्षिणोऽथ वामोऽस्य' इत्यादेरर्थः।

संर. ८७५

[2]शिशोर्विवर्धनं कार्यं यावदाभरणक्षमम्।
कर्णवेधदिने विप्राः सांवत्सरचिकित्सकौ।
पूज्याश्चाविधवा नार्यः सुहृदश्च तथा द्विजाः॥

(१) विवर्धनं छेदनम्, 'वृधु छेदे' इति गणपाठात्।

विपा. ४४५

(२) 'शिशोः' इत्यनन्तरं कर्णच्छिद्रयोरिति शेषः। सांवत्सरिको(रो) दैवज्ञः। चिकित्सकः वेधकः।

संर. ८७५

संप्र. २६२; विपा. ४४४–४४५ सान्वितम् (साऽन्विता); संकौ. ११० धृतस्य (धृतस्य); संग. ५७६; संर. ८७५ विपावत्.

(१) प्रपा. १८३; संसौ. ६४ दक्षिणे (दक्षिणं) उत्त.; संप्र. २६२; विपा. ४४५; संकौ. ११०; संग. ५७६; संर. ८७५ (विध्येदनावृते देशे सकृदेवात्र लाघवात्। प्राग्दक्षिणोऽथ वामोऽस्य भिषग्वामस्तु योषितः॥).

(२) प्रपा. १८३ त्सकौ (त्सकाः) श्चाविधवा नार्यः (श्च विधिवन्नार्यः) द्विजाः (द्विजैः); संप्र. २६२–२६३ क्षमम् (क्षणम्) द्विजाः (द्विज); विपा. ४४५ श्चाविधवा (श्च विविधा) द्विजाः (द्विजैः); संकौ. ११० वेधदिने (वेधे सदा) त्सकौ (त्सकाः) द्विजाः (द्विज); संग. ५७६; संब. ८१ (=) वेधदिने (वेधे सदा) रचिकित्सकौ (रिचिकित्सकाः) द्विजाः (द्विजः) प्रथमार्धे नास्ति; संर. ८७५.

## अनिर्दिष्टकर्तृकवचने

देवदैवज्ञभिषग्ब्राह्मणकर्मकारपूजनम्, दक्षिणस्य पूर्वं वेधनम्, ब्राह्मणभोजनम्

[1]संपूज्य देवान्दैवज्ञं भिषजां श्रेष्ठमेव च।
विदुषो ब्राह्मणांश्चैव कर्मकारं तथैव च॥

[2]वेधयेद्दक्षिणं पूर्वं ततोऽन्यमपि वेधयेत्।
कर्णवेधनिमित्तं तु तथा ब्राह्मणभोजनम्॥

## स्मृतिमहार्णवे

शुक्लसूत्रयुक्तताम्रसूच्या वेधनम्, वेधनक्षत्रात्तृतीयनक्षत्रे क्षालनम्

[3]शुक्लसूत्रसमायुक्तताम्रसूच्याऽथ वेधयेत्।
वेधात्तृतीयनक्षत्रे क्षालयेदुष्णवारिणा॥

यस्मिन्नक्षत्रे कर्णवेधः तस्मान्नक्षत्रात्तृतीयनक्षत्रे उष्णोदकेन क्षालनं कर्तव्यमित्युत्तरार्धार्थः। इयं च ताम्रसूची सर्वेषां वैकल्पिकी।

संर. ८७४

[4]रोपणार्थं सुशुद्ध्यर्थं नालसंपत्तिमाप्नुयात्(?)।
एवं छिन्ने च भिन्ने च हित्वा योज्यानि योजयेत्(?)॥

(१) संसौ. ६४ षजां (षजं); पुम. ४३५ देवान्दैवज्ञं (देवदेवेन्द्रं).

(२) संसौ. ६४.

(३) प्रपा. १८३ अर्णवे; संप्र. २६२ पू.; विपा. ४४४ अर्णवे; ज्योनि. १०२ संग्रहे; संग. ५७६ उत्तरार्धं ज्योतिर्निबन्धे; संर. ८७४ ज्योतिरर्णवे.

(४) प्रपा. १८३ अर्णवे; विपा. ४४४ पत्ति (पति) अर्णवे.

## सुबोधे

प्राङ्गणे रवियुतेऽम्बरे स्त्रीपुंसयोः क्रमेण वाम-दक्षिणकर्णौ पूर्वं वेध्यौ

[1]सुभूमौ प्राङ्गणे रम्ये शुचौ देशेऽम्बरे रवौ ।
संनिधौ वेधयेत्कर्णौ स्त्रीपुंसोर्वामदक्षिणौ ।
क्रमेण पूर्वं वेध्यौ द्वौ शिशोरायुःसुखप्रदौ ॥

## रेणुकारिकाः

कुमाराय मधुरदानम्, प्राङ्मुखस्य कर्णयोर्दक्षिणवामेति-क्रमेण वेधनम्, ब्राह्मणभोजनम्, नान्दीश्राद्धानुष्ठाने मतभेदः, मन्त्रयोर्ऋष्यादयः

[2]... ... ... प्राङ्मुखस्य तु ।
तस्मै प्राक् मधुरं दत्त्वा पिता वाऽन्योऽपि कश्चन ॥
वेधयेद्दक्षिणं पूर्वं क्रमात्तावभिमन्त्रयेत् ।
भद्रं कर्णेभिर्वक्ष्यन्तीमन्त्राभ्यां प्रतिमन्त्रतः ॥

कर्णवेधनिमित्तं तु ततो ब्राह्मणभोजनम् ।
केचिन्नान्दीमुखं श्राद्धमिह नेच्छन्ति सूरयः ॥

प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः स्यादाश्वमेधिके ।
$अनयोर्देवता द्यावा मार्गा ज्या कार्मुकी तथा (?) ॥

(१) प्रपा. १८३ ; विपा. ४४४ (=) रवौ (रवेः) रायुःसुखप्रदौ ( रायुष्यवर्धनौ ) ; ज्योनि. ११४ तृतीयार्धं नास्ति, संग्रहे. (२) रेका. ६–९ पृ. १४.

$ 'वक्ष्यन्तीव' इति मन्त्रद्वयस्यानुक्रमेण ज्या धनुः-कोटी च देवते महीधरभाष्ये उक्ते ।

# *आयुर्वर्धापनम्

## बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

नक्षत्रहोमः– प्रतिसंवत्सरं प्रत्यर्धसंवत्सरं प्रतिचातुर्मास्यं प्रत्यृतु प्रतिमासं वा जन्मनक्षत्रेऽनुष्ठानम्, ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमाः, अन्नशेषभक्षणम्

[1]अथ नक्षत्रहोमं व्याख्यास्यामः। संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्ष्वृतावृतौ मासि मासि वा कुमारस्य जन्मनक्षत्रे क्रियेत ॥

ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम् ॥

अथ नक्षत्रदेवताभ्यो जुहोति यथानक्षत्रम् ॥

'अनु नोऽद्यानुमतिरन्विदनुमते' इति तृतीयम् ॥

अथाऽऽज्याहुतीरुपजुहोति नक्षत्रदेवताभ्यो यथानक्षत्रम् ॥

'चन्द्रमसे स्वाहा, प्रतीदृश्यायै स्वाहा, अहोरात्रेभ्यः स्वाहा, अर्धमासेभ्यः स्वाहा, मासेभ्यः स्वाहा' इति मासि मासि ॥

'ऋतुभ्यः स्वाहा' इत्यृतावृतौ ॥

'संवत्सराय स्वाहा' इति संवत्सरे ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अन्नशेषं सगणः प्राश्नाति ॥

अथ संवत्सरे पर्यवेते प्रसिद्धमाऽग्निमुखात् कृत्वा पक्वाज्जुहोत्याग्नेयं प्रधानदेवत्यम् ॥

यथानक्षत्रं द्वितीयम् ॥

'अनु नोऽद्यानुमतिरन्विदनुमते त्वम्' इति तृतीयम् ॥

'नवो नवो भवति जायमानः, यमादित्या अंशुमाप्याययन्ति' इत्याऽन्तादनुवाकस्य ॥

अथ पूर्ववदाज्याहुतीरुपजुहोति नक्षत्रदेवताभ्यो यथानक्षत्रम् ॥

'चन्द्रमसे स्वाहा, प्रतीदृश्यायै स्वाहा' इत्येतैः स्वाहाकारैराऽन्तादनुवाकस्य ॥

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

नक्षत्रहोमो व्याख्यातः ॥

मृत्युंजयकल्पः– जन्मनक्षत्रादिषु ब्राह्मणभोजनम्, पुण्याहवाचनम्, होमाः, हुतशेषनिधानम्, दक्षिणादानम्, कर्मफलम्

[1]अथातो मृत्युंजयकल्पं व्याख्यास्यामः ॥

जन्मनक्षत्रे पुण्ये नक्षत्रे त्रिजन्मनि वा ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा सावित्र्या पक्वं हुत्वा प्रादेशमात्रास्तिस्रस्तिस्रो दूर्वा एकां समिधमाहुत्याष्ट-

---

* अत्र बहूनामायुर्वृद्धिफलकविधीनामन्नप्राशनात्प्राक् प्राप्तकालत्वेनेदं प्रकरणमत्र निवेशितम्। केषांचित् सांवत्सरिकत्वेनान्नप्राशनात्प्रागप्राप्तकालत्वेऽपि सर्वेषां जन्मदिनादिकर्तव्यायुर्वृद्धिफलकविधीनामेकस्मिन्प्रकरणे संग्रहौचित्यात् तेऽप्यत्रैव संगृहीताः। ये जन्मदिनकर्तव्या अनुक्तफला विषयस्तेऽपि समुचितत्वेनाऽऽयुर्वृद्धिरूपफलकल्पनासंभवादत्रैव संगृहीताः। उग्ररथशान्तिभीमरथशान्तिसहस्रचन्द्रदर्शनशान्तयस्तु शान्तिकाण्डे संग्रहीष्यन्ते।

(१) बौगृशे. १।१३।१–१८.

(१) बौगृशे. ३।११।१; हिगृशे. ६।१७ (स्वस्ति ऋद्धिम् इति०) मात्रा (मात्री) विंशतिर्वा (विंशतिं वा) (त्रियम्बकम्०); संप्र. २९५ तो मृत्युं (तोऽपमृत्युं) सावित्र्या...माहुत्या (प्रादेशमात्र्यस्तिस्रो दूर्वाः समिधोऽ) विंशतिर्वा (विंशतिं वा) अपैतु मृत्युः (अपैतु) त्रियम्ब (त्र्यम्ब) (अष्टषष्टि...संपद्यते०).

सहस्रमष्टशतमष्टाविंशतिर्वा दधिमधुघृतपयांसि समुदायुत्याभ्यज्याऽऽदधाति– 'अपैतु मृत्युः, परं मृत्यो, मा नो महान्तम्, मा नस्तोके, त्रियम्बकम्, ये ते सहस्रम्' इति। अष्टषष्टिशतकृत्व आवर्तयेत्तदानीमष्टसहस्रं संपद्यते॥

[1]अथाऽऽज्याहुतीरुपजुहोति– 'मृत्युर्नश्यत्वायुर्वर्धतां भूः स्वाहा, मृत्युर्नश्यत्वायुर्वर्धतां भुवः स्वाहा, मृत्युर्नश्यत्वायुर्वर्धतां सुवः स्वाहा, मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवः सुवः स्वाहा' इति॥

[2]जयप्रभृति सिद्धमा धेनुवरप्रदानात्॥

[3]अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति– 'तच्छंयोरावृणीमहे' इति॥

[4]अथ दक्षिणां ददाति– धेनुमृषभमनड्वाहं कंसं हिरण्यं वासो वेति। अप पुनर्मृत्युं जयतीति ह स्माऽऽह भगवान्बोधायनः॥

## काठकगृह्यसूत्रम्

आसंवत्सरान्तं प्रतिमासं जन्मदिने होमो मूर्धावघ्राणं च, समाप्ते संवत्सरे होमो ब्राह्मणभोजनं च, आसंवत्सरं मातापित्रोर्मांसाशननिषेधः

[5].... **एवं मासि मासि स्थालीपाकस्येष्ट्वा जातकर्मणा वाऽऽज्यस्य। एवं संवत्सरम्॥**

(१) एवमेव प्रतिमासं जन्मदिने स्थालीपाकेन जातकर्मविधिवदाज्येनेष्ट्वा निघ्राणं मूर्धनि कुर्यात्। प्रतिमासमिमां कर्तव्यतां संवत्सरं यावत् कुर्यात्। देव.

(२) एवं प्रतिमासं यावदब्दं नामधेयविधिना पयसि स्थालीपाकस्येष्ट्वाऽवघ्राणं स्वस्त्ययनं ब्राह्मणभोजनं च जातकर्मविधिना वाऽऽज्यस्य प्रतिमासं होमः। ब्राह्म.

(३) स्थालीपाकग्रहणात्पयस्यन्द(?)नाऽऽदरः। आज्यग्रहणं स्थालीपाकस्य प्रकृतत्वात्। † आदि.

**मांसं तु नाश्नीतः॥**

मांसं तु बालस्य माता पिता च संवत्सरं यावन्नाश्नीतः। ‡ देव.

**समाप्ते संवत्सरेऽजाविभ्यां वाऽग्निधान्वन्तरी इष्ट्वा सर्पिष्मदन्नं ब्राह्मणान्भोजयेत्॥**

(१) प्रथमे संवत्सरे समाप्ते अजेनाग्निमविना धान्वन्तरिमिष्ट्वा, वाशब्दादाज्येन स्थालीपाकेन वा, सर्पिषा प्रचुरेण युक्तमन्येन च पवित्रेण दधिप्रभृतिना अन्नं ब्राह्मणान् भोजयेत्। तैः सुप्रीतैः स्वस्त्ययनाशीःप्रभृतिभिरभिनन्दितेनम्। देव.

(२) समाप्ते संवत्सरे बालस्य जन्मदिने जातकर्मविधिनाऽऽज्यस्य नामधेयवत् पयसि स्थालीपाकस्य वा यजेत। अथवा छागेनाग्निम्, मेषेण धान्वन्तरिमिज्यात्। ब्राह्म.

(३) समाप्ते संवत्सरे जन्मनक्षत्रे अजाविभ्यामग्निधान्वन्तरी इष्ट्वा। सत्यपि समासे द्रव्यदेवताविभागः। अजेनाग्निमविना धान्वन्तरिम्। विभागश्च सूत्रितत्वान्नानुपपन्नः। वाशब्दो हविर्विकल्पार्थः। तेनाजाविभ्यां स्थालीपाकेन वा आज्येन वा। सर्पिर्विपक्वम्। सर्पिष्मत् संयावा(? यावा)दिः। आदि.

---

(१) बौगृशे. ३।११।२; हिगृशे. ६।१७; संप्र. २९५.

(२) बौगृशे. ३।११।३; हिगृशे. ६।१७ जय (स्विष्टकृत्); संप्र. २९५.

(३) बौगृशे. ३।११।४; हिगृशे. ६।१७; संप्र. २९५.

(४) बौगृशे. ३।११।५; हिगृशे. ६।१७ ह स्माह भगवान्बोधायनः (विज्ञायते); संप्र. २९५ (हिरण्यं०) (अप पुनर्मृत्युं जयतीति० ).

(५) कागृ. ३६।१२–१४.

† शेषं ब्राह्मगतम्।

‡ ब्राह्म. देववत्।

## आग्निवेश्यगृह्यसूत्रम्

**[illegible]होमः**– प्रतिसंवत्सरं प्रत्यर्धसंवत्सरं प्रतिचातुर्मास्यं प्रत्यृतु प्रतिमासं वा जन्मनक्षत्रेऽनुष्ठानम् , होमाः , आज्यशेषप्राशनम् , जठराभिमर्शनम् , प्रतिसंवत्सरं जन्मनक्षत्रे क्रियमाणमुक्तविधिप्रायं प्रयोगान्तरम्

**‡ [१]'संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु (ऋतावृतौ) मासि मासि वा जन्म-नक्षत्रे क्रियेत । अथ देवयजनोल्लेखनप्रभृत्याऽग्नि-मुखात्कृत्वा पक्वाज्जुहोति– 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम् । अथ नक्षत्रदेवताभ्यामृग्भ्यां जुहोति यथालिङ्गम् – 'अनु नोऽद्यानुमतिः, अन्विदनुमते' इति द्वाभ्याम् । अथत्ते स्विष्टकृत्य-थाऽऽज्याहुतीरुपजुहोति । नक्षत्रदेवताभ्यो हुत्वा 'चन्द्रमसे स्वाहा, प्रतीदृश्यायै स्वाहा, अहोरा-त्रेभ्यः स्वाहा, अर्धमासेभ्यः स्वाहा, मासेभ्यः स्वाहा' इति मासि मासि ( वा ? ), 'ऋतुभ्यः स्वाहा' इत्यृतावृतौ, 'संवत्सराय स्वाहा' इति संव-त्सरे । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । 'आयुरसि' इति प्रागन्नप्राशनादाज्यशेषं प्राश-यति । आचामति । जठरमभिमृशति–' यत इन्द्र भयामहे ( ततो नो अभयं कृधि? ), स्वस्तिदा विशस्पतिः' इति द्वाभ्याम् । एतदायुष्य-मायुष्यम् ॥**

**अत ऊर्ध्वं संवत्सरे संवत्सरे जन्मनक्षत्रे क्रियेत । अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखा-त्कृत्वा पक्वाज्जुहोति– 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम् । अथ नक्षत्रदेवताभ्यामृग्भ्यां जुहोति यथालिङ्गम् । 'नवो नवो भवति जायमानः' इत्येतेनानुवाकेन प्रत्यृचं द्वाभ्यां द्वाभ्याम् । आग्नेयमपोद्धृत्यानुमतीं जुहोति । अथत्ते स्विष्टकृत्यथाऽऽज्याहुतीरुपजुहोति नक्षत्र-देवताभ्यो हुत्वा 'चन्द्रमा वा अकामयत' इत्येतेनानुवाकेन स्वाहाकारैः । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । 'आयुरसि' इति हुतशेषमन्नं प्राशयति । आचामति । जठरमभि-मृशति– 'यत इन्द्र भयामहे, स्वस्तिदा विश-स्पतिः' इति द्वाभ्याम् । एतदायुष्यमायुष्यम् ॥**

---

‡ इदमत्र ध्येयम्– अस्मिन् खण्डे एकः अग्रिमखण्डे चापर इति द्वौ नक्षत्रहोमप्रयोगावत्रोक्तौ । तदनुरोधेनात्र 'संवत्सरे संवत्सरे' इति द्विरुक्तशब्दविषये त्रयः पक्षा विचारणीयाः । तत्र "'संवत्सरे' इति सकृद्वचनमेव प्रामाणिकम् , द्विर्वचनं तु प्रामादिकम् । यद्यपि द्विर्वचनं बौधायनसूत्रसंवादि तथाऽपि बौधायनसूत्रे विरुद्धप्रयोगद्वयाभावात्संवादो न विनिगमकः । तच्च सकृद्वचनमग्रिमषण्मास्यादिकालविशेषाणां विशेषणं वाऽस्तु पृथक्कोटिर्वाऽस्तु" इति प्रथमः पक्षः । "'संवत्सराय स्वाहा' इति संवत्सरे" इति सूत्रात् पृथक्कोटित्वपक्ष एव सूत्रकाराभिप्रेत इति यद्यपि सुवचं तथाऽपि तत् कृत्वाचिन्तामाश्रित्योपेक्ष्यते । अत्र संवत्सरशब्दो विवक्षातः प्रथमसंवत्सरपर इति मन्तव्यम् । तत्र विशेषणत्वे 'षण्मास्यादयो ये कालविशेषास्ते प्रथमवर्षान्तर्गताः' इत्यर्थः । पृथक्कोटित्वे षण्मास्यादिकालविशेषैः सहास्य विकल्पः । अस्मिन्पक्षे एतेषु कालेष्वेतत्खण्डोक्तः प्रयोगः कार्यः , अत ऊर्ध्वमग्रिमखण्डोक्तः सांवत्सरिकः प्रयोगः कार्य इति व्यवस्था निष्पद्यते । द्वितीयवर्षगतप्रथमजन्मनक्षत्रदिने द्वितीयषाण्मासिकस्य वा प्रथमसांवत्सरिकस्य वा प्रयोगस्य प्राप्तत्वात् अत ऊर्ध्वमित्यस्य तृतीयादिवर्षगतप्रथमजन्मनक्षत्रदिनेष्वित्यर्थः । "'संवत्सरे संवत्सरे' इति द्विर्वचनं प्रामाणिकम् , तच्च पृथक्कोटिः" इति द्वितीयः पक्षः । अस्मिन्पक्षे सांवत्सरिककल्पे एतत्खण्डोक्तप्रयोगेण वक्ष्यमाणप्रयोगस्य समुच्चयो विकल्पो वेति न निर्णीयते, 'अत ऊर्ध्वम्' इतिवक्ष्यमाणशब्दार्थश्च न संगच्छते इति दोषद्वयम् । 'द्विर्वचनं प्रामाणिकमग्रिमषण्मास्यादिकालविशेषविशेषणं च' इति तृतीयः पक्षः । अस्मिन्पक्षेऽपि प्रतिवर्षमत्रोक्तद्वितीयषाण्मासिकप्रयोगस्य वक्ष्यमाणसांवत्सरिकप्रयोगस्य चैकदिनप्राप्तत्वादुक्तदोषद्वयतादवस्थ्यम् । सुधीभिरत्र निर्णयो विधेयः ।

(१) आग्निगृ. २।२।१–२.

आयुष्यहोमः– प्रतिसंवत्सरं प्रत्यर्धसंवत्सरं प्रतिचातुर्मास्यं प्रतिमासं च जन्मनक्षत्रेऽनुष्ठानम् , होमः , हुतशेषस्य निधानं प्राशनं च, जठराभिमर्शः

[१]आहुतानुकृतिरायुष्यहोमचरुः संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु मासेषु मासि मासि वा जन्मनक्षत्रे क्रियेत । अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा व्रीहीन्निर्वपति– 'अग्नय आयुष्मते वो जुष्टं निर्वपामि' इति । तूष्णीं वा । अथ धान्यान् निर्वपति– ' प्राणाय वो जुष्टं निर्वपामि ' इति । तूष्णीं वा । तानभ्युक्ष्यावहत्य त्रिष्फलीकृत्य त्रिः प्रक्षाल्य निदधाति । अथ तिरःपवित्रं स्थाल्यामपः पयो वाऽऽनीयाधिश्रित्य तिरःपवित्रं तण्डुलानावपति । अथाऽऽज्यमधिश्रित्योभयं पर्यग्नि कृत्वा मेक्षणं च स्रुवं च संमार्ष्टि । अथैतं चरुं श्रपयित्वाऽभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति । स एष एव सर्वेषां स्थालीपाकानां चरुकल्पः ॥

परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति । 'आयुष्टे विश्वतो दधत्' इति पुरोनुवाक्यामनूच्य ' आयुर्दा अग्ने हविषो जुषाणः ' इति याज्यया जुहोति । आज्याहुतीरुपजुहोति । अथान्तरेणाग्निं चाऽऽज्यस्थालीं (च) चरुस्थलीं निदधाति । सहस्रसंपाताभिहुतं करोति– ' यो ब्रह्मा ब्रह्मण उज्जहार प्राणेश्वरः कृत्तिवासाः पिनाकी । ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन स्वाहा ॥ , विभ्राजमानः सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात् । स मृत्युपाशादपनुद्य घोरादिहाऽऽयुषे नो घृतमत्तु देवः स्वाहा ॥ , ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात् पुरुरूपं जयन्तम् । सुवर्णरम्भग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन स्वाहा ॥ , श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः । तां विद्यां ब्रह्मयोनिꣳ सरूपामिहाऽऽयुषे तर्पयामो घृतेन स्वाहा ॥ , दाक्षायणाः सर्वयोन्यः सयोन्यः सहस्रशो विश्वरूपा विरूपाः । ससूनवः सपतयः सयूथ्या आयुषेणो घृतमिदं जुषन्ताꣳ स्वाहा ॥ , दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमन्थन्तु वीरान् । तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजाꣳ रीरिषो मोत वीरान् स्वाहा ॥ , एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनꣳ सांपराये स नो हविर्घृतमिहाऽऽयुषेऽत्तु देवः स्वाहा ॥ , वसून् रुद्रानादित्यान्मरुतोऽथ साध्यानृभून् यक्षान् गन्धर्वाꣳश्च पितॄꣳश्च विश्वान् । भृगून् सर्पाꣳश्चाङ्गिरसोऽथ सर्वान्घृतं हुत्वा स्वायुष्या महयाम शश्वत्स्वाहा ॥ ' इति । षड्विंशतिशतं कृत्वा तदाहुतीनामष्टसहस्रं संपद्यते । इतरस्मात्पक्वात्सौविष्टकृतं जुहोति । ' हव्यवाहमभिमातिषाहम् ' इति पुरोनुवाक्यामनूच्य ' स्विष्टमग्ने ' इति याज्यया जुहोति । जयाप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अथाग्रेणाग्निं दूर्वास्तम्बे हुतशेषं निदधाति– ' मा नो महान्तम् , मा नस्तोके ' इति द्वाभ्याम् । अपरेणाग्निं प्राङ्मुख उपविश्य वाग्यतः स्थालीपाकं सगणः प्राश्नाति– 'आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । सर्वं म आयुर्भूयात् । सर्वमायुर्गेषम् ' इति । प्राश्याऽऽचम्य जठरमभिमृशति– ' यत इन्द्र भयामहे , स्वस्तिदा विशस्पतिः ' इति द्वाभ्याम् ॥

अपमृत्युंजयकल्पः– जन्मनक्षत्रे जन्मवारे पुण्यनक्षत्रादिकालान्तरे वा देवालयादिदेशे स्वगृहे वाऽनुष्ठानम् , पुण्याहवाचनम् , होमः , हुतशेषनिधानम् , आचार्यादिभ्यो दक्षिणादानम् , ब्राह्मणभोजनम्

अथातोऽपमृत्युंजयकल्पं व्याख्यास्यामः । पुण्ये नक्षत्रे जन्मनक्षत्रे जन्मवारे वा कृष्णाष्टम्यां

(१) आग्निगृ. २।५।३-४.

चतुर्दश्यां वा देवालये नदीतीरे गोष्ठे पुण्यतमे स्थले वा स्वगृहे वा गोमयेनोपलिप्य 'पुण्याहं स्वस्त्ययनमृद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा 'ओं भूर्भुवः स्वः स्वाहा' इति प्रायश्चित्तं हुत्वा श्वेतदूर्वाः पालाशसमिधोऽष्टसहस्रमष्टशतमष्टाविंशतिं वा दधिमधुघृतपयांसि समुदायुत्य 'त्रियम्बकं यजामहे' इति मन्त्रेण हुत्वाऽथ 'अपैतु मृत्युः, परं मृत्यो, मा नो महान्तम्, मा नस्तोके, त्रियम्बकम्, ये ते सहस्रम्' इति हुत्वा स्विष्टकृतमवदायाथाऽऽज्याहुतीश्चोपजुहोति– 'नक्षत्रे राशौ जातस्य शर्मणो मृत्युर्नश्यत्वायुर्वर्धतां भूः स्वाहा', पूर्ववत् '–शर्मणो मृत्युर्नश्यत्वायुर्वर्धतां भुवः स्वाहा', पूर्ववत् '–शर्मणो मृत्युर्नश्यत्वायुर्वर्धतां स्वः स्वाहा', पूर्ववत् '– शर्मणो मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवः स्वः स्वाहा' (इति)। अथ स्विष्टकृतम् 'हव्यवाहमभिमातिषाहम्' इति पुरोनुवाक्यामनूच्य 'स्विष्टमग्ने' इति याज्यया जुहोति । जयाभ्यातानान् राष्ट्रभृत इति हुत्वा तन्त्रशेषं समाप्य दर्भस्तम्बे हुतशेषं निदधाति – 'तच्छंयोरा वृणीमहे' इति । अथ दक्षिणां दद्यात् । यथाऽऽचार्यस्तुष्टः प्रसन्नहृदयो भवेत् तथा दद्यात् । शेषेभ्योऽपि यथाशक्ति दत्त्वा ब्राह्मणान् भोजयेत् ॥

## गोभिलगृह्यसूत्रम्

प्रतिमासं प्रतिसंवत्सरं सांवत्सरिकपर्वसु वा यागः

[1]कुमारस्य मासि मासि संवत्सरे सांवत्सरिकेषु वा पर्वस्वग्नीन्द्रौ द्यावापृथिवी विश्वान्देवांश्च यजेत ॥

जननादित्युपक्रमात् कुमारस्य जन्मतिथौ वक्ष्यमाणदेवता यजेत् । तत्र समयविशेषमाह– मासि मासीति । प्रतिमासमित्यर्थः । तेन संवत्सरपर्यन्तं यागः । ऊर्ध्वं संवत्सराज्जननमास एवैकस्मिन् वर्षान्ते जन्मतिथौ । संवत्सरे, 'वा पूर्णे' इति वाक्यशेषः । अत्रापि जन्ममासे जन्मतिथौ यजेतेति द्रष्टव्यम् । वा अथवा सांवत्सरिकेषु पर्वसु यजेत । संवत्सरस्येमानि सांवत्सरिकाणि, तेषु । 'कालाट्ठञ्' (पासू. ४।३।११) इति ठञष्ठस्येकः, आदिवृद्धिः । पर्वसु त्रयाणामृतूनां शरच्छिशिरग्रीष्माणाम् अवसानतिथिषु कार्तिकीफाल्गुन्याषाढीषु । अथवा द्वावत्र कालविकल्पौ– संवत्सरपर्यन्तं मासि मासि कुमारस्य जन्मतिथौ यजेत, सांवत्सरिकेषु वा पर्वसु उक्तरूपेषु यजेत । कतमाः पुनस्ता देवताः ? उच्यन्ते– अग्नीन्द्रौ, द्यावापृथिवी द्यावापृथिव्यौ एते द्वन्द्वदेवते विश्वान् देवांश्चेति । विश्वेभ्यो देवेभ्य इत्येवम् । मृदुला.

दैवतमिष्ट्वा तिथिं नक्षत्रं च यजेत ॥

जन्मतिथेर्दैवतमिष्ट्वा जन्मतिथिं जन्मनक्षत्रस्य देवतमिष्ट्वा जन्मनक्षत्रं च यजेत । मृदुला.

## वैखानसगृह्यसूत्रम्

वर्षवर्धनम्– जन्मनक्षत्रतद्देवतायुद्देश्यकहोमाः, नक्षत्रतद्देवतानुक्रमणम्, अनुपनीतोपनीतयोर्होमे विशेषः, वर्षवर्धनफलम्

[1]अथ वर्षवर्धनम् । दारकस्य जन्मनक्षत्रं यद्दैवत्यं साऽस्य देवता प्रधाना भवति । तस्मादाघारं हुत्वा तदधिदेवता नक्षत्राणि च जुहुयात्– 'अग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशीर्षाय रुद्रायाऽऽर्द्रायै अदित्यै पुनर्वसु(? सु)भ्यां बृहस्पतये तिष्याय सर्पेभ्य आश्रेषाभ्यः पितृभ्यो मघाभ्योऽर्यम्णे फल्गुनीभ्यां भगाय फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे निष्ट्यायै इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानूराधेभ्य इन्द्राय ज्येष्ठायै प्रजापतये मूलायाद्भ्योऽषाढाभ्यो विश्वेभ्यो देवेभ्यो-

(१) गोगृ. २।८।१९–२०.

(१) वैगृ. ३।२०–२१.

ऽषाढाभ्यो ब्रह्मणेऽभिजिते विष्णवे श्रोणायै वसुभ्यः श्रविष्ठाभ्यो वरुणाय शतभिषजेऽजाय एकपदे प्रोष्ठपदेभ्योऽह्वये बुध्नियाय प्रोष्ठपदेभ्यः पूष्णे रेवत्या अश्विभ्यामश्वयुग्भ्यां यमायापभरणीभ्यः स्वाहा ' इति व्याहृतिः ॥

ऋषभं वैरवणमग्नीषोमीयं वैष्णवं धातादि मूलहोमं यद्देवादि कूष्माण्डहोममा सावित्रव्रतबन्धाज्जुहोति । उपनीतस्य च तत्तद्व्रतसूक्तानि । अश्वमेधफलावाप्त्यै वर्षवर्धनमिति विज्ञायते ॥

## मनुः

जन्मनक्षत्रं पार्वणश्राद्धनिमित्तम्

[1]'ग्रहणे च व्यतीपाते नवसस्ये समागते ।
जन्मर्क्षे ग्रहपीडायां श्राद्धं पार्वणवद्भवेत् ॥

अत्र पार्वणश्राद्धमपि कर्तव्यम् । तथा च चन्द्रिकायां मनुः– ' ग्रहणे च ... ॥ ' इति । प्रपा. १९८

## वृद्धमनुः

जन्मदिने उष्णवारिणा स्नानस्य निषेधः

[2]'मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

## गर्गः

प्रत्यब्दं जन्मनक्षत्रे कौतुकबन्धः , शान्त्युदकप्राशनम् , अभिषेचनम् , ग्रहशान्तिः , नक्षत्राधिपपूजनम्

†[3]'यस्मिन्दिने सवितरि तन्नक्षत्रदिनं भवेत् ।
प्रत्यब्दान्ते च नक्षत्रे विधिं वक्ष्ये नृणां परम् ।
येनाऽऽयुर्वर्धते नित्यं बलं तेजः सुखं सदा ॥

[1]'पूर्वे जन्मदिनाद्रात्रौ कृत्वा कौतुकबन्धनम् ।
कृत्वा शान्त्युदकं चैव प्राशयेच्चाभिषेचयेत् ।
ग्रहशान्तिं समाप्यैव नक्षत्राधिपपूजनम् ॥

शान्त्युदकप्रकारमाह बौधायनः– ‡ ' अथ वै भवति श्रद्धा वा ...... जयतीत्याह भगवान् बौधायनः ' इति । †यत्तु प्रयोगपारिजातेन प्रयोगलिखनावसरे 'पूर्वे जन्मदिनाद्रात्रौ ' इत्युपक्रम्य ' कृत्वा शान्त्युदकं चैव ' इति गर्गोक्तं बौधायनाभिहितप्रकारकं शान्त्युदकमलिखित्वा विष्णुधर्मोत्तरोक्तकलशोदकस्नानमत्र लिखितं तन्महाभ्रममूलकमित्यनादरणीयम् , अब्दान्तजन्मदिनर्क्षविहितादायुर्वर्धनाख्यकर्मणः जन्मर्क्षमात्रविहितस्य पुष्टिवर्धनाख्यकर्मणो निमित्तभेदेन फलभेदेन संज्ञाभेदेन देवताभेदेनाऽऽश्रयरूपगुणभेदेन च भिन्नतया कर्मान्तरत्वेन तद्गुणोपसंहारायोगात् । यद्यपि बौधायनीयमपि शान्त्युदकं जन्मर्क्षमात्रनिमित्त एवोत्पन्नं तथाऽपि ' कृत्वा शान्त्युदकं चैव ' इति वाक्येन शान्त्युदकशब्देनैवोपादाय प्रकृतकर्मणि विनियुक्तत्वात् तदनुष्ठानमेव युक्तम् , न विष्णुधर्मोत्तरीयस्य कलशोदकस्नानस्य, शान्त्युदकशब्देनानुपादानादित्यलं वृद्धविरोधेन । ग्रहशान्तिरत्र स्वपूर्व-

† व्याख्यानम् ' सौरेणाब्दान्त ' इति नृसिंहश्लोके द्रष्टव्यम् ।

(१) प्रपा. १९८.

(२) स्मृच. १२८ ; संप्र. २९३ ; मुक्ता. २५८ ; सिन्धु. ९१६ ; संग. ६०१ ; संर. ८७९.

(३) प्रपा. १९० सदा ( तथा ) ; संप्र. २८१–२८२ ; विपा. ४५१–४५२ ; संग. ५९८ तन्न ( यन्न ).

‡ इदं सुदीर्घं वचनमुदकशान्तिप्रकरणे ( सं. का. पृ. १५५१–१५५३ ) द्रष्टव्यम् ।

† इदं मुद्रितप्रयोगपारिजातपुस्तकानुसारेण ' अशुद्धं कृत्वा चोद्यते ' इतिन्यायाक्रान्तम् । तथाहि– अस्मदुपलब्धमुद्रितप्रयोगपारिजातपुस्तके अब्दपूर्तिप्रयोगे बौधायनोक्तं शान्त्युदकं यद्यपि न लिखितं तथापि विष्णुधर्मोत्तरीयं कलशोदकस्नानमपि न लिखितम् । यत्तु विष्णुधर्मोत्तरीयं कलशोदकस्नानमुक्तं तत् अब्दपूर्तिप्रकरणं समाप्य ' अथ जन्मर्क्षकर्तव्यविधिः ' इति प्रकरणान्तरमुपक्रम्य शौनकोक्तं दूर्वाहोमप्रधानं विधिमुक्त्वा ततः परमुक्तम् । ततः ' अथ जन्मनक्षत्रदिवसकृत्यप्रयोगः ' इत्युपक्रम्य कलशोदकस्नानपूर्वकः होमत्रयस्य तन्त्रप्रयोगः अब्दपूर्तिप्रयोगात्पृथगुक्तः ।

(१) प्रपा. १९० चिपपू ( दिषु पू ) ; संप्र. २९३ ; विपा. ४५२ प्राशयेच्चा ( बालं तेना ) प्यैव ( प्यैवं ) ; संग. ५९९.

भाविनं मृत्युंजयहोममाक्षिपति, बद्धक्रमत्वात् । तथा च ब्रह्मपुराणे– ¶ ' प्रतिसंवत्सरान्तर्क्षे ... ' इति ।

संप्र. २८३–२८६

प्रतिवर्षे जन्मदिवसे तिलानामुद्वर्तनस्नानादिरूपेण षड्विधोपयोगः, गुरुदेवाविपूजनम्, जन्मग्रन्थिबन्धनम्, मार्कण्डेयप्रार्थनम्

**[1]सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।**
**गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥**

( १ ) सर्वपदं शूद्रादेरपि ग्रहणार्थम् । स्नातैः तिलस्नातैः । संप्र. २९०

( २ ) देवः कुलदेवता । § संको. १११

**[2]तिलोद्वर्ती तिलस्नायी तिलहोमी तिलप्रदः ।**
**तिलभुक् तिलवापी च षट्तिलो नावसीदति ॥**
**[3]एकैकां देवतां राम समुद्दिश्य यथाविधि ।**
**चतुर्थ्यन्तेन धर्मज्ञ नाम्ना च प्रणवादिना ॥**
**[4]स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः ।**
**प्रतिसंवत्सरं चैव कर्तव्यश्च महोत्सवः ॥**

महोत्सवः स्वेष्टदेवतामुद्दिश्य नृत्यगीतवाद्यादिपूर्वकपूजारूपः कर्तव्य इत्यर्थः । संर. ८८०

**[5]गुडदुग्धतिलान्दद्याज्जन्मग्रन्थेश्च बन्धनम् ।**
**गुग्गुलं निम्बसिद्धार्थदूर्वागोरोचनायुतम् ॥**

( १ ) जन्मग्रन्थिबन्धनं नाम वक्ष्यमाणगुग्गुलादिपञ्चद्रव्यगर्भपोटलिकायाः हस्ते बन्धनम् । तान्येव द्रव्याण्याह– गुग्गुलमिति । संप्र. २९१

( २ ) उक्तपञ्चद्रव्यगर्भपोटलिकाबन्धनं दक्षिणहस्ते कार्यमित्याशयः । संको. १११

**[1]संपूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम् ।**
**' चिरंजीवी यथा त्वं भो भविष्यामि तथा मुने ।**
**रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा ॥**
**[2]मार्कण्डेय नमस्तेऽस्तु सप्तकल्पान्तजीवन ।**
**आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन् मुने ॥**
**[3]चिरंजीवी यथा त्वं तु मुनीनां प्रवर द्विज ।**
**कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् ॥**
**[4]मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।**
**आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव ॥ '**

---

¶ वचनानीमानि ब्रह्मपुराणे द्रष्टव्यानि ।

§ शेषं संप्रगतम् ।

(१) अप. १।११–१३ पृ. २९ सर्वैश्च ज (सर्वैः स्वज) पाणि ( वारि ) प्रयत्न ( विशेष ) मार्कण्डेयः ; संप्र. २९० इत आरभ्य षट् श्लोकाः नवमश्च ब्रह्मपुराणगर्गसंहितयोः ; संको. १११ इत आरभ्य नव श्लोकाः ब्रह्मपुराणगर्गसंहितयोः .

(२) संप्र. २९१ षट्तिलो (षट्तिली) ; संको. १११.

(३) संप्र. २९१ ; संको. १११.

(४) अप. १।११–१३ पृ. २९ तरौ त ( तरस्त ) चैव ( यत्नात् ) मार्कण्डेयः ; संप्र. २९१ ; संको. १११ ; संर. ८८० (=) चैव ( यत्नात् ) उत्त.

(५) संप्र. २९१ ; सिन्धु. ९१५ द्वितीयपादे ( हस्ते ग्रन्थौ च बन्धयेत् ) युतम् ( दिकम् ) एतदादयः सर्वे श्लोकाः कृत्यचिन्तामणौ ; शूक. १०२ र्थदूर्वा ( र्थं दूर्वा ) शेषं सर्वं सिन्धुवत् ; संको. १११ ; बाल. १।११–१२ पृ. ३१ द्वितीयपादे ( हस्तग्रन्थौ च बन्धयेत् ) र्थदूर्वा ( र्थं दूर्वा ) युतम् ( दिकम् ) एतदादयः सर्वे श्लोकाः कृत्यचिन्तामणौ भविष्ये ; संग. ६०० वीरमित्रोदये ; संब. ८२ सर्वं शूकवत् .

(१) संप्र. २९१ चिरं ( चिर ) ; सिन्धु. ९१५ ; शूक. १०२ ; संको. १११ ; बाल. १।११–१२ पृ. ३१ चिरं ( चिर ) भो ( तु ) ; संग. ६०० प्रथमार्धमात्रम्, वीरमित्रोदये ; संब. ८२.

(२) सिन्धु. ९१५ ; शूक. १०२ ; संको. १११ ; बाल. १।११–१२ पृ. ३१ ; संब. ८२.

(३) सिन्धु. ९१५ ; शूक. १०२ ; संको. १११ ; बाल. १।११–१२ पृ. ३१ चिरं ( चिर ) ; संब. ८२.

(४) संप्र. २९१ ; सिन्धु. ९१५ पू. ' सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः । मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुर्विवृद्धये ॥ ' इत्यधिकः श्लोकः ; शूक. १०२ रिष्टार्थ ( रारोग्य ) अधिकः श्लोकः सिन्धुवत् ; संको. १११ ; बाल. १।११–१२ पृ. ३१ सर्वं शूकवत् ; संब. ८२ सर्वं शूकवत् .

## वृद्धगार्ग्यः

नक्षत्रद्वैधे निर्णयः, आयुष्यहोमः, दिगीशादिपूजनम्, बद्धानां मोचनम्, पुण्यकर्मकरणम्, पापकर्मणः शतगुणत्वम्

**[1]एकमासे द्विजन्मर्क्षे प्रथमे जन्म चाऽऽचरेत् ।**
**तस्मिन्नक्षत्रखण्डे तु अन्त्यखण्डे समाचरेत् ॥**

**[2]उदयव्यापिजन्मर्क्षे तस्माद्ग्राह्यं तु जन्मनः ।**
**संगवव्यापिखण्डर्क्षे तत्र जन्म वरं शुभम् ॥**

जन्मर्क्षद्वैधे निर्णयमाह वृद्धगार्ग्यः– एकेति । द्विविधं तावन्नक्षत्रद्वैविध्यम् । तत्र एकस्मिन् सौरे मासे द्विवारं नक्षत्रप्रवृत्त्या एकम् । एकस्यैव नक्षत्रस्य दिनद्वयं प्रवृत्त्या च परम् । तत्र पूर्वार्धेन प्रथमं व्याख्यातम् । उत्तरसार्धश्लोकेन द्वितीयं व्याख्यातम् । संप्र. २८२

**[3]आयुष्यहोमं कृत्वा च दिगीशानर्चयेद्बुधः ।**
**देवांश्च वैदिकान् विप्रान् गुरून्बन्धून्सुहृज्जनम् ॥**

**[4]प्रणम्य पूजयेद्विद्वान् गन्धमाल्यानुलेपनैः ।**
**नवाम्बरधरो भूत्वा शुक्लस्रग्वस्त्रभूषणः ॥**

**[5]गुरुप्रणामं कृत्वा च राजा तु महिषीसखः ।**
**निगडेभ्यो विसृज्याथ मनुजान्निगडैर्युतान् ॥**

राजेत्युपलक्षणम् । तेनान्येनापि कर्तव्यम्, आयुष्यत्वात् । $ विपा. ४५२

**[1]अन्यानि पुण्यकर्माणि प्रकुर्वीत यथाविधि ।**
**पापकर्म न कुर्वीत यस्माच्छतगुणं भवेत् ॥**

## ब्रह्माण्डपुराणम्

सकृत् प्रतिमासं प्रतिवर्षं वा ब्रह्मपूजनं हिरण्यदानं च, सर्वमायुः फलम्

**[2]गव्येन भूमिं शकृता जलेन**
**चाऽऽलिप्य मध्ये सिततण्डुलैश्च ।**
**सरोरुहं केसरभूषणाढ्यं**
**सकर्णिकं चाष्टदलं विलिख्य ॥**

**तस्मिन् हिरण्यं शतमानपत्रं**
**निधाय तस्योपरि संविचिन्त्य ।**
**ब्रह्माणमीशं कमलासनस्थ-**
**माराध्य गन्धादिभिरादरेण ॥**

**विप्रं तथा वेदविदं विचिन्त्य**
**संचिन्त्य बुद्ध्या तु समर्चयित्वा ।**
**दद्यात्सुवर्णं शतमानमस्मै**
**संप्रीयतामात्मभूरित्युदीर्य ॥**

**योऽसौ दानं शतमानं हिरण्यं**
**दद्यादायुः सर्वमेवेति चोक्तम् ।**
**अतः कुर्यान्नरदैतत्सकृद्वा**
**नित्ये मासे हायने शक्तितो वा ॥**

---

(१) प्रपा. १९८ मासे ( मासि ) प्रथमे ( अन्यर्क्षे ) अन्त्य (अन्य) विष्णुधर्मोत्तरे ; संप्र. २८२ ; संग. ५९२.

(२) प्रपा. १९८ जन्मनः ( जन्मतः ) खण्डर्क्षे तत्र (जन्मर्क्षे तच्च) विष्णुधर्मोत्तरे ; संप्र. २८२ ; संग. ५९८ ग्राह्यं ( गुह्यं ) ; संव. ८१ जन्मर्क्षे ( जन्मर्क्षे ) गर्गः.

(३) प्रपा. १९८ विष्णुधर्मोत्तरे ; संप्र. २८९ ; विपा. ४५२ ज्जनम् ( ज्जनान् ) गर्गः ; संग. ५९९ ( आयुष्यहोमं च कृत्वा दिगीशावर्चयेद्बुधः । देवांश्च वैदिकान् विप्रान् गुरून्बन्धुसुहृज्जनान् ॥ ) गर्गः .

(४) प्रपा. १९८ द्वान् ( प्रान् ) चतुर्थपादे ( युक्तः स्रग्वस्त्रभूषणैः ) विष्णुधर्मोत्तरे ; संप्र. २८९ ; विपा. ४५२ गर्गः ; संग. ५९९ गर्गः .

(५) प्रपा. १९८ तु ( च ) डेभ्यो ( लेभ्यो ) डैर्यु ( लैर्यु ) विष्णुधर्मोत्तरे ; संप्र. २८९ ; विपा. ४५२ विसृ

$ संग. विपावत् ।

( विभ ) डैर्युतान् ( डस्थितान् ) गर्गः ; संग. ५९९ पू., गर्गः .

(१) प्रपा. १९८ विष्णुधर्मोत्तरे ; संप्र. २८९ ; विपा. ४५२ पापकर्म ( पापं कर्म ) गर्गः ; संग. ५९९ सर्वं विपावत् .

(२) प्रपा. १९३.

## स्कन्दपुराणम्

वर्षवृद्धौ औदयिकी तिथिः, वर्जनीयाः पदार्थाः, प्रतिवर्षं प्रतिमासं वाऽनुष्ठानम्, वर्षवृद्धिफलम्

[1]युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥

अत्र जन्मतिथिरौदयिकी ग्राह्या, ' युगाद्या...... युग्मता ॥ ' इति कृत्यतत्त्वार्णवे वचनात् ।

¶ सिन्धु. ९१६

[2]खण्डनं नखकेशानां मैथुनाध्वानमेव च ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥

(१) अध्वानम् अध्वगमनम् । संप्र. २९२

(२) अध्वगमः प्रवासः । मैथुननिवृत्तौ श्रीवृद्धिरिति रुद्रधरः, आमिषत्यागे जन्मान्तरीयश्रोत्रियत्वं फलमिति निबन्धकारा इति सदानन्दकीर्तिचन्द्रोदये ।

संर. ८७८

[3]एवं वर्धापनं वत्सरान्ते वै जन्मवासरे ।
व्यतीतेषु च मासेषु बालानां बलवृद्धये ॥

[4]न बालरोगाः प्रभवन्ति तस्य
न स्कन्दरोगा न तु शाकिनीभ्यः ।
भयं भवेन्नैव जलाग्निदिग्भ्यो
बालस्य भूतादिविशेषतश्च ॥

---

¶ शूक., संव., संर. सिन्धुवत् ।

(१) सिन्धु. ९१६ कृत्यतत्त्वार्णवे ; शूक. १०२ ; संव. ८२ युगाद्या व (युगान्तव) ; संर. ८७९ कृत्यतत्त्वार्णवे.

(२) संप्र. २९२ ; सिन्धु. ९१५-९१६ नमेव च (गमौ तथा) ; शूक. १०२ सिन्धुवत् ; संको. ११२ ध्वान (धान) ; बाल. १।११-१२ पृ. ३१ हिंसां (हिंसा) शेषं सिन्धुवत् ; संग. ६०१ ; संव. ८२ संकोवत् : ८३ सिन्धुवत् ; संर. ८७८ सिन्धुवत् ; संदी. २६१ (भागः २) सिन्धुवत्.

(३) शूक. १०४ ; संव. ८३.

(४) शूक. १०४ ; संव. ८३ चतुर्थपादे (बालश्च पुष्टः स विशेषतश्च).



## विष्णुधर्मोत्तरपुराणम्

जन्मनक्षत्रे वासुदेवसोमादिपूजोत्तरकमोषधिस्नानम्, श्राद्धहोमब्राह्मणभोजनानि, स्नानफलम्

परशुराम उवाच–

[1]स्नानमन्यत्समाचक्ष्व भगवन्पुष्टिवर्धनम् ।
न तृप्तिमधिगच्छामि तव वाक्यामृतं पिबन् ॥

पुष्कर उवाच–

[2]जन्मनक्षत्रगे सोमे सर्वौषधिसमन्वितम् ।
कुम्भं तु पूजितं कृत्वा स्नपनं चैव कारयेत् ॥

[3]स्नातश्चैवार्चयेद्देवं वासुदेवं जगत्पतिम् ।
नक्षत्रदैवतं चन्द्रं नक्षत्रं वरुणं तथा ॥

[4]वाहनायुधपीठाद्यं छत्रं संपूजयेत्तथा ।
यथोक्तदेवतालिङ्गैर्मन्त्रैश्च जुहुयाद्घृतम् ॥

[5]शक्त्या च दक्षिणा देया ब्राह्मणेभ्यो भृगूत्तम ।
ततोऽनुलिप्तः सुरभिः स्रग्वी विविधभूषणः ॥

[6]तिष्ठेन्मनुजशार्दूल हविष्याशी जितेन्द्रियः ।
उपवासं विनाऽप्येतत्स्नानं पुष्टिप्रदं तथा ॥

[7]अलक्ष्मीशमनं धन्यं कलिदुःस्वप्ननाशनम् ।
सर्वव्याधिहरं पुण्यं पवित्रं पापनाशनम् ॥

---

(१) प्रपा. १९८ (उवाच०) ; संप्र. २९४ ; विपा. ४५३ प्रपावत्.

(२) प्रपा. १९८ (उवाच०) ; संप्र. २९४ ; विपा. ४५३ सोमे (सौम्ये).

(३) प्रपा. १९८ दैवतं चन्द्रं न (देवतां चन्द्रन) ; संप्र. २९४ ; विपा. ४५३.

(४) प्रपा. १९८ ; संप्र. २९४ ; विपा. ४५३.

(५) प्रपा. १९८ लिप्तः सु (लिप्तसु) ; संप्र. २९४ ; विपा. ४५३.

(६) प्रपा. १९८ ; संप्र. २९४ ; विपा. ४५३ तथा (नृणाम्).

(७) प्रपा. १९८ ; संप्र. २९४ दुःस्वप्नना (दुःखप्रणा) ; विपा. ४५३.

[1]मातृस्थानं च जगतां जन्मताराऽभिधीयते ।
चन्द्ररूपी च भगवान् पिता विष्णुः प्रकीर्तितः ॥
[2]तस्मात्सर्वप्रयत्नेन जन्मनक्षत्रसंस्थितम् ।
भक्त्या संपूजयेच्चन्द्रं जन्मर्क्षे च विशेषतः ॥
[3]पूजां सदा चन्द्रमसस्तु कृत्वा
जन्मर्क्षसंस्थस्य भृगुप्रधान ।
कामानवाप्नोति नरस्तु सर्वान्
सुखी तथा स्यात्खलु नष्टपाप्मा ॥
[4]जन्मनक्षत्रगे सोमे शिरःस्नातेन यत्नतः ।
पूजा सोमस्य कर्तव्या नक्षत्रस्य तथाऽऽत्मनः ॥
श्राद्धं कुर्यात्प्रयत्नेन वह्निब्राह्मणतर्पणम् ।
सुराणामर्चनं कार्यं केशवस्य विशेषतः ॥
सर्वस्वालंकृतस्तिष्ठेद्धौतवासाश्च मानवः ।
निर्मलानि च धार्याणि दन्तकेशनखानि च ॥

## पद्मपुराणम्

पूजादौ नाममन्त्रविधानम्, कर्मोपदेष्टृपूजनम्

[5]ओंकारादिसमायुक्तं नमस्कारान्तकीर्तनम् ।
स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते ॥
अनेनैव विधानेन गन्धपुष्पे निवेदयेत् ।
एकैकस्य प्रकुर्वीत यथोद्दिष्टक्रमेण हि ॥
तथोपदेष्टारमपि पूजयेच्च ततो गुरुम् ।
न पूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया ॥

सर्वत्र कर्मोपदेशकं दक्षिणादिभिरर्चयेत् । तथा च तत्रैव— तथोपेति । संप्र. २९२

(१) प्रपा. १९८; संप्र. २९४ ताराऽभि (ताराविं); विपा. ४५३ संप्रवत्.

(२) प्रपा. १९८; संप्र. २९५; विपा. ४५३.

(३) प्रपा. १९८ स्यात्खलु (स्याद्भुवि); संप्र. २९५; विपा. ४५३–४५४ चतुर्थपादे (सुखी तदा स्याद्भुवि नष्टपापः).

(४) अप. ११।१–१३ पृ. २९.

(५) संप्र. २९२.

## ब्रह्मपुराणम्

प्रतिवर्षं जन्मनक्षत्रे मृत्युंजयहोमः, कौतुकबन्धनम्, ग्रहयज्ञः, नक्षत्रदेवतापूजनम्, आयुष्यहोमः, ब्राह्मणभोजनम्, दक्षिणादानम्, कटिसूत्रबन्धनम्, वस्त्रपरिधापनम्

[1]प्रतिसंवत्सरान्तर्क्षे वक्ष्ये नृणां विधिं परम् ।
पूर्वाह्णे चैव जन्मर्क्षे स्नात्वा नद्यां सुरोत्तम ॥
[2]मध्वाज्यदधिसंयुक्ता दूर्वा मृत्युंजयेन तु ।
जुहुयाच्च सहस्रं वा अष्टाविंशतिमाहुतीः ॥
[3]ततोऽपराह्णे संप्राप्ते कृत्वा कौतुकमङ्गलम् ।
ग्रहपूजां प्रकुर्वीत नक्षत्राधिपपूजनम् ॥
[4]आयुष्यहोमं कृत्वा च श्रोत्रियानथ भोजयेत् ॥
दत्त्वा गोभूहिरण्यादि तथा स्वर्णादिनिर्मितम् ।
बद्ध्वा वा कटिसूत्रं च वस्त्रं च परिधापयेत् ॥

गर्गोक्तं कौतुकबन्धनं शान्त्युदकस्याङ्गम्, इदं तु कौतुकबन्धनं ग्रहशान्त्यादेरङ्गमिति न स्थानद्वयविकल्पः, संनिधिलक्षणप्रकरणेन तत्तदङ्गत्वावगमात् । ग्रहपूजा नवग्रहमखः, 'ग्रहशान्तिं समाप्यैव' इति गर्गेण ग्रहशान्तिपदोपादानात् । नक्षत्राधिपः तन्नक्षत्रदेवता, न चन्द्रः, 'नक्षत्रदेवतापूजां कुर्याद् गुरुसमन्वितः ।' इति

(१) प्रपा. १९० न्तर्क्षे (न्त्यर्क्षे); संप्र. २८६; सिन्धु. ९१६ पू.; विपा. ४५२ रान्तर्क्षे (रं तार्क्ष्य) सुरोत्तम (नरोत्तमः); संग. ५९९ प्रपावत्; संर. ८७८ सुरोत्तम (नरोत्तमः) उत्त.

(२) प्रपा. १९० क्ता दूर्वा (क्तदूर्वा); संप्र. २८६ क्ता दूर्वा (क्तां दूर्वां); विपा. ४५२ तु (च) माहुतीः (मेव वा); संग. ५९९; संर. ८७८ तु (च) उत्तरार्धे (जुहुयाद्वै सहस्रं तु शतमष्टोत्तरं तु वा।).

(३) प्रपा. १९०; संप्र. २८६; विपा. ४५२ मङ्गलम् (बन्धनम्) पू.; संग. ५९९–६०० नक्षत्रा (भक्षेत्रा).

(४) प्रपा. १९०–१९१ कृत्वा च (कृत्वाऽथ) वा (ऽथ); संप्र. २८६; सिन्धु. ९१६ द्वितीयार्धमात्रम्; संग. ६००.

वक्ष्यमाणशौनकवाक्यात् । पूजनं होमस्याप्युपलक्षणम् ।
२८६

'आयुष्यहोमं... भोजयेत्' इत्यत्राऽऽयुष्यहोमश्रोत्रियभोजनयोः पौर्वापर्यसिद्धौ पुनरथशब्दोपादानमायुष्यहोमानन्तरं श्रोत्रियभोजनात् प्राक् मध्ये दिगीशपूजां गमयति । तथा च वृद्धगर्गः– 'आयुष्यहोमं कृत्वा च दिगीशानर्चयेद्बुधः । ...' इति ।

संप्र. २८८–२८९

प्रतिवर्षं जन्मदिवसे तिलानामुद्वर्तनस्नानादिरूपेण षड्विधोपयोगः, गुरुदेवादिपूजनम्, जन्मग्रन्थिबन्धनम्, मार्कण्डेयप्रार्थनम्, मृत्युंजयादिपूजनम्, सगुडतिलपयःप्राशनम्

$'सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥

'तिलोद्वर्ती तिलस्नायी तिलहोमी तिलप्रदः ।
तिलभुक् तिलवापी च षट्तिली नावसीदति ॥
एकैकां देवतां राम समुद्दिश्य यथाविधि ।
चतुर्थ्यन्तेन धर्मज्ञ नाम्ना च प्रणवादिना ॥
स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं चैव कर्तव्यश्च महोत्सवः ॥
गुडदुग्धतिलान्दद्याज्जन्मग्रन्थेश्च बन्धनम् ।
गुग्गुलं निम्बसिद्धार्थदूर्वागोरोचनायुतम् ॥
संपूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम् ।

'चिरंजीवी यथा त्वं भो भविष्यामि तथा मुने ।
रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा ॥
मार्कण्डेय नमस्तेऽस्तु सप्तकल्पान्तजीवन ।
आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने ॥
चिरंजीवी यथा त्वं तु मुनीनां प्रवर द्विज ।
कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् ॥
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव ॥'

'मृत्युंजयं समभ्यर्च्य तथा नक्षत्रदेवताम् ।
मार्कण्डेयं च द्रौण्यादीन्संपूज्य सगुडं पयः ।
सतिलं प्राशयेदायुरभिवृद्ध्यर्थमेव तु ॥

## भविष्यपुराणम्

प्रथममासप्रवेशे बालवर्धापनविधेरनुष्ठानम्, कुमुदादिपूजनम्, बालपूजनम्, सुवासिनीभ्यः पक्वान्नादियुतवंशपात्र–वस्त्रादिदानम्

युधिष्ठिर उवाच–
'देव देव महाभाग बालानां हितकाम्यया ।
वर्धापनविधिं ब्रूहि राज्ञामपि विशेषतः ॥

कृष्ण उवाच–
'एवं प्रयागे व्यासेन पृष्टः सनत्कुमारः प्राह ॥
'मासि प्रविष्टे प्रथमे बालवर्धापनं बुधैः ।
राज्ञां वा तन्मुनिश्रेष्ठ समान्ते च विधीयते ॥
कुमुदा माधवी गौरी रुद्राणी पार्वती उमा ।
काली सरस्वती चैव सावित्री ब्रह्मणः प्रिया ॥
'सती संज्ञा तथा मेधा पुष्टिस्तुष्टिसमन्विता ।
नृपडिम्भपरित्राणा जीवन्ती नाम षोडशी ॥
'पूजनीयाः प्रयत्नेन सूर्यमध्ये विलिख्य तु ।
रजनीपिष्टतो वाऽपि लिखेद्वा कुङ्कुमेन तु ॥

---

$ एतत्प्रघट्टकस्थकतिपयवचनव्याख्यानमेतत्समानाकारगर्गवचनेषु ( सं. का. पृ. २८०१ ) द्रष्टव्यम् ।

(१) संप्र. २९० अत्रैव पृष्ठे 'सर्वैः स्वजन्मदिवसे स्नातैर्मङ्गलवारिभिः' इति पूर्वार्धमात्रमपि, इत आरभ्य षट् श्लोकाः नवमश्च ब्रह्मपुराणगर्गसंहितयोः ; संको. १११ इत आरभ्य नव श्लोकाः ब्रह्मपुराणगर्गसंहितयोः ; संग. ५९८ द्वितीयपादे ( स्नानं मङ्गलवारिभिः ) ; संर. ८७७ प्राश्च...यत्नतः ( प्रांस्तु पूजयेत्कुलदेवताम् ) उत्त. ; संदी. २५५ ( भागः २ ) सर्वैश्च ज ( सर्वैः स्वज ).

(२) एतदादीनामष्टानां श्लोकानां स्थलादिनिर्देशः गर्गश्लोकेषु ( सं. का. पृ. २८०१ ) द्रष्टव्याः .

(१) संर. ८७७. (२) शूक. १०४ ; संव. ८३.
(३) शूक. १०४ ; संव. ८३ (एवं॰).
(४) शूक. १०४ ; संव. ८३.
(५) शूक. १०४ ; संव. ८३ जीवन्ती ( जीवती ).
(६) शूक. १०४ ; संव. ८३.

[1]गन्धपुष्पैः सुगन्धैश्च दीपवस्त्रनिवेदनैः ।
पूजनीयास्तु संस्थाप्य कुमुदाद्याः पृथक् पृथक् ॥
[2]नामभिः पूजनीयास्ताः पूजयित्वा तु बालकम् ।
भूपतिं तु मुने वाऽथ सर्वालंकारभूषितम् ॥
[3]पूजयेन्मातृपितरौ बालवर्धापने सति ।
पुरोधाः पूजयेद् ब्रह्मन् राजवर्धापनाविधौ ॥
[4]कुमुदाद्याः समुद्दिश्य वंशपात्राणि कल्पयेत् ।
एकैकस्या धनाढ्यस्तु दद्यात्षोडश षोडश ।
तदर्धानि तदर्धानि द्वे चैकैकमथापि वा ॥
[5]बहुपक्वान्नयुक्तानि बहुपुष्पफलानि तु ।
सुवासिनीभ्यो विप्राणां दद्याद्भक्तिपुरःसरम् ॥
[6]'प्रीयतां कुमुदाद्या मे बालकायुर्विवर्धनाः ।
बलेन यशसा तुष्ट्या बालं मे वर्धयन्तु वै ।
प्रयच्छन्तु सदाऽऽरोग्यं सौख्यं सौभाग्यमेव च ॥'
[7]श्रीश्च तेति च मन्त्रेण ह्यर्घ्यं ताभ्यः प्रदापयेत् ।
वस्त्रताम्बूलपुष्पादि दिने तस्मिन्प्रकल्पयेत् ।
सुवासिनीनां देयं तु कुमुदा प्रीयतामिति ॥
[8]कुमुदा माधवी गौरी रुद्राणी पार्वती ह्युमा ।
काली सरस्वती चैव सावित्री ब्रह्मणः प्रिया ॥
सती संज्ञा तथा मेधा तुष्टिः पुष्टिस्तथैव च ।
नृपडिम्भपरित्राणा जीवन्तीत्येव षोडश ॥
सुवासिनीस्तु तत्प्रीत्यै गन्धमाल्यैश्च पूजयेत् ।
शूर्पेष्वथो षोडशसु भक्ष्यादि प्रक्षिपेद् बुधः ॥

(१) शूक. १०४ ; संव. ८३ गन्धपु ( गन्धैः पु ).
(२) शूक. १०४ ; संव. ८३ पूजनी ( स्नापनी ).
(३) शूक. १०४ ; संव. ८३ राज ( शत ).
(४) शूक. १०४ ; संव. ८३ अशुद्धिबहुलो ग्रन्थः .
(५) शूक. १०४ ; संव. ८३.
(६) शूक. १०४ ; संव. ८३ वै ( ते ).
(७) शूक. १०४ ; संव. ८३ ह्यर्घ्यं ( अर्घ्यं ).
(८) प्रपा. १९३.

तत्संख्याकैश्च शूर्पैस्तु द्रव्याण्याच्छादयेत्तथा ।
ताभ्यस्तत्प्रीतये दद्यात्तानि चैव यथाक्रमम् ॥
'प्रीयन्तां कुमुदाद्या मे बालप्राणविवर्धनाः ।
बलेन यशसा पुष्ट्या सहाऽऽयुर्वर्धयन्तु मे ।
प्रयच्छन्तु सदाऽऽरोग्यं सौख्यं सौभाग्यमेव च ॥'

प्रतिवर्षं जन्मदिवसे मार्कण्डेयस्य द्रौण्यादीनां च पूजनम् , ब्राह्मणेभ्यस्तिलादिदानम् , नीराजनम् , ब्राह्मणभोजनम्

[1]प्रतिसंवत्सरं कुर्यान्मार्कण्डेयस्य पूजनम् ।
द्रौण्यादींश्च तथाऽभ्यर्च्य पाद्यगन्धादिभिस्ततः ॥
[2]पुष्पाञ्जलिं समर्प्याथ प्रार्थयेद्वरमुत्तमम् ।
ब्राह्मणेभ्यस्ततो दद्यात्तिलान् क्षीरं घृतं गुडम् ।
नीराजितो ब्राह्मणांश्च तोषयेद्भोजनादिभिः ॥

प्रतिसंवत्सरमिति वचनात् नित्याधिकारः । द्रौणिः अश्वत्थामा । नीराजित इत्यत्र सुवासिनीभिरिति शेषः । ब्राह्मणांश्चेत्यत्र चकारः सुवासिनीग्रहणार्थः । आदिशब्देन दक्षिणानमस्कारादिग्रहणम् । संर. ८७८

[3]सर्वेश्च जन्मदिवसे स्नातो मङ्गलवारिभिः ।
नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ॥
[4]द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् ।
मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा ॥

(१) संर. ८७८ : ८८० पू. (२) संर. ८७८.
(३) संप्र. २९१ उत्त., श्रीपतिव्यवहारनिर्णये ; सिन्धु. ९१४ उत्त. , व्यवहारनिर्णये ; शूक. १०१ उत्त. , गौडव्यवहारनिर्णये ; बाल. १।११-१२ पृ. ३० ; संव. ८२ युषम् ( युषः ) शेषं सर्वं शूकवत् ; संर. ८७८ सर्वं सिन्धुवत् .
(४) संप्र. २९२ श्रीपतिव्यवहारनिर्णये ; सिन्धु. ९१४ उत्त. व्यवहारनिर्णये ; शूक. १०१ उत्त. , गौडव्यवहारनिर्णये ; बाल. १।११-१२ पृ. ३० उत्त. ; संग. ६०१ (=) ; संव. ८२ उत्त. गौडव्यवहारनिर्णये ; संर. ८७८ स्तथा ( स्तदा ) उत्त. व्यवहारनिर्णये.

'ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ।
प्रह्लादं च हनूमन्तं बिभीषणमथार्चयेत् ॥
'स्वनक्षत्रं जन्मतिथिं प्राप्य संपूजयेन्नरः ।
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ॥

रामोऽत्र परशुरामः । द्रौणिः अश्वत्थामा । पूजा च प्रतिमास्वक्षतपुञ्जेषु शालग्रामे जलपूर्णकलशे वा कार्या । तथा च पद्मपुराणे– 'शालग्रामशिलारूपी यत्र तिष्ठति केशवः । तत्र देवासुरा यक्षा भुवनानि चतुर्दश ॥' इति ।                 संप्र. २९१–२९२

## देवीपुराणम्

जन्मतिथिद्वैधे निर्णयः

'घस्रद्वये जन्मतिथिर्यदि स्यात्
कुर्यात्तदा जन्मभसंयुतां च ।
असंगता तेन दिनद्वयेऽपि
पूज्या परा या भवतीह यत्नात् ॥

घस्रः दिनम् । जन्मभं जन्मनक्षत्रम् ।     संप्र. २९०

## आदित्यपुराणम्

प्रतिवर्षं जन्मदिवसे गुरुदेवादिपूजनम्, सतिलगुड-पयःपानम्, तिलादिदानम्

'सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलवारिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥

सर्वैरित्यत्र बान्धवैरिति शेषः । स्नातः स्नापितः । अथवा बान्धवैः सह स्नात इत्यर्थः । मङ्गलैर्युक्तानि वारीणि मङ्गलवारीणि, तैः । पुष्पाक्षतलाजाः मङ्गलानि । पुष्पयुक्तमेकं वारि, अक्षतयुक्तमेकम्, लाजयुक्तमेकम् । तत्तन्मङ्गलपदार्थयोगकृतो वारिभेदः । पुष्पाक्षत-लाजमिश्रितमेकस्मिन् पात्रे संभरणीयम्, एवमेवान्यस्मिन् पात्रद्वये, इत्येवं वा मङ्गलवारिबहुत्वं संपादनीयम् । चकारोऽवधारणार्थः । स च स्नात इत्यनन्तरं योज्यः । जन्मदिवसे सर्वैर्मङ्गलवारिभिः स्नात एव गुर्वादीन् पूजयेदित्यर्थः । अथवाऽलंकारधारणकुलदेवतानमस्कारसमुच्चयार्थः । गुरुदेवाग्निविप्रांश्चेत्यत्रत्यश्चकारः कुलदेवताग्रहणार्थः, 'गुरुदेवाग्निविप्रांस्तु पूजयेत् कुलदेवताम् ।' इत्यायुर्वर्धापनं प्रकृत्य ब्राह्मोक्तेः ।         संर. ८७७

'स्वनक्षत्रं च पितरस्तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं यत्नात्कर्तव्यश्च महोत्सवः ॥

(१) संप्र. २९१ श्रीपतिव्यवहारनिर्णये ; सिन्धु. ९१५ व्यवहारनिर्णये ; शूक. १०१–१०२ गौडव्यवहारनिर्णये ; संको. १११ श्रीपतिव्यवहारे ; बाल. १।११–१२ पृ. ३० प्रह्वा (प्रह्वा) ; संग. ६०१ (=) ; संब. ८२ गौड-व्यवहारनिर्णये ; संर. ८७८ व्यवहारनिर्णये.

(२) संप्र. २९१ श्रीपतिव्यवहारनिर्णये ; सिन्धु. ९१५ व्यवहारनिर्णये ; शूक. १०२ गौडव्यवहारनिर्णये ; संको. १११ उत्त. श्रीपतिव्यवहारे ; बाल. १।११–१२ पृ. ३० ; संग. ६०१ (=) ; संब. ८२ वर्षे वर्षे (वर्षं वर्षं) गौड-व्यवहारनिर्णये ; संर. ८७८ व्यवहारनिर्णये.

(३) संप्र. २९० युतां (युता) ; संको. ११२ द्वयेऽपि (द्वये चेत्) बृहद्राजमार्तण्डे ; कृम. ९१७ संको-वत्, राजमार्तण्डः ; संर. ८७९ च (तु) ता तेन (ताऽनेन) शेषं सर्वं संकोवत् ; संदी. २५५ (भागः २).

(१) प्रपा. १९० सर्वैश्च ज (सर्वैः स्वज) ; गभा. १८१ ; प्रर. ७७ ; संप्र. २८७–२८८ प्रपावत्, आदि-पुराणम् ; मुक्ता. ८१ वारि (शालि) शेषं प्रपावत्, स्मृतिरत्ने ; सिन्धु. ९१५ ; शूक. १०२ ; बाल. १।११–१२ पृ. ३० ; संब. ८२ आदिपुराणम् ; संर. ८७७ स्नातैर्म (स्नातो म) विप्राश्च पूजनीयाः (विप्रांश्च पूजयेत्तु).

(२) प्रपा. १९० ; गभा. १८१ च पितरस्त (वित्त-पश्च त) इत्यपि पाठः ; प्रर. ७७ गभावत् ; मुक्ता. ८१ नक्षत्रं (नक्षत्रे) देवः (देवाः) स्मृतिरत्ने ; सिन्धु. ९१५ रस्तथा (रौ तथा) ; शूक. १०२ ; बाल. १।११–१२ पृ. ३१ सिन्धुवत् ; संब. ८२ स्वनक्षत्रं (श्वेतसूत्रं) वत्सरं (वत्सरे) आदिपुराणम्.

स्वनक्षत्रं स्वनक्षत्रदेवता । 'स्वनक्षत्रं वित्तपश्च' इति क्वचित् पाठः । तदा वित्तपः कुबेरः ।

$ गभा. १८१

'स्वनक्षत्रं वित्तपं च तथा देवं प्रजापतिम् ।
संपूज्य भानुं विघ्नेशं मार्कण्डेयं मुनिं तथा ॥
सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः ।
पिबेदायुष्यवृद्ध्यर्थं ततो दद्यात्तिलान्घृतम् ॥

अञ्जल्यर्धमितमिति न्यूनत्वव्यावृत्त्यर्थम्, तेनाधिकपाने न क्षतिरिति केचित् । नियम इत्यन्ये ।

संर. ८७७

## अनिर्दिष्टकर्तृकवचनानि

**वर्षवृद्धिः**– राज्ञोऽभिषेकदिने तिथिनक्षत्रयोगे नक्षत्रमात्रे वा अन्येषां जन्मनक्षत्रे जन्ममासगतशुभदिने वाऽनुष्ठानम्, अधिकमासे निषेधः, कलशे पिष्टपीठे वा साशीतिपरिवारदेवतस्य मार्कण्डेयस्य पूजनम्, प्रतिदेवतं वरप्रार्थना, मङ्गलद्रव्यैः संवत्सरग्रन्थिबन्धनादिना च रक्षाविधानम्, दक्षिणादानम्, श्रीपरिहारमत्स्यमोचनतिलदानसक्तुभक्षणतिलामिषभक्षणानां फलानि, मार्कण्डेयपूजाफलम्

'तिथिनक्षत्रयोगे स्यात् प्राप्ते नक्षत्रमात्रके ।
अभिषेकदिने राज्ञो वर्षवृद्धिः प्रशस्यते ॥
अन्येषां जन्मनक्षत्रे क्षीणायुस्त्वन्यथा भवेत् ।
प्रत्यब्दं जन्मदिवसे वर्षवृद्ध्यभिषेचनम् ॥
वर्जयित्वाऽथवा कुर्याज्जन्ममासे शुभे दिने ।
वर्षवृद्ध्यभिषेकादि कर्तव्यमधिके न तु ॥

अधिके मलिम्लुचे न कर्तव्यमित्यर्थः । प्रपा. १९१

कृतनित्यक्रियो विद्वान्नवशुक्लाम्बरावृतः ।
संनिधौ विष्णुदेवस्य लिप्ते गोमयवारिणा ॥
पुण्याहं वाचयित्वा तु गुरुमित्रद्विजोत्तमैः ।
माङ्गल्यद्रव्यसंभारसंभृताभिनवं घटम् ॥

वक्त्रबिम्बसमाकारं सत्सूत्रैः परिवेष्टितम् ।
सरत्नमालिकाम्भोभिः पूरितं सितचन्दनैः ॥
सुतण्डुलैः स्थिरीभूतं चूतपल्लववक्त्रकम् ।
राजतीं प्रतिमां तत्र मार्कण्डेयमहामुनेः ॥
अथवा पिष्टपीठे तु पैष्टिकीं प्रतिमां ततः ।
स्थापयेत्प्रणवेनैव यजेत्कुम्भे जलाधिपम् ॥
वरुणं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम् ।
वामेन नागपाशं तु धारयन्तं स्वरूपिणम् ॥
मौलिनं च महाकायं चिन्तयेत्तमपां पतिम् ।
एवं संचिन्त्य वरुणं सूक्तैर्वरुणवाचकैः ॥
सितचन्दनपुष्पैश्च धूपदीपनिवेदनैः ।
राजताष्टदले पद्मे कर्णिकामध्यसंस्थितम् ॥
सौम्यं कुशासनासीनं कुण्डिकाजपमालिनम् ।
सौम्यं सोमकुलोद्भूतं रूपेणाप्रतिमं भुवि ॥
शुक्लवर्णं च तत्सूक्तैः सोमं संचिन्तयेच्छुभम् ।
पद्मिनीपत्रसंकाशं वायव्ये गणनायकम् ॥
प्रहानीशदलाग्रे तु क्षेत्रपं वह्निदिग्दले ।
मृत्युंजयं स्वमन्त्रेण नैर्ऋत्यदलमध्यके ॥
पूर्वादौ सप्तसप्तैव कृत्तिकाद्यास्तु तारकाः ।
त्रीन्त्रींस्तथा ततो राशीन्स्वनाम्ना तु समर्चयेत् ॥

उत्तराषाढानन्तरमभिजित् । तथा नक्षत्रवत्प्रागादौ पूजयेदित्यर्थः । प्रपा. १९१

मेषं धनुर्धरं सिंहं पूर्वतो याम्यगोचरे ।
मकरं वृषभं कन्यां पश्चिमे मिथुनं घटम् ।
तुलाधरं चोत्तरस्यामलिं मीनं च कर्कटम् ॥
षष्ठ्यादीनर्चयेद्वाह्ये पूर्वादिषु यथाक्रमम् ।
षष्ठीं संपूजयेद्यत्नात्साङ्गां सपरिवारकाम् ॥
वस्त्रैराभरणैर्दिव्यैः पुष्पाद्यैश्च मनोरमैः ।
आयुर्दात्रीश्चतस्रश्च मातॄः संपूजयेत्ततः ॥

आयुर्दात्रीः आयुर्दात्र्यो देवताः । तासां नामान्युत्तरत्र वक्ष्यन्ते । प्रपा. १९२

---

$ प्र. गभावत् ।

(१) संर. ८७७.

(२) प्रपा. १९१–१९२.

महाभूतानि पञ्चैव ब्रह्मविष्णुमहेश्वराः ।
मनो बुद्धिरहंकारश्चन्द्रादित्यौ च देवताः ।
अश्वत्थामादिसप्तैतान्संपूज्य प्रार्थयेद्वरम् ॥
'रत्नगर्भ सुमङ्गल्य चूतपल्लवशोभित ।
चन्दनाक्षतपुष्पाढय पूर्णकुम्भ नमोऽस्तु ते ॥
आयुःप्रद महाभाग सोमवंशविवर्धन ।
महाव्रत मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥
मार्कण्डेय महाबाहो सप्तकल्पान्तजीवित ।
आयुरारोग्यमैश्वर्यमस्माकं वरदो भव ॥
नववर्षायुषं प्राप्य तपसा महता पुरा ।
सप्तकल्पं कृतं येन स आयुर्मे प्रयच्छतु ॥
आयुर्देहि यशो देहि श्रियं देहि त्वमेव च ।
पुत्रान्पौत्रान्प्रपौत्रांश्च देहि मे गणनायक ॥
षष्ठीदेवि नमस्तुभ्यं सूतिकागृहशायिनि ।
पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे ॥
धिषणा वृद्धिमाता च गौरी च शकपूतना ।
आयुर्दात्र्यो भवन्त्वेता अद्य जन्मदिने मम ॥
क्षित्यब्वायुवियत्तेजोब्रह्मविष्णुमहेश्वराः ।
मामेव हि सदा पान्तु मार्कण्डायुर्भवाम्यहम् ॥
मनो बुद्धिरहंकारश्चन्द्रादित्यौ तु देवताः ॥
मामेव हि सदा पान्तु चिरजीवी भवाम्यहम्॥'
[1]'अश्वत्थामा बलिर्व्यासो हनूमांश्च बिभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
[2]सप्तैतान्यः स्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥
[3]'द्रोणपुत्र महाभाग रुद्रतेजःसमुद्भव ।
भवाऽऽयुर्बलदो मे त्वमश्वत्थामन्नमोऽस्तु ते ॥

दैत्येन्द्रकुलसंभूत बले दानक्रियारत ।
प्रपन्नः शरणं च त्वां दीर्घमायुः प्रयच्छ मे ।
नारायणांशसंभूत ममाद्य वरदो भव ॥
अञ्जनागर्भसंभूत कपीन्द्र सचिवोत्तम ।
रामप्रिय नमस्तुभ्यं हनुमन् रक्ष सर्वदा ॥
विभीषण नमस्तुभ्यं रामपादाब्जपूजक ।
आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन ॥
जितेन्द्र भरताचार्य सर्वशास्त्रविशारद ।
शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥
रेणुकेय महावीर्य कार्तवीर्यकुलान्तक ।
आयुः प्रयच्छ मे राम जामदग्न्य नमो-
ऽस्तु ते ॥'
एवं संप्रार्थ्य भक्त्या तान्प्रणमेद्दण्डवत् क्षितौ ।
भूमिं दीपं फलं दूर्वां पुष्पं गोरोचनं तथा ।
दर्पणं दधि सिद्धार्थान्घृतं चाऽऽसादयेत्
क्रमात् ॥

चकारेण सुवर्णमन्नं च सूचितम् । ‡ तयोरुत्तरत्र विनियोगदर्शनात् । क्रमादिति वक्ष्यमाणमन्त्रक्रमात्यर्थः ।

प्रपा. १९२

ततो रक्षां च रक्षोघ्नैर्द्रव्यैर्मङ्गलसाधनैः ।
द्विजाः कुर्वन्तु वेदज्ञा वेदमन्त्रैः शुभार्थिनः ॥
अग्ने त्वमिति मन्त्रेण नानाद्रव्यसमीक्षणम् ।
युञ्जन्तीति च मन्त्रेण मूर्ध्नि रोचनमालिखेत् ॥
तेजोऽसीति घृतेनैव (§ तस्मिन्तेनाऽऽ ?) त्म-
लोचनम् ।
दधिक्राव्णऋचा दध्ना ललाटे तिलकं लिखेत् ॥
दद्याच्छिरसि दूर्वाश्च काण्डान्मन्त्रेण मन्त्रिताः ।
एते रुद्रा वसवः सिद्धार्थं शिरसि क्षिपेत् ॥

---

(१) प्रपा. १९२ ; गभा. १८२ ; प्रर. ७९ ; संग. ६०४.

(२) प्रपा. १९२ ; गभा. १८२ तान्यः (तांश्च) सोऽपि सर्वव्याधि (साग्रमपमृत्यु) ; प्रर. ७९ सोऽपि (साग्रं) ; संग. ६०४ सोऽपि सर्वव्याधि (साग्रमपमृत्यु).

(३) प्रपा. १९२–१९३.

‡ अत्रोत्तरत्रान्नविनियोगदर्शनोक्तेः प्रयोगलेखनावसरेऽन्नस्याऽऽसादनोक्तेः "अन्नपतेऽन्नस्य' इति मन्त्रेणान्ननमस्कारं कारयित्वा" इत्यन्नविनियोगोक्तेश्च वक्ष्यमाणोक्तद्रव्यविनियोगवचनेभ्योऽन्नविनियोगवचनं प्रभ्रष्टमिति निर्णीयते ।

§ प्रयोगानुरोधेनात्र कश्चिदञ्जनविधायकः शब्दः स्यात् ।

याः फलिनीत्यृचा सम्यङ् नमस्कुर्यात्फलोत्तमम् ।
शिरसि प्रक्षिपेत्पुष्पं श्रीश्च मे मन्त्रमन्त्रितम् ॥
आकृष्णेनेति मन्त्रेण दर्पणे मुखदर्शनम् ।
ज्योतिरसीत्यृचा दीपं भूरसीति भुवं स्पृशेत् ॥
यदा बध्नमृचा स्वर्णं नमस्कुर्यात्कृताञ्जलिः ।
गन्धवस्त्रमलंकारं गृह्णीयात्तदनन्तरम् ॥
दूर्वां सितां सितां निम्बरोचनां वेणुरोचनाम् ।
न्यग्रोधशृङ्गसिद्धार्थान्पञ्चरत्नानि वै यतः ॥
एभिः संवत्सरग्रन्थिबन्धनं समुदाहृतम् ।
ग्रन्थिबन्धं च कर्तव्यं दीर्घायुत्वेतिमन्त्रतः ॥
वर्षवृद्धेरपूर्वत्वादाशीर्वादमनन्तरम् ।
देवस्य त्वा सरस्वत्या अश्विनावर्त्यृचा परः ॥
आयुष्यमिति सूक्तेन न तद्रक्षांस्यनन्तरम् ।
एभिर्मन्त्रैश्च संमन्त्र्य शालिसारमखण्डितम् ।
सदूर्वं सततं तस्य दद्याच्छिरसि सादरम् ॥
एभी रक्षाकरैर्मन्त्रैर्जन्मर्क्षे योऽभिरक्षितः ।
रक्षोभूतपिशाचेभ्यो भयं तस्य न जायते ॥
सुवर्णं शतमानं च गुरवे देयमादरात् ।
' शतमान शतायुस्त्वं शतवीर्यः शतेन्द्रियः ।
अतस्त्वां संप्रयच्छामि शतमायुः प्रयच्छ मे ॥ '

शतमानप्रार्थना— ' शतमान... प्रयच्छ मे ॥ ' इति ।　　प्रपा. १९२–१९३

मृष्टान्नैर्भोजयेद्विद्वान् गुरुस्वजनबान्धवान् ॥
स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्यभीष्टां श्रियं
मत्स्यान्मोचयतस्तिलांश्च ददतो दीर्घं भवेज्जीवितम् ।
सक्तून्खादति यस्तु तस्य विपदो यान्ति प्रणाशं चिरात्
भुङ्क्ते यस्तु तिलामिषं स तु भवेज्जन्मान्तरे पण्डितः ॥
एवं संपूजयेद्यस्तु मार्कण्डेयं महामुनिम् ।
जरासमुद्भवं दुःखं पित्तवातादिसंभवम् ॥
विजित्य नियतं कालमपमृत्युं सुदारुणम् ।
परमायुरवाप्नोति सर्वबाधाविवर्जितः ॥

## संग्रहे

जन्मनक्षत्रयुतजन्मतिथौ जन्मनक्षत्रमात्रे वा वर्षवर्धनम्

[1]'जन्ममासस्य जन्माह्ने जन्मवा(? ता)रेन्दुसंयुते ।
तदलाभे त्वृक्षमात्रे कुर्याद्वर्षविवर्धनम् ॥

## नृसिंहः

वर्षवर्धनं प्रतिवर्षं जन्मनक्षत्रेऽनुष्ठेयम्, तदतिक्रमे तिथिवारनक्षत्रयोगकरणलग्नग्रहसंस्थानानि, हेमसूत्रबन्धनम्, नवक्षौमादिधारणम्

[2]'सौरेणाब्दान्तजन्मर्क्षे शिशुं संस्नाप्य शास्त्रतः ।
आबध्य हेमसूत्रं तु राश्याद्यावनुकूलके ।
नवक्षौमाम्बरादीनि यथार्हं धारयेत्तदा ॥

(१) न केवलमादिमश्लोकार्धेन प्रथमाब्दपूर्तिविधिरेवोक्तः, किंतु प्रत्यब्दमेवानुष्ठेयो वर्षान्तिनक्षत्रविधिरपि दर्शितः ।　　प्रपा. १९०

(२) जन्मदिनात् सौरेण मानेन योऽब्दः तदन्ते यदा जन्मर्क्षं भवति तदा वक्ष्यमाणं विधिं कुर्यादित्यर्थः । ' अब्दान्त ' इति सामान्योपादानात् प्रत्यब्दान्ते कार्यम् । तथा च गर्गः— 'यस्मिन्दिने सवितरि तन्नक्षत्रदिनं भवेत् । प्रत्यब्दान्ते च नक्षत्रे विधिं वक्ष्ये नृणां परम् । येनाऽऽयुर्वर्धते नित्यं बलं तेजः सुखं सदा ॥ ' इति । सवितरीत्यत्राणलोपश्छान्दसः । ततश्च सावित्रेऽब्दान्ते यस्मिन् दिने तन्नक्षत्रं भवतीत्यर्थः सिध्यति, पूर्ववाक्यानुरोधात् ।
¶ संप्र. २८१–२८२

[3]'हस्तादिभूतनक्षत्राण्यजाद्विज्युत्तराणि च ।
वसुः पौष्णादिती पुष्यवर्जितानि शुभानि तु ॥

¶ सग. संप्रवत् ।

(१) प्रपा. १९१.

(२) प्रपा. १९० णाब्दान्त ( णाऽऽद्याब्द ) ; संप्र. २८१ क्षौमाम्ब ( क्षौमव ) ; विपा. ४५१ ; संग. ५९८.

(३) प्रपा. १९० जद्विज्यु ( जादित्यो ) ; संप्र. २८३ उत्तरार्धे ( वसुपौष्णादितीपुष्यवाजिभानि शुभानि तु ॥ ) ;

आदिः अश्विनी । भूतं मूलम् । अजद्वौ रोहिणीमृग-शीर्षे । ऱ्युत्तराणि उत्तरात्रयम् । वसुः धनिष्ठा । शेषं प्रसिद्धम् । $ संप्र. २८३

[1]रिक्ता पर्वाष्टमी चैव कृष्णे चान्त्यत्रिकं विना ।
शकुन्यादीनि विष्टिश्च वर्ज्या योगाः शुभेतराः ॥

जन्मर्क्षातिक्रमे तिथ्याद्याह– 'रिक्तापर्वा... ॥' इति । संप्र. २८२

[2]शुभानां वारवर्गाश्च राशयश्च धनुर्विना ।
श्रेष्ठा नेष्टास्तथा शेषा मकरो मध्यमो भवेत् ॥
लग्ने सर्वे शुभाः श्रेष्ठास्तथा केन्द्रत्रिकोणयोः ।
चन्द्रः शुभप्रदो ज्ञेयो द्वादशाष्टमभाद्विना ॥

[3]पापात्रिलाभषष्ठस्थाः शुभा वस्त्रस्य धारणे ।
उच्चमित्रस्ववर्गेषु शुभैः केन्द्रत्रिकोणगैः ॥

[4]वस्त्रवाहनशस्त्रादिभूषणानि सुसंपदः ।
सद्गुणस्थे निशानाथे कुर्यात्तच्छोभने दिने ॥

[5]नद्यादिगमने चैव तथा देवादिदर्शने ।
शिशोर्लीलादि चान्यत्तु वस्त्रधारणवद्भवेत् ॥

$ संग. संप्रगतम् ।

विपा. ४५१ ण्यजद्वित्र्यु ( ण्युक्तानि ऱ्यु ) वसुः पौ ( वसुपौ ) वर्जिता ( वाजिमा ) ; संग. ५९८ संप्रवत् .

(१) प्रपा. १९० विष्टिश्च (विष्टिं च) ; संप्र. २८२ प्रथमपादे ( रिक्तापर्वाष्टमीश्चैव ) पू. : २८३ उत्त. ; विपा. ४५१ मी चैव (मीश्चैव) शेषं प्रपावत् ; संग. ५९८ संप्रवत् , पू. : ५९९ प्रपावत् , उत्त.

(२) प्रपा. १९० ; संप्र. २८२–२८३ ; विपा. ४५१ ; संग. ५९८–५९९.

(३) प्रपा. १९० शुभैः ( शुभे ) गैः ( गे ) ; संप्र. २८३ ; विपा. ४५१ वस्त्रस्य धा ( वस्त्रादिधा ) शेषं प्रपावत् ; संग. ५९९ शुभैः ( शुभः ).

(४) प्रपा. १९० ; संप्र. २८३ ; विपा. ४५१ ; संग. ५९९ दिभूष ( दि भूष ).

(५) प्रपा. १९० ; संप्र. २८३ ; विपा. ४५१ न्यत्तु ( न्यच्च ) ; संग. ५९९ लादि चा ( ला दिवाऽ ).



## सायणीये

कटिसूत्रबन्धनम् , नववस्त्रधारणम् , आयुष्यहोमः , पितृदेवतातर्पणम्

[1]आबध्य कटिसूत्रं च वासः संगृह्य नूतनम् ।
दूर्वाङ्कुरैरथाऽऽज्येन चरुणा वा पिनाकिनम् ।
आयुष्यहोमं कृत्वा च तर्पयेत् पितृदेवताः ॥

अत्र कटिसूत्रबन्धनं गृहस्थव्यतिरिक्तविषयम् , गृहस्थस्य निषेधदर्शनात् । तदाह गृहस्थधर्मप्रकरणे आश्वलायनाचार्यः– 'यत्किंचित् कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम् । कटिबन्धेन संयुक्तं तत्सर्वं निष्फलं भवेत् ॥ रौप्यकार्पासिकक्षौमपट्टसूत्रकृतां च वा । वर्जयेत् कर्मकालेषु काञ्चीं विप्रो विशेषतः ॥' इति । प्रपा. १९१

## विधिरत्ने

सौरवर्षान्ते जन्मनक्षत्रे वृद्धिकरकर्मानुष्ठानम् , स्नापनम् , सुवर्णसूत्रधारणम्

[2]अब्देन सौरेण शिशोः समाप्ते
बालं तु संस्नाप्य च जन्मधिष्ण्ये ।
कृत्वाऽऽयुषो वृद्धिकरं च कर्म
तं धारयेच्छान्तिसुवर्णसूत्रम् ॥

## श्रीधरीये

सौरवर्षान्तजन्मदिवसे स्नापनम् , शान्तिकर्म, कटिसूत्रबन्धनम् , नववस्त्रधारणम्

[3]वर्षान्तजन्मदिवसे रविमासशुद्धे
संस्नाप्य शान्तिकरकर्म चिराय कृत्वा ।
आबध्य हेमकटिसूत्रमथानुकूले
लग्ने शिशोर्नवतराम्बरयोगमाहुः ॥

(१) प्रपा. १९१ रैरथा (रैस्तथा) णा वा (णाऽपि) ; संप्र. २८९ किनम् ( किने ) ; सिन्धु. ९१७ आबध्य ( बध्नीयात् ) प्रयोगपारिजाते ब्रह्मपुराणम् ; विपा. ४५४.

(२) प्रपा. १९० ; संप्र. २८२ ; संब. ८१ (=) तु ( स ) येच्छान्ति ( येद्रत्न ).

(३) प्रपा. १९० ; विपा. ४५०.

अस्यार्थः— सौरवर्षान्ते जन्मदिवसे बालं संस्नाप्य आयुर्वृद्धिकरं कर्म प्रभूतं कृत्वा हेममयकटिसूत्रमाबध्य नवतराम्बरधारणं कारयितव्यम्। ¶ प्रपा. १९०

### ज्योतिःसागरे

जन्मदिने जन्मनक्षत्राभावे शनिभौमवारयोगे जपानुष्ठानम्

'यदि जन्मदिने मन्दो भौमो वा न च जन्मभम्।
प्रोक्तं तत्र महाविघ्नं तन्नाशाय समाचरेत् ॥
शनिमन्त्रजपं भूमिपुत्रमन्त्रजपं तु वा।
वारयोगानुसारेण ह्यष्टाधिकसहस्रकम् ॥

ज्योतिर्ग्रन्थे— 'सौर्यारयोर्दिने मुक्ता देयाऽनृक्षे तु काञ्चनम्।' इति। जपेन सहैतद्दानस्य विकल्पः समुच्चयो वा। संर. ८७९

### प्रयोगरत्ने

प्रतिवर्षं मार्कण्डेयपूजनम्, पुष्पाञ्जलिदानम्, वरप्रार्थनम्, अन्यदेवतापूजनम्, ब्राह्मणेभ्यस्तिलादिदानम्, सतिलगुडपयःपानम्, नीराजनम्, ब्राह्मणभोजनम्

'प्रतिसंवत्सरं कुर्यान्मार्कण्डेयस्य पूजनम्।
गन्धपुष्पादिनैवेद्यैरथ पुष्पाञ्जलिं ददेत् ॥
'आयुष्यद महाभाग सोमवंशसमुद्भव।
महातपो मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥'
इति पुष्पाञ्जलिं दत्त्वा प्रार्थयेद्वरमुत्तमम्।
'मार्कण्डेयाय मुनये नमस्ते चिरजीविने ॥
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन।
आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव ॥
नराणामायुरारोग्यैश्वर्यसौख्यैः सुखप्रद।
सौम्यमूर्ते नमस्तुभ्यं भृगुवंशवराय च ॥
महातपो मुनिश्रेष्ठ सप्तकल्पान्तजीवन।
मार्कण्डेय नमस्तुभ्यं दीर्घायुष्यं प्रयच्छ मे ॥
मार्कण्डेय महाभाग प्रार्थये त्वां कृताञ्जलिः।
चिरजीवी यथा त्वं भो भविष्येऽहं तथा मुने ॥'
मार्कण्डेयाद्वरं लब्ध्वा द्रौण्यादीन्संस्मरेत्ततः।
'अश्वत्थामा बलिर्व्यासो हनूमांश्च बिभीषणः।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥'
अन्याश्च देवताश्चैव संपूज्य तदहर्नरः।
ब्राह्मणेभ्यस्ततो दद्यात्तिलान्धान्यं ततो घृतम्।
पातव्यं च ततः क्षीरमायुर्वृद्धिकरं परम् ॥
'अञ्जल्यर्धमितं क्षीरं सतिलं गुडमिश्रितम्।
मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे ॥'

तत्पानमन्त्रो यथा— 'अञ्जल्यर्ध... हेतवे ॥'। विपा. ४६०

नीराजितो ब्राह्मणांश्च तोषयेद्भोजनादिभिः ॥

### विधानमालायाम्

जन्ममासजन्मतिथिजन्मनक्षत्रजन्मलग्नेषु सप्तधान्यपीठे मासदेवस्य गणेशादीनां च पूजनम्, होमः, अभिषेकः, आचार्यपूजनम्, ब्राह्मणभोजनम्

'जन्ममासे जन्मतिथौ जन्मर्क्षे जन्मलग्नके।
विधानं तु प्रकर्तव्यं विदुषाऽऽयुर्विवृद्धये।
यस्मिन्मासे तु यो देवस्तमादौ पूजयेन्नरः ॥

मासदेवास्तु— 'कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः। उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः। योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥'। मासादिक्रमस्तु चैत्रादिः मार्गशीर्षादिर्वा। विपा. ४३५

गणेशप्रमुखा देवा दुर्गाद्या मातरस्तथा।
पूज्यास्तल्लिङ्गकैर्मन्त्रैर्धूपपुष्पादिभिस्तथा ॥
सप्तधान्यमये राशौ स्थापयेत्पीठमुत्तमम्।
यवाः प्रियङ्गवो माषा आढकाश्चणकास्तिलाः ॥
व्रीहयश्च समुद्दिष्टं धान्यानां सप्तकं बुधैः।
पीठं तत्रोपरि न्यस्य वस्त्रच्छन्नमनुत्तमम् ॥

---

¶ विपा. प्रपावत्।
(१) संर. ८७९.
(२) विपा. ४५९–४६०.
(१) विपा. ४३५–४३६.

हुत्वा चाग्निं व्याहृतिभिर्होमशेषं समाप्य च ।
अभिषेकं ततः कुर्यादाचार्यं पूजयेदथ ॥
ततस्तु भोजयेद्विद्वान् ब्राह्मणान्वेदपारगान् ।
एवं कृते विधानेऽस्मिन् विघ्नः कोऽपि न जायते ॥

## सुदीपिकायाम्

जन्ममासे जन्मतिथौ जन्मनक्षत्रयोगस्य प्राशस्त्यम्

[1]जन्मर्क्षयुक्ता यदि जन्ममासे
यस्य ध्रुवं जन्मतिथिर्भवेच्च ।
भवन्ति विद्वत्सु समेषु यावत्
सुहृत्सु सन्मानसुखानि तस्य ॥

## शुद्धदीपिकायाम्

जन्मतिथौ जन्मनक्षत्राभावे शनिभौमयोगे दोषशान्त्यर्थं विधानम्, जन्मनक्षत्रे रविसंक्रान्तौ दोषशान्त्यर्थं विधानम्

[2]कृतान्तकुजयोर्वारे यस्य जन्मतिथिर्भवेत् ।
अनृक्षयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे ॥

( १ ) कृतान्तः शनिः । † प्रपा. १९३
( २ ) जन्मनक्षत्रयोगे न दोषः । $ शूक. १०२
( ३ ) कुजः भौमः । अनृक्षयोगः जन्मतिथौ नक्षत्राभावः । संर. ८७९

‡तस्य सर्वौषधिस्नानं ग्रहविप्रसुरार्चनम् ।
सौरारयोर्दिने मुक्ता देयाऽनृक्षे च काञ्चनम् ॥

[3]यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् ।
तन्मासाऽभ्यन्तरे तस्य रोगक्लेशो धनक्षयः ॥

तगरसरोरुहपत्रे रजनीसिद्धार्थलोध्रसंयुक्ते ।
स्नानं जन्मनि ऋक्षे रविसंक्रान्तौ नृणां शुभदम् ॥

## लुब्धजातके

षष्टितमवर्षपर्यन्तं प्रतिवर्षं द्वादशे मासे द्वादशानां मोदकादिपूर्णवंशपेटिकानां दानम्, एकषष्टवर्षे तैलस्नानवत्सराधिपपूजनब्राह्मणभोजनानि

[1]संप्राप्ते द्वादशे मासि विधानान्तरमादिशेत् ।
सुदृढाः कारयेत्स्थूलाः सुशुभा वंशपेटिकाः ॥
निधाय मोदकादीनि ताम्बूलादीनि सर्वशः ।
आच्छाद्य नूतनैर्वस्त्रैः पूर्णा द्वादश पेटिकाः ॥
जीवत्प्रजासु नारीषु भक्त्या संप्रतिपादयेत् ।
प्रत्यब्दमेवं कुर्याच्च वर्षवर्धनमुत्तमम् ॥
संततेः क्षेमवृद्ध्यर्थं जननी स्वयमेव वा ।
अब्दानां षष्टिर्यावच्च संप्राप्ते जन्महायने ॥
स्नात्वा शुद्धेन तैलेन पूजयेद्वत्सराधिपम् ।
ब्राह्मणान्भोजयेद्भक्त्या तेनाऽऽरोग्यमवाप्नुयात् ॥

## मुहूर्तगणपतौ

प्रतिवर्षं जन्मतिथौ गणेशशिवचिरजीविपूजनम्, आयुष्यकर्म, दानानि, मङ्गलसूत्रबन्धनम्, ब्राह्मणभोजनम्

[2]प्रतिवर्षं तु जन्माहे स्नायादुत्सवपूर्वकम् ।
गणेशाम्बेशमभ्यर्च्य देवताश्चिरजीविनः ॥

---

† सिन्धु. प्रपावत् । संव. प्रपावत् शूकवच्च ।

$ शेषं प्रपावत् ।

‡ अस्य व्याख्यानं 'शनिमन्त्र' इति ज्योतिःसागरवचनं ( सं. का. पृ. २८१२ ) द्रष्टव्यम् ।

(१) प्रपा. १९३.

(२) प्रपा. १९३ तिथिर्भ (दिनं भ) तृतीयपादे (जन्मर्क्षयोगे संप्राप्ते); संप्र. २९२ तिथिर्भ ( दिनं भ ) दीपिकायाम्; सिन्धु. ९१६ दीपिकायाम्; शूक. १०२ गौडतिथितत्त्वे; संग. ६०१ सर्वं संप्रवत्; संव. ८३ गौडतिथितत्त्वे; संर. ८७९ दीपिकायाम् .

(३) प्रपा. १९८ ( सौरारयोर्दिनयुते देयमृक्षे च काञ्चनम् । जन्मर्क्षे च यदि स्यातां मनोदुःखप्रदायकः । तस्य सर्वौषधिस्नानं गुरुविप्रसुरार्चनम् ॥ ); संप्र. २९२ देयाऽनृक्षे ( देया ऋक्षे ) दीपिकायाम्; सिन्धु. ९१६ द्वितीयपादे ( गुरुदेवाग्निपूजनम् ) पू., दीपिकायाम्; शूक. १०२ सिन्धुवत्, पू., गौडतिथितत्त्वे; संग. ६०१ मुक्ता ( युक्ता ) दीपिकायाम्; संव. ८३ सिन्धुवत्, पू., गौडतिथितत्त्वे; संर. ८७९ सौरा ( सौर्या ) च (तु) उत्त., ज्योतिर्ग्रन्थे. (१) प्रपा. १९८.

(२) विपा. ४५९. (३) संव. ८१.

कृत्वाऽऽयुष्यं च विष्णुक्तं कर्म दानान्यनेकशः।
बद्ध्वा मङ्गलसूत्रं च भुङ्क्ते मिष्टे(? ष्टं) द्विजैः सह ॥

## शौनककारिकाः

आयुष्यहोमः– त्रिषु जन्मनक्षत्रेषु विषुवादिषु चानुष्ठानम्, स्वस्तिवाचनम्, ब्राह्मणायान्नदानम्, होमः, ब्राह्मणभोजनम्, स्वस्तिवाचनम्, धेनुदानम्

[1]आयुष्यहोमं वक्ष्यामि शौनकोऽहं द्विजन्मनाम्।
कुर्यात्त्रिजन्मनक्षत्रे विषुवे संक्रमे तथा ॥

त्रीणि जन्मनक्षत्राणि जन्मदशमैकोनविंशानि। संप्र. २८८

[2]पौर्णमास्याममावास्यां ग्रहणे चन्द्रसूर्ययोः।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥
[3]अलंकृतः स्वस्ति वाच्य ह्यन्नं दद्याद्द्विजातये।
अथाऽऽज्यभागपर्यन्तं कृत्वोपलेपनादिकम् ॥
[4]कृतान्नं जुहुयात्सम्यगवदानस्य संपदा।
आ नो भद्राः क्रतव इत्यृचां च दशकेन च ॥

कृतान्नं गृहसिद्धान्नम्। संप्र. २८८

[5]इमं स्तोममर्हत इत्यृचां षोडशकेन च।
एकया जातवेदस्या हुत्वा स्विष्टकृतं ततः ॥

[1]होमशेषं समाप्याथ ब्राह्मणान्भोजयेत्ततः।
स्वस्ति वाच्य द्विजान्स्तेभ्यो धेनुं दद्यात्सदक्षिणाम् ॥

अब्दपूर्तिः– कौतुकबन्धः, नक्षत्रदेवतापूजनम्, होमः, ब्राह्मणपूजनम्, सर्वेषां दुःस्वान्मोचनम्, बान्धवपूजनम्, तदहर्हिंसानिषेधः

[2]अब्दपूर्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम्।
वर्षान्ते जन्मभे स्नातः शुक्लाम्बरधरो नृपः ॥

नृपग्रहणं तस्यात्यावश्यकत्वार्थम्। तेन अन्यस्यापि भवतीति गम्यते, आयुर्वृद्धिहेतुत्वात्। विपा. ४३४

[3]कृतकौतुकबन्धश्च सर्वाभरणभूषितः।
नक्षत्रदेवतापूजां कुर्याद्गुरुसमन्वितः ॥

अत्र कृतकौतुकबन्ध इति ग्रहशान्त्यङ्गभूतस्य कौतुकबन्धनस्यानुवादो नक्षत्रपूजनादावप्यङ्गताबोधनाय, अन्यथा संनिधिना ग्रहशान्तिमात्रे एव तदङ्गतापत्तेः। संप्र. २८७

[4]आचार्येणैव होतव्यो होमः सर्वत्र भूपतेः।
स्थण्डिलाद्याज्यभागान्तं कृत्वा सर्वं यथाक्रमम् ॥

---

(१) शौका. १ पृ. ९५; प्रपा. १९१; संप्र. २८८; विपा. ४५४ तथा (ऽपि वा).

(२) शौका. २ पृ. ९५; प्रपा. १९१ वास्यां (यां च) चन्द्रसूर्य (सूर्यचन्द्र); संप्र. २८८; विपा. ४५४.

(३) शौका. ३ पृ. ९५; प्रपा. १९१ ह्यन्नं दद्याद् (अन्नं दत्वा); संप्र. २८८ प्रपावत्; विपा. ४५४–४५५ ह्यन्नं (अन्नं).

(४) शौका. ४ पृ. ९५ कृता (घृता) चां च द (चां द); प्रपा. १९१ कृता (घृता) व इत्यृचां च (वो यमित्यृचां); संप्र. २८८; विपा. ४५५ चां च द (चां द) केन च (केन तु).

(५) शौका. ५ पृ. ९५ शकेन (शेन); प्रपा. १९१ एकया (एकर्चा); संप्र. २८८ वेदस्या (वेदस्य); विपा. ४५५–४५७ हुत्वा (कुर्यात्).

(१) शौका. ६ पृ. ९५ प्याथ (साद्य); प्रपा. १९१ न्स्तेभ्यो धेनुं दद्यात्सद (न्स्तैर्धेनुं दद्याच्च द); संप्र. २८८ प्रपावत्; विपा. ४५७ वाच्य (वाच्यं) शेषं प्रपावत्.

(२) शौका. १ पृ. १२५; प्रपा. १९७ उत्तरार्धे (अथ स्वजन्मनक्षत्रे स्नातः शुक्लाम्बरो नृपः ॥) उत्त.; संप्र. २८७ सर्वं प्रपावत्; विपा. ४३४ सर्वं प्रपावत्; संकौ. ११२ सर्वं प्रपावत्; संग. ६०० सर्वं प्रपावत्; संब. ८२ एतदाद्यष्टश्लोक्याः संक्षेपेण निर्देशः.

(३) शौका. २ पृ. १२५; प्रपा. १९७; संप्र. २८६ उत्त., २८७; विपा. ४३४; संकौ. ११२; संग. ६००.

(४) शौका. ३ पृ. १२५; प्रपा. १९७; संप्र. २८७; विपा. ४३४ भूपतेः (कर्मणि); संकौ. ११२; संग. ६००.

१दूर्वा घृताक्ता जुहुयादष्टोत्तरशताहुतीः ।
यद्दैवताकं नक्षत्रं मन्त्रस्तद्दैवतः स्मृतः ॥

अयं च दूर्वाहोमः ब्रह्मपुराणीयदूर्वाहोमात् पूर्वोक्तन्यायेन कर्मान्तरम् । ततश्च प्रयोगपारिजातीयो मृत्युंजयदेवताकनक्षत्रदेवताकयोर्होमयोरभेदाभिप्रायो निरस्तः, द्रव्यदेवतादिगुणभेदेन कर्मभेदावश्यंभावात् ।

संप्र. २८७

२ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
गोभूहिरण्यवस्त्राद्यैर्ब्राह्मणान् पूजयेन्नृपः ॥

३तस्मिन्नहनि सर्वत्र देवतायतनानि च ।
दुःखितान्सर्ववर्णांश्च मोचयेन्नृपतिस्ततः ॥

( देवतायतनानि च ) गच्छेदिति शेषः ।

विपा. ४३४

४द्विजान् सर्वानथाभ्यर्च्य तस्मिन्नहनि कारयेत् ।
पूजयित्वा विधानेन पूजितव्यांश्च बान्धवान् ॥

( कारयेत् ) तुष्टानिति शेषः । प्रपा. १९७

१न हिंस्यात्सर्वभूतानि तदहस्तु विशेषतः ।
सर्वं समाचरेद्राजा सुखी भवति सर्वदा ॥

( १ ) अत्र राजपदं निगडबन्धनादिदुःखितजनमोचनरूपगुणविधानाय, न राजमात्राधिकारिताबोधनाय, ' विधिं वक्ष्ये नृणां परम् ' इति गर्गवाक्येन सामान्योपादानात् । ' सर्वैः स्वजन्मदिवसे स्नातैर्मङ्गलवारिभिः । गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥ ' इत्यादिपुराणवाक्ये सर्वपदोपादानाच्च । न च स्वर्गकामादिपदस्य त्रैवर्णिकपरतावत्संकोचः । अपशूद्राधिकरणन्यायेनाग्निविद्यादिरहितानां शूद्राणामनधिकारसिद्धौ स्वर्गकामपदस्य त्रैवर्णिकपरता सिध्यति, न तथा प्रकृते, अन्यथा अन्येषां सुखाभिवृद्धिरूपफलाकाङ्क्षाबाधापत्तेः । तस्मान्न संकोचः ।

संप्र. २८७-२८८

( २ ) यत्तु शौनकः-' अथ स्वजन्मनक्षत्रे ... सुखी भवति सर्वदा ॥ ' इति तत् राजानं प्रत्येव जन्मनक्षत्रमात्रे विहितम् इति न ब्राह्मणादीन् प्रत्यब्दान्ततिथिकृत्यान्तर्गतत्वेन वक्तुमुचितम् । एवमन्यदप्यूह्यम् , ब्रह्मपुराणोक्तमृत्युंजयदेवताकदूर्वाहोमस्यापि जन्मर्क्षे विहितस्य कटिसूत्रबन्धनाङ्गस्य उक्ततिथिकृत्यान्तर्गतत्वेन गृहस्थब्राह्मणं प्रति वक्तुमनुचितत्वात् , ' यत् किंचित् कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम् । कटिबन्धनसंयुक्तं तत्सर्वं निष्फलं भवेत् ॥ रौप्यं कार्पासकं हैमं पट्टसूत्रकृतं तथा । वर्जयेत् कर्मकालेषु काञ्चीं विप्रो विशेषतः ॥ ' इति पारिजाते आश्वलायनोक्तेः । संको. ११२

नक्षत्रहोमः- प्रतिमासं प्रत्यृतु प्रतिवत्सरं वाऽनुष्ठानम् ,
स्वनक्षत्रदेवतोद्देशेन सर्वनक्षत्रदेवतोद्देशेन वा होमः ,
आचार्याय धेनुहिरण्यदानम् , ब्राह्मणभोजनम्

२शौनकोऽहं प्रवक्ष्यामि होमं नक्षत्रसंज्ञितम् ।
आयुरारोग्यसिद्ध्यर्थं द्विजानां शुद्धजन्मनाम् ॥

---

(१) शौका. ४ पृ. १२५ ; प्रपा. १९७ ; संप्र. २८७ ; विपा. ४३४ ; संको. ११२ ; संग. ६००.

(२) शौका. ५ पृ. १२५ ; प्रपा. १९७ कृतं हुत्वा ( कृदादिं च ) ; संप्र. २८७ हुत्वा (सर्वं) पूज (भोज) ; विपा. ४३४ णान् पूजयेन्नृपः ( णांस्तोषयेत्ततः ) ; संको. ११२ तं हुत्वा ( तात्सर्वं ) ; संग. ६०० संप्रवत् .

(३) शौका. ६ पृ. १२५ तृतीयपादे ( यद्दुःखितान्सर्ववर्णान् ) ; प्रपा. १९७ शौकावत् ; संप्र. २८७ तृतीयपादे ( पूजयेद्दुःखितान्सर्वान् ) ; विपा. ४३४ ; संको. ११२ दुःखितान् ( दुःखार्तान् ) उत्त. ; संग. ६०० शौकावत् .

(४) शौका. ७ पृ. १२५ व्यांश्च बान्धवान् ( व्याः स्वबान्धवाः ) ; प्रपा. १९७ पूजितव्यांश्च बा ( पूजनीयान्स्वबा ) ; संप्र. २८७ ; विपा. ४३५ कारयेत् ( सत्तमान् ) शेषं शौकावत् ; संको. ११२ ( द्विजान्सर्वानथाभ्यर्च्य पूजितव्यान्सबान्धवान् । ) एतावदेव ; संग. ६०० व्यांश्च बा ( व्यान्स्वबा ).

(१) शौका. ८ पृ. १२५ ; प्रपा. १९७ रेद्राजा ( रत्राजा ) ; संप्र. २८७ ; विपा. ४३५ सर्वं ( एवं ) शेषं प्रपावत् ; संको. ११२ विपावत् ; संग. ६००.

(२) शौका. १ पृ. १३९ द्वितीयपादे ( नक्षत्रं होममुत्तमम् ) ; प्रपा. १९७ शुद्धजन्म ( भावितात्म ).

[1]अन्वाधानादिकं कृत्वा आज्यभागावसानकम् ।
अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः ॥
[2]सर्पाश्च पितरश्चैव भगश्चैवार्यमाऽपि च ।
सविता त्वष्टाऽथ वायुश्चेन्द्राग्नी मित्र एव च ॥
इन्द्रो निर्ऋतिरापो वै विश्वेदेवास्तथैव च ।
विष्णुर्वसवो वरुणोऽज एकपात्तथैव च ॥
अहिर्बुध्न्यस्तथा पूषा अश्विनौ यम एव च ।
एते देवाः समाख्याता नक्षत्राणां यथाक्रमम् ॥
अग्नेरप्यग्निर्मूर्धेति प्रजापतेः प्रजापते ।
आप्यायस्वेति सोमाय कद्रुद्रायेति रुद्रके ॥
[3]अदितिर्द्यौरदित्याश्च बार्हस्पत्यं बृहस्पतेः ।
आयं गौरिति सर्पाय पित्रेऽप्याऽहं पितॄनिति ॥
[4]शं नो भगो भगाय चार्यमणेऽनृक्षरादिति ।
सविता पश्चातात्सवित्रे तन्नस्तुरीपमित्यथ ॥
वायवा याहि वायौ च इन्द्राग्नी रोचना दिवः ।
मित्रो जनांस्तु मित्राय इन्द्रमिद्देवतातये ॥

[1]निर्ऋतेर्मोषुणश्चैव आपो अस्मानिति त्वथ ।
विश्वे देवाश्च विश्वेभ्य इदं विष्णुश्च विष्णवे ॥
[2]वसुभ्योऽथ ज्मया अत्र इमं मे वरुणेति च ।
शं नो अजोऽजैकपदे उत नो नकमेव च ॥
पूषणं न्विति पूष्णे च अश्विनावेह चाश्विनौ-
(? नोः) ।
यमाय सोमं सुनुत यमाय चेत्यृचा तथा ॥
[3]समिदाज्यचरूणां च अष्टाविंशतिमाहुतीः ।
देवतायै स्वकृक्षस्य कुर्यात्सर्वाभ्य एव वा ॥
[4]मासि मास्यृतावृतौ वा वत्सरे वत्सरे तथा ।
मुञ्चामि त्वेति षड्भिश्च सोमेनाऽऽदित्य
इत्यृचा ॥
[5]नवो नवेत्यृचं(? चा) चापि हुत्वाऽऽज्येन
स्रुवेण च ।
ततः स्विष्टकृदाद्येतद्धोमशेषं समापयेत् ॥
[6]दद्याद्धिरण्यं धेनुं वा आचार्याय प्रयत्नतः ।
ब्राह्मणान् भोजयेत्पश्चात्सर्वकामसमृद्धये ॥

---

(१) शौका. २ पृ. १३९ वसानकम् ( न्तसंयुतम् ) ; प्रपा. १९७.

(२) शौका ३–६ पृ. १३९ ; प्रपा. १९७ (सर्पाश्च पितरो भगश्चार्यमा सविताऽपि च । त्वष्टा वायुस्तथेन्द्राग्नी मित्र इन्द्रोऽथ निर्ऋतिः ॥ आपश्च विश्वेदेवाश्च ब्रह्मा विष्णुर्वसुस्तथा ॥ वरुणोऽजैकपाच्चैव अहिर्बुध्न्यस्तथैव च ॥ पूषाऽश्विनौ यमश्चैव अष्टाविंशतिरीरिताः । मन्त्रास्तथैषां कथ्यन्ते नक्षत्राणां यथाक्रमम् ॥ अग्नयेऽप्यग्निर्मूर्धेति प्राजापत्यं प्रजापतेः । त्वं सोमासीति सोमाय प्र वः पान्तं रुद्राय च ॥ ).

(३) शौका. ७ पृ. १३९ पूर्वार्धे ( अदितिर्द्यौरदित्यैव बृहस्पते । ) ; प्रपा. १९७ उत्तरार्धे ( केतुं कृण्वंश्च सर्पेभ्यः पित्र्ये आऽहं पितॄनिति ॥ ).

(४) शौका. ८–९ पृ. १३९ ; प्रपा. १९७ ( अनृक्षरा इत्यर्यम्णे शं नो देवीर्भगाय च । सविता पश्चातात्सवित्रे त्वष्ट्रे त्वष्टारमग्रजाम् ॥ वाय उक्थेभिर्वायव्ये इन्द्राग्न्योर्गीर्भिरेव च । मित्रं वयं च मित्राय इन्द्राय प्रससाहिषे ॥ ).

(१) शौका. १० पृ. १३९ देवाश्च ( देवेति ) ; प्रपा. १९७ ( उदीरतां निर्ऋतये आपो अस्मानपां तथा । विश्वे देवाश्च विश्वेभ्यो ब्रह्म जज्ञेति ब्रह्मणे ॥ ).

(२) शौका. ११–१२ ; प्रपा. १९७ ( विष्णवे तद्विप्रासश्च उस्रा वेदेति वासवे । इमं मे वरुणायेति शं नो देवी अजैकपात् ॥ अहिर्बुध्न्यदेवतायै अहिर्बुध्न्य उत नः शृणोतु । पूषेमा आशेति पूष्णे अश्विभ्यामश्विनेति च । यमाय घृतवद्धविर्मन्त्रेण तु यमाय च ॥ ).

(३) शौका. १३ पृ. १३९ पूर्वार्धे ( समिदाज्यचरूनेव प्रत्यृचं चाष्टविंशतिः । ) ; प्रपा. १९७ उत्तरार्धे ( स्वर्क्षस्य देवतायै तु होमं कुर्यादतन्द्रितः । ).

(४) शौका. १४ पृ. १३९ तथा ( यथा ) ; प्रपा. १९७ स्यृतावृतौ वा ( सि ऋतावृतौ ) त्य इत्यृचा ( त्या बल्भिः ).

(५) शौका. १५ पृ. १३९–१४० उत्तरार्धे ( स्विष्टकृदादिशेषं च होमं सर्वं समाप्य च ॥ ) ; प्रपा. १९७–१९८ उत्त.

(६) शौका. १६ पृ. १४० ; प्रपा. १९८ वा (च) कामसमृ ( कामार्थसि ).

# जलपूजा

## मुहूर्तचिन्तामणिः

मासपूर्तौ जलपूजायां तिथिवारनक्षत्राणि

'कवीज्यास्तचैत्राधिमासे न पौषे
जलं पूजयेत्सूतिका मासपूर्तौ ।
बुधेन्द्विज्यवारे विरिक्ते तिथौ हि
श्रुतीज्यादितीन्द्वर्कनैर्ऋत्यमैत्रेः ॥

कविः शुक्रः । इज्यः गुरुः । अनयोरस्ते चैत्रमासे तथाऽधिकमासे तथा पौषमासे सूतिका जनयित्री मासपूर्तौ सत्यां जलं नद्यादेरम्बु न पूजयेत् । तथा बुधेन्द्विज्यवारे बुधगुरुचन्द्रवारेषु तथा विरिक्ते रिक्तारहिते तिथौ हि निश्चितं तथा श्रुतिः श्रवणः, इज्यः पुष्यः, अदितिः पुनर्वसुः, इन्दुः मृगः, अर्कः हस्तः, नैर्ऋत्यं मूलम्, मैत्रम् अनुराधा, एतैर्नक्षत्रैः सहिते दिने सूतिका जनयित्री मासपूर्तौ सत्यां नद्यादेः जलं पूजयेत् । अत्र मूलानुपलम्भः । ननु—अयं मुहूर्तो निष्क्रमणात् प्राक् नामकरणानन्तरं वक्तव्यः, प्राप्तकालत्वात् । व्युत्क्रमे कारणं न पश्यामः— इति चेत् शृणु— क्रमस्तु अशास्त्रीयः अविवक्षितः । जलपूजा हि आचारप्राप्ता लौकिकीति क्रमानपेक्षा । अतः कालान्तरेऽपि केचित् जलपूजामाहुः ।

$ पीटी. १८०–१८१

(१) मुचि. ५।१६ ; संप्र. २४८ ज्योतिषिकाः ; संकौ. १०६ वारे वि ( धारेष्व ) ज्योतिर्विदः ; संग. ५६७ (=) ; संव. ७२ हि ( च ) ; संर. ८७२ का मास ( कामास ) रिक्ते ति ( रिक्ताति ).

## मुहूर्तमालायाम्

जलपूजायां मासवारनक्षत्राणि

'सूतिकयाऽपः पूज्याः
करहरिमित्रादितीज्यमूलेन्दौ ।
गुरुबुधचन्द्रेऽह्नि विना
मध्वधिपौषद्वितीयमासास्तम् ॥

## मुहूर्तगणपतौ

जलपूजायां मासतिथिवारनक्षत्राणि, गुरुशुक्रास्तयोर्मलमासे च निषेधः

'पुनर्वसुद्वये हस्ते मृगे मूलानुराधयोः ।
श्रवे गुरौ बुधे चन्द्रे सत्तिथौ जलपूजनम् ॥
गुरौ शुक्रेऽस्तगे चैत्रे पौषे वा मलमासगे ।
मासपूर्तौ विरुद्धाहे न कुर्यात्तु जलार्चनम् ॥

$ संप्र , संकौ., संव., संर. पीटीगतम् ।

(१) संग. ५६७–५६८.

(२) संव. ७२.

# दुग्धपानम्

## मेधातिथिनिबन्धे

दुग्धलक्षणम् (१)

[1]गवां च दुग्धं प्रथमं विदध्या-
द्बालस्य पुष्ट्यै च तदुक्तसर्पिः ।
त्यक्त्वा महिष्यादिपयश्च सर्पि-
स्त्यक्त्वाऽन्धकारं च विलोकनी-
यम् ॥

दुग्धलक्षणं मेधातिथिनिबन्धे– ' गवां च दुग्धं...॥' इति । संर. ८७१

## नृसिंहः

एकत्रिंशदिने द्वितीयजन्मनक्षत्रे वा शङ्खेन दुग्धपानम्, अतिक्रमे तिथिनक्षत्रादिकालविशेषविधानम्, दिङ्नियमः

[2]एकत्रिंशदिने चैव पयः शङ्खेन पाययेत् ।
अन्नप्राशननक्षत्रदिवसोदयराशिषु ॥
[3]नाक्षत्रे मासि संपूर्णे जातर्क्षे तु विशेषतः ।
मासान्ते दुग्धपानं स्यात् पश्चात्काले सुशोभने ॥
[4]उत्तरात्रयहस्तौ च त्वाष्ट्रवैष्णववासवाः ।
पौष्णाश्विनीमघास्वातीवरुणादितिजीवभम् ॥

[1]रोहिण्यैन्दवमैत्राश्च दुग्धपाने शिशोः शुभाः ।
षष्ठीरिक्ताष्टमीदर्शा वर्ज्या विष्टिः
स्थिराणि च ॥

त्वाष्ट्रं चित्रा । वैष्णवं श्रवणः । वासवं धनिष्ठाः । पौष्णं रेवती । अश्विनौ अश्विनीनक्षत्रम् । वरुणः शततारकाः । अदितिः पुनर्वसू । जीवनं पूर्वाषाढाः । अत्र मूलं चिन्त्यम् । ऐन्दवं मृगशिरः । मैत्रम् अनूराधाः ।
संर. ८७१–८७२

[2]वर्ज्यास्त्वशुभयोगाश्च कृष्णे चान्त्यत्रिभागकः ।
अधोमुखानि वर्ज्यानि मीनाजालिगृहाणि च ॥

[3]जीवशुक्रेन्दुसौम्यानां वारवर्गोदयाः शुभाः ।
शुभानां राशयः श्रेष्ठा विशेषाच्छुभकर्मणि ॥

---

(१) संर. ८७१.

(२) प्रपा. १८१ त्रिंशदि (त्रिंशद्दि) ; गभा. १७३ क्षत्रदि (क्षत्रे दि) शेषं प्रपावत् ; संप्र. २४७ ; सिन्धु. ९१० राशि (रात्रि) शेषं गभावत् ; विपा. ४३२ ; ज्योनि. ११३ त्रिंशदि (त्रिंशे दि) क्षत्रदि (क्षत्रे दि) ; संग. ५६६ प्रपावत् .

(३) प्रपा. १८१ नाक्षत्रे (नक्षत्रे) ; संप्र. २४७ ; विपा. ४३२ ले सुशो (लेषु शो) ; ज्योनि. ११३ प्रपावत् ; संग. ५६७.

(४) प्रपा. १८१ उत्तरार्धे (पूषाऽश्विनी मघा स्वाती वारुणादितिजीवभम् ॥) ; संप्र. २४७ श्विनीम (श्विनौ म) ; विपा. ४३३ उत्तरार्धे (पौष्णाश्विनौ मघास्वाती वरुणादितिजीवनम् ॥) ; ज्योनि. ११३ हस्तौ च (हस्ताश्च) नीमघास्वातीव (न्यौ मघा स्वातिर्वा) ; संग. ५६७ ; संर. ८७१ जीवभम् (जीवनम्) शेषं संप्रवत् .

(१) प्रपा. १८१ तृतीयपादे (षष्ठी दर्शाष्टमी रिक्ता) ; संप्र. २४७ विष्टिः स्थि (विष्टिस्थि) ; विपा. ४३३ संप्रवत् ; ज्योनि. ११३ उत्तरार्धे (षष्ठी रिक्ताऽष्टमी दर्शवर्ज्या विष्टिः स्थिराणि च ॥) ; संग. ५६७ संप्रवत् ; संर. ८७१.

(२) प्रपा. १८१ भागकः (कं विना) ; संप्र. २४७ ; विपा. ४३३ कृष्णे चा (कृष्णोपा) ; ज्योनि. ११३ प्रपावत् ; संग. ५६७.

(३) प्रपा. १८१ द्वितीयपादे (वारा वर्गोदयेक्षणः) ; संप्र. २४७ दयाः शुभाः (दयेक्षणाः) विशेषाच्छु (विशेषाः शु) ; विपा. ४३३ दयाः शुभाः (दयेक्षणाः) शेषं संप्रवत् ; ज्योनि. ११३ वर्गोदयाः (वर्गे क्षणाः) ; संग. ५६७ दयाः शुभाः (दयेक्षणाः) विशेषाच्छु (विशिष्टाः शु) ; संर. ८७१ पू .

[1]आयारिभ्रातृगाः पापा विशेषेण शिशोः शुभाः ।
पूर्वाह्णे वाऽपि मध्याह्ने कुर्याद्रात्रिं विवर्जयेत् ॥
[2]योगिनीराहुरुद्रादिमुखं चैव विवर्जयेत् ॥

स्थिरयोगिनीलक्षणम्– 'शतमखेन्दुहुताशनरक्षसां यमजलेशसमीरणशूलिनाम् । दिशि भुवि क्रमशः परिवर्तने सिततिथिप्रथमादिषु योगिनी ॥' । एतत् स्थिरयोगिनीलक्षणम् । अथ चरयोगिनीलक्षणम्– 'इन्द्रवायुयमशूलिपाशिनां वह्निवैश्रवणरक्षसां क्रमात् । अर्धयाममनुवासरादितो दिक्षु संभ्रमति योगिनी चरा ॥' इति । अथ राहुलक्षणम्– 'गुरुभान्त्वोर्वसेत् प्राच्यामिन्दौ शुक्रे च दक्षिणे । कालराहुः कुजे प्रत्यगुत्तरे बुधमन्दयोः ॥' इति । अथ रुद्रलक्षणम्– 'हरिसोमवह्निराक्षसयमवरुणानिलहरालयेष्वेवम् । उदयादि भ्रमति सदा $घटिका रुद्रो महाप्रबलः ॥' इति । अभ्युदयार्थिनामयं रुद्रः पृष्ठतः स्थाप्य इत्याहुः– 'द्यूतेषु महिषकुक्कुटमल्लगजाजयुद्धेषु विजयकरः । रुद्रः पृष्ठगतोऽसावङ्गगतो ह्यत्र भङ्गदो भवति ॥' इति । एतत्फलं योगिनीराह्वोरपि द्रष्टव्यम् ।
§ प्रपा. १८१–१८२

[3]चन्द्रे सद्गुणसंयुक्ते शुभग्रहदृशा युते ।
स्वोच्चमित्रस्ववर्गस्थे शुक्रे चातिबलान्विते ॥
[4]पारावतगते वाऽपि सुरेश्वरगतेऽपि वा ।
ऐरावतगते वाऽपि दुग्धपानं शुभावहम् ॥

$ 'ग्रन्थान्तरेषु 'घटिकारुद्रः' इति समस्तं पदम् । उभयत्रापि भ्रमणकालश्चिन्त्यः ।

§ संप्र., संग. प्रपागतम् ।

(१) प्रपा. १८१ शिशोः शुभाः ( शुभाः शिशोः ) द्रात्रिं ( द्रात्रौ ) ; संप्र. २४७ ; ज्योनि. ११३ वाऽपि ( चापि ) द्रात्रिं ( द्रार्शि ) ; संको. १०६ उत्त. ; संग. ५६७ विवर्ज ( च वर्ज ).

(२) प्रपा. १८१ ; संप्र. २४८ ; ज्योनि. ११३ ; संको. १०६ ; संग. ५६७.

(३) प्रपा. १८२ ; विपा. ४३३ दृशा यु (दृशायु).

(४) प्रपा. १८२ ; विपा. ४३३.

अथ पारावतादिलक्षणं व्युत्क्रमेणोक्तं वसिष्ठेन– 'चतुर्भिः पञ्चभिः षड्भिस्त्रिवर्गैश्च शुभान्वितैः । ऐरावतः पारावतः सुरेशः पुष्करः क्रमात् ॥' इति । अत्र चतुर्भिरित्यादिलग्नहोरादिषड्वर्गमध्ये शुभान्वितैः शुभग्रहान्वितैरित्यर्थः । $ प्रपा. १८२

## श्रीधरः

एकत्रिंशद्दिने द्वितीये जन्मनक्षत्रे वा शङ्खेन पयःपानं धात्र्या कारयितव्यम्

[1]एकत्रिंशे वासरे वा द्वितीये
जन्मर्क्षे वा शुद्धलग्नेऽनुकूले ।
शङ्खे क्षीरं संनिदध्याच्छिशूनां
वक्त्रे धात्री पूज्यपूजां विधाय ॥

( १ ) अयमर्थः– जातस्य जन्मदिवसादेकत्रिंशद्दिवसे तदलाभे द्वितीये जन्मनक्षत्रे पयःपानं कारयितव्यम् ।
† प्रपा. १८१

( २ ) शङ्ख इति तृतीयार्थे सप्तमी ।
‡ संप्र. २४७

( ३ ) पूज्याः कुलदेवता विप्राश्च ।
§ संको. १०६

## मुहूर्तगणपतौ

एकत्रिंशद्दिनेऽन्नप्राशनोक्तनक्षत्रे वा पूर्वाह्णे शुभवारे दुग्धपानम्

[2]एकत्रिंशत्तमे घस्रे ऋक्षे चान्नाशनोदिते ।
पूर्वाह्णे च शुभे वारे पयःपानं शिशोः स्मृतम् ॥

$ विपा. प्रपावत् ।

† विपा. प्रपावत् । संग., संर. प्रपागतं संप्रवच्च ।

‡ शेषं प्रपागतम् । संव. संप्रवत् ।

§ शेषं संप्रवत् ।

(१) प्रपा. १८१ ; संप्र. २४७ ; विपा. ४३२ सरे वा ( सरे च ) शङ्खे क्षी ( शङ्खक्षी ) ; संको. १०६ ; संग. ५६६ ; संव. ७२ ; पुम. ४३४ ; संर. ८७१.

(२) संव. ७२.

# स्तन्यवृद्धिविधानम्

## मदनमहार्णवे

पूर्वजन्मनि क्षीरमोषादत्र स्तन्याभावः, स्तन्यप्राप्त्यर्थं क्षीरान्नं ब्राह्मणा भोजनीयाः, तदुच्छिष्टेन स्तनलेपनम्, विप्रपादोदकेन स्तनक्षालनम्, मध्वादिभूतपञ्चकाय बलिदानम्

[1]'क्षीरं मुष्णाति या नारी पूर्वजन्मनि सुव्रता।
जन्मान्तरे तु तस्या वै क्षीरं न क्षरतः स्तनौ॥
क्षीरान्नं भोजयेद्विप्रान् साज्यं समधुमण्डकम्।
अनुलिम्पेच्च तेनैव तूच्छिष्टान्नेन भक्षितः।
विप्रपादोदकैश्चापि क्षालयेत्कुचमण्डलम्॥

विप्रानिति बहुत्वनिर्देशात् त्रयो विप्रा अवश्यं भोजनीयाः। विपा. ४३६

सुरामांसक्षौद्रघृतापूपाद्यैर्गन्धपुष्पकैः।
भूतेभ्यश्च बलिं दद्याद्भूतान्यत्र च संशृणु॥
मधुश्च नवनीतश्च पिण्डमालोह्य(?)चित्तकः।
भूतमध्यश्च शक्तिश्च भूतानां पञ्चकं त्विदम्॥

अत्र सुरादीनि ब्राह्मणैरनिषिद्धान्येव ग्राह्याणि।

विपा. ४३७

## शिशुरक्षारत्ने

अकालक्षीणस्तन्यप्राप्त्यर्थे रेवतीग्रहपूजाविधानम्, तत्र पूजनहोमबलिदानानि, सपीठग्रहस्य दानम्, अभिषेकः, आचार्यादिपूजनम्, ब्राह्मणभोजनम्, भुक्तोच्छिष्टेन स्तनलेपः, स्तन्यवर्धकमौषधम्

[2]'सूतिकायाः स्तनक्षीरमकस्मात् क्षीयते यदि।
विधानमेतत्कर्तव्यं यद्वक्ष्यामि निबोध तत्॥
रेवतीग्रहनामानं पूजयेत्प्रयतः शुचिः।
ब्रह्मवृक्षस्य पीठे च स्थापयित्वाऽर्चयेत्सुधीः॥

ब्रह्मवृक्षः पलाशवृक्षः। संर. ८६९

कृष्णधत्तूरपुष्पैस्तु धूपैः कृष्णागुरोः शुभैः।
धूपयेद्दीपदानेन ग्रहं नीराजयेत्तथा॥
रक्ततण्डुलभक्तेन गुडयुक्तेन चैव हि।
महिषीसर्पिषा चैव पूरिकाः पाचयेत्सुधीः॥
सुधाफलानि नैवेद्यं पायसं च विशेषतः।
सकर्पूरं च ताम्बूलं सलवङ्गं प्रदापयेत्॥

सुधाफलानि मधुरफलानि आम्रफलादीनि। प्रदद्यादित्यर्थः। संर. ८६९

सुगन्धं चन्दनं तत्र ध्वजान्सप्त समाहरेत्।
रूप्यं वा हेम वा तत्र बलिपात्रे निधापयेत्॥
होमं च विधिवत्कृत्वा जुहुयात्तिलसर्पिषा।
अष्टोत्तरसहस्रं वा अथवाऽष्टाधिकं शतम्।
जुहुयात्प्रयतस्तत्र मन्त्रान् रक्षोनिवारणान्॥

होमं पूर्वाङ्गहोमम्। राक्षोघ्नानित्यर्थः। ते च 'कृणुष्व पाजः' इत्यादयः। संर. ८६९

जपेच्छान्तिं द्विजैः सार्धं शं न इत्यादिमन्त्रवित्।
यत्प्रधानं हविस्तत्तु प्रोक्तं स्विष्टकृतो बुधैः॥
एवं समाप्य विधिवद्धवनं मन्त्रविद् द्विजः।
प्रार्थ्य भक्त्या ग्रहं धीमान् रेवतीनामधेयकम्॥
दद्याद्विप्राय मेधावी ग्रहं तं दक्षिणायुतम्।
सपीठं च सवस्त्रं च नैवेद्यं चैव सर्वशः॥
'नमस्ते भगवन् देव रेवतीग्रह शोभन।
ग्रहेश तव दानेन स्तन्यं वर्धय मे सदा॥'

दानमन्त्रः– 'नमस्ते भगवन्... वर्धय मे सदा॥' इति। अत्र अस्मच्छब्दप्रयोगात् दानं भार्याकर्तृकम्। दद्यादित्यत्र अन्तर्भावितो ¶णिच्। तेन दापयेदित्यर्थः। भार्ययेति शेषः। अथवा मे इत्यनन्तरं भार्याया इत्यनुषङ्गो बुद्धिस्थो ज्ञेयः। यथा 'ममाग्ने वर्चः' इत्यत्र मम

---

(१) विपा. ४३६.

(२) संर. ८६९–८७०.

¶ णिजर्थ इत्यर्थः।

इत्यनन्तरं यजमानस्येति, तथाऽत्र द्रष्टव्यम् ।
सं॰र. ८७०

ततः समुद्रज्येष्ठेति अभिषेकं समाचरेत् ।
आचार्यादीन्पूजयीत पश्चाद् ब्राह्मणभोजनम् ॥

भुक्तोच्छिष्टेन तस्यास्तु स्तनावालेपयेत्ततः ।
कुमारीमूलकन्देन हरिद्रासंयुतेन च ॥

प्रक्षालितौ स्तनौ पश्चाल्लिम्पेद्दक्षक्रमेण तु ।
एवं कृते विधाने तु बहुक्षीरं प्रजायते ॥

कुमारी 'कोरफड' इति भाषया प्रसिद्धा ।
सं॰र. ८७०

विदारिकाकन्दरसः सदुग्धः
शतावरी वा कुरुतेऽङ्गनानाम् ।
सदुग्धभक्ताशनतत्पराणां
पयोधरौ प्राज्यपयःसमुद्रौ ॥

विदारिकाकन्दः 'भोयकोहळी' इति भाषया प्रसिद्धः । प्राज्यपयःसमुद्रावित्यनन्तरं‡ भवत इति शेषः । इति सूतिकास्तन्यवर्धनविधानम् । सं॰र. ८७०

‡ रभसोक्तिरियम् । 'कुरुते' इति पदेन निराकाङ्क्षत्वात् ।

# ¶ताम्बूलभक्षणम्

## चण्डेश्वरः

सार्धमासद्वये शिशोस्ताम्बूलभक्षणम्, तत्र वारनक्षत्राणि

[1]सार्धमासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः।
कर्पूरादिकसंमिश्रं विलासाय हिताय च ॥

[2]मूलार्कचित्रकरतिष्यहरीन्द्रमेषु
पौष्णे तथा मृगशिरोदितिवासवेषु।
अर्केन्दुजीवभृगुबोधनवासरेषु
ताम्बूलभक्षणविधिर्मुनिभिः
प्रदिष्टः ॥

चित्रशब्देन चित्रा। बोधनो बुधः।
संर. ८७६

## राजमार्तण्डे

शिशोः पूगफलाशने नक्षत्राणि लग्नानि च

[1]दिनकरचन्द्रसमीरणमैत्रं
पुष्यपुनर्वसुरेवतिचित्रम्।
मृगघटमन्मथकन्यसमेतं
पूगफलाशनमेभिरिहेष्टम् ॥

¶ ताम्बूलभक्षणमत्र वैकल्पिकपूगफलभक्षणस्याप्युपलक्षकम्।

(१) गमा. १७३ मिश्रं (युक्तं); संसौ. ६० (=) सार्धमा (सार्धे मा); संप्र. २४९ संसौवत्, दीपिकायाम्; सिन्धु. ९११; ग्रक. ९८ पू.; विपा. ४३३ (=); संको. १०६ (=) संसौवत्; संग. ५६८ संसौवत्, ज्योतिर्निबन्धे; संर. ८७६.

(२) गमा. १७३; सिन्धु. ९१२; विपा. ४३४ (=) मूला (शूला) हरीन्द्र (हरीन्दु); संर. ८७६.

(१) संसौ. ६०; संप्र. २४९.

## मुहूर्तचिन्तामणिः

शिशोस्ताम्बूलभक्षणं सार्धमासद्वये कार्यम्, तत्र वार-
नक्षत्रलग्नग्रहसंस्थानानि, अन्नप्राशनकाले वा कार्यम्

[1]वारे भौमार्किहीने ध्रुवमृदुलघुभै-
र्विष्णुमूलादितीन्द्र-
स्वातीवस्वभ्युपेतैर्मिथुनमृगसुता-
कुम्भगोमीनलग्ने।
सौम्यैः केन्द्रत्रिकोणैरशुभगगनगैः
शत्रुलाभत्रिसंस्थै-
स्ताम्बूलं सार्धमासद्वयमितसमये
प्रोक्तमन्नाशने वा ॥

अथ शिशोस्ताम्बूलभक्षणमुहूर्तं स्रग्धरयाऽऽह— वारे इति। भौमार्किभ्यां मङ्गलशनिभ्यां हीने रहिते वासरे सति श्रवणमूलपुनर्वसुज्येष्ठास्वातीधनिष्ठायुक्तैः ध्रुवमृदुलघुनक्षत्रैः उपलक्षिते काले तथा मिथुनम्, मृगः, मकरः, सुता कन्या, कुम्भः, गौः वृषः, मीनः एषामन्यतमे लग्ने सौम्यैः ग्रहैः केन्द्रत्रिकोणगतैः अशुभगगनगैः पापग्रहैः शत्रुलाभत्रिसंस्थैः षष्ठैकादशतृतीयस्थानस्थितैः सहिते सति बालकस्य ताम्बूलं लक्षणया ताम्बूलभक्षणं प्रोक्तमित्यर्थः। यदाह दीपिकाकारः— 'मूलादितिद्रविणतिष्यकरोत्तरासु पौष्णाश्विविष्णुरजनीकरशक्रमेषु। वारेषु सूर्यशशिजीवसितेन्दुजानां ताम्बूलभक्षणविधिः कथितः शिशूनाम् ॥ दुश्चिक्यलाभभवनारिगताश्च पापाः सौम्यग्रहा नवमपञ्चमकण्टकस्थाः। आरोग्यशान्तिशुभभाग्यसुखोपभुक्त्यै ताम्बूलभक्षणविधौ मुनिभिः प्रदिष्टाः ॥' इति। द्रविणं धनिष्ठा। चित्रानुराधयोर्ग्रहणं राजमार्तण्डवचनात्— 'दिनकरचन्द्रसमीरणमैत्रं पुष्यपुनर्वसुरेवतिचित्रम्। घटमृगमिथुनं कन्यकलग्नं पूगफलाशनमेभिरिहेष्टम् ॥'। पूगफलग्रहणं ताम्बूलोपलक्षणम्।

(१) मुचि. ५।२३; संब. ७९.

रोहिणीस्वात्योर्ग्रहणे मूलं नास्ति । एतच्च कस्मिन् काले कार्यमित्यत आह– सार्धेति । जन्मकालात् सार्धमासद्वयमितसमये ताम्बूलदानं प्रोक्तम् । यदाह चण्डेश्वरः– ' सार्धे मासद्वये पूगं ताम्बूलं वा शिशोर्हितम् । षड्भिरन्नभुजो मासैर्भोगभागी भवेन्नरः ॥ ' । वा अथवा । अन्नाशने अन्नप्राशनसमये वा प्रोक्तम् । एतच्च शिष्टाचारदर्शनादुक्तम् । तदा मुहूर्तविचारानुन्मेषः । यदा सार्धे मासद्वये ताम्बूलभक्षणं विहितं तदा मुहूर्तविचारो युक्त एव । † पीटी.

## दीपिकायाम्

शिशोस्ताम्बूलभक्षणे सार्धमासद्वये कर्तव्ये वारनक्षत्रग्रहसंस्थानानि, अन्नप्राशनकाले वा कार्यम्

**[1]सार्धयुग्मकमासे तु पूगस्य प्राशनं हितम् ।**
**षड्भिरन्नस्य मासैस्तु भोगे भोगी भवेन्नरः ॥**

अन्नस्य भोग इत्यन्वयः । तेनात्र प्राशनकालोऽप्यन्नस्य कालो लभ्यते । संप्र. २४९

† संव. पीटीगतम् ।

(१) संसौ. ६० (=) ; संप्र. २४९ ; संको. १०६ (=) हितम् (शुभम्) भोगे भोगी (भोगी भोगे).

**[2]मूलादितिद्रुहिणतिष्यकरोत्तरासु**
**पौष्णाश्विविष्णुरजनीकरशक्रभेषु ।**
**वारेषु जीवशशिसूर्यसितेन्दुजानां**
**ताम्बूलभक्षणविधिः कथितः शिशूनाम् ॥**

**[3]दुश्चिक्यलाभारिगताश्च पापाः**
**सौम्यग्रहा नवमपञ्चमकण्टकस्थाः ।**
**आरोग्यशान्तिशुभभाग्यसुखोपभुक्त्यै**
**ताम्बूलभक्षणविधौ जगति प्रसिद्धाः ॥**

## मुहूर्तगणपतौ

ताम्बूलभक्षणे सार्धमासद्वये कर्तव्ये वाराः नक्षत्राणि च, अन्नप्राशनकाले वा कार्यम्

**[1]अनुराधात्रये हस्तत्रितये रेवतीद्वये ।**
**उत्तरासु च रोहिण्यां श्रवणद्वितये मृगे ॥**
**पुनर्वस्वोस्तथा पुष्ये शनिभौमान्यवासरे ।**
**ताम्बूलभक्षणं सार्धद्विमासेऽन्नाशनेऽथवा ॥**

(१) संसौ. ६० द्रुहिण (द्रविण) ; संप्र. २४९ शक्र (शम्भु) ; संव. ५६८ संसौवत् , ज्योतिर्निबन्धे.

(२) संसौ. ६० ; संप्र. २४९.

(३) संव. ७९.

# नवनीतप्राशनम्

**श्रीधरः**

तृतीयमासे समे दिने शिशोर्नवनीतप्राशनम्, तत्र पक्षवारनक्षत्रलग्नचन्द्रबलदिवसभागाः

[1]विधातृपुष्योत्तरवायुपौष्ण-
हरित्रयादित्यशशाङ्कभेषु ।
शुभोदये चैव तथा सुरेज्य-
भृग्वब्जवारेषु शुभे च पक्षे ॥

(१) संर. ८७७.

विधातृशब्देन रोहिणी । अब्जः चन्द्रः । शुभः पक्षः शुक्लपक्षः । संर. ८७७

मातुः शिशोश्चेन्दुबलं विचार्य
पूर्वाह्णकाले च शुभे मुहूर्ते ।
शिशोः प्रदेयं नवनीतमत्र
मासे तृतीयेऽपि समे दिने च ॥

# ¶निष्क्रमणम्

## $निष्क्रमणविधिः

### बौधायनगृह्यसूत्रम्

निष्क्रमणकालः

[1]चतुर्थे मास्युपनिष्क्रमणम् ॥

### आश्वलायनगृह्यपरिशिष्टम्

निष्क्रमणकालः

[2]एवं निष्क्रमणं चतुर्थे मासि ॥

### मानवगृह्यसूत्रम्

निष्क्रमणकालः

[3]अथाऽऽदित्यदर्शनम् ॥

चतुर्थे मासि ... ॥

---

¶ अस्मिन्प्रकरणे सूर्यचन्द्रादिदर्शनविषयकाणि यानि वचनानि संगृहीतानि तत्रेदमवधेयम्– यद्यपि केषांचित् सूत्रकारादीनां निबन्धकारादीनां च सूर्यादिदर्शनस्य पृथक्संस्कारत्वमभिमतम्, तथापि केषुचित् सूत्र–स्मृति–निबन्धादिग्रन्थेषु सूर्यादिदर्शनानां निष्क्रमणसंस्काररूपत्वस्य स्पष्टं प्रतीयमानत्वात्, प्रायः सर्वैर्निबन्धकारैर्निष्क्रमणप्रकरणे एव सूर्यादिदर्शनवचनानां संगृहीतत्वात्, केवलसूर्यादिदर्शनविधायकसूत्रादीनां निष्क्रमणमनभिमतमितिकल्पनापेक्षया तेषां तस्य निष्क्रमणरूपत्वमेवाभिमतमिति कल्पनाया युक्तत्वाच्चास्माभिरपि तान्यस्मिन्नेव प्रकरणे संगृहीतानि ।

$ यद्यपि हिरण्यकेशिगृह्यसूत्रे निष्क्रमणं नोक्तं तथाऽपि तद्वृत्तिकारो मातृदत्ताचार्यः अन्नप्राशनात् पूर्वं निष्क्रमणं कर्तव्यमिति 'अथ षष्ठे मास्यन्नप्राशनम्' इति सूत्रव्याख्यानावसरे वक्ति । तथा च तदीयं व्याख्यानम्– 'अथशब्द आनन्तर्यार्थे चतुर्थे मासि उपनिष्क्रमणं निर्वर्त्य ततोऽनन्तरमिति प्रागस्मादुपनिष्क्रमणस्य भावार्थम्' इति ।

(१) बौगृ. १।२।१ ; संर. ८८७.

(२) आगृप. १।२६ ; प्रपा. १८४ ; धप्र. ३८ ( चतुर्थे मासि निष्क्रमणम् ) सूत्रम् ; संर. ८८८ गृह्यपरिशिष्टे.

(३) मागृ. १।१९।१–२.

अथेत्यानन्तर्यार्थे । जातकर्मानन्तरमादित्यदर्शनं कुर्यात् । चतुर्थे मासि जन्मप्रभृति चतुर्थे । अष्टाभा.

### काठकगृह्यसूत्रम्

निष्क्रमणकालः सूर्य–चन्द्रदर्शनकालो वा मतभेदेन

[1]तृतीयेऽर्धमासे दर्शनमादित्यस्य ॥

( १ ) तृतीये पक्ष इत्यर्थः । § ब्रक. ९२

( २ ) अथ निष्क्रमणम् । ... लौगाक्षिरपि– 'तृतीये ...' इति । अत्रापि स्वगृह्यव्यवस्था । येषां तु शाखिनामनाम्नातं तेषां तु विकल्प एव ।

$ स्मृच. २१,२२

( ३ ) अथ निष्क्रमणकालः । ... तत्र किं कार्यमित्याकाङ्क्षायामाह लौगाक्षिः– 'तृतीये...' ।

† चका. ७३९,७४०

( ४ ) एवं हि गर्भाधानादि नामकरणान्तं व्याख्यातम् । अनन्तरं चूडाकर्म सूत्रकारेणोक्तम् । स्मृतिषु हि निष्क्रमणान्नप्राशने नामकरणानन्तरमुक्ते– 'तृतीये मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।' 'षष्ठ मास्यन्नप्राशनं कर्तव्यम्' इत्यादिना । तेन ते अप्यवश्यकर्तव्ये । चन्द्रदर्शनं चातो गृह्यान्तरानुसारेणेहापि दर्शयति । जन्मनः प्रभृति मासद्वये व्यतीते तृतीयस्य मासस्य प्रथमार्धेऽतीते आदित्यस्य दर्शनं बालः कारयितव्यः । देव.

---

§ संप्र. ब्रकवत् ।

$ पमा. , मपा. स्मृचगतम् ।

† पुम. चकावत् ।

(१) कागृ. ३७।१ ; ब्रक. ९२ ; स्मृच. २२ ; चका. ७३९ तृतीयेऽर्धे ( तृतीये त्वर्धे ) ; पमा. ४४२ ; मपा. ३५८ ( तृतीये मासे आदित्यस्य दर्शनम् ); संप्र. २५० ; पुम. ४३४ चकावत् .

(५) निष्क्रमणान्नप्राशनविधिमाचार्यो नाऽऽह ।
‡श्रोत्रियास्तु पारंपर्येण पठन्ति । 'तृतीये मासि कर्तव्यं शिशोः सूर्यस्य दर्शनम् । चतुर्थे मासि कर्तव्यं तथा चन्द्रस्य दर्शनम् ॥' । ब्राह्म.

(६) निष्क्रमणान्नप्राशनं च स्मृतिषु कर्तव्यतयोपदिष्टम् । इह तु विशेषहोमो नास्ति । तेनानादेशहोमः $त्रिकादिभिरत्र । अन्यदाचारप्रसिद्धं कर्तव्यम् । आधि.

¶'एवं चन्द्रदर्शनम् ॥

## आग्निवेश्यगृह्यसूत्रम्

निष्क्रमणकालः

**'अत ऊर्ध्वं चतुर्थे मास्युपनिष्क्रामणं षष्ठेऽष्टमे वा ॥**

---

‡ एतद्वाक्यविषये त्रयः पक्षाः संभवन्ति—वाक्यमिदं निष्क्रमणान्नप्राशनसंस्कारविषयकमस्ति, नास्ति चाग्रिमवचनावतरणिकारूपमित्येकः पक्षः । उक्तसंस्कारविषयकं सदग्रिमवचनस्यावतरणिकेति द्वितीयः । अग्रिमवचनावतरणिकारूपमस्ति, नास्ति चोक्तसंस्कारविषयकमिति तृतीयः । तत्र प्रथमपक्षे शिष्टपरम्परापाठस्यानुष्ठानौपयिकत्वात् कठैरपि निष्क्रमणान्नप्राशने अवश्यानुष्ठेये इत्युक्तं भवति । तच्च भाष्यान्तरसंवादि । अग्रिमवचनमकृतावतारणमपि सामर्थ्यात् सूर्यदर्शनांशे सूत्रसंवादार्थं चन्द्रदर्शनांशे कालविधार्थमुद्धृतमिति मन्तव्यम् । द्वितीयपक्षेऽग्रिमवचनस्य निष्क्रमणान्नप्राशनविषयत्वाभावादसंगतिः । तृतीयपक्षे समानशब्दप्रायेषु समानार्थेषु च यम-भविष्यपुराणादिवचनेषु जाग्रत्सु शिष्टपरम्परापाठकल्पना न युज्यते । किंच, '... आचार्यो नाऽऽह' इत्युक्तिरपि साकाङ्क्षा स्यात्, 'आचार्यानुक्तत्वात्कठैरुक्तसंस्कारौ नानुष्ठेयौ' इति, 'स्मृत्यन्तरप्रामाण्यादनुष्ठेयौ' इति वा विवक्षिततात्पर्यार्थस्यानुक्तेः । तस्मात् प्रथमपक्ष एव श्रेयानिति प्रतिपद्यामहे ।

$ सूत्रान्त्यकाण्डिकोक्तैर्बार्हस्पत्ययाम्यरौद्रवारुणसंज्ञकैश्चतुर्भिर्मन्त्रत्रिकैर्व्याहृतिभिः 'अग्निर्मूर्धा' इत्यष्टर्चेन चेत्यर्थः ।

¶ अत्र सूर्यदर्शनकालस्याप्यतिदेशस्य संभावनयेदमत्र गृहीतम् ।

(१) कागृ. ३८।१.

(२) आग्निगृ. २।२।३.

## पारस्करगृह्यसूत्रम्

निष्क्रमणकालः

†'**चतुर्थे मासि निष्क्रमणिका ॥**

(१) चतुर्थे मासि निष्क्रमणिका कुमारस्य कार्या । कर्मा.

(२) कुमारस्य जन्मचतुर्थे मासि निष्क्रमणिका गृहाद्बहिर्निष्क्रमणं करोति पिता । ‡ हमा.

(३) अत्र च निष्क्रमनामसंस्कारः, संस्कारपरिगणने पाठात् । स्मृसा. ३

(४) निष्क्रमणिकेति कर्मनामधेयम् । कदेत्यत उक्तम्— चतुर्थे मासीति । विभा.

## विष्णुः

सूर्यदर्शनकालः

**'चतुर्थे मास्यादित्यदर्शनम् ॥**

जन्मतश्चतुर्थे मासि । वै.

## लघुविष्णुः

निष्क्रमणविधिः

**'बहिर्निष्क्रमणं चैव तस्य कुर्याच्छिशोः शुभम् ॥**

## शङ्खः

आदित्यदर्शनकालः

**'चतुर्थे मासि कर्तव्यं बालस्याऽऽदित्यदर्शनम् ॥**

(१) ततः किं कर्तव्यमित्यपेक्षिते शङ्ख आह— 'चतुर्थे...' । स्मृच. २२

(२) निष्क्रमणानन्तरं कर्तव्यमाह शङ्खः— 'चतुर्थे...' । मुक्ता. ८२

---

† संप्रत्याख्यानं यमवचने द्रष्टव्यम् ।

‡ गभा. हमावत् ।

(१) पागृ. १।१७।५ ; स्मृसा. ३ ; निप. २६६ (=) (निष्क्रमणिका०) ; संप्र. २५०.

(२) विस्मृ. २७।१० ; ब्रक. ९२ ; चका. ७४० दित्यद (दित्यस्य द).

(३) लघुविस्मृ. १।११.

(४) शंस्मृ. २।५ ; स्मृच. २२ ; चका. ७४० ; मुक्ता. ८२ ; संप्र. १७.

( ३ ) कर्तव्यमाह शङ्खः– ' चतुर्थे... ' ।

संम. १७

## शङ्खलिखितौ

निष्क्रमणकालः

$'अत ऊर्ध्वं तृतीये मासि निष्क्रमणिका ॥

## मनुः

निष्क्रमणकालः

†'चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

$ संप्रव्याख्यानं यमवचने द्रष्टव्यम् ।

† मदनपारिजाते ' भविष्यपुराणे । उत्तरार्धे मनुरपि ' इत्युपक्रम्य ' द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् । चतुर्थे मासि कर्तव्यं यथाऽन्येषां मतं विभो ॥ ' इति वचनमुद्धृतम् । तत्र ' उत्तरार्धे मनुरपि ' इति यथाश्रुतार्थे रभसोक्तिः, मनुना स्वमतस्य पूर्वमनुक्तत्वान्मतान्तरप्रदर्शनायोगात्, ' विभो ' इति संबोधनस्य मनुस्मृतावनुपपत्तेः, संस्कारानुद्देशात्कालविधानस्य निर्विषयत्वापत्तेश्च । अत एव ' यथाऽन्येषां मतं विभो ' इत्यन्यसंवादोक्तित्वेनापि न संगच्छते । न च– पूर्वप्रकृतनामकरणविषयत्वसंभवान्न निर्विषयत्वापत्तिः– इति वाच्यम्, मतान्तरप्रदर्शनपक्षे स्वाभिमतकालोक्त्यनन्तरमेवास्य वक्तव्यत्वात् नामस्वरूपविधायकैस्त्रिभिः श्लोकैर्व्यवधाय वक्तुमयुक्तत्वात्, अन्यसंवादोक्तित्वपक्षे तु सुतरां व्यवधायवचनस्यायुक्तत्वात्, मनुस्मृतौ निष्क्रमणानुक्तिप्रसङ्गाच्च । संस्कारसौख्येनाप्यन्धदृशा मदनपारिजातोऽनुसृतः । तत्र ' मनुः ' इत्युपक्रम्य ' चतुर्थे मासि ' इत्यर्धमात्रं धृतमिति विशेषः । राभस्यमरोचयमानैः ' उत्तरार्धे मनुरपि ' इत्युक्तेः ' चतुर्थे मासि कर्तव्यम् ' इत्येतावदंशमात्रविषयत्वं कथंचिदाश्रयणीयम् । अस्माभिस्तु यथाश्रुतार्थानुरोधेनात्र पारिजातसौख्ययोः स्थलादिनिर्देशः कृतः ।

(१) चका. ७३९ ; संप्र. २५० ; संम. १७ ; विपा. ४३९ मणिका + ( कार्या ) शङ्खः ; पुम. ४३४.

(२) मस्मृ. २।३४ ; ममा. ८।१३ चतुर्थे मासि ( मासे चतुर्थे ) पू. ; ब्रक. ९३ उत्त. ; स्मृच. २१ पू. : २२ उत्त. ; पमा. ४४२ पू ; मपा. ३५८ द्वितीयपादे ( यथाऽन्येषां मतं विभो ) पू., मनुः भविष्यपुराणं च : ३६० उत्त. ; स्मृकौ. २७ यद्वेष्टं ( यच्चेष्टं ) शेषं मभावत् ; उत. १४४ उत्त. ; संसौ. ५९ द्वितीयपादे ( तथाऽन्येषां मतं विभो ) पू ; शूशि. ६९ (=) यद्वेष्टं (यच्चेष्टं) शेषं मभावत् ; संप्र. २५० र्थे मासि ( र्थमासि ) पू. : २६७ उत्त. ; मुक्ता. ७३ पू. : ८२ यद्वेष्टं (यच्चेष्टं) ; शूक. ९८ स्मृकौवत् ; संको. १०८ चतुर्थपादमात्रम् ; आन. १४८ पू. : १४९ स्मृकौवत्, उत्त. ; संग. ५६८ पू. वीरमित्रोदये ; सस्मृ. ५१ चतुर्थे मासि ( मासे चतुर्थके ) मासि यद्वे ( मासे यद्वे ).

( १ ) जन्मचतुर्थमासे गृहाद्बहिर्निष्क्रमणम् आदित्यदर्शनं शिशोः बालस्य कर्तव्यम् । त्रीन् मासान् गर्भगृह एव वासयेत् । शिशुग्रहणं शूद्रस्यापि प्राप्त्यर्थम् । एवं षष्ठे मास्यप्यन्नप्राशनम् । पञ्चमासान् क्षीराहार एव । यद्वा कुले दारकस्य श्रेयस्यं मङ्गल्यं पूतनाद्यकुनिकैकवृक्षोपहारादि प्रसिद्धम् । कालविशेषे वा तत् कर्तव्यम् । अयं च सर्वसंस्कारशेषः । तेन नामधेयमुक्तलक्षणव्यतिरेकेणापि यथाकुलधर्मं लभ्यते । ' इन्द्रस्वामी ' ' इन्द्रशर्मा ' ' इन्द्रभूमिः ' ' इन्द्रघोषः ' ' इन्द्ररातः ' ' इन्द्रविष्णुः ' ' इन्द्रदेवः ' ' इन्द्रज्योतिः ' ' इन्द्रयशाः ' इत्यादि कुलभेदेनोपपन्नं भवति । $ मेधा.

( २ ) चतुर्थे मासि बालस्य गृहान्निष्क्रमणं कर्तव्यम् । षष्ठे चान्नप्राशनम् । यथाकुलधर्मत्वेन मङ्गलमिष्टम्, यथा नाम्ना स्वाम्याद्युपपदपरिग्रहस्तथा कर्तव्यं पूर्वोक्तं च ।

गोरा.

( ३ ) यद्वेति कालप्रक्रमात् तद्गोचर एवायं विकल्पः । तेनायमर्थः – यत्कालवच्च अन्नप्राशनम् इष्टम् अभिमतं कुले भवति तस्मिन् वा काले कर्तव्यम् ।

† ब्रक. ९३

( ४ ) जन्मदिनाच्चतुर्थे । गृहात् प्रसवगृहात् । जन्मदिनादेव षष्ठे मास्यन्नप्राशनं यच्च गृह्योक्तविधानवदन्नभक्षणम् । यद्वेष्टमिति । अयनमपि( १ अन्यदपि ) यत् कर्ण-

$ माच. मेधागतम् । मच. मेधाममुगतम् ।

† संप्र. ब्रकगतम् । संप्रपूर्वार्धव्याख्यानं यमवचने द्रष्टव्यम् ।

वेधादि इष्टम् अपेक्षितम् अनिर्दिष्टकालं कर्म यच्च मङ्गलं शुभंकरं शिशूनां कुले तेषु तेषु कुलेष्वसाधारणं कर्म तदपि षष्ठ एवेत्यर्थः । † मवि.

( ५ ) अथवा कुलधर्मत्वेन यन्मङ्गलमिष्टं तत् कर्तव्यम् । तेन उक्तकालादन्यकालेऽपि निष्क्रमणम् । तथा च यमः– 'ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ।' । सकलसंस्कारशेषश्चायम् । तेन नाम्नां शर्मादिकमप्युपपदं कुलाचारेण कर्तव्यम् । § ममु.

( ६ ) अत्र शिशुशब्द उपात्तः, न द्विजशब्दः । अतः शूद्रस्यापि निष्क्रमणमन्नप्राशनं च भवति । शिशुग्रहणं शूद्रस्यापि प्राप्त्यर्थ( मिति )मेधातिथिः ।

¶ स्मृको. २७

( ७ ) निष्क्रमणं गृहात् चन्द्रादित्यदर्शनम् ।

* नन्द.

## ‡याज्ञवल्क्यः

निष्क्रमणकालः

[१]**चतुर्थे मासि निष्क्रमः ॥**

( १ ) चतुर्थे मासि निष्क्रमणलक्षणं सूर्यवीक्षणं कर्म ।

मिता.

( २ ) चतुर्थे मासि निष्क्रमणं सूर्याचन्द्रमसौ द्रष्टुं बहिः प्रसरणम् । अप.

( ३ ) 'चतुर्थे मासि निष्क्रमः' इति छन्दोगव्यतिरिक्तविषयम् । दीक.

( ४ ) निष्क्रमः सूर्यस्य चन्द्रमसो वा दर्शनार्थमपत्यस्य सूतीगृहान्निःसरणं चतुर्थे मासि । ‡ वीमि.

---

† स्मृच. मविगतम् ।

§ शेषं मेधागतम् ।

¶ शुचि. स्मृकौवत् । शूक., सस्मृ. स्मृकौगतम् ।

* शेषं मेधागतम् ।

‡चूडाकर्मप्रकरणगतस्य 'चूडा कार्या यथाकुलम्' इति याज्ञवल्क्यवचनस्य विश्वव्याख्यानमत्रानुसंधेयम् ।

‡ शेषं दीकवत् । संप्रव्याख्यानं यमवचने द्रष्टव्यम् ।

(१) यास्मृ. १।१२. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे ( सं. का. पृ. ४७ ) द्रष्टव्याः .

[२]**मासे चतुर्थे कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥**

## बृहस्पतिः

निष्क्रमणपदार्थः, निष्क्रमणफलम्, निष्क्रमणकालः

[३]**अथातः संप्रवक्ष्यामि उपनिष्क्रमणं शिशोः ।**
**अत्र निष्क्रमणं नाम गृहात्प्रथमनिर्गमः ॥**
[४]**अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ।**
**कृते संपद्विवृद्धिः स्यादायुर्वर्धनमेव च ॥**

अस्य नित्यकाम्यत्वमाह बृहस्पतिः– 'अथ निष्क्रमणं ... वर्धनमेव च ॥' इति । संको. १०७

[५]**मासे चतुर्थे कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥**
[६]**गृहान्निष्क्रमणं सूनोश्चतुर्थे मासि कारयेत् ।**
**यात्रोक्तसमये मासि तृतीये द्वादशेऽह्नि वा ॥**
[६]**अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् ॥**

अन्नप्राशनकालः षष्ठो मासः । ¶ संप्र. २५१

---

¶ यमवचनेऽपि व्याख्यानं द्रष्टव्यम् ।

(१) चका. ७३९ याज्ञवल्क्यबृहस्पती ; पुम. ४३४ याज्ञवल्क्यबृहस्पती.

(२) प्रपा. १८३ ; संसौ. ५९ अत्र (अथ) उत्त. ; संप्र. २५६ सर्वं संसौवत् ; विपा. ४३७ सर्वं संसौवत् ; ज्योनि. ११५ सर्वं संसौवत् ; संको. १०७ सर्वं संसौवत् ; संग. ५६८ अत्र नि ( उपनि ) उत्त. ; संर. ८८६ सर्वं संसौवत् .

(३) प्रपा. १८३ ; संसौ. ५९ संपद्वि ( संपत्ति ) ; संप्र. २५६ ; विपा. ४३७ ; ज्योनि. ११५ ; संको. १०७ ; संग. ५६८ ; संर. ८८६ पू .

(४) चका. ७३९ याज्ञवल्क्यबृहस्पती ; पुम. ४३४ याज्ञवल्क्यबृहस्पती.

(५) धप्र. ३८ (=) द्वादशेऽह्नि (समयेऽपि) ; संप्र. २५० वा ( वै ) उत्त. ; २५१ पू . ; संग. ५६९ उत्त. ; संब. ७२ यात्रोक्तस ( यात्रोक्ते स ) वा ( च ).

(६) गभा. १७२ मदनरत्ने ; संप्र. २५१ मुहूर्तसंग्रहे ; सिन्धु. ९१२ मदनरत्ने ; शूक. ९८ मदनरत्ने बृहस्पतिः ; संको. १०६ शौनकः ; बाल. १।११-१२ पृ. २९ गर्गः ; संग. ५६८ मुहूर्तसंग्रहे ; संब. ७३ मदनरत्ने ; पुम. ४३५ मुहूर्तसंग्रहे.

## व्यासः

सूर्यदर्शनकालः

**[1]अर्कस्येक्षा मासि चतुर्थके ॥**

## यमः

निष्क्रमणकालः, सूर्य-चन्द्रदर्शनकालः

**[2]तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् ॥**
**[3]ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ।**
**चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥**

( १ ) अतुल्यार्थत्वात् सूर्यचन्द्रदर्शनयोः समुच्चयः । **ब्रक.** ९२

( २ ) सूर्यचन्द्रदर्शनयोरतुल्यार्थत्वात् समुच्चय इति कल्पतरुः । ततश्च मासभेदात् वारद्वयं निष्क्रमणं भवतीति सिध्यति । यानि तु 'अत ऊर्ध्वं तृतीये मासि निष्क्रमणिका' इति, 'चतुर्थे मासि निष्क्रमणिका' इति, 'चतुर्थे मासि निष्क्रमः' इति, 'चतुर्थमासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।' इति, 'गृहान्निष्क्रमणं सूनोश्चतुर्थे मासि कारयेत् ।' इति, 'चतुर्थे मासि कर्तव्यं तत्परेषां मतं विभो ।' इति शङ्खलिखितपारस्करयोगिमनुबृहस्पतिभविष्यपुराणवाक्यानि तानि तृतीयचतुर्थमासयोः सूर्यचन्द्रदर्शनाभिप्रायेण योज्यानि । **संप्र.** २५०–२५१

(१) **व्यास्मृ.** १।१८.

(२) **गभा.** १७२ ज्योतिर्निबन्धे ; **सिन्धु.** ९१२ ज्योतिर्निबन्धे ; **शूक.** ९८ ज्योतिर्निबन्धे यमः ; **बाल.** १। ११–१२ पृ. २९ ज्योतिर्निबन्धे यमः ; **संब.** ७२ ज्योतिर्निबन्धे यमः .

(३) **अप.** १।११–१३ पृ. २७ पू.; **ब्रक.** ९२; **स्मृच.** २२ ; **ममु.** २।३४ पू. ; **चका.** ७३९ पू. : ७४० उत्त. ; **पमा.** ४४२ ; **मपा.** ३५८ ; **प्रपा.** १८३ (तृतीये मासि कर्तव्यमहः सूर्यस्य दर्शनम् । ) पू. ; **गभा.** १७२ ज्योतिर्निबन्धे ; **संसो.** ५९ पूर्वार्धे ( तृतीये मासि कर्तव्यं शिशोः सूर्यस्य दर्शनम् । ) ; **मच.** २।३४ पू. ; **संप्र.** २५० ; **चम.** ९ पू. ; **मुक्ता.** ८२ ; **सिन्धु.** ९१२ ; **ज्योनि.** ११५ व्यं शिशो ( व्यमग्ने ) शेषं प्रपावत् ; **संको.** १०६ ज्योनिवत् ; **बाल.** १।११–१२ पृ. २९ पू. ; **संब.** ७२ ; **पुम.** ४३४ उत्त.

**[1]उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावने ॥**

## बृहत्पराशरः

निष्क्रमणकालः

**[2]तुर्ये निष्क्रमणं मासे ॥**

## आश्वलायनः

निष्क्रमणकालः

**[3]चतुर्थे मासि कार्यं स्यादुपनिष्क्रमणं शिशोः ।**
**षष्ठे वा...... ॥**

## लघ्वाश्वलायनः

निष्क्रमणकालः

**[4]मासे चैवं चतुर्थे तु कुर्यान्निष्क्रमणं शिशोः ॥**

## स्कन्दपुराणम् ( काशीखण्डे )

निष्क्रमणकालः

**[5]... गेहे( ? हात् ) चतुर्थे मासि निष्क्रमः ॥**

## विष्णुधर्मोत्तरपुराणम्

निष्क्रमणकालः

**[6]चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥**

## भविष्यपुराणम्

निष्क्रमणकालः, सूर्यचन्द्रदर्शनकालः

**[7]§द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् ।**
**चतुर्थे मासि कर्तव्यं तथाऽन्येषां मतं विभो ॥**

( १ ) 'द्वादशेऽहनि' इति शाखाभेदविकल्पः । **ब्रक.** ९२

§ संप्रव्याख्यानं यमवचने द्रष्टव्यम् ।

(१) **प्रपा.** १८४ ; **संप्र.** २५१ ; **ज्योनि.** ११५ ; **संको.** १०६ ; **संग.** ५६९ ; **संर.** ८८६.

(२) **बृपसं.** ६।१५०.

(३) **आश्वस्मृ.** ११।१०४ ; **प्रपा.** १८४ ; **संप्र.** २५१ ; **संग.** ५६८.

(४) **लघ्वाश्वस्मृ.** ७।१. (५) **सस्मृ.** ५१.

(६) **प्रपा.** १८५ ; **संप्र.** २५३ ; **विपा.** ४३९ ; **संको.** १०६ ; **संग.** ५७० वीरमित्रोदये.

(७) **अप.** १।११–१३ पृ. २८ पुराणम् ; **ब्रक.** ९१–९२ ; **स्मृच.** २१ राजेन्द्र ( कर्तव्यं ) पुराणम् ; **चका.**

(२) तत्र पारस्करेण चतुर्थमासे विहितमपि शिष्टाः व्यवहारसौकर्यार्थं समाचारात् 'द्वादशेऽहनि... निष्क्रमणं गृहात्' इति भविष्योत्तरवचनाच्च अपकृष्य नामकर्मदिवसे एवाऽऽचरन्ति। अतः तस्मिन्नेव दिने निष्क्रमणं कुर्यात्। संदी. २४२ (भागः २)

'चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम्।
तृतीये मासि कर्तव्यं शिशोः सूर्यस्य दर्शनम्॥

सूर्यचन्द्रयोर्दर्शने कुलाचारात् व्यवस्था। स्मृसा. ३

## अनिर्दिष्टकर्तृकवचनम्

निष्क्रमणकालः

'चतुर्थे मासि निष्क्रमणं करोति॥

## चतुर्विंशतिमतम्

निष्क्रमणकालः

'चतुर्थे निष्क्रमो मासि॥

## स्मृत्यर्थसारः

चन्द्रदर्शनादिरूपनिष्क्रमणकालः

'निष्क्रमणं चन्द्रदर्शनं सूर्यदर्शनं देवनमस्कारं वा द्वादशेऽहनि तृतीये चतुर्थे मासे वा कुर्यात्॥

## राजमार्तण्डः

निष्क्रमणकालः

'मासे तृतीये ......।
निष्काशनं सौख्यकरं शिशूनाम्॥

## श्रीधरः

सूर्यदर्शन–चन्द्रधेनुदर्शन–निष्क्रमणकालाः

'मासे तृतीये दिवसे दिनेशं
शिशुं चतुर्थे शशिनं च धेनुम्।
विलोकयित्वाऽन्नविधिप्रयुक्ते
काले गृहान्निष्क्रमणं विदध्यात्॥

(१) अस्यार्थः— तृतीयमासे जन्मदिवसे बालं दिनेशं दर्शयित्वा सावने चतुर्थे मासि शशिनं च दर्शयित्वा अन्नविधिप्रयुक्ते काले गृहान्निष्क्रमणं विदध्यात्। प्रपा. १८३

(२) तृतीयपदं देहलीदीपन्यायेनोभयत्रान्वेति। तेन तृतीयमासवत् तृतीयमेव दिनं ग्राह्यम्। तृतीयमासे तृतीयदिवसे सुमुहूर्ते 'अस्य शिशोरायुरभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्यावलोकनसंस्कारं करिष्ये' इति संकल्प्य गणपतीष्टदेवतापूजनपूर्वकं सोत्सवं शिशुना दिनेशदर्शनं कारयेत्। ततश्चतुर्थे मासि शुभे काले चन्द्रं धेनुं च दर्शयेत्। तत्र विधिः सूर्यावलोकनविधिवत्। 'सूर्यावलोकनसंस्कारम्' इत्येतस्य स्थाने 'चन्द्रधेन्ववलोकनसंस्कारम्' इति संकल्पवाक्ये ऊहः। अथवा सूर्याद्यवलोकनसंस्कारो निष्क्रमणेन सहैव कार्यः। संर. ८८६

---

७३९ स्मृचवत्, पू., वाराहपुराणे; स्मृसा. ३ पू.; पमा. ४४२ मतं विभो (च संमतम्) पुराणे; मपा. ३५८ तथा (यथा) उत्तरार्धे मनुरपि; संप्र. २५० पू.: २५१ तथाऽन्ये (तत्परे) उत्त.; चम. ९ पू., स्कान्दे; मुक्ता. ८२ स्मृचवत्, स्मृतिचन्द्रिकायाम्; आन. १४८ स्मृचवत्, पू., चन्द्रिकायाम्; बाल. १।११–१२ पृ. २९ पू., स्कान्दे; संग. ५६८ पू.; पुम. ४३४ स्मृचवत्, पू., वाराहे; संर. ८८६ स्मृचवत्, पू., वाराहे; संदी. २४२ (भागः २) पू., भविष्योत्तरवचनम्.

(१) अप. १।११–१३ पृ. २८ पू., पुराणम्; स्मृसा. ३. (२) विश्व. १।१२. (३) चम. १२.

(४) स्मृसार. ३; मुक्ता. ८२ (निष्क्रामणं चन्द्रसूर्यदर्शनं च द्वादशेऽहनि तृतीये चतुर्थे वा मासि कुर्यात्); आन. १४९ (निष्क्रामणं च चन्द्रसूर्यदेवतादर्शनं द्वादशेऽहनि तृतीये चतुर्थे वा मासि).

(१) संसौ. ५९; संप्र. २५१; संग. ५६९.

(२) प्रपा. १८३ (=); संप्र. २५० न्नविधि (त्र विधि); विपा. ४३७; संर. ८८६ त्वाऽन्नविधिप्र (त्वा च विधिः प्र).

## मुहूर्तचिन्तामणिः

निष्क्रमणकालः

[१]........................अथ निष्क्रमणं चतुर्थ-
मासे गमोक्तसमयेऽर्कमितेऽह्नि वा स्यात् ॥

निष्क्रमणाभिचन्द्रदर्शनमुहूर्ताः । तत्र चतुर्थमासे गमोक्तसमये यात्राभिहितसमीचीनतिथिवारनक्षत्रादिसहिते काले शिशूनां निष्क्रमणं निष्क्रमाख्यसंस्कारं पूर्वगृहात् बहिर्गमनं कुर्यात् । वा अथवा अर्कमितेऽह्नि द्वादशे दिवसे निष्क्रमणं कुर्यात् । † पीटी.

## मुहूर्तसंग्रहे

मातुलेन शिशोर्वहनम्

[२]...... मातुलो वाहयेच्छिशुम् ॥

## दीपिका

निष्क्रमणकालः

[३]...... चतुर्थमासि यदि वा मासे तृतीये...॥

## मुहूर्तगणपतौ

निष्क्रमणकालः

[४]तुर्ये निष्क्रमणं मासि यात्रोक्तदिवसे स्मृतम् ।
जन्मतो द्वादशाहे वा कुर्यान्मङ्गलपूर्वकम् ॥

---

† संव. पीटीवत् ।

(१) मुचि. ५।१५ ; संव. ७२.

(२) अस्य स्थलादिनिर्देशा मुहूर्तप्रकरणे द्रष्टव्याः .

(३) संसौ. ५९ ; विपा. ४३७ ( = ).

(४) संव. ७२.

## शाकलकारिका:

निष्क्रमणकालः

[१]अथ निष्क्रमणं कुर्याच्चतुर्थे मासि वै यतः ।
तृतीये प्रथमे वाऽपि बहिर्निर्गमनं भवेत् ॥

## शौनककारिका:

निष्क्रमणस्य कालः कर्ता च

[२]मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात् ।
विदधीतास्य पित्रादिर्हितैषी यश्च रक्षकः ॥

(१) मासश्चात्र सावनः । २५१

आदिशब्दात् पितामहादीनां ग्रहणम् ।

‡ संप्र. २५५

(२) अत्र कर्तृनियममाह शौनकः– 'मासे चतुर्थे ... रक्षकः ॥' इति । संको. १०७

## कुमारिलकारिका:

निष्क्रमणकालः

[३]चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं भवेत् ॥

## रेणुकारिका:

निष्क्रमणस्य कालः श्राद्धपूर्वकत्वं च

[४]चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
जन्मतः श्राद्धपूर्वं तत् ... ॥

---

‡ संग. संप्रवत् संकोवच्च ।

(१) शाका. १८ पृ. २.

(२) शौका. १ पृ. ३९ ; प्रपा. १८४ ; संप्र. २५१ ; संको. १०७ ; संग. ५६८, ५७१.

(३) कुका १।१०।१ ; प्रपा. १८४ ; धप्र. ३८ ; विपा. ४३८ (=) ; ज्योनि. ११५.

(४) रेका. १ पृ. १४.

# निष्क्रमणमुहूर्तः

## आश्वलायनगृह्यपरिशिष्टम्

शुक्लपक्षे पुण्यनक्षत्रे च निष्क्रमणम्

[1]आपूर्यमाणपक्षे पुण्ये नक्षत्रे ॥

## काठकगृह्यसूत्रम्

पुण्याहे पर्वणि च निष्क्रमणम्

[2]पुण्याहे पर्वणि वा... ॥

पुण्यदिने ज्योतिःशास्त्रशुद्धे, पर्वणि वा सुनक्षत्रादियोगिनि दर्शनं कारयितव्य इत्येकस्यैव पर्वण इतरतिथिसमुदायेन सह विकल्पदर्शनात् उत्कर्षातिशयः प्रतीयते ।

देव.

## आग्निवेश्यगृह्यसूत्रम्

निष्क्रमणे नक्षत्राणि

[3]हस्ते तिष्यपुनर्वस्वनूराधाश्विरेवत्यामेकतमस्मिन्नक्षत्रे ॥

## गोभिलगृह्यसूत्रम्

निष्क्रमणे पक्षः तिथिश्च

[4]जननाद्यस्तृतीयो ज्यौत्स्नः तस्य तृतीयायाम् ॥

कुमारस्य जननमारभ्य (तृतीयो) यो ज्योत्स्नः वृद्धियुक्तः पक्षः तस्य तृतीयातिथौ ।

$ संत. ९१९-९२०

## खादिरगृह्यसूत्रम्

निष्क्रमणे पक्षः तिथिश्च

[5]जननाज्ज्योत्स्ने तृतीये तृतीयायाम् ॥

$ मृदुला. संतवत् । वीमि. संतगतम् ।

(१) आगृप. ११२६ (पुण्ये नक्षत्रे०); प्रपा. १८४; धप्र. ३८ (पूर्वपक्षापरपक्षादिति (?) वा शुभे नक्षत्रे ॥) सूत्रम्; संर. ८८८ गृह्यपरिशिष्टे.

(२) कागृ. ३७।२.

(३) आग्निगृ. २।२।३.

(४) गोगृ. २।८।१; संत. ९१९; वीमि. १।१२.

(५) खागृ. २।३।१.

मातुः पितुर्वा रुच्या यदाकदाचित् शिशोर्निष्क्रमणे प्राप्ते तदुपक्रमनियमोऽयम् । दैवान्मानुषाद्वा हेतोः निष्क्रमणे कृतेऽपि संस्कारार्थमस्मिन् काले कुर्यादेव । एवमुत्तरत्रापि । कालात्यये तु §उक्त एव न्यायः सर्वेषु संस्कारेषु । ज्योत्स्ना चन्द्रप्रभा । तद्योगात् पूर्वपक्षो ज्योत्स्नः । जननादूर्ध्वं ये ज्योत्स्नाः तेषां तृतीये तृतीयायां तिथावित्यर्थः । यदि पूर्वपक्षे जननं स्यात्सोऽपि गणयितव्यः, कृत्स्नस्य जननादूर्ध्वत्वाभावात् । तथा च मनुः— 'चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।' इति । उपस्थानकाले तृतीयानियमः ।

रुद्रभा.

## बृहस्पतिः

निष्क्रमणे वारा नक्षत्राणि च

[1]जीवभार्गवसौम्यानां शिशुनिष्क्रमणक्रिया ।
दिवसे शस्यते नित्यमायुर्वृद्धिधनप्रदा ॥

[2]अश्विनी रेवती हस्तो धनिष्ठा रोहिणी तथा ।
श्रवणं पुष्यसंयुक्तं मृगेणोत्तरफल्गुनी ॥

[3]अनुराधोत्तराषाढा तथा चैव पुनर्वसुः ।
इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ ॥

§ पुंसवने उक्त इत्यर्थः ।

(१) मपा. ३५८ द्धिधनप्रदा (द्धिर्बलं प्रजा) सुरेश्वरः; संप्र. २५२; संकौ. १०६; संग. ५६९; पुम. ४३४.

(२) मपा. ३५८ सुरेश्वरः; संप्र. २५२; संकौ. १०६; संग. ५६९ हस्तो ध (हस्तध); पुम. ४३४ पुष्यं (हस्त).

(३) मपा. ३५८ सुरेश्वरः; संप्र. २५२; संकौ. १०६ तथा चैव (तथैव च) शिशुनि (शिशोर्नि); संग. ५६९; पुम. ४३४-४३५.

## व्यासः

निष्क्रमणे नक्षत्राणि वाराः ग्रहसंस्थानं च

[1]मैत्रे पुष्यपुनर्वसुप्रथमभे
पौष्णेऽनुकूले विधौ
हस्ते चैव सुरेश्वरे च मृगभे
तारासु शस्तासु च ।
कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ
शुक्रे विरिक्ते तिथौ
कन्याकुम्भतुलामृगारिभवने
सौम्यग्रहालोकिते ॥

## गर्गः

गुरुशुक्रयोरस्ते बालत्वे वृद्धत्वे च मलमासे च
निष्क्रमणनिषेधः

‡[2]नामान्नप्राशनं चौडं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम् ॥
अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥

## राजमार्तण्डः

निष्क्रमणे पक्षः चन्द्रबलं नक्षत्रं च

[3]मासे तृतीये शशिवृद्धिपक्षे
क्षपाकरे गोचरशोभनस्थे ।
उत्पातपापग्रहवर्जिते भे
निष्काशनं सौख्यकरं शिशूनाम् ॥

‡ अनयोर्व्याख्यानं जातकर्मविधिप्रकरणे ‘ आद्यजातक ’ इति स्मृत्यन्तरवचने ( सं. का. पृ. २६४६ ) द्रष्टव्यम् ।

(१) गभा. १७२ शुक्रे विरिक्ते तिथौ ( शुक्रेष्वरिक्तातिथौ ); सिन्धु. ९१२ ; संव. ७३ मृग ( शुभ ) शुक्रे वि ( शुक्रेष्व ).

(२) संत. ८८५.

(३) संसौ. ५९ ; संप्र. २५१ ; संग. ५६९ उत्पात ( उत्पत्ति ).

## श्रीधरः

निष्क्रमणेऽन्नप्राशनमुहूर्तातिदेशः

[1]...अन्नविधिप्रयुक्ते
काले गृहान्निष्क्रमणं विदध्यात् ॥

## मुहूर्तचिन्तामणिः

निष्क्रमणे यात्रामुहूर्तातिदेशः

[2]............ अथ निष्क्रमणं चतुर्थ-
मासे गमोक्तसमयेऽर्कमितेऽह्नि वा स्यात् ॥

## मुहूर्तसंग्रहे

निष्क्रमणे पक्ष-तिथि-वार-नक्षत्र-योग-करण-
लग्न-षड्वर्ग-ग्रहसंस्थानानि

[3]चत्वार्यर्यम्ण विश्वर्क्षात्तिस्रोऽहिर्बुध्न्यभाद्$
विधुः ।
मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः ॥

चत्वार्यर्यम्णः उत्तरादिचतुष्टयम् । अर्यम्ण इत्यत्र सलोपश्छान्दसः । विश्वर्क्षात् तिस्रः उत्तराषाढादित्रयम् । अहिर्बुध्न्यभात्तिस्रः उत्तराभाद्रादित्रयम् । मैत्रं अनुराधा । आदित्यः पुनर्वसुः । ‡ प्रपा. १८४

$ अहिर्बुध्न्यभात् तिस्र इत्यन्वयः । ‘ तिस्रः ’ इति पदं देहलीदीपन्यायेनोभयान्वयीति व्याख्यानादुन्नेयम् । ‘विधुः’ इति प्रयोगपारिजातपुस्तके पाठः । स एव पारिजातस्याभिप्रेतश्चेत् ‘ विधुः मृगशीर्षम् ’ इत्यावश्यकमपि व्याख्यानं न कृतमिति न्यूनता । विधुशब्दस्य मृगशीर्षपरत्वाभावेऽनन्वितत्वम् । प्रकाशादिपुस्तकेषु ‘ विदुः ’ इति पाठः । अस्मिन्पाठे मृगशीर्षस्य न संग्रहः , ‘ शुभावहा इति विदुः ’ इति इतिपदाध्याहारेण च ग्रन्थो योजनीयः ।

‡ संप्र. संर. प्रपागतम् ।

(१) अस्य स्थलादिनिर्देशाः निष्क्रमणविधिप्रकरणे ( सं. का. पृ. २८३० ) द्रष्टव्याः.

(२) मुचि. ५।१५; संव. ७२.

(३) प्रपा. १८४ ; संप्र. २५२ (चत्वारि विश्वमादीनि तिस्रोऽहिर्बुध्न्यभाद्विदुः । मैत्रमादित्यपुष्ये च रोहिणी च शुभावहा ॥ ) ; ज्योनि. ११५ विधुः ( विदुः ) संग्रहे ; संर. ८८६ पूर्वार्धे ( चत्वार्यर्यमतस्त्रीणि वैश्वात्त्रीणि च बुध्न्यभात् । ).

[1]पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
रिक्ताषष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जयेत् ॥

[2]वर्ज्यास्त्वशुभयोगाः स्युर्विष्टिश्च शकुनादि च ।
वृषालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च ॥

(१) शकुनादि इत्यादिशब्देन चतुष्पान्नागकिंस्तुघ्नानि गृह्यन्ते । अथ लग्नानि तत्रैव– 'वृषालिमेषा...' इति । संप्र. २५२

(२) आदिशब्देन निषिद्धकरणान्तरसंग्रहः । संको. १०६

(३) अलिः वृश्चिकः । अधोमुखानि मूलाश्लेषामिश्रोग्राणि । संर. ८८७

[3]सतां तु वारवर्गाश्च शुभदास्तूदयास्तथा ।
चान्द्रं सर्वे विवर्ज्य स्यात् सर्वेऽशस्ता विनाशदाः ॥

सतां शुभग्रहाणाम् । संर. ८८७

(१) प्रपा. १८४ कृष्णश्चा ( कृष्णे चा ); संप्र. २५१ प्रपावत् , पू. : २५२ उत्तरार्धे ( रिक्ता षष्ठ्यष्टमी दर्शो द्वादशी च विवर्जिताः । ) उत्त. ; संम. १७ कृष्णश्चा ( कृष्णोऽप्य ) पू. ; ज्योनि. ११५ पूर्वार्धे ( पूर्वपादाः शुभाः प्रोक्ताः कृष्णे चान्त्यत्रिकं विना । ) संग्रहे ; संको. १५२ संप्र. २५२ वत् : ११३ पू. ; संग. ५६९ वर्जयेत् ( वर्जिताः ) शेषं प्रपावत् ; संब. ९० प्रपावत् , पू. ; पुम. ४३५ संप्र. २५२ वत् ; संर. ८८६ पूर्व ( शुक्ल ).

(२) प्रपा. १८४ वृषा ( घटा ) ; संप्र. २५२ प्रथमपादे ( वर्ज्याश्चाशुभयोगाश्च ) पू. : २५३ उत्त. ; ज्योनि. ११५ संग्रहे ; संको. १०६ ; संप्र. २५२ वत् , पू. ; संग. ५६९ मेषा व (मेषव) ज्योतिर्निबन्धे ; पुम. ४३५ वृषा ( झषा ) उत्त. ; संर. ८८६ उत्त.

(३) प्रपा. १८४ सर्वेऽशस्ता ( सर्वे खस्था ) ; ज्योनि. ११५ संग्रहे ; संर. ८८६ दास्तू ( दाः सू ) पू.

[1]केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः ।
उपनिष्क्रमणे शस्ता मातुलो वाहयेच्छिशुम् ॥

## दीपिका

निष्क्रमणे पक्ष–तिथि–वार–नक्षत्र–लग्न–ग्रहसंस्थानानि

[2]आर्द्राधोमुखवर्जितानुपहते-
ष्वृक्षेष्वरिक्ते तिथौ
वारे भौमशनीतरे घटतुला-
कन्यामृगेन्द्रोदये ।
सद्वृद्धेऽथ चतुर्थमासि यदि वा
मासे तृतीये शशि-
न्यक्षीणे शुभदे शिशोरभिनवं
निष्कामणं कारयेत् ॥

## मुहूर्तगणपतौ

निष्क्रमणे यात्रामुहूर्तातिदेशः

[3]तुर्ये निष्क्रमणं मासि यात्रोक्तदिवसे स्मृतम् ॥

## शौनककारिकाः

निष्क्रमणे शुक्लपक्षे तिथिवारनक्षत्रादि शुभं ग्राह्यम्

[4]पूर्वपक्षे शिशोर्जन्मनक्षत्रानुगुणे शुभे ।
नक्षत्रे गुणसंपन्ने तिथिवारादिसंयुते ॥

निष्क्रमणमित्यनुषज्यते । संप्र. २५२

(१) प्रपा. १८४ वाहये (वा वहे) ; संप्र. २५३ ; विपा. ४३७ (=) षष्ठ (षष्टि) ; ज्योनि. ११५ षष्ठत्रि ( षष्ठास्त्रि ) चतुर्थपादे ( शिशोरायुष्प्रवर्धनाः ) संग्रहे ; संग. ५६९ ज्योनिवत् , ज्योतिर्निबन्धे ; पुम. ४३५ निष्क्रमणे शस्ताः ( क्रमेण शस्ताः स्युः ) ; संर. ८८६ उत्त.

(२) संसौ. ५९ मृगेन्द्रो (लिसिंहो) शुभदे (शुभदं) भिनवं निष्कामणं ( थ गृहान्निष्काशनं ) ; विपा. ४३७ (=).

(३) संब. ७२.

(४) शौका. २ पृ. ३९ ; प्रपा. १८४ ; संप्र. २५२ पन्ने ति ( पन्नति ).

## कुमारिलकारिकाः

निष्क्रमणे शुक्लपक्षे शुभं नक्षत्रं ग्राह्यम्

**[1]चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं भवेत् ॥**

(१) कुका. १।१०।१ ; प्रपा. १८४ ; धप्र. ३८ ; विपा. ४३८ (=) ; ज्योनि. ११५.

## रेणुकारिकाः

निष्क्रमणे पक्षतिथिवारनक्षत्राणि

**[1]...शुक्लपक्षे शुभेऽहनि ॥**
**मृगहस्तानुराधाश्विपुष्यपूषश्रवेषु च**
**पुनर्वसुश्रविष्ठायां जीवसौम्यसितेऽहनि ॥**

(१) रेका. १–२ पृ. १४.

# निष्क्रमणप्रयोगः

## बौधायनगृह्यसूत्रम्

ब्राह्मणभोजनम् , पुण्याहवाचनम् , होमः , निष्क्रम्य बाह्यदेवतापूजनम् , ब्राह्मणभोजनम् , आशीर्वाचनम् , प्रदक्षिणीकृत्य गृहानयनम्

'ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा स्वस्त्यात्रेयं जुहोति ॥

'स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुकेतुना ॥

स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥

विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥

स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥

स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददताऽघ्नता जानता संगमेमहि ॥

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवाऽऽरुहेम ॥

अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नो अस्तु ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥' इत्यष्टाभिरनुच्छन्दसम् ॥

'अयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

'अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृताऽन्नेन ब्राह्मणान् संपूज्याऽऽशिषो वाचयित्वा प्रदक्षिणीकृत्य स्वान् गृहानानयति ॥

ग्रामाद्बहिःस्थापितानि बाह्यानि । चित्रियाणि देवताः । त्रिवृता त्रिप्रकारेण । 'स्वान् गृहानानयन्ति ' इति बहुवचनेन सर्वैः संबन्धिभिः स्वस्वगृहे शिशोर्नयनं कर्तव्यमिति बोध्यते । संर. ८८७

## आश्वलायनगृह्यपरिशिष्टम्

स्वस्तिवाचनम् , होमः , निष्क्रमणम् , देवतायतने देवतापूजनम् , आशीर्वाचनम् , आयतनप्रदक्षिणा, कुमारं संबन्धिगृहं नीत्वा अनीत्वा वा गृहागमनम्

'स्वस्ति वाचयित्वा स्विष्टकृतः प्राक् सुस्नातालंकृतं कुमारमादाय सहभार्याज्ञातिबान्धवैः पुरन्ध्रीभिश्च मङ्गलतूर्यनिर्घोषेण गृहान्निष्क्रम्य देवतायतनमेत्य देवतामुपहारेणाभ्यर्च्याऽऽशिषो वाचयित्वाऽऽयतनं प्रदक्षिणीकृत्य गृहमेयात् संबन्धिनो वा गृहं नीत्वाऽऽनयेत् ॥

(१) बौगृ. २।२।२-११ ; संर. ८८७ मन्त्राणां निर्देशमात्रम् .

(१) बौगृ. २।२।१२ ; संर. ८८७ जय (स्विष्टकृत्).

(२) बौगृ. २।२।१३ ; संर. ८८७ नयति (नयन्ति).

(३) आगृप. १।२६ ; प्रपा. १८४ ( सहभार्याज्ञातिबान्धवैः पुरन्ध्रीभिश्च मङ्गलतूर्यनिर्घोषेण गृहान्निष्क्रम्य० ) णीकृत्य गृहमे ( णं परीत्य गृहमि ) ; संर. ८८८ (स्विष्टकृतः प्राक्० ) निर्घोषेण गृहा ( घोषेण सशिशुर्गृहा ) मेत्य + ( तां ) हारेणा ( हारैर ) णीकृत्य गृहमे ( णं परीत्य गृहमि ) नो वा गृहं ( गृहान्वा ).

## मानवगृह्यसूत्रम्

होमः, आदित्यदर्शनम्, ब्राह्मणभोजनम्, दक्षिणादानम्

[1]... **पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति ॥**

**'आदित्यः शुक्र उदगात्पुरस्तात्, हꣳसः शुचिषद्, यदेदेनम्' इति सूर्यस्य जुहोति ॥**

अग्निं तूष्णीं निर्मथ्योपसमाधाय प्रज्वाल्य तस्मिन्नेवाग्नौ पयसि क्षीरे स्थालीपाकं श्रपयित्वा रन्धयित्वा 'आदित्यः शुक्र उदगात्' तथा 'हंसः शुचिषत्' तथा 'यदेदेनम्' इति त्रिभिः सूर्यस्य जुहुयादित्यर्थः। सूर्यग्रहणं सूर्यपदस्य ग्रहणम् ऋगन्ते स्वाहाकारान्तं कृत्वा जुहुयादित्येवमर्थम्। अथवा मान्त्रवर्णिकी या सूर्यवासिनी देवता तां ध्यात्वा ऋगन्ते स्वाहाकारं कृत्वा जुहुयात्। जुहोतिशब्दात् स्वाहाकारप्रयोगः। अष्टाभा.

**'उदु त्यं जातवेदसम्' इत्येतयोपस्थायाऽऽदित्याभिमुखं दर्शयेत्– 'नमस्ते अस्तु भगवन् शतरश्मे तमोनुद। जहि मे देव दौर्भाग्यं सौभाग्येन मां संयोजयस्व ॥' इति ॥**

'उदु त्यम्' इत्यनया मन्त्रलिङ्गादादित्यमेवोपतिष्ठेत। नाग्निमुत्थाय तस्याभिमुखं दर्शयेत्तनुमानम्। 'नमस्ते अस्तु' अनेन मन्त्रेणाऽऽदित्यमीक्षयेत् कुमारं यथावन्नोदयति तेनायं भगवान् तमो नुदति अवेक्षणं क्रियते 'नमस्ते अस्तु' इत्यनेन मन्त्रमत्र कृत्वेक्षणे प्रयुक्तं तच्च न तावत् कुमारः शक्नोति वक्तुं कुमारमपि वाक्येऽपि त्व( ? त्वे )तस्मादन्यार्थमेतत्। एतच्च अयुक्तम्। स्मृत्यन्तरादिदं कर्म दृश्यते 'चतुर्थे मासि' इत्यादौ तच्च सर्वदा मन्त्रेण तत्सानवकश्चिमिति न(?) पश्यति। यत्तूच्यते मन्त्रस्यासमवेतार्थत्वं तु यदुक्तं तेनायं कुमारस्य मन्त्रोऽपि न पितुः। अत एवेक्षयेदिति णिजन्तः प्रयोगः तथा दर्शयेदिति। अथ किमर्थमीक्षयेदिति दर्शयत्योः( ? दर्शयेदित्येतयोः ) समर्थयोरुभयोरुपादानम् ? एवमर्थम्– 'दर्शयेत्' इत्यनेन तत्कर्मभूतमप्यादित्यस्याभिमुखं दर्शयितव्यम्, आदित्यं च कर्मभूतमीक्षयेदित्यर्थः। अष्टाभा.

**अथ ब्राह्मणतर्पणम् ॥**

**ऋषभो दक्षिणा ॥**

## काठकगृह्यसूत्रम्

आदित्यदर्शने होमः, कुमाराभ्युदानयनम्, आदित्योपस्थानम्, ब्राह्मणभोजनम्, चन्द्रदर्शने आदित्यदर्शनविष्यतिदेशः, होमे विशेषः, दक्षिणा

[1]... **उदिते त्वादित्ये रथचक्रमात्रं स्थण्डिलमुपलिप्य तस्मिन् यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा 'तरणिः, दिवो रुक्मः, उदु त्यम्, चित्रं देवानाम्' इत्याज्यस्य जुहोति ॥**

( १ ) तत्रेयमितिकर्तव्यता। ... उदिते एवाऽऽदित्ये रथचक्रपरिमाणं स्थण्डिलमुपलिप्य गेहाङ्गने आदित्यरश्म्यलंकृते तत्रोपलिप्ते प्रतिष्ठाप्य लौकिकमग्निं यथोक्तमुपसमाधाय उपसमाधानमुद्धतावोक्षणपरिसमूहनपर्युक्षणपरिस्तरणपवित्रकरणाज्यविलयनाज्यवीक्षणाग्न्युपस्थानरूपं कृत्वा ततो जयप्रभृतिभिर्जयाकारैराघाराद्याज्यभागान्तैर्हुत्वा 'तरणिर्विश्वदर्शतः' इति 'दिवो रुक्मः' इति 'उदु त्यम्' इति 'चित्रं देवानाम्' इति चतसृभिराज्यस्य जुहोति।

'तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमाभासि रोचनम्॥' – प्रजापतेरार्षम्, उत्तरस्यापि। गायत्री। सूर्यो देवता। हे सूर्य, असि त्वं तरणिः तारयति संसारसागरादिति तरणिः। तथा दर्शतः द्रष्टुः विश्वस्य सर्वस्य ज्योतिष्कृत् प्रकाशकारी अन्धतमसस्यापहारकः। विश्वमाभासि रोचनं यत्किंचित् रोचनं प्रकाशमानं तत् विश्वं समस्तं त्वमेवाऽऽभासि प्रजापतिरूपः।

'दिवो रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः। नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि ॥' – अयमादित्यो दूरे उदेति दूरं गच्छति

(१) मागृ. १।१९।२–६.

(१) कागृ. ३७।२–६.

चेष्टते। कुतः ? दिवः अन्तरिक्षात्। रुक्मः 'रुच दीप्तौ', दीप्तः सुवर्णवर्णो वा। उरुचक्षाः बृहद्दर्शनः। अर्यः अर्यते प्राप्यते अर्थ्यते वा मोक्षार्थिभिरिति अर्यः ब्रह्म। तरणिर्ब्याख्यातः। भ्राजमानः दीप्यमानः। जायन्ते इति जनाः त्रयो लोकाः। नूनं निश्चितं कृत्वा सूर्येण प्रसूताः जनिताः, जगतां प्रजापतिविवर्तत्वात् ब्रह्मपरिणामत्वाद्वा, सूर्यस्य च ब्रह्मात्मकत्वात्। अयं हि सूर्यः अपांसि अन्नानि आविष्कुर्वन् वृष्टिद्वारेण, अर्थांश्च यागदानादीन् वेगेनार्यमाणान् अयन् प्रवर्तयन् दिवसकरणद्वारेण दृश्यते। 'उदु त्यम्' 'चित्रं देवानाम्' 'मित्रो जनान्' इति व्याख्याताः। देव.

(२) रथचक्रमात्रं सावित्रवत् अष्टाचत्वारिंशदङ्गुलमालिख्य उदिते त्वादित्ये तमभ्यर्चयेत्। 'मित्राय जुष्टं निर्वपामि' इति निर्वापः। आज्यभागान्तं हुत्वा 'तरणिः' इति चतस्रः स्रुवेणाऽऽज्याहुतीर्जुहुयात्। ब्राह्म.

**'मित्रो जनान्, प्र स मित्र' इति स्थालीपाकस्य ॥**

जुहोतीत्यनुषज्यते। 'मित्रो जनान्' इति 'प्र स मित्र' इति च द्वाभ्यां स्थालीपाकस्य जुहोति।

'प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षते व्रतेन। न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्॥' – हे मित्र आदित्य, यो मर्तः मर्त्यः तव व्रतेन, व्रतं कर्म, शिक्षते स प्रयस्वान् अन्नवान् प्रास्तु प्रकर्षेण भवतु। यः त्वोतः त्वया रक्षितः स न केनचित् हन्यते, न जीयते पराभूयते। नाप्येनम् अंहः पापम् अश्नोति व्याप्नोति अन्तितः अन्तिकात्, नापि दूरात्। देव.

**'अभ्यावर्तस्व' इति कुमारमभ्युदानयन्ति ॥**

(१) 'अभ्यावर्तस्व' इत्यादिना मन्त्रेण कुमारमभिमुखं कृत्वा उन्नमय्याऽऽनयति पिता गुर्वा।

'अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह। वपां ते अग्निरिषितो अरोहत्॥' – हे पृथिवि, यज्ञेन पयसा च सह अभ्यावर्तस्व मम सांमुख्येन आगच्छ प्रसन्ना भूत्वा मां पयस्वन्तं याज्ञिकं च संपादय। अग्निः इषितः प्रेषितः सन् ते तव वपां सारं वेदिम् अरोहत् आरोहतु। देव.

(२) 'अभ्यावर्तस्व' इति सुमृष्टम्। ब्राह्म.

**'द्रष्ट्रे नमः' इत्युपस्थानमादित्यस्य, 'अदृश्रमस्य' इति च ॥**

'द्रष्ट्रे नम उपद्रष्ट्रे नमः' इत्यादिना बालस्य पिता आदित्योपस्थानं करोति बालं संमुखं कृत्वोत्सङ्गे।

'द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः श्रान्ताय नमस्तपसे नमः॥' – घोराणामार्षम्। आदित्यः स्तूयते परब्रह्मरूपत्वात् सर्वमयत्वेन। द्रष्टा जीवात्मा। उपद्रष्टा अन्तर्यामी। तस्मै उभयात्मने नमः। वेदादिप्रमाणेन दृष्टं धर्मादिकम् अनु पश्चात् योगाभ्यासेन स्फुटं पश्यतीत्यनुद्रष्टा योग्यात्मा, तस्मै नमः। ख्यातीति ख्याता प्रकाशमानः सर्वो लोको धर्मिरूपः, उपख्याता धर्मो रूपादिः, अनुख्याता धर्माधर्मरूपादिगतः। शिष्टं स्पष्टम्।

'अदृश्रमस्य केतवो विरश्मयो जनाँ अनु। भ्राजन्तो अग्नयो यथा॥' – अस्य आदित्यस्य केतवः अश्वाः रश्मयो वा अदृश्रन् दृश्यन्ते जनाननु जायमानान् लक्षणीकृत्य। विरश्मयः विगतरज्जवः बन्धनशून्या इत्यर्थः। भ्राजन्तः देदीप्यमानाः अग्निप्रख्याः। $ देव.

**सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ॥**

बहुघृतदध्यादियुक्तं हविष्मदन्नं ब्राह्मणान् भोजयेत्। देव.

---

$ ब्राह्म. देवगतम्।

'एवं चन्द्रदर्शनम् ॥

एवंशब्देन रथचक्रपरिमाणस्थण्डिलोपलेपनान्तस्यातिदेशः । देव.

'मक्षू धाता, भूयो जातः' इति द्वाभ्यामाज्येन चतुर्गृहीतेनाऽऽज्यभागान्ते जुहोति ॥

'आप्यायस्व, सं ते पयांसि' इति द्वाभ्यां स्थालीपाकस्य ॥

'नवो नवः' इत्युपस्थानम् ॥

(१) विशेषमाह– 'मक्षू धाता...' । 'नवो नवः' इत्यनेन मन्त्रेण चन्द्रमसः उपस्थानं कर्तव्यम् ।

'मक्षू धाता मातरिश्वा वचोभिश्चन्द्रो अमृताद्वर्धते जायमानः । आयुः प्रजाममृतं सौभगत्वं प्र चन्द्रमास्तिरते दीर्घमायुः ॥'– चन्द्रमा दीर्घमायुः प्रतिरते प्रतिरतु ददातु, तथा प्रजां पुत्रादिकामम्, अमृतम् अमरणधर्मकत्वम्, सौभगत्वं सौभाग्यं लोकप्रियत्वम्। द्विरायुर्ग्रहणमतिशयार्थम् । स हि प्रतिपदादौ अमृतात् परब्रह्मणः जायमानो वर्धते प्रतिदिनम् । §औणादिकोऽसिःप्रत्ययः । पूजितस्य चतुर्थपुरुषार्थस्य धाता विधाता भवति ।

'भूयो जातो हविषश्चन्द्रमा अस्मात्पूर्णः पुरस्तात् पयसो हविर्भिः । पयो गर्भो देवता पिन्वमानश्चन्द्रोऽमृतत्वमभयं कृणोतु ॥'– पयोभिश्च भूयः पुनः पुनः बहुकृत्वो वा पयः क्षीरं गर्भः गर्भान् देवताः यज्ञोद्देश्याः पिन्वमानः ओषध्याद्याप्यायनमुखेन पोषयन् चन्द्रो दुःखभयरहितममृतत्वं मे करोतु ।

'आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥'– हे सोम, आप्यायस्व वर्धयास्मान् । वृष्ण्यं सेक्तृत्वमाप्यायकत्वं ते तव विश्वतः सर्वतः समेतु समागच्छतु । किंच, वाजस्य अन्नस्य संगथे संबन्धनिमित्तं भव ।

'सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि दिष्व ॥'– हे सोम, ते तव पयांसि संयन्तु त्वया संगच्छन्ताम् । वाजा वाजानि अन्नानि च संगच्छन्ताम् । वृष्ण्यानि च आप्यायकत्वानि त्वया संगच्छन्ताम् । कीदृशस्य तव ? अभिमातिषाहः संग्रामाणां प्रसोढुः अभिभवितुः । हे सोम, अस्माभिराप्यायमानो हविषा अमृतत्वाय भव । स्वर्गायेत्यर्थः । श्रवांसि च अन्नान्युत्तमानि देहि यज्ञोपयोगीनि ।

'नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥'– अयं चन्द्रमाः प्रतिपदादौ वर्धमानो नवो नवो भवति । अह्नां दिनानाम् उषसां च रजन्यन्तानाम् अग्रम् एति आगच्छति केतुः चिह्नभूतः, प्रतिपदादिकालस्य सूचकत्वात् । किंच, भागं देवेभ्यो ददात्यमृतमयत्वादमृतस्य, च दीर्घमायुः प्रतिरते । इति चन्द्रदर्शनम् । देव.

(२) आज्यभागान्ते 'आप्यायस्व' 'सं ते पयांसि' इति चरोः प्रधानद्वयं हुत्वा । केषांचिन्मते 'अभ्यावर्तस्व' इति बालमभ्युदानयेत् । 'यथाऽऽदित्यम्' 'नवो नवः' इति द्वाभ्यामुपस्थानम् । ब्राह्म.

प्रकाशो दक्षिणा ॥

(१) प्रकाशः आदर्शः दक्षिणा दातव्या । देव.

(२) अधीवासः उत्तरं वासः दक्षिणा । ऋतुतिथियागादितन्त्रसमाप्तिः । ब्राह्म.

## आग्निवेश्यगृह्यसूत्रम्

शिशोश्चतुष्पथे नयनम्, स्त्रीप्रमाणकधर्माचरणम्

'कृतस्वस्त्ययनमपदातिं शिशुं मात्रा छत्रिणं चतुष्पथे नयेत् । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥

§ अत्रत्यं किंचिद्व्याख्यानं त्रुटितं स्यात् ।

(१) काग्र. ३८।१–५.

(१) आग्निगृ. २।२।३.

## पारस्करगृह्यसूत्रम्

### सूर्यदर्शनम्

**[१]सूर्यमुदीक्षयति– ‘ तच्चक्षुः ’ इति ॥**

( १ ) तत्र सूर्यमुदीक्षयति ‘ तच्चक्षुः ’ इति अनेन मन्त्रेण । 　　　　　　कभा.

( २ ) अथ ‘ तच्चक्षुर्देवहितम् ’ इत्यादिना ‘ भूयश्च शरदः शतात् ’ इत्यन्तेन मन्त्रेण श्रीसूर्यं भगवन्तं रश्मिमालिनमुदीक्षयति कुमारं प्रदर्शयति पिता । 　　　　　　हभा.

( ३ ) ‘ सूर्यमुदीक्षस्व ’ इति प्रैष इति गर्गपद्धतौ । तन्मृग्यम् । 　　　　　　गभा.

( ४ ) कथमित्यत आह– ‘ सूर्यमुदीक्षस्व ’ इति प्रैषपूर्वं कुमारं सूर्यमुदीक्षयति ‘ तच्चक्षुः ’ इति मन्त्रेण । बालकस्य अयोग्यत्वात् स्वयं मन्त्रपाठः । कन्यायास्तु सूर्यावेक्षणं तूष्णीम् । 　　　　　　विभा.

## गोभिलगृह्यसूत्रम्

कुमारस्नपनम्, रात्रिमुखे चन्द्रोपस्थानम्, मातुः पित्रे कुमारं प्रदाय पित्रुत्तरतोऽवस्थानम्, पितुर्जपः, आसंवत्सरान्तं प्रतिशुक्लपक्षं चन्द्रायोदकाञ्जलिदानम्, औत्सर्गिकः कर्मशेषः

**[२]... प्रातः सशिरस्कं कुमारमाप्लाव्यास्तमिते वीते लोहितिम्न्यञ्जलिकृतः पितोपतिष्ठते ॥**

( १ ) प्रातः सशिरस्कं कुमारं स्नापयित्वा । प्रातः, न मध्याह्नादौ । अस्तमिते सूर्ये विगते रक्तिमावस्थे काले संध्योपरमे अञ्जलिकृतः बहुव्रीहावाहिताग्निगणपाठात् कृताञ्जलिः उपतिष्ठते चन्द्राभिमुख ऊर्ध्वस्तिष्ठेत् । 　　　　　　संत. ९२०

( २ ) सशिरस्कं शिरसा सह । अत्र सशिरस्कमित्यभिधानात् अन्यदा बालानामशिरस्कं स्नानं दर्शयति । तथा च ब्रह्मपुराणम्– ‘ शिशोरभ्युक्षणं प्रोक्तं बालस्याऽऽचमनं स्मृतम् । रजस्वलादिस्पर्शे तु स्नातव्यं तु कुमारकैः ॥ ’ इति । एवं चेदं स्नानमदृष्टार्थम्, न तु शौचार्थमिति ध्येयम् । कुमारं ¶ बालम् । तथा च ब्रह्मपुराणम्– ‘ प्राक् चूडाकरणाद् बालः प्रागन्नप्राशनाच्छिशुः । कुमारस्तावद् विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥ ’ इति । आप्लाव्य स्नापयित्वा रात्रौ कर्मणो विधानात् रात्रावेव स्नानं मा भूदित्येवमर्थं प्रातरित्युक्तम् । अस्तमिते अस्तंगते सवितरि सूर्ये वीते विगते लोहितिम्नि लौहित्ये । संध्योपरमे इत्यर्थः । अञ्जलिकृतः कृताञ्जलिः । आहिताग्न्यादिषु ( पा. सू. २।२।३७ ) पाठात् कृतशब्दस्य परनिपातः । उपतिष्ठते आराधयति अर्थाच्चन्द्रमसम्, ‘ अभिमुखश्चन्द्रमसम् ’ इति लिङ्गात् । † अत्र

---

(१) पागृ. १।१७।६ ; स्मृसा. ३ ; निप. २६६ (=).

(२) गोगृ. २।८।१ ; संत. ९१९ वीते लोहितिम्न्य ( सूर्ये वीते लोहिते अ ) पतिष्ठते ( त्तिष्ठते ).

¶ ‘ प्राक्चूडाकरणाद्बालः ’ इत्यादेरग्रिमस्य ब्रह्मपुराणवचनस्य संज्ञासांकर्यफले यथाभुतार्थे न तात्पर्यम्, अपि तु कुमारलक्षणस्य बालशिशुलक्षणाभ्यां बाललक्षणस्य च शिशुलक्षणेन संकोचेन संज्ञानामसांकर्ये एव तात्पर्यम्, अन्यथा ‘ शिशोरभ्युक्षणं प्रोक्तम् ’ इत्यादिप्रागुदाहृतब्रह्मपुराणवचनोक्ताया व्यवस्थाया उच्छेदापत्तेः । तथा चेदं बालपदं यद्यल्पवयस्करूपसामान्यार्थपरं तदा परिभाषावचनोद्धारो व्यर्थः, ‘ तथा च ’ इत्युक्तार्थे प्रमाणत्वोक्तिः संवादोक्तिर्वा विसंगता च । यदि तु पारिभाषिकार्थपरं तदा परिभाषावचनविरोधः, निष्क्रमणकालेऽन्नप्राशनस्यानिर्वृत्तत्वेन पारिभाषिकशिशुत्वात् । न च–गोभिलेनान्नप्राशनसंस्कारस्यानुक्तत्वेन गोभिलसूत्रिकुलेषु तदभावात् शिशुत्वं नास्ति–इति वाच्यम्, उपनीतधर्माधिकारे उपनयनसंस्कारस्य प्रयोजकत्वेन तस्य कुमारत्वावधित्वेऽपि आशौचादौ नामकरणचूडाकरणादिशब्दानां षष्ठमासचतुर्थवर्षारम्भादिकालोपलक्षकत्ववदत्रापि अन्नप्राशनचूडाकरणशब्दयोस्तत्तत्कालोपलक्षकत्वसंभवेन संस्कारयोः शिशुत्वबालत्वावधित्वासिद्धेः संस्काराभावस्याकिंचित्करत्वात्, मृदुलाकारेण चूडाकरणप्रकरणारम्भे शिष्टाचारादिप्रामाण्येन गोभिलसूत्रिभिरप्यन्नप्राशनस्यावश्यानुष्ठेयत्वस्य महत्या टिप्पण्या स्थापितत्वाच्च ।

† अत्र टीकाकार एकस्मिन्नेव लक्ष्ये सूत्रवार्तिकयोरुभयोः प्रवृत्तिं ब्रुवाणः सूत्रस्यार्थविशेषे प्रवृत्तिं व्यवस्थापयितुं वार्तिकारम्भ इति मन्यते । तत् व्याकरणसिद्धान्तविरुद्धम् । मन्त्रकरणकधात्वर्थः सूत्रविषयः, अमन्त्रकरणकधात्वर्थविशेषास्तु

'उपान्मन्त्रकरणे' (पा. सू. १।३।२५) इत्यात्मनेपदम्। अत्र 'उपाद्देवतापूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्' इति वार्तिकादाराधने। अत्र दिशोऽनुपदेशात् प्राङ्मुख उपस्थानं कुर्यात्, 'यत्र दिङ्नियमो नास्ति' इति कात्यायनवचनादिति भाष्यकृतः। प्रत्यङ्मुख इति पद्धतिकृतः। युक्तं चेदम्, शुक्लपक्षतृतीयायां चन्द्रमसः पश्चिमदिगवस्थितत्वेन तत्सांमुख्येनैवोपस्थानस्य न्याय्यत्वात्। मृदुला.

**[1]अथ माता शुचिना वस्त्रेण कुमारमाच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्शिरसम्॥**

(१) उदञ्चम् उत्तानम् इति भट्टभाष्यम्। उत्तरां गच्छन्तमिति सरला। संत. ९२०

(२) अथ अनन्तरमेव। शुचिना निर्णिक्तेन। आच्छाद्य आ ईषत् मुखवर्जं छादयित्वा। दक्षिणतः पितुर्दक्षिणस्यां दिशि भूत्वा। अत्र च 'आद्यादिभ्यस्तसेरुपसंख्यानम्' इति सप्तम्यन्तात्तसिः। एवमग्रेऽपि। उदञ्चम् उत्तानम्। उदक्शिरसं च कुमारं पित्रे प्रयच्छति ददाति। मृदुला.

**[2]अनुपृष्ठं परिक्रम्योत्तरतोऽवतिष्ठते॥**

(१) पत्युः पृष्ठस्य पश्चादुपक्रम्य सा उत्तरस्यां तिष्ठेत् पश्चिमाभिमुखी। संत. ९२०

(२) स्वयं च अनुपृष्ठं पत्युः पृष्ठदेशेन परिक्रम्य गत्वा उत्तरतः पत्युत्तरस्यां दिशि अवतिष्ठते ऊर्ध्वा तिष्ठति। अत्र 'समवप्रविभ्यः स्थः' (पा. सू. १।३।२२) इत्यात्मनेपदम्। मृदुला.

**[3]अथ जपति– 'यत्ते सुसीमे' इति। 'यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधि' इति॥**

---

वार्तिकविषया इत्युभयोर्लक्ष्यभेद इति सिद्धान्तः। ततश्चात्र मन्त्रकरणकत्वाभावात् केवलवार्तिकप्रवृत्तिरेव वाच्या।

(१) गोगृ. २।८।२; संत. ९२० दक्षिणत (दक्षिणे).

(२) गोगृ. २।८।३; संत. ९२०.

(३) गोगृ. २।८।४; संत. ९२० सुसीमे + (हृदयं) येत (यते).

**[1]उदञ्चं मात्रे प्रदाय यथार्थम्॥**

(१) मातरि उदग्गतायां पिता 'यत्ते' इत्यादि 'पुत्रो जनित्र्या अधि' इत्यन्तमन्त्रद्व(? त्र)यं जप्त्वा उत्तानम् उत्तरां गच्छन्तम् उदक्शिरसं कुमारं मात्रे दत्त्वा वामदेव्यगानान्तं कुर्यात्। संत. ९२०

(२) अथेत्यानन्तर्यार्थम्। परिक्रम्योत्तरतः स्थितायाम् तस्याम् अनन्तरं पिता जपति, न तु परिक्रममाणायामेव। जप्यमाह– 'यत्ते' इत्येवमादि 'यथाऽयं ... अधि' इत्येतदन्तम्। तदिदं द्व्यृचस्याऽऽद्यन्तज्ञापनार्थमिति पदद्वयमुक्तमिति बोध्यम्। ऋचो यथा– 'यत्ते सुसीमे हृदयं हितमन्तः प्रजापतौ। वेदाहं मन्ये तद् ब्रह्म माऽहं पौत्रमघं निगाम्॥ यत् पृथिव्यामनामृतं दिवि चन्द्रमसि श्रितम्। वेदामृतस्याहं नाम माऽहं पौत्रमघं रिषम्॥ इन्द्राग्नी शर्म यच्छतं प्रजायै मे प्रजापती। यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधि॥' इति। आसामर्थः– हे चन्द्र, यत् ते तव अन्तः मध्ये सुसीमे सुषीमे सुशीमे वा अतिशीतले प्रजापतौ प्रजानामानन्दजनकत्वेन पत्याविव हृदयं मनः हितं निहितं अर्पितम्, अहं वेद जानामि। किम्? मन्ये तत् ब्रह्म तदेतद् ब्रह्मैव भवतीति ध्रुवमुत्प्रेक्षे। तेन पौत्रं पुत्रसंबन्धि अघं दुःखं अहं मा निगां मा नितरां प्राप्नुयाम्। अयमर्थः– यस्मादहं ब्रह्मवित् तस्मात् ममानिष्टसंबन्धो न संगच्छते इति।

यत् पृथिव्याः सकाशात् अन् निर्गतम् अमृतं दिवि द्युलोके चन्द्रमसि चन्द्रे श्रितम् आश्रितम्, तत् अहम् अमृतस्य नाम प्राकाश्यं संभाव्यं वा रहस्यं वेद जानामि, ब्रह्मविस्त्वात्। अतः पौत्रं पुत्रसंबन्धि अघं दुःखं प्राप्य मा रिषं हिंसितो मा भवेयमित्यर्थः।

हे इन्द्राग्नी, युवां मे मम प्रजायै संतानाय शर्म कल्याणं यच्छतं दत्तम्। किंभूतौ? प्रजापती लोकपालौ। तथा च शर्म यच्छतं यथाऽयं पुत्रो मम जनित्र्याः

---

(१) गोगृ. २।८।५; संत. ९२०.

मातुः अधि उत्सङ्गे स्थितः न प्रमीयेत न हिंस्येत कदाचिदा पुरुषायुषम् । इति ।

अत्र भविष्यपुराणम्– 'द्वादशेऽहनि कर्तव्यं शिशोर्निष्क्रमणं गृहात् । चतुर्थे मासि कर्तव्यं तथाऽन्येषां मतं विभो ॥' इति । द्वादशेऽहनीति शाखाभेदाद्विकल्पः । तथा– 'चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् । तृतीये मासि कर्तव्यं शिशोः सूर्यस्य दर्शनम् ॥' इति । सूर्यचन्द्रदर्शनयोर्गृह्यानुसारेण व्यवस्था । अतुल्यार्थत्वात् समुच्चय इति कल्पतरुः । पारस्करः– "चतुर्थे मासि निष्क्रमणिका । सूर्यमुदीक्षयति– 'तच्चक्षुः' इति" इति । अत्र च संस्कारो निष्क्रमणमेव, तत्परिगणने तस्यैव पाठात् । "अनयोर्दर्शनयोराभ्युदयिकश्राद्धं न कुर्वन्ति, 'सूर्येन्द्वोः कर्मणी ये तु तयोः श्राद्धं न विद्यते ।' इति कात्यायनवचनात्" इति कल्पतरुः ।

एवं जपित्वाऽथ कुमारम्– 'उदङ्ग...' ऋचुरक्षरार्थः ।। यथार्थमिति कर्मणः परिसमाप्तिरुच्यते इत्यसकृदवोचाम । तेन वामदेव्यगानमिदानीं कर्तव्यम् । तथा च कर्मप्रदीपः– 'अहोमकेष्वपि भवेद्यथोक्तं चन्द्रदर्शने । वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके ॥' इति ।

मृदुला.

**[1]अथ येऽत ऊर्ध्वं ज्यौत्स्नाः पूर्वोदित एव तेषु पितोपतिष्ठतेऽपामञ्जलिं पूरयित्वाऽभिमुखश्चन्द्रमसम् ॥**

**[2]'यददश्चन्द्रमसि' इति सकृद्† द्विस्तूष्णीमुत्सृज्य यथार्थम् ॥**

(१) कियदवधि ? अत ऊर्ध्वं ज्योत्स्नास्वेतत् कर्माऽऽसंवत्सरम् । तृतीयशुक्लपक्षादूर्ध्वं शुक्लपक्षेषु प्रथमोद्दिष्टे तृतीयायां तिथौ वत्सरपर्यन्तं चन्द्राभिमुखः पिता सकृत् चन्द्रायाञ्जलिम् 'ओं यददश्चन्द्रमसि' इति मन्त्रेण दद्यात् । 'प्रथमोदित एव' इति भट्टभाष्ये पाठः । तन्मते 'प्रथमोदिते चन्द्रमसि प्रतिपदि द्वितीयायां वा' इति व्याख्यातं च । ततो वामदेव्यगानमच्छिद्रावधारणं कुर्यात् । संत. ९२१

(२) अथ तृतीयाकर्मण ऊर्ध्वं ये ज्यौत्स्नाः शुक्लपक्षाः तेषु प्रथमोदित एव चन्द्रमसि द्वितीयायां प्रतिपदि वा पिता अपामञ्जलिं चन्द्रोद्देशेन पूरयित्वा अभिमुखः सन् चन्द्रमसमुपतिष्ठते आराधयति । 'यददश्चन्द्रमसि कृष्णम्' इति मन्त्रेण सकृत् चन्द्रमसं प्रति उत्सृज्य द्विः अञ्जलिद्वयं तूष्णीमुत्सृजेत् । यथार्थमिति कर्मणः परिसमाप्तिरुच्यते । एतच्च कर्म अन्यत्रस्थोऽपि पिताऽब्दपर्यन्तं कुर्यात् । मन्त्रो यथा– 'यददश्चन्द्रमसि कृष्णं पृथिव्या हृदयं श्रितम् । तदहं विद्वाँस्तत्पश्यन् माऽहं पौत्रमघं रुदम् ॥' इति । अस्यार्थः– यत् अदः एतत् चन्द्रमसि चन्द्रे कृष्णं लाञ्छनं तत् पृथिव्या हृदयं प्रतिबिम्बं श्रितम् आश्रितम् अधिष्ठितम् । तत् इदम् अहं विद्वान् ब्रह्मवित्वात् तत्स्वरूपं जानन् तत् एव च पश्यन्, दृष्टवानस्मीति शेषः । यतः, अतः पौत्रं पुत्रसंबन्धि अघं दुःखं प्राप्य मा रुदं मा रुयां ब्रह्मविस्वादेवेति । मृदुला.

## खादिरगृह्यसूत्रम्

कुमारस्नपनम्, चन्द्रोपस्थानम्, मातुः पित्रे कुमारं प्रदायोत्तरतोऽवस्थानम्, जलाञ्जल्यवसेचनम्

**[1]... प्रातः स्नाप्य कुमारमस्तमिते शान्तासु दिक्षु पिता चन्द्रमसमुपतिष्ठेत् प्राञ्जलिः ॥**

शान्तासु उपरतादित्यरश्मिषु दिक्षु उपतिष्ठेदिति दर्भेषु तिष्ठेत् । चन्द्राभिमुखो वक्ष्यमाणप्रकारेण कुमारमादाय मन्त्रैश्चन्द्रमसमभिदध्यादित्यर्थः । रुद्रभा.

**शुचिनाऽऽच्छाद्य माता प्रयच्छेदुदक्शिरसम् ॥**

वस्त्रेणाऽऽच्छाद्य दक्षिणतः स्थित्वा कुमारं पित्रे प्रयच्छेत् । रुद्रभा.

**अनुपूर्वं गत्वोत्तरतस्तिष्ठेत् ॥**

† अत्र 'यजुषा' इत्यादर्शपुस्तके पदं प्रामादिकम्, निर्दिष्टमन्त्रस्य ऋक्त्वात् ।

(१) गोगृ. २।८।६ ; संत. ९२१ ज्यौत्स्नाः पूर्वोदित ( ज्यौत्स्नः पक्षः प्रथमोद्दिष्टा ).

(२) गोगृ. २।८।७ ; संत. ९२१.

(१) खागृ. २।३।१–५.

पूर्वशब्दो दिग्वाची । अनुपृष्ठं गत्वा पितुरुत्तरतः प्रत्यङ्मुखी दर्भेषु तिष्ठेन्माता । रुद्रभा.

**'यत्ते सुसीमे' इति तिसृभिरुपस्थायोदञ्चं मात्रे प्रदाय 'यददः' इत्यपामञ्जलिमवसिञ्चेत् ॥**

उदञ्चम् उदक्छिरसम् । प्रातःकाले पात्रेण पूर्णे गृहीता आपः स्युः । ताभिर्दर्भेषु दक्षिणतस्तिष्ठन् ब्राह्मणोऽञ्जलिं पूरयेत् । तं भूमाववसिञ्चेत् । रुद्रभा.

**द्विस्तूष्णीम् ॥**

अमन्त्रकं द्विरवसिञ्चेत् । रुद्रभा.

## कौशिकगृह्यसूत्रम्

कुमारनिष्क्रामणम्, परिदानम्

[१] **'शिवे ते स्ताम्' इति कुमारं प्रथमं निर्णयति ॥**

चतुर्थे मासि पुण्याहान्ते निष्क्रामयति । ततः पूर्वोक्तानि परिदानानि ददाति श्राद्धं च । दाकेटी.

¶ **'अह्ने च त्वा' इत्यहोरात्राभ्यां परिददाति ॥**

**'शरदे त्वा' इत्यृतुभ्यः ॥**

## बृहस्पतिः

स्वस्तिवाचनम्, वाहनेन मातुलेन वोह्यमानस्यापत्यस्य बहिर्नयनम्, धान्यपुञ्जोपवेशितस्यार्चनम्, रक्षाविधानम्, गणेशानादिपूजनम्, बहूनामन्यशिशूनामर्चनम्

[२]**अलंकृत्य शिशुं सम्यगभ्यर्च्य च शुभाक्षतैः ।**
**स्वस्ति वाच्य समारूढवाहनं निर्णयेद्गृहात् ॥**

[३]**मातुलो वा वहेत्तत्र निर्वाहनशिशुं स्वयम् ।**
**शिशुना सह मित्राणि निर्गच्छेयुर्गृहात्स्वयम् ।**
**सह दुन्दुभिघोषैश्च वाद्यशब्दसमन्वितैः ॥**

[१]**चतुरस्रे शुचौ देशे गोमयेनोपलेपिते ।**
**धान्यपुञ्जे समासीनं बालं बालामथापि वा ॥**

[२]**अर्चयेद्गन्धपुष्पाद्यैस्तस्मिन् मूर्ध्नि ललाटके ।**
**अस्य रक्षां ततः कृत्वा मृतसंजीवनं जपेत् ॥**

[३]**तत्रार्चयेद्गणेशानं भूतेशानं तथैव च ।**
**भक्ष्यैर्विचित्रैः सफलैः शिशूनभ्यर्चयेद् बुधः ॥**

(१) मृतसंजीवनश्च मन्त्रः 'त्र्यम्बकं यजामहे' इत्यादिः आद्यन्तयोः 'ओं जुं सः, सः जुम् ओम्' इति प्रत्येकं बीजत्रयदानेन भवति । $ संप्र. २५५

(२) कृत्वेति 'मुखं व्यादाय स्वपिति' इतिवत् पौर्वापर्यमविवक्षितम् । शिशुनेति तद्धस्तेन पूजनं कारयेदित्यर्थः । संकौ. १०७

## आश्वलायनः

ब्राह्मणभोजनम्, स्वस्तिवाचनम्, शिशोर्मङ्गलवस्तुपुरःसरं देवालयनयनम्, अष्टमङ्गलवस्तुगणना

[४]**... देवतास्थानमियादादाय तं शिशुम् ॥**

[५]**प्रत्यक्षैः कृत्रिमैर्वा तमलंकृत्य पिता शिशुम् ।**
**नयेदाकल्पकैः सम्यग्देवतायतनं गृहात् ॥**

---

¶ अनयोः सूत्रयोर्व्याख्यानं नामकरणप्रयोगप्रकरणे (सं. का. पृ. २७७५) द्रष्टव्यम् ।

(१) **कौसू.** ५८।१८, २०–२१.

(२) **प्रपा.** १८४ कृत्य (कृतं) निर्णये (निर्नये) ; **संप्र.** २५४ च शुभा (धवला) ; **संकौ.** १०७ उत्त.

(३) **प्रपा.** १८४ चतुर्थपादे (बान्धवा निर्ययुस्तदा) सह (सर्वे) ; **संप्र.** २५४ निर्गच्छेयुर्गृ (निर्यायुश्च गृ) ; **संकौ.** १०७.

$ विपा., संग. संप्रगतम् ।

(१) **प्रपा.** १८४ शुचौ (शुभे) बालं बाला (पीठे बाल) ; **संप्र.** २५४, २५५ रस्रे (रश्रे) ; **विपा.** ४३८ ; **संकौ.** १०७ पुञ्जे स (पुञ्जस) ; **संग.** ५७०–५७१.

(२) **प्रपा.** १८४–१८५ स्तस्मिन् (स्तस्य) वनं (विनीं) ; **संप्र.** २५५ ; **विपा.** ४३८ अस्य (तस्य) वनं (वर्नी) ; **संकौ.** १०७ ; **संग.** ५७१.

(३) **प्रपा.** १८५ द्गणे (द्गृहे) ; **संप्र.** २५५ ; **विपा.** ४३९ ; **संकौ.** १०७ ; **संग.** ५७१ भक्ष्यै (भक्ष्ये) शिशून (शिशुनाऽ).

(४) **आश्वस्मृ.** ११।१०४ ; **प्रपा.** १८४ ; **संप्र.** २५१ ; **संग.** ५६८.

(५) **आश्वस्मृ.** ११।१०५ ; **प्रपा.** १८४ पिता शिशुम् (शिशुं पिता) ; **संप्र.** २५३ उत्त. ; **संकौ.** १०६ उत्त. ; **संग.** ५६९ उत्त.

[1]अभ्यर्च्य देवतामूर्तिं पञ्चघोषपुरःसरम् ।
भोजयित्वा द्विजान् गेहे स्वस्तिवाचनमाचरेत् ॥

आकल्पकैः भूषणैः । पञ्चघोषाः पञ्चविधं वाद्यम् । २५३

स्वस्तिवाचनं नान्दीश्राद्धस्याप्युपलक्षणम्, 'अन्यैः षोडशसंस्कारभावण्यादिष्वपीष्यते ।' इत्याश्वलायनकारिकास्मरणात् । ‡ संप्र. २५५

[2]शाकुन्ते प्रजपेत्सूक्ते शिशोर्निष्क्रमणे पिता ।
द्विजांश्चाऽऽदर्शपूर्वाणि मङ्गलानि पुरो नयेत् ॥

( १ ) शाकुन्ते शाकुन्तदेवताके सूक्ते द्वे 'प्रदक्षिणिदभि गृणन्ति कारवः' इत्याद्येकम्, 'कनिक्रदज्जनुषं प्रब्रुवाणः' इत्याद्यपरम् । $ संप्र. २५३

( २ ) निष्क्रमणसमये मङ्गलदर्शनं कारणीयम्, 'द्विजांश्चाऽऽदर्श ... पुरो नयेत् ।' इति वचनात् । द्विजान् आदर्शपूर्वाणि मङ्गलानि च पुरो नयेदित्यन्वयः ।

संर. ८८७

[3]दर्पणः पूर्णकलशः कन्याः सुमनसोऽक्षताः ।
दीपमाला ध्वजो लाजाः संप्रोक्तं चाष्टमङ्गलम् ॥

सुमनसः पुष्पाणि । ¶ प्रपा. १८४

---

‡ संकौ., संग. संप्रगतम् ।

$ संकौ. संप्रवत् ।

¶ संप्र., विपा., संग. प्रपावत् ।

(१) आश्वस्मृ. ११।१०६ सरम् ( सरः ) ; प्रपा. १८४ ; संप्र. २५३ ; संकौ. १०६–१०७ ; संग. ५६९–५७०.

(२) आश्वस्मृ. ११।१०७ प्रथमपादे ( शाकुन्तौ प्रजपेत्सूक्तौ ) ; प्रपा. १८४ प्रथमपादे ( शाकुन्तं प्रजपेत्सूक्तं ) ; संप्र. २५३ पू. : २५४ उत्त. ; संकौ. १०७ उत्तरार्धे विष्णुधर्मोत्तरे ; संग. ५७० पुरो (पुरा) उत्तरार्धं वीरमित्रोदये ; संर. ८८७ (=) उत्त.

(३) आश्वस्मृ. ११।१०८ ( दर्पणं पूर्णकलशं कन्या सुमनसोऽक्षतम् । दीपमाला ध्वजं लाजा संप्रोक्तं चाष्टमङ्गलम् ॥ ) ; प्रपा. १८४ ; संप्र. २५४ पूर्णकलशः कन्याः ( कलशः कन्या तथा ) ध्वजो ( ध्वजं ) ; विपा. ४३८ (=) ध्वजो ( ध्वजं ) ; संकौ. १०७ पूर्णकलशः कन्याः

## लघ्वाश्वलायनः

वृद्धिश्राद्धम्, देवालये नयनम्, श्वशुरालये नयनम्, अर्कदर्शनम्

[1]कृत्वाऽऽभ्युदयिकं श्राद्धमादायाङ्के शिशुं पिता ॥
स्वस्ति नो मिमीतां सूक्तं जपन् देवाद्रिकं नयेत् ।
आशुः शिशान इत्येतत् पठेत्तं श्वशुरालयम् ॥
नीत्वाऽन्यस्य गृहं वाऽपि प्राङ्गणे वाऽर्कमीक्षयेत् ।
तच्चक्षुरिति मन्त्रेण दृष्ट्वाऽर्कं प्रविशेद्गृहम् ॥

## विष्णुधर्मोत्तरपुराणम्

दिगीशादिपूजनम्, धात्र्या गृहाद्बालस्य निष्कासनम्, मन्त्रजपः, द्विज-सुहृत्-सुवासिनीपूजनम्

[2]दिगीशानां दिशां तत्र तथा चन्द्रार्कयोर्द्विजः ।
पूजनं वासुदेवस्य गगनस्य च कारयेत् ॥
[3]ततः स्वलंकृता धात्री बालमादाय पूजितम् ।
बहिर्निष्कासयेद्गेहाच्छङ्खपुण्याहनिस्वनैः ॥
[4]ततस्तत्र जपेन्मन्त्रं यं तं राम निबोध मे ॥

---

( कलशः कन्या तथा ) विष्णुधर्मोत्तरे ; संग. ५७० पूर्णकलशः कन्याः ( कलशः कन्यास्तथा ) ध्वजो ( ध्वजं ), वीरमित्रोदये ; संर. ८८७ संकौवत्, विधिरत्ने.

(१) लघ्वाश्वस्मृ. ७।१–३.

(२) प्रपा. १८५ ; संप्र. २५३ तत्र ( चैव ) : सिन्धु. ९१२ दिशां ( दिने ) ; शूक. ९८–९९ दिशां ( दिने ) द्विजः ( द्विज ) ; विपा. ४३९ ; संकौ. १०६ ; संग. ५७० वीरमित्रोदये ; संब. ७३ सिन्धुवत्.

(३) प्रपा. १८५ ; संप्र. २५३ ततः स्व (ततस्त्व) ष्कास ( ष्काश ) ; सिन्धु. ९१२ उत्त. ; शूक. ९९ उत्त. ; विपा. ४३९ ततः स्व ( ततस्त्व ) ष्कास ( ष्काम ) निस्व ( निःस्व ) ; संकौ. १०६ ; संग. ५७० ततः स्व ( ततस्त्व ) वीरमित्रोदये ; संब. ७३ निष्कास ( निःक्राम ) च्छङ्ख ( च्छान्ति ) उत्त.

(४) प्रपा. १८५ ; विपा. ४३९ जपेन्मन्त्रं यं तं ( पठेन्मन्त्रद्वयं ) ; संकौ. १०६ जपे ( पठे ).

[1] 'चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च ।
निक्षेपार्थमिमं दद्मि तेऽमुं रक्षन्तु सर्वदा ॥
[2] अप्रमत्तं प्रमत्तं वा दिवारात्रमथापि वा ।
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ॥'
[3] स्त्रीणामविधवानां च द्विजानां सुहृदां तथा ।
तदा तु पूजा कर्तव्या गीतनृत्यैस्तथोत्सवः ॥

शङ्खग्रहणं वाद्यान्तरोपलक्षणम् । संको. १०६

## कृत्यचिन्तामणौ

सूर्यचन्द्राभ्यामर्घ्यदानम्

[4] '... स्वस्वविधानतोऽर्कशशिनोरर्घ्यं (शिशुं) दापयेत् ॥

अर्कार्घस्तु छन्दोगेतरपरः । चन्द्रार्घस्तु 'क्षीरोदार्णवसंभूत' इत्यादि(ना) । संत. ९२०

## विधिरत्ने

दिक्पालादिपूजनम्, ब्राह्मणभोजनम्, देवप्रार्थना, देवालये नयनम्, देवपूजनम्, भूतेशानादिपूजनम्, देवं प्रदक्षिणीकृत्य गृहागमनम्

[5] 'दिक्पालचन्द्रसूर्याणां दिशां चैव यथाक्रमम् ।
विधाय पूजनं विप्रान् संभोज्य तदनन्तरम् ॥
शिशोः संरक्षणार्थं तु देवान् संप्रार्थयेत्ततः ।
गृहीत्वा भूषितं बालं बाह्यदेवालयं व्रजेत् ॥
ततः संपूज्य तं देवं रक्षां कुर्याच्छिशोस्ततः ।
भूतेशानं गणेशं च पूजयित्वा प्रतर्पयेत् ।
देवं प्रदक्षिणीकृत्य प्रणम्य गृहमाव्रजेत् ॥

## शौनककारिकाः

शिशोः स्नपनं भूषणं च, ब्राह्मणभोजनम्, पुण्याहवाचनम्, देवालये नयनम्, देवतापूजनम्, ब्राह्मणैराशिषाऽभिनन्दनम्, मातुलादिगृहे नयनम्, तत्रोपहारादिभिर्लालितस्य गृहानयनम्

[1] 'स्नापयित्वा शिशुं पूर्वं भूषयित्वा द्विजांस्तथा ।
भोजयित्वाऽथ तैस्तैः कृतपुण्याहवाचनम् ॥
[2] निर्गमय्य गृहादेनं नीत्वाऽथो देवतालयम् ।
ततः प्रदक्षिणं नीत्वा बालं तं देवतालये ॥
[3] गन्धमाल्यादिभिस्तत्र पूजयित्वा च देवताम् ।
प्रणमय्य च तं बालं ततो देवालयस्थितैः ॥
[4] विद्वद्भिर्ब्राह्मणैराशीर्वादाद्यैरभिनन्दितम् ।
परिगृह्य ततः स्थानान्निष्क्रमय्य शिशुं ततः ॥
[5] मातुलादेः समासन्नबन्धोः प्रापय्य मन्दिरम् ।
तत्रोपहारदानाद्यैराशीर्भिश्चाभिलालितम् ।
कुमारं प्रतिगृह्यैनं प्रापयेत्स्वगृहं ततः ॥

---

(१) प्रपा. १८५ ; संप्र. २५३ दद्मि ( वच्मि ) ; सिन्धु. ९१२ तेऽमुं ( ते मे ) ; शूक. ९९ तेऽमुं ( ते त्वां ) ; विपा. ४३९ चतुर्थपादे ( ते मे रक्षन्तु बालकम् ) ; संको. १०६ ; संग. ५७२ (=) गगन ( वरुण ) तेऽमुं ( ते त्वां ) ; संव. ७३ तेऽमुं ( ते मे ).

(२) प्रपा. १८५ दिवारात्रम ( दिवा रात्राव ) ; संप्र. २५३ प्रपावत् ; सिन्धु. ९१३ ; शूक. ९९ ; विपा. ४३९ प्रपावत् ; संको. १०६ ; संग. ५७२ (=) प्रथमपादे ( प्रमत्तं वा प्रसुप्तं वा ) ; संव. ७३.

(३) प्रपा. १८५ त्सवः ( त्सवम् ) ; विपा. ४३९ चतुर्थपादे ( नृत्यगीतैः सदोत्सवा ) ; संको. १०६.

(४) संत. ९२०.

(५) संर. ८८७.

(१) शौका. ३ पृ. ३९ ; प्रपा. १८४ द्विजांस्तथा ( ततो द्विजान् ).

(२) शौका. ४ पृ. ३९ नं नीत्वाऽथो ( वं नीत्वा वा ) लये ( लयम् ) ; प्रपा. १८४ तं देवतालये ( तद्देवतालयम् ) ; संप्र. २५४ नीत्वाऽथो ( नीत्वा वा ) ; संको. १०७ नीत्वाऽथो देवता ( नीत्वा चेष्टसुरा ) तं देव ( तद्देव ) ; संग. ५७० संप्रवत्, पू.

(३) शौका. ५ पृ. ३९ ; प्रपा. १८४ यित्वा च ( यित्वाऽथ ) ; संप्र. २५४ ; संको. १०७ ; संग. ५७० स्थितैः ( स्थितः ).

(४) शौका. ६ पृ. ३९ ; प्रपा. १८४ ; संप्र. २५४ शिशुं ततः ( ततः शिशुम् ) ; संको. १०७ पू. ; संग. ५७० संप्रवत् .

(५) शौका. ७ पृ. ३९ प्रापय्य ( प्राप्य च ) तत्रो ( अत्रो ) ; प्रपा. १८४ श्चाभि ( श्चाति ) प्रति (परि) ; संप्र. २५४ प्रति ( परि ) ; संको. १०७ संप्रवत् ; संग. ५७० संप्रवत् .

## कुमारिलकारिकाः

स्नातालंकृतस्य कृतस्वस्त्ययनस्य शिशोर्देवालयनयनम्, देवतार्चनम्, आशीर्वाचनम्, मातुलादिगृहेऽभिनन्दितस्य स्वगृहानयनम्

[1]स्नातं स्वलंकृतं चाभिहितस्वस्त्ययनं शिशुम् ॥

[2]आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयम् ।
अभ्यर्च्य देवताः सम्यगाशिषो वाचयेदथ ॥

[3]कृत्वा प्रदक्षिणं गेहमानयन्ति ततः स्वकम् ।
मातृष्वसुर्गृहं यद्वा मातुलादिगृहं नयेत् ॥

(१) कुका. १।१०।१ ; प्रपा. १८४ ; धप्र. ३८ हितस्व ( हितं स्व ) शिशुम् ( शुभम् ) ; विपा. ४३८ (=) चाभिहि ( चापि कृ ) ; ज्योनि. ११५ हितस्व ( हितं स्व ).

(२) कुका. १।१०।२ ; प्रपा. १८४ देवताः ( देवतां ) ; संम. १८ प्रपावत् ; विपा. ४३८ (=) ; ज्योनि. ११५ प्रपावत् .

(३) कुका. १।१०।३ ; प्रपा. १८४ सुर्गृहं यद्वा ( सृगृहं गत्वा ) ; संम. १८ उत्तरार्धे ( मातृष्वसृगृहं वाऽपि मातुलादेर्गृहं नयेत् ॥ ) ; विपा. ४३८ (=) यन्ति त ( येयुस्त ) उत्तरार्धे ( मातृष्वसृगृहं नीत्वा मातुलादेर्गृहं नयेत् ॥ ) ; ज्योनि. ११५ कृत्वा ( दत्त्वा ) ष्वसुर्गृहं यद्वा ( ष्वसृगृहं गत्वा ) दिगृहं ( देर्गृहं ) शेषं प्रपावत् .

[1]तदाशीर्वचनाद्यैः स्याद्दीर्घायुरभिनन्दितः ।
जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रमः ॥

( १ ) अभिहितस्वस्त्ययनं कृतपुण्याहवाचनम् । प्रपा. १८४

( २ ) मातुलादिर्बालस्य । संम. १८

## रेणुकारिकाः

आदित्यदर्शनं चन्द्रदर्शनं च

[2]तच्चक्षुरिति मन्त्रेण तत्राऽऽदित्यमुदीक्षयेत् ।
तस्मिन्मासे सुनक्षत्रे रात्रौ चन्द्रस्य दर्शनम् ॥

तच्चक्षुरिति मन्त्रस्य दध्यङ्ङाथर्वणो मुनिः ।
आदित्यो देवता छन्दोऽपर उष्णिगिति स्मृतम् ॥

[3]विनियोगः शान्तिकृतौ...... ॥

(१) कुका. १।१०।४ नन्दितः ( वन्दितः ) ; प्रपा. १८४ ; संम. १८ ; विपा. ४३८ (=) ; ज्योनि. ११५.

(२) रेका. ३-४ पृ. १४.

(३) रेका. १ पृ. १४.

# भूम्युपवेशनम्

## विष्णुधर्मोत्तरपुराणम्

पञ्चमे मासि भौमबलेन भूम्युपवेशनम्, तत्र तिथि-नक्षत्राणि, वराह-पृथ्वी-गुरु-देव-ब्राह्मण-पूजनम्, मण्डले वाद्यघोषेण समन्त्रक-मुपवेशनम्, ब्राह्मणभोजनम्

**[1]पञ्चमे च तथा मासि भूमौ तमुपवेशयेत्।**
**तत्र सर्वे ग्रहाः शस्ता भौमो राम विशेषतः॥**

**[2]तिथिं विवर्जयेद्रिक्तां शस्तानि शृणु भानि मे।**
**उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम्।**
**प्राजापत्यं च हस्तश्च शस्तमाश्विनमित्रभम्॥**

(१) अस्यार्थः- जन्मदिनप्रभृति पञ्चमे मासि उत्तरोत्तराषाढोत्तराभाद्रपदामृगशीर्षाश्विनीज्येष्ठारोहिणी-हस्तानुराधानक्षत्राणामन्यतमर्क्षे चतुर्थ्यादिरिक्तातिथी-र्विहाय शिष्टेषु शुभतिथ्यादिषु अब्दपूर्तौ वस्त्रधारणवत् लग्नग्रहान् विचार्य तत्र भौमबलं विशेषेण विचार्य पृथिव्यां बालमुपवेशयेदिति। † प्रपा. १८५-१८६

(२) रामेति श्रोतृसंबोधनम्। 'मे' इत्यनन्तरं गदत इति शेषः। 'मे' इत्यत्र अपादानस्य शेषत्व-विवक्षायां षष्ठी। शक्रदैवतं ज्येष्ठा। 'वह्निदैवतम्' इति पाठे कृत्तिकाः। * संर. ८९०

**[1]वराहं पूजयेद्देवं पृथिवीं च तथा द्विजः।**
**पूजनं पूर्ववत्कृत्वा गुरुदेवद्विजन्मनाम्॥**

देवः कुलदेवतम्। संको. १०७

**[2]भूभागमुपलिप्याथ कृत्वा तत्र तु मण्डलम्।**
**शङ्खपुण्याहशब्देन भूमौ तमुपवेशयेत्॥**

---

(१) प्रपा. १८५ सर्वाणि वचनानि पद्मपुराणे विष्णु-धर्मोत्तरखण्डे; गभा. १७३ मो राम (मोऽप्यत्र) यथा-स्थलनिर्देशं सर्वाणि प्रयोगपारिजाते; संसौ. ७१ पञ्चमे च (एवमेव) सर्वे ग्रहाः शस्ता (शस्ता ग्रहाः सर्वे) सर्वाणि पद्मपुराणे विष्णुधर्मोत्तरे; संप्र. २५६ भौमो (सोमो); संम. १८ यथास्थलनिर्देशं सर्वाणि पद्मपुराणे; सिन्धु. ९१३ गभावत्, यथास्थलनिर्देशं सर्वाणि प्रयोग-पारिजाते पाद्मे विष्णुधर्मे च; शूक. ९९ गभावत्, प्रयोग-पारिजाते पाद्मे; विपा. ४४० च (ऽथ) भौमो (सौम्या) सर्वाणि प्रयोगपारिजाते; ज्योनि. ११५ सर्वे ग्र (सर्वग्र) शेषं गभावत्, पद्मपुराणे; संको. १०७ मासि (मासे) तत्र (न च) उत्तरार्धमग्रिमश्लोकात्परं पठितम्; बाल. १।११-१२ पृ. २९-३० मासि (मासे) शेषं ज्योनिवत्, पारिजाते पाद्मे; संग. ५७२; संव. ७४ गभावत्, पाद्मे; पुम. ४३५ (=) मासि (मासे) शस्ता (श्रेष्ठा); संर. ८९० तत्र (अत्र) शेषं पुमवत्, यथास्थलनिर्देशं सर्वाणि पद्मपुराणे; संबी. २४४ (भागः २) पू.

(२) प्रपा. १८५ शस्तमा (शस्त आ); गभा. १७३ प्रथमार्धं नास्ति; संसौ. ७१ हस्तश्च (हस्तं च); संप्र. २५६ संसौवत्; सिन्धु. ९१३ प्रथमार्धं नास्ति; विपा. ४४०-४४१ शक्र (शुक्र) शेषं संसौवत्; ज्योनि. ११५ नि शृणु भानि मे (न्याशृणु भामिनि); संको. १०७ शक्र (शुक्र); बाल. १।११-१२ पृ. ३० प्रथ-मार्धं नास्ति, पारिजाते पाद्मे; संग. ५७२ विवर्ज (च वर्ज) यं सौम्यं (ये सौम्ये) दैव (देव) शेषं संसौवत्; संव. ७४ प्रथमार्धं नास्ति, पाद्मे; पुम. ४३५ (=) माश्विन (मश्विम); संर. ८९० हस्तश्च (हस्ताख्यं) मित्रभम् (मित्रमे).

† संप्र., संको. प्रपागतम्।

* शेषं प्रपागतम्।

(१) प्रपा. १८६; संसौ. ७१ येद्देवं (येन्वात्र) द्विजः (द्विज) वत्कृत्वा (वन्वात्र); संप्र. २५७; संम. १८; सिन्धु. ९१३ वरा (वारा) पू.; शूक. ९९-१०० पूर्वार्धे (वाराहं पूजयेद्देवं पृथ्वीं चैव तथा द्विजम्।) पू.; विपा. ४४१; ज्योनि. ११५; संको. १०७ देवं (देवीं); संग. ५७२ द्विजः (द्विज); संव. ७४ वरा (वारा) द्विजः (नृप) पू., विष्णुधर्मे; संर. ८९०.

(२) प्रपा. १८६ मण्ड (मङ्ग); संसौ. ७१; संप्र. २५७; संम. १८; विपा. ४४१; ज्योनि.

( १ ) अत्र शङ्खवचनं सर्ववाद्योपलक्षणार्थम् । एतदुक्तं भवति— पूर्वोक्तवत् स्वस्तिवाचनं कृत्वा मङ्गलतूर्यादिध्वनौ क्रियमाणे बालं धरण्यामुपवेशयेदिति ।

$ प्रपा. १८६

( २ ) तं बालम् । तत्रैव मण्डल एव ।

संर. ८९०

**[1]मन्त्राश्चात्र भवन्तीमे तान्मे निगदतः शृणु ॥**

**[2]' रक्षैनं वसुधे देवि सदा सर्वगतं शुभे ।**
**आयुःप्रमाणं सकलं निक्षिपस्व हरिप्रिये ॥**

**[3]अचिरादायुषस्तस्य ये केचित्परिपन्थिनः ।**
**जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥**

**[1]धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि ।**
**अजरा चाप्रमेया च सर्वभूतनमस्कृते ॥**

**[2]त्वमेवाशेषजगतां प्रतिष्ठा चाऽऽश्रयो ह्यसि ।**
**कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥'**

**[3]तस्योपवेशनं कृत्वा भूमौ ब्राह्मणभोजनम् ।**
**तत्र कृत्वा ततः कुर्यादुत्सवं पूर्ववद्द्विजः॥**

---

$ विपा. प्रपावत् । संप्र., संग. प्रपागतम् । ११५–११६ कृत्वा तत्र ( तत्र कृत्वा ) ; **संको.** १०७ ; **संग.** ५७२ ; **संर.** ८९० भूमौ तमु ( तं तत्रैवो ).

(१) **प्रपा.** १६८ (मन्त्रश्चात्र भवेद्राम तं मे निगदतः शृणु ॥ ) ; **संसौ.** ७१ तान्मे ( तन्मे ) ; **संप्र.** २५७ संसौवत् ; **विपा.** ४४१ प्रपावत् ; **संको.** १०७.

(२) **प्रपा.** १८६ ; **गभा.** १७३ सकलं (निखिलं) ; **संसौ.** ७१ रक्षैनं ( रक्षेमं ) ; **संप्र.** २५७ गतं ( गते ) शेषं संसौवत् ; **संम.** १८ शुभे ( शिशुम् ) शेषं गभावत् ; **सिन्धु.** ९१३ ; **शूक.** १०० (=) ; **विपा.** ४४१ ; **ज्योमि.** ११६ रक्षै ( ईक्षै ) आयुःप्र ( आयुष्प्र ) ; **संको.** १०७ संसौवत् ; **बाल.** १।११–१२ पू. ३० (=) तृतीयपादे ( आयुष्प्रमाणं निखिलं ) ; **संग.** ५७६ (=) गभावत् ; **संब.** ७४ पद्मपुराणे विष्णुधर्मे च ; **संर.** ८९० बालवत् ; **संदी.** २४४ ( भागः २ ) (=) गतं (गते) शेषं बालवत् .

(३) **प्रपा.** १८६ ; **गभा.** १७३ षस्त ( षस्त्व ) ; **संसौ.** ७१–७२ ; **संप्र.** २५७ ; **संम.** १८ गभावत् ; **सिन्धु.** ९१३ गभावत् ; **शूक.** १०० (=) गभावत् ; **विपा.** ४४१ पूर्वार्धे ( आयुषस्तस्य ये केचिदचिरात्परिपन्थिनः । ) ; **संको.** १०७ ; **बाल.** १।११–१२ पू. ३० (=) गभावत् ; **संग.** ५७३ (=) गभावत् ; **संब.** ७४ पद्मपुराणे विष्णुधर्मे च ; **संर.** ८९० गभावत् ; **संदी.** २४४ ( भागः २ ) (=).

(१) **प्रपा.** १८६ ; **गभा.** १७३ पू. ; **संसौ.** ७२ स्कृते ( स्कृता ) ; **संप्र.** २५७ ; **संम.** १८ पू. ; **सिन्धु.** ९१३ पूर्वार्धे (वरेण्याऽशेषभूतानां माता त्वमसि कामधुक् । ) स्कृते (स्कृता) ; **शूक.** १०० (=) द्वितीयपादे (माता त्वमसि कामधुक् ) स्कृते ( स्कृता ) ; **विपा.** ४४१ धारि ( धर ) मात ( मातु ) ; **संको.** १०७ ; **बाल.** १।११–१२ पू. ३० (=) पू. ; **संग.** ५७३ (=) धारि (धर) धिका ह्यसि ( सि कामधुक् ) स्कृते (स्कृता) ; **संब.** ७४ पू. पद्मपुराणे : अस्मिन्नेव पृष्ठे सिन्धुवत् संसौवच्च, विष्णुधर्मे ; **संर.** ८९१ संसौवत् ; **संदी.** २४४ ( भागः २ ) (=).

(२) **प्रपा.** १८६ ; **गभा.** १७३ उत्त. ; **संसौ.** ७२ गतां ( गतः ) ; **संप्र.** २५७ श्रयो ( श्रया ) ; **संम.** १८ ; **सिन्धु.** ९१३ पूर्वार्धे ( चराचराणां भूतानां प्रतिष्ठानाऽव्यया ह्यसि । ) ; **शूक.** १०० (=) पूर्वार्धे ( चराचराणां भूतानां प्रतिष्ठा चाव्यया ह्यसि । ) ; **विपा.** ४४१ संप्रवत् ; **संको.** १०७ संप्रवत् ; **बाल.** १।११–१२ पू. ३० (=) उत्त. ; **संग.** ५७३ (=) सिन्धुवत् , पू. ; **संब.** ७४ उत्त. , पद्मपुराणे विष्णुधर्मे च; **संर.** ८९१ संप्रवत् ; **संदी.** २४४ ( भागः २ ) (=).

(३) **प्रपा.** १८६ ; **संसौ**, ७२ भूमौ ( ततो ) भोब ( पूज ) उत्तरार्धे ( ततः कृत्वा ततः कार्य उत्सवः पूर्ववद्द्विजैः ॥ ) ; **संप्र.** २५७ भोज ( पूज ) उत्तरार्धे (ततः कृत्वा ततः कार्यमुत्सवं पूर्ववद्द्विजैः ॥ ) ; **विपा.** ४४२ उत्तरार्धे ( ततः कुर्यात्ततः कार्य उत्सवः पूर्ववद्द्विज ॥ ); **संको.** १०७ भोज ( पूज ) तत्र ( ततः ) कुर्यादु ( कार्यमु ) ; **संब.** ७४ तत्र ( ततः ) कुर्यादु (कार्यमु), पद्मपुराणे ; **संर.** ८९१ भोज ( पूज ) उत्तरार्धे संसौवत् .

उत्सवो नीराजनादिः । एतत् कुमार्या अप्युपलक्षणार्थम् , तथा प्रकृतत्वात् बालरक्षणत्वाच्चेति ।

*प्रपा. १८६

## अनिर्दिष्टकर्तृकवचनानि

वराहभूमिपूजनम् , पञ्चमे मासि भूम्यां धान्यराशावुपवेशनम् , कटिसूत्रबन्धनम् , ग्राह्यनक्षत्राणि

**[1]पञ्चमे मासि कर्तव्यं कुमारस्योपवेशनम् ।**
**संपूज्य शंकरो( ? सूकरं ) भूमिं कुमारं चोपवेशयेत् ॥**
**व्रीहिश्यामाकगोधूमा माषमुद्गतिला यवाः ।**
**एषामुपरि राशीनां नवं वस्त्रं प्रसार्य च ॥**
**[2]कटिसूत्रं मृदुक्षिप्रध्रुवेन्द्विन्द्रैः शुभेऽहनि ।**
**बद्ध्वा च पञ्चमे मासि शिशोर्भूम्युपवेशने ॥**

## मुहूर्तचिन्तामणिः

पञ्चममासकर्तव्यभूम्युपवेशने तिथिनक्षत्रभौमबलानि, पृथ्वीवराहपूजनम् , कटिसूत्रबन्धनम्

**[3]पृथ्वीवराहमभिपूज्य कुजे विशुद्धे-**
**ऽरिक्ते तिथौ व्रजति पञ्चममासि बालम् ।**
**बद्ध्वा शुभेऽह्नि कटिसूत्रमथ ध्रुवेन्दु-**
**ज्येष्ठर्क्षमैत्रलघुभैरुपवेशयेत्कौ ॥**

अथ भूम्युपवेशनमुहूर्तं वसन्ततिलकयाऽऽह— पृथ्वीति । पृथ्वी च वराहश्च अनयोः समाहारद्वन्द्वः । पृथ्वीवराहं चाभिपूज्य कुजे विशुद्धे भौमबले सतीत्यर्थः । अरिक्ते रिक्तारहिते तिथौ सति तथा पञ्चममासि व्रजति लगति सति तथा शुभेऽह्नि शुभग्रहवारेषु तथा ध्रुवेन्दुज्येष्ठर्क्षमैत्रलघुभैः रोहिण्युत्तरात्रयमृगज्येष्ठानुराधाश्विनीपुष्यहस्तैः दशनक्षत्रैः उपलक्षिते काले बालं कटिसूत्रं पट्टसूत्रादिनिर्मितं कटिस्थले बद्ध्वा कौ पृथिव्याम् उपवेशयेत् मन्त्रपाठपूर्वकमुपवेशनाख्यं संस्कारं कुर्यात् । यद्यपि ग्रन्थकर्त्रा पञ्चममासि कर्तव्यं भूम्युपवेशनमन्नप्राशनतः प्राक् वक्तव्यं तथाऽपि ज्योतिःशास्त्रकर्तृवसिष्ठाद्यनुक्तत्वात् क्रमबाधमङ्गीकृत्योक्तम् । सांप्रतं बालानां तु अन्नप्राशनसमय एव भूम्युपवेशनकाल इति ।

¶ पीटी.

## मुहूर्तसंग्रहे

भूम्युपवेशने पक्षः तिथयश्च

**[1]शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।**
**रिक्तास्तिथीर्वर्जयित्वा शिष्टाः स्युर्भूमिवेशने ॥**

## मुहूर्तगणपतौ

पञ्चमे मासि भौमबले भूम्युपवेशनम् , तत्र नक्षत्राणि , भूमिवराहपूजनम् , कटिसूत्रबन्धनम्

**[2]पुष्यहस्ताश्विनीमूले ऽयुत्तरे रोहिणीमृगे ।**
**ज्येष्ठायामनुराधायां शुभाहे मासि पञ्चमे ॥**
**कुजे शुद्धे समभ्यर्च्य वाराहं धरणीं भुवि ।**
**कटिसूत्रमथो बद्ध्वा बालकं चोपवेशयेत् ॥**

---

* संकौ. , संर. प्रपानुवादः । संप्र. , विपा. प्रपागतम् ।

(१) धप्र. ३८. (२) संग. ५७४.

(३) मुचि. ५।२१ ; संप्र. २५७–२५८ पृथ्वीव ( पृथ्वीं व ) चिन्तामणौ ; संब. ७३ संप्रवत् .

¶ संव. पीटीगतम् ।

(१) संर. ८९०. (२) संब. ७४.

# अन्नप्राशनम्

## अन्नप्राशनविधिः

### बौधायनगृह्यसूत्रम्

अन्नप्राशनकालः

[1]**षष्ठे मास्यन्नप्राशनम् ॥**

### आश्वलायनगृह्यसूत्रम्

अन्नप्राशनकालः, सकामस्य व्यञ्जनविशेषविधयः, निष्कामस्य व्यञ्जनानि, कुमार्या अमन्त्रकमन्नप्राशनम्

[2]**षष्ठे मास्यन्नप्राशनम् ॥**

(१) जन्मनः प्रभृति यः षष्ठो मासः तस्मिन् षष्ठे मासि अन्नप्राशनं कर्तव्यम् । देभा.

(२) जन्मप्रभृति षष्ठे मासे, न गर्भप्रभृति, जाताधिकारात् । तत्रान्नप्राशनं नाम कर्म कार्यम् । § गानावृ.

[3]**आजमन्नाद्यकामः ॥**

(१) अजस्येदम् आजम् । तत्र 'आजम्' इति तद्धितनिर्देशे संशयः– आजं क्षीरम् आजं मांसं दधि घृतमिति । तत्र मांसमित्युच्यते । कुतः? तैत्तिरेण सहोपदेशात् । ‡ देभा.

(२) यः पुत्रम् अन्नाद्यम् अन्नादनं कामयते स आजं प्राशयेत् । † अना.

§ अना., प्रपा., संप्र. गानावृवत् ।

‡ गानावृ., प्रपा., संप्र., संम. देभावत् ।

† शेषं देभागतम् ।

(१) बौगृ. २।३।१.

(२) आगृ. १।१६।१; प्रपा. १८८; ग्रप्र. ३८; संप्र. २६७, २७६; संम. १८; संकौ. १०७; संव. ७६; पुम. ४३५.

(३) आगृ. १।१६।२–३; प्रपा. १८८; संप्र. २७६; संम. १८.

**तैत्तिरं ब्रह्मवर्चसकामः ॥**

तैत्तिरं मांसं ब्रह्मवर्चसकामः प्राश्नीयात् । तत्रोच्यते– किमनयोर्व्यञ्जनत्वेनोपदेशः आहोस्विदन्नत्वेनोपदेशः इति । किं चातः? यदि तावद् व्यञ्जनत्वेनोपदेशः ओदनस्यैते व्यञ्जने भवतः कामसंयोगेन । अथान्नत्वेन एतावेव प्राशयेत् । तत्र व्यञ्जनत्वेनोपदेशः । कस्मात्? लोके व्यञ्जने एते दृष्टे । तथा दृष्टत्वात् इहापि व्यञ्जने एते भवतः । देभा.

(२) तित्तिरेरिदं तैत्तिरम् । आजतैत्तिरयोर्व्यञ्जनत्वेनोपदेशः, नान्नत्वेन, तथा लोके प्रसिद्धत्वात् । तेनान्नमपि सिद्धम् । ‡ गानावृ.

[1]**घृतौदनं तेजस्कामः ॥**

(१) प्राश्नीयात् । तत्र संशयः– किं घृतमिश्रः ओदनः घृतौदनः । आहोस्वित् घृतेन संस्कृतः ओदनो घृतौदन इत्युच्यते? घृतेन संस्कृतः ओदनो घृतौदन इत्युच्यते । कथम्? ओदनग्रहणात् । यदि हि घृतमिश्र ओदनोऽभिप्रेतः स्यात् 'घृतं तेजस्कामः' इत्येवमाचक्षीत । ननु चैवं सति घृतमात्रस्यैव प्राशनं प्राप्नोतीति । न प्राप्स्यति । कस्मात्? यथा पूर्वयोर्व्यञ्जनत्वेनोपदेशः कल्प्यते एवमिहापि व्यञ्जनत्वेनोपदेशः कल्प्यते । एवं सति यदोदनग्रहणं करोति तत् ज्ञापयति– घृतेन संस्कृत ओदनो घृतौदन इति । देभा.

(२) घृतसंस्कृत ओदनो घृतौदनः । कुतः? ओदनग्रहणात् । यदि हि घृतमिश्रोऽभिप्रेतः स्यात् 'घृतं तेजस्कामः' इत्येवावक्ष्यत् । ततश्च पूर्ववद्

‡ अना., प्रपा., संप्र. गानावृवत् ।

(१) आगृ. १।१६।४; प्रपा. १८८; संप्र. २७६ तेजस्कामः + (दध्योदनमिन्द्रियकामो मध्वोदनमायुष्कामः); संम. १८ संप्रवत्; संर. ८९३ संप्रवत्.

व्यञ्जकत्वेनान्नमपि सिध्यत्येव । सृते नेदीयसि घृतसेके कृते घृतसंस्कृतो भवति । न तु घृते श्रपणम्, विक्लेदानुपपत्तेः । $ गानावृ.

[4]दधिमधुघृतमिश्रमन्नं प्राशयेत् ॥

दध्यादिभिर्द्रव्यैरेकामसंयोगे प्राश्नीयात् । ‡ देभा.

[5]आवृतैव कुमार्यै ॥

कुमार्या आवृता इदं कर्म कर्तव्यम् । अमन्त्रकमित्यर्थः । ‡ देभा.

## कौषीतकिगृह्यसूत्रम्

अन्नप्राशनस्य कालः काम्यनित्यविषयश्च

[1]षष्ठे मास्यन्नप्राशनम् ॥

[2]आजमन्नाद्यकामः ॥

[3]तैत्तिरं ब्रह्मवर्चसकामः ॥

मात्स्यं जवनकामः ॥

घृतौदनं तेजस्कामः ॥

दधिमधुघृतमिश्रमन्नं प्राशयेत् ॥

( १ ) जवनं बीजम् । ब्रक. ९४

( २ ) कुमारस्य जन्मत आरभ्य षष्ठे मास्यन्नप्राशनं भवति । अथ कुमारस्य पिता कुमारकार्ये एव कामसंयुक्तो भवेत् ततोऽनेनैव प्रकारेण छागमांसमन्नाद्यकामः, तैत्तिरीयं ब्रह्मवर्चसकामः, मात्स्यं जवनकामः, घृतेनाक्तमोदनं तेजस्कामः ( प्राशयेत् ) । कौगसं.

( ३ ) जवनं वीर्यम् । संप्र. २७७

$ अना., प्रपा., संप्र. गानावृवत् ।

‡ गानावृ. देभावत् ।

(१) आगृ. १।१६।५ ; प्रपा. १८८ ; संप्र. २७६ प्राशयेत् + ( सर्वकामो भवतीति विज्ञायते ) ; संम. १८ संप्रवत् ; संर. ८९३ शयेत् ( शयन् ) शेषं संप्रवत् .

(२) आगृ. १।१६।६ ; प्रपा. १८८.

(३) कौगृ. १।२७।१ ; ब्रक. ९४ ; संप्र. २७७.

(४) कौगृ. १।२७।२ ; ब्रक. ९४ मन्नाद्य ( मन्नादि ) ; संप्र. २७७.

(५) कौगृ. १।२७।३–६ ; ब्रक. ९४ ; संप्र. २७७.

## आपस्तम्बगृह्यसूत्रम्

अन्नप्राशनकालः

[1]जन्मनोऽधि षष्ठे मासि...... ॥

( १ ) अथ कुमारस्यान्नप्राशनम् । तत् जन्मनोऽधि जन्मदिवसादारभ्य षष्ठे मासि कर्तव्यम् । मासाश्च सौरचान्द्रमासादयः । अनाकुला.

( २ ) जन्मनोऽधि जन्मन आरभ्य दिवसगणनया षष्ठे मासि । तेन मार्गशीर्षशुक्ले द्वितीयायां जातस्य न मार्गशीर्षो मासः पूर्णो गण्यते । अत एव ज्योतिषे बृहस्पतिः– ' पञ्चाशद्दिवसात् त्रिपञ्चात् पश्चात् त्रिहतषष्ठिकात् । अर्वागेवोत्तमा भुक्तिः ' इति । § ताद.

## हिरण्यकेशिगृह्यसूत्रम्

अन्नप्राशनकालः

[2]अथ षष्ठे मास्यन्नप्राशनम् ॥

षष्ठे मासि कुमारस्यान्नप्राशनं नाम कर्म कार्यम् । यस्मिन् कर्मणि अन्नं प्राश्नाति कुमारः तदन्नप्राशनम् । अथशब्द आनन्तर्ये । चतुर्थे मासि उपनिष्क्रमणं निर्वर्त्य ततोऽनन्तरमिति प्रागस्मादुपनिष्क्रमणस्य भावार्थम् । मातृद.

## मानवगृह्यसूत्रम्

अन्नप्राशनकालः

[3]अथान्नप्राशनम् ॥

पञ्चमे षष्ठे वा मासि...... ॥

अथ अनन्तरमादित्यदर्शनात् अन्नप्राशनम् । पञ्चमे षष्ठे वा मासीति कुमारसामर्थ्यापेक्षो विकल्पः । यदि बलवत्त्वात्स्मा(?) पञ्चमे मासि अन्नभोजनाभिलाषो भवति तदा पञ्चमे कुर्यात्, इतरथा षष्ठे । पञ्चमषष्ठग्रहणं च कालनियमार्थम् । अष्टाभा.

§ मुक्ता. तादवत् ।

(१) आपगृ. १६।१ ; मुक्ता. ८२ ; श्राल. १४९ ; बाल. १।११–१२ पृ. ३० जन्मनो ( जन्मतो ).

(२) हिगृ. २०।१।३८ ; संर. ८९१.

(३) मागृ. १।२०।१–२.

## भारद्वाजगृह्यसूत्रम्

अन्नप्राशनकालः

[1]अथैनं षष्ठे मास्यन्नं प्राशयति ॥

## काठकगृह्यसूत्रम्

अन्नप्राशनकालः

[2]षष्ठे मासेऽन्नप्राशनं दन्तेषु वा जातेषु ॥

प्रसवादारभ्य षष्ठे मासे बालकस्यान्नप्राशनं कर्तव्यम्। देव.

## आग्निवेश्यगृह्यसूत्रम्

अन्नप्राशनकालः

[3]अथ षष्ठे मास्यन्नप्राशनम् ॥

## पारस्करगृह्यसूत्रम्

अन्नप्राशनकालः, कामसंयोगेनान्नप्राशनविषयः

[4]षष्ठे मासेऽन्नप्राशनम् ॥

(१) कुमारस्य कर्तव्यमिति सूत्रशेषः। $ कभा.

(२) जन्मतः षष्ठे मासे कुमारस्य अन्नप्राशनं कर्म कुर्यात्। ‡ हभा.

[1]भारद्वाज्या मांसेन वाक्प्रसारकामस्य ॥

[2]कपिञ्जलमांसेनान्नाद्यकामस्य ॥

[3]मत्स्यैर्जवनकामस्य ॥

[4]कृकषाया आयुष्कामस्य ॥

आट्या ब्रह्मवर्चसकामस्य ॥

सर्वैः सर्वकामस्य ॥

[5]अन्नपर्याय वा ...... ॥

(१) भारद्वाजी पक्षिविशेषः। तस्य मांसेन 'वाग्मी कुमारः स्यात्' इत्येवंकामस्य प्राशनम्। जवनः वेगोऽभिधीयते। कृकषेति कङ्कणहारिका उच्यते। तन्मांसेनाऽऽयुःकामस्य। आटी नाम जलचरः पक्षी। तस्य मांसेन ब्रह्मवर्चसकामस्य प्राशनम्। य एतान् सर्वान् कामान् कामयते तस्य सर्वैरेतैर्मांसैः प्राशनं कारयेत्। अन्नपर्याय वा। अन्नपरिपाट्या वा एकीकृत्य सर्वमांसानि प्राशयेत्। कभा.

(२) भारद्वाज्या भारद्वाजपक्षिजातीयस्त्रियाः। कपिञ्जलः गौरतित्तिरिः। कृकषा गोधा। आट्याः शरालिजातीयपक्षिस्त्रियाः। † ब्रक. ९३–९४

---

(१) भागृ. १।२७.

(२) कागृ. ३९।१; अप. १।११–१३ पृ. २८ मासेऽन्न (मास्यन्न) (वा०); ब्रक. ९३ (षष्ठेष्वन्नप्राशनं जातेषु दन्तेषु वा); स्मृच. २२ (षष्ठेऽन्नप्राशनं जातेषु दन्तेषु वा); चका. ७४० दन्तेषु वा जातेषु (जातेषु दन्तेषु वा); स्मृसा. ३ (षष्ठेऽन्नप्राशनं मासि दन्तेषु जातेषु वा); पमा. ४४३ मासेऽन्न (मास्यन्न) शेषं चकावत्; मपा. ३६० दन्तेषु वा जातेषु (जातदन्तेषु वा); संसौ. ६५ (जातेषु दन्तेषु वा) एतावदेव; वीमि. १।१२ चकावत्; संप्र. २६७ स्मृचवत्; मुक्ता. ८२ चकावत्; संम. १८ (षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु वा पूर्णे संवत्सरे वा); सिन्धु. ९१३ स्मृचवत्; शूक. १०१ स्मृचवत्; विपा. ४४६ (षष्ठेऽन्नप्राशनं जातेषु दन्तेषु च); बाल. १।११–१२ पृ. ३० चकावत्; पुम. ४३६ पमावत्; संर. ८९२ (संवत्सरेऽन्नप्राशनं दन्तेषु जातेषु वा) शङ्खलौगाक्षी.

(३) आग्निगृ. २।२।४.

(४) पागृ. १।१९।१; निप. २६६ (=) (षष्ठे मासि) एतावदेव.

$ जभा. कभावत्।

‡ गभा. हभावत्।

† शेषं कभागतम्। संप्र. ब्रकवत्।

(१) पागृ. १।१९।७; ब्रक. ९३; स्मृसा. ३ (भारद्वाजीमांसेन वाक्पटुत्वकामः); संप्र. २७७ प्रसार (प्रसारित).

(२) पागृ. १।१९।८; ब्रक. ९३; स्मृसा. ३ कामस्य (कामः); संप्र. २७७.

(३) पागृ. १।१९।९; ब्रक. ९३; स्मृसा. ३ मत्स्यै (मात्स्यै); संप्र. २७७ स्मृसावत्.

(४) पागृ. १।१९।१०–१२; ब्रक. ९३; स्मृसा. ३–४; संप्र. २७७.

(५) पागृ. १।१९।१३; ब्रक. ९३; स्मृसा. ४ (अनुपरिपाट्या); संप्र. २७७.

( ३ ) कपिञ्जलः तित्तिरो वा ( इति ? ) मयूरो वा। सर्वैरिति । य एतान् सर्वान् कामान् कामयते तस्य सर्वैरेतैरेव मांसैः व्यस्तैः समस्तैर्वा प्राशनं कारयेत् । ततस्तैः सर्वै रसैः सर्वान्नेन च प्राशनम् । 'अन्नपर्याय वा' इति छान्दसम् । अन्नपरिपाट्या सर्वान्नैः सर्वरसैश्च सर्वमांसान्येकीकृत्य प्राशयेद्वा । जभा.

( ४ ) अत्र गुणफलमाह– भारद्वाज्याः पक्षिण्याः मांसेन कुमारस्य प्राशनं कारयितव्यम् । यदीयं कामना भवति । कस्य ? पितुः । कथंभूतस्य ? वाक्प्रसार-कामस्य । वाचः प्रसारः बहुत्वम्, तत् कुमारस्य कामयते इति वाक्प्रसारकामः तस्य । कर्तरि षष्ठी, कृत्यप्रत्ययान्तत्वात् । एवमन्नाद्यकामस्य कपिञ्जलमांसेन । एवमुत्तरत्रापि । अयमर्थः– यदि कुमारस्य 'अयं वाग्मी स्यात्' इति कामयेत् तदा भारद्वाज्याः मांसं प्राशयेत् । यदि 'कुमारोऽन्नादः स्यात्' इति कामयेत् तदा कपिञ्जलमांसं प्राशयेत् । कपिञ्जलः कारण्डवो भैरिवी मयूरो वा । केचित् तित्तिरो वेति । यदि 'कुमारोऽयं जवनः शीघ्रगामी स्यात्' ( इति कामयेत् ) तदा यथासंभवं मत्स्यान् प्राशयेत् । स यदि 'कुमारो दीर्घायुः स्यात्' इति कामयेत् तदा कृकषाया मांसं प्राशयेत् । यदि 'कुमारो ब्रह्मवर्चस्वी स्यात्' इति कामयेत् तदा आट्या मांसं प्राशयेत् । यदि 'वाक्प्रसारादीनि ब्रह्मवर्चसान्तानि सर्वाणि कुमारस्य भवन्तु' इति कामयेत् तदा भारद्वाज्यादीनामाट्यन्तानां सर्वाणि मांसानि क्रमेण प्राशयेत् । अन्नपर्याय वा अन्नपरिपाट्या वा अन्नवदेकीकृत्य प्राशयेदित्यर्थः । अन्नपर्यायेत्यविभक्तिकमार्षं पदम् । हभा.

( ५ ) जवनं वीर्यम् । † स्मृसा. ४

( ६ ) सर्वैः सर्वकामस्य । यो वाक्प्रसारादिसर्वान् कामान् कामयते तस्य भारद्वाज्यादिसर्वैर्मांसैः क्रमेण प्राशनं कुर्यात् । मिश्रैः प्राशनमिति भर्तृयशाः । अन्नपर्याय वा । अन्नपरिपाट्या वाऽन्नवत् सर्वमांसान्येकीकृत्य प्राशयेदित्यर्थः । अन्नपरिपाट्या वा क्रमेण प्राशयेत्, नैकत उद्धृत्येति भर्तृयशाः । † गभा.

( ७ ) कामना च काम्यस्य संस्कार्यकुमाराधिकरणतावगाहिप्राशयितृज्ञानम् ¶ । अन्नपर्याय वा । यावमेषन्यायेन काम्यमांसाकृति अन्नं निष्पाद्य प्राशयेत् । वाशब्दो विकल्पार्थः । ‡ विभा.

## वैखानसगृह्यसूत्रम्

अन्नप्राशनकालः

[1]अथ षष्ठे मास्यन्नप्राशनम् ॥

## वसिष्ठः

बालबालिकयोरन्नप्राशनकालः

[2]युग्मेषु मासेषु च षष्ठमासात्
संवत्सरे वा नियतं शिशूनाम् ।
अयुग्ममासेषु च कन्यकानां
नवान्नसंप्राशनमिष्टमेतत् ॥

[3]... सावनविधाविह मासि षष्ठे युग्मे च
मासि ... ॥

'युग्मे मासि' इति षष्ठासंभवे अष्टमादियुग्ममास एव पुंसामन्नप्राशने ग्राह्य इति नियमार्थम् ।

संको. १०८

## विष्णुः

अन्नप्राशनकालः

[4]षष्ठेऽन्नप्राशनम् ॥

---

† शेषं कभागतं ब्रकगतं च ।

† शेषं कभागतं हभागतं च ।

¶ प्राशयितृच्छेति वक्तव्यम्, 'कुमारे वाक्प्रसारास्तु' इति कामनाया इच्छारूपत्वात्, 'कुमारे वाक्प्रसारास्ति' इति ज्ञानस्य कामनात्वाभावात् ।

‡ शेषं हभागतम् ।

(१) वैगृ. ३।२२.

(२) वसं. २७।१ ; प्रपा. १८६ ; संसौ. ६५ षष्ठमासात् ( सत्सु पुंसां ) ; संप्र. २६८ संसौवत् ; संग. ५८१ संसौवत् ; संव. ७५.

(३) अस्य स्थलादिनिर्देशः मुहूर्तप्रकरणे 'बालान्नभोजनविधौ' इति वसिष्ठवचने द्रष्टव्यः .

(४) विस्मृ. २७।११.

[1]षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

**शङ्खः**

अन्नप्राशनकालः

[2]षष्ठेऽन्नप्राशनं मासि ...... ॥

[3]संवत्सरेऽन्नप्राशनमर्धसंवत्सर इत्येके ॥

पूर्णे इति शेषः, 'संवत्सरे वा संपूर्णे' इति नारदवाक्यात् । संप्र. २६८

[4]षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

**मनुः**

अन्नप्राशनकालः

$[5]षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

**याज्ञवल्क्यः**

अन्नप्राशनकालः

[6]षष्ठेऽन्नप्राशनं मासि ... ॥

(१) षष्ठे मास्यन्नप्राशनं कर्म । † मिता.

(२) 'षष्ठेऽन्नप्राशनं मासि' इति प्रथमः कल्पः, 'ततोऽन्नप्राशनं कार्यं मासि षष्ठे यथाविधि । अष्टमे वाऽपि कर्तव्यं यद्वेष्टं मङ्गलं कुले ॥' इति ब्रह्मपुराणे कालान्तरस्यापि विधानात् । वीमि.

[1]षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

**नारदः**

स्त्रीपुंसयोरन्नप्राशनकालः

[2]षष्ठे मास्यष्टमे वाऽपि पुंसां स्त्रीणां तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥

[3]जन्मतो मासि षष्ठे स्यात् सौरेणोत्तममन्नदम् ।
तदभावेऽष्टमे मासे नवमे दशमेऽपि वा ॥

[4]द्वादशे वाऽपि कुर्वीत प्रथमान्नाशनं परम् ।
संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः ॥

(१) नवमे इति कन्याभिप्रायेण ।

† संप्र. २६८

(२) सौरेण मानेन षष्ठे इत्यन्वयः ।

संकौ. १०८

---

$ अस्य व्याख्यानानि निष्क्रमणविधिप्रकरणे ( सं. का. पृ. २८२७-२८२८ ) द्रष्टव्यानि ।

† अप. मितावत् ।

(१) बका. ७४० विष्णुसोमशङ्खबृहस्पतियाज्ञवल्क्याः.

(२) शंस्मृ. २।५.

(३) अप. १।११-१३ पृ. २८ ; व्रक. ९३ ( अर्धसंवत्सर इत्येके० ) ; मभा. ८।१३ ( संवत्सरेऽन्नप्राशनं षष्ठे वा ) ; स्मृच. २२ ; बका. ७४० संवत्सरेऽन्न ( पूर्णे वा संवत्सरे ) लौगाक्षिः ; पमा. ४४३ ; मपा. ३६० व्रकवत् ; संप्र. २६८ व्रकवत्, शङ्खलिखितौ ; बम. १० ; मुका. ८२ ( संवत्सरात्प्राक्संवत्सर इत्येके ) ; सिन्धु. ९१३ र इत्येके ( रे वा ) ; विपा. ४४६ सिन्धुवत् ; बाल. १।११-१२ पृ. ३० ; संर. ८९२ ( संवत्सरेऽन्नप्राशनं दन्तेषु जातेषु वा ) शङ्खलौगाक्षी.

(४) बका. ७४० विष्णुसोमशङ्खबृहस्पतियाज्ञवल्क्याः.

(५) मस्मृ. २।३४. शेषस्थलादिनिर्देशा निष्क्रमणविधिप्रकरणे ( सं. का. पृ. २८२७ ) द्रष्टव्याः.

(६) यास्मृ. १।१२. शेषस्थलादिनिर्देशाः संस्कारोपोद्घातप्रकरणे ( सं. का. पृ. ४७ ) द्रष्टव्याः.

† संग. संप्रवत् । संर. संप्रसंकौवत् ।

(१) बका. ७४० विष्णुसोमशङ्खबृहस्पतियाज्ञवल्क्याः.

(२) ज्योना. २१।१ ; गभा. १७९ मास्यष्टमे वाऽपि ( वाऽप्यष्टमे मासि ) ; संप्र. २६९ ऽपि ( ऽथ ) ; सिन्धु. ९१४ गभावत् ; शूक. १००-१०१ गभावत् ; विपा. ४४६ गभावत् ; ज्योनि. ११६ ; संग. ५८१ संप्रवत् ; पुम. ४३६ ऽपि ( ऽथ ) शुभम् ( बुधैः ) ; संर. ८९२ ऽपि ( ऽथ ) तु ( च ) देवलः.

(३) प्रपा. १८६ पू. ; गभा. १७९ णोत्तममन्नदम् ( णान्नाशनं परम् ) मासे ( मासि ) ; संप्र. २६७, २६९ ; सिन्धु. ९१३ णोत्तममन्नदम् ( णान्नाशनं परम् ) पू. ; विपा. ४४६ गभावत् ; संकौ. १०७-१०८ ; संग. ५८१ : ५८२ पू., वीरमित्रोदये ; संव. ७६ ; संर. ८९२.

(४) प्रपा. १८६ उत्त. ; गभा. १७९ ; संप्र. २६८ ; सिन्धु. ९१३ उत्त. ; विपा. ४४६ परम् ( शिशोः ) ; संकौ. १०८ ; संग. ५८१ ; संव. ७६ ; संर. ८९२.

## बृहस्पतिः

अन्नप्राशनकालः

[1]पञ्चाशद्दिवसात्त्रिघ्नात्पञ्चात्त्रिहतषट्‌शतात् ।
अर्वागेवोत्तमा भुक्तिर्मास्यन्येऽप्येवमूचिरे ॥

त्रिघ्नात् त्रिगुणात्, सार्धशततमदिवसादिति यावत् । त्रिहतषट्‌शतात् त्रिगुणितषट्‌शतात्, साशीतिशततमदिवसादिति यावत् । ततश्च सार्धशतदिनादूर्ध्वं साशीतिशततमदिवसादर्वाक् अन्नप्राशनं कर्तव्यमित्यर्थः । $ संप्र. २६८

[2]मासि षष्ठेऽथ सौरेण वाऽष्टमे दशमेऽपि वा ।
द्वादशे वा परं विद्याद्युग्मेषु शिशुजन्मतः ॥
[3]षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

## व्यासः

अन्नप्राशनकालः

[4]षष्ठे मास्यन्नमश्नीयात् ... ॥

## यमः

अन्नप्राशनकालः

[5]ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि ।
अष्टमे वाऽथ कर्तव्यं यद्वेष्टं मङ्गलं कुले ॥

यत्कालीनमन्नप्राशनं कुलेषु मङ्गलत्वेन प्रसिद्धं तस्मिन् कर्तव्यमित्यर्थः । ‡ स्मृसा. ३

## बृहत्पराशरः

अन्नप्राशनकालः

[1]षष्ठेऽन्नप्राशनं तथा ॥

## गर्गः

स्त्रीपुंसयोरन्नप्राशनकालः

[2]नरस्यान्नाशने युग्मं स्त्रीणां चान्नाशनेऽयुजम् ॥
अयुजमिति पदच्छेदः । संर. ८९२

## वृद्धगार्ग्यः

अन्नप्राशनकालः

[3]षष्ठे मासि प्रकुर्वीत बालस्यैवान्नभोजनम् ।
तदभावेऽष्टमे वाऽपि कुर्यात्संवत्सरेऽपि वा ॥

## आश्वलायनः

अन्नप्राशनकालः

[4]षष्ठेऽन्नप्राशनं प्रोक्तं समे मास्युत्तरेऽथवा ।
प्राग्वा चतुर्थे तस्मात्प्रागनापन्नो न संचरेत् ॥

सम इत्यनेन षष्ठोत्तराः अष्टमदशमद्वादशा गृह्यन्ते । २६७

आपन्नश्चेत् षष्ठात् प्रागपि चतुर्थे तत् कुर्यादित्यर्थः । संप्र. २६८

---

$ संग., आन. संप्रवत् ।

(१) प्रपा. १८६ ; संप्र. २६८ ; मुक्ता. ८३ ट्‌शतात् (ष्टिकात्) चतुर्थपादो नास्ति ; आन. १४९ मुक्तावत् ; संग. ५८१.

(२) प्रपा. १८६.

(३) वका. ७४० विष्णुसोमशङ्खबृहस्पतियाज्ञवल्क्याः .

(४) व्यास्मृ. १।१९.

(५) अप. १।११–१३ पृ. २८ मासि षष्ठे (षष्ठे मासि) ऽथ (ऽपि) ; ब्रक. ९२–९३ वाऽथ (मासि) ; स्मृच. २२ यद्वे (यच्चे) ; वका. ७४० ; स्मृसा. ३ ; पमा. ४४३ ऽथ (ऽपि) यद्वे (यच्चे) ; मपा. ३६० चतुर्थपादो नास्ति ; वीमि. १।१२ मासि षष्ठे कार्यं (कार्यं मासि षष्ठे) ऽथ (ऽपि) ब्रह्मपुराणे ; संप्र. २६७ : २६८ चतुर्थपादमात्रम् ; यम. १० (अष्टमे वाऽपि कर्तव्यम्)

‡ संम. स्मृसावत् ।

एतावदेव ; मुक्ता. ८२ पमावत् ; संम. १८ चतुर्थपादे (यद्येवं मङ्गलं गृहे) ; बाल. १।११–१२ पृ. ३० चमवत् ; पुम. ४३५–४३६ यद्वे (यथे).

(१) बृपसं. ६।१५०.

(२) प्रपा. १८६ ; संप्र. २६९ ; संको. १०८ स्त्रीणां चा (स्त्रीणाम) ; संर. ८९२ संकोवत्.

(३) संप्र. २६८ ; पुम. ४३६ प्रकु (तु कु).

(४) आश्वस्मृ. ११।११८ ; प्रपा. १८८ त्प्रागना (त्तत्प्रागा) ; संप्र. २६७ समे मा (समma) शेषं प्रपावत् .

## लघ्वाश्वलायनः

अन्नप्राशनकालः

'षष्ठेऽन्नप्राशनं कुर्यान्मासे पुंस्यष्टमेऽथ वा ।
दशमे द्वादशे मासि केचिदेवं वदन्ति हि ॥

## सोमः

अन्नप्राशनकालः

'षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

## स्कन्दपुराणम् ( काशीखण्डे )

अन्नप्राशनकालः

'मासेऽन्नप्राशनं षष्ठे ॥

## स्मृत्यन्तरम्

स्त्रीपुंसयोरन्नप्राशनकालः

'षष्ठाष्टदशमे मासि द्वादशे वाऽन्नमाचरेत् ।
अयुग्मे मासि वै स्त्रीणामिति कैश्चिदुदीरितम् ॥

## अनिर्दिष्टकर्तृकवचनम्

अन्नप्राशनकालः

'षष्ठेऽष्टमे वा दशमे च मासि
संवत्सरे वा .... ॥

## चतुर्विंशतिमतम्

अन्नप्राशनकालः

'षष्ठेऽन्नप्राशनं मतम् ॥

## लल्लः

स्त्रीपुंसयोरन्नप्राशनकालः

'षष्ठे मासि विधेयं पुंसोऽन्नं तु स्त्रियोऽन्यस्मिन् ॥

( १ ) अत्र 'अन्यस्मिन्' इत्यनेन सप्तममासो गृह्यते, पञ्चमस्य प्रसङ्गाभावात् । नारदोक्तेन नवममासविधिनाऽपि कन्यकाभुक्तिरुपलक्ष्यते, स्त्रीणां विषये प्रायेण कर्मस्वयुग्मप्राधान्यप्रयोगात् । प्रपा. १८६

( २ ) 'षष्ठे' इति युग्ममासोपलक्षणमित्युक्तं प्राक् । अन्यस्मिन् अयुग्मे । तथा च गर्गः— 'नरस्यान्नाशने युग्मं स्त्रीणां चान्नाशनेऽयुग्मम् ।' इति । तदेतत् स्पष्टमाचष्ट नारदः— 'षष्ठे मास्यष्टमे वाऽथ पुंसां स्त्रीणां तु पञ्चमे । सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥' । अनेन 'पञ्चमे प्रसङ्गाभावात्' इति पारिजातोक्तिर्निरस्ता । 'तदभावेऽष्टमे मासे नवमे दशमेऽपि वा ।' इति नारदवाक्ये नवमपदं कन्याभिप्रायमेवेत्युक्तमेव, 'स्त्रीणां चान्नाशनेऽयुग्मम्' इति गर्गवाक्यात् । तेन एकादशेऽपि सिध्यति । संप्र. २६९

## स्मृत्यर्थसारः

अन्नप्राशनकालः

'अन्नप्राशनं षष्ठेऽष्टमे वा दन्ते जाते ( वा ) कार्यम् ॥

## कृत्यचिन्तामणौ

स्त्रीपुंसयोरन्नप्राशनकालः

'अन्नस्य प्राशनं कार्यं मासि षष्ठाष्टमे बुधैः ।
स्त्रीणां तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः ॥

## भीमपराक्रमः

स्त्रीपुंसयोरन्नप्राशनकालः

'कुर्यादन्नप्राशनं मासि षष्ठे
पुंसां कन्यायाः पुनः पञ्चमे च ॥

## भुजबलभीमः

अन्नप्राशनकालः

'षष्ठे मासि ... अन्नादिभक्ष्यं शुभम् ॥

## माधवीये

अन्नप्राशनकालः

'मासस्तज्जननादिकोऽर्कगतिजः षष्ठेऽष्टमे
(? षष्ठोऽष्टमो) वा शुभः
कश्चित्(? कैश्चित्) सावनसंज्ञितो निगदितः साम्यं तयोरुत्तमम् ॥

(१) लघ्वाश्वस्मृ. ८।१.
(२) चका. ७४० विष्णुसोमशङ्खबृहस्पतियाज्ञवल्क्याः. (३) सस्मृ. ५१. (४) ब्रम्र. ३८.
(५) आन. १४९ ज्यौतिषे. (६) चम. १२.
(७) प्रपा. १८६ ; संप्र. २६८.

(१) स्मृसार. ३. (२) संत. ९२१.
(३) संसौ. ६५. (४) संत. ९२१–९२२.
(५) प्रपा. १८६.

बालस्य प्रथमान्नभोजनविधौ ... ॥

## श्रीपतिः

स्त्रीपुंसयोरन्नप्राशनकालः

[१]षष्ठे मासे प्राशनं दारकाणा-
मन्यस्मिंस्तत्कन्यकानां विधेयम् ॥

## रत्नमालायाम्

स्त्रीपुंसयोरन्नप्राशनकालः

[२]षष्ठे मासि प्राशनं बालकानां
कन्यानां तत् पञ्चमे साच(?सद्भि)-
रुक्तम् ॥

## राजमार्तण्डः

अन्नप्राशनकालः

[३]षष्ठे मासि... अन्नस्य प्राशनं कुर्यात्... ॥

## श्रीधरीये

अन्नप्राशनकालः

[४]व्योमेन्द्रियेन्दौ दिवसे प्रवृद्धे
पश्चात्स्थिते बालनवान्नभुक्तिः ।
खाष्टेन्दुसंख्यात्परतस्तु युग्मे
मानेन सौरेण वदन्ति तज्ज्ञाः ॥

तत्रैतदुक्तं भवति– जन्मदिवसादारभ्य पञ्चाशदुत्तर-शतदिने प्रवृद्धे गते सति ततः पश्चात्स्थिते काले प्रथम-पक्षे बालनवान्नभुक्तिः कार्या । खाष्टेन्दुसंख्यादिति । जन्म-दिवसात् अशीत्युत्तरशतदिनादर्वाक् । ततः परतस्तु सौरमानेन युग्मे अष्टमे दशमे द्वादशे वा मासेऽन्नभुक्तिः स्यात् । 'बालान्न(? लनवान्न)भुक्तिः' इत्यत्र बालेति पुंशब्दप्रयोगात् कन्यकानामन्नप्राशने न युग्ममासविधि-रित्युक्तं भवति, तासां विशेषदर्शनात् । तथाऽऽह श्रीपतिः – 'षष्ठे मासे प्राशनं दारकाणामन्यस्मिंस्त-त्कन्यकानां विधेयम् ।' । प्रपा. १८६

(१) प्रपा. १८६ ; संप्र. २६८ ; संग. ५८१.
(२) संसौ. ६५.
(३) संसौ. ६५ ; संप्र. २६९.
(४) प्रपा. १८६.

## मुहूर्तचिन्तामणिः

स्त्रीपुंसयोरन्नप्राशनकालः

[१]... षष्ठात् समे मास्यथ हि मृगदृशां पञ्चमा-
दोजमासे ॥

षष्ठादिति ल्यब्लोपे पञ्चमी । षष्ठमासमारभ्य सममासे षष्ठाष्टमदशमद्वादशमासेषु बालानामन्नप्राशनम् । पुंबाल-विषयमेतत् । अथ अनन्तरं हि निश्चयेन मृगदृशां कन्यकानां पञ्चमात् ओजमासे विषममासे पञ्चमसप्तम-नवमैकादशमासेषु अन्नप्राशनं सत् । ¶ पीटी.

## मुहूर्तगणपतौ

स्त्रीपुंसयोरन्नप्राशनकालः

[२]षष्ठान्मासि समे पुंसः पञ्चमाद्विषमे स्त्रियाः ।
अन्नप्राशनकं प्रोक्तं शुभाह्ने सर्वसंमतम् ॥

## शाकलकारिकाः

अन्नप्राशनकालः

[३]अथान्नप्राशनं कुर्यान्मासि षष्ठे शुभेऽहनि ।
अष्टमे दशमे वाऽपि द्वादशे वाऽपि वै शिशोः ॥

## शौनककारिकाः

अन्नप्राशनकालः, कुमार्या अमन्त्रकं कर्म

[४]जन्मप्रभृति षष्ठेऽस्य मासेऽन्नप्राशनं शिशोः ॥
[५]इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम् ॥

## कुमारिलकारिकाः

अन्नप्राशनकालः, काम्यविषयः, स्त्रीणाममन्त्रकम्

[६]अथ पुण्येऽह्नि षष्ठे तु मासेऽन्नप्राशनं भवेत् ॥

¶ संव. पीटीवत् ।
(१) मुचि. ५।१७ ; संव. ७४.
(२) संव. ७६.
(३) शाका. १९ पृ. २.
(४) शौका. १ पृ. ३९; प्रपा. १८८ षष्ठेऽस्य मा (षष्ठे स्यान्मा); संप्र. २७५.
(५) शौका. ५ पृ. ३९; प्रपा. १८८ ; संप्र. २७८ ; संग. ५९६.
(६) कुका. १।११।१ ; प्रपा. १८८ ; धप्र. ३८ ; संप्र. २७६.

[1]आजतैत्तिरमांसानां प्राशनं कामयोगतः ।
अमन्त्रकमिदं कुर्यात्प्राशनं योषितामपि ॥

## रेणुकारिकाः

स्त्रीपुंसयोरन्नप्राशनकालः, काम्यविषयः

[2]षष्ठे पुंसः पञ्चमे सप्तमे वा
स्त्रीणामन्नप्राशनं मासि सौम्यैः ॥

(१) कुका. १।११।३ ; प्रपा. १८८ मपि (मिति).
(२) रेका. १ पृ. १४.

[1]मांसं तस्य भरद्वाज्या यदीच्छेद्वाक्प्रसारितम् ॥

कपिञ्जलं चेदन्नाद्यं मात्स्यं चेज्जवनं यदि ।
आयुश्चेत्कृकषायास्तद्वाटयाश्चेद्ब्रह्मवर्चसम् ॥

सर्वं चेत्सर्वमांसानि सहान्नेनाऽऽशयेच्छि-
शुम् ।
अन्नानुपरिपाटया वा मांसानि प्राशयेत्पृथक् ॥

(१) रेका. १७–१९ पृ. १५–१६.

# अन्नप्राशनमुहूर्तः

## हिरण्यकेशिगृह्यसूत्रम्

अन्नप्राशने पक्षः नक्षत्रं च

[1]आपूर्यमाणपक्षे पुण्ये नक्षत्रे...... ॥

## आग्निवेश्यगृह्यसूत्रम्

अन्नप्राशने पक्षः नक्षत्रं च

[2]आपूर्यमाणपक्षे पुण्ये नक्षत्रे.... ॥

## जैमिनिगृह्यसूत्रम्

अन्नप्राशने पक्षः नक्षत्रं च

[3]अथातः प्राशनकर्म पूर्वपक्षे पुण्ये नक्षत्रे.... ॥

## वैखानसगृह्यसूत्रम्

अन्नप्राशने पक्षः दिनं च

[4]शुक्लपक्षे दिने शुद्धे.... ॥

## वसिष्ठः

अन्नप्राशने तिथिवारनक्षत्रचन्द्रताराबललग्नवांश-ग्रहसंस्थानानि, गुरुशुक्रास्तमलमासदोषाभावः

[5]मृदुध्रुवक्षिप्रचरेषु भेषु
वारेषु शुक्रज्ञसुरार्चिताभ्या-
(? ना)म् ।
धर्मार्कगौरीन्द्वहिधातृकाम-
दिनेषु तारेन्दुबलान्वितेषु ॥

[6]शुभग्रहाणां भवने विलग्ने
तदंशके पूर्वदले दिनस्य ।
पूर्णेन्दुवारेऽप्यथवा विलग्ने
नवांशके वाऽप्यथवा शुभस्य ॥

(१) हिगृ. २०।१।३९ ; संर. ८९२.

(२) आग्निगृ. २।२।४. (३) जैगृ. १।१०.

(४) वैगृ. ३।२२. (५) बसं. २७।२.

(६) बसं. २७।३ तदंश (नवांश) शुभस्य (नु तस्य) ; संसौ. ६८ ; संप्र. २७३ ; पुम. ४३६ पू.

सं. का. ३५८

[1]अनैधने कर्मविशुद्धियुक्ते
दोषैर्विहीने शुभदृष्टियुक्ते ।
नोत्पातपापग्रहदूषिते भे
वैनाशिकाद्यृक्षविवर्जितेऽपि ॥

अनैधने निधनताराराहिते । § संसौ. ६८

[2]शुभाशुभेषु त्रिधनायकेन्द्र-
त्रिकोणगेष्वायरिपुत्रिगेषु ।
अषष्ठरिष्फाष्टगते हिमांशौ
बालान्नभुक्तिः शुभदा च तेषाम् ॥

रिष्फं द्वादशं स्थानम् । संप्र. २७३

कुष्ठी लग्नगते सूर्ये क्षीणे चन्द्रे च भिक्षुकः ।
सन्नदः पूर्णचन्द्रे च कुजे पित्तरुजार्दितः ॥

[3]बुधे ज्ञानी गुरौ भोगी दीर्घायुर्भाग्यवान् सिते ।
वातरोगी शनौ राहौ केतौ चान्नविवर्जितः ॥

[4]संपूर्णेन्दुभयाष्टम्योर्मध्येन्दुः पूर्णसंज्ञकः ।
विनष्टेन्दुभयाष्टम्योर्मध्येऽसौ क्षीणसंज्ञकः ॥

§ संप्र. संसौवत् ।

(१) बसं. २७।४ अनै (न नै) हीने (हीनैः) ते भे (तर्क्षे) द्यृक्ष (दर्क्ष) तेऽपि (तेषु) ; संसौ. ६८ द्यृक्ष (दर्क्ष) ; संप्र. २७३ ; पुम. ४३६ अनै (न नै) ते भे (तर्क्षे) काद्यृक्ष (ताख्यर्क्ष) ऽपि (च).

(२) बसं. २७।६-७ ; संसौ. ६८-६९ ; संप्र. २७३-२७४ ; संग. ५८३.

(३) बसं. २७।८ युर्भाग्य (युर्भोग) ; संसौ. ६९ रोगी (रोगः) ; संप्र. २७४ संसौवत् ; संग. ५८३ संसौवत् .

(४) बसं. २७।९ ; संसौ. ६९ पूर्णसंज्ञकः (पूर्ण-संज्ञितः) ; संप्र. २७४ संसौवत् ; संग. ५८३ संसौवत् ; संब. ७६.

[1]षष्ठाष्टमान्त्यगश्चन्द्रो भोक्तुश्च निधनप्रदः।
केन्द्रत्रिकोणगो मन्दस्तथैवान्नापहारकः॥

[2]बालान्नभोजनविधौ गुरुशुक्रमौढ्यं
मासप्रयुक्तमशुभं त्वधिमासदोषः।
नास्त्येव सावनविधाविह मासि षष्ठे
युग्मे च मासि परतः शुभचन्द्रपक्षे॥

(१) शुभचन्द्रपक्षः शुक्लपक्षः। तत्रापि परस्मिन् पञ्चम्याः परभागे इत्यर्थः, '(आ) पञ्चम्याः कृष्णपक्षः' इति शास्त्रान्तरसंवादात्। संको. १०८

(२) शुभ इति चन्द्रविशेषणं चन्द्रानुकूल्यापेक्षणार्थम्। चन्द्रस्य पक्षः शुक्लपक्षः। तत्रापि परतः परस्मिन् पञ्चम्याः परभागे इत्यर्थः। संर. ८९२

[3]रिक्तां च नवमीं चैव पक्षच्छिद्रां तथैव च।
वर्जयेत्सर्वयत्नेन बुद्धिमान् भोजनद्वये॥

[4]जीवसौम्यसितानां तु द्रेक्काणदिवसांशकाः।
बालान्नप्राशने शस्ता न चन्द्रार्कार्किजासृजाम्॥

असृक् भौमः। $ प्रपा. १८७

[1]विष्णुरुष्णकिरणो हिमरश्मि-
र्वायुमित्रवरुणादितिचित्राः।
अश्विवतिष्यवसुपौष्णभरोहि-
ण्युत्तराश्च शिशुभोजनताराः॥

विष्णुः श्रवणः। उष्णकिरणः हस्तः। हिमरश्मिः मृगशिरः। वायुः स्वाती। मित्रम् अनुराधा। वरुणः शतभिषक्। अदितिः पुनर्वसुः। वसुः धनिष्ठा। पौष्णं रेवती। शेषं प्रसिद्धम्। संप्र. २७१

## नारदः

अन्नप्राशने पक्षतिथिवारनक्षत्रलग्नवांशग्रहसंस्थानानि, जन्मनक्षत्रविधिः

[2]रिक्तां दिनक्षयं नन्दां द्वादशीमष्टमीममाम्।
त्यक्त्वाऽन्यतिथयः श्रेष्ठाः प्राशने शुभवासराः॥

वासरा इत्यनन्तरं श्रेष्ठा इत्यनुषङ्गः। संको. १०८

[3]चरस्थिरमृदुक्षिप्रनक्षत्रेषु न नैधने।
दशमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके॥

[4]पूर्वार्धे सौम्यखेटेन संयुक्ते वीक्षितेऽपि वा।
त्रिषष्ठलाभगैः क्रूरैः केन्द्रधीधर्मगैः शुभैः॥

[5]व्ययारिनिधनस्थेन चन्द्रेण प्राशनं शुभम्।
अन्नप्राशनलग्नस्थे क्षीणेन्दौ वाऽस्तनीचगे॥

---

$ संप्र. प्रपावत्।

(१) वसं. २७।१० शैवान्ना (स्यान्नम); संसौ. ६९ षष्ठाष्टमा (षष्ठ्यष्टम्या); संप्र. २७४.

(२) प्रपा. १८६ विधिरत्ने; संसौ. ६६ त्वधि (मल) नास्त्येव (नास्त्यत्र) पर (चर); संप्र. २६९ संसौवत्; ज्योनि. ११६ विधिरत्ने; संको. १०८ मौढ्यं मास (मौढ्यबाल्य) विधिरत्ने; संव. ७६ (=) संकोवत्; संर. ८९२ सर्वं संकोवत्.

(३) प्रपा. १८७ बुद्धि (भुक्ति); संप्र. २७० द्वये (द्वयम्).

(४) प्रपा. १८७; संप्र. २७०-२७१ द्रेक्काणदि (द्रेक्काणा दि); ज्योनि. ११६ वृद्धनारदः; संग. ५८२ संप्रवत्.

(१) संसौ. ६७; संप्र. २७१ रश्मिर्वा (रश्मिवा).

(२) ज्योना. २१।२ वासराः (वासरे); गमा. १७९-१८० श्रेष्ठाः प्राशने शुभ (प्रोक्ताः सितजीवज्ञ); संसौ. ६६ (=) ममाम् (मिमाम्); संप्र. २७० लघुनारदः; सिन्धु. ९१४ गभावत्; विपा. ४४६ द्वादशी (दशमी) शेषं गभावत्; ज्योनि. ११६ रिक्तां दिनक्ष (रिक्तादिनत्र) शेषं ज्योनावत्; संको. १०८ संसौवत्, लघुनारदः; पुम. ४३६.

(३) ज्योना. २१।३ त्रेषु न नै (त्रे शुभनै); ज्योनि. ११६.

(४) ज्योना. २१।४; ज्योनि. ११६ ऽपि (ऽथ) शुभैः (परैः).

(५) ज्योना. २१।५; ज्योनि. ११६ व्यया (अन्त्या) शनल (शनं ल) वाऽस्त (वा स्व).

'नित्यं भोक्तुश्च दारिद्र्यं रिष्फषष्ठाष्टगेऽपि वा ॥

'पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥

(१) तत्र नक्षत्रपदं तारामुपलक्षयति । तथा च जन्मतारास्तिस्रो भवन्ति– जन्मर्क्षमेका, ततो दशमर्क्षमपरा, एकोनविंशं चान्येति । तत्र भूयसामनुग्रहस्य न्याय्यत्वादिति बहुवचनानुरोधादत्र दशमी एकोनविंशी च तारा शुभदा इति व्याख्येयम् । तथा च लल्लः– ' हित्वैकं जन्मनक्षत्रं(?न्मर्क्षं) द्वे तारे जन्मसंज्ञिते शुभदे । उद्वाहे चोप(?उप) नयने यात्रायामन्नभोजने क्षुरकार्ये ॥ ' ।

‡ संसौ. ७७

(२) यत्तु नारदेनोक्तम्–' पट्टबन्धन... ॥ ' इति, तत् क्षत्रियविषयम्, पट्टबन्धसाहचर्यात् ।

$ संकौ. १०८

'चौलान्नप्राशने शस्ताः सौम्या रन्ध्रव्ययायगाः॥

'पक्षयोरुभयोरुक्तं कृष्णे चान्त्यत्रिकं विना ॥

'ओजाश्च तिथयः श्रेष्ठा नवमीपर्ववर्जिताः ।
युग्मेषु दशमी प्रोक्ता द्वितीया चान्नभोजने ॥

(१) ओजाः अयुग्माः । संप्र. २७०

(२) अयुजः विषमाः । संर. ८९२

'वर्जितास्वपि भोक्तव्यं चन्द्रे मित्रनवांशगे ॥

पक्षच्छिद्रापवादमाह नारदः– ' वर्जितास्वपि... ' इति । प्रपा. १८७

'बुधशुक्रगुरूणां तु वारा बालाशने शुभाः ।
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ॥

'अर्काङ्गारकमन्दानां वाराश्चापि शुभप्रदाः ।
यदा वाराधिपस्तिष्ठेत्स्वोच्चमित्रगृहे तदा ।
गुरुणा बलिना वाऽपि वीक्षितश्च बलान्वितः ॥

## लघुनारदः

अन्नप्राशने तिथयः

'द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
त्रयोदशी च दशमी प्राशने तिथयः शुभाः ॥

'पञ्चपर्वसु रिक्तायां नन्दायामाद्यभोजनम् ।
बलमायुर्यशो हन्ति सप्तम्यां चेति केचन ॥

## वृद्धनारदः

अन्नप्राशने वाराः

'मिष्टान्नभुग्जीवनिशाकराभ्यां
शुक्रेण वाग्मी रविणा दरिद्री ।
कुजेन रोगी शशिजेन भोगी
क्षीणायुरादित्यसुतेऽह्नि कुर्यात् ॥

---

‡ संप्र. संसौवत् ।

$ संर. संकौवत् ।

(१) ज्योना. २२।६ ; ज्योनि. ११६ नित्यं (नित्ये).

(२) ज्योना. २२।४ ; संसौ. ६७, ७७ ; संप्र. २७२ त्रमशु ( त्रं त्वशु ) : ३०४ कर्मणि ( कर्मणः ) ; संकौ. १०८ ; संग. २१०, ५८२ ; संव. ७६ ; पुम. ४३६ ; संर. ८९३.

(३) ज्योनि. ११७ व्यायाय ( व्ययोप ) ; संग. ६१२ : ७३२ चौलान्न ( गोदान ).

(४) प्रपा. १८७ ; संप्र. २६९ ; संग. ५८२ ; संर. ८९२.

(५) प्रपा. १८७ ; संप्र. २६९ बृहन्नारदीये ; संर. ८९२ ओजाश्च ति ( अयुजस्ति ) युग्मेषु ( युग्मासु ).

(१) प्रपा. १८७ ; संप्र. २७०.

(२) प्रपा. १८७ ; गमा. १८० उत्त. ; संप्र. २७० ; सिन्धु. ९१४ उत्त. ; विपा. ४४६ उत्त. ; ज्योनि. ११६ शने शुभाः ( न्नभोजने ) वृद्धनारदः ; संग. ५८२.

(३) प्रपा. १८७ तदा ( तथा ) ; संप्र. २७० ; ज्योनि. ११६ वृद्धनारदः ; संग. ५८२ तृतीयार्धं नास्ति, वीरमित्रोदये.

(४) संसौ. ६६ (=) ; संप्र. २७० ; संकौ. १०८ ; संग. ५८२ ; संव. ७६ नारदः .

(५) संसौ. ६६ (=) ; संप्र. २७० ; संकौ. १०८ ; संग. ५८२ वीरमित्रोदये ; संव. ७६ नारदः .

(६) ज्योनि. ११६.

## बृहस्पतिः

अन्नप्राशने तिथिवारनक्षत्रयोगग्रहसंस्थानानि

[1]पक्षच्छिद्रां च नवमीं यत्नेनैव विवर्जयेत् ।
रविभौमार्कवारांश्च बुद्धिमानन्नकर्मणि ॥

[2]पौष्णादितीन्दुहस्ताश्वित्वाष्ट्रवायव्यवैष्णवाः ।
रोहिणीमैत्रतिष्याश्च वरुणश्चोत्तरात्रयम् ।
श्रविष्ठा तारका ह्येताः षोडशान्नाशने शुभाः ॥

पौष्णं रेवती । अदितिः पुनर्वसुः । इन्दुः मृगः । वासवं धनिष्ठा । वरुणः शतभिषक् । संको. १०८

[3]न वैधृतौ व्यतीपाते विष्ट्यां गण्डातिगण्डयोः ।
शूले वज्रे न परिघे बालान्नप्राशनं हितम् ॥

[4]शुक्रारज्ञाः क्रमाद्याताः सप्तमाष्टमधर्मभे ।
भोज्यभोक्तृनवत्वे तु सर्वदा मरणप्रदाः ॥

भोज्यमन्नं गोधूमादि तस्य नवत्वेन भक्षणीयत्वे सति भोक्तुः अन्नप्राशनकर्तुः बालस्य नवत्वे सति वा शुक्रः सप्तमः, भौमोऽष्टमः, बुधो नवमः एते ग्रहा मरणप्रदा इत्यर्थः । संव. ७५

[5]अनुक्तेऽपि च यत्स्थाने स्थितो जीवबलो ग्रहः ।
मित्रदृष्टः स्ववर्गे वा स्वतुङ्गे वाऽतिशोभनः ॥

(१) संप्र. २७०.

(२) प्रपा. १८७; संप्र. २७१ वायव्यवैष्णवाः (वैष्णववासवाः) तारकाः ह्येताः (च शुभा ह्येते); संको. १०८ संप्रवत्; संव. ७६-७७ संप्रवत्; संर. ८९२ वायव्य (वासव) वरुणश्चो (वारुणं चो) तृतीयार्धे (वायव्यं च शुभा ह्येतास्तारा अन्नाशने सदा ॥).

(३) संप्र. २७२; संको. १०८ हितम् (शुभम्); संग. ५८३.

(४) प्रपा. १८७ क्तृनवत्वे तु सर्वदा (क्त्रोर्नवे त्वेते सर्वथा); संव. ७५.

(५) प्रपा. १८७.

## गार्ग्यः

गुरुशुक्रास्तादौ मलमासे चान्नप्राशननिषेधः

‡[1]नामान्नप्राशनं चौडं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम् ॥

अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपाकर्ममुपारम्भं व्रतानां नैव कारयेत् ॥

## वृद्धगार्ग्यः

माघादिमासविधिः, श्रावणादिनिषेधः

[2]माघादिमासषट्के तु मेखलाबन्धनं मतम् ।
चूडाकरणमन्नं च श्रावणादौ विवर्जयेत् ॥

## कश्यपः

अन्नप्राशने वाराः लग्नानि च

[3]सूर्यार्किभौमवारांश्च त्यक्त्वाऽन्यस्मिंस्तु वासरे ॥

वारानाह कश्यपोऽन्नप्राशनं प्रकृत्य—सूर्यार्कीति । आर्किः शनिः । संर. ८९२

[4]जन्मराशिविलग्नाभ्यां नैधनेंऽशे च वर्जयेत् ॥

[5]गोश्विकुम्भतुलाकन्यासिंहकर्किमृगा यमः ।
शुभदा राशयश्चैते न मेषझषवृश्चिकाः ॥

अश्वीति धनुरुच्यते । संको. १०८

‡ अनयोर्व्याख्यानं जातकर्मविधिप्रकरणे 'आद्यजातक' इति स्मृत्यन्तरवचने (सं. का. पृ. २६४६) द्रष्टव्यम् ।

(१) संत. ८८५.

(२) संप्र. ३५५; सिन्धु. ९२९; विपा. ४७१ कालादर्शे; संको. ११९ पू.; संग. ६४४; पुम. ४३७ पू.; संर. १७० षट्के (षट्कं) बन्धनं (बन्धने) पू.

(३) संर. ८९२. (४) संव. ७५.

(५) प्रपा. १८७ गोश्वि (गोश्व) गा यमः (गाः समाः) तृतीयपादे (एते च राशयः शस्ता) अर्णवे; संसौ. ६८ मृगा यमः (नृयुग्मकाः) झष (वृष); संप्र. २७३ कर्किमृगा यमः (कर्कनृयुग्मकाः); ज्योनि. ११६ (गोश्वकुम्भास्तुला कन्या सिंहकर्किमृगा यमः । एताश्च राशयः शस्ता न मेषझषवृश्चिकाः ॥) मदनमहार्णवे; संको.

## अनिर्दिष्टकर्तृकवचनम्

अन्नप्राशने वाराः

$[1]शशिशुक्रे च मन्दाग्निः शनिभौमे बलक्षयः।
बुधार्कगुरुवारेषु प्राशनं हि शुभावहम्॥

## लल्लः

जन्मर्क्षनिषेधः जन्मतारयोर्विधिश्च

[2]हित्वैकं जन्मनक्षत्रं(?न्मर्क्षे) द्वे तारे जन्मसंज्ञिते शुभदे।
उद्वाहे चोप(?उप) नयने यात्रायामन्नभोजने क्षुरकार्ये॥

## कृत्यचिन्तामणौ

अन्नप्राशने निषिद्धतिथयः

[3]द्वादशीसप्तमीनन्दारिक्तासु पञ्चपर्वसु।
बलमायुर्यशो हन्याच्छिशूनामन्नभक्षणम्॥

## नृसिंहः

अन्नप्राशने नक्षत्राणि लग्नानि च, निशानिषेधः

[4]जन्मर्क्षे च दिने श्रेष्ठे निशायां नैव भोजयेत्।
उभयोः शुभदं प्रोक्तं कर्माधानर्क्षयोरपि॥
[5]मेषालिमीना वर्ज्याः स्युस्तथैवाधोमुखानि च॥

अधोमुखानीति सूर्याधिष्ठितराशय उच्यन्ते। तथा च संग्रहे– 'सूर्याधिष्ठितराश्युपक्रमतयाऽधस्तिर्यगूर्ध्वाननना।' इति। * प्रपा. १८७

---

$ अस्य व्याख्यानं 'वाचालो बलवान्' इति राजमार्तण्डवचने द्रष्टव्यम्।

* संप्र. प्रपावत्।

१०८ गोश्वि ( गोश्व ) मृगा यमः ( नृयुग्मकाः ); संग. ५८३ मृगा यमः ( नृयुग्मकाः ); संव. ७५ श्लोकः अशुद्धिबहुलः.

(१) संसौ. ६७ मन्दा ( मन्दोऽ ); संप्र. २७१.

(२) संसौ. ७७. (३) संत. ९२२.

(४) प्रपा. १८७ नैव ( न च ); संप्र. २७२; संग. ५८२.

(५) प्रपा. १८७; संप्र. २७३.

## भीमपराक्रमः

अन्नप्राशने नक्षत्राणि

[1]कुर्यादन्नप्राशनं मासि षष्ठे
पुंसां कन्यायाः पुनः पञ्चमे च।
आदित्यर्क्षे वासवे वैष्णवे वा
वर्गे यद्वा क्षिप्रमैत्रध्रुवाख्ये॥

## भुजबलभीमः

अन्नप्राशने पक्षतिथिवारनक्षत्रलग्नग्रहसंस्थानानि

[2]षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ
सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे।
प्राजेशादितिपौष्णवैष्णवयुगै-र्हस्तादिषट्कोत्तरै-
राश्नेयाप्पतिपित्र्यभेषु नितरा-मन्नादिभक्ष्यं शुभम्॥

युगैरिति प्राजेशादौ प्रत्येकं संबध्यते। संत. ९२२

वृषद्वन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम्।
त्रिकोणाद्ययुगान्तेषु ग्रहा यद्यत्तथा फलम्।
दुष्टः शशधरो लग्नात्षष्ठाष्टस्थोऽन्नभक्षणे॥

## माधवीये

अन्नप्राशने नक्षत्राणि लग्नानि च

[3]आद्ये जन्मनि नव्यभुक्तिवसना-लंकारपुण्यैर्विना
सर्वं कर्म शुभाशुभं परिहरे-द्भुक्तिं नवां चार्कभे।
हित्वाऽभ्यङ्गविधिं निषेधसहितं क्षौरं च शिष्टं शुभं
कार्यं चैवमुशन्ति केचिदृषयो जन्मर्क्षयोरन्ययोः॥

---

(१) संसौ. ६५.

(२) संत. ९२१–९२२. (३) प्रपा. १८७.

अष्टौ भुक्तिषु राशयोऽत्र शुभदा
वीणाधरो मध्यमो
मीनः सद्ग्रहसंगमेक्षणयुतो
ग्राह्योऽन्यथा निन्दितः ।
कीटाजावशुभौ युतावशुभदैः
शस्ताः शुभस्यांशुके
द्रेक्काणाभ्युदयोपगो हिमरुचि-
र्मध्याः परस्ताच्छुभाः ॥

### श्रीपतिः

अन्नप्राशने वाराः ग्रहसंस्थानं च

[1]रवौ लग्ने कुष्ठी धरणितनये
पित्तगदभाक्
शनौ वातव्याधिः कृशशशिनि
भिक्षाटनकरः ।
बुधे ज्ञानी भोगी ह्युशनसि
चिरायुः सुरगुरौ
विधौ पूर्णे यज्वा भवति च नरः
सत्रद इह ॥

कण्टकान्त्यनिधनत्रिकोणगा-
स्तत्फलं ददति यत्तनावमी ।
षष्ठ इन्दुरशुभस्तथाऽष्टमः
केन्द्रकोणगतसौरिरग्रहत् ॥

### राजमार्तण्डः

अन्नप्राशने पक्षवारलग्नग्रहसंस्थानानि

[2]षष्ठे मासि शुभे चन्द्रे पक्षे चाप्यसितेतरे ।
अन्नस्य प्राशनं कुर्याद्दिवैव प्रथमं शिशोः ॥

(१) ज्योनि. ११७.

(२) संसौ. ६५ चाप्य ( वाऽप्य ) ; संप्र. २६९.

[1]बाचालो बलवान् दिने दिनपते-
रत्यन्तदीप्तानलो
देही हीनहुताशनः शिशिरगौ
कौजे रुजा पीडितः ।
बौधे भोगसुखं प्रियोऽनवरतं
जीवे चिरायुः सुखी
शुक्रे चातिबलान्वितोऽतिमलिनो
मन्दे च मन्दानलः ॥

( १ ) अत्र सोमवासरनिन्दा क्षीणचन्द्रविषयेति बोद्धव्यम् । तथा च– 'शशिशुक्रे च मन्दोऽग्निः शनिभौमे (च?) बलक्षयः । बुधार्कगुरुवारेषु प्राशनं हि शुभावहम् ॥' इत्यप्रसिद्धमूलकत्वादुपेक्ष्यम् । $ संसौ. ६७

( २ ) शिशिरगुः सोमवारः । कौजः भौमवारः ।
संको. १०८

[2]क्षुद्रोगवान्प्रथमभुक् प्रथमे विलग्ने
मन्दानलो घटतुलालिकुलीरमेषु ।
श्यावाशनो मृगमृगाधिपकार्मुकेषु
मीनाङ्गनामिथुनगोषु वरान्नभोगी ॥

श्यावाशनः कदन्नभुक् । क्षुद्रोगवान् भस्मकाख्यरोगयुक्तः । $ संसौ. ६८

[3]लाभत्रिषष्ठभवनोपगतास्त्वसौम्याः
सौम्यग्रहा नवमपञ्चमकण्टकस्थाः ।
लग्नेषु दैत्यसचिवज्ञबृहस्पतीना-
मन्नोपभोगकरणैर्विविधोपभोक्ता ॥

$ संप्र. संसौवत् ।

(१) संसौ. ६७ हीन ( मान ) ; संप्र. २७१ ; संको. १०८ मार्तण्डः .

(२) संसौ. ६८ ; संप्र. २७३.

(३) संसौ. ७० ( सौम्य० ) ; संप्र. २७४ ; संको. १०८ ; संग. ५८४.

(१) अत्र गुरुशुक्रविधानं वृषमीनमात्रविषयम्, धनुस्तुलयोरनिष्टफलताभिधानात्। गुणवद्विहितलग्नाभावे सति उक्तगुणापेक्षया वा विधानमूहनीयम्।

§ संसौ. ७०

(२) कण्टकशब्देन प्रथमचतुर्थसप्तमदशमस्थानानि केन्द्रपदवाच्यान्युच्यन्ते। संकौ. १०८

[1]सौम्यामरेज्यभृगुनन्दनवासरेषु
लग्नेषु लग्नपतिसौम्यनवांशकेषु।
नीचोद्भवोऽपि भवति प्रथमान्नभोजी
भोक्ता वरान्नकुसुमाम्बरकामिनी-
नाम्॥

## श्रीधरीये

अन्नप्राशने तिथिवारनक्षत्रलग्ननवांशग्रहसंस्थानानि

[2]आदित्यतिष्यवसुसौम्यकरानिलाश्वि-
चित्राजविष्णुवरुणोत्तरपौष्ण-
मित्राः।
बालान्नभोजनविधौ दशमे विशुद्धे
छिद्रां विहाय नवमीं तिथयः
शुभाः स्युः॥

(१) एतानि षोडशनक्षत्राणि बालान्नप्राशने शुभदानि। १८६–१८७

अथ तिथयोऽभिधीयन्ते–छिद्रामित्यादिना। छिद्राः द्वितीयादशमीव्यतिरिक्ताः युग्मतिथयः। तथोक्तं कालनिर्णये– 'युग्माश्च तिथयः सर्वा अजधर्मतिथी विना। पक्षच्छिद्रा इति ज्ञेयाः' इति। ताश्च नवमीं विहाय शेषास्तिथयो बालान्नभोजने शुभदाः। १८७

दशमे विशुद्ध इति। सर्वग्रहरहिते इत्यर्थः।

प्रपा. १८७–१८८

§ संप्र. संसौवत्।

(१) संसौ. ७०; संप्र. २७४–२७५.

(२) प्रपा. १८६; गमा. १८०; सिन्धु. ९१४; विपा. ४४६; पुम. ४३६; संर. ८९२.

(२) आदित्यं पुनर्वसू। वसवः श्रविष्ठाः। सौम्यं मृगशिरः। करः हस्तः। अनिलः स्वाती। अजः ब्रह्मा, तन्नक्षत्रं रोहिणी। विष्णुः श्रवणः। वरुणः शततारकाः। उत्तराशब्देनोत्तरात्रयम्। पौष्णं रेवती। मित्रः अनूराधाः। अन्यत् प्रसिद्धम्। संर. ८९२–८९३

[1]वारांशकाश्च गुरुशुक्रशशीन्दुजानां
मेषालिमीनरहितानि शुभानि भानि।
भुक्तौ शिशोः शुभकराः परिहृत्य सौम्यं
भौमं सितं नवमनैधनसप्तमेषु॥

अत्र शशीत्यनेन कृष्णपक्षान्त्यत्र्यंशव्यतिरिक्ते काले चन्द्रवार उच्यते, अस्मिन् काले तस्य निषिद्धत्वात्। अथ राशयोऽभिधीयन्ते– [$ मेषालिमीनवर्जितानि नव क्षेत्राणि बालान्नप्राशने शुभानि।] अथ लग्नगोचरमाह –भुक्तावित्यादिना पूर्वश्लोके 'दशमे विशुद्धे' इत्यनेन (च)। लग्नान्नवाष्टमसप्तमेषु क्रमेण स्थितं बुधं भौमं सितं च वर्जयित्वा शेषाः शुभदा भवन्ति।

प्रपा. १८७

## अर्णवे

अन्नप्राशने ग्रहसंस्थानम्

[2]दशमस्थान् ग्रहान्सर्वान्विवर्जयेन्मतिमान्नरः।
अन्नप्राशनकृत्येषु मृत्युक्लेशभयावहान्॥

## ऋक्षोच्चये

अन्नप्राशने वारा नक्षत्राणि च

[3]हस्तो विशाखाश्विमघार्द्रमूल-
स्वातीन्दुचित्रादितिविष्णुपूषा।
शस्तोऽन्नपाने प्रथमे शिशूनां
वारेषु सूर्येन्दुबृहस्पतीनाम्॥

$ आदर्शपुस्तके ग्रन्थोऽयमेवं कंसचिह्ने मुद्रितः।

(१) प्रपा. १८७; पुम. ४३६ शुभा (हिता).

(२) प्रपा. १८८; संप्र. २७५; संग. ५८४ कृत्ये (कार्ये).

(३) संसौ. ६६ शस्तोऽन्न (शस्तान्न); संप्र. २७१.

## महेश्वरः

अन्नप्राशने ग्रहसंस्थानम्

[1]सूर्ये केन्द्रमृतिव्ययात्मजगते
धर्मे च कुष्ठी भवे-
द्भौमे पित्तरुजाऽन्वितोऽनिलरुजा
युक्तस्तु सूर्यात्मजे ।
क्षीणे शीतकरे तु भैक्ष्यभुगिति
प्रोक्तं च रिक्ते तिथौ
सौम्ये ज्ञानयुतो विधौ मखकरः
पूर्णे तु सत्रप्रदः ॥
गुरौ चिरायुर्भृगुजेऽथ भोगी
कोणस्त्रिकोणाद्यखलस्तसंस्थः ।
बन्धुस्थितश्चान्नहरोऽथ षष्ठो
मृत्युस्थितो मृत्युकरः शशाङ्कः ॥

कोणः शनिः । ‡ संसौ. ७०

## ज्योतिरर्णवे

अन्नप्राशने नक्षत्राणि

[2]संपत्साधनमित्रेषु क्षेमे परममित्रभे ।
भोजयेच्छुभवृद्ध्यर्थं कर्माधानर्क्षयोरपि ॥

[3]शेषर्क्षा वर्जिता जन्मविपत्प्रत्यरिनैधनाः ।
जन्मर्क्षं वर्जयेद्विद्वान् विशेषेण विनाशकृत् ॥

[4]जन्मर्क्षे श्रीक्षयं विद्यात् कर्मर्क्षे चापि सौख्य-
कृत् ।
आधानर्क्षे च बालानां भोजनं रोगनाशनम् ॥

‡ संप्र., संग. संसौवत् ।

(१) संसौ. ६९–७०; संप्र. २७४; संग. ५८४.

(२) प्रपा. १८७; संप्र. २७२ साधन (स्याद्धन).

(३) प्रपा. १८७ प्रत्यरि (प्रत्यर); संप्र. २७२.

(४) प्रपा. १८७ श्रीक्षयं विद्यात् (स्त्रीक्षयं विन्द्यात्); संप्र. २७२; ज्योनि. ११६ कर्मर्क्षे (कर्मर्क्ष) ज्योतिर्विवरणे; संकौ. १०८ चापि सौ (चातिसौ) भोजनं (भोजने); संग. ५८२–५८३ विद्यात् (विन्द्यात्) नृसिंहः; संर. ८९३ सौख्यकृत् (सौम्यदक्).

जन्मभादीनां स्वरूपमुक्तं संग्रहे– 'जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञितम् । एकोनविंशमाधानं त्रयोविंशं विनाशनम् ।' इति । $ संप्र. २७२

## मुहूर्तचिन्तामणिः

अन्नप्राशने तिथिवारनक्षत्रलग्नग्रहसंस्थानानि

[1]रिक्तानन्दाष्टदर्शं हरिदिवसमथो
सौरिभौमार्कवारां-
ल्लग्नं जन्मर्क्षलग्नाष्टमगृहलवगं
मीनमेषालिकं च ।
हित्वा षष्ठात्समे मास्यथ हि मृगदृशां
पञ्चमादोजमासे
नक्षत्रैः स्यात्स्थिराख्यैः समृदुलघुचरै-
र्बालकान्नाशनं सत् ॥

अथान्नप्राशनमुहूर्तं स्रग्धरयाऽऽह– रिक्तेति । अथो-शब्दो मध्ये पठितोऽपि पद्यादौ ज्ञेयः । अथो अनन्तरं निष्क्रमणानन्तरमेवंविधे काले बालानाम[म]न्नाशनं प्रथम-भोजनं सत् शुभफलदायि स्यादित्यन्वयः । तत्रैते वर्ज्यपदार्थाः– रिक्ताः ४।९।१४, नन्दाः १।६। ११, अष्ट ८, दर्श ३०, हरिदिवसं द्वादशी १२, एतास्तिथीर्हित्वा । उपलक्षणत्वात् तिथिक्षयं च । तथा सौरिभौमार्कवारांश्च हित्वेत्यर्थः । ...... लग्नमिति । जन्मर्क्षलग्ने जन्मराशिजन्मलग्ने, ताभ्यामष्टमगृहम् अष्टम-लवः अष्टमनवांशश्च, तौ गच्छति प्राप्नोतीत्येवंविधं लग्नं हित्वा । जन्मराशिजन्मलग्नाभ्याम् अष्टमनवांशं च त्यजे-दित्यर्थः । ... तथा मीनमेषालिकं च मीनमेषवृश्चिकलग्नानि हित्वा । ... एवमनेककालाभिधाने कस्मिन्कालेऽन्नप्राशनं विधेयमिति संदेहः– किं समबलत्वात्सर्वेऽपि मुख्या एव कालाः, उत कश्चिन्मुख्यगौणभावः? इति । अत्र ब्रूमः – स्वस्वगृह्ये विशिष्य कालोऽन्नप्राशने उक्तः स मुख्यः । तत्र गुरुशुक्रास्तादिविचारं विनैव विधेयम् । इतरेषु

$ संकौ., संर. संप्रवत् ।

(१) मुचि. ५।१७–२०; संब. ७४–७६.

गौणकालेषु विहितकालाननुष्ठाने सति निर्दोषे काले हि विधेयम्। यत्र स्वगृह्ये क्वचिद्विशिष्य कालो नाभिहितस्तत्र सर्वेषां सांहितिककालानां तुल्यबलत्वाद्विकल्पो भवति। तत्रापि सदोषं कालं विहाय निर्दोषे कालेऽन्नप्राशनं विधेयमिति फलितोऽर्थः। तत्रापि शुक्लपक्षे पूर्वाह्णे विधेयम्, 'शुक्लपक्षे च पूर्वाह्णे' इति नारदोक्तेः। नक्षत्रैरिति। मृदुगणलघुगणचरगणयुतैः स्थिराख्यैर्नक्षत्रैर्बालकान्नप्राशनं स्यात्। · § पीटी.

केन्द्रत्रिकोणसहजेषु शुभैः खशुद्धे
लग्ने त्रिलाभरिपुगैश्च वदन्ति पापैः।
लग्नाष्टषष्ठरहितं शशिनं प्रशस्तं
मैत्राम्बुपानिलजनुर्भमसच्च
केचित्॥

लग्नबलमाह– केन्द्रेति। अत्र यद्यपि केन्द्रशब्देन दशममपि स्थानमुच्यते तथाऽपि न गृह्यते, 'खशुद्धे लग्ने' इति वक्ष्यमाणत्वात्। एवं सति केन्द्राणि १।४।७, त्रिकोणं ९।५, सहजं ३, एषु स्थानेषु स्थितैः शुभग्रहैः, तथा त्रि ३ लाभ ११ रिपु ६ गैः पापग्रहैश्चोपलक्षिते लग्ने खशुद्धे दशमशुद्धिसहिते सर्वग्रहरहिते इति यावत्। एवंविधे लग्ने लग्नाष्टषष्ठस्थानरहितम् अर्थादन्यस्थानस्थितं शशिनं प्रशस्तं वदन्ति। मुनय इति शेषः। ... अत्र लग्नस्थचन्द्रनिषेधः क्षीणचन्द्रविषयः। ... मैत्रेति। मैत्राम्बुपानिलाः अनुराधाशततारकास्वात्यः असत्यः निषिद्धाः इति केचिदाहुरिति परमतेनोपन्यासः। § पीटी.

क्षीणेन्द्रपूर्णचन्द्रेज्यज्ञभौमार्कार्किभार्गवैः।
त्रिकोणव्ययकेन्द्राष्टस्थितैरुक्तं फलं ग्रहैः॥
भिक्षाशी यज्ञकृद्दीर्घजीवी ज्ञानी च पित्तरुक्।
कुष्ठी चान्नक्लेशवातव्याधिमान् भोगभागिति॥

अथ ग्रहाणां स्थानवशात् फलान्यनुष्टुप्छन्दोभ्यामाह– क्षीणेन्द्विति। त्रिकोणं ९।५, व्ययः १२, केन्द्राणि १।४।७ दशमरहितानि, अष्ट ८, एषु स्थानेषु स्थितैः क्षीणेन्द्वादिभिरष्टभिर्ग्रहैः भिक्षाशीत्यादिकं फलं य( ?या )थासंख्येनोक्तम्। मुनिभिरिति शेषः। यथा एषु स्थानेषु स्थितः क्षीणचन्द्रश्चेत्तदाऽन्नप्राशनकृत् बालो भिक्षाशी दरिद्रः स्यात्। तथा पूर्णचन्द्रः एतत्स्थाने स्थितश्चेत् तदा ज्योतिष्टोमयज्ञकृत्। एवम् इज्यः गुरुः चेत् दीर्घजीवी। ज्ञः बुधः चेत् ज्ञानी स्यात्। भौमश्चेत् पित्तरुक् पित्तकृता रुक् यस्यासौ पित्तरुक्। अर्कश्चेत् कुष्ठी स्यात्। आर्किः शनिः चेत्तदा अन्नाभावसंबन्धी क्लेशः अन्नक्लेशः, वातप्रधानो व्याधिः वातव्याधिः, एतौ विद्येते यस्यासौ अन्नक्लेशवातव्याधिमान् स्यात्। उपलक्षणत्वात् राहुकेत्वोरप्येतत् फलं द्रष्टव्यम्। भार्गवः शुक्रः चेत्तर्हि भोगभाक् स्यादित्यर्थः। ¶ पीटी.

## मुहूर्तसंग्रहे

अन्नप्राशने लग्नं ग्रहसंस्थानं च

[1]बुधशुक्रेनजीवाः स्युर्व्ययलग्नायकेन्द्रगाः।
शुभांशे शीतगौ भोक्तुर्दद्युरायुः श्रियं शुभाम्॥

इनः सूर्यः। § प्रपा. १८८

[2]निधनभवनलग्ने भोजनं पौष्टिकानि
क्षितिपतिकुलसेवां सांपराय-
प्रयोगम्।
रथतुरगगजेन्द्रारोहणं शस्त्रशिक्षा-
मपि शुभकरमन्यद्वर्जयेज्जीवितार्थी॥

अस्यार्थः– निधनभवनलग्नं स्वलग्नादष्टमलग्नम्। तस्य मृत्युरिति नाम। तत्तु वधनक्षत्रवत् स्वभावादेव मृत्यु-

§ संव. पीटीवत्।

¶ संव. पीटीवत्।

§ संप्र., संग. प्रपावत्।

(१) प्रपा. १८८ गौ भो ( गुर्भो ); संप्र. २७५ शुभाम् ( शुभम् ); संग. ५८४ संप्रवत्, अर्णवे.

(२) प्रपा. १८८; संप्र. २७५.

कृत् भवति। तस्मात् भोजनादीनि शस्त्रशिक्षान्तानि कर्माणि अष्टमराशौ जीवितार्थी पुरुषो वर्जयेत्, अन्यदपि शुभकरं कर्म तत्र वर्जयेदित्यभिप्रायः।

§ प्रपा. १८८

## दीपिकायाम्

अन्नप्राशने तिथिवारनक्षत्रलग्नग्रहसंस्थानानि

[1]पूर्वेशान्तकसर्पमूलरहितेष्वृक्षे-
ष्वरिक्ते तिथौ
षष्ठे मासि सितेन्दुजीवदिवसे गोकर्क-
मीनोदये।
केन्द्राद्यान्त्यत्रिकोणभैः शुभगतैस्तैरेव
पापोज्झितै-
र्हित्वेन्दुं रिपुरन्ध्रगं शिशुजनस्यान्ना-
शनं शोभनम्॥

## मुहूर्तगणपतौ

अन्नप्राशने नक्षत्राणि लग्नानि च

[2]रेवतीद्वितये पुष्ये पुनर्वस्वनुराधयोः।
श्रवणादित्रये हस्तत्रितये रोहिणीमृगे॥

उत्तरासु शुभे लग्ने मीनमेषालिमिन्नमे।
नेत्येके शतभिक्स्वातावनुराधाद्यजन्मभे॥

§ संप्र. प्रपावत्।

(१) विपा. ४४७.

(२) संब. ७६.

## शौनककारिकाः

शोभनमुहूर्तेऽन्नप्राशनम्

[1]जन्मप्रभृति षष्ठेऽस्य मासेऽन्नप्राशनं शिशोः।
प्रशस्तेऽहनि मौहूर्तविहिते शोभनेऽपि च॥

मुहूर्ते...... ॥

## रेणुकारिकाः

अन्नप्राशने वारवर्गनक्षत्रग्रहसंस्थानानि

[2]षष्ठे पुंसः पञ्चमे सप्तमे वा
स्त्रीणामन्नप्राशनं मासि सौम्यैः।
वारैर्वर्गैः क्षिप्रमैत्रध्रुवाख्यै-
र्धिष्ण्यैर्दैत्या(? ष्ण्येऽदित्या) वैष्णवे
वासवे च॥

कुष्ठी लग्ने स्थितेऽर्के स्यात् पित्तरोगी कुजे
भवेत्।
वातरुग्भानुजे चन्द्रे भिक्षाशी स्यात्स नीचगे॥

रिक्तायां च तिथौ तज्जन्मतिथ्यन्द्रेऽष्टमेऽरिगे।
केन्द्रत्रिकोणगो मन्दो विज्ञेयोऽन्नहरो बुधैः॥

(१) शौका. १-२ पृ. ३९ हूर्तवि (हूर्ते वि); प्रपा. १८८ षष्ठेऽस्य मा (षष्ठे स्यान्मा) शेषं शौकावत्; संप्र. २७५.

(२) रेका. १-३ पृ. १४-१५.

# अन्नप्राशनप्रयोगः

## बौधायनगृह्यसूत्रम्

पुण्याहवाचनम्, होमः, दध्यादिमिश्रान्नप्राशनम्

**[१]ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वा ॥**

**अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वाऽन्नसूक्तेन जुहोति— 'अहमस्मि प्रथमजा ऋतस्य' इत्यष्टाभिरनुच्छन्दसम् ॥**

**जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥**

**अथौदनं दध्ना मधुना घृतेनाद्भिरिति समुदायुत्य हिरण्येनौषधस्य कुमारं प्राशयति— 'या जाता ओषधयः' इति षड्भिरनुच्छन्दसम् ॥**

**'भूर्भुवः सुवरपां त्वौषधीनां रसं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयः सन्त्वसौ' इति सर्वास्वनुषजति ॥**

## आश्वलायनगृह्यसूत्रम्

दध्यादिमिश्रान्नप्राशनम्

**[२]दधिमधुघृतमिश्रमन्नं प्राशयेत्— 'अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥' इति॥**

(१) 'अन्नपते' इत्ययं प्राशनमन्त्रः। तत्र किमयं प्राशनमन्त्रः *अनन्तरे एव प्राशने भवति, आहोस्वित् सर्वेषु प्राशनेष्विति। तत्र अनन्तरविधानात् तत्रैव प्राप्नोति। नेत्युच्यते। सर्वत्र संभवति। यथा अन्नमिह विहितं सर्वेषु भवति तद्वद् भविष्यति। किं पुनः कारणमिहाऽऽम्नातमन्यत्र भवतीति। नित्यमिदं प्राशनम्। पूर्वेण च कामसंयोगो विधीयते। कामसंयुक्तआर्थंभोज्यमानो नित्यं तावत्तिष्ठति। तेन व्यञ्जनकामसंयोगेन योज्यमानं व्यञ्जनमेवाधिकरोति। यदन्यत्सर्वं नित्यवदेव तद् भवति। तेन मन्त्रश्च ओदनश्च सर्वत्र भवतीति सिद्धम्। एवं ब्रुवतो दोषः— यत्र व्यञ्जनमोदनं चोपदिश्येते तत्र मन्त्रो न प्राप्नोति। यथा 'घृतौदनं तेजस्कामः' इति। प्राप्नोतीत्युच्यते। कस्मात्? तुल्यत्वात्। कामसंयोगस्य परो न व्यञ्जनधर्मो भवति। स उपदेशोऽन्नस्य प्राप्नोति, प्राशने विहितत्वात्। तेन यत्र प्राशनं तत्र मन्त्रः। घृतौदनं तेजस्कामसंयोगेन दृष्टम्। तस्माद् भवति।

देवा.

(२) अकामसंयोगेन दध्यादिमिश्रमन्नं प्राशयेत् 'अन्नपतेऽन्नस्य नो' इति मन्त्रेण। अयं मन्त्रः सर्वप्राशनेष्वपि भवति। कुतः? प्राशनसहितत्वात् मन्त्रस्य, 'प्राशयेत्' इत्यस्य च सर्वशेषत्वात् 'आज्यं प्राशयेत्' इत्यादि।

¶ गाना॰.

## कौषीतकिगृह्यसूत्रम्

होमः, कुमारस्याभिमन्त्रणमुपवेशनं च, दध्यादिमिश्रान्नप्राशनम्, मात्रा शेषस्य प्राशनम्

**[१]दधिमधुघृतमिश्रमन्नं प्राशयेत् ॥**

**[२]'अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥, यच्चिद्धि, महश्चित्, इममग्न आयुषे वर्चसे तिग्ममोजो वरुण सोम राजन्। मातेवास्मा अदितिः शर्म यंसद्विश्वे देवा जरदष्टिर्यथाऽसत् ॥' इति हुत्वा ॥**

---

* अनन्तरशब्देन दध्यादिमिश्रान्नप्राशनं विवक्षितम्। तेन सह आज-तैत्तिर-घृतौदनप्राशनानि कामसंयोगेन पूर्वं विहितान्यग्रिमसर्वशब्देन विवक्ष्यन्ते।

(१) **बौगृ.** २।३।२-६.

(२) **आगृ.** १।१६।५; **प्रपा.** १८८; **संप्र.** २७६ (अनमीवस्य ... इति॰); **संम.** १८ (अन्नपते ... इति॰); **संर.** ८९३ संमवत्.

¶ अना., प्रपा., संप्र. गानावृवत्।

(१) **कौगृ.** १।२७।६; **ब्रक.** ९४; **संप्र.** २७७.

(२) **कौगृ.** १।२७।७-११.

**‘अग्न आयूंषि’ इत्यभिमन्त्र्य ॥**

**उदगग्रेषु कुशेषु ‘स्योना पृथिवि भव’ इत्युपवेश्य ॥**

**महाव्याहृतिभिः प्राशनम् ॥**

**शेषं माता प्राश्नीयात् ॥**

लौकिकेऽग्नौ गृहाभ्यन्तरमेव कुर्यात् । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततः ‘अन्नपतेऽन्नस्य... द्विपदे चतुष्पदे स्वाहा ॥’, ‘यच्चिद्धि ते पुरुषत्राय’ इत्यृक्, ‘मह्श्चिदग्न एनसो अभीक’ इत्यृक्, ‘इममग्न आयुषे वर्चसे तिग्ममोजो वरुण सोम राजन् । मातेवास्मा अदितिः शर्म यंसद्विश्वे देवा जरदष्टिर्यथाऽसत् स्वाहा ॥’ एतैश्चतुर्भिर्मन्त्रैः स्वाहाकारान्तैश्चतस्र आहुतीर्हुत्वा ततः ‘अग्न आयूंषि पवसे’ इत्यनेन मन्त्रेण कुमारकमभिमन्त्र्य ‘स्योना पृथिवि (नो?) भव’ इत्यनेन मन्त्रेण ऊर्ध्वाग्रेषु कुशेषु प्राङ्मुखमुपवेश्य दधिमधुघृतमिश्रमन्नं महाव्याहृतिमिश्चतसृभिः प्रतिमन्त्रं चतुः प्राशयेत् । अपरे त्वेवं वर्णयन्ति— ‘महाव्याहृतिभिस्त्रिः प्राशयेत्’ इति । एतत्तावन्नित्यं शरीरसंस्कारकम् । इत्येवमन्नप्राशने कृते पाक्षिकः स्विष्टकृत् । ततो महाव्याहृतिसर्वप्रायश्चित्तादिके कर्मशेषे कुमारस्य माता प्राश्नीयात् ।

कौगृसं.

## आपस्तम्बगृह्यसूत्रम्

ब्राह्मणभोजनम्, आशीर्वाचनम्, दध्यादिमिश्रान्नप्राशनम्, अन्नविषये मतान्तरम्

**... [1]ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा दधि मधु घृतमोदनमिति संसृज्योत्तरैर्मन्त्रैः कुमारं प्राशयेत् ॥**

(१) तत्करिष्यन् ब्राह्मणान् भोजयित्वा युग्मान् तैराशिषो वाचयति— ‘पुण्याहं स्वस्ति ऋद्धिम्’ इति । नात्र पूर्वेद्युरभ्युदयश्राद्धम्, देवेज्याभावात् । यत्रापरेद्युर्देवेज्या तत्र पूर्वेद्युः पितृभ्यः क्रियते, ‘तस्मात् पितृभ्यः पूर्वेद्युः क्रियते । उत्तरमहर्देवान् यजते’ इति वचनात् । वाचयित्वाऽऽशिषः दध्यादिचतुष्टयं संसृज्य तेन कुमारं प्राशयेत् उत्तरैर्मन्त्रैश्चतुर्भिः ‘भूरपां त्वा’ इत्यादिभिः । ‘त्वौषधीनाम्’ इति मध्यमयोरनुषजति । ‘अपाम्’ इत्यस्य तु पाठो मन्त्रचतुष्टयप्रज्ञापनार्थः । असावित्यत्र नामग्रहणं संबुद्धया ‘ओषधयः सन्तु यज्ञशर्मन्’ इति । प्रतिमन्त्रं प्राशनम् । सर्वान्ति इत्यन्ये । ‘कुमारम्’ इति वचनात् कुमार्या विधिवदन्नप्राशनं न भवति, ‘आवृतैव कुमार्यै’ इत्याश्वलायनवचनात् ।

अनाकुला.

(२) कुमारं सकृदेव प्राशयेत् । §तात.

**[1]तैत्तिरेण मांसेनेत्येके ॥**

तित्तिरेः पक्षिणः मांसेन तदन्नप्राशनं कर्तव्यमित्येके आचार्या मन्यन्ते । मांसं व्यञ्जनमोदनस्य । अन्ये तु मांसमेव मन्त्रवत् प्राश्यं मन्यन्ते । मांसग्रहणं शोणितादेः प्रतिषेधार्थम् ।

अनाकुला.

## हिरण्यकेशिगृह्यसूत्रम्

होमः, मतान्तरेणोपहोमाः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, दध्यादिप्राशनम्, अन्नप्राशनम्

**... [2]अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति— ‘इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम्’ इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य ‘पुण्याहं स्वस्त्ययनमृद्धिम्’ इति वाचयित्वा ॥**

पुण्याहादिवाचनान्तं कृत्वा । मातृद.

---

(१) आपगृ. १६।१ ; मुक्ता. ८२–८३.

§ शेषमनाकुलागतम् ।

(१) आपगृ. १६।२.

(२) हिगृ. २०।१।३९ ; संप्र. २७७ (अग्निमुप... पुरस्तात्०).

[1]'अथैनं दधि मधु घृतमिति त्रिवृत् प्राशयति– 'भूस्त्वयि दधामि भुवस्त्वयि दधामि सुवस्त्वयि दधामि' इति ॥

(१) अनन्तरमेनं कुमारं दधि मधु घृतमिति त्रिवृत् प्राशयति 'भूस्त्वयि दधामि' इत्येतैर्मन्त्रैः ।

मातृवृ.

(२) त्रिवृत् त्रिरावृत्तम् । संप्र. २७८

अथैनमन्नं प्राशयति– 'अपां त्वौषधीनां रसं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयो भवन्तु' इति ॥

अथेत्यानन्तर्यवचनं पूर्वस्यैतदङ्गत्वायेदं प्रधानकर्मेति । तेनेदमर्थप्राप्तत्वात् स्त्रिया अप्यस्ति, न मन्त्रपूर्वम् । एनमिति वचनं स्त्रिया मन्त्रनिवृत्त्यर्थम् । अनन्तरं त्रिवृत्प्राशनात् एनम् अन्नं मांसादिव्यञ्जनसहितमोदनं प्राशयति । अत्राथशब्दस्त्रिवृदन्नप्राशनयोः परस्परसंबन्धार्थः । तेन स्त्रिया अपि त्रिवृत्प्राशनम् । अत्राप्येनमिति स्त्रिया मन्त्रनिवृत्त्यर्थम् । समासमन्नप्राशनम् ।

मातृवृ.

## मानवगृह्यसूत्रम्

होमः, अन्नप्राशनम्, जीविकापरीक्षा, ब्राह्मणभोजनम्, दक्षिणा

[2]'पयसि स्थालीपाकं श्रपयित्वा स्नातमलंकृतमहतेन वाससा प्रच्छाद्य 'अन्नपतेऽन्नस्य नो देहि' इति हुत्वा हिरण्येन प्राशयेत् 'अन्नात्परिस्रुतः' इत्यृचा ॥

पयसि स्थालीपाकमित्यादि व्याख्यातम् । स्नातमलंकृतमिति । स्नानं सर्वौषध्यादिसंयुक्तेन वारिणा । अलंकृतं सुवर्णादिमयेन मुकुटादिना । अलंकरणस्योपलक्षणत्वात् स्रगनुलेपनादि कार्यम् । अहतेन नवेन वाससा प्रच्छाद्य प्रावृत्य 'अन्नपते' इत्यनेन स्थालीपाकं चतुरवत्तं कृत्वा पञ्चावत्तं वा, जुहोति । 'अनादिष्टदेवतेष्वग्निम्' (मागृ. २।१०।८) इत्यग्निमात्रवर्णितत्वात् देवताया आदेशनं सर्वत्र चायं न्याय्यं न्यायाद्द्रष्टव्यम् (?) । यत्र मन्त्रोपदेशस्तत्र मन्त्रवर्णकी(? मान्त्रवर्णिकी) देवता न । यत्र 'प्राजापत्यं ... स्थालीपाकम्' (मागृ. १।१४।११) इत्यादौ तद्धितेनोक्ता तत्र सैव देवता । यत्र चतुर्थ्यादिनिर्दिष्टा 'अग्नये स्वाहा' (मागृ. २।२।१८) इत्यादौ तत्र सैव देवता (तत्र ?) चतुर्थ्यां निर्दिष्टा । अत्रानिर्दिष्टदेवतास्थितिर्ज्ञेया । हिरण्येन हिरण्मयेन कलापेन भोजयेदित्यर्थः । हिरण्मय्यां च पात्र्यां हविःशेषं ब्राह्मणोऽन्यस्य हविःशेषेणाधिकारात् (?) । 'अन्नात् परिस्रुतः' इत्यनेन मन्त्रेण । अष्टाभा.

रत्नसुवर्णोपस्कराण्यायुधानि दर्शयेत् ॥

यदी(? यदि)च्छेत्तदुपसंगृह्णीयात् ॥

ततो ब्राह्मणभोजनम् ॥

वासो दक्षिणा ॥

## भारद्वाजगृह्यसूत्रम्

जातकर्मान्तर्गतमेधाजननीयप्राशनकल्पातिदेशः, व्याहृतिभिस्त्रिः प्राशनमिति विशेषः

[1]'तस्य स एव प्राशनकल्पो यो मेधाजनने । एतावन्नाना । 'भूः' इत्यग्रे प्राशयति, 'भुवः' इति द्वितीयम्, 'सुवः' इति तृतीयम् ॥

## काठकगृह्यसूत्रम्

होमः, हविष्यान्नप्राशनम्

[2]'सर्वाणि हविष्यान्नानि संयूय 'आयुर्दा देव, घृतप्रतीकः' इति हुत्वा 'अन्नपते अन्नस्य' इत्येतयैव कुमारमन्नं प्राशयेत् ॥

(१) सर्वाणि हविष्यान्नानि मिश्रीकृत्य 'आयुर्दा देव' 'घृतप्रतीक' इति द्वाभ्यां हुत्वा 'अन्नपते अन्नस्य' इति मन्त्रेण कुमारमन्नं प्राशयेत् ।

'आयुर्दा देव जरसं वृणानो घृतं वसानो घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसं

(१) हिगृ. २।१।४०–४१ ; संप्र. २७७–२७८.
(२) मागृ. १।२०।२–६.

(१) भागृ. १।२७. (२) कागृ. ३९।२.

नयेमम् ॥ ' – हे अग्ने, गव्यं गोप्रभवम् अमृतम् अमृतत्वकारि चारु उत्कृष्टं घृतं पिबन् इमं बालं जरसं नय वृद्धत्वं प्रापय । क इव कम् ? पितेव पुत्रम् । हे देव द्योतमान, आयुर्दा आयुषो दाता त्वम् अतो जरसं जरां वृणानः वर्धयन् घृतं च वसानः आच्छादयन् वितरन् घृतपृष्ठः सन् हूयमानेनोपरिवर्तिना घृतेन युक्तः सन् जरसं नयेमम् ।

' घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम । घृतप्रुषो हरितस्त्वा वहन्तु घृतं पिबन् यजतादेव देवान् ॥ ' – त्रिष्टुप् । आग्नेयी । घृतं प्रतिकायति आह्वयति यः स घृतप्रतीकः । घृतपृष्ठो व्याख्यातः । घृतस्य आ समन्तात् हवनं होमो यत्र स घृताहवनः । तथा घृतमस्याग्नेः धाम गृहम् । यतस्त्वमेवंभूतोऽग्निः अतो हे भगवन् देव अग्ने, घृतप्रुषः घृतकणाः हरितः अश्वा इव त्वां वहन्तु प्राप्नुवन्तु आप्यायन्त्वित्यर्थः । त्वं च घृतं पिबन् हे देव, देवान् यज पूजय प्रीणीहि । अग्निद्वारेण हि देवानां तृप्तिर्भवति ।

' अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो दे( ? धे )हि द्विपदे चतुष्पदे ॥ ' – हे अन्नपते सोमराज, 'सोमो वा ओषधीनां राजा ' इति श्रुतेः । अन्नस्य नो देहि अन्नमस्मभ्यं प्रयच्छ । अनमीवस्य शुष्मिणः अमीवः रोगः तद्रहितम्, शुष्मं सुखं सुखकारि । प्रदातारं प्रतारिषः प्रकर्षेण तारय संसारसागरक्लेशमपसारयास्य । ऊर्जम् अन्नं बलं च नः अस्माकं दे( ? धे )हि द्विपदे चतुष्पदे च गवाश्वादिके । इत्यन्नप्राशनम् । देव.

( २ ) संयूय साधयित्वा । ...... ' अन्नपतये जुष्टं निर्वपामि ' इत्यत्रान्नप्राशने निर्वापः । आज्यभागान्ते ' आयुर्दा ' इति स्रुवेणाऽऽज्यस्य जुहोति, ' अन्नपते ' इति स्थालीपाकस्य । तत ऋतुतिथ्याद्याभावितान्तं संस्थाप्य सर्वान् रसान् सर्वमन्नं च एकत उद्धृत्य ' अन्नपते ' इत्यनयैव कुमारमन्नं प्राशयेत् । ब्राह्म.

## वाराहगृह्यसूत्रम्

छागमेषाभ्यां यजनम्, अन्नप्राशनम्

[1]**पुत्रवच्छागमेषाभ्यामिष्ट्वा दीर्घाणां व्याहृतिभिः कुमारं चतुः प्राशयेत् ' आयुर्दा देव ' इति च ॥**

## आग्निवेश्यगृह्यसूत्रम्

होमः, मतान्तरेणोपहोमाः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, दध्यादिप्राशनम्, अन्नप्राशनम्

[2]**अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति– ' इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, प्रजापते, यदस्य कर्मणोऽत्यरीरिचम् ' इति च । अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात् । ब्राह्मणानन्नेन परिविष्य ' पुण्याहं स्वस्त्ययनमृद्धिम् ' इति वाचयित्वा अथैनं दधि मधु घृतमिति त्रिवृत् प्राशयति– ' भूस्त्वयि ददामि, भुवस्त्वयि ददामि, स्वस्त्वयि ददामि, भूर्भुवः स्वस्त्वयि ददामि ' इति । अथैनमन्नं प्राशयति– ' अपां त्वौषधीनां रसं प्राशयामि । शिवास्त आप ओषधयो भवन्तु । अनमीवास्त आप ओषधयो भवन्तु ' इति ॥**

## पारस्करगृह्यसूत्रम्

होमः, सर्वरससहितान्नप्राशनम्, ब्राह्मणभोजनम्

[3]**स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति– ' देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा ' इति ॥ ' वाजो नो अद्य ' इति च द्वितीयाम् ॥**

( १ ) चशब्दात् पूर्वया च । कृभा.

( २ ) ' श्रपयित्वा ' इति सिद्धस्याऽऽसादनव्युदासार्थम् । द्वितीयां तु ' देवीं वाचम् ' इति चशब्दात् ' वाजो नः ' इत्येताभ्यां मन्त्राभ्यां जुहोति । जभा.

---

(१) वागृ. ३. (२) आग्निगृ. २।२।४.
(३) पागृ. १।१९।२–४.

(३) अन्नप्राशनस्येतिकर्तव्यताविशेषमाह– स्थालीपाकं चरुं यथाविधि श्रपयित्वा आघारावाज्यभागौ हुत्वा द्वे आहुती जुहोति । 'देवीं वाचम्' इत्यादि 'वाजो नो अद्य इति च द्वितीयाम्' इत्यन्तं सूत्रम् । आज्येन 'देवीं वाचम्' इत्यादिकया ऋचा एकामाहुतिं जुहुयात् । 'इदं वाचे' इति त्यागं विधाय चकारात् पुनः 'देवीं वाचम्' इत्येतस्यान्ते 'वाजो नः' । यथा 'देवीं वाचम्' इति 'वाजो नो अद्य' इति च द्वाभ्यामृग्भ्यां द्वितीयामाज्याहुतिं हुत्वा 'इदं वाचे वाजाय च' इति त्यागं कुर्यात् । हभा.

(४) मन्त्रार्थः– देवीं देवसंबन्धिनीं वाचं वाणीं देवाः प्राणादिवायवः अजनयन्त उत्पादितवन्तः । ततस्तां देवीं वाचं विश्वरूपाः नानारूपाः ऋषिमुनिब्राह्मणादयः पशवः संसरणत्वात् वदन्ति, 'पशुरेवं स देवानाम्' इति श्रुतेः । सा नः अस्मान् उपैतु संनिहिताऽस्तु । किंभूता ? मन्द्रा हर्षकरी, इषं रसम् ऊर्जम् अन्नादि च दुहाना, सुष्टुता शोभनैर्मन्त्रैः तद्द्रष्टृभिर्वा स्तुता । तत्र दृष्टान्तः– वत्सान् धेनुरिवेति । ¶ गभा.

(५) 'स्थालीपाकम्' इति परिभाषाशास्त्रमाक्षिप्यते । अतः वैश्वदेवपूर्वे मातृपूजाभ्युदयिके विधायोपलिप्ते उद्धतावोक्षिते लौकिकाग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्येत्यारभ्य स्थालीपाकं परिभाषोक्तविधिना पक्त्वा आज्यभागौ हुत्वा वक्ष्यमाणमन्त्राभ्यां द्वे आज्याहुती जुहोतीत्यर्थः । तत्र विशेषः– 'प्राणायापानाय चक्षुषे श्रोत्राय जुष्टं गृह्णामि', प्रोक्षणे चतुर्थ्यनन्तरम् 'त्वा जुष्टं प्रोक्षामि' इति (अर्थः ?) । आज्याहुत्योर्मन्त्रावाह– 'देवीं वाच ... ... द्वितीयाम्' इति सूत्रम् । द्वितीये मन्त्रे आद्यस्य समुच्चयार्थश्चकारः । तथा च 'देवीं वाचम्' इत्यारभ्य 'सुष्टुतैतु स्वाहा' इत्यन्तेनैकामाहुतिं हुत्वा 'इदं वाचे' इति त्यागं विधाय 'वाजो नो अद्य' इति 'देवीं वाचम्' इति च द्वाभ्यां द्वितीयाहुतिहोमः । 'इदं वाजाय वाचे' इति त्यागः । चकाराच्छेषत्वे शेषे पाठः । विभा.

¶ शेषं हभावत् ।

**स्थालीपाकस्य जुहोति– 'प्राणेनान्नमशीय स्वाहाऽपानेन गन्धानशीय स्वाहा चक्षुषा रूपाण्यशीय स्वाहा श्रोत्रेण यशोऽशीय स्वाहा' इति ॥**

(१) स्थालीपाकस्य जुहोति 'प्राणेनान्नमशीय स्वाहा' इति प्रतिमन्त्रं चतुर्भिः । ततः स्विष्टकृदादि । कभा.

(२) स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । ततः स्विष्टकृदादि प्राशनान्तम् । ‡ जभा.

(३) स्थालीपाकस्य चरोः । $ हभा.

(४) मन्त्रार्थः– प्राणेन वायुनाऽन्नमशीय अहं प्राप्नुयां लभेयम् । अपानेन वायुना गन्धान् परिमलान् लभेयम् । एवमग्रेऽपि योज्यम् । § गभा.

**[१]प्राशनान्ते सर्वान् रसान्त्सर्वमन्नमेकत उद्धृत्याथैनं प्राशयेत् ॥**

**[२]तूष्णीं 'हन्त' इति वा, 'हन्तकारं मनुष्याः' इति श्रुतेः ॥**

(१) विकल्पोऽयम् । सर्वे रसाः कटुतिक्तादयः । सर्वमन्नं च शालिसूपापूपादि । एकत इति एकपात्रोद्धरणम् । कभा.

(२) एकत इत्यत्र संधिश्छान्दसः । एकस्मिन् पात्रे एकीकृत्येत्यर्थः । 'हन्त' इति मन्त्रेण वा इति विकल्पः । जभा.

‡ शेषं कभावत् । विभा. जभावत् ।

$ शेषं कभावत् ।

§ शेषं जभाहभावत् ।

(१) पागृ. १।१९।५ ; ब्रक. ९३ ; जभा. कत उद्धृ (कतोद्धृ) ; हभा. जभावदपि पाठः ; स्मृसा. ३ (सर्वान्नमेकतः कृत्वा प्राशयेत्) एतावदेव ; गभा. जभावत् ; संप्र. २७७ (प्राशनान्ते०) उद्धृत्याथैनं (उद्धृत्य).

(२) पागृ. १।१९।६ ; ब्रक. ९३ ; स्मृसा. ३ (तूष्णीं हन्तेति वा) एतावदेव ; संप्र. २७७ स्मृसावत् ।

(३) सर्वान् मधुरादीन् रसान् सर्वमन्नं भक्ष्यभोज्यलेह्यपेयचोष्यादि । 'एकतोद्धृत्य' इत्यत्र विसर्जनीयलोपेऽपि पुनः संधिरार्षः पृथगुकारोच्चारणं वा । एकतः एकस्मिन् पात्रे उद्धृत्य कृत्वा अथ अनन्तरम् एनं कुमारं प्राशयेत् तूष्णीं मन्त्ररहितं 'हन्त' इति वा मन्त्रेण । कुतः ? 'हन्तकारं मनुष्या उपजीवन्ति' इति श्रवणात् । हभा.

(४) सर्वरसाः मधुराम्लादयः षट् । सर्वान्नं शालि... पिष्टादि । स्मृसा. ४

(५) प्राशनान्ते कर्मणि सर्वान् कटुमधुरतिक्तकषायादीन् सर्वमन्नं भक्ष्यं भोज्यं लेह्यं चोष्यं पेयं च एकतः एकस्मिन् सुवर्णादिपात्रे उद्धृत्य अथैनं कुमारं तस्मादन्नं गृहीत्वा तूष्णीं प्राशयेत् । 'हन्त' इति मन्त्रेण वा प्राशयेत्, 'तस्मै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं वषट्कारं च, हन्तकारं मनुष्याः स्वधाकारं पितरः' (शब्रा. १४।८।९।१) इति श्रवणात् । श्रुतिरपि च लिङ्गभूता स्मरणस्य द्योतिका भवति । ननु 'अग्रमुद्धृत्य ब्राह्मणाय दीयते' तत्र कृतार्थमेतद्दर्शनमिति चेन्नैवम् । उभयोर्द्योतिका भविष्यति । 'एकतोद्धृत्य' इत्यत्र छान्दसः संधिः । गभा.

(६) प्राशनान्ते स्विष्टकृद्धोमादिदक्षिणादानान्ते सर्वान् रसान् मधुरादीनेक्षवादिविकारान् सर्वमन्नम् ओदनादिकम् अन्नम् अदनीयम् । यद्यपि गुणस्य गुण्याश्रितत्वेन भेदाभावः तथाऽपि गुणस्य रसस्य प्राधान्यात्तदाश्रयोपादानं गुणभूतम् । एवमन्यत्राऽऽश्रयस्यान्नस्य प्रधानत्वात् गुणोपादानं गुणभूतम् । तथा चोभयत्रोभयनान्तरीयकत्वेनोभयादानेऽपि गुणप्रधानभावात् भेदः । तथा च सर्वान् रसान् सर्वमन्नमेकस्मिन् पात्रे उद्धृत्याऽऽसने कुशास्तीर्णे उपविश्य एनं कुमारं तूष्णीम् 'हन्त' इति वा मन्त्रेण प्राशयेत् । 'हन्त' इति मन्त्रोच्चारणे श्रुतिं प्रमाणयति हन्तकारमिति । विभा.

[1]ततो ब्राह्मणभोजनम् ॥

(१) ततः कर्मसमाप्तौ एकस्य ब्राह्मणस्य भोजनं कारयितव्यम् । हभा.

(२) बर्हिर्होमादिकर्मापवर्गान्ते दश ब्राह्मणान् भोजयेत्, परिशिष्टात् । विभा.

## जैमिनिगृह्यसूत्रम्

ब्राह्मणभोजनम्, हविष्यान्नप्राशनम्

**[2]ब्राह्मणान् भोजयित्वा हविष्यमन्नं प्राशयेत् — 'अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे शं चतुष्पदे ॥' इति ॥**

## कौशिकगृह्यसूत्रम्

व्रीहियवप्राशनम्, परिदानम्

**[3]'शिवौ ते स्ताम्' इति व्रीहियवौ प्राशयति ॥**

अथान्नप्राशनम् । 'षष्ठे मासि प्राशनं कुर्यात्' इति पैठीनसिः । सर्वस्यां स्मृतौ 'पञ्चमे कुमार्याः' इति । दाकेटी.

**§ 'अह्ने च त्वा' इत्यहोरात्राभ्यां परिददाति ॥**

**'शारदे त्वा' इत्यृतुभ्यः ॥**

## वैखानसगृह्यसूत्रम्

होमः, त्रिवृत्प्राशनम्, पायसान्नप्राशनम्, आचमनदानम्

**[4]तत्राऽऽज्येनाऽऽघारः । धातादि मूलहोमं पूर्ववत् ¶त्रिवृत्प्राशनम् । प्राङ्मुखं मङ्गलयुक्तं कुमारं विष्टरमारोप्य 'भूरपाम्' इति पायसमन्नं प्राशयेत् । 'योगे योगे तव स्तरम्' इत्याचमनं ददाति ॥**

---

§ अनयोर्व्याख्यानं नामकरणप्रयोगप्रकरणे (सं. का. पृ. २७७५) द्रष्टव्यम् ।

¶ 'पयो दधि घृतं समं गृहीतं त्रिवृदित्यामनन्ति' (वैगृ. ३।१०)।

(१) पागृ. १।१९।१३; ब्रक. ९३.
(२) जैगृ. १।१०. (३) कौसू. ५८।१९-२१.
(४) वैगृ. ३।२२.

### आश्वलायनः

दध्यादिमिश्रान्नप्राशनम्, अन्नप्राशनफलम्

[1]तस्मिंश्च दधिमध्वाज्यमिश्रमन्नं तु मन्त्रवत्।
स्वमलप्राशनाच्छुद्ध्यै प्राशयेच्चाऽऽयुषे पिता ॥

अन्नप्राशने फलाविषयमाश्वलायनस्मृतौ– 'स्वमल... ' इति। संम. १८

### लघ्वाश्वलायनः

वृद्धिश्राद्धम्, दध्यादिमिश्रान्नप्राशनम्, जलपायनम्, अन्नपात्रदानम्, ब्राह्मणभोजनम्

[2]कृत्वाऽऽभ्युदयिकं श्राद्धं शुभे चैव दिने पिता।
सौवर्णे राजते पात्रे कांस्ये वाऽथ नवे शुभे ॥
क्षीराज्यमधुदध्यन्नं विधाय प्राशयेच्छिशून्।
मन्त्रेणान्नपतेऽन्नस्य हिरण्येन स्रुवेण च ॥
पाणिना सपवित्रेण जलं चापि हि पाययेत्।
दत्त्वा विप्राय तत्पात्रं तूष्णीमेव च योषितः ॥
ततो विभवसारेण ब्राह्मणांश्चापि भोजयेत्।
स्वयं चैव तु भुञ्जीयात् समाहितमना भवेत् ॥

### कश्यपः

अन्नप्राशने बालकस्य प्राङ्मुखत्वम्

[3]बालकं प्राङ्मुखं कृत्वा प्राशयेच्च विधानतः।
स्वर्णदर्व्याऽथवा रौप्यदर्व्या वा मङ्गलस्वनैः ॥

### मार्कण्डेयः

ब्रह्मादिपूजनम्, होमः, मध्वादिमिश्रपायसान्नप्राशनम्, जीविकापरीक्षा

[4]ब्रह्माणं शंकरं विष्णुं चन्द्रार्कौ च दिगीश्वरान्।
भुवं दिशश्च संपूज्य हुत्वा वह्नौ तथा चरुम् ॥

(१) आश्वस्मृ. ११।११९; प्रपा. १८८ च्चाऽऽयुषे (दायुषे); संप्र. २७६; संम. १८ पिता (ऽपि वा) उत्त.

(२) लघ्वाश्वस्मृ. ८।२–५.

(३) संर. ८९३.

(४) सिन्धु. ९१४ मार्कण्डेयविष्णुधर्मयोः; विपा. ४४७.

[1]देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च।
अलंकृतस्य दातव्यमन्नं पात्रे च काञ्चने ॥
[2]मध्वाज्यकनकोपेतं प्राशयेत्पायसं तु तम्।
कृतप्राशमथोत्सङ्गाद्धात्री बालं समुत्सृजेत् ॥

(१) कनकोपेतं कनकेनोपात्तमित्यर्थः। ¶ संप्र. २७८

(२) धात्री माता। स कर्ता। संर. ८९३

[3]देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः।
शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम् ॥

¶ संग संप्रवत्।

(१) अप. १।११–१३ पृ. २८ पात्रे च (पात्रेऽथ); स्मृच. २२ अपवत्; पमा. ४४३; मपा. ३६० अपवत्, मार्कण्डेयपुराणे; प्रपा. १८८; गमा. १८० च काञ्चने (सकाञ्चनम्); संत. ९२२ द्वितीयपादे (पितुरङ्कगतस्य च); संप्र. २७८; मुक्ता. ८३; संम. १८ मन्नं पात्रे च (मन्नपात्रेऽथ); सिन्धु. ९१४ गमावत्, मार्कण्डेयविष्णुधर्मयोः; विपा. ४४७ गमावत्; संग. ५९३ व्यमन्नं (व्यं पत्रं) शेषं गमावत्; संर. ८९३ पात्रे च (पात्रे स) वसिष्ठः.

(२) अप. १।११–१३ पृ. २८ द्वितीयपादे (प्राङ्मुखं प्राशयेच्छिशुम्); स्मृच. २२; पमा. ४४३ तु (स); मपा. ३६० सं तु तम् (सैर्युतम्) पू., मार्कण्डेयपुराणे; प्रपा. १८८ उत्त.; गमा. १८० कनकोपेतं (दधिसंयुक्तं) तम् (वा) पू.; संत. ९२२ (मध्वाज्यकनकोपेतं प्राशनं शंसते ततः। कृतप्राशनमुत्सङ्गे मातुर्बालं तु तं त्यजेत् ॥); संप्र. २७८; मुक्ता. ८३ तु तम् (ततः); संम. १८ पू.; सिन्धु. ९१४ सर्वं गमावत्, मार्कण्डेयविष्णुधर्मयोः; विपा. ४४७ सर्वं गमावत्; संग. ५९३ सर्वं गमावत्: ५९६ धर्मप्रवृत्तौ; संर. ८९३ कनको (शर्करो) तम् (तत्) पू., वसिष्ठः.

(३) अप. १।११–१३ पृ. २८; स्मृच. २२ द्वितीयपादे (शिल्पं भाण्डानि सर्वतः); पमा. ४४३ देवाग्रतोऽथ वि (अग्रतोऽथ प्रवि) तृतीयपादे (शस्त्राणि चैव वस्त्राणि); मपा. ३६० (अग्रतोऽथ प्रविन्यस्य शालिभाण्डानि सर्वशः। शस्त्राणि चैव शास्त्राणि ततः

'प्रथमं वस्त्पृशेद्बालस्ततो भाण्डं स्वयं तदा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥

(१) ' शास्त्राणि चैव शस्त्राणि ' इत्यपि पाठः । संप्र. २७९

(२) शिल्पस्य लेखनादेः भाण्डं वस्तु लेखनी मषीपात्रादि । शस्त्रं युद्धवस्तु । संम. १८

(३) अस्त्रं बाणधनुरादि । शस्त्रं खड्गादि । ‡ संर. ८९४

## विष्णुधर्मोत्तरपुराणम्

ब्रह्मादिपूजनम्, होमः, मध्वादिमिश्रान्नस्य पायसस्य वा प्राशनम्

'ब्रह्माणं शंकरं विष्णुं चन्द्रार्कौ च दिगीश्वरान् ।
भुवं दिशश्च संपूज्य हुत्वा वह्नौ तथा चरुम् ॥

'देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलंकृतस्य दातव्यमन्नं पात्रे सकाञ्चनम् ।
मध्वाज्यदधिसंयुक्तं प्राशयेत्पायसं तु वा ॥

## मुहूर्तचिन्तामणिः

जीविकापरीक्षा

'तस्मिन् काले स्थापयेत्तत्पुरस्ता-
द्वस्त्रं शस्त्रं पुस्तकं लेखनीं च ।
स्वर्णं रौप्यं यच्च गृह्णाति बाल-
स्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा ॥

जीविकापरीक्षां शालिन्याऽऽह– तस्मिन् काल इति । स्पष्टार्थं पद्यम् । आजीवैः जीविकाभिः, ' आजीवो जीविका वार्ता ' इत्यभिधानात् । बहुधा तु जीविकापरीक्षामन्नप्राशनसमय एव कुर्वन्तीति शिष्टाचारः । इदं पद्यं ग्रन्थकर्तुर्मुहूर्तविचारार्थं प्रवृत्तस्य हि वक्तुमनुचितम्, मुहूर्तविचारस्यात्र प्रतिपादनीयत्वात् । किंतु धर्मशास्त्रकर्तॄणामुचितोऽयं विचारः । यतस्ते संस्कारादिनिर्णयार्थं प्रवृत्ता इति । † पीटी.

## मुहूर्तगणपतौ

जीविकापरीक्षा

'पुस्तकं लेखनीं शस्त्रं वस्त्रं रौप्यं च काञ्चनम् ।
तस्मिन्काले यदादत्ते तद्वृत्त्या जीवनं शिशोः ॥

## शौनककारिकाः

ब्राह्मणेभ्योऽन्नदानम्, पुण्याहवाचनम्, दध्यादिमिश्रान्नप्राशनम्, होमपक्षे जातकर्मक्रमातिदेशः वृद्धिश्राद्धस्य पूर्वेद्युरनुष्ठानं च, उत्तरेद्युः कौतुकबन्धनम्

'मौहूर्ते ब्राह्मणानन्नदानाद्यैः परिपूज्य च ।
पुण्याहं वाचयित्वा तैर्गन्धपुष्पाद्यलंकृतैः ॥

---

‡ शेषं संमवत् ।

पश्येत्तु लक्षणम् ॥ ) मार्कण्डेयपुराणे ; प्रपा. १८९ पमावत् ; संत. ९२२ भाण्डानि ( भाण्डादि ) तृतीयपादे ( शस्त्राणि चैव शास्त्राणि ) ; संसौ. ७० देवाग्रतोऽथ ( अग्रतोऽप्यथ ) तृतीयपादे ( शस्त्राणि चैव वस्त्राणि ) ; संप्र. २७९ शिल्प ( शिला ) शेषं पमावत्, तृतीयपादे आदर्शवदपि पाठः ; मुक्ता. ८३ देवा ( तस्या ) तृतीयपादे ( शस्त्राणि चैव वस्त्राणि ) ; संम. १८ शास्त्राणि ( वस्त्राणि ) ; सिन्धु. ९१३ पमावत् ; विपा. ४४७ पमावत् ; संको. १०८ देवाग्रतोऽथ वि (अग्रतोऽथ परि) तृतीयपादे ( शस्त्राणि चैव वस्त्राणि ) ; संव. ७३ पमावत् ; संर. ८९३ शास्त्राणि ( अस्त्राणि ).

(१) अप. १।११–१३ पृ. २८ ; स्मृच. २२ ; पमा. ४४३ तदा ( तथा ) ; मपा. ३६० तु ( च ) मार्कण्डेयपुराणे ; प्रपा. १८९ स्ततो ( स्तेषु ) तु ( च ) ; संत. ९२२ द्वितीयपादे ( शिल्पभाण्डं स्वयं तथा ) ; संसौ. ७० लस्ततो भाण्डं ( लो रिङ्खमाणः ) ; संप्र. २७९ ; मुक्ता. ८३ ; संम. १८ ; सिन्धु. ९१३ ; विपा. ४४८ ; संको. १०८ ; संव. ७३ ; संर. ८९४.

(२) सिन्धु. ९१४ मार्कण्डेयविष्णुधर्मयोः ; शूक. १०१.

† संव. पीटीगतम् ।

(१) सिन्धु. ९१४ मार्कण्डेयविष्णुधर्मयोः ; शूक. १०१ मन्नं पात्रे ( मन्नपात्रं ).

(२) मुचि. ५।२२ ; ज्योनि. ११६ नीं च (नीयम्) ; संग. ५७२ ज्योनिवत्, ज्योतिर्निबन्धे ; संव. ७४ (=).

(३) संव. ७४.

(४) शौका. २ पृ. ३९ ; प्रपा. १८८ मौहू (मुहू) ; संप्र. २७५ मौहू (मुहू) नन्नदा (नत्र दा) कृतैः (कृतः).

पुण्याहवाचनं नान्दीश्राद्धस्याप्युपलक्षणम् ।

संप्र. २७६

[1]उपवेश्याऽऽसने शुभ्रे प्राङ्मुखं बालमन्तिके।
अङ्के वा दधिमध्वाज्यमिश्रमन्नं सुसंस्कृतम्॥

[2]मन्त्रेणान्नपतेऽन्नस्येत्यादिना प्राशयेत्सकृत्।
यथेष्टं प्राशयेत्पश्चाच्छोधयेत्तन्मुखं शिशोः॥

[3]इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम्।
होमपक्षाश्रयेऽत्रापि जातकर्मवदाचरेत्॥

[4]वृद्धिश्राद्धं तु पूर्वेद्युस्तस्मिन्पक्षे समाचरेत्।
उत्तरेद्युस्तु बध्नीयात्कौतुकं तु यथाविधि॥

जातकर्मवत् प्रधानहोमानन्तरं स्विष्टकृद्धोमात्प्राग्यथा जातकर्म तद्वदिदमपीत्यर्थः। तस्मिन्पक्षे होमपक्षे वृद्धिश्राद्धं पूर्वेद्युः, अन्यथा सद्य एव, 'महत्सु तु पूर्वेद्युस्तदहरल्पेषु' (आगृप. २।१) इति वृद्धिश्राद्धप्रक्रमे परिशिष्टात्। संप्र. २७९

## कुमारिलकारिकाः

वृद्धिश्राद्धम्, दध्यादिमिश्रान्नप्राशनम्

[5]कृत्वाऽऽभ्युदयिकं श्राद्धं दधिमध्वाज्यसंयुतम्॥

[6]अन्नं तं प्राशयेदन्नपत इत्यादिमन्त्रतः।
कामयोगेन वाऽऽजादिपक्षोक्तं प्राशयेद्द्विजः॥

(१) शौका. ३ पृ. ३९; प्रपा. १८८ शुभ्रे (शुद्धे); संप्र. २७५–२७६.

(२) शौका. ४ पृ. ३९; प्रपा. १८८ तन्मुखं (च्च मुखं); संप्र. २७६.

(३) शौका. ५ पृ. ३९; प्रपा. १८८; संप्र. २७८; संग. ५९६ पृ.

(४) शौका. ६ पृ. ३९; प्रपा. १८८ तु यथा (च यथा); संप्र. २७८ प्रपावत्.

(५) कुका. १।११।१; प्रपा. १८८; धप्र. ३८; संप्र. २७६.

(६) कुका. १।११।२ काम (कर्म) क्षोक्तं (क्षोक्तः); प्रपा. १८८; संप्र. २७६ पृ.

## रेणुकारिकाः

वृद्धिश्राद्धम्, संकल्पः, होमः, समन्त्रकममन्त्रकं वा मध्वादिमिश्रान्नप्राशनम्, जीविकापरीक्षा, ब्राह्मणभोजनम्, मन्त्राणां छन्दऋष्यादि

[1]कृत्वाऽऽभ्युदयिकं श्राद्धं तत्र प्राणांस्तु संयमेत्।
संकल्पोऽहं करिष्येऽन्नप्राशनं बालकस्य तु॥
ब्रह्मणो गमनाद्या ये विकल्पाः प्रागुदीरिताः।
हन्तेति प्राशनं तत्र देवताध्यानमुच्यते॥
आघारावाज्यभागौ च देवीं वाचं स्मरेत्पुनः।
देवीं वाचं ततो वाजमाज्येन चरुणा ततः॥
स्मरेत् प्राणमपानं च चक्षुः श्रोत्रं क्रमादिमाः।
अग्निं स्विष्टकृतं शेषाद्भूराद्याश्च घृतेन ताः॥
एता अङ्गप्रधानार्था अहं यक्ष्येऽत्र देवताः।
ब्रह्मणो गमनाद्याज्यभागान्तं चरुवद्भवेत्॥
सर्वथैव द्विजालाभेऽन्वारब्धे जुहुयात्ततः॥
पात्राण्यासाद्य सर्वान्नं रसान्पात्रं घृतं मधु।
स्वर्णं मांसानि वा शक्तं शास्त्रादींश्चोपकल्पयेत्॥
जुहुयादाज्यभागान्ते स्थाल्याऽऽज्येनाऽऽहुतीः पृथक्।
देवीं वाचमिति ज्ञेया प्रथमा तामृचं पुनः॥
उक्त्वा स्वाहां विना वाजो नो अद्येति द्वितीयका।
अभिघार्य चरुं तेन चतस्रो जुहुयादिमाः॥
प्राणेन प्रथमा तद्वदपानेनापराऽऽहुतिः।
चक्षुषेति तृतीया स्याच्छ्रोत्रेणेति चतुर्थिका॥
ततोऽग्नये स्विष्टकृते चरुशेषात्तु पूर्ववत्।
आज्येन नव भूराद्याः प्राशनाद्या विमोक्ततः॥
देवतापुरतो मातुरुत्सङ्गे संस्थितस्य तु।
अलंकृतस्य दातव्यमन्नं स्वर्णादिभाजने॥

(१) रेका. ४–१७ पृ. १५.

सर्वान् रसांश्च मांसं वा परमान्नं नियोगतः ।
तं बालं प्राशयेत्तूष्णीं मन्त्रं हन्तेति वोच्चरन् ॥
मध्वाज्यकनकोपेतं सर्वं तद्युगपत्प्रभुः ॥

[1]कृतप्राशमथोत्सङ्गाद्धात्री बालं समुत्सृजेत् ।
कार्यं तस्य परिज्ञानं जीविकाया अनन्तरम् ॥

[2]देवताग्रेऽथ विन्यस्य शिल्पभाण्डानि सर्वशः ।
शस्त्राणि चैव शास्त्राणि ततः पश्येत्तु लक्षणम् ॥

प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥

[1]एतत्कर्माङ्गभूतं तु ततो ब्राह्मणभोजनम् ।
देवीं वाचमिति च्छन्दस्त्रैष्टुभं भार्गवो मुनिः ॥

देवी वाग्देवता होमे विनियोग उदाहृतः ।
वाज इत्यग्निदेवत्या त्रैष्टुभी मुनयोऽमराः ॥

विनियोगोऽग्निचिद्वाजप्रसवीयाख्यकर्मणि ।
सर्वसंज्ञिकमन्त्राणां व्याहृतीनां पुरोदिताः ॥

---

(१) रेका. २० पृ. १६ ; गभा. १८१ प्राशमथो ( प्राशनम् ).

(२) रेका. २१-२२ पृ. १६ ; गभा. १८१.

(१) रेका. २३-२५ पृ. १६.

# घ्राणवेधः

—०—

## अनिर्दिष्टकर्तृकवचनम्

विषमाब्दे कन्याया घ्राणवेधः , तत्र पक्षवारनक्षत्रयामाः

[1]कन्याया घ्राणवेधः स्यात् सद्वारे विषमेऽब्दके ।
आद्ययामे सिते पक्षे मैत्रक्षिप्रोत्तरार्चरे ॥

(१) संग. ५७७ स्यात्सद्वारे ( सन्सद्द्वारे ) ; संदी. २६६ ( भागः २ ) संस्कारगणपतौ.

## मुहूर्तगणपतौ

कन्याया घ्राणवेधे नक्षत्राणि

[1]कर्णवेधोक्तभे शस्तं कन्याया घ्राणवेधनम् ॥

(१) संब. ८०.

## मार्कण्डेयपुराणम्

बालदन्तघर्षणनिमित्तं दन्ताकृष्टिः, तच्छमनोपायः

[1]दन्ताकृष्टिः प्रसूतानां बालानां दशनस्थितः ।
करोति संघर्षमति चिकीर्षुर्दुःसहागमम् ॥

( १ ) दुःसह इत्यलक्ष्मीमृत्योः पुत्रः । तत्पौत्रो दन्ताकृष्टिः । $ प्रपा. १९०

( २ ) बालानां दशनेषु स्थितः स दन्ताकृष्टिः दुःसहस्याऽऽगमं कर्तुमिच्छुः पूर्वमतिसंघर्षं दन्तानां करोतीत्यर्थः । ¶ संर. ८९७

[2]तस्योपशमनं कार्यं सुतस्य सितसर्षपैः ।
शयनस्योपरि क्षिप्तैर्मासं च दशनोपरि ॥

मासं मासपर्यन्तम् । † संप्र. २८१

[3]सुवर्चलौषधिस्नानात्तथा सच्छास्त्रकीर्तनात् ।
उष्ट्रकण्टकखड्गास्थिक्षौमवस्त्रविधारणात् ॥

( १ ) दन्ताकृष्टिः शमं यातीति शेषः । विपा. ४५०

( २ ) ( सुवर्चला ) ब्रह्मसोचलीति भाषया बङ्गाले प्रसिद्धा । उष्ट्रकण्टकम् ' उण्टकटारिया ' इति भाषया प्रसिद्धम् । खड्गः प्रसिद्धः । अस्थि गजदन्तादि शुच्यस्थि । खड्गास्थीत्येकमेव वा पदम् । तदा खड्गमृगास्थीत्यर्थः । क्षौमवस्त्रे बद्ध्वा तस्य कण्ठेऽवधारणाच्च संघर्षदोषापशमनं भवतीत्यर्थः । संर. ८९७

$ संप्र. प्रपावत् ।

¶ शेषं प्रपावत् ।

† विपा. , संर. संप्रवत् ।

(१) प्रपा. १९० दशन ( दर्शन ) मति ( मिति ) ; संप्र. २८१ ; विपा. ४५० ; संर. ८९७.

(२) प्रपा. १९० मांसं च ( मर्षिश्च ) ; संप्र. २५१ ; विपा. ४५० ; संर. ८९७.

(३) प्रपा. १९० ; संप्र. २८१ ; विपा. ४५० वस्त्रवि ( वस्त्रादि ) ; संर. ८९७ वस्त्रवि ( वस्त्राव ).

## हरिवंशः

भीतिदोषाद्बालरक्षणस्योपायः

[1]नन्दोऽङ्कमेनमारोप्य भूरेणुं परिगृह्य च ।
शिरः प्रदक्षिणं कुर्वन्मन्त्रमेनं जजाप ह ॥

[2]'विष्णुस्ते पूर्वतः पातु रुद्रो रक्षतु दक्षिणम् ।
ब्रह्मा च पश्चिमं पायाच्चन्द्रो रक्षत्वथोत्तरम् ॥

[3]उपरिष्टात्तथा सूर्यः पायाच्चाधश्च वासुकिः ।
पायादूर्ध्वमधो वत्सं शिष्टाः काष्ठाः समीरणः ॥

[4]स्वस्ति करोतु भगवान् पिनाकी वृषभध्वजः ।
गावो रक्षन्तु सर्वत्र भूमिः पातु सदा शिवा ॥'

[5]एवमुच्चार्य नन्दस्तु कृष्णं पस्पर्श सर्वतः ।
एष मन्त्रो हि बालानां रक्षार्थे परिकीर्तितः ॥

(१) प्रपा. १८९ मेन ( मेव ) ; संप्र. २८० ; विपा. ४४९ ; संको. १११ ; संर. ८९५ शिशुरक्षारत्ने.

(२) प्रपा. १८९–१९० च पश्चिमं ( तु पश्चिमे ) ; संप्र. २८० ; विपा. ४४९ ; संको. १११ दक्षिणम् ( दक्षिणे ) पश्चिमं ( पश्चिमे ) ; संर. ८९५ विष्णुस्ते ( विष्णुस्त्वां ) पायाच्च ( पातु च ) त्तरम् ( त्तराम् ) शेषं संकोवत् , शिशुरक्षारत्ने.

(३) प्रपा. १९० रिष्टात्तथा ( विष्टं तथा ) ; संप्र. २८० ; विपा. ४४९ वत्सं ( वर्त्म ) ; संको. १११ वत्सं ( वत्स ) ; संर. ८९५ संकोवत् , शिशुरक्षारत्ने.

(४) प्रपा. १९० चतुर्थपादे (भूमौ पातु सदाशिवः) ; संप्र. २८० ; विपा. ४४९ शिवा ( शिशुम् ) ; संको. १११ ; संर. ८९५ प्रपावत् , शिशुरक्षारत्ने.

(५) प्रपा. १९० सर्वतः ( पाणिना ) कीर्तितः ( कल्पितः ) ; संप्र. २८० ; विपा. ४४९ ; संको. १११ ; संर. ८९५ शिशुरक्षारत्ने.

अथ यदि बालकस्य प्रमादात् भुवि पतनादिना भीतिरुपजायते तदा पार्थिवं रजः परिगृह्य शिशोः शिरः प्रदक्षिणमावर्त्य 'विष्णुस्ते पूर्वतः पातु' इत्यादिभिर्मन्त्रै रक्षां कुर्यात् । एष रक्षाविधिः शकटभञ्जने नन्दगोपेन भीतोऽयं शिशुरिति बुद्ध्या यदुनन्दनस्य श्रीकृष्णस्य कृतः । ‡ प्रपा. १८९

## श्रीमद्भागवतपुराणम्

श्रीकृष्णस्य गोपीकृतं रक्षाविधानम्

**'गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ।**
**यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः ।**
**रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥**

**गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् ।**
**रक्षां चक्रुः सशकृता द्वादशाङ्गेषु नामभिः ॥**

**गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् ।**
**न्यस्याऽऽत्मन्यथ बालस्य बीजन्यासमकुर्वत ॥**

**'अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू**
**यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।**
**हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं**
**विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥**

**चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्**
**त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ।**
**कोणेषु शङ्ख उरुगाय उपर्युपेन्द्र-**
**स्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥**

**इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ।**
**श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥**

**पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः ।**
**क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥**

**व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियः पतिः ।**
**भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयंकरः ॥**

**डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः ।**
**भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥**

**कोटरा रेवती ज्येष्ठा पूतना मातृकादयः ।**
**उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ॥**

**स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ।**
**सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥'**

**इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ।**
**पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥**

द्वादशाङ्गेषु ललाटादिषु केशवादिद्वादशनामभिः । अनाचान्ता एव प्रथममतिसंभ्रमेणैव रक्षां कृत्वा किञ्चिल्लब्धाश्वासाः पुनस्तात्पर्येण बीजन्यासमकुर्वतेत्याह— गोप्य इति । संस्पृष्टसलिला आचान्ता आत्मनि प्रथममङ्गेषु करयोश्च पृथगजाद्येकादशबीजानां मध्ये करशुद्धौ त्रीणि करयोः संधिषु चत्वारि चत्वारि तथा अङ्घ्र्यादौ एकैकस्मिन्नङ्गे अजाद्येकैकं बीजं न्यस्य बालस्याप्यङ्गेषु तथैवाकुर्वत । अङ्घ्रि अङ्घ्री । जानु जानुनी । भुजं भुजौ । कं शिरः । चक्रसहितो हरिस्तवाग्रतोऽस्तु । सहगदः गदासहितः हरिस्तव पश्चादस्तु । त्वत्पार्श्वयोर्धनुर्धरो मधुहाऽसिधरोऽजनश्च । शङ्खधर उरुगायश्चतुष्कोणेषु । क्षितौ अधस्तात् । आत्मानम् अहंकारम् । संन्यवेशयत् शाययामास । इति श्रीधरेण व्याख्यातम् । संर. ८९६

## स्कन्दपुराणम्

मातुर्निशामुखभोजनादीनि बालपीडानिमित्तानि, तत्र प्रथमादिद्वादशान्तदिनमासवर्षेषु क्रमेण द्वादशानां विमोचन्यादिराक्षसीनां पीडाकृत्त्वम्, पीडास्वरूपं तत्परिहारार्थानि विधानानि च

**श्रीसूर्य उवाच—**

**'केन कर्मविपाकेन बालानां जायते गदः ।**
**जातमात्राण्यपत्यानि न पापं परिकुर्वते ॥**

‡ विपा., संर. प्रपावत् ।

(१) संर. ८९५-८९६.

(१) विपा. २७८-२९५.

आहारश्चैव निद्रा च रुदितं हास्यमेव च ।
स्वाभाविकमिदं देव कर्म चैषां षडानन ॥
कर्मणस्त्वस्य करणात्कथं पापं प्रजायते ।
पापं विना कथं व्याधिः पीडयत्यखिलाञ्छिशून् ।
तेषां कर्मफलं किंवा मातापित्रोस्तु कर्मजम् ॥
स्कन्द उवाच–
येन कर्मविपाकेन शिशूनां जायते गदः ।
तत्सर्वं कथयिष्यामि पृच्छतस्ते दिवाकर ॥
लङ्कायां रावणो नाम पौलस्त्यो राक्षसेश्वरः ।
स्वसारस्तस्य वीरस्य द्वादशाऽऽसन्महाभयाः ॥
ताभिः कृतं तपो घोरं सर्वलोकभयप्रदम् ।
पीडितं ताभिरखिलं जगत्तीव्रतपोबलात् ॥
रुद्रस्त्वाराधितस्ताभिस्तपसा तीव्रतेजसा ।
प्रसन्नो भूतवान्देवस्ताभ्य एवं वरं ददौ ॥
श्रीरुद्र उवाच–
वरदोऽहं वरार्हाभ्यो युष्मभ्यं रजनीचराः ।
युष्माकं भविता भक्ष्यं प्राणिनां देहसंभवम् ॥
वसासृङ्मांसमेदोस्थिमज्जाशुक्रात्मकं सदा ।
एवमुक्ते महादेवे पुनस्ता ऊचुरञ्जसा ॥
देहि देवेश भक्ष्यं नो जीवतामेव शंकर ।
तच्छ्रुत्वा वचनं तासां चुकोप परमेश्वरः ॥
श्रीरुद्र उवाच–
ब्रह्मवंशसमुद्भूतास्तपोवृद्धिपरायणाः ।
तत्कथं ब्रह्मघाताय चेतो वः परिवर्तते ॥
राक्षस्य ऊचुः–
यदि प्रसन्नो भगवान्ददात्वस्मत्प्रियं शिवः ।
सर्वेषामपि बालानां मेदसा तृप्तिरेव नः ॥
श्रीरुद्र उवाच–
या स्त्री निशामुखेऽश्नाति बालं स्पृशति भुञ्जती ।
प्रसूतिसमयेऽभ्यङ्गं न करोति प्रमादतः ॥

नग्ना निद्राति रात्रौ वा निष्पन्नसुरता सती ।
तस्या बालं दिने मासे वर्षे वाऽपि विशेषतः ॥
आद्ये तु दिवसे मासे वर्षे वाऽथ विमोचनी ।
गृह्णातु मत्प्रसादेन ज्वराद्यैर्वेदनोच्चयैः ॥
द्वितीये मोहिनी नाम सुनन्दा तु तृतीयके ।
चतुर्थे पूतना नाम पञ्चमे त्वासुरी तथा ॥
षष्ठे तु रेवती नाम बालं गृह्णातु सत्वरम् ।
सप्तमे शकुनी नाम अष्टमे च पिशाचिका ॥
देवता पाशिनी नाम गृह्णातु नवमे शिशुम् ।
महामारी तु दशमे कालिकैकादशे तथा ॥
द्वादशे भामिनी देवी पीडाकरणतत्परा ।
पूर्वमेवं कुरुध्वं भोः पीडां बालकविग्रहे ॥
आत्मनो दिवसे मासे वर्षे वाऽपि पृथक्पृथक् ।
निमित्ते सति गृह्णीध्वं शुचौ तु न कदाचन ॥
युष्मभ्यं बलिदानं ये विधास्यन्ति यथाविधि ।
तेषां तु बालकान् यूयं संतुष्टाः परिमुञ्चत ॥
एवं लब्धवराः सर्वाः पीडयन्ति शिशून् हि ताः ॥
$प्रथमे दिवसे मासे वर्षे देवी विमोचनी ।
रुद्रप्रसादादासाद्य रन्ध्रं गृह्णाति बालकान् ॥
तस्यास्तु जायते पीडा शिशूनां तीव्रवेदना ।
ज्वरस्तु प्रथमं तावन्नेत्ररोगस्ततः परम् ॥
न गृह्णाति स्तनं डिम्भो वान्तिरात्यन्तिकी भवेत् ।
मुष्टिं बध्नाति वेगेन दन्तान्दन्तैर्दशत्यलम् ॥
इत्थं प्रजायते पीडा विमोचन्या दिवाकर ।
तस्याः पूजां प्रवक्ष्यामि बालानां शान्तिकारिणीम् ॥
करवी रक्तपुष्पाणि चन्दनं रक्तमुत्तमम् ।
धूपस्तु शिवनिर्माल्यं सबिल्वदलमुत्तमम् ॥

---

$ स्कान्दत्वेनोपक्रान्ते तथैवोपसंहृते चैकस्मिन्प्रकरणे संदंशपतितस्यास्य विमोचनीविधानस्य 'इति मार्कण्डेयपुराणोक्तम्' इति मार्कण्डेयपुराणीयत्वेनोपसंहारः प्रामादिक इत्यस्माभिरभ्युपगतम् ।

दीपास्तु पञ्च विज्ञेयास्तथा पञ्चैव पोलिकाः ।
मुष्टिकाः पञ्च विज्ञेया ध्वजाः पञ्च सुपीतकाः ॥
ताम्बूलवीटिकाः पञ्च पूगीफलसमन्विताः ।
रक्ततण्डुलभक्तस्तु प्रोक्तः साज्यगुडस्तथा ॥
शरावे नूतने प्राज्ञ निधेयं सर्वमेव तत् ।
ततस्तु पुत्तलीं कृत्वा नद्या उभयतो मृदा ॥
निदध्यात्तत्र तां धीमान् पीतवस्त्रपरीवृताम् ।
पीतसूत्रोपवीतां च पूजयेद्भक्तिमान्नरः ॥
पूर्वोक्तैरेव संभारैर्गन्धधूपादिभिर्बुधः ।
वक्ष्यमाणेन मन्त्रेण प्रार्थयेत्तां समाहितः ॥
'ओं नमो (‡ भर्गे) भक्तवत्सले विमोचनि स्वाहा ॥'
अमुं मन्त्रं समुच्चार्य सर्वां पूजां प्रकल्पयेत् ॥
अम्ब्वाम्रोदुम्बराश्वत्थवटानां पल्लवैस्तथा ।
सर्वाङ्गेभ्यः समुत्सार्य पीडां बालस्य संव्रजेत् ॥
इत्थं रात्रित्रयं कुर्याद्विधानं तु समाहितः ।
ग्रामादुत्तरतो नित्यं पूर्वरात्रे विचक्षणः ॥
तस्मिन् स्थाने जपेन्मन्त्रं बालानां शान्तिहेतवे ।
एवं प्रशान्तिमायाति शिशुपीडा न संशयः ॥

केषांचिन्मते अन्यस्मिञ्छरावे पुत्तली निधेया, अन्यस्मिन् गन्धादिसंभार इति । केषांचिन्मते एकस्मिन्नेवेति । एक एव नेता भवति । पूजाक्रमस्तु पुत्तलिकामादौ शरावे निधाय तत्पुरतः सर्वं गन्धादिसंभारं निक्षिप्य तत्रैवोपचारान्निधाय पञ्चपल्लवानेकीकृत्य बालकाङ्गापामार्जनेन मातरं निःसार्य नीराजनं विधाय तत्सर्वं सकम्बलः सशङ्खो नेता नयेन्मन्त्रमुच्चारयन्निति ।

विपा. २८१–२८२

द्वितीये दिवसे मासे वर्षे चैव प्रभाकर ।
मोहिनी नाम देव्यत्र कुरुते पीडनं शिशोः ॥
ज्वरं नेत्ररुजं कासं श्वासं चैव विशेषतः ।
छर्दनं § गृहिणीद्वेषं जनयत्यनिशं शिशोः ॥
तत्र शान्तिविधानं च प्रवक्ष्यामि समासतः ।
मालतीकुसुमैः पूजा चन्दनं मलयोद्भवम् ॥
कुङ्कुमं केशरं दिव्यं सकर्पूरं विलेपनम् ।
दिव्यभक्तसमाहारो दशाङ्गं धूपनं तथा ॥
नैवेद्यं पूर्ववद्देयं तथैव पल्लवक्रिया ।
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ।
वक्ष्यमाणेन मन्त्रेण कुर्यात्सर्वमतन्द्रितः ॥
'सर्वेश्वरी सर्वजनप्रियंकरी त्राहि जगत्सर्वम् ओं नमो भगवति विमोहिनि स्वाहा ॥'
एवं चानेन मन्त्रेण सर्वं कृत्वा विधानकम् ।
रात्रित्रये निधातव्यं पश्चिमे ग्रामतो बहिः ।
प्रथमे यामिनीयामे कृतं भवति सौख्यदम् ॥

$स्कन्द उवाच–

तृतीये दिवसे मासे वर्षे शृणु विधिं रवे ।
सुनन्दा नाम देव्यत्र बालानां भयदा भवेत् ॥
अवस्थां कुरुते घोरां सुनन्दा नाम भामिनी ।
हृद्रोगश्छर्दनं श्वासो ज्वरेण सह जायते ॥
आकुञ्चयति गात्राणि शिशू रोदित्यहर्निशम् ।
इत्थं संजायते पीडा सुनन्दाकोपसंभवा ॥
तस्याः शान्तिविधानं तु प्रवक्ष्यामि समासतः ।
शतपत्राणि पुष्पाणि चन्दनस्यानुलेपनम् ॥
हरिद्रा कुङ्कुमं नागकेशरं वालकान्वितम् ।
गन्धार्थं धूपनं दद्याद्गुग्गुलं चातिशोभनम् ॥
घृताक्तं खदिराङ्गारैः संप्रताप्य विरोचन ।
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥
प्रसृतित्रयशालीनामोदनं सर्पिषाऽऽचितम् ।
दीपाश्च पोलिकाः पञ्च तावन्तो मुष्टिकाः स्मृताः ॥
ध्वजास्तु पञ्च विज्ञेयाः सहिताः पञ्चपल्लवैः ।
वक्ष्यमाणेन मन्त्रेण बलिं सर्वं समाहरेत् ॥
'ओं नमो भगवति सुनन्दे हुं फट् स्वाहा ॥'

‡ आदर्शपुस्तके इदं पदं कंसमध्ये ।

§ गृहिणीशब्दस्य 'पेज' इति भाषायां प्रसिद्धस्यार्थस्य संभवः ।

$ द्वयोरेव विधानयोरारम्भे इदं वाक्यमादर्शपुस्तके मुद्रितम् । तत्तु वस्तुतः प्रतिविधानं स्यात्, कुत्रापि वा न स्यात् ।

एवं चानेन मन्त्रेण ग्रामात्पूर्वे विनिक्षिपेत् ।
त्रिरात्रं रजनीपूर्वयामे बालोपशान्तये ॥

एवं कृते विधाने तु व्याधिमात्रं विनश्यति ।
वर्धते दीपवद्बालः शुक्लपक्षेन्दुवच्च सः ॥

स्कन्द उवाच–

चतुर्थे दिवसे मासे वर्षे चैव विभाकर ।
पूतना नाम देव्यत्र पीडां प्रकुरुते शिशोः ॥

संतापो जायते पूर्वमतिसारस्ततः परम् ।
मुष्टिबन्धस्तथा कम्पो वारं वारं प्रजायते ॥

तस्याः शान्तिं प्रवक्ष्यामि सविधानां दिवाकर ।
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥

वेष्टयेद्रक्तसूत्रेण कुङ्कुमेनानुलेपयेत् ।
धुस्तूरैः पूजयेत्पुष्पैर्बदरीपत्रसंयुतैः ॥

मत्स्यमांसस्य धूपोऽत्र गव्येनाऽऽज्येन संयुतः ।
त्रयो दीपास्त्रिकोणास्तु साज्यवर्तिसमन्विताः ॥

तिस्रस्तु पोलिका ज्ञेयास्तावत्यो मुष्टयस्तथा ।
ध्वजास्तिस्रः समाख्याता नात्र कार्या विचारणा ॥

प्रसृतित्रयमुद्दिष्टं तण्डुलानां प्रभाकर ।
तद्भक्तं सर्पिषा युक्तं शरावे संनिवेशयेत् ॥

रक्तवस्त्रेण संवेष्ट्य नमस्कृत्वा तु पुत्तलीम् ।
दध्यक्षतसमारोपं विदध्यात्तु समाहितः ॥

पल्लवैः पञ्चभिर्बालं सर्वाङ्गेषु प्रमार्जयेत् ॥
'ओं नमः पूतने मातर्बलिं पश्य सुशोभने ।
बालकं मुञ्च योगेन बलिदानेन हर्षिता ॥'
इमं मन्त्रं समुच्चार्य सर्वं बलिमुपाहरेत् ।
प्रदोषे क्षणनिर्वृत्ते सप्तसप्ते विधिं शृणु ॥

दक्षिणां दिशमाश्रित्य निक्षिपेद्ग्रामतो बहिः ।
बलिमेवं कृते सम्यग्बालकः सुखमाप्नुयात् ॥

अथातः पञ्चमे चाह्नि मासे वर्षे दिवाकर ।
आसुरी नाम देव्यत्र बालकं बाधते भृशम् ॥

तत्र चिह्नं प्रवक्ष्यामि बालानां यत्प्रजायते ।
ज्वरस्तु प्रथमं पश्चाद्धृद्रोगो ग्रहणीगदः ॥

मुष्टिबन्धः प्रलापः स्यादुद्वेगोऽनशनं तथा ।
शिरोरुग्जायतेऽत्यन्तमेतद्धि लक्षणं रवे ॥

तस्याः शान्तिं प्रवक्ष्यामि पृच्छतस्ते दिवाकर ।
पूर्ववत्पुत्तलीं कृत्वा पीतसूत्रेण वेष्टयेत् ॥

पीतवासोवसानां तां शरावे संनिवेशयेत् ।
घृताभ्यक्तो विधेयोऽत्र हरिद्रालेपनं तथा ॥

ततः पूजां प्रकुर्वीत कुसुमैः करवीरजैः ।
जवापुष्पैर्बन्धुजीवैर्बालकस्य तु चानघ ॥

चन्दनेनानुलिप्तां तां दिव्यगन्धोपशोभिताम् ।
राजिकासर्षपैर्धूपो घृताक्तोऽत्र प्रशस्यते ॥

दीपकाः सप्त विज्ञेया ध्वजास्तावन्त एव च ।
मुष्टिकाः पोलिकाः सप्त सप्त सौवालिकास्तथा ॥
नैवेद्यार्थं समुद्दिष्टमोदनं सघृतं हविः ।
पल्लवैस्तु यथापूर्वं कारयेन्मार्जनं शिशोः ।
मन्त्रमेनं समुच्चार्य त्रिवारं प्रतिपूजनम् ॥
'ओं सुकले सुभगे देवि सर्वशत्रुनिवारिणि ।
कुरु शान्तिं शिशोश्चात्र बलिदानेन राक्षसि ॥'
इत्युच्चार्य क्षिपेत्पूर्वं मध्यरात्रे त्रिवासरम् ।
पश्चिमां दिशमाश्रित्य ग्रामादुत्तरतो रवे ॥

अथ षष्ठे च दिवसे मासे वर्षे दिवाकर ।
रेवती नाम देव्यत्र शिशुं गृह्णात्यसंशयम् ॥

आदौ तु जायते पीडा प्रबला शिशुमूर्धनि ।
ज्वरस्तु मुखशोषोऽपि तृषा समभिजायते ॥

प्रकम्पन्ति च गात्राणि रुदितं च पुनः पुनः ।
तत्र शान्तिं प्रवक्ष्यामि शृणु सूर्य समाहितः ॥

पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ।
गङ्गातोयेन संस्नाप्य शुक्लवस्त्रेण वेष्टिताम् ॥

शुक्लसूत्रेण संवीतां शुक्लमाल्यानुलेपनाम् ।
शुक्लधूपोऽत्र निर्दिष्टो बिल्वपत्रैः सहानघ ॥
आज्येनाक्तास्तु विश्वात्मन् दीपाः पञ्च प्रकीर्तिताः ।
तावत्यो मुष्टिका ज्ञेयाः पोलिकाभिः समन्विताः ॥
प्रसृतित्रयमात्राणां व्रीहीणामोदनं स्मृतम् ।
दध्ना सह गुडेनाक्तं ताम्बूलं च विशेषतः ॥
$ध्वजैश्च पञ्चभिर्युक्तं बलिमेनं प्रकल्पयेत् ।
वक्ष्यमाणेन मन्त्रेण प्रक्षिपेच्च समाहितः ॥
'ओं राक्षसि त्वं महाभागे बालं मुञ्च शुभानने ।
क्षेमं कुरु जगत्यस्मिञ्छोभना भव रेवति ॥'
इति मन्त्रेण संमन्त्र्य प्रदोषे बलिमाहरेत् ।
संमार्ज्य बालकं तं च सर्वाङ्गे पञ्चपल्लवैः ॥
ग्रामादुत्तरतो देशे रेवत्यै बलिमाहरेत् ।
एवं प्रशान्तिमायाति बालपीडा प्रभाकर ॥
सप्तमे च दिने चैव मासे वर्षे दिवाकर ।
शकुनी नाम देव्यत्र बालं गृह्णाति दारुणा ॥
ज्वरस्तु प्रथमं तावच्छिरोरोगस्ततः परम् ।
प्रलापश्चातिसारः स्याद्भ्रान्तिरात्यन्तिकी भवेत् ॥
अक्ष्णोर्निमीलनं चापि गात्रकम्पोऽपि जायते ।
तत्र शान्तिं प्रवक्ष्यामि शकुनीप्रीतिवर्धनाम् ॥
रक्तचन्दनलिप्ताङ्गीं पूर्ववत्पुत्तलीं कृताम् ।
यथाकालोद्भवैः पुष्पैः पूजयेद्यत्नतः शुचिः ॥
धूपस्तु गुग्गुलः श्रेयान्दीपाः पञ्च प्रकीर्तिताः ।
पोलिका मुष्टिकाः पञ्च कर्तव्यास्तु सुशोभनाः ॥
नैवेद्यमोदनं सर्पिः प्रसृतित्रयसंमितम् ।
तण्डुलानां सुरश्रेष्ठ मन्त्रपूतं प्रकल्पयेत् ॥

$ एतदर्धं विधानमालायाः संगृहीतम् ।

'ओं नमः पद्मपत्राक्षि विशालवदने शिवे ।
संगृह्य बलिमेनं त्वं बालं मुञ्च सुशोभने ॥'
इत्युच्चार्य ततो धीमान् बलिं निशि समाहरेत् ।
दक्षिणां दिशमाश्रित्य विधाय पल्लवक्रियाम् ॥
एवं कृते विधाने तु त्रिरात्रं सुरसत्तम ।
व्याधिमुक्तो भवेद्बालो नात्र कार्या विचारणा ॥
अथाष्टमे दिने मासे वर्षे देवी पिशाचिका ।
पीडयत्येव बालं तु ज्वरच्छर्दिललाटजैः ॥
नेत्रपीडाऽङ्गसंकोचो हृद्रोगश्चाभिजायते ।
शृणु तत्र प्रतीकारं येन तुष्येत्पिशाचिका ॥
प्रकुर्याच्च त्रिरात्रं तु शान्तिं बालार्तिहारिणीम् ।
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥
पञ्चामृतैस्तु संस्नाप्य देवीं तां शिशुना सह ।
चन्दनेनानुलिप्ताङ्गीं श्वेतपुष्पैः प्रपूजयेत् ॥
ध्वजाः सप्त समाख्यातास्तावत्यः पोलिकाः स्मृताः ।
मुष्टिकाश्चापि विज्ञेया हरिद्राक्ताः शुभाः स्मृताः ॥
पीतवर्णेन वस्त्रेण सूत्रेणापि सुसंस्कृतः ।
विजयाचूर्णधूपोऽत्र घृताक्तः संप्रकीर्तितः ॥
दीपान्सप्त घृतेनैव पूरयित्वा नियोजयेत् ।
प्रसृतित्रयभक्तस्य घृताक्तस्य विशेषतः ॥
नैवेद्यं कल्पयेद्धीमान्देव्यै तस्यै न संशयः ।
ताम्बूलं च सकर्पूरं पिशाच्यै तु प्रदापयेत् ॥
शक्त्या च दक्षिणा तत्र देया तत्प्रीतये रवे ।
वक्ष्यमाणेन मन्त्रेण सर्वमेव विधीयते ॥
'ओं नमः सर्वभूतेशि शोभने त्वं पिशाचिके ।
बलिं चैनमुरीकृत्य त्वरितं मुञ्च बालकम् ॥'
यथा पूर्वं तथा कार्या पञ्चपल्लवसत्क्रिया ।
त्रिरात्रं रजनीवृत्तौ पूर्वे ग्रामाद्बहिः क्षिपेत् ॥
एवं कृते विधानेऽस्मिन्रोगशान्तिः प्रजायते ॥

नवमे दिवसे मासे वर्षे चैव प्रभाकर ।
देवता पाशिनी नाम बालार्तिं कुरुते भृशम् ॥
तत्र चिह्नं प्रवक्ष्यामि समासेन दिवाकर ।
ज्वरश्छर्दिर्गले पीडा संकोचो नेत्रयोस्तथा ॥
तर्जनीमध्यमायोगमग्राभ्यां कुरुते भृशम् ।
अन्नत्यागेऽपि संतोषो मुखगन्धोऽभिजायते ॥
तत्र शान्तिं प्रवक्ष्यामि पाशिनीप्रीतये रवे ।
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥
शुक्लवस्त्रेण संवीतां शुक्लसूत्रेण वेष्टिताम् ।
पूजयेच्छुक्लपुष्पैश्च मन्दाराद्यैः सुगन्धिभिः ॥
गन्धार्थे घनसारेण युक्तं चन्दनमर्पयेत् ।
दशाङ्गधूपो धूपोऽत्र ततो दीपान्प्रकल्पयेत् ॥

घनसारः कर्पूरः । विपा. २९१

नव वा सप्त वाऽपूपाः पोलिका वा नवैव च ।
तावत्यो मुष्टिकाश्चैव ध्वजाश्चैव विशेषतः ॥
नवप्रसृतिमानेन तण्डुलौदनमुत्तमम् ।
दध्ना क्षीरेण वाऽभ्यक्तं नैवेद्यं परिकल्पयेत् ॥$
ग्रामाद्बहिर्मध्यरात्रे पश्चिमे प्रक्षिपेद्बलिम् ।
एतावता विधानेन रोगमुक्तो भवेच्छिशुः ।
पञ्चानां पल्लवानां च विदध्यात्पूर्ववत्क्रियाम् ॥
दशमे दिवसे मासे वर्षे चापि दिवाकर ।
शक्तिरत्र महामारी राक्षसी घोररूपिणी ॥
मृत्युकल्पं ज्वरं शूलं विदधाति दिवानिशम् ।
विष्टम्भं कुरुतेऽत्यन्तं हिक्काकासमतिक्षयम् ॥
तस्याः शान्तिं प्रवक्ष्यामि बालानां हितकाम्यया ।
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥
स्नापयेत्सरितो वारा चन्दनेनानुलेपयेत् ।
पीतवस्त्रेण संवेष्ट्य पुष्पमाल्योपशोभिताम् ॥

---

$ अतः परं मन्त्रविधानं प्रभ्रष्टमिति भाति ।

दशाङ्गं धूपने धूपं महामार्यै प्रकल्पयेत् ।
दीपास्तु पञ्च विज्ञेयास्तावत्यः क्षीरषाष्टिकाः ॥
मुष्टिकाः पञ्च वै शस्ता ध्वजाः पञ्च सुशोभनाः ।
संस्कृतं सर्पिषा भक्तं तण्डुलानां च पौष्कलम् ॥
नैवेद्यार्थे न्यसेत्तत्र शरावे सुमनोहरम् ।
ताम्बूलसहितं भानो दक्षिणासहितं तथा ॥
दक्षिणार्थे नवं वस्त्रं रजतं वाऽथ शक्तितः ।
पल्लवैः पञ्चभिर्युक्तं बलिं सर्वं समर्पयेत् ॥
मध्यरात्रादवक्षीणं( ? वाचीनं ) बलिं कुर्याद्दिनत्रयम् ।
दक्षिणां दिशमाश्रित्य प्रक्षिपेन्नगराद्बहिः ।
स्तोत्रेणानेन मार्तण्ड वक्ष्यमाणेन ते मया ॥
'ओं नमो रक्तवर्णाक्षि रक्तपद्मनिभानने ।
रक्तोष्ठदशने रक्तमहामारि महाभये ॥
महाबले महाकाये महाभयनिवारिके ।
अनेन बलिदानेन तुष्टा भव शुभानने ।
व्याधिना पीडितं बालं रक्ष मे परमेश्वरि ॥'
इति मन्त्रं समुच्चार्य सर्वं बलिमुपाहरेत् ।
क्षेमाय बालकानां हि नात्र कार्या विचारणा ॥
एकादशे दिने मासे वर्षे चापि दिवाकर ।
कालिका नाम देव्यत्र तत्पीडा जायते शिशोः ॥
ज्वरस्तु प्रथमं तावद्धृद्रोगस्तदनन्तरम् ।
मुखशोषो महाग्लानिस्ततः स्याच्चित्तविभ्रमः ॥
रोदनं सर्वगात्राणि कम्पन्ते च पुनः पुनः ।
तत्र शान्तिं प्रवक्ष्यामि बालानां हितकाम्यया ॥
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ।
गङ्गातोयेन संस्नाप्य चन्दनेनानुलेपयेत् ॥
करवीरस्य पुष्पैस्तु पूजयेद्बदरीदलैः ।
धूपयेत्पुत्रकेशैश्च सर्पनिर्मोकसर्षपैः ॥
वचालशुनकैश्चैव घृतयुक्तैः ससर्जकैः ।
दीपैस्तु पञ्चभिः सूर्य तैस्तु नीराजयेत्तु ताम् ॥

नैवेद्यं पायसं क्षीरं षष्टिकांस्तिलमोदकान् ।
अपूपान्मुष्टिकाः पोलीः पञ्च पञ्च प्रकल्पयेत् ॥
ध्वजाश्च पञ्च विज्ञेयाः शरावे सर्वमेव तत् ।
निवेश्य सकलं देव्यै कालिकायै निवेदयेत् ।
मन्त्रेणानेन सप्ताश्व वक्ष्यमाणेन ते मया ॥
'ओं नमो घोररूपायै विकटे घोरदर्शने ।
त्राहि सर्वजगद्धात्रि बालं मुञ्च बलिप्रिये ॥'
एवंविधं विधिं कुर्यात्पूर्ववत्पल्लवक्रियाम् ॥
बलिः प्रदोषसमये ग्रामाद्दक्षिणतो बहिः ।
निधेयो मन्त्रमुच्चार्य नरेण च सहेतिना ॥

सहेतिना सखड्गेनेत्यर्थः । विपा. २९४

द्वादशे दिवसे मासे वर्षे चैव दिवाकर ।
भामिनी नाम देव्यत्र पीडयत्यनिशं शिशुम् ॥
आदौ ज्वरं प्रकुर्याच्च हृद्रोगं तदनन्तरम् ।
कासं श्वासमतीसारं प्रलापं जृम्भणं तथा ॥
कम्पन्ते सर्वगात्राणि तथा जाड्यं च नेत्रयोः ।
इत्थं नानाप्रकारश्च शिशूनां जायते गदः ॥
तत्र शान्तिं प्रवक्ष्यामि बालानां हितकारिणीम् ।
पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥
गन्धपुष्पाक्षता धूपा दीपाश्च विविधाः स्मृताः ।
नैवेद्यं विविधं चात्र भामिन्यै परिकल्पयेत् ॥
वस्त्रं शस्त्रं ध्वजाः सूत्रमोदनं पयसाऽऽचितम् ।
अपूपैः पायसं क्षीरं षष्टिकाभिश्च संयुतम् ॥
नैवेद्यं कल्पयेद् भक्त्या संध्याकाले निशामुखे ।
ग्रामादुत्तरतो देशे बहिरेव बलिं क्षिपेत् ॥
इत्थं पञ्चदिनेष्वेव कर्तव्यं रोगमुक्तये ।
मन्त्रेणानेन सप्ताश्व मन्त्रयेत्सर्वतो बलिम् ॥
'ओं बलिं गृहाण बालस्य व्याधीन् संहर संहर ।
पञ्चवक्त्रप्रसादेन प्रसन्ना भव भामिनि ॥'
एवं कृते विधानेऽस्मिन्बालकः क्षेममाप्नुयात् ॥
इत्थं ते कथितं सूर्य शान्तिकृत्लुब्धजातकम् ।
अनुष्ठितेन येन स्याद्बालानां दुःखमोचनम् ॥

## मानवे

दृष्टिदोषपरिहारार्थं निम्बसर्षपादिना भस्मना च रक्षाविधानम्

[1]शिशुसंरक्षणार्थायाशुभग्रहनिवारिणीम् ।
रक्षां संध्यासु कुर्वीत निम्बसर्षपगुग्गुलैः ॥
¶फलीकरणसंमिश्रैः करञ्जैरवलोकने ।
वचोषराम्नदेशेषु बालग्रहविमुक्तये ॥
'वासुदेवो जगन्नाथः पूतनातर्जनो हरिः ।
रक्षतु त्वरितो बालं मुञ्च मुञ्च कुमारकम् ॥
कृष्ण रक्ष शिशुं शङ्खमधुकैटभमर्दन ।
प्रातःसङ्गवमध्याह्नसायाह्नेषु च संध्ययोः ॥
¶महानिशि सदा रक्ष कंसारिष्टनिषूदन ।
†यक्षोरजपिशाचांश्च ग्रहान्मातृग्रहानपि ॥
बालग्रहान्विशेषेण छिन्धि छिन्धि महाभयात् ।
त्राहि त्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुम् ॥'
इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना ।
शिरोललाटाक्ष्यङ्गेषु रक्षां कुर्याद्यथाविधि ।
मन्त्रसंरक्षणादेवं शिशुः संवर्धतेऽन्वहम् ॥

## कपिलसंहितायाम्

दृष्टिदोषपरिहारार्थं निम्बसर्षपादिना भस्मना च रक्षाविधानम्

[2]शिशुसंरक्षणार्थायाशुभग्रहनिवारिणीम् ।
रक्षां संध्यासु कुर्वीत निम्बसर्षपगुग्गुलैः ॥

---

¶ अस्य व्याख्यानं कपिलसंहितावचने द्रष्टव्यम् ।

† कपिलसंहितावचने टिप्पणी द्रष्टव्या ।

(१) संप्र. २७९–२८० मानवे कपिलसंहितायां च.

(२) प्रपा. १८९ याशुभ ( य भूत ) ; संप्र. २७९ 'मानवे कपिलसंहितायां च' इति सर्वश्लोकनिर्देशः ; विपा. ४४८ याशुभ ( य शिशु ) रिणीम् ( रणीम् ) ; संको. १११ ; संग. ६०५ याशुभ ( य शिशु ).

[1]फलीकरणसंमिश्रैः करन्यैरवलोकने ।
वचोधरान्नदेशेषु बालग्रहविमुक्तये ॥

( १ ) अवलोकने । दुष्टदृष्ट्येति शेषः । वचोधरान्नदेशेषु वचनकाले धरारिङ्गणकाले अन्नमोजनकाले वृक्षादिच्छायायां च दुष्टदृष्ट्याऽवलोकने इत्यन्वयः ।

§ संप्र. २७९

( २ ) कुर्यादिति शेषः । विपा. ४४८

[2]'वासुदेवो जगन्नाथः पूतनातर्जनो हरिः ।
रक्षतु त्वरितो बालं मुञ्च मुञ्च कुमारकम् ॥

[3]कृष्ण रक्ष शिशुं शङ्खमधुकैटभमर्दन ।
प्रातःसङ्गवमध्याह्नसायाह्नेषु च संध्ययोः ॥

[4]महानिशि सदा रक्ष कंसारिष्टनिषूदन ।
यक्षरक्षःपिशाचांश्च ग्रहान्मातृग्रहानपि ॥

[5]बालग्रहान् विशेषेण छिन्धि छिन्धि महाभयात् ।
त्राहि त्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुम् ॥'

§ संको. संप्रवत् ।

(१) प्रपा. १८९ वलोकने ( नलंकृताम् ) वचोधरान्न ( वचां द्वारप्र ) ; संप्र. २७९ ; विपा. ४४८ लोकने ( लोकनम् ) वचोधरान्न ( रक्षां द्वारप्र ) ; संको. १११ ; संग. ६०५ लोकने (लोकनम् ) वचोधरान्न (वचां द्वारप्र).

(२) प्रपा. १८९ तर्ज (भञ्ज) ; संप्र. २७९–२८० ; विपा. ४४८ रक्षतु (रक्षतां) शेषं प्रपावत् ; संको. १११ ; संग. ६०५ विपावत् .

(३) प्रपा. १८९ शङ्खम (शस्वन्म) ; संप्र. २८० ; विपा. ४४८ प्रपावत् ; संको. १११ ; संग. ६०५ प्रपावत् .

(४) प्रपा. १८९ ; संप्र. २८० यक्षरक्षः (यद्गोरज) ; विपा. ४४८ यक्षरक्षः ( यक्षोरग ) ; संको. १११ यक्षरक्षःपि ( यद्गोरजः पि ) ; संग. ६०५ विपावत् .

(५) प्रपा. १८९ ; संप्र. २८० ; विपा. ४४८ भूषि ( रक्षि ) ; संको. १११ ; संग. ६०५ विपावत् .

[1]इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना ।
शिरोललाटाद्यङ्गेषु रक्षां कुर्याद्यथाविधि ।
मन्त्रसंरक्षणादेव शिशुः संवर्धतेऽन्वहम् ॥

‡ ' यद्गोरजः ' इति गोरजसः प्रार्थनाप्रतीतेः गोरजःसहितभस्माभिमन्त्रणं द्रष्टव्यम् ।

संको. १११

## विधानमालायाम्

प्रथमादिद्वादशान्तदिनमासवर्षेषु क्रमेण पीडाकरीणां द्वादशानां नन्दादिमातॄणां रावणाभिमतानि बलिविधानानि

[2]दशाननमतं वक्ष्ये बालानां सुखकारकम् ॥

अथास्य प्रथमे दिने मासे वर्षे वा बालं गृह्णाति माता नन्दा नाम ॥

तया गृहीतमात्रस्य शिशोर्वक्ष्यामि लक्षणम् ॥

ज्वर आलस्यं रुदितं दुर्बलत्वं छर्दिरतिसारो गात्रसंकोचोऽरुचिः स्तनपान एते भवन्ति ॥

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

नद्या उभयतीरतो मृदमानीय पूर्ववत्पुत्तलीं कृत्वा पीतवस्त्रसूत्राभ्यां वेष्टयित्वा गन्धपुष्पादिभिरभ्यर्च्य प्रस्थतण्डुलस्यौदनं दधिगुडमिश्रितं पञ्च पोलिका दीपद्वयं ध्वजत्रयं शरावे दत्त्वा बालं संप्रोक्ष्य विजयाधूपेन धूपयित्वा पञ्चपल्लवैः संस्नाप्य वक्ष्यमाणेन मन्त्रेण बलिं दद्यात् । 'ओं नमो रावणाय मातर्नन्दे बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा ' इति मन्त्रेण बलिमभिमन्त्र्यापराह्णे प्रदोषसमये वा दिनत्रयमेव

‡ अत्र यथा गोरजसः प्रार्थनोद्देश्यत्वोक्तेर्गोरजःशब्दस्य संबुद्ध्यन्तपृथक्पदत्वम् , एवं संप्रपाठेऽप्यकारान्तगोरजशब्दस्य संबुद्ध्यन्तपृथक्पदत्वसंभवः ।

(१) प्रपा. १८९ ; संप्र. २८० द्यङ्गे ( ष्वङ्गे ) देव ( देवं ) ; विपा. ४४८ ; संको. १११ देव ( देवं ) ; संग. ६०५.

(२) विपा. २९५–३०३.

ग्रामाद्बहिः पूर्वस्यां दिशि पूर्वोक्तं मन्त्रमुच्चारयन् बलिं हरेत् ॥

एवं कृते सुखी बालः संपद्येत न चान्यथा ॥

अथास्य द्वितीये दिने मासे वर्षे वा बालं गृह्णाति सुनन्दा नाम माता ॥

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः ॥

अरुचिश्छर्दिर्हस्तपादादिसंकोचो रोदनमतिसारो दुर्बलत्वम् ॥

सुनन्दा( ? तया )गृहीतमात्रेण( ? त्रस्य ) ह्येतद्भवति लक्षणम् ॥

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत् पुत्तलीं कृत्वा पीतवस्त्रादिना संवेष्ट्य स्वस्तिकाष्टकं भूमावालिख्य तत्र तां निधाय सुगन्धपुष्पादिभिरभ्यर्च्य पूर्णप्रस्थतण्डुलौदनं दधिगुडसंमिश्रं पञ्च पोलिका दीपद्वयं ध्वजत्रयं च शरावे निधाय पञ्चपल्लवैर्बालं प्रोक्ष्य सुगन्धधूपेन धूपयित्वा 'ओं नमो रावणाय सुनन्दे मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेणापराह्णे प्रदोषसमये चोत्तरतो बलिं हरेत् ॥

एवं कृते सुखी बालः संपद्येत न चान्यथा ॥

अथ तृतीये दिने मासे वर्षे वा पूतना नाम माता गृह्णाति बालम् ॥

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः ॥

गात्रसंकोचः कण्ठशोषः प्रलापोऽतिसारो रोदनं च ॥

तया गृहीतमात्रस्य एतद्भवति लक्षणम् ।

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत् पुत्तलीं कृत्वा पीतवस्त्रेणाऽऽवेष्ट्य गन्धपुष्पादिभिरभ्यर्च्य प्रस्थसंमिततण्डुलौदनं दधिगुडसंमिश्रं पोलिकापञ्चकं मुष्टिकापञ्चकं दीपत्रयं ध्वजचतुष्टयं तिलचूर्णं च शरावे निधाय पञ्चपल्लवैर्बालाङ्गानि संमृज्य संप्रोक्ष्य सर्जरसधूपेन धूपयित्वा च 'ओं नमो रावणाय पूतने मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण पश्चिमायां दिशि पूर्वोक्ते काले त्रिरात्रं बलिं हरेत् ॥

अथास्य चतुर्थे दिवसे मासे वर्षे वा मुखमण्डिका नाम माता बालं गृह्णाति ॥

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः ॥

गात्रसंकोचो मुष्टिबन्धः श्वासः कासश्छर्दिरतिसारो दुर्बलत्वं चेति लक्षणानि भवन्ति ॥

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत्पुत्तलीं कृत्वा पीतवस्त्रेणाऽऽवेष्ट्य गन्धपुष्पादिभिरभ्यर्च्य प्रस्थतण्डुलौदनं दधिगुडयुतं पोलिकाः पञ्च मुष्टिकाः पञ्च दीपद्वयं ध्वजचतुष्टयं च शरावे निधाय बालं प्रोक्ष्य दशाङ्गेन धूपेन धूपयित्वा 'ओं नमो रावणाय मुखमण्डिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण दक्षिणस्यां दिशि पूर्वोक्तकाले बलिं हरेत् ॥

अथास्य पञ्चमे दिवसे मासे वर्षे वा बालं गृह्णाति विडाली नाम माता । तल्लक्षणम्— ज्वरश्चक्षूरोगो गात्रसंकोच आहाराग्रहणमतिसारश्छर्दी रोदनं चेति ॥

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत्पुत्तलीं कृत्वा पीतवस्त्रेणाऽऽवेष्ट्य गन्धादिभिरभ्यर्च्य बालं प्रोक्ष्य पल्लवैः संमृज्य विजयाधूपेन धूपयित्वा 'ओं नमो रावणाय विडालि मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण प्रस्थौदनं दधिगुडयुतं दश पोलिका ध्वजचतुष्टयं च शरावे निधाय पश्चिमस्यां( ? मायां) पञ्चरात्रं बलिं हरेत् ॥

अथास्य षष्ठे दिवसे मासे वर्षे वा बालं गृह्णाति शकुनी नाम माता । तद्गृहीतचिह्नानि यथा— ज्वरादिर्हस्तपदसंकोचोऽतिसारः कासो मुखशोषश्च ॥

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत् पुत्तलीं कृत्वा वस्त्रेणाऽऽवेष्ट्य गन्धादिभिरभ्यर्च्य प्रस्थतण्डुलौदनं पोलिकादशकं तिलचूर्णं दीपद्वयं ध्वजत्रयं च शरावे निधाय बालं पल्लवैर्मार्जयित्वा सुगन्धेन धूपयित्वा 'ओं नमो रावणाय शकुनि मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण पश्चिमदिशि त्रिरात्रं बलिं हरेत् ॥

अथास्य सप्तमे दिवसे मासे वर्षे वा बालं गृह्णाति सुखना नाम माता। तद्गृहीतचिह्नं यथा – ज्वरादि पूर्ववत्पीतवर्णता च ॥

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत्पुत्तलीं कृत्वा गन्धादिना संपूज्य गुडमिश्रौदनम्–

जालिका घारिकाश्चैव पोलिकाः पूरिकास्तथा ।
साहुिका घृतपक्वाश्च शरावे संनिवेशयेत् ॥

ध्वजत्रयं दीपपञ्चकं च । ततो बालं पल्लवैर्मार्जयित्वा विजयेन धूपेन धूपयित्वा 'ओं नमो रावणाय सुखनानाममातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण पश्चिमदिशि बलिं त्रिरात्रं हरेत् ॥

अथास्याष्टमे दिने मासे वर्षे वा बालं गृह्णाति कुलिका नाम माता। तद्गृहीतचिह्नं पूर्ववत्। बलिस्तस्या यथा– पूर्ववत्पुत्तलीं कृत्वा वस्त्रादिना संवेष्ट्य पूजयित्वौदनं दधिमिश्रं पञ्च पोलिकास्तिलचूर्णम्–

क्षीरिकाः पूरिकाश्चैव दीपकद्वयमेव च ॥

चतस्रो मुष्टिका एरण्डिका उरिकौदनं गुडमिश्रितं ध्वजत्रयं च शरावे निधाय बालं प्रोक्ष्य पल्लवैर्मार्जयित्वा दशाङ्गधूपेन धूपयित्वा च 'ओं नमो रावणाय कुलिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण दक्षिणदिशि पञ्चरात्रं बलिं हरेत् ॥

अथास्य नवमे दिवसे मासे वर्षे वा बालं गृह्णात्यार्जिका नाम माता । तद्गृहीतचिह्नं ज्वरादि पूर्ववत् पीतवर्णता च । तस्या बलिर्यथा– पूर्ववत् पुत्तलीं कृत्वा वस्त्रादिना संवेष्ट्य गन्धादिभिरभ्यर्च्यौदनं दधिमिश्रं पञ्च पोलिकास्तिलचूर्णं संकुलिकाः पर्पटिका दीपद्वयं ध्वजचतुष्टयं च शरावे निधाय बालं संमार्ज्य धूपयित्वा च 'ओं नमो रावणायाऽऽर्जिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेणोत्तरदिशि त्रिरात्रं बलिं हरेत् ॥

अथास्य दशमे दिवसे मासे वर्षे वा बालं गृह्णाति रेवती नाम माता । तद्गृहीतलक्षणं ज्वरादि पूर्ववत्, अतिसारः श्लेष्मा कण्ठशोषो रोदनं चेति ॥

बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत्पुत्तलीं कृत्वा वस्त्रेणाऽऽवेष्ट्य गन्धपुष्पादिभिरभ्यर्च्य पूर्णप्रस्थतण्डुलौदनं दधिगुडमिश्रितं तिलचूर्णं पञ्च पोलिका दश शर्करा दीपद्वयं ध्वजत्रयं च शरावे निधाय पञ्चपल्लवैर्बालं संप्रोक्ष्य विजयेन धूपेन धूपयित्वा 'ओं नमो रावणाय रेवति मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण पश्चिमदिशि अपराह्णे संध्यायां वा बालं हरेत्त्रिरात्रम् ॥

अथास्य एकादशे दिवसे मासे वर्षे वा बालं गृह्णाति पिच्छलिका नाम माता ॥

तया गृहीतमात्रस्य ज्वरः शोषश्च जायते ।
रक्तं च स्रवते विष्ठा मूत्रं शूलं च जायते ॥
सीदन्ति सर्वगात्राणि आहारश्च न रोचते ।
ऊर्ध्वदृष्टिः प्रलापश्च रोदनं च पुनः पुनः ॥
पिच्छलिकागृहीतस्य ह्येतद्भवति लक्षणम् ।
बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

पूर्ववत्पुत्तलीं कृत्वा पीतवस्त्रेण संवेष्ट्य गन्धादिना संपूज्य पूर्णप्रस्थमितौदनं दधिगुड-

संमिश्रं पोलिकाः पूरिका घाटिका वटकाः पञ्च पञ्च तिलचूर्णं दीपद्वयं ध्वजत्रयं च शरावे निधाय पञ्चपल्लवैर्बालं संमार्ज्य विजयधूपेन धूपयित्वा 'ओं नमो रावणाय पिच्छलिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण दक्षिणां दिशमाश्रित्यापराह्णे प्रदोषे वैकरात्रिं बलिं हरेत् ॥

अथास्य द्वादशे दिवसे मासे वर्षे वा बालं गृह्णाति पिप्पली नाम माता ॥

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः ।
शोषश्च जायते तस्मात्कम्पो वैवर्ण्यमेव च ॥

कुक्षिशूलं प्रजायेत रोदनं च पुनः पुनः ।
ऊर्ध्वदृष्टिः प्रलापश्च श्वासश्चैव निरन्तरम् ॥

पिप्पल्याक्रान्तमात्रस्य एतद्भवति लक्षणम् ।
बलिं तस्याः प्रवक्ष्यामि येन संपद्यते सुखम् ॥

नद्या उभयकूलतो मृत्तिकामानीय तया पुत्तलिकां कृत्वा पीतवस्त्रेण संवेष्टय गन्धपुष्पादिभिरभ्यर्च्य पूर्णप्रस्थौदनं दधिगुडसंमिश्रं पोलिकाः पञ्च तिलचूर्णं घारिकाद्वयं शर्करा विटपपत्रं सुगन्धधूपं ध्वजत्रयं दीपपञ्चकं च शरावे निधाय बालं संप्रोक्ष्य पञ्चपल्लवैर्मार्जयित्वा विजयधूपेन धूपयित्वा च 'ओं नमो रावणाय पिप्पलि मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहा' इति मन्त्रेण पूर्वस्यां दिशि पूर्वोक्ते काले त्रिरात्रं बलिं हरेत् ॥

एवं कृते विधानेऽस्मिन् बालरोगः प्रशाम्यति ।
अवश्यं नात्र संदेहो रावणस्य वचो यथा ॥

## चतुर्थो भागः समाप्तः ॥